श्रीमद्वेङ्कटनाथमहादेशिकप्रणीतः

# तत्त्वमुक्ताकलापः

व्याख्यात्रयोपेतः

[ द्वितीयो भागः ]

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा पुरस्कृतः

सम्पादकः
डॉ. ना. रा. श्रीकृष्णताताचार्यः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 128 ]

# TATTVAMUKTĀKALĀPA

[ PART TWO ]

OF

ŚRĪMADVEṄKAṬANĀTHA MAHĀDEŚIKA

With Three Commentaries

## SARVĀRTHASIDDHI

BY

ŚRĪMADVEṄKAṬANĀTHA

## ĀNANDADĀYINĪ

BY

NṚSIṀHADEVA

&

## AKṢARĀRTHA

BY

DEVANĀTHATĀTĀCĀRYA

FOREWORD BY

DR. MANDAN MISHRA

VICE-CHANCELLOR

EDITED BY

DR. N. R. ŚRĪKṚṢṆATĀTĀCĀRYA
Reader, Dept. in 'NYĀYA' Philosophy
Śrī Sadāśiva Kendrīya Sanskrit Vidyāpīṭha, PURI




VARANASI

1996

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

◘

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.

◘

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002.

◘

First Edition, 1000 Copies
Price Rs. 200.00

◘

Printed by—
VIJAYA PRESS,
Sarasauli, Bhojubeer
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १२८ ]

श्रीमद्वेङ्कटनाथमहादेशिकप्रणीतः

# तत्त्वमुक्ताकलापः

## [ द्वितीयो भागः ]

श्रीमद्वेङ्कटनाथकृतया

स्वोपज्ञसर्वार्थसिद्धिव्याख्यया

नृसिंहदेवकृतया

आनन्ददायिनीव्याख्यया

देवनाथताताचार्यकृतया

अक्षरार्थव्याख्यया च

संवलितः

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा

पुरस्कृतः

सम्पादकः

डॉ० ना० रा० श्रीकृष्णताताचार्यः

उपाचार्यः, न्यायविभागस्य

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे, जगन्नाथपुर्य्याम्



वाराणस्याम्

२०५३ तमे वैक्रमाब्दे | १९१८ तमे शकाब्दे | १९९६ तमे ख्रैस्ताब्दे

Research Publication Supervisor—
Director, Research Institnte,
Sampurnanand Sanskrit University
Varanasi.

▫

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.

▫

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002.

▫

First Edition, 1000 Copies
Price Rs. 200.00

▫

Printed by—
VIJAYA PRESS,
Sarasauli, Bhojubeer
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १२८ ]

श्रीमद्वेङ्कटनाथमहादेशिकप्रणीतः

# तत्त्वमुक्ताकलापः

[ द्वितीयो भागः ]

श्रीमद्वेङ्कटनाथकृतया

स्वोपज्ञसर्वार्थसिद्धिव्याख्यया

नृसिंहदेवकृतया

आनन्ददायिनीव्याख्यया

देवनाथताताचार्यकृतया

अक्षरार्थव्याख्यया च

संवलितः

कुलपतेः डॉ० मण्डनमिश्रस्य 'शिवसङ्कल्प'-पुरोवाचा

पुरस्कृतः

सम्पादकः

डॉ० ना० रा० श्रीकृष्णताताचार्यः

उपाचार्यः, न्यायविभागस्य

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे, जगन्नाथपुर्य्याम्



वाराणस्याम्

२०५३ तमे वैक्रमाब्दे १९१८ तमे शकाब्दे १९९६ तमे खैस्ताब्दे

अनुसन्धान-प्रकाशन-पर्यवेक्षकः —
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

□

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

□

प्राप्तिस्थानम् —
विक्रय-विभागः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी—२२१ ००२.

□

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम्— २००. ०० रूप्यकाणि

□

मुद्रकः —
विजय-प्रेस,
सरसौली, भोजूबीर
वाराणसी ।

# शिवसङ्कल्पः

**"तत्त्वमुक्ताकलाप"**स्यायं द्वितीयो भागः सम्प्रति प्रकाश्यते। प्रथमो भागो द्विनवत्यधिकैकोनविंशतितमे खैस्ताब्दे (१९९२ ई०) प्रकाशितः। तत्त्वात्मकानां मुक्तानां कलापोऽयं विशिष्टाद्वैतस्य प्रामाणिकेषु ग्रन्थेषु विशिष्टं स्थानमाश्रयते। विशिष्टाद्वैतं हि वैष्णवदर्शनेषु प्रमुखतमं दर्शनम्।

**"आत्मा वाऽरे द्रष्टव्यः"** इति श्रुतौ दर्शनशब्द आत्मविषयकमपरोक्षसाक्षात्कारमेवाभिधातुं प्रयुक्तम्। अत एवोपपत्तिपूर्वकमात्मप्रवणत्वमेव दर्शनमिति दर्शनशास्त्रतत्त्वविदो वदन्ति। विशिष्टस्य—चिदचिद्रूपविशिष्टस्य—परमात्मनोऽद्वैतमेव विशिष्टाद्वैतम्। चित्—जीवः, अचित्—जडः। इदं विशिष्टाद्वैतमेव रामानुजदर्शनश्रीसम्प्रदायादिरूपेण प्रथितम्।

शङ्करमते जगतो मिथ्यात्वम्, रामानुजमते च तस्य सत्यत्वम्। शङ्करमते ब्रह्म निर्विशेषम्, परं रामानुजमते सविशेषमेतत्। शङ्करो मायावादं प्रतिष्ठापयति, रामानुजस्तं खण्डयति। शङ्करमते ज्ञानस्वरूप आत्मा, रामानुजमते तु ज्ञानाश्रय आत्मा। शङ्करमते आत्मनो विभुत्वम्, रामानुजमते तु तस्याणीयस्त्वम्। एवमेव मतवैविध्यमेतयोः, परं सत्यपि विशिष्टेषु मतभेदेषूभयमपि दर्शनमिदं लोककल्याणाय प्रवृत्तमिति सर्वसम्मतं सत्यम्। अद्वैतप्रतिष्ठापकत्वेन शङ्कराचार्यः, विशिष्टाद्वैतप्रतिष्ठापकत्वेन रामानुजाचार्यश्च विश्वस्मिञ्जगति समादृतः।

अयं हि ग्रन्थः पञ्चशतपद्यात्मको जडद्रव्यसर-जीवसर-नायकसर-बुद्धिसर-अद्रव्यसररूपेषु पञ्चप्रकरणेषु विभक्तो विशिष्टाद्वैतसिद्धान्तानां प्रामाणिकः संस्थापकः। अस्य च प्रथमं प्रकरणद्वयं प्रथमभागे प्रकाशितम्, यस्य च प्ररोचनाऽस्य विश्वविद्यालयस्य कुलपतिचरैर्विद्वद्वरेण्यैः श्रद्धेयैः **प्रो० विद्यानिवासमिश्र**महोदयैर्लिखिता, अवशिष्टं प्रकरणत्रयमस्मिन् भागे प्रकाश्यते, एतेन ग्रन्थोऽयं परिपूर्णतां प्राप्नोति।

अस्य लेखका विपश्चिदपश्चिमाः **श्रीवेङ्कटनाथमहादेशिका**स्त्रयोदशशताब्द्यां (ए०डी० १२६८) स्वजनुषा काञ्चीक्षेत्रमलङ्कृतवन्तः। एतैरस्य ग्रन्थस्य **'सर्वार्थसिद्धि'**-नाम्नी व्याख्याऽपि कृता, तया व्याख्यया सह तथा च **श्रीनृसिंहदेव**महाशयानाम् **'आनन्ददायिनी'**-व्याख्यया, विशिष्टाद्वैतविशेषज्ञैर्विद्वन्मूर्द्धन्यैः श्रीमद्भि**र्देवनाथ-ताताचार्यैः** प्रणीतया **'अक्षरार्थ'**-व्याख्ययाऽपि विभूषितोऽयं **"तत्त्वमुक्ताकलाप"**ख्यो ग्रन्थो विशिष्टाद्वैततत्त्वजिज्ञासूनां कृते महानुपकारको भविष्यति। मया हि राष्ट्रिय-

संस्कृतसंस्थानस्य निदेशकत्वेन, तिरुपतिविद्यापीठस्याचार्यत्वेन च श्रीदेवनाथताताचार्याणां साधना साक्षात्कृता। अहं तेषां सारस्वतसाधनायै आदरपुष्पाञ्जलिमर्पयामि।

ग्रन्थस्यास्य सम्पादका न्याय-मीमांसा-वेदान्तशिरोमणयो विद्यावाचस्पतिविभूषिता **ना० रा० श्रीकृष्णताताचार्याः** स्वनामधन्यानां **श्रीदेवनाथताताचार्याणा**मन्तेवासिनो न्याये मीमांसाशास्त्रे विशिष्टाद्वैतवेदान्ते च सुनिष्णाताः प्रथममस्य विश्वविद्यालयस्य मीमांसाप्राध्यापकपदमलङ्कुर्वन्, सम्प्रति च जगन्नाथपुरीस्थश्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे उपाचार्यपदं विभूषयन्ति। एतैर्ह्ययं ग्रन्थः सुसम्पादितो विस्तृतेनोपोद्घातेन, सहैव **"दध्नो घृतमिव"** ग्रन्थसारोऽपि समुपस्थापितः।

अयमस्ति सौभाग्यस्य प्रसङ्गो यद् विश्वविद्यालयस्यास्य पूर्वकुलपतीनां श्रद्धेयानां मनीषिप्रवराणां **प्रो० वि० वेङ्कटाचलम्**महोदयानां कार्यकाले समारब्धेयं प्रकाशनयोजना। इयं तेषामेव निर्देशस्य सङ्कल्पस्य च क्रियान्वितिः। अतः सर्वतः प्रथममहं सुधीवरेभ्यः **श्रीवेङ्कटाचलम्**महाशयेभ्यः स्वकीयां कृतज्ञतां प्रकटयामि, अस्य च सम्पादकाय **ना० रा० श्रीकृष्णताताचार्याय** स्वकीयानि वर्द्धापनानि, प्रकाशनाधिकारिणे **डॉ० हरिश्चन्द्रमणित्रिपाठिने**, ग्रन्थस्यास्य मुद्रकाय विजय-प्रेससञ्चालकाय **श्रीगिरीशचन्द्राय** च साधुवादान् व्याहरन् ग्रन्थमिमं तत्त्वज्ञानविशारदेभ्यः सादरभरं समर्पयामि।

**वाराणसी**
**मेषसङ्क्रान्तिः,**
**वि० सं० २०५३**
**(१३-४-१९९६ खैस्ताब्दः)**

**मण्डनमिश्रः**
**कुलपतिः**
**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य**



श्रीमान वेङ्कटनाथार्यः
कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे
सन्निधत्तां सदा हृदि ।।



श्रीशैलवंश्यनिजताततनृसिंहसूरेः

पादाम्बुजप्रणयिनं तदवाप्तमन्त्रम् ।

श्रीमन्नृसिंहगुरुवर्यकृपात्तबोधं

श्रीदेवनाथगुरुमात्मगुणाढ्यमीडे ।।

आचार्यसार्वभौमाः, उभयवेदान्तकण्ठीरवाः,
तिरुमलै-चतुर्वेदशतक्रतुनावल्याक्कं अय्या
श्रीदेवनाथताताचार्यमहादेशिकाः।

॥ श्रीमते श्रीनिवासपरब्रह्मणे नमः ॥

॥ श्रीमते निगमान्तमहागुरवे नमः ॥

# उपोद्घातः

श्रीनिवासं परं ब्रह्म जम्बूधामनिवासिनम् ।
प्रपद्येऽहं सदा भक्त्या शरणागतवत्सलम् ॥

सर्वतन्त्रस्वतन्त्रो यः कवितार्किककेसरी ।
श्रीमद्वेङ्कटनाथार्यः सदा मे हृदि भासताम् ॥

अय्या श्रीदेवनाथार्यं गुरुवर्यं तमाश्रये ।
देशिकदर्शनस्यायं धुरन्धर इतीरितः ॥

श्रीमन्नृसिंहदेवनिर्मितानन्ददायिनीव्याख्याविभूषितेन मूलकृदुपज्ञसर्वार्थसिद्धि-व्याख्यानेन, अय्या श्रीदेवनाथतातयार्यप्रणीतेनाक्षरार्थव्याख्यानेन च समुद्भासितस्य सर्वतन्त्रस्वतन्त्र–कवितार्किकसिंह-निगमान्तमहादेशिक–श्रीमद्वेङ्कटनाथविरचितस्य तत्त्व-मुक्ताकलापस्य जडद्रव्य-जीवसरद्वयात्मकः प्रथमभागः १९९० तमे (ख्रै) वत्सरे प्रकाशितः। अधुना तस्यैव निरुक्तव्याख्योपेतस्य तत्त्वमुक्ताकलापस्य नायक—बुद्धि-अद्रव्य सरत्रयात्मकः द्वितीयभागः प्रकाश्यते।

संप्रति काचन अपूर्वोपलब्धिः, यच्चिरात् द्रष्टुमभिलषितस्य सम्पूर्णानन्द-दायिनीव्याख्यानस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाशनेन संजाता, सेयं समेषां विदुषां महत आनन्दाय कल्पते।

तत्र मूलग्रन्थस्तत्त्वमुक्ताकलापः विशिष्टाद्वैतसिद्धान्तसंमतसकलपदार्थतत्त्वं प्रकाशयति, स च सहृदयैः जयादिसवार्थसिद्धिहेतुतया स्वहृदि धारणसौकर्याय पद्यमयो विनिर्मितः।

तदुक्तं ग्रन्थकृतैव—

"आतन्वानः प्रकाशं बहुमुखमखिलत्रासवैधुर्यधुर्यो।
धार्यो हेतुर्जयादेः स्वहृदि सहृदयैस्तत्त्वमुक्ताकलापः॥" १-३.

"एकं तत् सर्वसिद्ध्यै कलयत हृदये तत्त्वमुक्ताकलापम्।" इति। ५-१३४.

सूत्रस्येव सङ्ग्रहेणार्थप्रतिपादनेन व्याख्यानसापेक्षस्यास्य मूलकारेणैव सर्वार्थसिद्धिरिति वृत्तिग्रन्थो व्यरचि। अयमपि व्याख्यानग्रन्थः भगवद्रामानुजमुनेरौपनिषदं सिद्धान्तं व्यावृण्वन् स्वमते परैरुद्भावितानां दूषणानां परिहरणेन, प्रतिपक्षे बौद्धादिमते दोषाणां निरूपणेन च स्वनाम अन्वर्थयति। सेयं मूलकृदुपज्ञवृत्तिः सर्वार्थसिद्धिः पञ्चानामपि सराणां आदित आन्तं सम्पूर्णा अस्ति। अस्या गाम्भीर्यं पर्यालोच्य यथावत् तदर्थावगत्यै विद्वद्वरैः श्रीमन्नृसिंहदेवस्वामिभिः आनन्ददायिनी इति व्याख्या प्रणीता। आनन्ददायिनी व्याख्या च—सर्वार्थसिद्धौ तत्र तत्र प्रतिपादितानां इतरमतसम्बन्धिविषयाणां अक्लेशेन सम्यगर्थावबोधाय सन्दर्भ निर्देशपुरस्सरं उल्लेखनं, कठिनस्थले ग्रन्थिविमोचनं, यत्र क्वचित् तत्त्वमुक्ताकलापस्य स्वयं ग्रन्थकर्त्रा श्लोकार्थस्य सारल्यवशात् सर्वार्थसिद्धिव्याख्या न विहिता, अथवा कृतायामपि व्याख्यायां रक्षकस्य प्रमादेन वा नोपलभ्यते तादृशस्थलविशेषे विस्तरेण ( मूल श्लोक ) व्याख्यानं, मूलश्लोकस्थ सांकेतिकपदानां अर्थविवरणं, अपेक्षितस्थलविशेषे प्रमेयसंशोधनपूर्वकं परिष्कारप्रदर्शनं बहुषु स्थलेषु व्याकरणसूत्रादिप्रमाणपुरस्सरं प्रकृतिप्रत्ययार्थनिर्वचनमुखेन व्युत्पत्तिप्रदर्शनं, पूर्वमीमांसान्यायसञ्चारद्वारा अर्थविशेषनिरूपणमित्येवमादिविशेषैः वस्तुतो विदुषामतीव आनन्दप्रदात्री। अत आनन्ददायिनीति अस्या अन्वर्थसंज्ञा। यद्यपि इयं व्याख्या मैसूर नगरे प्राच्यविद्यासंशोधनालये ३५ वर्षेभ्यः प्राक् मुद्रितुमारब्धा, परन्तु तदाऽपि जडद्रव्य-नायक-सरयोः समग्रभागस्य, जीवसरे ३० श्लोकपर्यन्तमेव च मुद्रणं जातं, अग्रे बलवत्तरप्रतिबन्धकवशात् तदवरुद्धमेव।

एतादृशोत्तमव्याख्यानस्य पूर्वोक्तवैशिष्टयमनुभूय बहूनां विदुषां चेतसि चिरात् सम्पूर्णभागावलोकने उत्कटेच्छा आसीत्, सा च संप्रति भगवतोऽनुग्रहेण परिपूरितेति पण्डितकुलानन्दवर्धनेन आत्मानं धन्यं मन्ये।

तत्त्वमुक्ताकलापव्याख्यायाः स्वोपज्ञवृत्तेः सर्वार्थसिद्धेः अधिकविस्तारं कतिपय स्थलेषु दुरूहत्वं च विलोक्य तत्त्वमुक्ताकलापमूलमात्रार्थमधिजिगांसूनामुपकाराय अस्मदाचार्यसार्वभौमैः श्री उ-वे-ति-च-श अय्या श्रीदेवनाथतातयार्यमहादेशिकैः अक्षरार्थव्याख्यानं कृतम्। इदं च ४५ वर्षेभ्यः पूर्वं तेषां सविधे तत्त्वमुक्ताकलापग्रन्थाध्ययनाय प्रवृत्तानामस्मत्पितृचरणानामध्ययनकाले आरब्धम्। तदा जडद्रव्य-जीव सर द्वयपर्यन्तं एतस्य लेखनं निष्पन्नं, तदनु नायक ( तृतीय ) सरस्य प्रारम्भावसरे तेषां

गुरूणां श्री ड-वे-ति-च-श नावल्पाक्कं नरसिंहताताचार्याणां आदेशवशात् स्वरयां वेदान्तवैजयन्तीनामकः ग्रन्थः, न्यायकुसुमाञ्जलिव्याख्यानग्रन्थश्च निर्मेयः आसीत्। तौ च ग्रन्थौ बृहत्तमौ, अतस्तत्रैव महान् काल अतिपन्नः। यद्यपि एतेषां धर्मशास्त्रोक्त-रीत्या पाञ्चकालिकवर्त्मना भगवदाराधनवेषेण नित्यकर्मानुष्ठानं, स्वसविधे समा-गतानां शिष्याणां वात्सल्यातिशयेन न्याय-मीमांसादि सामान्यशास्त्राणां, यथानियमं वेदान्तग्रन्थानां चाध्यापनमित्यतेत् द्वयं प्रधानं, एतदतिरिक्तसमये ग्रन्थलेखनादिकं च कर्तव्यमिति सङ्कल्पः। तदनुसारेण नित्यकर्मानुष्ठाने, शिष्याणां शास्त्रग्रन्थाध्यापने च प्रायेण अधिककालस्य व्यापृततया, महता कालेन रचितस्यापि वेदान्तवैजयन्तीं—न्याय-कुसुमाञ्जलि-व्याख्या-ग्रन्थद्वय'स्यापि मुद्रणादिविषये वित्तसौविध्याभावात् काऽपि व्यवस्था नास्तीति नैराश्यात् च सरद्वय एवैतद्व्याख्यानं स्थगितम्।

एवं गच्छति काले तेषामशीत्यब्दपूर्तिसमये न्यायकुसुमाञ्जलिव्याख्यानस्य, वेदान्तवैजयन्त्याः प्रथमोल्लासस्य च शिष्यद्वारा मुद्राप्य प्रकाशनं जातं, तद् दृष्टवा प्रहर्षोत्फुल्लमनोभिराचार्यैर्नायकसराद्यवशिष्टभागस्यापि अस्माकंतद्ग्रन्थाध्ययन-काले व्याख्यानं पुनरारब्धम्। परं तु तदानीमतीव वार्ध्यक्यवशात् पराधीनतयैव कर्मणां निर्वोढव्यत्वाच्च संपूर्णतया लिखितुं ते नापारयन्। नायकसरे ४१, बुद्धिसरे च २३ श्लोकपर्यन्तमेव जातम्। यद्यप्येतावता अतीव कठिनभागस्य एतद्व्याख्यानं जात-मिव, अवशिष्टविषये मूलभागोऽपि सरलः, तद्व्याख्या सर्वार्थसिद्धिरपि सुगमैवेति यदुद्दिश्य इदं व्याख्यानमारब्धं तदंशे न न्यूनता। अस्मिन् व्याख्याने श्लोकस्थपदानां प्रत्येकस्यार्थवर्णनं, श्लोकार्थोपसंहारे च सारतमत्वेन भावार्थविवरणं च विदुषामतीव हृदयङ्गमं, तदनुभूयैव यावदुपलम्भं प्रकाशितम्। इतोऽन्यत् तत्त्वमुक्ताकलाप—सर्वार्थ-सिद्धि—आनन्ददायिनी—अक्षरार्थग्रन्थानां तत्कर्तॄणां च विषये यत् वक्तव्यं तत्सर्वं प्रथमभागस्य उपोद्घात एव विस्तरेण प्रत्यपादयम्।

संपूर्णतत्त्वमुक्ताकलापग्रन्थाध्ययनपूर्वकं विषयज्ञानार्जनाशक्तानां रामानुज-वेदान्तपदार्थतत्त्वजिज्ञासूनां अनुसन्धातॄणां च सुखेनावगत्यर्थं जडद्रव्य-जीवसरस्थ-विषयान् संगृह्य सविमर्शं प्रथमभागे प्रतिपादयामास।

अस्मिन् द्वितीयभागेऽपि नायकसरबुद्धिसरयोः मुख्यविषयाः ( प्रकरणार्थ संग्रह इति शीर्षकेण ) सङ्ग्रहेण प्रतिपाद्यन्ते।

एवं सामान्यतः रामानुजवेदान्ते कति प्रमाणानि? कियन्तः पदार्थाः अङ्गीक्रियन्त इत्येवमादीनां झटिति अक्लेशेन निष्कर्षज्ञानार्थं विशिष्य नैयायिकानां विशिष्टाद्वैतिनां च मते प्रमाणप्रमेयादिविषये कुत्र कुत्र वैलक्षण्यमस्तीति ज्ञानार्थं च विशिष्टाद्वैतसिद्धान्तरीत्या प्रमाणप्रमेयविवरणात्मिकां पट्टिकामपि अत्र समायोजयम्। अद्रव्यसरस्य विषयाणां सरलत्वात् आधिक्येन विचाररहितत्वात् च पार्थक्येन विषयसंग्रहो नाकारि।

## प्रकरणार्थसङ्ग्रहः

रामानुजमते तत्त्वानां विभागः सामान्यतः द्रव्याद्रव्यभेदेन द्विधा कृतः, तन्मध्ये एव अन्येषां तत्त्वानां प्रवेशः। तत्त्वमुक्ताकलापे सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्तदेशिकैः

द्रव्याद्रव्य प्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहुः
द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ।
अन्त्यं प्रत्यक् पराक् च प्रथममुभयधा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः॥

इति श्लोकेन प्रदर्शितः। तत्त्वं सामान्यतः द्विविधं—द्रव्यमद्रव्यं चेति। द्रव्यमपि द्विविधं जडमजडमिति। जडमपि अव्यक्त, कालभेदेन द्विविधम्। अजडमपि प्रत्यक्, पराक्रूपेण द्विविधम्। प्रत्यक् अपि जीवेश्वरभेदेन द्विविधम्। नित्यविभूतिः मतिश्चेति परागपि द्विविधम्। केचन (एकदेशीयाः) नित्यविभूतिं जडरूपेण कथयन्ति इति। अत्र जीवपर्यन्ततत्त्वानां स्वरूपं जडद्रव्य जीवसरद्वयात्मकप्रथमभागे प्रतिपादितम्। अधुना उपरितनभागप्रतिपाद्यविषयः संगृह्य निदर्श्यते।

## नायकसरः

अस्मिन् नायकसरे जीवस्वरूपनिरूपणानन्तरं ईश्वरस्य आगमैकवेद्यत्वं, अभिन्ननिमित्तोपादानत्वं, जगतः सत्यत्वं, भगवतो नारायणस्यैव परत्वं, नित्यविभूतिस्वरूपमित्यादयः बहवो विषयाः प्रतिपाद्यन्ते। तेषु रामानुजसिद्धान्तासाधारणतया मुख्याः गम्भीराश्च ये विषयास्सन्ति तेषां स्वरूपमात्रमत्र सरलशैल्या यथाग्रन्थं सविमर्शं प्रस्तूयते।

## आनुमानिकेश्वरनिरासः आगमिकेश्वरसिद्धिश्च

ईश्वरः न अनुमानप्रमाणगम्यः, किन्तु श्रुत्येकवेद्यः इति सकलवेदान्तिनां निष्कर्षः, अयमर्थः शास्त्रयोनित्वाधिकरणे प्रत्यपादि। नैयायिकास्तु ईश्वरसद्भावे अनुमानमेव मुख्यं प्रमाणं श्रुत्या तु अनुमानसिद्धोऽर्थः अनूद्यत इति ब्रुवन्ति।

अनुमानं च कार्यत्वादिलिङ्गकम्—तथा चोक्तं न्यायाचार्यैः श्रीमदुदयनाचार्यैः न्यायकुसुमांजलिग्रन्थे—

"कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वजिदव्ययः" इति। ५-१

अत्रायमाशयः—क्षित्यंकुरादिकं [1]उपादानोपकरण सम्प्रदानप्रयोजनाभिज्ञकर्तृकम् कार्यत्वादित्यनुमानेन ईश्वरकर्तृकत्वं क्षित्यादेः स्वीकर्तव्यं, क्षित्याद्युपादानविषयकज्ञानस्य जीवेऽसंभवात्। यश्च उपादानादिविषयकज्ञानवान् स एव कर्ता। अतोऽत्र उपदर्शितानुमानेन ईश्वरः सिद्ध्यतीति आनुमानिकत्वं प्रतिपादयन्ति नैयायिकाः। अत्रेदं चिन्त्यते।

उपादानोपकरणाद्यभिज्ञकर्तृकमित्यनेन उपादानभूतपरमाण्वादिसाक्षात्कर्तुः सर्वज्ञस्यैव कर्तृत्वं विवक्षितं? उत अंशतः उपादानादि(सामान्य)ज्ञानवतः कर्तृत्वं वेति? न द्वितीयः। जीवस्यैव "ज्योतिष्टोमेन स्वर्गकामो यजेते" त्यादिशास्त्रेण यागस्य अदृष्टजनकत्वेन "अस्मान्मायी सृजते विश्वमेतत् मायां तु प्रकृतिं विद्यात्" इत्यादिश्रुत्या च प्रकृतेः जगदुपादानत्वेन च सामान्यतः (अंशतः) ज्ञानस्य सत्त्वात् तादृशज्ञानाश्रयजीवकर्तृकत्वसाधने सिद्धसाधनं स्यात् निरुक्तकर्तृकत्वस्य अनुमानात्प्रागेव सिद्धत्वात्। नाद्यः। दृष्टान्ते घटादौ अल्पज्ञस्य अल्पशक्तिमतः पुरुषस्यैव कर्तृत्वदर्शनात् यत्र यत्र कार्यत्वं तत्र तत्र अल्पज्ञत्वे सति अल्पशक्तिमत्कर्तृकत्वमित्येवं व्याप्तेः संप्रतिपन्नत्वेन तद्विपरीत सर्वशक्तिसर्वसाक्षात्कर्तृकर्तृकत्वसाधने दृष्टान्तस्य साध्यविकलतया व्याप्तिभंगः, ततश्च व्याप्त्यभावे व्याप्यत्वासिद्ध्या क्षित्यादौ सर्वज्ञेश्वरकर्तृकत्वं न साधयितुं शक्यते।

किञ्च अस्मदादीनां पृथिव्याद्यु पादानादिविषयकसाक्षात्काराऽसम्भवेऽपि विश्वामित्रादिमहर्षिवत् विशिष्टज्ञानवतः जीवस्य तादृशशक्तेर्वक्तुं शक्यत्वेन लाघवात् जीवकर्तृकत्वमेव सिद्ध्येत्।

---

१. अत्र उपादानं परमाणुः उपकरणम् अदृष्टम्, सम्प्रदानम् भोक्ता प्रयोजनं भोगः।

न च व्याप्त्या कुलालादिष्विव सामान्यज्ञानादिमत्पुरुषसाधनेऽपि क्षित्यादि-सर्वपदार्थपक्षकत्वात् अनुमानस्य सर्वविषयकज्ञानादिमत्पुरुषसाधकत्वं कार्यत्वरूपहेतोः पक्षधर्मताबलात् सिद्ध्यतीति वाच्यम्। व्याप्यस्य हेतोः पक्षधर्मताबलात् व्यापकस्य साध्यस्य अनुमितेः प्रागविदितः पक्षरूपधर्मिविशेषसम्बन्ध एव सिद्ध्येत् न तु सपक्षे अदृष्टो धर्मविशेषोऽपि सपक्षदृष्टधर्मविजातीयधर्मविशेषस्य पक्षधर्मताज्ञाप्यत्वाभावात्। एवं च सर्वज्ञत्वादिधर्मविशिष्टकर्तुः घटादौ अदर्शनेन क्षित्यादौ सर्वज्ञत्वादि-विशिष्टेश्वरकर्तृत्वं पक्षधर्मताबलान्न साधयितुं शक्यत इति भावः।

कर्तृव्यतिरिक्तकारणान्तरादेव क्षित्याद्युत्पत्तिः

अथ क्षित्यादौ कार्यत्वस्य विद्यमानत्वात् कर्तृजन्यत्वमपि अवश्यमभ्युपगन्तव्यम् ततश्च ईश्वर एव कर्ता भवितुमर्हतीति यदुक्तं तदपि न घटते—विपक्षे बाधकाभावात् कर्तृव्यतिरिक्तकारणान्तरैरेव क्षित्याद्युत्पत्तेस्सुवचत्वाच्च। अयमाशयः कारणा-भावात् कार्याभाव इति व्याप्तेस्सर्ववादिसिद्धतया क्षित्यादौ ईश्वरकर्तृकत्वानभ्युपगमे कर्तृरूपकारणाभावात् कार्यत्वमपि न स्यादिति वक्तव्यम्, इदं तु न संगच्छते। यतः कारणविशेषसत्त्वे कार्यविशेषः कारणविशेषाभावे कार्यविशेषाभावः इत्येव व्याप्तेः, न तु कारणविशेषाभावे कार्यसामान्याभाव इति स्थितेः। एवं च कर्तुः कारणविशेष एव अन्तर्गतत्वेन तदभावेऽपि तद्व्यतिरिक्तकारणान्तरैरेव क्षित्याद्युत्पत्तेस्संभवेन नात्र अनुमानेन कार्यत्वसद्भावमात्रेण ईश्वरकर्तृकत्वं साधयितुं शक्यते। अत एव सामान्यतः—कारणाभावे कार्याभाव इति व्याप्तिभंगोऽपि न भवति। तदुक्तम्—कुसुमांजलौ—"हेत्वभावे फलाभावो विशेषस्तु विशेषवान्" इति।

न च ईश्वरानभ्युपगमे तद्वदेव कार्यसामान्ये कारणत्वेन प्रसिद्धस्य कालस्याप्य-पलापापत्तिः, तथा च कालस्याऽभावेऽपि कार्योत्पत्त्यापत्तिरिति वाच्यम्। वर्षादिकाल-प्रतीक्षया कर्षकादिप्रवृत्तेः "वसन्ते ज्योतिषा यजेते" त्यादिश्रुत्या कालविशेषे कर्म-चोदनाच्च कालस्य लोकशास्त्रयोः प्रसिद्धेस्सत्त्वेन न तस्यापह्नवस्संभवतीति कार्य-सामान्यहेतुत्वमव्याहतमेव स्यात्—ईश्वरस्य तु अनुमानेनैव सिद्धेः भवद्भिर्वक्तव्यतया अनुमितेश्च उपदर्शितरीत्या व्याप्यत्वासिद्ध्याद्यनेकदोषग्रस्ततया तत्सिद्ध्यनुपपत्तेः।

न च क्षित्यादौ ईश्वरभिन्नकारणान्तराणामचेतनत्वेन स्वतः प्रवृत्तेरसम्भावित-तया तेषामधिष्ठातृत्वेन ईश्वरः सिद्ध्यतीति वाच्यम्। अदृष्टवशादेव कारणान्तराणां-प्रवृत्त्युपपत्तेः।

न च अदृष्टस्याप्यचेतनतया अधिष्ठाननिरपेक्षप्रवृत्त्यनुपपत्तेः तदधिष्ठातृत्वेन ईश्वरसिद्धिर्निष्प्रत्यूहैवेति वाच्यम्। पुरुषप्रयत्नस्य तथा ईश्वरप्रयत्नस्य च स्वव्यतिरिक्तं अधिष्ठातारं विनैव कार्यकरत्वदर्शनात् तन्न्यायेन स्वमहिम्ना स्वत एवादृष्टस्य कार्योत्पादकत्वोपपत्तेः।

न च कारणसामान्यान्तर्गतस्य कर्तृरूपकारणविशेषस्याऽभावेऽपि कार्योत्पत्त्यभ्युपगमे तुल्यन्यायेन उपादानादिकारणान्तरस्यापि त्यागापत्तिरिति वाच्यम्। ध्वंसरूपकार्यवत् एकाभावेऽपि इतरेषां यथापेक्षं स्वीकारेण कारणान्तरत्यागासंभवात्। यथा[1] ध्वंसरूपकार्यस्य पूर्वमस्थित्वा पश्चात् सत्त्वेन तत्र समवायिकारणासमवायिकारणयोः कारणत्वानुपपत्त्या निमित्तकारणमात्रनिष्पाद्यत्वं भवन्मते (नैयायिकमते) उच्यते तथैव कर्तृरूपकारणविशेषाऽभावेऽपि कार्ये तदितरकारणान्तरजन्यत्वस्य निराबाधतया नात्र अनुमानेन ईश्वरस्य कर्तृत्वं सिद्ध्यतीति निगूढाभिसन्धिः।

इत्थमत्र कार्यसामान्ये कर्तुः कारणत्वास्वीकारात् कार्यत्वेन सकर्तृकत्वानुमानं न भवतीत्युक्तम्।

## अनुमानस्य सोपाधिकत्वम्

अथ तस्य सोपाधिकत्वमपि प्रतिपाद्यते। तथा हि—

क्षित्यंकुरादिकं सकर्तृकं कार्यत्वादिति नैयायिकोक्तानुमाने शरीरजन्यत्वमुपाधिः। घटादिरूपकार्ये सकर्तृकत्वरूपसाध्यस्य शरीरजन्यत्वस्य च सत्त्वात् शरीरजन्यत्वरूपोपाधेः सकर्तृकत्वरूपसाध्यव्यापकत्वम्। शरीरजन्यत्वशब्देन अत्र शरीरिकर्तृजन्यत्वं केवलशरीरजन्यत्वं च विवक्षितम्। ततश्च कुलालादेः शरीरित्वेन तादृशशरीरजन्यत्वं घटादौ संगच्छते। एवं नैयायिकैः ईश्वरस्य शरीरानभ्युपगमात् पक्षे क्षित्यादौ तत्कर्तृकत्वोपगमे तत्र कार्यत्वरूपसाधनस्य सत्त्वेऽपि शरीरजन्यत्वरूपोपाधेरसत्त्वेन साधनाव्यापकत्वमुपाधेरस्तीति साध्यव्यापकत्वे सति साधनाव्यापकत्वस्यैव उपाधिलक्षणत्वेन निरुक्तानुमानस्य च सोपाधिकत्वेन व्याप्यत्वासिद्धिदोषग्रस्ततया न तेन ईश्वरस्साधयितुं शक्यते।

---

१. घटाद्यवयविनं प्रति कपालाद्यवयवः समवायिकारणं कपालाद्यवयवश्च घटोत्पत्तेः प्राक् वर्तत इति तादृशस्थले समवायिकारणजन्यत्वमिष्यते ध्वंसे तु नैवं। स्वोत्पत्तेः प्राक् अवयवादेरभावेन तज्जन्यत्वासंभवात् इति कार्येऽपि यथानुभवं वैलक्षण्यमनुसन्धेयम्।

न च क्षित्यादीत्यादिपदेन शरीरभुवनादेर्ग्रहणवत् शरीरगतगुणादीनामपि पक्षे अन्तर्गततया शरीरवृत्तिवाय्वादिवस्त्वन्तरसंयोगस्याऽपि शरीरजन्यत्वेन उपाधेः सत्वात् तत्र कार्यत्वरूपहेतोर्विद्यमानत्वेन च साधनाव्यापकत्वं न संभवति। एवं साध्य-समव्याप्तत्वे सति साधनाव्यापकत्वमेव उपाधित्वमिति पक्षे शरीरगतसंयोगे शरीर-जन्यत्वे सत्त्वेऽपि सकर्तृकत्वरूपसाध्याभावाच्च शरीरजन्यत्वस्योपाधित्वं न संभवतीति वाच्यम्।

शरीरगतसंयोगे शरीरजन्यत्वरूपोपाधेस्सत्त्वेऽपि तस्य यावत्पक्षावृत्तित्वेन यत्र यत्र कार्यत्वरूपसाधनं तत्र तत्र शरीरजन्यत्वमिति व्याप्तेः क्षित्यादौ भग्नतया साधन-व्यापकत्वाभावात् साधनाव्यापकत्वमुपपद्यते। उपाधिलक्षणे हि न पक्षावृत्तित्वं घटकम् किन्तु साधनाव्यापकत्वमात्रमेव। एवं साध्यसमव्याप्तत्वस्याऽपि न उपाधिलक्षणघटकत्वं तथात्वे धूमवान् वह्नेरित्यत्र धूमरूपसाध्यशून्यदेशे जलह्रदादावपि आर्द्रेन्धनसंयोगस्य विद्यमानत्वेन तस्य साध्यव्याप्यत्वाभावेन उपाधित्वं न स्यात्। इत्थं च साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमात्रस्योपाधिलक्षणत्वेन तादृशत्वस्य च शरीरजन्यत्वे निराबाधतया क्षित्यादिकमित्याद्यनुमानस्य सोपाधिकत्वेन न तेन ईश्वरः साधयितुं शक्यः।

## सत्प्रतिपक्षदोषनिरूपणम्

अथ क्षित्यंकुरादिकं सकर्तृकं कार्यत्वादित्यनुमितौ हेतोः क्षित्यादिकं अकर्तृकं शरीराजन्यत्वादिति प्रत्यनुमानेन सत्प्रतिपक्षितत्वेनापि नानुमानेन ईश्वरः सिद्धयति। लोके सामान्यतः घटादौ शरीरिकर्तृकत्वस्यैव दर्शनात् पक्षे क्षित्यादौ अशरीरस्य ईश्वरस्यैव भवद्भिः कर्तृत्वोपगमात् शरीराजन्यत्वरूपहेतोस्सत्त्वेन सत्प्रतिपक्षदोषः।

न च अजन्यत्वमात्रेण अकर्तृकत्वस्य व्याप्तेर्निराबाधतया अजन्यत्वविशेषणी-भूतशरीरपदस्य वैयर्थ्येन व्यर्थविशेषणतया व्याप्तेरसंभवेन शरीराजन्यत्वहेतुना अकर्तृकत्वानुमानस्याऽनुपपन्नतया नात्र सत्प्रतिपक्षदोषावसर इति वाच्यम्। तथा सति क्षित्यादिरूपपक्षे केवलस्य अजन्यत्वस्य असंभवेन स्वरूपासिद्धिदोषापत्तेः। एतत्परिहारार्थं शरीरपदोपादानस्यावश्यकत्वात्।

न च शरीराजन्यत्वस्य क्षित्यादौ सत्त्वेऽपि तत्र कर्तृजन्यत्वस्यैव विद्यमानत्वेन अकर्तृकत्वरूपसाध्यस्य बाधितत्वेन शरीराजन्यत्वेन सह व्याप्तेरयोगात् "एकामसिद्धिं परिहरतो द्वितीयापत्ते"रिति न्यायेन व्याप्यत्वासिद्ध्या शरीराजन्यत्वहेतुना नात्र सत्प्रतिपक्षदोषोद्भावनं सुलभमिति वाच्यम्।

क्षित्यंकुरादिकं सकर्तृकमिति त्वदुक्तानुमानेऽपि साध्यांशे कर्तृनिष्ठकृतिजन्यत्वापेक्षया केवलकृतिजन्यत्वस्यैव लाघवात् साध्यत्वेन वक्तुं शक्यतया कर्तृपदस्य व्यर्थविशेषणत्वेन व्याप्यत्वासिद्धिदोषस्य जागरूकत्वेन तदनुपादाने केवलकृतिजन्यत्वस्य घटादौ अनुमानात्प्रागेव प्रत्यक्षत एव सिद्धतया तस्यैव साधने सिद्धसाधनदोषापत्त्या तत्परिहारार्थं कर्तृपदमिति प्रयोजनकथनस्य "एकामसिद्धिं परिहरतो द्वितीयापत्ते" रिति न्यायस्य च भवत्पक्षेऽपि समानतया उभयोः समत्वेन सत्प्रतिपक्षदोषः दुरुद्धर एवेति न किञ्चिदेतत् ।

न च शरीरजन्यत्वस्य क्षित्यादिरूपपक्षावृत्तितया शरीराजन्यत्वस्य अकर्तृकत्वरूपसाध्याभावसाधकत्वोपगमे पक्षेतरत्वस्यापि पक्षावृत्तितया तादृशपक्षेतरत्वाभावेनापि साध्याभावानुमितिः स्यादिति वाच्यम् । तथा सति पर्वतो वह्निमान् धूमात् इत्यत्रापि पक्षेतरत्वाभावरूपहेतोस्सत्त्वेन वह्न्यभावानुमित्यापत्तेः । अतः पक्षेतरत्वस्य पक्षावृत्तित्वमात्रेण न पक्षेतरत्वाभावो हेतुः किन्तु पक्षादिस्थितेः यस्याबाधः तस्यैव हेतुत्वम् । एवं च प्रकृते शरीराजन्यत्वस्य क्षित्यादौ त्वपक्षे निराबाधातया तेन सत्प्रतिपक्षः दुरुद्धर एवेति भावः ।

नन्वेवं शरीरजन्यत्वेन क्षित्यंकुराद्यनुमानस्य सोपाधिकत्वे—तुल्यन्यायतया स्वशरीरस्थत्वस्यापि उपाधित्वेन परात्मानुमानं न स्यात् । कणादमहर्षिणा—'प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम्' इति सूत्रे शरीरान्तरस्थगमनादिक्रिया चेतनाधिष्ठानपूर्विका वाय्वाद्यप्रेरितशरीरक्रियात्वात् इत्यनुमानेन परात्मनः अस्तित्वं साधितं देहातिरिक्तस्वात्मन्यायेन । तदेतन्न घटते । स्वशरीरस्थत्वस्योपाधित्वात् । स्वशरीरस्थक्रियायां चेतनाधिष्ठानपूर्वकत्वरूपसाध्यमस्ति तत्र स्वशरीरस्थत्वरूपोपाधेरपि विद्यमानत्वात् साध्यव्यापकत्वं एवं शरीरान्तरस्थक्रियायां पक्षे वाय्वाद्यप्रेरितशरीरक्रियात्वरूपसाधनमस्ति स्वशरीरस्थत्वं नास्तीति साधनाव्यापकत्वम् । इत्थं च क्षित्याद्यनुमान इव परात्मानुमानेऽपि उपाधेर्वक्तुं शक्यत्वेन परात्मानुमानं न सम्भवतीति चेन्न । तुल्यन्यायेन स्वशरीरस्थक्रियां पक्षीकृत्य स्वशरीरातिरिक्तात्मसाधनेऽपि स्वशरीरस्थत्वाद्युपाधेस्सुवचत्वेन स्वशरीरेऽपि आत्माभावसाधनप्रसंगात् । एवं च स्वात्मपरमात्मनोर्विविधप्रवृत्त्यनुसारं प्रत्यक्षसिद्धत्वात् तस्यापलापे स्वहृदयविसंवाददोषस्स्यात् ।

किञ्च अनुमानेन परात्मनः सिद्धयनभ्युपगमे शिष्याचार्य वादिप्रतिवादि शत्रुमित्रादि संव्यवहारस्यापि लोपस्स्यात्। अतोऽत्र अनेकविधबाधस्य दर्शनात् परमात्मानुमानवत् न परात्मानुमानस्य सोपाधिकत्वमिति।

### व्यतिरेक्यनुमानस्य ईश्वरासाधकत्ववर्णनम्

एतावता प्रबन्धेन अन्वय्यनुमानस्य सोपाधिकत्वात् न तेन ईश्वरः साधयितुं शक्यत इति प्रत्यपादि। अथ व्यतिरेक्यनुमानेनापि ईश्वरः न सिद्धयतीति प्रतिपाद्यते। यद्यपि वेदान्तिभिः केवलव्यतिरेक्यनुमानं नाङ्गीक्रियते तथापि नैयायिकैरभ्युपगमात् तन्मतानुसारेण इदमुक्तम्। अत्रायमाशयः। क्षित्यादिकं सर्वविरकर्तृकं कार्यत्वादित्युक्ते कार्यत्वरूपहेत्वभावस्य सर्वविरकर्तृकत्वाभावव्यापकतया व्यापकाभावात् व्याप्याभाव इति न्यायेन प्रकृते क्षित्यादौ सर्वज्ञकर्तृकत्वाभावव्यापक कार्यत्वरूपसाधनाभावस्य असत्वात् तन्निवृत्या सर्ववित्कर्तृकत्वाभावरूपसाध्याभावस्यापि निवृत्तेः-सर्ववित्कर्तृकत्वं व्यतिरेकव्याप्त्या सिद्धयतीति नैयायिकाः। अत्रेदं विमृश्यते।

क्षित्यादौ सर्वज्ञकर्तृकत्वस्य अनुमानात् प्रागप्रसिद्धया प्रतियोग्यप्रसिद्धया अभावाप्रसिद्धिरिति रीत्या सर्ववित्कर्तृकत्वाभाव कार्यत्वाभावयोः व्यतिरेकव्याप्तिरेव नोपपद्यते। यद्यत्र सामान्यतः यत्किञ्चित्कर्तृकत्वस्य प्रसिद्धत्वेन तादृशयत्किञ्चित्कर्तृकत्वाभाव कार्यत्वाभावयोः व्यतिरेकव्याप्तिसम्भवेन यत्किञ्चित्कर्तृकत्वमेव क्षित्यादौ साध्यत-इत्युच्येत तदा सिद्धसाधनं स्यात् निरुक्तसाध्यस्य अनुमितेः प्रागेव सिद्धत्वात्। अथैतद्दोषपरिहारार्थं कर्तृरूपसाध्यांशे सर्वविदिति विशेषणं यत्किञ्चित्कर्तृकत्वस्य पूर्वं सिद्धत्वेऽपि सर्ववित्कर्तृकत्वस्याऽसिद्धत्वेन तस्य साध्यत्वेऽनुपपत्त्यभावादिति कथनमपि न युज्यते। तथा सति पूर्वोक्तरीत्या अप्रसिद्धया व्यतिरेकव्याप्तेर्वक्तुमशक्यत्वात्।

किञ्च यत्र यत्र कर्तृकत्वाभावः तत्र तत्र कार्यत्वाभाव इति रीत्यैव व्यतिरेकव्याप्तेस्सम्भवेन सर्वविदिति विशेषणमप्यनर्थकं स्यात्। इत्थं च व्यर्थविशेषणत्वेन अप्रसिद्धया च व्यतिरेकव्याप्तेर्दुर्वचत्वेन नात्र व्यतिरेकिलिङ्गकानुमानेन ईश्वरः साधयितुं शक्यते।

न च यः सर्वज्ञः सर्ववित्' इत्यादिश्रुत्या सर्वज्ञत्वस्य प्रसिद्धेः तादृशसर्वज्ञत्वमादाय सर्ववित्कर्तृकत्वाभावकार्यत्वाभावयोः व्यतिरेकव्याप्तिस्सुलभेति वाच्यम्। तथा

सति श्रुत्यैव ईश्वरस्य सिद्धया अनुमानवैयर्थ्यापत्तेः। यद्यत्र श्रुत्यपेक्षया अनुमानेन ईषद्वा अधिकांशः बोध्येत तदा अज्ञातज्ञापनं प्रयोजनं भवतीति प्रमाणसंप्लवः सफलः स्यात् नत्वेतदस्ति। तस्मात् अन्वय्यनुमानेन व्यतिरेक्यनुमानेन वा ईश्वरस्य दुस्साधत्वात् शास्त्रैकवेद्यत्वं सिद्धयतीति वेदान्तिनां राद्धान्तः।

### ईश्वरानुमानदूषणे वेदान्तिनां तात्पर्यवर्णनम्

अथ

'विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः।
त एते बहुपाप्मानः सद्यो दण्ड्या इति श्रुतिः' ॥

इत्यादिप्रमाणेन ईश्वरदूषणे महतः प्रत्यवायस्य बोधनात् कथं नैयायिकोक्तमनुमानं दूष्यते? तथा सति उपदर्शितशास्त्रविरोधस्स्यादिति चेन्न। नैयायिकोक्तस्य अनुमानस्यैव दूषणेन आगमोक्तेश्वरस्याऽभ्युपगमात् तदूदूषणाच्च उपदर्शितशास्त्रविरोधाभावात्। ईश्वरदूषणं हि नाम ईश्वरस्यापलापः ईश्वरे विद्यमानगुणापलापो वा स्यात् अस्माभिरीश्वरस्य सगुणस्याभ्यपुगमान्न तादृशदूषणावकाशः।

न च

"आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्" ॥

इत्युदयनाचार्यवाक्येन आगमवत् तुल्यतया अनुमानप्रमाणस्यापि ईश्वरसाधकत्वेन प्रतिपादितत्वात्कथमीश्वरानुमानं दूष्यत इति वाच्यम्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतौ (अनुग्राहक) युक्तिभिः स्थिरीकरणात्मकमननस्य प्रतिपादनात् तस्य च श्रवणानन्तरभावित्वेन अनुमानशब्देन मननस्यैव ग्रहणान्नात्र आगमभिन्नं अनुमानात्मकं पृथक् प्रमाणमुच्यत इति न विरोधः।

अथवा "यस्तर्केणानुसन्धत्ते" इति स्मरणात् तर्कानुमानयोरदूरबिप्रकर्षात् समाख्याविपर्यासस्य दर्शनाच्च प्रकृते अनुग्राहक युक्त्यात्मकतर्क एव अनुमानशब्देनाऽभिधीयते न तु तर्कव्यतिरिक्तं स्वतन्त्रं प्रमाणमिति न कश्चिद्विरोधः।

न च नैयायिकोक्तेश्वरानुमाननिरासेऽपि ब्रह्मणः श्रुतिप्रतिपादितत्वेन शास्त्रवेद्यत्वसिद्धया तन्निरासो निष्फल इति वाच्यम्। "यतो वा इमानि भूतानि जायन्ते" "एकविज्ञानेन सर्वविज्ञानं भवति" इत्याद्यनेकश्रुतिभिः अभिन्ननिमित्तोपादानत्वेनैव ईश्वरस्य प्रतिपादनात् अनुमानेन च नैयायिकैः केवलनिमित्तकारणत्वेनैव ईश्वरसिद्धेरुपपादनाच्च प्रमाणद्वयसिद्धार्थस्य परस्परं व्याहतत्वेन ईश्वरविषये अनुमानस्य मुख्यत्वे श्रुत्यर्थस्य बाधः स्यात्। अतस्तादृशबाधापत्तनुत्त्यै नैयायिकोक्तानुमानं निरस्यते।

किञ्च अनुमानेन परात्मनः सिद्ध्यनभ्युपगमे शिष्याचार्य वादिप्रतिवादि शत्रु-मित्रादि संव्यवहारस्यापि लोपस्स्यात्। अतोऽत्र अनेकविधबाधस्य दर्शनात् परमात्मानु-मानवत् न परात्मानुमानस्य सोपाधिकत्वमिति।

## व्यतिरेक्यनुमानस्य ईश्वरासाधकत्ववर्णनम्

एतावता प्रबन्धेन अन्वय्यनुमानस्य सोपाधिकत्वात् न तेन ईश्वरः साधयितुं शक्यत इति प्रत्यपादि। अथ व्यतिरेक्यनुमानेनापि ईश्वरः न सिद्ध्यतीति प्रति-पाद्यते। यद्यपि वेदान्तिभिः केवलव्यतिरेक्यनुमानं नाङ्गीक्रियते तथापि नैयायिकैरभ्यु-पगमात् तन्मतानुसारेण इदमुक्तम्। अत्रायमाशयः। क्षित्यादिकं सर्वविरकर्तृकं कार्यत्वा-दित्युक्ते कार्यत्वरूपहेत्वभावस्य सर्वविरकर्तृकत्वाभावव्यापकतया व्यापकाभावात् व्याप्याभाव इति न्यायेन प्रकृते क्षित्यादौ सर्वज्ञकर्तृकत्वाभावव्यापक कार्यत्वरूप-साधनाभावस्य असत्वात् तन्निवृत्या सर्वंवित्कर्तृकत्वाभावरूपसाध्याभावस्यापि निवृत्तेः-सर्ववित्कर्तृकत्वं व्यतिरेकव्याप्त्या सिद्ध्यतीति नैयायिकाः। अत्रेदं विमृश्यते।

क्षित्यादौ सर्वज्ञकर्तृकत्वस्य अनुमानात् प्रागप्रसिद्ध्या प्रतियोग्यप्रसिद्ध्या अभावा-प्रसिद्धिरिति रीत्या सर्ववित्कर्तृकत्वाभाव कार्यत्वाभावयोः व्यतिरेकव्याप्तिरेव नोप-पद्यते। यद्यत्र सामान्यतः यत्किञ्चित्कर्तृकत्वस्य प्रसिद्धत्वेन तादृशयत्किञ्चित्कर्तृकत्वा-भाव कार्यत्वाभावयोः व्यतिरेकव्याप्तिसम्भवेन यत्किञ्चित्कर्तृकत्वमेव क्षित्यादौ साध्यत-इत्युच्येत तदा सिद्धसाधनं स्यात् निरुक्तसाध्यस्य अनुमितेः प्रागेव सिद्धत्वात्। अथैतद्दोष-परिहारार्थं कर्तृरूपसाध्यांशे सर्वविदिति विशेषणं यत्किञ्चित्कर्तृकत्वस्य पूर्वं सिद्धत्वेऽपि सर्ववित्कर्तृकत्वस्याऽसिद्धत्वेन तस्य साध्यत्वेऽनुपपत्त्यभावादिति कथनमपि न युज्यते। तथा सति पूर्वोक्तरीत्या अप्रसिद्ध्या व्यतिरेकव्याप्तेर्वक्तुमशक्यत्वात्।

किञ्च यत्र यत्र कर्तृकत्वाभावः तत्र तत्र कार्यत्वाभाव इति रीत्यैव व्यतिरेक-व्याप्तेस्सम्भवेन सर्वविदिति विशेषणमप्यनर्थकं स्यात्। इत्थं च व्यर्थविशेषणत्वेन अप्रसिद्ध्या च व्यतिरेकव्याप्तेर्दुर्वचत्वेन नात्र व्यतिरेकिलिङ्गकानुमानेन ईश्वरः साध-यितुं शक्यते।

न च यः सर्वज्ञः सर्ववित्' इत्यादिश्रुत्या सर्वज्ञत्वस्य प्रसिद्धेः तादृशसर्वज्ञत्व-मादाय सर्ववित्कर्तृकत्वाभावकार्यत्वाभावयोः व्यतिरेकव्याप्तिस्सुलभेति वाच्यम्। तथा

सति श्रुत्यैव ईश्वरस्य सिद्धया अनुमानवैयर्थ्यापत्तेः। यद्यत्र श्रुत्यपेक्षया अनुमानेन ईषद्वा अधिकांशः बोध्येत तदा अज्ञातज्ञापनं प्रयोजनं भवतीति प्रमाणसंप्लवः सफलः स्यात् नत्वेतदस्ति। तस्मात् अन्वय्यनुमानेन व्यतिरेक्यनुमानेन वा ईश्वरस्य दुस्साधत्वात् शास्त्रैकवेद्यत्वं सिद्धयतीति वेदान्तिनां राद्धान्तः।

## ईश्वरानुमानदूषणे वेदान्तिनां तात्पर्यंवर्णनम्

अथ

'विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः।
त एते बहुपाप्मानः सद्यो दण्डया इति श्रुतिः' ॥

इत्यादिप्रमाणेन ईश्वरदूषणे महतः प्रत्यवायस्य बोधनात् कथं नैयायिकोक्तमनुमानं दूष्यते? तथा सति उपदर्शितशास्त्रविरोधस्स्यादिति चेन्न। नैयायिकोक्तस्य अनुमानस्यैव दूषणेन आगमोक्तेश्वरस्याऽभ्युपगमात् तददूषणाच्च उपदर्शितशास्त्रविरोधाभावात्। ईश्वरदूषणं हि नाम ईश्वरस्यापलापः ईश्वरे विद्यमानगुणापलापो वा स्यात् अस्माभिरीश्वरस्य सगुणस्याभ्यपुगमान्न तादृशदूषणावकाशः।

न च

"आगमेनानुमानेन ध्यानाभ्यासरसेन च।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्" ॥

इत्युदयनाचार्यवाक्येन आगमवत् तुल्यतया अनुमानप्रमाणस्यापि ईश्वरसाधकत्वेन प्रतिपादितत्वात्कथमीश्वरानुमानं दूष्यत इति वाच्यम्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतौ (अनुग्राहक) युक्तिभिः स्थिरीकरणात्मकमननस्य प्रतिपादनात् तस्य च श्रवणानन्तरभावित्वेन अनुमानशब्देन मननस्यैव ग्रहणान्नात्र आगमभिन्नं अनुमानात्मकं पृथक् प्रमाणमुच्यत इति न विरोधः।

अथवा "यस्तर्केणानुसन्धत्ते" इति स्मरणात् तर्कानुमानयोरदूरबिप्रकर्षात् समाख्याविपर्यासस्य दर्शनाच्च प्रकृते अनुग्राहक युक्त्यात्मकतर्क एव अनुमानशब्देनाऽभिधीयते न तु तर्कव्यतिरिक्तं स्वतन्त्रं प्रमाणमिति न कश्चिद्विरोधः।

न च नैयायिकोक्तेश्वरानुमानानिरासेऽपि ब्रह्मणः श्रुतिप्रतिपादितत्वेन शास्त्रवेद्यत्वसिद्धया तन्निरासो निष्फल इति वाच्यम्। "यतो वा इमानि भूतानि जायन्ते" "एकविज्ञानेन सर्वविज्ञानं भवति" इत्याद्यनेकश्रुतिभिः अभिन्ननिमित्तोपादानत्वेनैव ईश्वरस्य प्रतिपादनात् अनुमानेन च नैयायिकैः केवलनिमित्तकारणत्वेनैव ईश्वरसिद्धेरुपपादनाच्च प्रमाणद्वयसिद्धार्थस्य परस्परं व्याहतत्वेन ईश्वरविषये अनुमानस्य मुख्यत्वे श्रुत्यर्थस्य बाधः स्यात्। अतस्तादृशबाधापत्त्यै नैयायिकोक्तानुमानं निरस्यते।

इत्थं "न कदाचिदनीदृशं जगत्" इति मीमांसकोक्तरीत्वा जगतो नित्यत्वात् तत्कर्तृतया ईश्वरो न स्वीकर्तव्य इति ईश्वरबाधपरिहारार्थमपि अनुमानं प्रतिषिद्धयते।

एवं ईश्वरस्य मुख्यतया अनुमानप्रमाणमात्रसिद्धत्वस्वीकारे तदा शास्त्रस्य नैरपेक्ष्यप्रसंगात् सिद्धांशे ब्रह्मणि अनुमानाघ्रातत्वाच्च पिष्टपेषणन्यायेन मुख्यत्वानुपपत्या सिद्धब्रह्मप्रतिपादकपर वेदवाक्यविमर्शं एव न स्यात्। ततश्च शास्त्रे ईश्वरो न प्रत्यपादीत्यपि शंका स्यात्। तस्मात् ईश्वरस्य शास्त्रानुक्तत्व शंकापरिहारार्थमपि नैयायिकोक्तानुमानं निरस्य शास्त्रैकवेद्यत्वं समर्थ्यते। तदुक्तं ग्रन्थकर्त्रा त-मु-कलापे—

"शास्त्रानुक्तत्व—बाधद्वयपरिहृतये शास्त्रयोनित्वसूत्रम्" इति। इदमुपलक्षणम्। ईश्वरस्य अनुमानप्रमाणगम्यत्वोपगमे नैयायिकैः प्रतिकल्पमीश्वरकृतविभिन्नवेदस्वीकारेण वेदापौरुषेयत्वबाधः। तथा ईश्वरसिद्धिसाधकतयोपन्यस्तस्य क्षित्यंकुरादिकमित्याद्यनुमानस्य शरीरजन्यत्वरूपोपाधिग्रस्तत्वेन न तेन ईश्वरः सिद्धयतीति ईश्वर सिद्धिबाधः। एवं क्षित्यादिकं अकर्तृकं शरीराजन्यत्वादिति प्रत्यनुमानेन सत्प्रतिपक्षितत्वाच्च कर्तृत्वेन ईश्वरप्रतिषेधात् न तेनेश्वरः सिद्धयतीति ईश्वरबाधोऽपि। तस्मात् ईश्वरस्य आनुमानिकत्वे विविधबाधानां संभवेन शास्त्रैकवेद्यत्वमङ्गीकर्तव्यमिति निष्कर्षः। तदेतत् सर्वमभिप्रेत्योक्तं—सर्वार्थसिद्धौ—

"तस्मादेवं विधानेक बाधशंकाऽपनुत्तये।
नित्यनिर्दोषशास्त्रैक वेद्यत्वमिह सूत्रितम्॥
शब्दप्रमाणके तस्मिन् यथाशब्दं व्यवस्थितिः।
सर्वैरनतिलंघ्येति न शंकातङ्कसंभवः॥ इति।

## सांख्याधिकरण शास्त्रयोनित्वाधिकरण विरोधपरिहारः

नन्वेवमपि "रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च" त्यादिसूत्रेण सांख्याधिकरणे "अव्यक्तं प्राज्ञाधिष्ठितं अचेतनत्वे सति परिणामित्वात् वास्यादिवत्" इत्यनुमानेन प्रकृतेः प्राज्ञरूपेश्वराधिष्ठितत्वमुपापादि, तेन अधिष्ठातृत्वेन ईश्वरोऽपि निरुक्तानुमान तात्पर्यविषय इति गम्यते, अत्र शास्त्रयोनित्वाधिकरणे तु क्षित्यादिकं सकर्तृकमित्याद्यनुमानेन प्राज्ञः ईश्वरः साधयितुं न शक्यत इत्युच्यते, एवं च अधिकरणद्वय-

सिद्धार्थस्य परस्परं विरोधेन शास्त्रैकवेद्यत्वं ब्रह्मणो न संभवतीति चेन्न। सांख्याधिकरणे केवलायाः प्रकृतेः अचेतनत्वात् चेतनाधिष्ठानं विना जगत्कारणत्वं न संभवति, अतः प्राज्ञाधिष्ठिताया एव प्रकृतेः जगत्कारणत्वं वक्तव्यमित्येतावन्मात्रमुपपादितं न तु अधिष्ठाता प्राज्ञरूपेश्वरः अनुमानगम्य इति। शास्त्रयोनित्वाधिकरणे तु जगतः प्राज्ञकर्तृकत्वसाधकानुमानदूषणमुखेन ईश्वरस्य शास्त्रैकसमधिगम्यत्वं प्रतिपाद्यत इति द्वयोरप्यधिकरणयोः विषयभेदेन मिथो विरोधाभावात्। इत्थं च—

ब्रह्मविषये शास्त्रमेव मुख्यं प्रमाणं मानान्तरेण असिद्धत्वादबाधितत्वाच्चेति-निष्कर्षः।

अभिन्ननिमित्तोपादानत्वोपपत्तिः

नन्वेवं परमात्मन एव उपादनत्वनिमित्तत्वाभ्युपगमे लोकानुभवविरोधः, निष्क्रियं निष्कलं, अविकाराय शुद्धायेत्यादिनिर्विकारत्वप्रतिपादकश्रुतिस्मृतिविरोधश्च स्यात्।

तथा हि—घटोपादानभूतस्य कपालस्य परिणामित्वेन विकारवत्त्वदर्शनात् तद्वदेव परमात्मनोऽपि उपादानकारणत्वे परिणामित्वावश्यंभावात् सविकारत्वापत्तिः ततश्च निर्विकारत्वप्रतिपादकवाक्यविरोधः।

किञ्च लोकेऽपि यत् उपादानं तत् निमित्तकारणं न भवति यथा घटोत्पत्तौ कुलालः निमित्तकारणमेव न तूपादानम्। सर्वत्र चेतनस्य अधिष्ठातुः निमित्तकारणत्वमात्रदर्शनात्। उपादानकारणन्तु कपालादिरूपावयव एव, इत्थञ्च उपादानकारणत्वनिमित्तकारणत्वयोः भिन्नव्यक्तिनिष्ठत्वेन कथं परमात्मनः एकस्यैव उपादानत्वं निमित्तकारणत्वं च सञ्जाघटीति। तस्मात् अत्र तार्किकोक्तरीत्या लोकानुभवविरोधात् परमात्मनः (जगत्सृष्टिविषये) निमित्तकारणत्वमात्रं न तु उपादानत्वमिति चेन्न। अन्तर्यामिब्राह्मणे यस्य पृथिवी शरीरं इत्यादिश्रुत्युक्तरीत्या चेतनाचेतनयोः भगवच्छरीरत्वेन तादृशशरीरस्यैव परिणामित्वप्रयुक्तविकारादिदोषाश्रयत्वं न तु शरीरिणः परमात्मनः। अतश्च चेतनाचेतनद्वारैव परमात्मनः उपादानत्वं इति न तस्य सविकारत्वापत्तिः। यथा—"बालो युवा भवति" इत्यत्र शरीरस्येव जीवस्यापि शरीरद्वारा उपादानोपादेयभावः परीक्षकलोकसंमतः। तद्वत् परमात्मनोऽपि उपादानत्वं, अन्यथा केवलशरीरस्योपादानत्वे तदा जीवं विनापि बालो युवा भवतीति व्यवहारापत्तिस्स्यात्।

यदि तत्र जीवे अवर्तमाने बालशरीरे]-युवत्वासंभवात् न तथा व्यवहार इत्युच्येत तदा युवत्वावस्थापन्नदेहं प्रति बालत्वावस्थापन्नदेहस्योपादानत्ववत् स्वाश्रयाधिष्ठातृत्व-संबन्धेन युवत्वविशिष्टजीवं प्रति तेनैव परम्परासंबन्धेन बालत्वविशिष्टो जीव उपादानमि-त्येष्टव्यम्। ततश्च प्रकृते तद्वदेव सूक्ष्मचेतनाचेतनविशिष्टब्रह्मणः समस्तहेयप्रत्यनीकत्वेन कल्याणगुणाकरत्वेन आनन्दरूपत्वेन बालत्वाद्यवस्थाविशिष्टदेहनिष्ठदोषाः यथा तादृशदेहाधिष्ठातृजीवात्मानं न स्पृशन्ति तथैव परमात्मनि दोषाः न भवन्ति। तयोरेव परिणामित्वाभ्युपगमेन—इति निष्कर्षः। इत्थं च निर्विकारत्वप्रतिपादकश्रुतीनामपि न विरोधः।

एवं निखिलजगन्निर्मातुः भगवतः अचिन्त्यशक्तिमत्त्वेन यथाशास्त्रम् (यथाश्रुति) उपादानत्वं निमित्तत्वञ्च एकस्यैव घटत एव शास्त्रैकवेद्यविषये युक्तेः दुर्बलत्वेन यथा-गममेव निर्णेतुमुचितत्वादिति। यदुक्तं लोके घटोत्पत्तौ घटावयवभूतकपालस्यैव उपादानत्वदर्शनात् कुलालस्य निमित्तमात्रत्वानुभवाच्च यदुपादानकारणं न तत् निमित्त-कारणम्—यच्च निमित्तकारणं न तत् उपादानमिति व्याप्तेः सत्त्वात् परमात्मनि उभयाभ्युपगमे लोकानुभवविरोध इति। तत्रेदमुच्यते। जीवात्मनः स्वप्रयत्नसाध्य-सुखोत्पत्तौ कर्तृत्वदर्शनात् तत्र निमित्तकारणत्वस्य तादृशसुखस्य समवायसंबन्धेन तस्मिन्नेवोत्पत्त्या सुखसमवायितया समवायिकारणत्वस्य च एकत्र जीवात्मन्येव भवद्भिः (नैयायिकैरपि) यथा उभयविधकारणत्वस्य अवश्याभ्युपगन्तव्यतया उपादान-त्वनिमित्तत्वयोः भिन्नव्यक्तिनिष्ठत्वनियमस्य शपथमात्रत्वेन अदोषत्वात्।

अत्रेदमाकूतम्—यः कर्ता सः निमित्तकारणं, समवायसंबन्धावच्छिन्नकारणता-निरूपिततादात्म्यसंसर्गावच्छिन्नकार्यतावत्त्वस्यैव समवायिकारणत्वलक्षणत्वेन यश्च समवायी सः उपादानमिति नैयायिकसमयः। तत्र कार्योत्पत्त्यनुकूलयत्नाश्रयत्वस्यैव कर्तृत्वशब्दार्थतया जीवस्य आत्मनः सुखसंपत्तये प्रवृत्तिदर्शनात् तादृशसुखोत्पत्त्यनु-कूलयत्नाश्रयत्वरूपकर्तृत्वस्य जीवे निराबाधतया सुखाद्युत्पत्तौ जीवस्य कर्तृत्वात् निमित्तकारणत्वम्। एवं सुखादीनां गुणानां जीवएव समवायसंबन्धेनोत्पत्त्या सुखादि-समवायिकारणत्वात् उपादानमपि जीवो भवति इति स्वीकर्तव्यम्, एवं नैयायिकैः ईश्वरस्य विभुत्वोपगमात् विभुत्वस्य च सर्वमूर्तद्रव्यसंयोगित्वरूपत्वेन ईश्वरस्य च कार्य-सामान्यं प्रति कारणत्वेन ईश्वरेण सह मूर्तद्रव्यसंयोगस्य, ईश्वरसङ्कल्पादेव उत्पत्तेः तादृश

संयोगानुकूलकृत्याश्रयतया ईश्वरस्य मूर्तद्रव्यसंयोगोत्पत्तौ कर्तृत्वं, कर्तृत्वे च निमित्त-कारणत्वं वक्तव्यम्। मूर्तद्रव्यसंयोगाः ईश्वरे समवायसंबन्धेनोत्पद्यन्त इति समवायिकारणत्वमपि ईश्वरस्य संभवति अतो निमित्तोपादानैक्यं नैयायिकमतेऽपि अविरुद्धमिति यः उपादानं सः न निमित्तमित्यादिव्याप्तेः व्यभिचारेण वक्तुमशक्यत्वात् परमात्मनः अभिन्ननिमित्तोपादानत्वं सिद्धयति।

किञ्च वेदान्तिभिः अवयवातिरिक्तस्य अवयविनः समवायस्य च अनभ्युपगमात् न तन्मतसाधारणतया समवायसंबन्धावच्छिन्नकारणतानिरूपित तादात्म्यसंबन्धावच्छिन्नकार्यतावत्त्वमिति समवायिकारणलक्षणं वक्तुं शक्यं, किन्तु अवस्थाश्रयत्वं उपादानत्वमिति उपादानकारणलक्षणमुच्यते। ततश्च चेतनाचेतनयोः परब्रह्मावस्थारूपत्वेन तादृशावस्थाश्रयत्वात् परमात्मनः उपादानत्वमक्षुण्णमिति न कश्चित् दोषः। इतोऽपि अधिकविचारः न्यायसिद्धाञ्जनादिग्रन्थेषु निगमान्तमहादेशिकप्रभृतिभिः प्रादर्शि। परन्तु तत्सर्वं विस्तरभिया नेह प्रस्तूयते।

### मतभेदेन परमात्मनः चेतनाचेतनवैशिष्ट्यप्रतिपादनम्

अथ "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यतो द्यावापृथिवी निष्टतक्षुः, इत्यादिजगत्कारणत्वप्रतिपादकश्रुतिषु केवलस्य विशेष्यभूतपरमात्मान एव जगत्कारणत्वेन स्वरसतः प्रतीयमानत्वेन विशिष्टाद्वैतिमते कथं सूक्ष्मचेतनाचेतनरूपविशेषणविशिष्टब्रह्मणः जगत्कारणत्वं संभवतीति चेत—

अत्राहुः। एषः प्रश्नः वेदान्तव्याख्यानप्रवृत्तेषु केन क्रियते ? शाङ्करैः उत भास्कराचार्येण, आहोस्वित् यादवप्रकाशाचार्येण वा ? न तावदाद्यः। "अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभावतो विवर्ता यस्यैतेवियदनिलतेजोबवनयः" इति ग्रन्थेन भामतीकारैः आच्छादिकाविद्या विक्षेपिकाविद्येति अविद्याद्वयविशिष्टब्रह्मण एव गगन पवन दहन-सलिलधरणिरूपाणि पञ्चभूतानि समष्टिरूपाणि उत्पद्यन्ते विवर्ताः विलक्षण-परिणामा भवन्ति इति प्रतिपादनात् अविद्याविशिष्टं ब्रह्मैव जगत्कारणं नतु विशेष्यमात्रभूतं ब्रह्मेति अद्वैतिनां मते सिद्धम्।

न च अविद्यायाः अपरमार्थत्वेन न तन्मते सत्यभूतायाः अविद्यायाः वैशिष्ट्यं ब्रह्मणि संभवतीति वाच्यम्। अविद्यायाः त्रिष्वपि कालेषु अपरमार्थत्वेन प्रलयकाले

ब्रह्म एकमेवासीत् इत्यर्थपरायाः इदमग्रे आसीदित्युक्तेरयोगात् । अतः अग्रे आसीदितिश्रुतिः प्रपञ्चरूपकार्यरहितं तन्निर्मातृपुरुषान्तररहितं सृष्ट्युपयोग्यविद्याजीव कर्मादिविशिष्टं ब्रह्म तदाऽऽसीदित्येव अर्थस्य वर्णनीयतया अविद्याविशिष्टब्रह्मणो जगत्कारणत्वमनिवार्यमेव स्यात् ।

एवं भास्कराचार्यैरपि चिदचिदंशविभक्तं ब्रह्म द्रव्यमचिदंशेन विक्रियते तादृशाचिदंशविकारोपहितेन चिदंशेन संसरति इति चिदचितोः उपाधित्वं स्वीकृत्य तादृशोपाधिविशिष्टं ब्रह्मैव जगत्कारणमिति स्पष्टमुक्तत्वात् तन्मतेऽपि विशिष्टमेव जगत्कारणं न तु विशेष्यमात्रभूतं ब्रह्मेति सिद्धम् ।

तथा यादवप्रकाशाचार्यैरपि—सर्वात्मकं सद्रूपं ब्रह्म चिदचिदीश्वररूपांशत्रय [शक्ति]विशिष्टं समुद्र इव फेन-बुद्बुद-तरङ्गप्रभेदेन सावान्तरभेदत्रिविधव्यष्टिभावेन परिणमते" इति कथितत्वात् चिदचिदीश्वररूपत्रिविधशक्तिविशिष्टं ब्रह्मैव जगत्कारणं न तु ब्रह्ममात्रमिति स्पष्टम् । इत्थं च त्रय्यन्तवादिभिरन्यैरपि ब्रह्मणि यत्किञ्चिद्वैशिष्ट्यस्याङ्गीकृतत्वात् "सदेव सोम्येदमग्र आसी"दित्यादिश्रुतेः विशेषणविशिष्टब्रह्मणः एव जगत्कारणत्वप्रतिपादकत्वेन निर्वोढव्यत्वाच्च न विशिष्टाद्वैतवेदान्तिपक्ष एव विशेष्यमात्रस्य परमात्मनः जगत्कारणत्वप्रतिपादकत्वश्रुतेः स्वारस्यभङ्गरूपो दोषः न वा गोणार्थतात्पर्यकल्पनम् ।

"एकमेवाद्वितीय"मिति श्रवणेऽपि अविद्यादिवैशिष्ट्यस्वीकारस्य सर्वमतसाधारणतया चेतनाचेतनयोः परमात्मानं प्रति शरीरत्वस्य, जगत्प्रति चेतनाचेतनयोः साक्षाद्धेतुत्वस्य, ब्रह्मणि चेतनाचेतनवैशिष्ट्यस्य च श्रुति-स्मृतिसिद्धतया सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्मैव जगत उपादानकारणं निमित्तकारणं च भवतीति निष्कर्षः ।

## मिथ्यात्वानुमानविमर्शः

श्रीभगवद्रामानुजाचार्यैः "नेह नानाऽस्ति किञ्चन" "सर्वं खल्विदं ब्रह्म" त्यादिश्रुतीनां जगच्छरीरकं (चेतनाचेतनशरीरकं) ब्रह्म-एकमेव न तु नाना अर्थात् अब्रह्मात्मकं किमपि नास्ति किन्तु सर्वं ब्रह्मात्मकमेवेत्यर्थमुपवर्ण्य नोपदर्शितश्रुतिभिः जगतः मिथ्यात्वं नवा ब्रह्मणः एकस्यैव सत्यत्वं च सिद्ध्यतीति प्रत्यपादि ।

अद्वैतिनस्तु "नेह नानाऽस्ति" इत्यादिश्रुत्या घटपटादिना परिदृश्यमानं नानाविधं जगत् नास्ति इत्येवोच्यते—"एकमेवाद्वितीयम्" इत्यादिश्रुत्या अद्वितीयब्रह्ममात्र-

सत्तायाः प्रतिपादनात् । अतस्तदनुसारं जगतो मिथ्यात्वमेव सिद्धयतीति प्रतिपादयन्ति । एतदुपष्टम्भकतया-विगीतं-मिथ्या-दृश्यत्वात्-इत्यनुमानमपि प्रयुञ्जते ।

अत्रेदं चिन्त्यते विगीतमिति शब्देन मिथ्यात्वामिथ्यात्वविवादास्पदं जगत् उच्यते, तस्य च "यद् दृश्यं तन्मिथ्या यथा शुक्तिरूप्यम्" इति सदृष्टान्तव्याप्तिबलेन मिथ्यात्वं सिद्धयति दृश्यत्वरूपहेतोस्तत्र सत्त्वादिति खल्वद्वैतिनामभिप्रायः । स च न घटते । तथा हि—

विगीतं मिथ्या इति प्रतिज्ञा, तादृशपदद्वयेन मिथ्यात्वरूपसाध्यविशिष्टपक्ष-प्रतिपादनात् । विगीतपदेन च घटपटादिरूपयत्किंचित्पदार्थनिष्ठः विवादास्पदत्वरूपधर्मः उपस्थाप्यते, तादृशधर्मविशिष्टवाचकत्वात् विगीतपदस्य । मिथ्यापदेन च नास्तीति-प्रतीतिसिद्धः अत्यन्ताऽभाव एवोच्यते प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्यैव मिथ्याशब्दार्थत्वादिति वस्तुस्थितिः । तदिह विगीतपदवाच्यकिञ्चिन्निष्ठविगीत-त्वस्यापि जगदन्तर्गतत्वेन पक्षत्वात् तस्यापि मिथ्यात्वेन तन्निष्ठात्यन्ताभावस्यैव मिथ्यापदेनोपस्थापनात् प्रतिज्ञावाक्यवृत्ति विगीतमिथ्यापदयोः व्याघातः । अयमाशयः विगीतशब्देन शक्त्या विगीतत्वविशिष्टं उपस्थाप्यत इत्युच्यते मिथ्याशब्देन च विगीतत्वस्यापि विश्वान्तर्गतत्वेन पक्षत्वात् तस्यापि मिथ्यात्वेन सत्यतया उपस्था-पयितुमशक्यत्वमुच्यत इति परस्परं व्याघात इति कथं ईदृशी प्रतिज्ञा संगच्छेत् ? इति ।

किञ्च सत्यत्व मिथ्यात्वविवादास्पदत्वरूपविगीतत्वं यदि मिथ्या स्यात् तदा सत्यत्वमिथ्यात्वविवादो नास्तीत्युक्तं भवति एवञ्च सत्यत्वेन वा मिथ्यात्वेन वा निश्चितत्वमेव जगतो भवेत् । तत्र आद्ये सत्यत्वेन निश्चिते जगति मिथ्यात्वसाधने सत्यस्य जगतो मिथ्यात्वायोगेन मिथ्यात्वसाधनव्याघातः, सत्यत्वमिथ्यात्वयोः मिथो विरोधात् । द्वितीये मिथ्यात्वेन सिद्धस्य जगतो मिथ्यात्वसाधने तदा जगति "विगीतं मिथ्या दृश्यत्वात्" इत्यनुमानात्प्रागेव मिथ्यात्वस्य सिद्धतया तादृशमिथ्यात्वस्य साध्य-त्वासंभवेन साध्यत्वव्याघातः सिद्धसाधनं च स्यात् ।

एवं मिथ्यापदमपि सत्यात्मकं (सत्यं) मिथ्यात्वमुपस्थापयति उत असत्यात्मकं (असत्यं) मिथ्यात्वमुपस्थापयति वा ? नाद्यः । सत्यभूतस्य मिथ्यात्वस्य ब्रह्मस्वरूपत्वा-भ्युपगमे तदा सत्यस्य ब्रह्मस्वरूपस्य निराधारत्वेन तस्य असत्यभूतजगद्वृत्तित्वे व्याघातः असत्यस्य जगत एव भवता मिथ्यात्वाश्रयत्वोपगमात् । न हि कदाऽपि सत्यभूतरजतत्वं

शुक्तिरूप्ये तिष्ठति अतश्च मिथ्यात्वरूपधर्मस्य सत्यत्वे तदा धर्म्यपि सत्यत्वेनैव भवितु महंति न तु असत्यत्वेनेति सत्यस्य मिथ्यात्वरूपधर्मस्य असत्यजगद्‌वृत्तित्वे व्याघातः। सत्यात्मकस्य मिथ्यात्वस्य ब्रह्मस्वरूपातिरिक्तत्वे तदा ब्रह्मस्वरूपं एकमेव सत्यं अन्यत् मिथ्येति भवत्सिद्धान्तव्याघातः ब्रह्मस्वरूपवत् तदतिरिक्तस्य सत्यस्य मिथ्यात्वस्य अङ्गीकारात्। अतोऽयं पक्षः न साधीयान्।

इत्थं मिथ्यापदं असत्यात्मकं मिथ्यात्वमेवोपस्थापयति इति द्वितीयपक्षोऽपि न घटते। मिथ्यात्वस्य असत्यत्वे तदा वस्तुतो मिथ्यात्वस्य जगति असिद्धेः जगतः सत्यत्वापत्त्या यो यो दृश्यत्ववान् स सो मिथ्यात्ववान् यथा शुक्तिरूप्यं इत्युदाहरणवाक्येन व्याप्तिप्रदर्शनविरोधः स्यात्। मिथ्यात्वस्यैव असत्यत्वे तेन सह हेतोः व्याप्तेरसंभवेन सुतरां तत्प्रदर्शनविरोधो दुष्परिहरस्यात्।

किञ्च व्याप्यारोपेण व्यापकारोपस्तर्क इति तर्कलक्षणलक्षिते तर्के आरोपितहेतुज्ञानस्य अङ्गत्वेऽपि अनुमानप्रयोगे वास्तविकलिङ्गज्ञानस्यैवापेक्षिततया प्रकृते दृश्यत्वरूपहेतोरपि त्वत्पक्षे विश्वान्तर्गततया मिथ्यात्वेन वास्तविकत्वाभावेन तादृशहेतोरेवासिद्धया न तेन मिथ्यात्वं साधयितुं शक्यते।

तथा पक्षः हेतुर्वा यत्किञ्चित्प्रमाणतः सिद्ध्यतीत्युपगमे तदा तयोः मिथ्यात्वं न युज्यत इति मिथ्यात्वसाधनव्याघातः। पक्षस्य हेतोर्वा प्रमाणतः असिद्धौ तदा पक्षतावच्छेदकविशिष्टपक्षासिद्धेः हेतोराश्रयस्यैव वक्तुमशक्यतया आश्रयासिद्धिः, हेतोरपि तथाऽसिद्धत्वे तस्य पक्षवृत्तित्वासंभवेन स्वरूपासिद्धिदोषः, एवं हेतोरसिद्धत्वे असिद्धेन तेन सह साध्यस्य व्याप्तेरसंभवात् व्याप्यत्वासिद्धिश्च स्यात्।

अतोऽत्र विमतं मिथ्या दृश्यत्वात् इत्यनुमाने विविधव्याघातासिद्ध्यादिदोषाणां दुष्परिहार्यतया न तेन जगन्मिथ्यात्वं सिद्ध्यति।

न च पक्षादेः कदाचित् सिद्धिः कदाचिदसिद्धिश्चेति उभयं उपपद्यते—सिद्ध्यसिद्ध्योः परस्परं भावाभावरूपत्वेन विरुद्धतया विरुद्धद्वयसमुच्चयस्य एकत्रासंभवात्।

न च जल्पवितण्डारूपयोः कथयोः विरुद्धमपि दृष्टमिति प्रकृतेऽपि पक्षादेः असिद्धत्वेऽपि सिद्धिर्वक्तुं शक्येति वाच्यम्। जल्पवितण्डयोः वादाङ्गत्वानभ्युपगमेन प्रकृते तन्न्यायाप्रसरात्। इत्थं च विरुद्धं न वक्तव्यमिति लोकसिद्धमर्यादायाः अनति-

लंघनीयतया प्रकृते सिद्ध्यसिद्ध्योः परस्परं व्याहतत्वेन न सामान्यतः अनुमानेन जगतः मिथ्यात्वं सिद्ध्यति।

अथ विशेषतः मिथ्याशब्देन सत्यभिन्नत्वरूपं मिथ्यात्वमुच्यते, उत सत्यत्वात्यन्ताभावरूपं मिथ्यात्वं वेति विकल्प्य दूष्यते। अयमाशयः—लोके तावत् प्रायः यत् सत्यं तन्न मिथ्यापदवाच्यत्वेन व्यवह्रियते किन्तु सत्यभिन्नमेवेत्यस्ति अनुभवः अतस्तदनुसारं प्रकृते सत्यभिन्नत्वमेव मिथ्या पदेनाभिधीयते ? अथवा-यत्र सर्वथा सत्यत्वं नास्ति तत्रैव मिथ्येति व्यवहारदर्शनात् तदनुरोधेन सत्यत्वात्यन्ताभाव एव मिथ्याशब्देन विवक्षितो वेति विकल्पः। नाद्यः पक्षो घटते किमत्र सत्यभिन्नत्वमित्यत्र यत्—किञ्चित्सत्यप्रतियोगिकभेदः विवक्षित इत्युच्येत तदा "विगीतं मिथ्या दृश्यत्वात्" इत्यनुमानात्प्रागेव घटादिरूपपदार्थे यत्किञ्चित्पटादिसत्यपदार्थप्रतियोगिकभेदस्य सिद्धतया अनुमानेन पुनस्तस्यैव साधने सिद्धसाधनदोषः स्यात्।

सत्यसामान्यप्रतियोगिकभिन्नत्वरूपं मिथ्यात्वं तु दुर्वचं, सर्वेषामेव पदार्थानां प्रत्येकं सत्यशब्दवाच्यतया यस्मिन् घटादिपदार्थे मिथ्यात्वं उपपाद्यते तादृशघटादिपदार्थस्याऽपि सत्यसामान्यान्तर्गततया तादृशघटप्रतियोगिकभेदस्य घटे स्वस्मिन्नसंभवात्। यद्यत्र स्वस्याऽपि (घटस्यापि) स्वस्मादन्यत्वरूपं सत्यसामान्यप्रतियोगिक भिन्नत्वमिष्येत तदा घटत्व घटान्यत्वयो [तत्त्वातत्त्वयो]रेकत्रासंभवात् व्याघातदोषस्स्यात्।

न च सत्यभिन्नत्वात्मकमिथ्यापदार्थघटकसत्यशब्देन विश्वान्तर्गतं घटादि न गृह्यते अपि तु घटादिभिन्नं सत्यरूपं ब्रह्मैव, तादृशब्रह्मरूपसत्यप्रतियोगिकभेदस्तु घटादौ अस्त्येवेति घटादेर्मिथ्यात्वसाधनं उपपद्यत इति वाच्यम्। विमतं मिथ्या दृश्यत्वात् इति प्रकृतानुमानेनैव घटादिपदार्थस्य मिथ्यात्वसाधनपूर्वकं ब्रह्मणि सत्यत्वस्य वक्तव्यतया प्रकृतानुमानात्प्राक् ब्रह्मणः सत्यत्वेनं निश्चितत्वाभावेन सत्यशब्देन ब्रह्मोपादाने प्रतियोग्यप्रसिद्धिस्स्यात्। ततश्च प्रतियोग्यप्रसिद्ध्या अभावाप्रसिद्धिरिति न्यायेन ब्रह्मरूपसत्यप्रतियोगिकभिन्नत्वात्मकं मिथ्यात्वं दुस्साधनमेव स्यात्।

किञ्च श्रुत्या ब्रह्मणि सत्यत्वस्य सिद्धतया तादृशब्रह्मात्मकसत्यप्रतियोगिकभेदस्य प्रसिद्धत्वेन सुवचतया ब्रह्मभेदएव विश्वस्मिन् घटादौ साध्यत इत्यभ्युपगमेऽपि विश्वसत्यत्ववादिनां वेदान्तिनां मते घटादौ ब्रह्मभेदस्य इष्टत्वेन तादृशब्रह्मात्मकसत्यप्रति-

यौगिकभेदसाधने पुनश्च सिद्धसाधनमेव स्यात्, अतोऽत्र सत्यभिन्नत्वस्य मिथ्याशब्दार्थत्वे तादृशमिथ्यात्वं जगति न साधयितुं शक्यते।

अथ सत्यत्वात्यन्ताभावरूपमेव मिथ्यात्वं इति द्वितीयपक्षः निरस्यते। तथा हि व्यावहारिक सत्यत्वात्यन्ताभावो विवक्षितः मिथ्याशब्देन चेत्तदा बाधो दोषः स्यात्। घटादौ सत्यत्वं नास्तीत्यनेन यत् यत्र प्रतीयते तत्र तन्नास्तीति अर्थो लभ्यते तथा सति घटवति भूतले एव घटो नास्ति पृथिव्यां गन्धो नास्तीति रीत्या तत्प्रतीतिस्थले तदभाव– उक्तः स्यात् अन्यत्र तदभावस्य स्वत एव सिद्धेः। ईदशसत्यत्वाभावश्च प्रत्यक्ष-बाधितः। एवञ्च स्वप्रतीतिस्थले स्वात्यन्ताभावस्य प्रत्यक्षबाधितत्वेन नात्र सत्यत्वात्यन्ताभावरूपं मिथ्यात्वं घटादौ साधयितुं शक्यते।

किञ्च व्यावहारिकसत्यमित्यनेन भवद्भिः केवलं व्यवहारकाल एव घटादीनां सत्यत्वं न तु परमार्थत इत्युच्यते तत्र यदि व्यवहारकालेऽपि सत्यतया प्रतीतस्य सत्यत्वात्यन्ताभावरूपसत्यत्वशून्यत्वं उपपाद्येत तदा तत्र प्रत्यक्षबाधः स्वोक्तिबाधश्च स्फुट एव स्यादिति नात्र व्यावहारिकसत्यत्वात्यन्ताभावात्मकं मिथ्यात्वं साधयितुं शक्यते।

न च अक्षाद्यबाध्यो यः सत्यत्वाभावः स एव साध्यः (मिथ्यापदविवक्षितः) स-च ब्रह्मनिष्ठं यत्पारमार्थिकसत्यत्वं तदभावः अतश्च व्यावहारिकसत्यत्वाभावस्य अक्षादिबाध्यत्वेऽपि पारमार्थिकसत्यत्वाभावस्य तदबाध्यतया साध्यत्वं उपपन्नमेवेति वाच्यम्। ईदृशपारमार्थिकसत्यत्वस्य लोके केनापि पूर्वं (अनुमानात्प्राक्) अगृहीतत्वात् तादृशपारमार्थिकसत्यत्वप्रतियोगिकाभावस्य शुक्तिरूप्यादौ पूर्वमगृहीततया दृश्यत्व-रूपहेतोः पारमार्थिकसत्यत्वाभावेन सह व्याप्तेरेवासिद्धया नात्र अनुमानेन अक्षाद्यबाध्य पारमार्थिकसत्यत्वात्यन्ताभावरूपं मिथ्यात्वं साधयितुं पार्यते। अपि च पारमार्थिक-सत्यस्य ब्रह्मणः केनापि अदृष्टत्वात् तादृशसत्यत्वाभावोऽप्रसिद्धः।

अथ मिथ्याशब्देन स्वात्यन्ताभावदेशे स्वस्य प्रतीयमानत्वमेव अभिधीयते रजतत्वात्यन्ताभावाधिकरणे शुक्तौ रजतत्वस्य प्रतीयमानत्वेनैव खलु रजतत्वस्य मिथ्या-त्वं व्यवह्रियत इति चेत्तदपि न साधु।

आकाशादीनां अवृत्तिपदार्थतया [विभुत्वेन] सर्वत्रैव सत्त्वेन किञ्चिदधिकरण-कतया प्रतीत्यभावात् स्वात्यन्ताभावाधिकरणे स्वस्य प्रतीयमानत्वरूपं मिथ्यात्वं न स्यात्। यद्यत्र सामानाधिकरण्येन ( यत् किञ्चिद्वस्तुन एव ) स्वात्यन्ताभावधिकरणे

स्वस्य प्रतीयमानत्वरूपं मिथ्यात्वं विवक्षितमित्युच्येत तदा सिद्धसाधनं स्यात् यतः भ्रमस्थले शुक्तिरूप्यादौ स्वात्यन्ताभावदेशे स्वस्य प्रतीयमानत्वरूपमिथ्यात्वस्य मतद्वयेऽपि अनुमानात्प्रागेव सिद्धत्वात् ।

न च स्वात्यन्ताभाववद्देश एव प्रतीयमानत्वरूपं मिथ्यात्वं अत्र साध्यम्— एवं च भ्रमस्थले स्वात्यन्ताभावाधिकरणे स्वस्य रजतत्वादेः प्रतीयमानत्वेऽपि स्वदेशेऽपि रजतत्वप्रतीत्या एवकारव्यवच्छेद्यस्य स्वदेशे प्रतीयमानत्वाभावात्मकमिथ्यात्वस्य असिद्धत्वेन न सिद्धसाधनमिति वाच्यम् । यत्र यन्नास्ति तत्र तत् प्रतीयत इति कस्यापि पुरुषस्य अनुभवाभावात् स्वात्यन्ताभाववद्देश एव प्रतीयमानत्वरूप-मिथ्यात्वस्य न प्रमाणसिद्धत्वं वक्तुं शक्यत इति तादृशमिथ्यात्वस्यैव असिद्धेः ।

किञ्च बाधितत्वमपि अत्र उपाधिः तथा हि—नास्तीति प्रतीतिविषयत्वं यत्र तत्र बाधितत्वम् इत्थं च भ्रमस्थले यस्मिन् देशे अस्तित्वेन वस्तु प्रतीयते तत्रैव पश्चात् नास्तीत्यपि प्रतीयते । प्रमास्थले (वस्तुतो घटपटादिप्रतीतिस्थले तु ) एवं न भवति । एवञ्च घटादेः भूतलादौ स्वाधिकरण एव स्थितिरनुभूयते न तु स्वाभावाधिकरणे तथा घटाभावाधिकरणे घटाभाव एव अवलोक्यते न तु घटः इत्येवं अन्वयव्यतिरेकदर्शनात् प्रकृते घटादौ पक्षे दृश्यत्वरूपहेतोः सत्त्वेऽपि शुक्तिरूप्यादिवत् बाधस्याऽभावात् साध्य-व्यापकत्वे सति साधनाव्यापकत्वरूपोपाधेः अक्षुण्णतया सोपाधिकत्वेन नात्र स्वात्यन्ताभावसामानाधिकरण्यरूपं मिथ्यात्वं साधयितुं शक्यत इति भावः ।

ननु विगीते जगति तुच्छत्वरूपस्य सदसद्विलक्षणत्वरूपस्य वा मिथ्यात्वस्य साधने न कोऽपि दोष इति चेन्न । श्वपुष्पादिवत् असत्त्वपर्यायस्य तुच्छत्वस्य माध्यमिक-वत् अद्वैतिभिरनभ्युपगमात् शून्यत्वरूपमिथ्यात्वसाधने अपसिद्धान्तदोषापत्तेः । कस्मिन्नपि अद्वैतग्रन्थे शून्यत्वस्य मिथ्याशब्दवाच्यत्वेन निर्देशादर्शनात् ।

एवं सदसद्विलक्षणत्वमपि न मिथ्याशब्दवाच्यम्, यत्किञ्चिद्सद्भिन्नत्वे सति यत्किञ्चिदसत्भिन्नत्वं सदसद्विलक्षणत्वमिति विवक्षायां सिद्धसाधनं भवति यतः घटादियत्किञ्चित्सतः एव पटादियत्किञ्चित्सद्भिन्नत्वस्य, तथा श्वपुष्पादि यत्-किञ्चिदसद्भिन्नत्वस्य च सत्वात् सच्छब्दवाच्येऽपि मिथ्याशब्दप्रयोगापत्तिः ।

न च सत्सामान्यासत्सामान्यभिन्नत्वमेव मिथ्यापदवाच्यं इति न पूर्वोक्तदोषा-पत्तिरिति वाच्यम् ।

सत्सामान्याभावस्य असद्रूपत्वेन असत्सामान्याभावस्य च सद्रूपत्वेन सतः असतश्च परस्परं विरोधेन व्याघातात् एकत्राऽसंभवात् तस्य मिथ्यापदवाच्यत्वानुपपत्तेः ।

किञ्च न केवलं व्याघातः अपि तु यत्र यत्र दृश्यत्वं तत्र तत्र सत्सामान्यभिन्नत्वे-सति असत्सामान्यभिन्नत्वरूपं मिथ्यात्वमिति व्याप्तेरभावात् असिद्धिश्च ।

एवं पक्षव्यतिरिक्ते यत्र कुत्र चित् व्याप्त्या पूर्वसिद्धमेव पक्षे साध्यं भवितुमर्हति तत्र च ब्रह्मणि असद्विलक्षणत्वस्य तुच्छे सदितरत्वस्य च सत्त्वेऽपि न तत् दृष्टान्तीकृत्य व्याप्तिज्ञानेन साध्यग्रहः संभवति, तयोः मिथ्यात्वानाश्रयतया विपक्षत्वात् । न च पक्षएव साध्यग्रहः तस्य संदिग्धसाध्यत्वात् ।

न च सपक्षे शुक्तिरूप्यादौ सदसदितरत्वरूपमिथ्यात्वस्य व्याप्तिर्युक्ता ।

शुक्तेः रूप्यत्वाश्रयतया वस्तुतो रूप्यत्वाभाववति यदि मिथ्यात्वं स्यात् तदा वस्तुतारूप्यत्वाभाववति । रूप्यत्वभानात् नैयायिकोक्तान्यथाख्यातिस्वीकारापत्तिः, तथा च सति अपसिद्धान्तापत्तिः अद्वैतिभिरनिर्वचनीयख्यातेरेवाभ्युपगमात् ।

अतश्च अनुमानात्प्राक् पक्षव्यतिरिक्ते कुत्रापि सदसदितरत्वरूपमिथ्यात्वात्मकसाध्यज्ञानासंभवेन व्याप्तिज्ञानाभावात् नोपदर्शितमिथ्यात्वं साधयितुं शक्यते तस्य सर्वथाऽसिद्धत्वात् ।

किञ्च पक्षैकदेशे घटादौ ब्रह्मरूपसद्विलक्षणत्वं पटादिरूपसद्विलक्षणत्वं वा तथा असद्विलक्षणत्वं च विगीतं मिथ्येत्याद्यनुमानात्प्रागेव सिद्धं वर्तते । अतः तस्यैव पुनः साधने सिद्धसाधनं स्यात् ।

न च नैयायिकादिवत् रजतादेः स्वस्वरूपभिन्नेन शुक्त्याद्यात्मना वेद्यत्वमेव मिथ्यात्वमिति सांप्रतम्, तादृशस्य मिथ्यात्वस्य अन्यथाख्यातिकुक्षिप्रविष्टत्वेन अपसिद्धान्तापत्त्या दुस्साध्यत्वात् ।

एवं घटवति देशे घटाभावः पटाद्यात्मनैव वक्तव्यः, अर्थात् घटस्य पटादिरूपेण अभावः साधनीय इति तस्यैव मिथ्यापदवाच्यत्वमित्यपि न युक्तम्, ईदृशमिथ्यात्वस्य पूर्वत एव सिद्धत्वेन साध्यत्वानुपपत्तेः ।

अथ विगीतं मिथ्या दृश्यत्वादित्यनुमाने साध्यतया यन्मिथ्यात्वमभिहितम् तदपि मिथ्या वा सत्यं वेति विकल्प्य दूष्यते । तथा हि यद्यत्र साध्यभूतमिथ्यात्वं

मिथ्या स्यात् तदा जगन्निष्ठमिथ्यात्वस्य मिथ्यात्वं नाम अवास्तविकत्वमित्यर्थः पर्यवस्यति, एवं सति प्रपंचसत्यत्वाऽप्रतिषेधात् जगतः मिथ्यात्वसाधनार्थं प्रवृत्तः त्वदुक्तानुमानप्रयोगः निष्प्रयोजन एव स्यात् तथा मिथ्यात्वस्य मिथ्यात्वे तस्य प्रपञ्चस्य सत्यत्वे पर्यवसानात् ब्रह्म एकमेव सत्यम् तद्व्यतिरिक्तं सर्वं जगत् मिथ्येति भवत्-सिद्धान्तानुपपत्तिः ततश्च अपसिद्धान्तदोषश्च स्यात् ।

एवं मिथ्यात्वस्य मिथ्यात्वे तदा प्रपंचसत्यत्वस्य सिद्धतया तस्य च अनुमानात् प्रागेव विशिष्टाद्वैतिनां मते ( सिद्धतया ) सम्प्रतिपन्नतया पुनरनुमानेन साधने सिद्ध-साधनदोषापत्तिश्च ।

न च मिथ्यात्वस्य सत्यत्वमेवेष्यत इति वाच्यम् तथा सति भवतः पक्षे परस्मिन् ब्रह्मणि सत्यभूतमिथ्यात्वभेदः प्रसजति यतः मिथ्यात्वस्य सत्यत्वेऽपि ब्रह्मणः मिथ्याशब्दवाच्यत्वानभ्युपगमात् । अतश्च मिथ्यात्वस्य सत्यत्वे ब्रह्म मिथ्यात्वञ्च सत्यमिति सत्यद्वयमापतेत् ततश्च एकमेव ब्रह्म सत्यमिति सिद्धान्त-विरुद्धतया अपसिद्धान्तापत्तिः ।

किञ्च मिथ्यात्वस्य सत्यत्वे तदा मिथ्यात्वस्याऽपि विश्वान्तर्गततया तस्य सत्यत्वोपगमे जगतो मिथ्यात्वसाधनार्थं प्रवृत्तमनुमानं विफलमेव स्यात् अतश्च मिथ्यात्वस्य मिथ्यात्वं सत्यत्वं वा न घटते पक्षद्वयेऽपि दोषस्य जागरूकत्वात् ।

एवं साध्यरूपमिथ्यात्वस्याऽपि विश्वान्तर्गतत्वेन पक्षत्वे सत्यत्वे चाभ्युपगमे तदा पक्षभूतमिथ्यात्वे मिथ्यात्वरूपसाध्यास्याभावात् बाधस्स्यात् साध्याभावविशिष्ट पक्षस्यैव बाधत्वात् ।

यद्यत्र मिथ्यात्वं न पक्षान्तर्गतं अपि तु पक्षात् बहिर्भूत मेवेत्युच्येत तदाऽपि मिथ्यात्वस्य सत्यत्वोपगमे तत्र मिथ्यात्वरूपसाध्याभावेन तादृशसाध्याभाववति मिथ्यात्वे दृश्यत्वरूपहेतोस्सत्त्वेन व्यभिचारदोषस्स्यात् ।

यद्यत्र दृश्यत्वं न स्यात् तदा साध्यमपि न स्यात् साधनाधीनदृग्विषयत्वा भावात् ।

न च जगन्मिथ्यात्वं सत्यमेव तच्च ब्रह्मस्वरूपमेव न तदतिरिक्तमिति नापसिद्धान्तादिदोषावसर इति वाच्यम् । तथा सति विगीतं मिथ्येत्यस्य मिथ्यात्वरूप-ब्रह्मयोगि विश्वमित्यर्थः फलितः, ततश्च विगीतं ब्रह्मवदिति साध्यार्थः स्यात् इति विश्वस्य ब्रह्मात्मकत्वमापतति अयं चार्थः शरीरशरीरिभावतया वि० वेदान्तिभिः

अनुमानात्प्रागेव स्वीकृत इति तादृशार्थस्यैव पुनस्साधने सिद्धसाधनं दोषस्स्यादिति भावः।

अथ दृश्यत्वरूपहेत्वर्थपरामर्शपूर्वकं विश्वस्य मिथ्यात्वं न संभवतीत्युपपाद्यते। सामान्यतो ज्ञानविषयत्वं दृश्यत्वमित्युक्तौ तदा "अथातो ब्रह्मजिज्ञासा" "तद्विजिज्ञासस्व" "आत्मा वा अरे द्रष्टव्यः" इत्यादिश्रुतिभिः ब्रह्मण्यपि दृश्यत्वस्य स्फुटं प्रतिपादनात्तत्र दृश्यत्वनिषेधस्यासंगततया व्यभिचारस्स्यात्, यतः, ब्रह्मणि मिथ्यात्वरूपसाध्याभावस्य सत्त्वात्।

न च परमार्थदृश्यत्वहेतोरेव मिथ्यात्वसाधकत्वोपगमात् ब्रह्मणि च मिथ्याभूतदृश्यत्वस्यैव विद्यमानतया परमार्थदृश्यत्वाभावान्न व्यभिचारदोष इति वाच्यम्। तथा सति भवत्पक्षेऽपि ( अद्वैतिपक्षे ) परमार्थदृश्यत्वस्य हेतुत्वे अपसिद्धान्त दोषापत्त्या विगोते विश्वस्मिन्नपि मिथ्याभूत दृश्यत्वस्यैव सत्त्वाभ्युपगमात् परमार्थदृश्यत्वस्य पक्षेऽभावेन स्वरूपासिद्धिस्स्यात् अतोऽत्र (सामान्येन) निर्विशेषितदृश्यत्वस्यैव हेतुत्वं वक्तव्यम् ततश्च ब्रह्मणि व्यभिचारो दुरुद्धर एव स्यात्।

न च दृश्यत्वशब्देन स्वगोचर दृशिनिरपेक्षप्रकाशात्यन्ताभावस्य विवक्षितत्वे ब्रह्मणश्च स्वयंप्रकाशत्वेन निरुक्तदृश्यत्वस्य तत्राभावेन न व्यभिचारप्रसंग इति वाच्यम्।

एवं सति विशिष्टाद्वैतिनां मते जीवानां धर्मभूतज्ञानस्य च स्वयंप्रकाशत्वोपगमात् तयोः स्वगोचर दृशिनिरपेक्ष प्रकाशात्यन्ताभावरूप जडत्वात्मकदृश्यत्वस्या—विद्यमानतया भागासिद्धिस्स्यात् पक्षैकदेशे हेत्वभावस्यैव भागासिद्धितया प्रकृते जीवधर्मभूतज्ञानयोः विश्वान्तर्गतत्वेन तदेकदेशत्वात् इति।

एवं दृश्यत्वरूपलिङ्गस्य मिथ्यात्वमभ्युपगम्य तादृश मिथ्याभूतलिङ्गेन विश्वमिथ्यात्वसाधनमपि न शक्यम्, तथा सति बाष्पत्वेन आरोपितेन बाष्पधूमेनाऽपि वह्न्यनुमित्यापत्तिः स्यात्। तस्मादत्र व्याघाताऽसिद्धि व्यभिचाराद्यनेकदोषाणामपरिहार्यतया विगीतं मिथ्येत्याद्यनुमानेन न विश्वस्य ब्रह्मव्यतिरिक्तस्य स्वरूपतो मिथ्यात्वं साधयितुं शक्यत इति निर्णयः।

## नित्यविभूतिः

विशिष्टाद्वैतिनां मते इतरसिद्धान्तविलक्षणतया नित्यविभूतिरिति वैकुण्ठलोकापरपर्यायः अप्राकृतस्थानविशेषः अङ्गीक्रियते ।

तथा हि—"आदित्यवर्णं तमसः परस्तात्" "क्षयन्तमस्य रजसः पराके" "तदक्षरे परमे व्योमन्" *"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्याद्या श्रुतयः "तद्वाऽऽकाशं सनातनम्" "दिव्यं स्थानमजरं चाप्रमेयम्" इत्यादि उत्तररामायण-महाभारतादिवचनानि च रजस्तमोऽसंसृष्टशुद्धसत्त्ववत्त्वेन नित्यत्वेन च सदापश्यत्सूरिविशिष्टदिव्यस्थानं (नित्यविभूतिं) प्रतिपादयन्ति ।

इदं च नित्य-मुक्ते-श्वेराणां भोगस्थानम् । अत्र चाप्राकृतस्थाने नित्योपकरणानि तदतिरिक्तानि भगवदभिमतकैङ्कर्यलाभाय नित्यमुक्तयोः तत्रत्यपृथिव्याद्येकदेशेन इच्छानुरूपदेहादीनि, ईश्वरस्य च स्वभोगाय-नित्यमुक्तानां स्वशेषभूतानामानन्दाय, मुमूक्षूपास्यत्वसिद्धये च स्वेच्छागृहीतदेहाद्यवस्थाः, तदा तदा सङ्कल्प्यमानानि भोग्य-भोगोपकरणानि च भवन्ति ।

### नित्यविभूति रूप-अप्राकृतस्थानविशेषासिद्धिशङ्का-तत्परिहारश्च

अथ ईश्वरस्य मुक्तानां च भोगस्थानतया प्राकृतलोक एव अव्यक्ततमसोः मध्यवर्ती त्रिगुणपरिणतिविशेषः "अक्षरे परमे व्योमन्" इति श्रुत्या आम्नायते, न त्वाप्राकृतं स्थानं, अक्षरपदेन प्रथमकार्यद्रव्यं अचेतनरूपमुच्यते, तदेव तदक्षरे परमे व्योमन् इत्यत्रापि प्रत्यभिज्ञायते । तदतिरिक्तस्य अप्राकृतस्थानस्य कल्पने गौरवं, प्रकृति-महदहङ्कारादितत्त्वानां संख्याधिक्यप्रसङ्गश्च भवति ।

किं च भवता नित्यविभूतावपि पृथिव्यादितत्त्वानि अङ्गीक्रियन्ते । तेषां प्रकृतिकार्यत्वात् प्रकृत्यन्तर्भूतमेव परमपदं प्रज्ञायते । अत्र च रजस्तमसी अभिभूते, अत एव शुद्धसत्त्वव्यपदेशः, तथा च नित्यविभूतिर्नाम कश्चन अप्राकृतस्थानविशेषः न सिद्ध्यतीति ।

---

*तद्विष्णोः परमं पदमिति वाक्ये परमपदस्थानस्य, सूरेः, सदा दर्शनस्य च विधिरभिप्रेतः । प्रमाणान्तरेण अप्राप्तानां त्रयाणां अत्रैव आग्नेयादिवाक्यव विशिष्टविध्यङ्गीकारेण ( सदा पश्यत् वशिसूरिष्टस्य स्थानस्य विधानेन ) न वाक्य भेदः । विष्णोः परमं पदं इति षष्ठ्या भेदस्य प्रतीयमानत्वात् विष्णुस्वरूपात् भिन्नं स्थानं (नित्यविभूतिः) इति सिद्ध्यति ।

अत्रोच्यते—तदक्षरे परमे व्योमन् इत्यत्र व्योमपदेन विशेष्यभूतेन अक्षरपरमयोः विशेषणीभूतयोः पदयोः समभिव्याहारात् प्रसिद्धपञ्चभूतान्तर्गतव्योमवैलक्षण्यं प्रतीयते। अव्यक्ततमसोर्मध्यवर्तिनः (तमोऽनन्तरस्य) व्योमत्वाभावात्, अक्षरशब्दस्य न क्षरतीति व्युत्पत्त्या प्रकृति-जीवादि-नानार्थसाधारण्यात् तत्प्रत्यभिज्ञानस्य अकिञ्चित्करत्वात् च नात्र प्राकृतलोकः भोगस्थानतयाऽभिधीयते किं तु अप्राकृत एव लोकः। तदाह—"लोकं वैकुण्ठनामानं...... ...... अप्राकृतं सुरैर्वन्द्यमिति"।

यदुक्तं—अतिरिक्तकल्पने गौरवं, तत्त्वसंख्याधिक्यप्रसङ्गश्चेति । तत्रेदमुत्तरं—श्रुत्या यथा अर्थः प्रतिपाद्यते तन्मात्रं गृह्यते अतः प्रमाणसिद्धार्थस्वीकारे कल्पनायाः अवसरो नास्ति,

तत्त्वसंख्याविषये तावत् प्रकृतिमहदहङ्कार तन्मात्राणि, पञ्चभूतानि, एकादशेन्द्रियाणि, पुरुषश्चेति पञ्चविंशतितत्त्वानां यथा प्रमाणबलात् अभ्युपगमः सर्वसंमत तथा तदतिरिक्तस्य कालस्य नित्यविभूतेश्च 'तं षड्विंशकमित्याहुः सप्तविंशमथापरे इत्यधिकसंख्याम्नानात् प्रमाणानुसारमङ्गीकारे न दोषः।

अथ अप्राकृतलोके विद्यमानं सर्वं नित्यमित्यभिप्रेत्य किल तस्य नित्यविभूतिरिति व्यपदेशः क्रियते, स च न सङ्गच्छते, तत्रापि ऐच्छदेहादेरनित्यस्य सत्त्वात् । एवं (लीलाविभूतौ) प्राकृतलोके जीवादेर्नित्यस्य सत्त्वात् अनित्यविभूतिरिति व्यवहारोऽपि न युक्त इति चेत्, उच्यते—नित्यविभूतिस्थानां पृथिव्यादितत्त्वानां ईश्वरदेहादीनां बहूनां प्राकृतपृथिव्यादीनामिव सृष्टिप्रलययोरभावात् ऐच्छदेहादेः कतिपयपदार्थस्य अनित्यत्वेऽपि नित्यपदार्थप्राचुर्यमात्रेण नित्यविभूतित्वं, एवं प्राकृते जीवादेः कतिपयय पदार्थस्य नित्यत्वेऽपि पृथिव्यादीनां बहूनां पदार्थानामनित्यतया तन्मात्रेण अनित्यविभूतित्वमिति तत्तद्व्यवहारः यथायथं सङ्गच्छत इति ।

न च "सदेव सोम्येदमग्र आसीत्" एक मेवाद्वितीयं इति कारणवाक्ये एकत्वस्य, प्रतिपादनात्, तदनु तदैक्षत बहु स्या'मिति बहुभवनसङ्कल्पस्य चोक्तेः कारण (ब्रह्म) व्यतिरिक्तस्य नित्यस्थानस्य अभाव एव प्रतीयते। अतः "अक्षरे परमे व्योमन्" इत्यादिना नित्यविभूतेर्नित्यत्वव्यपदेशः मनुष्यवत् देवानामपि मरणस्य साधारणत्वेऽपि यथा अमरत्वव्यपदेशस्त्रिदशानां मनुष्यापेक्षया अधिककालजीवित्वमात्रेण भाक्तः तथा नित्यस्थानव्यपदेशोऽपि आपेक्षिकस्थैर्यमादायेव इति वाच्यम् ।

"प्रकृतिं पुरुषं चैव विद्धयनादी उभावपि" इत्यादिप्रमाणेन प्रकृति-पुरुषादि तत्त्वानां अनादित्वप्रतिपादनात् ते च पदार्था नित्या एव, नित्यविभूतिरपि उक्त-प्रमाणबलात् नित्यैव, कारणवाक्ये यदेकत्वं श्रूयते तत्तु सृष्टिकालापेक्षया स्रक्ष्यमाणस्य इदङ्कारगोचरस्य जगतः प्रलयदशायामविभक्तनामरूपत्वं अभिप्रेत्य, तद्धेदं तर्ह्यव्याकृत-मासीत् तन्नामरूपाभ्यां व्याक्रियेते'ति श्रुतेः। इत्थं च प्रलयकाले नामरूपविभागरहिता-वस्थातात्पर्येण एकत्वकथनात् न तन्मात्रेण नित्यतया प्रतिपादितानां जीव-प्रकृति-नित्यविभूति-ज्ञानादिपदार्थानां नित्यत्वव्याघातः।

## नित्यविभूतेर्जडत्वं, उताजडत्वं वेति विचारः

नित्यविभूतिर्जडैव, यदेव स्वयं प्रकाशं (अजडं) ज्ञानादि तत् कञ्चित् पुरुषम-पेक्ष्य प्रकाशते, यथा आत्मा स्वस्मा एव स्वयं प्रकाशते, धर्मभूतज्ञानमपि स्वाश्रयभूतं आत्मानं प्रति स्वयं प्रकाशते तथा इयं नित्यविभूतिः कस्मैचिदपि न प्रकाशते। स्वयम-चेतनत्वात् स्वस्मै भासत इति कल्पः न संभवति। एवं स्वतन्त्रद्रव्यत्वात् चेतनधर्म-त्वाभावात् ज्ञानवत् स्वाश्रयायेति पक्षोऽपि न घटते।

अपि च बद्ध-मुक्त-नित्य-ईश्वर भेदेन चतुर्धाऽवस्थितेषु पुरुषेषु न कस्मैचिदपि प्रकाशते। तत्र बद्धानां प्राकृतलोकवृत्तितया स्वसाक्षात्कारासंभवेन तेभ्यो न प्रकाशते। नित्यमुक्तेश्वराणां नित्यविभूतौ सत्यामपि स्थितौ तेषां सर्वज्ञतया स्वधर्मभूतज्ञानेनैव नित्यविभूतेरपि साक्षात्क्रियमाणत्वात् तेभ्योऽपि न प्रकाशते अतो जडैव।

न च जडत्वपक्षे "ज्ञानानन्दमया लोका" इत्यादि रहस्यागमवाक्यविशेषे श्रूय-माणज्ञानत्वव्यपदेशो न युज्यत इति वाच्यम्।

नित्यविभूतौ पूर्णज्ञानविशिष्ट (नित्य) जीवाधारत्वेन मुक्तस्य जीवस्य ज्ञान-विकासस्थानत्वेन वा उपचारेणैव ज्ञानत्वव्यपदेशः न तु मुख्यः अन्यथा—"ज्ञानशक्ति-बलैश्वर्यवीर्यतेजांस्यशेषतः" इत्यादिषु ज्ञानेन सहैव शक्त्यादिगुणानामपि पाठदर्शनात् नित्यविभूतेरपि षाड्गुण्यापत्तिः ततश्च तादृश गुणवत्त्वे चेतनत्वापत्तिस्यात्। तस्मात् नित्यविभूतिर्जडैवेति ब्रुवन्ति।

परन्तु भगवद्विग्रहविषये "किमात्मिकैवेषा भगवतो व्यक्ति"रिति प्रश्नस्य 'यदात्मको भगवान्" इति प्रतिवचनस्य 'किमात्मको भगवानि'ति पुनरनुयोगस्य "ज्ञानात्मक' इति प्रत्युक्तेश्च दर्शनात्, "स्वसत्ताभासकं सत्त्वं गुणसत्त्वात् विलक्षणम्"

इत्युपबृंहणात् च आत्मवत् ज्ञानान्तरनिरपेक्षप्रकाशत्वरूपज्ञानत्वस्य निराबाधतया ज्ञानत्वव्यपदेशस्य मुख्यतयैव निर्वाहसंभवाच्च नित्यविभूतिरजडैवेति बहूनां सांप्रदायिकानामभिसन्धिः।

यदत्राशङ्कितं—नित्यविभूतिः कञ्चित् पुरुषमपेक्ष्य न प्रकाशते अतो जडैवेति—अत्रोच्यते नित्यविभूतिः नित्य-मुक्तेश्वरान् प्रति प्रकाशते। तेषां सर्वज्ञत्वेऽपि तान् प्रति स्वतः प्रकाशनात् नित्यविभूतेः स्वयं प्रकाशत्वमविरुद्धम्। यथा आत्मा स्वयं-प्रकाशः स्वधर्मभूतज्ञानेनापि गृह्यते, तादृशधर्मभूतज्ञानेन ग्रहणवेलायां स्वगतं स्वयं-प्रकाशत्वमजहन्नेव विराजते, एवं नित्यविभूतिरपि स्वयंप्रकाशा, नित्य-मुक्तेश्वर-धीवेद्याऽपि भवति धीवेद्यत्व-स्वयं प्रकाशत्वयोर्विरोधाभावात्।

ननु नित्यविभूतेः स्वयं प्रकाशत्वं यदि, तर्हि बद्धान् प्रति कुतो न भासत इति चेत्—धर्मभूतज्ञानस्य ज्ञानान्तरनिरपेक्षप्रकाशत्वरूपस्वयंप्रकाशत्वे सत्यपि विषय-ग्रहणवेलायामेव स्वाश्रयायैव भासते न तु सर्वदा सर्वेभ्य इति भाननियमः स्वीक्रियते तथा नित्यविभूतेरपि स्वसाक्षात्कर्तॄणामेव स्वयमपि भातीति भाननियमोऽङ्गीक्रियते, बद्धानां प्राकृतलोकस्थत्वात् नित्यविभूतिसाक्षात्कारो नास्ति अतस्तान् प्रति न प्रकाशते, तावता नित्यविभूतेः न स्वयं प्रकाशत्वहानिः। ज्ञानस्य यथा आत्मसम्बन्धसत्त्वेन स्वस्याचेतनत्वेऽपि स्वाश्रयाय भासमानत्वं स्वयंप्रकाशत्वं च, तथा नित्यविभूतेर-चेतनत्वेऽपि नित्य-मुक्तेश्वराणां स्वसम्बन्धित्वेन तेभ्यो भासमानत्वं ( तत्साक्षात्क्रिय-माणत्वं ) स्वयं प्रकाशत्वं च सिद्ध्यति।

## नित्यविभूतेर्नित्यत्वम्

अथ प्राकृतलोक इव नित्यविभूतावपि पृथिव्यादिपञ्चभूतानि, इन्द्रियाणि च सन्ति, तानि नित्यानि तदाश्रया च नित्येति सङ्गिरन्ते। प्राकृतलोके च "आकाशात् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इत्यादिश्रुत्या पृथिव्यादिसृष्टिक्रमः प्रतिपादितः। तेन आकाशादिपरिणामत्वं तत्तदनन्तर द्रव्येषु सिद्ध्यत् अब्जन्यद्रव्यत्वं पृथिवीत्वं, अग्निजन्यद्रव्यत्वं जलत्वं, इति रीत्या तत्तल्लक्षणं पर्यवस्यति। निरुक्तलक्षण-लक्षितानां पृथिव्यादितत्त्वानां नित्यविभूतौ अङ्गीकारे तत्र तेषां परिणामोऽपि अभ्युपगम्यते न वा ? तदभ्युपगमे परिणामिपृथिव्यादितत्त्वाश्रयभूतायाश्चानित्यत्वा-पत्तिः तथा च नित्यविभूतेर्नित्यत्वं नैव सिद्ध्येत्। यदि परिणामो नाभ्युपगम्यते तर्हि तत्रस्य पृथिव्यादीनां अब्जन्यपृथिवीत्वादिरूपं भतत्वमेव न घटते इति चेत्।

अबजन्यद्रव्यत्वं पृथिवीत्वमिति रीत्या न पृथिव्यादिलक्षणं, शब्दमात्रगुणवत्त्वं आकाशत्वं, शब्द-स्पर्शगुणद्वयवत्त्वं वायुत्वं, शब्दस्पर्श-रूप-गुणत्रयवत्त्वं तेजस्त्वं, शब्द-स्पर्श-रूप रसवत्त्वं जलत्वं, शब्दादिगन्धान्तगुणपञ्चकत्वं पृथिवीत्वमिति यथायथं एक-द्वित्रादिगुणवत्त्वेन तत्तल्लक्षणमुच्यते । इदं च नित्यविभूतिस्थपृथिव्यादिषु नित्य सिद्धम् । प्राकृतपृथिव्यादिषु परिणतिविशेषात् भवति । यथा नैयायिकैरपि गन्धवत्त्वं पृथिव्या लक्षणमुच्यते, तच्च नित्ये पृथिवीपरमाणौ, अनित्ये घटादिकार्ये च वर्तत इति नित्यानित्ययोरुभयत्र गन्धवत्त्वमात्रेण पृथिवीत्व व्यपदेशश्च क्रियते तथा नित्यविभूतौ परिणामाभावेऽपि गन्धादिद्वित्रादिगुणवत्त्वरूपनिमित्तमादाय नित्यसिद्धेषु पृथिव्यादिषु पृथिवीत्वादिव्यपदेशो युज्यत एव ।

### भगवद्विग्रहस्य नित्यत्वम्

न च यत्सावयवं तत् जन्मवत् विनाशि चेति व्याप्तेस्सत्वात् पृथिव्यादि-भूततत्त्वस्य भगवद्विग्रहस्य च सावयवत्वात् कथं तेषां नित्यत्वमिति वाच्यम् ।

पौष्करसंहिताख्यपांचरात्रग्रन्थे—

"नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर" इति श्रीसात्वतसंहितायां, "नित्यं नित्याकृतिधरम्" इति रहस्याम्नायब्राह्मणे, "नित्याऽलिङ्गा स्वभावसंसिद्धिः", इति महाभारते, मोक्षधर्मे—

"नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्"

ऋते तमेकं पुरुषं वासुदेवं सनातनम् इति, विष्णुपुराणे "सदैकरूपरूपाये"ति च (श्रुतिस्मृत्यागमपुराणादिषु) नित्यविभूतौ भगवद्विग्रहादेः स्पष्टं नित्यत्वप्रतिपादनान्नात्र सावयवत्वादिना अनित्यत्वं वक्तुं शक्यते ।

यद्यप्यत्र "इच्छागृहीताभिमतोरुदेहः"इति वचनात् भगवतः इच्छायां सत्यां विग्रहो भवति असत्यां च नेति रीत्या तात्कालिकेच्छाजन्यत्वेन भगवद्विग्र-हस्यानित्यत्वं प्रतीयते—तथाऽपि नित्यविभूतौ तस्य (विग्रहस्य) नित्येच्छाधीनस्थिति-त्वाभ्युपगमान्नाऽनित्यत्वप्रसङ्ग इति भावः । नित्येच्छाधीनत्वं च न नित्येच्छाजन्यत्वं किन्तु नित्येच्छाविरहप्रसञ्जन प्रसञ्जिताभावप्रतियोगित्वम् ।

## अस्त्रभूषणादिसमर्थनं जैनपक्षनिरासश्च

स्यान्नाम तस्य विग्रहः, अथापि भगवतोऽवाप्तसमस्तकामत्वेन अस्त्र-भूषणाम्बरादिकं किमर्थम् ? तथा महिषीपरिजनद्वारपालादिभिर्वा किं तस्य साध्यमस्ति ? तस्मादस्त्राद्युचितशत्रुजयादिफलेच्छुभिः पुरुषैरेवास्त्रभूषणादिविशिष्टत्वेन विग्रहस्यानुसन्धेयतया निष्कामैश्च तादृशचिन्तनस्यायुक्तत्वेनाऽकर्तव्यतया देवदेहः—वीतावरण एवेति चेन्न। विश्वशरीरिणः ईश्वरस्य योगविशेषासक्तानां चित्तालम्बन-सिद्धयर्थं दिव्यगात्रपरिग्रहावश्यकत्वे अस्त्रभूषणाद्यपि प्रमाणसिद्धत्वादेष्टव्यम्। यद्यत्र प्रमाणसिद्धस्यास्त्रभूषणादेरपह्नवः तदा भगवतो विग्रहस्यापि अपह्नवस्स्यात्।

न च "न ते रूपं न चाकारो नायुधानि न चास्पदम्" "अजायमानो बहुधा विजायते" "अनिरुक्तेऽनिलयने" "अकायमव्रणमस्नाविरं" निर्गुण"मित्यादिश्रुत्या रूपस्थानायुधविग्रहादीनां निषेधो दृश्यते। तथा "अपहतपाप्मा.........इत्यारभ्य "सत्यकामः सत्यसंकल्प" इत्येतदन्तवाक्येन समस्तकल्याणगुणवत्त्वं विग्रहादिमत्त्वं च विधीयते। अतोऽत्र परस्परं विरोधात् निषेधवाक्यस्य विधिवाक्यबाधकत्वेन न विग्रहादिमत्त्वाभ्युपगमो युक्त इति वाच्यम्। विधिनिषेधश्रुत्योर्भिन्नविषयकत्वेन परस्परं विरोधाभावात्।

अत्रायमाशयः। "निर्गुणम्, "अकायम्" "न ते रूप" मित्यादिनिषेधश्रुत्या हेयगुणाभावः, कर्मकृतदेहाभावः, औपाधिकरूपाभावश्च प्रतिपाद्यते। "अपहतपाप्मा" इत्यादि विधिवाक्येन च न निरुपाधिककल्याणगुणवत्त्वादिकमेवाभिधीयते। अतश्च उपदर्शित निषेधवाक्येन शुद्धसत्त्वविग्रहादेर्निषेधाकरणान्नात्रविरोध इति नित्यविभूतौ भगवतो विग्रहरूपादिमत्त्वं निराबाधमिति भावः।

## अवतारकालेऽपि भगवतः षाड्गुण्यप्रतिपादनम्

अथ अवतारकालीनभगवद्विग्रहस्याऽपि नित्यत्वं तथा भगवतष्षाड्गुण्यञ्च प्रतिपाद्यते। पर-व्यूह विभव-अर्चा-हार्दभेदेन पंचधा भगवतोऽवस्थितिः शास्त्रे प्रत्यपादि। तत्र परशब्देन नित्यविभूतौ ( वैकुण्ठे ) स्थितस्य भगवतो व्यपदेशः। व्यूहशब्देन वासु-संकर्षण प्रद्युम्नानिरुद्धभेदेन व्यूहद्यावस्थितस्य परस्यैव व्यपदेशः। भगवद्वैभवेन सह यत्र रामकृष्णाद्यवतार आसीत् तस्य विभवावतार इति विभवशब्देन व्यपदेशः। अर्चावतार-

स्तु प्रसिद्ध एव। देवालये तत्तत्प्रतिमासु मन्त्रादिपूर्वकं भगवच्छक्तेरावाहनं विधाय भगवत्सान्निध्यं यत्र भवति तत्र तादृशमूर्तिविशेषस्य अर्चाशब्देन व्यपदेशः। भगवतो जीवान्तर्यामिकतया सदा हृदि संनिहितः स्वरूपविशेषः हार्दशब्दवाच्यः।

इत्थं च साधुत्राणार्थं आत्मनः स्वाभाविकान् गुणाननपहाय स्वकीयैरेव विग्रहांशैः स्वेच्छया भगवानवतरतीति अवताररहस्य स्थितिः। अत्रेयमाशंका—"आत्मानं मानुषं मन्ये" इत्यादिरामायणवाक्येन रामकृष्णादिविभवावतारकाले ज्ञान-शक्ति-बलैश्वर्य-वीर्य-तेजोरूपाणां भगवदसाधारणगुणानां सर्वेषां भगवता विग्रहद्वाराऽनाविष्कारात् गुणविशेषमात्रस्यैवोपलंभाच्च कथं तादृशावस्थायां भगवत; षाड्गुण्यं संभवति ? कथं च मानुषशरीरादेः नित्यत्वं च वक्तुं शक्यत इति। अत्र प्रतिविधीयते। स्वेच्छयैव भगवता मानुषादिशरीरपरिग्रहात् तस्य कर्मकृतत्वाभावान्नानित्यत्वं, किन्तु नित्यत्वमेव। एवं "न कर्मणा वर्धते नो कनीयान्" "स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्" "अन्यूनश्चाप्यभिवृद्धश्च" इत्यादिश्रुतिस्मृतिभिः वृद्धिह्रासाद्यभावप्रतिपादनात् विभवव्यूहादिषु अवतारेष्वपि षाड्गुण्यमस्त्येव। परं तु संकर्षणादि विशेषावतारनिर्देशार्थं (व्यवहारार्थम्) व्यवस्थया तदानीं गुणद्वन्द्वस्यैवाभिव्यक्तिः न तु अन्यगुणचतुष्काणां इति वस्तुस्थितिः। इत्थं च अवतारकाले स्थितानां सर्वेषां गुणानां विग्रहद्वाराऽनाविष्कारात् आविश्चिकीर्षितगुणमात्रमादाय तद्वत्ताव्यवहारो न तदितराभावसाधकः। क्षुद्रो जीवोऽपि कदाचित् गभीरमनाः स्वमनीषितं नाविष्करोति किं तावता तस्य तादृशगुणाभाव इति न वक्तुं शक्यते। तस्मात् व्यूहादिष्वपि षाड्गुण्यं निराबाधमिति भावः। किञ्च सर्वस्यापि अवतारस्य भगवदंशत्वेन तत्प्रयुक्ततयाऽपि षाड्गुण्यमव्याहतमिति निष्कर्षः।

### संकर्षणादीनां जीवत्वनिरासः

अथ संकर्षण-प्रद्युम्न-अनिरुद्धभेदेन भिन्नेषु व्यूहेषु "संकर्षणो नाम जीवो जायते" "प्रद्युम्नसंज्ञमनो जायते" "अनिरुद्धसंज्ञोऽहंकारो जायते" इति त्रयाणां क्रमेण जीवमनोऽहंकाराभिमानित्वं उक्तम्। तथा विष्णुपुराणे "निगूहनं चतुष्काणां द्वन्द्वानां च प्रकाशनम्" इति वाक्येन प्रतिव्यूहं गुणद्वयविभागोऽकारि। तत्र संकर्षणस्य संजिहीर्षावत्त्वं शास्त्रप्रवर्तकत्वञ्च, प्रद्युम्नस्य सिसृक्षावत्त्वं धर्मप्रवर्तकत्वं च, अनिरुद्धस्य रक्षणाभिसन्धिमत्त्वं तत्त्वबोधकत्वं चेति नियतं प्रत्यपादि। यद्यत्र संकर्षणादयः भगवदंशाः

स्युः तदा सर्वेषामपि जीवादिसर्वाभिमानित्वस्य संजिहीर्षादिसर्वविधगुणवत्त्वस्य च संभवेन प्रतिनियतगुणवत्त्वव्यपदेशोऽनुपपन्नः। किञ्च संकर्षणादीनां वासुदेवत्वाभ्युगमे तदा जीवाद्यभिमानत्रयस्य संजिहीर्षादित्रयस्य च एकाश्रयत्वात् संकर्षणप्रद्युम्नानिरुद्धभेदेन व्यवस्थाऽपि न स्यात् । तस्मात् परमात्मभिन्ना जीवविशेषा एव संकर्षणादय इति चेन्न।

यथा सद्विद्या-दहरविद्यादिप्रतिपाद्यगुणानां सर्वेषां भगवन्निष्ठत्वाविशेषेऽपि "यथा क्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवती"ति श्रुत्या तत्तद्विद्यानियतत्वेनैव गुणाः उपास्यन्ते। तथैव प्रकृतेऽपि सर्वेषां गुणानां कार्याणां च संकर्षणादौ साधारण्येऽपि तत्तद्व्यूहनिष्ठैः तत्तद्गुणद्विकवत्त्वेनैव प्रतिनियतदया उपासन कार्यं मित्येततर्थं प्रतिपादनात् नात्र संकर्षणादीनां वासुदेवांशत्वे कापि हानिः। अत एव नजीवत्वम्।

### संकर्षणादिव्यूहस्य सत्यत्वं

अथ क्वचित् भगवान् "चतुरात्मा चतुर्व्यूहः" इत्यादिप्रमाणेन चतुर्व्यूह इति प्रतीयते। क्वचिच्च संकर्षणप्रद्युम्नानिरुद्धभेदेन त्रिव्यूह एव देव इति। इत्थं च त्रिव्यूहचतुर्व्यूहपरवाक्ययोः व्याघातेन परस्परं बाध एव युक्तः न तु व्यूहस्य सत्यत्वं, तस्मादत्र व्यूह इति दृष्टिविध्युपासनवत् असतःकल्पनामात्रमिति चेन्न। परवासुदेवात् भगवदवतारभूतस्य व्यूहवासुदेवस्य भेदाविवक्षायां त्रिव्यूहो वासुदेव इति वचनं युज्यते। सर्वेष्वपि व्यूहेषु षाड्गुण्यसाम्यस्य स्थितत्वात् अभेदविवक्षा संभवति अतः त्रिव्यूहशास्त्रस्य न व्यूहान्तराभावे तात्पर्यमिति नानयोः परस्परं विरोधः।

किञ्च चतुर्व्यूहपक्षस्य चतुरात्मा चतुर्व्यूहः इत्यादि प्रमाणसिद्धस्य वास्तवत्वेऽपि ओं इति प्रणवे अकार उकार मनुस्वाररूपस्य अक्षरत्रयस्यैव सद्भावात् तदर्थतया व्यूहत्रयमात्रध्यानं विधातुं व्यूहत्रयपक्षावलंबनं व्यूहत्रये च त्रियुगगुणतयां भगवच्चिन्तनं च उपपद्यत इत्यभिप्रायेण त्रिव्यूहत्वोक्तिस्संगच्छते। उक्तरीत्या अनभ्युपगमे "अनुक्तमन्यतो ग्राह्य" मिति न्यायेन छान्दोग्ये भूतत्रयं, तैत्तिरीयके च भूतपञ्चकं अन्यत्र च तथा-तथा न्यूनमधिकं च तत्त्वजातमधीतमिति चतुर्विंशतिसंख्या-संख्यातेषु तत्वेषु तत्त्वसंख्याव्यवस्थापनमपि विलीयेत। अतो यथाशास्त्रं अभेदविवक्षायां त्रिव्यूहत्वोक्तिः भेदविवक्षायां च चतुर्व्यूहत्वोक्तिरिति व्यूहस्य सत्यत्वं सिद्ध्यतीति भावः।

अथ व्यूहे भगवन्मूर्तीनां मध्ये कस्यको व्यूहो मूलमित्यत्र सात्वतादिसंहितासु मूलमूल भावविषषे अव्यवस्थैव लक्ष्यते। तथा हि इतः पूर्वं "संकर्षणो नाम जीवो जायते" इत्यादिप्रमाणेन एकैकस्यापि व्यूहस्य अंशत्रयमस्तीत्युपापादि। तत्र संकर्षणस्य जीवाभिमानित्वं संजिहीर्षावत्त्वं शास्त्रप्रवर्तकत्वं चेत्यंशत्रयं प्रद्युम्नस्य तु मनोभिमानित्व सिसृक्षावत्त्वादिकं, अनिरुद्धस्य तु अहंकाराभिमानित्व रिरक्षिषावत्त्वादिकं चेति। परन्तु उपदर्शितकार्यविरुद्धतया।

परमव्योमनिलयो वासुदेवः सनातनः।
शरीरात् स्वात् जगत् स्रष्टुं संकर्षणमभावयत्॥

स चाण्डजातमसृजत् महाभूतानि पंच च।
दशोत्तराणि सर्वाणि परस्तात् प्रकृतेर्व्यधात्॥

तत्रस्थानां च भूतानां अन्योन्यानुभवाय च'।
"प्रद्युम्नं भावयामास सदा कामरसप्रदम्॥'

एवमप्राकृतान्येव बाह्यान्यण्डानि केशवः।
सृष्ट्वाऽत्र प्राकृतं चाण्डं स्रष्टुं दध्रे स्वमानसम्॥

ततः स वासुदेवोऽथं प्रद्युम्नादुदपादयत्।
सर्वस्य जगतः कोशमनिरुद्धाह्वयं हरिम्॥

स चानिरुद्धो भगवान् आदौ जलमभावयत्"

इत्यादि प्रमाणेषु संकर्षण-प्रद्युम्नानिरुद्धानां त्रयाणामपि सृष्टि स्थिति संहार-कार्यव्यवस्था न दृश्यते प्रत्युत त्रयाणामपि प्रतिनियतभागसर्गकरत्वं अनिरुद्धस्य अन्यत्र रक्षकत्वेनोक्तस्य अत्र ब्रह्मस्रष्टृत्वं, ब्रह्माणं प्रति वेदोपदेशः श्रीहयग्रीवावतारः इत्यादि परिलक्ष्यते। अतोऽत्र कारणे कार्ये सर्वत्रैव अनियमदर्शनात् मन्त्रजपादौ कस्यचिदक्षरस्य बीजत्वं कस्यचित् शक्तित्वं कवचकीलक शुक्लादिवर्णप्रभृतिकञ्च अविद्यमानमेवारोप्य यथार्थत्वमेव भाष्यते, तथैवात्रापि संकर्षणादिव्यूहस्य भावनैव न तु सत्यत्वमिति चेत्। अत्र ब्रूमः। एकस्मिन् कल्पे अनिरुद्धस्य व्यापारः रक्षा; अन्यस्मिंश्च सर्ग इति रीत्या कल्पविशेषे त्रयाणामपि प्रतिनियतसृष्टिव्यापारः कल्पान्तरे च सृष्टि स्थिति संहारादिव्यापारश्चेति रीत्या वा प्रमाणानां मिथो विरोधपरिहारसंभवेन नात्र व्यूहस्य भावनामात्रार्थता अपि तु सत्यत्वमेव। अन्यथा ब्रह्माद्युदन्तेष्वपि महोपनिषदि "भगवतो ललाटात् क्रोधजो रुद्रोऽजायतेति, शतपथब्राह्मणे च "चतुर्मुख एव रुद्रमजन-

५

यत्" इति च परस्परं विरोधदर्शनात् तत्रापि काल्पनिकत्वापत्तिस्स्यात्। तस्मात् कल्पभेदेनैव विरोधपरिहारस्य सर्वत्र कर्तव्यतया न कश्चिद्दोष इति।

नन्वेवमपि संकर्षणादिव्यूहस्य सर्वस्य भगवदवताररूपत्वं दुर्वचमेव। सात्वतादिसंहितासु वासुदेवसंकर्षणादिषु एकया मूर्त्या प्रश्नः क्रियते अन्यया च तस्योत्तरं दीयत इति प्रश्नप्रतिवचनभङ्गी दृश्यते, तथा कृष्णबलभद्रादिषु परस्परं विषादकोपौ लक्ष्येते, तत्र च कृष्ण बलभद्रयोः उभयोरपि भगवदवतारत्वेन एकत्वे वासुदेवसंकर्षणादीनां ऐक्ये च कथं प्रश्नप्रतिवचन–विषादकोपादयः संगच्छन्ते तस्मादत्र स्वात्मानं प्रति स्वस्य प्रश्नकरणस्य प्रत्युत्तरस्य वा हेतुप्रयोजनयोरसंभवेन असंगतत्वात् न संकर्षणादीनां भगवदवताररूपत्वं, किन्तु बुद्धिभेदप्रयुक्तपुरुषभेदोऽवश्यं स्वीकर्तव्य इति संकर्षणादीनां सर्वेषां जीवत्वमेवे परमात्मनस्तु उपदेष्टृत्वम्। इत्थं च प्रश्नप्रतिवचन-गुरुशिष्यभावादीनां पुरुषभेदनिबन्धनतया संकर्षणादीनां न भगवदवताररूपत्वमिति चेन्न। भगवतः स्वच्छन्दलीलतया स्वस्यैव स्वान्यत्वगुरुशिष्यादिरूपेण अभिनयोपपत्तेः। ईदृशरीत्या अभिनयस्य प्रयोजनं तु शिष्याचार्यादिभिरेवं वर्तितव्यमिति धार्मिकशिक्षणमेव। तादृशं च शिक्षणं दययैव भगवता अस्मभ्यं क्रियत इति भगवति एव अभिनयाद्यात्मकप्रश्नोत्तरादेः संभवात् सत्यत्वं च व्यूहादेः निष्प्रत्यूहम्।

अथ प्रलयकाले वटपत्रशायिनि भगवति अवताररूपत्वं दुर्वचमित्याशंक्य समाधीयते। पुराणेषु विश्वस्यान्तरेव बालरूपेण भगवानस्ति तस्योदरान्तरेव विश्वं वर्तत- इति चोच्यते। इदं च अघटनात् व्याहतम्, एकस्यैव वस्तुनः युगपत् अन्तर्व्याप्ति बहिर्व्याप्त्योरसंभवात्। कस्यचिदन्तरे किञ्चित् वर्तते तदेव तदानीमेव तस्मात् बहिरिति कः श्रद्दध्यात्। यदि वस्तुद्वयं स्यात् तदा भवेत्। यदि वा 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इतिवत् एकमेव अन्तर्बहिरपीति स्यात् इष्येत, नत्वेतदस्ति। तस्मात् भगवान् स्वाभिमत क्रीडारसवशात् ईदृग्विधं इन्द्रजालं प्रदर्शयति। युक्तं चैतत् भगवतः उपेन्द्रत्वात्। अतश्च वटपत्रशायिनः भगवदवताररूपत्वं दुर्वचमिति तस्य असत्यत्वमिति चेन्न। सर्वशक्तौ भगवति अघटनीयस्याऽपि घटनं स्यादेवेति नात्र इन्द्रजालमिति कथनं संगच्छते। भगवच्छक्तेः अद्भुतत्वेन भगवतः स्वसंकल्पवशात् जगत् संकोचशक्ति प्राप्य संकुचदेव बालोदरान्तर्वर्तते तदेव वस्तु यदा गर्भस्थशिशुरिव बहिराविर्भवति तदा विकासशक्तिं प्रतिपद्यत इति रीत्या अवस्थाभेदमाश्रित्य विरोधपरिहारोपपत्तेर्न किञ्चिदपहीनम्।

### संकर्षणादीनां व्यष्टिभूतेश्वरपरत्वनिरासः

ईश्वरः समष्टिव्यष्टिभेदेन द्विविधः, तत्र समष्टिभूतः ईश्वरः परवासुदेव : व्यष्टिभूतः ईश्वर एव प्राण-मनो-वाङ्मयभेदेन त्रिविधः, तेषामेव च व्यूहत्रयशब्देन व्यपदेशः। यथा भोक्तारः देवमनुष्यादिभेदेन अनेके, भोग्यानि च भूतभौतिक भेदेन, तथा ईश्वरोऽपि त्रेधेति ईश्वरस्वरूपेऽपि केचित् समष्टि-व्यष्टिभेदं वर्णयन्ति। तन्न शोभनम्। ईश्वरस्य भेदः किं परिणामात् उत भोक्तृवत् स्वभावतः ? अथ प्रतिबिम्बितचन्द्रादेरिव भ्रान्त्या वा ? नाद्यः परिणामाभ्युपगमे तदा ईश्वरांशे निर्विकारत्वप्रतिपादकश्रुतिः अनुपपन्ना स्यात्। अथ भोक्तृवत् स्वभावत एव अनेकत्वाभ्युपगमे तदा 'एको देवः सर्वभूतेषु गूढ एकः शास्ता' इत्यादिश्रुतिभिः विरोधस्स्यात्। अथ भ्रान्त्या ईशे नानात्वं चेत् तर्हि मायार्जितभ्रान्तिविभागोपजीविपक्ष एव परिगृहीतस्स्यात् यतो हि भवद्भिः जगतो मिथ्यात्वानंगीकारेण श्रुतिवाक्यस्य मिथ्यार्थप्रतिपादनपरतया निर्वोढुमशक्यत्वात्। तस्मात् प्राणेन्द्रियमध्ये वाक्-प्राण-मनसां तत्र-तत्र श्रुतौ प्राधान्यप्रतिपादनात् तदौपयिकमधिष्ठानवैचित्र्यं त्रिविधमुच्यते नेश्वरव्यक्तिभेदः। अन्यथा—'अन्नमयः प्राणमयः' इति श्रुतिं गृहीत्वा ईश्वरस्य पञ्चविधत्वमपि स्यात्। अतोऽत्र ईश्वरः एक एव, न तु अनेक इति भावः।

## बुद्धिसरः

अथ प्रत्यक्पराक्भेदेन विभक्तद्रव्यमध्ये प्रत्यक्पदवाच्यजीवेश्वरयोः स्वरूपनिपणानन्तरं पराक्पदाभिधेयनित्यविभूति-धर्मभूतज्ञानयोरन्तरे नित्यविभूतिस्वरूपस्य निरूपितत्वात् अवसरप्राप्तं बुद्धितत्त्वं प्रस्तूयते।

### बुद्धेः स्वयंप्रकाशत्व-वेद्यत्व-द्रव्यत्व-नित्यत्वानि

यथा—नैयायिकाः बुद्धिः उपलब्धिः ज्ञानमित्येतेषां भेदं नाङ्गीकुर्वन्ति तथैव रामानुजीया अपि। परं तु नैयायिकाः बुद्धिः गुणः, अनित्या, घटमहं जानामीत्याद्यनुव्यवसायवेद्येव न ( स्वयंप्रकाशेति ) ब्रुवन्ति।

विशिष्टाद्वैतवेदान्तिनस्तु बुद्धिः द्रव्यं, नित्या, स्वयम्प्रकाशा चेति संगिरन्ते। तत्र प्रथमतः स्वयम्प्रकाशत्वं साध्यते। "ज्ञातुर्ज्ञेयावभासो मति"रिति श्रीमद्वेदान्तदेशिकैः ( मूले) धर्मभूतज्ञानस्य लक्षणमभ्यधायि। तस्य च "अहमिदं जानामीति अहमर्थाश्रयतया सिध्यन् सकर्मकः प्रकाशो मतिरित्यर्थः" इति सर्वार्थसिद्धौ तैरेव व्याख्यातम्।

तेन स्वाश्रयाहमर्थविशिष्टस्वग्राहकत्वे सति विषयग्राहकत्वं बुद्धेर्लक्षणमिति लभ्यते। यद्वा स्वाश्रयविशिष्टस्वग्राहकत्वमित्येकं लक्षणम्, विषयग्राहकत्वमित्यपरं लक्षणमित्येवं लक्षणद्वयपरतयाऽपि व्याख्यातुं शक्यते। अस्य च ज्ञानस्य ज्ञानं स्वप्रकाशं धीत्वात् बुद्धिलक्षणज्ञानवत् इति सदृष्टान्तानुमानेन घटमहं वेद्मीति अनुभवेन प्रत्यक्षेण च स्वयम्प्रकाशत्वं सिद्धयति।

अत्र ज्ञानस्य स्वयंप्रकाशत्वं नाम इतरनिरपेक्षप्रकाशत्वं अर्थात् स्वगोचर-ज्ञानान्तरनिरपेक्षव्यवहारयोग्यत्वं, यथा बुद्धिरस्तीत्याकारिका बुद्धिः स्वात्मानमपि विषयीकरोति बुद्धित्वेन सामान्यरूपेण सर्वासां बुद्धीनां तस्यां भानेन स्वस्या अपि बुद्धित्वाक्रान्तायाः तद्विषयत्वात्, यथा च सर्वविषयिणी ईश्वरबुद्धिः सर्वान्तर्गतं स्वस्वरूप-मपि विषयीकरोति तथा सर्वाऽपि बुद्धिः स्वविषयिण्यपि। एवं च यथा घटादयः सन्तोऽपि तेषां अचेतनत्वेन ज्ञानमन्तरा व्यवहारस्य अशक्यत्वात् ज्ञानसापेक्षत्वं, तथा ज्ञानं न भवति स्वसत्तयैव स्वस्य प्रकाशोपपत्तेः अत एव आत्मसाक्षिकतया प्रतीयमानाः घटमहं वेद्मीत्यादयः अनुभवाः उपपद्यन्ते। वेद्मीत्यस्य ज्ञानाश्रयत्वार्थकतया ज्ञानस्य ज्ञानजन्यज्ञानान्तरापेक्षत्वे तत्र ज्ञानभानानुपपत्तेः। अतः ज्ञानस्य इतरनिरपेक्षप्रकाश-कत्वरूपं स्वयम्प्रकाशत्वं प्रत्यक्षसिद्धम्।

एवं विषयग्राहकत्वं ज्ञानलक्षणमित्युक्ते यत्र ज्ञानसामान्यस्य तल्लक्षणलक्ष्यत्वेन तादृशलक्षण विषयकज्ञानं यथा स्वविषयभूतं लक्षणं स्वस्मिन्नपि गृह्णाति तथा घटादि-विषयकज्ञानमपि स्वात्मकज्ञानग्रहणार्थं न ज्ञानान्तरमपेक्षते तस्मात् धीत्वरूपहेतुकानु-मानेनाऽपि ज्ञानस्य स्वयंप्रकाशत्वं सिद्धयति। किञ्च अयं घटः अयं घटः इत्यादि धारावाहिकज्ञाने जाते तस्य अन्ते "अहमनुस्यूतैतद्विषयक ज्ञानधारावान्" इत्यनुसन्धत्ते पुरुषः। तत्र यदि प्रथमादिक्षणे उत्पन्नस्य ज्ञानस्य स्वयम्प्रकाशत्वं नाभ्युपगम्येत तदा प्रप्रथमक्षण एव उत्पन्नज्ञानस्य अनवबुद्धतया अनुभवाभावेन तस्य स्मरणात्मकानु-संधानानुपपत्तिः, तस्मात् ज्ञानस्य स्वयम्प्रकाशत्वमेष्टव्यं तथात्वे अन्तिमज्ञानात् पूर्वभाविनी धीरपि अनुभूता स्यात् ततश्च स्मरणमुपपन्नं स्यात्।

न च कर्तृत्व-कर्मत्वयोः एकस्य विरुद्धत्वात् स्वात्मिकायां बुद्धौ बुद्धेः कर्मत्वा-संभवेन स्वात्मकविषयग्राहकत्वानुपपत्त्या स्वयं प्रकाशत्वं न संभवतीति वाच्यम्।

तथा सति दृष्टान्ते बुद्धिलक्षणबुद्धावपि स्वयम्प्रकाशत्वं न स्यात्। न चेष्टापत्तिः।

बुद्धिलक्षणस्य ज्ञानसामान्यविषयकत्वेन लक्षणज्ञानस्यापि तत्र अन्तर्गतत्वेन तस्यापि विषयतया अनुभवसत्त्वेन तदयोगात्। इत्थं च उपदर्शितानुमानादिप्रमाणैः ज्ञानस्य स्वयम्प्रकाशत्वमेव न तु नैयायिकोक्तरीत्या अनुव्यवसायवेद्यत्वेन परप्रकाश्यत्वमिति भावः।

## बुद्धेरवेद्यत्वनिराकरणम्

नन्वेवं ज्ञानस्य स्वयम्प्रकाशत्वोपगमेऽपि वेद्यत्वं न स्यात् ज्ञानस्य वेद्यत्वोपगमे यत्र यत्र वेद्यत्वं तत्र तत्र जडत्वं यथा घट इति व्याप्तेस्सत्त्वात् बुद्धेः घटवत् जडत्वप्रसंगः, तस्मात् बुद्धिरवेद्यैवेति चेन्न। देवदत्तमद्राक्षमित्यादिषु कालान्तरे स्मृतिरूपज्ञानविषयत्वस्यैव देवदत्तविषयकप्रत्यक्षबुद्धेः दर्शनात्, परपुरुषबुद्धीनां च प्रवृत्त्यादिभिरनुमितिदर्शनात्, ज्ञानशब्देन स्ववाच्यत्वेन ज्ञानस्य बोध्यत्वदर्शनाच्च स्मृत्या अनुमानेन शब्देन च बुद्धेर्वेद्यत्वस्यैव अनुभवेन अवेद्यत्वायोगात्।

किं च पुरुषभेदेन कालभेदेन च बुद्धेरवेद्यत्वमस्ति न तु सर्वैः सर्वदा न गृह्यत इत्यवेद्यत्वम्। एवं वेद्यत्वे जडत्वप्रसङ्ग इति यदुक्तं तदपि न—उपदर्शितरीत्या ज्ञानादिशब्देन ज्ञानस्य बोध्यत्वदर्शनेन तस्यैव च वेद्यत्वशब्दार्थत्वेन तत्र अजडत्वस्यैव विद्यमानत्वेन जडत्वेन तस्य (वेद्यत्वस्य) व्याप्तिभंगात्। तथा ज्ञानस्य अवेद्यत्वे अनुभूतिः स्वयंप्रकाशा अनुभूतित्वात् इत्यनुमाने पक्षहेतुवाचकाभ्यां अनुभूति–अनुभूतित्वपदाभ्यां अनुभूतिः अनुभूतित्वं वा बोध्यते, न वा? आद्ये कथं वेद्यत्वस्य बाधः अनुभूतेरेव बोधनात्। द्वितीये कथमनुभूत्यात्मकपक्षे स्वयंप्रकाशत्वरूपसाध्यं साधयेत् तस्याश्च तादृशज्ञानाविषयत्वेन पक्षस्यैवासिद्ध्या तत्साधनायोगात्। तस्मात् ज्ञानस्य स्वयंप्रकाशत्ववत् वेद्यत्वमपि निराबाधमेवेति आशयः।

## बुद्धेर्नित्यत्वम्

इदं च आत्मनिष्ठं धर्मभूतज्ञानं इन्द्रियादिसामग्रीजन्यत्वात् सुषुप्त्यादिकाले अनुपलब्धेश्च अनित्यमिति नैयायिकाः। नित्यमिति विशिष्टाद्वैतिनां सिद्धान्तः। तत्र प्रमाणं तु बृहदारण्यकोपनिषद्गतं "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मनः" इति "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा" इति च वाक्यद्वयम्। तत्र प्रथमेन वाक्येन विज्ञातुर्जीवात्मनो विज्ञातिः विज्ञानं तस्या विपरिलोपो न विद्यत– इति कथनात् जीवात्मधर्मभूतं ज्ञानं नित्यमित्यवगम्यते।

न च विनाशाभाव एवोक्तवाक्येन प्रतीयते न तूत्पत्त्यभाव इति वाच्यम्। अनादेरेव भावस्य नाशासंभवात् अविनाशकथनेनैवानुत्पत्तेरपि सिद्धेः।

न चात्र श्रुतौ विज्ञातुर्विज्ञातेरिति समानाधिकरणे षष्ठ्यौ, ज्ञानस्वरूपस्य विज्ञातुर्विपरिलोपो न विद्यत इत्यर्थः। तथा चात्मनित्यत्वमेवेयं श्रुतिः प्रतिपादयति न तद्धर्मभूतज्ञाननित्यत्वमिति वाच्यम्।

"न विज्ञातुर्विपरिलोपो विद्यते" इत्यनेनैवात्मस्वरूपनित्यत्वलाभात् विज्ञातेरिति विशेषणस्य वैयर्थ्यप्रसंगात् आत्मस्वरूपनित्यत्वस्थापने उक्तश्रुतेस्तात्पर्याभावात्। अतो विज्ञातुर्विज्ञातेरिति व्यधिकरणे षष्ठ्यौ। अपि चेयंश्रुतिरात्मधर्मभूतज्ञाननित्यत्वे आत्मनोऽविनाशित्वं हेतूकरोति। तेनेदं सिद्धयति यत् ज्ञानविशिष्टस्यात्मनो नित्यत्वाद् विशेषणभूतज्ञानस्यापि नित्यत्वमिति। अथवा धर्मिणो नित्यत्वात् तत्स्वाभाविकधर्मस्य ज्ञानस्यापि नित्यत्वमिति।

"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" इतिसूत्रकारो ज्ञानं यावदात्मभावीधर्म इति कथयति। आत्मनो नित्यत्वे च यावदात्मभावि ज्ञानमपि नित्यमिति लभ्यते।

द्वितीयवाक्ये "अविनाशी" इति पदेन आत्मनो नित्यत्वमुक्त्वा अनुच्छित्तिधर्मा इति पदेन न विद्यते उच्छित्तिर्विनाशो यस्य तदनुच्छित्ति, ज्ञानम्—अनुच्छित्ति धर्मो यस्य सोऽयमनुच्छित्तिधर्मेति बहुव्रीहिगर्भबहुव्रीहिणा अविनाशिज्ञानगुणकत्वमुच्यते। तेन ज्ञानस्य नित्यत्वं सिद्धयति।

न च न उच्छित्तिरनुच्छित्तिः अनुच्छित्तिः धर्मो यस्येति विग्रहोऽत्र विवक्षितः। तेन विनाशाभाववत्त्वमेवात्मनः-प्रतिपाद्यते, नाविनाशिज्ञानधर्मकत्वमिति वाच्यम्। तथा सति अविनाशो इत्यनेन पौनरुक्त्यापत्तेः। धर्मशब्दवैयर्थ्यप्रसङ्गाच्च अव्यय इतिवद् अनुच्छित्तिरित्येतावतापि स्वरूपाविनाशस्य सिद्धेः। भगवान् शौनकोऽपि—

"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥
यथोदपानकरणात् क्रियते न जलाम्बरम्।
सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते"॥

इति ज्ञाननित्यत्वं स्पष्टमाह।

न चोपदर्शितश्रुतिस्मृतिभिः ज्ञाननित्यत्वोपगमे तस्य एकत्वेन एकस्मिन्नेव पुरुषे स्मृत्यनुभवभेदेन प्रत्यक्षपरोक्षभेदेन दर्शन-श्रवणभेदेन पूर्वापरादिभेदेन च सर्वलोकविदितधीभेदानुपपत्तिरिति वाच्यम्। ज्ञानस्य संकोचप्रसरणशीलत्वेन धीभेदोपपत्तेः। ज्ञानस्य संकोचप्रसरणशीलत्वे प्रमाणंतु "प्रज्ञा च तस्मात् प्रसृता पुराणी" "तेनास्य क्षरति प्रज्ञा" "आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा"।

"अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते।
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृपसत्तम"॥

इत्यादि भगवद्गीता विष्णुपुराणादिगतं वाक्यम्।

न च सुषुप्त्यादिषु स्वतोऽन्यतो वा ज्ञानस्यानुपलंभान्नात्र नित्यत्वं सिद्ध्यतीति वाच्यम्। सुषुप्त्यादिषु ज्ञाने विषयग्राहकत्वशक्तेस्संकुचितत्वेन तत्तद्वस्तुप्रकाशक्षण एव ज्ञानस्यापि प्रकाशानुभवात् तादृशविषयप्रकाशस्वरूपयोग्यताया अभावेन योग्यानुपलब्धेरेव भवत्पक्षे सहकारितया अभावग्राहकत्वेन तस्या अभावेन तदा निश्शेषज्ञानाभावानुपपत्तेः। अत एव (योग्यानुपलब्धेः अभावे कारणत्वादेव) भवन्मते अन्धकारे घटसत्वेपि तस्य अनुपलब्धिमात्रेण बाधो न भवति इतिवादः युज्यते। इत्थं च आत्मधर्मभूतज्ञानस्य स्वतः सर्वविषयकत्वं स्वभावः। संसारावस्थायां तु ज्ञानं कर्मणा संकुचितं ततः सर्वविषयसंबन्धो न भवति। मोक्षदशायां तु प्रतिबन्धकस्य कर्मणो निवृत्तेः सहसैव ज्ञानं सकलविषयसंयोगि भवति, अत एव मुक्तः सर्वज्ञ इत्युच्यत इति स्वरूपतो ज्ञानस्य नित्यत्वं श्रुतिस्मृत्यादिसिद्धं न अपह्नोतुं शक्यत इति राद्धान्तः।

एतावता प्रबन्धेन बुद्धेः स्वयंप्रकाशत्व—वेद्यत्व-नित्यत्वानि प्रतिपादितानि। इदानीं बुद्धिः द्रव्यं उत गुणो वेति संशये बुद्धेर्द्रव्यत्वं साध्यते।

### ज्ञानस्य द्रव्यत्वम्

बुद्धिः द्रव्यं—संकोचविकासरूपावस्थावत्त्वात् यथामृदादि, ज्ञानं—द्रव्यं—अजडत्वात् आत्मवत् इत्यनुमानद्वयेन ज्ञानस्य द्रव्यत्वमेव सिद्ध्यति न तु नैयायिकमतरीत्या द्रव्यगुणकर्मेत्यादिना संकेतितगुणत्वम्। अयमाशयः। यानि बुद्धेरितराणि द्रव्याणि तानिसर्वाणि यत्किञ्चिद्विकारवन्ति दृश्यन्ते। तेन विकारस्य द्रव्यत्वव्याप्यत्वावगमात् बुद्धौ च संकोचविकासादिरूपविकारसत्वाद् द्रव्यत्वं सिद्ध्यति। एवं स्वयम्प्रकाशत्वरूपाजडत्वं यत्र तत्र द्रव्यत्वं यथा आत्मनि। तद्वत् ज्ञानस्यापि स्वयंप्रकाशत्वात् द्रव्यत्वं सिद्ध्यतीति।

ननु ज्ञानस्य द्रव्यत्वे ज्ञानरूपस्यात्मनोऽपि द्रव्यत्वात् द्वयोरपि ज्ञानयोर्मध्ये आत्मैव धर्मी ज्ञानं धर्म एवेति नियमेन धर्मधर्मिभावः कथं घटते ? घटपटादिषु द्रव्येषु द्वयोर्द्रव्ययोर्नियतधर्मधर्मिभावस्यादर्शनात् । ज्ञानस्य गुणत्वे तु ज्ञानरूपस्य आत्मनो न ज्ञानाश्रयत्वं संभवति गुणे गुणानंगीकारात् ।

न च यथा प्रभा प्रभावतोर्द्वयोरपि द्रव्यत्वेऽपि प्रभावान् दीपादिरेवाश्रयः प्रभैव धर्म इति नियतधर्मधर्मिभावो दृश्यते एवं ज्ञानात्मनोः द्वयोरपि द्रव्यत्वेऽपि नियत-धर्मधर्मिभाव उपपद्यत इति वाच्यम्—प्रभायाः विशीर्णदीपावयवरूपतया दीपधर्मत्वा भावेन दृष्टान्तासिद्धेरिति चेत् । अत्राहुः । प्रभा-प्रभावतोः द्वयोरपि तेजोद्रव्यत्वमेव-स्वीक्रियते । परं तु प्रभा दीपस्य गुण इति लोकव्यवहारस्तु दीपाश्रितत्वेन पराश्रिता परशेषभूता चेति हेतुना औपचारिकः न तु नैयायिकपरिभाषितगुणत्वजातिमत्त्वेन द्रव्यान्यत्वेन कर्मभिन्नत्वेन सत्तावत्त्वेन वा ।

(अ) अत एव मीमांसकाः अग्निहोत्रादिक्रियाशेषभूतं दध्यादिद्रव्यं गुणपदेन व्यवहरन्ति ।

(आ) उपसर्जनं द्रव्यादिकमपि गुणशब्देन आचक्षते वैयाकरणाः तद्गुणसंवि-ज्ञानो बहुव्रीहिरित्यादौ ।

(इ) अर्थशास्त्रेषु सन्धिविग्रहादयोऽपि गुणत्वेन कीर्त्यन्ते । अतो धर्मस्वभावत्वं गुणत्वमित्येव गुणलक्षणम् । नेदं द्रव्यव्यावृतम् । तथा च द्रव्यस्यापि ज्ञानस्य अहं जानामीति आत्मधर्मत्वेन नियतं प्रतीयमानत्वात् गुणत्वं न विरुद्ध्यत इति भावः । यदुक्तं विशीर्णदीपावयवा एव प्रभा न दीपधर्म इति, तदपि न, आश्रयावयवानां विशीर्ण-तया प्रचरतां प्रभात्वोपगमे मणि-द्युमणि प्रभृतीनां क्रमेण विनाशप्रसंगात् ।

एतेन ज्ञान शक्ति बलैश्वर्यादीनां षाड्गुण्यरूपत्वेन शास्त्रे प्रयोगात् गुणस्य च रूपादेरद्रव्यत्वदर्शनात् कथं द्रव्यरूपस्य ज्ञानस्यात्मगुणत्वं स्यादिति शंकापि परास्ता, उपदर्शितरीत्या पराश्रितत्वादि धर्मस्वभावत्वस्यैव गुणपदवाच्यत्वेनाऽविरोधात् ।

व्युत्पत्तिवादे गदाधरभट्टाचार्यैरपि पराश्रितानां गुणत्वमुपपादितम् । तथा हि—पर्वतो वह्निमान् धूमादित्यादौ धूमपदोत्तरं ''विभाषा गुणेऽस्त्रियाम्'' इति सूत्रेण हेतौ तृतीया कथं स्यात्, धूमस्य गुणत्वाभावेन धूमपदस्य गुणरूपहेतुवाचकत्वाभावाद्--इत्याशंक्य "गुणपदं च न रूपादिचतुर्विंशतिगुणपरं धूमादिहेतौ तत्त्वासंभवात् । नापि

धर्ममात्रपरं गगनादेरपि कालिकसंबन्धेन धर्मतया अव्यावर्तकत्वात्। समवायादिना-धर्मत्वं चाभावाद्यसंग्राहकम्। नापि द्रव्याश्रितत्वम्, सत्तावान् गुणत्वादित्यादौ गुणत्वा-देस्तदभावात्, किन्तु कार्यस्य ज्ञाप्यस्य वा आश्रये आश्रितत्वम्। जाड्यादेः स्वप्रयोज्य बन्धाश्रये धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रये आश्रितत्वाद् गुणत्वम्" इति—इत्थं च बुद्धौ पराश्रितत्वेन गुणत्वव्यवहारे सत्त्वेऽपि अवस्थावत्त्वेन द्रव्यत्वं सिध्यतीति भगवद्रामानुज-मतानुयायिनां निष्कर्षः।

## मतभेदेन ख्यातिनिरूपणम्

अथ बुद्धिस्वरूपनिरूपणानन्तरं किं सर्वाऽपि बुद्धिः प्रमा उत अप्रमा? के वा दार्शनिकाः अप्रमाज्ञानस्य अन्यथाख्यातिशब्दव्यपदेश्यत्वं, प्रमाज्ञानस्य यथार्थख्याति-शब्दवाच्यत्वं च अभ्युपगच्छन्ति? के च सर्वस्यापि ज्ञानस्य यथार्थत्वमेव वदन्ति? यथार्थत्वे च शुक्ताविदं रजतमित्यादिज्ञानस्य भ्रान्तिशब्देन व्यवहारः कथं संगच्छते? इत्यादिजिज्ञासायां विविधदार्शनिकप्रतिपादितख्यातिस्वरूपमिदानीं प्रतिपाद्यते।

तत्र विषये वादिनो बहुधा वदन्ति। लोके यस्य-यस्य यद्यत् ज्ञानं भवति तत्सर्वं प्रमेति वक्तुं न शक्यते। तथा सति प्रतिवादिनो ज्ञानमपि प्रमा स्यात् तथा च प्रति-वाद्यपि विजयेत। तथा सर्वं ज्ञानमप्रमेत्यपि वक्तुं न पार्यते। तथा सति वादिनो यत् ज्ञानं तदपि अप्रमा स्यात्। तथा च वादी पराजितो भवेत्। तस्मात् किञ्चित् ज्ञानं प्रमा, किञ्चित् ज्ञानमप्रमा इति विभागः अवश्यं सर्वैरभ्युपगन्तव्यः। तत्र अप्रमात्मके ज्ञाने अन्यस्य अन्यथाभानात्मिकां अन्यथाख्यातिमभ्युपगच्छन्ति नैयायिका भाट्ट-मीमांसकाश्च। क्षणिकविज्ञानरूपः आत्मैव बाह्यवस्त्वाकारेण प्रतीयत इत्यात्मख्याति-मङ्गीकुर्वन्ति माध्यमिकव्यतिरिक्ता बौद्धाः। भ्रमस्थले असदेव प्रतीयत इत्येवं असत्ख्यातिं स्वीकुर्वन्ति माध्यमिकाः। भ्रान्तिस्थले सदसदनिर्वचनीयं वस्तूत्पद्य प्रतीयत इत्यनिर्वचनीयख्यातिं वदन्ति अद्वैतिनः। सर्वं यथार्थमिति यथार्थख्यातिमुप-गच्छन्ति विशिष्टाद्वैतिनः प्राभाकराश्च।

## अन्यथाख्यातिनिरूपणं तत् खण्डनं च

यत्र शुक्तिं दृष्ट्वा इदं रजतमिति ज्ञानं जायते तत्र शुक्तिवृत्तित्वेन रजतत्वस्यैव भानेन शुक्तेः शुक्तित्वेन भानमन्तरा रजतत्वेन रूपेण (अन्यथा) भानाच्च अस्य

६

अन्यथाख्यातिरिति व्यपदेशः। उक्तं च श्रुतप्रकाशिकायां "अन्यत्रैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानं अन्यथाख्यातिः" इति।

अन्यथाख्यातिमत्त्वे "शुक्तिशकलमेव मया रजततया गृहीतम्" इत्यनुव्यवसायः, सत्यस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वात् असत्यस्थलेऽपि विशिष्टज्ञानस्यैव प्रवर्तकत्वस्य वक्तव्यतया विसंवादिप्रवृत्तिः विशिष्टज्ञानजन्या प्रवृत्तित्वात् सत्यप्रवृत्तिवत् इत्याद्यनुमानं,

"योऽन्यथा सन्तमात्मानं अन्यथा प्रतिपद्यते सयथावत्प्रजानाति।
बुद्धिः सा पार्थं राजसी" "अनात्मन्यात्मबुद्धिर्या" ॥

इत्यादि गीतावचनान्यपि प्रमाणानि।

न्यायसूत्र भाष्यकाराः वात्स्यायनमहर्षयोऽपि—"दुःखजन्म-प्रवृत्ति-दोष-मिथ्या-ज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति सूत्रव्याख्यानावसरे "मिथ्याज्ञान-मनेकप्रकारकं वर्तते आत्मनि तावन्नास्तीति, अनात्मनि आत्मेति, दुःखे सुख" मित्या-दिना ग्रन्थेन अन्यथाख्यातिस्वरूपं वर्णयामासुः। इत्थं च प्राचीमनैयायिकादारभ्य सर्वैरपि नैयायिकैः अन्यथाख्यातिः स्वीक्रियत इति निर्णयः।

अत्रेदं विचार्यते। शुक्तौ इदं रजतमिति भ्रान्तिज्ञानोत्पत्त्यनन्तरं रजतादि-व्यवहारोपपत्त्यर्थं खलु अन्यस्मिन् अन्यथाभानात्मिका अन्यथाख्यातिः भवद्भिरङ्गी-क्रियते। अयं वादः न संगच्छते। व्यवहारस्यान्यथैवोपपत्तेः। तथा हि शुक्तौ इदं रजतमिति ज्ञानोत्पत्तौ शुक्तिरूपधर्मिज्ञानं शुक्तिरजतसाधारणाकारस्फूर्तिः रजतस्मरणं तद्रजतस्य शुक्तेश्च वस्तुतो वर्तमानो यो भेदः तदग्रहश्च अन्यथाख्यातिसामग्री इति सर्वैरपि अंगीकृतम्। एवं च एतत्सामग्रीबलात् शुक्तौ रजतत्वेन रूपेण इदं रजतमित्या-कारकं एकं विशिष्टज्ञानं जायते ततो रजतादिव्यवहार इत्येवमभ्युपगमापेक्षया लाघवात् उपदर्शितसामग्रीत एव साक्षात् व्यवहार इत्युपगम्यते। मध्ये अन्यथाख्यातिरूपज्ञानस्यो-त्पत्तिस्वीकारे गौरवात्। ततश्च अन्यथाख्यातिसामग्र्येव भ्रान्तिज्ञानपदवाच्येत्यन्यथा-ख्यात्यनभ्युपगन्तॄणामाशयः।

न च लाघवात् अन्यथाख्यात्यनभ्युपगमे सर्वत्र ज्ञानसामग्रीत एव कार्यनिर्वाह-संभवेन सामग्र्यतिरिक्त ज्ञानसामान्यस्यैवापलापापत्तिरिति वाच्यम्। प्रत्यक्षविरुद्ध लाघवस्यानादरणीयत्वात्।

न च "जानामि इच्छति यतते" इत्येवं क्रमेण तत्तद्वस्तुप्रवृत्तिं प्रति तत्तद्विषयिणो इच्छैव कारणम्, इच्छा च तत्र अनुकूलताज्ञानादेव भवति, ततश्च तत्तद्वस्तुविषयकप्रवृत्तिं प्रति तत्तद्वस्तुविषयकज्ञानमेव कारणं न तु भेदाग्रहः। एवं च भेदाग्रहस्य प्रवृत्तिं प्रति व्यवहारं प्रति वा कारणत्वायोगेन इदं रजतमित्यादिभ्रमस्थले प्रवृत्त्याद्युपपत्त्यर्थं भेदाग्रहादिसामग्र्यतिरिक्ता अन्यथाख्यातिरवर्जनीयेति वाच्यम्। भवन्मतेऽपि रजतभेदग्रहकाले रजतभ्रमस्यानुत्पत्त्या तन्निर्वाहार्थं अन्यथाख्यातिं प्रति आधारज्ञानस्य विशेषाग्रहरूपभेदाग्रहस्य च कारणत्वमुपगम्य भ्रमभेदाग्रहयोः कार्यकारणभावस्य अपूर्वतया कल्पनीयतया तदपेक्षया अस्माभिः प्रवृत्तिं प्रत्येव साक्षात् भेदाग्रहस्य कारणत्वकल्पनेन न दोषात्।

न च इदं रजतमिति भ्रमस्थले इदमर्थभूतभास्वरद्रव्यजिघृक्षयैव प्रवृत्तेर्दर्शनात् कार्यकारणभावे च अन्वयव्यतिरेकयोरेव नियामकत्वान्नात्र प्रवृत्तिं प्रति भेदाग्रहः कारणमिति वाच्यम्। तथा सति नेदं रजतमिति बाधज्ञानकालेऽपि रजतार्थिनः प्रवृत्त्यापत्तेः। अतश्च भेदग्रहस्य निवृत्तिकारणत्वं भेदाग्रहस्य प्रवृत्तिकारणत्वं निराबाधम्।

न च नेदं रजतमिति ज्ञानकाले प्रवृत्त्यदर्शनात् यथा भेदग्रहस्य निवृत्तिकारणत्वं तथा इदं रजतमित्यभ्रान्तबुद्धौ सत्यरजते रजताभेदज्ञानस्यैव प्रवृत्तिं प्रति कारणत्वेन तादृशाभेदग्रहस्य शुक्तिः रजतमेवेत्याकारकस्य शुक्तिं दृष्ट्वा इदं रजतमिति भ्रान्तिज्ञानस्थले अभावात् रजतार्थिनः प्रवृत्तिवत् तत्र निवृत्तिरपि स्यात् इति वाच्यम्। सत्यरजतस्थलेऽपि रजते प्रवृत्तिः भेदाग्रहादेवेत्युपगमेन दोषाभावात्। इत्थं च सर्वत्र भेदाग्रहस्यैव प्रवृत्तिकारणत्वं नतु क्वचित् भेदाग्रहस्य, क्वचिच्च अभेदज्ञानस्येति तादृशाभेदग्रहाभावप्रयुक्ततया शुक्तौ इदं रजतमिति भ्रमस्थले न रजतार्थिनः निवृत्त्यापत्तिः। तत्र रजतभेदाग्रहस्यैव सत्त्वात्।

न च भेदाग्रहस्य प्रवृत्तिकारणत्वेऽपि रजतार्थिनः कदाचिदरजतान्निवृत्तिः अरजते शुक्त्यादौ रजताभेदज्ञानाभावादेव दृश्यत इति तदनुरोधेन अभेदाग्रहस्य निवृत्तिकारणत्वमेष्टव्यं, इत्थं च वस्तुतो रजतं दृष्ट्वा इदमरजतं, नेदं रजतमिति वा यदा भ्रमज्ञानं भवति तदा तत्र रजताभेदज्ञानाभावेनैव ततो निवृत्तिर्यथा भवति तथैव शुक्ताविदं रजतमिति भ्रमस्थलेऽपि रजताभेदाग्रहस्य सद्भावात् निवृत्तिरपि स्यादिति वाच्यम्।

सामग्र्यां लाघवार्थं ऐकरूप्यसंपादनार्थं च प्रवृत्तौ निवृत्तौ उभयत्रापि भेदाग्रहस्यैव हेतुत्वम्। परन्तु इष्टभेदाग्रहः प्रवृत्तिहेतुः अनिष्टभेदाग्रहः निवृत्तिकारणमित्येवं व्यवस्था स्वीक्रियते। इत्थं च अनिष्टस्य अरजतस्य भेदस्य अर्थात् रजतत्वरूपधर्मस्य ज्ञानाभावादेव निवृत्तिः न तु रजताभेदाग्रहात् इति प्रकृते शुक्तौ इदं रजतमिति भ्रमज्ञानस्थलेऽपि रजतार्थिवः कदाचिदरजतान्निवृत्तिः अनिष्टारजतभेदाग्रहादेव वक्तव्येति सर्वत्र भेदाग्रहेणैव भ्रान्तिव्यवहारस्योपपन्नत्वेन नात्र अन्यथाख्यातिः सिद्ध्यतीति।

नन्वेवं अन्यथाख्यात्यनभ्युपगमे तदा रजतादौ प्रवृत्त्यनुपपत्तिः। लोके पुरुषस्य इष्टे इष्टसाधने वा इदमिष्टमिति ज्ञानपूर्वकमेव इच्छया प्रवृत्तिदर्शनात् पुरोवर्ति शुक्तिशकलं यदि इष्टतावच्छेदकरजतत्वरूपेण न ज्ञायेत तदा प्रवृत्तिर्न तस्मात्। धीप्रवृत्त्योस्समानविषयकत्वात्, अतः प्रवृत्त्यनुरोधेन रजततया शुक्तिज्ञानमावश्यकम्। अतश्च विमतं शुक्तिशकलं–रजतज्ञानविषयः रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वादित्यनुमानेन अन्यथाख्यातिसिद्ध्यतीति चेन्न। प्रवृत्तेः स्वविषयबुद्धिपूर्वकत्वनियमाभावेन उपदर्शितहेतोर्व्यभिचारात्। तथा हि कश्चित् रत्नप्रभायां रत्नमिति बुद्ध्या भ्रमेण प्रसारितहस्तः तत्र स्थितं पूर्वमज्ञातं रत्नमुपादत्ते। तत्र रत्नार्थिप्रवृत्तिविषयभूतं रत्नं न पूर्वतने रत्नत्वप्रकारके ज्ञाने विशेष्यं, रत्नप्रभायाएव तत्र विशेष्यत्वात्। एवं च रत्नमित्याकारकज्ञानीयरत्ननिष्ठविशेष्यताख्यविषयत्वरूपसाध्याऽभाववति रत्नप्रभायां-रत्नार्थिप्रवृत्तिविषयत्वरूपहेतोस्सत्वेन व्यभिचारः। अतो ज्ञानविषयत्वाभावेऽपि प्रवृत्तिविषयत्वदर्शनात् ज्ञानविषयस्यैव प्रवृत्तिविषयत्वमिति नियमो नोपपद्यत इति भावः।

न च रत्नप्रभायामपि तेजस्त्वेन सामान्याकारेण प्रवृत्तिविषयभूतं रत्नमपि विषय एव, अतो न व्यभिचार इति वाच्यम्। क्षीरानुषक्ततोयतृणादौ व्यभिचारात्। अयमर्थः। कस्यचित् क्षीरमिष्टं भवति। अतस्तज्ज्ञात्वा तदुपादत्ते। तत्र क्षीरानुषक्तं तोयतृणादिकमप्युपात्तं भवति। तच्च तोयतृणादिकं पूर्वं क्षीरज्ञानवेलायां सामान्यरूपेणापि न ज्ञातं, तत्र व्यभिचार इति। एवं च सामान्यरूपेणाप्यविदितस्य यदि प्रवृत्तिविषयत्वं भवति तदा इदन्त्वेन विदितस्य रजतत्वेनाविदितस्यापि प्रवृत्तिविषयत्वस्य कैमुत्यसिद्धत्वेन नात्र धीप्रवृत्त्योस्समानविषयकत्वोपपत्त्यर्थमन्यथाख्यातिः स्वीकर्तव्येति भावः।

## अनिर्वचनीयख्यातिः

अद्वैतवेदान्तिनस्तु शुक्ति दृष्ट्वा 'इदं रजत'मित्यादिज्ञानं यत्र भवति तत्र सदसदनिर्वचनीयरजतस्यैवोत्पत्तेः तादृशरजतविषयकत्वेन ख्यातेः अनिवर्चनीयख्यातिरितिव्यपदेशः। अतश्च भ्रमे सदसदनिर्वचनीयं वस्तु भासते इति वदन्ति। परं तु यत्र आरोप्यं न संनिहितं तत्रैव इन्द्रियसंनिकर्षाभावात् अन्यत्र स्थितस्य वस्तुनः अन्यत्रख्यातिरूपा अन्यथाख्यातिर्न भवति, यत्र तु आरोप्यं सन्निहितं यथा स्फटिकमणौ जपाकुसुमलौहित्यारोपस्तत्र अन्यथाख्यातिरेवाद्वैतिनामपीष्टा। तथा चारोप्यस्य असन्निधानस्थले अनिर्वचनीयं वस्तु प्रतीयत इति सिद्धान्तः।

## तत्परिशीलनम्

अत्रेदं चिन्त्यते। यदि रजतमिति ज्ञानकाले अनिर्वचनीयरजतमुत्पद्यत इत्युच्येत तदा तत्र वस्तुतः अनिवर्चनीयस्य रजतस्य उत्पन्नत्वेन सत्यत्वापत्त्या तादृशभ्रमज्ञानोत्तरकालीनस्य 'नेदं रजत' मिति बाधज्ञानस्य अप्रमाण्यापत्तिः। एवं वस्तुतोऽनिर्वचनीयरजतस्य जातत्वेन इदं रजतमिति ज्ञानस्य वा प्रमात्वापत्तिः, ततश्च न भ्रमत्वम्। परं तु अत्र (भ्रमस्थले) नेदं रजतमिति बाधज्ञानस्यैव प्रामाण्यं सर्वैरप्यनुभूयते।

न च 'नेदं रजत' मिति ज्ञाने वस्तुतो रजतजातीयस्य न निषेधः, किन्तु अङ्गुलीयादिकार्यक्षमस्य रजतजातीयस्यैवेति न तादृशज्ञानस्य अनिर्वचनीयरजते अप्रमात्वापत्तिरिति वाच्यम्। तथा सति अल्पपरिमाणे परमार्थरजतेऽपि अंगुलीयादिकार्याक्षमत्वस्य सत्त्वात् तत्रापि "न रजत" मिति बाधज्ञानापत्तिरित्यतिप्रसङ्गः।

किञ्च इदं अनिर्वचनीयरजतं केनचिद्धेतुना जन्यत इति वक्तव्यम्, अहेतुकत्वे लोकायतमतप्रसङ्गात् यद्यत्र अविद्यायाः कारणत्वं तदा अविद्यायाः अनादित्वेन सर्वदा सत्त्वेन 'इदं रजतमिति' भ्रमात्पूर्वमेव कुतः न जनयेत् अनिर्वचनीयरजतं, विनिगमनाविरहात्।

न च अविद्यायाः अनादित्वेऽपि चक्षुरिन्द्रियादेरपि तत्र सहकारिकारणतया पूर्वं सहकारिकारणाभावात् नोत्पत्यापत्तिरनिर्वचनीयरजतस्येति वाच्यम्। ज्ञानोत्पत्तावेव अक्षादेः कारणत्वं न तु घटादिविषयोत्पत्ताविति सहकारिकारणाभावप्रयुक्तः अनिर्वचनीयरजतोत्पत्यभाव इति वक्तुं न शक्यते। यतः इन्द्रिय–तद्दोषादेः ज्ञानहेतुत्वमेव दृष्टं न तु अर्थहेतुत्वमिति।

न च तदातनरजतज्ञानमेव अनिर्वचनीयरजतोत्पत्तिसहकारिकारणमिति वाच्यम् । रजतख्यातेरेव रजतरूपविषयजन्यत्वेन ज्ञानस्य विषयोत्पत्तिसहकारिकारणत्वासम्भवात् ।

इत्थं च अनिर्वचनीयरजतोत्पत्तौ सामग्रयाः दुर्निरूपत्वात् "नेदं रजत" मिति ज्ञानस्य अप्रमात्वापत्त्या च तदुत्पत्तिरसम्भवदुक्तिकैवेति नात्र अनिर्वचनीयख्यातिस्सिद्धयतीति निगूडाभिसन्धिः ।

### असत्ख्यातिः, तन्निराकरणं च

न सन्नासन् न सदसत् न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

इत्यादिना ग्रन्थेन शून्यमेव तत्त्वमिति प्रत्यपादयन् माध्यमिकाः । घटपटादिविषयाः केऽपि न सन्ति तथा तत्तद्विषयकसंविदपि नास्ति असतः रजतादेरेव विषयीकरणात् असत्ख्यातिरिति व्यवहारश्चेति माध्यमिकाः । अथवा ज्ञाने भासमानानां धर्माणां धर्मिणां सर्वेषामप्यसत्त्वात् असत्ख्यातिरिति ।

न चात्र असतः कथं विषयत्वमित्याशङ्कनीयम् । विषयत्वं हि न कारणत्वं येनासति न स्यात् । किन्तु स्वकारणाधीनः ज्ञानगतः सामर्थ्यातिशयो विषयत्वम् । स च सन्तमिव असन्तमपि गोचरयति । तथा च असद्विषयकप्रतीतिरेव भ्रमइत्याशयः ।

अत्रेदमाकूतम् । योऽयं घटपटादिपदार्थः अस्तीति भवता उच्यते स च सन् वा ? असन् वा ? नाद्यः । बाधानुपपत्तेः घटादेः कदाचित् भूतले घटो नास्तीति प्रतीत्या बाधदर्शनात् सर्वदा सर्वत्र विद्यमानस्यैव सदितिपदवाच्यत्वेन तदनुपपत्तेः ।

न द्वितीयः ज्ञानविषयत्वानुपपत्तेः अज्ञायमानस्यैव असदिति व्यवहारदर्शनात् । अथ एकस्मिन्नेव सत्त्वासत्त्वसमुच्चयस्य संभवेन सदसदात्मकं सदसदुभयशून्यं वा स्यादिति चेत्—न । सत्वासत्त्वयोरेकत्र विरुद्धत्वेन समुच्चयासंभवात् न सदसदात्मकम् । एवं उभयशून्यत्वपक्षोऽपि न युज्यते सच्छून्यत्वस्य असत्वे पर्यवसानात् असच्छून्यत्वस्य च सत्वे पर्यवसानाच्च उक्तरीत्या सत्वासत्त्वयोरेकत्र स्थितेरयोगेन व्याघातादिदोषस्य दुष्परिहरत्वात् ।

तस्मात् अत्र सद्भिन्नत्व-असद्भिन्नत्व-सदसदात्मकत्व-सदसदुभयशून्यत्वरूप-

चतुष्कोटिविनिर्मुक्तं शून्यमेव तत्त्वमिति माध्यमिकानां पक्षे (सर्वत्र) ख्यातेः असद्विषयकत्वेन असत्ख्यातिस्सिद्ध्यतीत्यभिप्रायः।

अत्रेदं विचार्यते। जगति विद्यमानं सर्वं सत्यं वा? असत्यं वा? सत्यं चेत् भवदीयागमस्यापि (बुद्धागमस्यापि) सत्यत्वेन सर्वं शून्यमिति असत्यार्थप्रतिपादकत्वविरोधः। भवदीयागमस्यापि सत्यत्वेन तत्प्रतिपादितार्थस्य असत्यत्वासंभवात्। न द्वितीयः। असत्यत्वे सर्वस्याप्यस्तित्वं वदतः पक्षस्यापि असत्यत्वेन परपक्षदूषणानुपपत्तेः। एवं सर्वस्यापि सत्यत्वे स्वोक्तिव्याघातश्च भवद्भिः असत्यत्वस्यैवोक्तत्वात्। यद्यत्र व्याघातदोषस्यापि असत्यत्वेन नानुपपत्तिरित्युच्येत-तदा जैनोक्तसप्तभङ्गीनिषेधोऽपि नोपपद्यते तस्या अपि व्याघातादिदूषणेनैव दूषितत्वात् व्याघातदोषासत्यत्वे तस्यासंभवात्।

न च तुच्छशब्देन अलोकशब्देन च शून्यत्वरूपार्थस्य प्रतिपादनात् तद्दृष्टान्तेन प्रपञ्चेऽपि यः शब्दार्थः स तुच्छः इति व्याप्त्या शून्यत्वसिद्धिरिति वाच्यम्। अन्यत्र विद्यमानस्यैव पदार्थस्य पदार्थविशेषवृत्तित्वाभावस्य तुच्छशब्दवाच्यत्वम् न तु कुत्राप्यसतः। यथा शृंगस्य गवादौ सत्वेऽपि शशवृत्तित्वाभावेन शशशृङ्गस्य तुच्छत्वव्यवहारात्। तथा शुक्तिरजतभ्रमस्थलेऽपि वस्तुतः शुक्तौ रजतत्वाभावेन तत्र रजतत्वेन प्रतीत्या स्वाभावाधिकरणे स्वस्य अध्यस्तत्वेन शुक्तिवृत्तित्वं रजतत्वस्यालीकमिति व्यपदिश्यते। न तु स्वाधिकरणेऽपि देशे तस्यालीकत्वव्यवहारः। इत्थं च जगति विद्यमानस्य पदार्थस्य असत्वासिद्ध्या नात्र असदर्थविषयकतया असत्ख्यातिः निर्वोढुं शक्यत इति भावः।

### आत्मख्यातिः तन्निरासश्च

बौद्धेषु योगाचाराः ज्ञानमेवास्ति न तु ज्ञेयं ज्ञानव्यतिरिक्तं बाह्यं वस्तु। अतश्च ज्ञानस्यैव आत्मत्वाभ्युपगात् ज्ञानख्यातिरेवाऽऽत्मख्यातिरित्युच्यते। ज्ञानाकारातिरिक्तनीलपीतादिबाह्याकारस्वीकारात्, सर्वख्यातिरपि ज्ञानख्यातिरेवेति तस्याः एव आत्मख्यातित्वमिति ब्रुवन्ति।

इदं मतं न युक्तम्। इदं जानामीति बोधे धात्वर्थबुद्धेः कर्मरूपतया इदंत्वेन भातं श्वेतपीतादिवस्तुजातं ज्ञानतत्त्वात् बाह्यतया भिन्नमेव भवितुमर्हति न तु ज्ञानस्यैवाकारत्वेन ज्ञानरूपत्वं ज्ञानस्य विषयग्राहकत्वेन विषयस्य च ज्ञानग्राह्यत्वेन ग्राह्यग्राहकयोरभेदानुपपत्तेः। तस्मात् ज्ञानाकारात्मकं न भवति किन्तु ततोऽन्यदेव।

न च सेयं दीपज्वालेति ज्वालैक्यप्रत्यक्षे सत्यपि ज्वालाभेदानुमानवत् श्वेतपीतादिकं बाह्यं ज्ञानाभिन्नं सहोपलम्भनियमात् विषयेण सहैव ज्ञानोपलम्भात् इत्यनुमानेन ज्ञानतादात्म्यं विषयस्य सिद्ध्यतीति वाच्यम् । ज्ञानस्य स्वयंप्रकाशत्वादेव विषयग्रहणकाले ज्ञानस्यापि उपलंभसिद्धेः सहोपलंभरूपहेतोः अन्यथासिद्धत्वेनाप्रयोजकत्वात् ।

किञ्च सहोपलंभनियमहेतुघटकसाहित्यस्य द्वित्वाविनाभावात् भेदसाधकत्वमेव वक्तुं शक्यते न तु अभेदसाधकत्वम् ।

एवं ग्राह्यग्रहणयोरभेदाङ्गीकारे भवत्पक्षे घटादेः अर्थस्यासत्यत्वेन तादृशमिथ्याभूतार्थविषयकज्ञाने सति ज्ञानस्यापि मिथ्यात्वापत्तिः । अथवा ज्ञानस्य सत्यत्वेन तदभिन्नत्वेन मिथ्याभूतार्थस्य वा सत्यत्वप्रसङ्गः । इत्थं च बाह्यस्य नीलादेः ज्ञानाकारत्वायोगात् तादृशज्ञानातिरिक्तत्वसिद्ध्या आत्मख्यातिर्न संभवतीति भावः ।

### विशिष्टाद्वैत्यभिमतख्यातिनिरूपणम्

"तत्रामाने त्ववर्ज्यं स्वरसमिति वदन्त्यन्यथाभानमेके ।
तत्सामग्र्यैव तादृग्व्यवहृतिमपरे लाघवादाश्रयन्ति" ॥

इत्यादिना ग्रन्थेन नैयायिकोक्तान्यथाख्यातौ स्वारस्यं प्राभाकरोक्ताख्यातौ लाघवं च प्रतिपाद्य मतद्वयप्रदर्शनपुरस्सरं "नाथैरुक्ता यथार्थे" त्यादिना श्लोकेन विशिष्टाद्वैतिमते सर्वस्यापि यथार्थत्वेन यथार्थख्यातिमुपापादयन् श्रीमद्वेदान्तदेशिकाः ।

अत्रायमाशयः ज्ञानं द्विविधं प्रमा अप्रमा चेति । तत्र अप्रमात्मके ज्ञाने अन्यस्यान्यथाभानाख्या अन्यथाख्यातिरवर्जनीया स्वरसा च—"शुक्ति रजततया वेद्मी" त्याद्यनुभवबलादिति नैयायिकाः । प्राभाकरास्तु—इदमिति पुरोवर्तिवस्त्वनुभवः रजतमिति स्मरणमिति ज्ञानद्वयेनैव पुरोवर्तिवस्तु रजतयोः भेदाग्रहसहितेन व्यवहारस्य निर्वाहे "इदं रजत" मिति विशिष्टज्ञानकल्पनं मुधा, गौरवादिति वदन्ति ।

न्यायतत्त्वाख्ये ग्रन्थे भ्रान्त्यधिकरणसिद्धान्ते नाथमुनिभिः "षष्ठी चेयं ख्यातिः यथार्थख्याति" रित्यादिना ग्रन्थेन शुक्तिरजतादि बुद्धिः यथार्थेति निरधार्यत ।

तदेतत् श्रीभाष्ये "यथार्थं सर्वविज्ञानं इति वेदविदां मतम्" इति भाष्यकारैरभ्यधायि अतश्च यथार्थख्यातिरेवेति विशिष्टाद्वैतिनामभिप्रायः ।

न च सर्वस्यापि ज्ञानस्य यथार्थत्वे इदं ज्ञानं प्रमा इदं ज्ञानमप्रमेति प्रमाप्रमाव्यवस्था न संभवतीति वाच्यम् । बाध्यव्यवहारहेतुर्ज्ञानमप्रमा अबाध्यव्यवहारहेतु-

र्शानं प्रमेति व्यवस्थोपपत्तेः। शुक्ताविदं रजतमिति ज्ञानानन्तरप्रवृत्तिः बाध्या, विफला भवति तस्मात्तज्ज्ञानमप्रमेत्युच्यते नत्वयथार्थत्वात्। रजते रजतज्ञानानन्तरप्रवृत्तिः अबाध्या, सफला भवति-तस्मात्तज्ज्ञानं प्रमेत्युच्यते। एवं च सर्वेषां ज्ञानानां यथार्थत्वात् तज्जन्यप्रवृत्तिसाफल्यवैफल्याभ्यां प्रमात्वाप्रमात्वव्यवहारः। यथार्थख्यातिर्नाम विद्यमानस्यैव वस्तुनः प्रतीतिः। शुक्तिरजतादिभ्रमस्थलेऽपि शुक्तौ रजतावयवाः वर्तन्ते। तत्र वर्तमानानां रजतावयवानां "इदं रजत" मिति ज्ञानं भवतीति कृत्वा इयं यथार्थख्यातिरित्युच्यते। तत्र रजतभागसद्भावे "पृथिवीमय आपोमयो वायुमयः आकाशमयस्तेजोमयोऽतेजोमयः काममयः" इति बृहदारण्यकश्रुत्युक्तरीत्या "नाना-वीर्याः पृथग्भूताः ततस्ते संहतिं विना" इति विष्णुपुराणोक्तरीत्या च पञ्चीकरणप्रक्रिया, प्रतिनिधिन्याय इति न्यायद्वयं प्रमाणत्वेन प्रदर्शितं श्रीभाष्ये। पञ्चीकरणमित्यस्य एकैकभूतं पञ्चभूतमयं क्रियत इत्यर्थः। इत्थं च पञ्चीकरणप्रक्रियानुसारं सर्वेषु पञ्चसु-भूतेषु पञ्चानामपि भूतानां भागाः सन्ति, तेन च सर्वत्र सर्वावयवास्सन्ति।

न च घटादेः केवलपार्थिवत्वेन व्यवहारानुपपत्तिः तत्रापि पञ्चानामपि भूता-वयवानां सत्त्वादिति वाच्यम्। भूतान्तरावयवस्य तत्र अल्पत्वेन पृथिवीभागस्य अधिक-त्वेन च पार्थिवव्यवहारोपपत्तेः। तदुक्तम्—"वैशेष्यात्तु तद्वादस्तद्वादः" इति। एवं मुख्यद्रव्यालाभे तत्सदृशवस्त्वन्तरग्रहणं प्रतिनिधिः यथा सोमाभावे पूतीकग्रहणम्। तेन च पूतीकेषु सोमावयवसद्भावोऽवगम्यते। अन्यथा पूतीकस्यैव ग्रहणमिति नियमो नोपपद्येतेति शास्त्रदीपिकादौ न्यरूपि। अतश्च तेनैव न्यायेन प्रकृते शुक्तावपि रजत-भागाः सन्ति इति निश्चीयते। परन्तु शुक्तिभागाः अधिकाः रजतभागाः स्वल्पाः। दोषवशात् अदृष्टवशाच्च शुक्तिभागानामग्रहणं रजतभागानां ग्रहणम्। तत्र भूते भूता-न्तरभ्रमे पञ्चीकरणन्यायः—यथा मरीचिकायां जलभ्रमे। सदृशे सदृशवस्त्वन्तरभ्रमे तु प्रतिनिधिन्यायः—यथा शुक्तिरजतादिभ्रम इति केचित्। अन्ये तु शुक्तिरजतादि-भ्रमेऽपि पञ्चीकरणन्यायेनैव यथार्थत्वं प्रतिपादयन्ति।

एवं स्वप्नेऽपि तात्कालिकतत्पुरुषमात्रानुभाव्यतया रथादेः भगवता सृष्टिः क्रियत-इति स्वप्नदृष्टार्थस्यापि सत्यत्वेन यथार्थत्वम्।

न च शुक्तिरजतादिभ्रमस्थले पंचीकरणप्रक्रियया विषयस्य सत्यत्वोपपादने भ्रमत्वव्यवहारानुपपत्तिरिति वाच्यम्। भेदाग्रहरूपाऽख्यात्यैवोपपत्तेः।

अत्रेदं तत्त्वम् ।

शुक्ताविदं रजतमिति भ्रमस्थले अनुभवस्मरणात्मकज्ञानद्वयं अनुभूयमानस्मर्यमाणयोः अनुभवस्मरणयोश्चभेदाग्रह इत्यत एव व्यवहारो निर्वहतीति प्राभाकराः। तादृशज्ञानद्वयातिरिक्ततया इदं रजतमित्याकारकं विशिष्टज्ञानमस्ति तत् अन्यथाख्यातिरूपमिति नैयायिकाः। तदेव यथार्थख्यातिरूपमिति विशिष्टाद्वैतिनः । परं तु विशिष्टाद्वैतिमते प्राभाकरवत् इदं रजतयोः भेदाग्रहो नोच्यते। किन्तु अयोग्ये योग्यभेदाग्रहः योग्ये अयोग्यभेदाग्रहश्च। यथा शुक्तौ रजतभ्रमस्थले शुक्तौ विद्यमानः रजतभागः अङ्गुलीयकाद्यनर्हः अर्थात् अङ्गुलीयकार्हात् भिन्नः। अतस्तत्र अंगुलीयकयोग्यरजतभेदो न गृह्यत इति अयोग्ये योग्यभेदाग्रहः। तत एव प्रवृत्तिः वितथा भवति । रजते शुक्तिभ्रमस्थले तु अंगुलीयकयोग्ये रजते तदनर्हभेदाग्रहो द्रष्टव्यः। तथा च एतादृशाख्यातिसहितत्वात् यथार्थख्यातेः इयम् अख्यातिसंवलितयथार्थख्यातिरिति व्यपदिश्यते ।

यद्यपि प्राभाकरा अपि सर्वज्ञानयाथार्थ्यवादिनः—

"यथार्थं सर्वमेवेदं विज्ञानमिति सिद्धये।
प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते" ॥ इति ।

प्रकरणपञ्चिकायां शालिकनाथेनाऽभिधानात्। तथापि तन्मते इदमित्यनुभवात्मकं ज्ञानमिति यथार्थं, रजतमिति स्मरणात्मकं ज्ञानमपि यथार्थमिति यथार्थत्वं निरुह्यते। विशिष्टाद्वैतिमते तु नात्र ज्ञानद्वयम्—किन्तु इदं रजतमित्येकमेव ज्ञानम्। तच्च विद्यमानरजतभागग्रहणरूपतया यथार्थमिति निरुह्यत इति सूक्ष्मदृष्ट्या द्वयोर्मतयोः भेदो ज्ञेयः।

अत्रेदमपरं विचार्यते। भूतेषु भौतिकेषु वा पदार्थेषु लोकप्रसिद्धभ्रमस्थले पंचीकरणप्रक्रियया वा प्रतिनिधिन्यायेन वा यथार्थत्वमुपपद्यतां नाम । सावयवपदार्थेषु निरवयव पदार्थभ्रमस्थले कथं यथार्थख्यातिर्युज्यते ? यथा देहात्मभ्रमस्थले। तत्र हि शरीरे आत्मावयवसद्भावात् आत्मभ्रम इति वक्तुं न शक्यते । आत्मनो नित्यत्वेन निरवयत्वादिति चेत्—अत्र ब्रूमः। तादृशस्थले अगत्या भेदाग्रहरूपाख्यात्या अन्यथाख्यात्या वा निर्वाहस्य स्वीकारात्।

न च "मनो ब्रह्मेत्युपासीत" इत्यादिप्रतीकोपासनविधिस्थले अब्रह्मणि मनसि ब्रह्मदृष्ट्या अनुसंधानस्यैव प्रतीकोपासनपदवाच्यत्वेन तस्य अन्यस्मिन् अन्यथाभानरूपतया अन्यथाख्यातित्वमेव स्यात् न ह्यत्र ब्रह्मावयवः मनसि पंचीकरणन्यायेन प्रति-

निधिन्यायेन वा अस्तीति वक्तुं शक्यम्, ब्रह्मणो नित्यत्वात् एवं च यथार्थख्यातिरनुपपन्नैवेति वाच्यम्। उक्तस्थलेऽपि अख्यात्या अन्यथाख्यात्या वा निर्वाहस्येष्यमाणत्वात्।

न च मनः ब्रह्मापेक्षया भिन्नमिति सत्येव भेदग्रहे—"मनो ब्रह्मेत्युपासीते"ति शास्त्रबलात् उपासनस्य क्रियमाणत्वात् तत्र भेदग्रहस्यैव सत्त्वेन भेदाग्रहरूपा अख्यातिर्न संभवतीति अख्यात्या निर्वाहोऽनुपपन्न इति वाच्यम्। आहार्यारोपस्थल इव अख्यातेर्निर्वाह्यत्वात्।

तथा हि भ्रमो नाम इच्छाविरहविशिष्टभेदज्ञानाभावविशिष्टज्ञानद्वयम्। ईदृशभेदाग्रह एव आहार्यारोपस्थलसाधारणः। शुक्तिरजतभ्रमस्थले इच्छाविरहरूपविशेषणसत्त्वेऽपि भेदज्ञानरूपविशेष्याभावात् विशिष्टाभावोऽस्तीति इच्छाविरहविशिष्ट भेदज्ञानाभावविशिष्टज्ञानद्वयरूपभेदाग्रहः। "शुक्तौ रजतं मे भूयात्" इति आहार्यारोपस्थले इच्छाया एव सत्त्वात् तादृशेच्छाविरहविशिष्टभेदज्ञानस्याऽभावात् विशिष्टाभावरूपभेदाग्रहो युज्यते। प्रतीकोपासनस्थलेऽपि मनसः ब्रह्मणश्च भेदज्ञाने सत्यपि शास्त्रबलात् "मनसि ब्रह्मोपासनं मे भूयात्" इतीच्छायास्सत्त्वात् तद्विरहरूपविशेषणाभावात् विशिष्टा भावः उपपद्यते। ततश्च तत्रापि उपदर्शितरीत्या भेदाग्रहस्याबाधितत्वेन अख्यात्या निर्वाहः सङ्गच्छते। तथात्रोक्तम्—अधिकरणसारावल्याम् निगमान्तमहादेशिकैः—

"अन्यस्मिन्नन्यदृष्टेर्विधिरिह घटतामन्यथाख्यातिपक्षे।
यथार्थं सर्वबोधानुगतमिति मते युज्यते नान्यदृष्टिः॥
तन्मात्राद्ये हि न स्यात् विमतिरविमता भ्रान्तिनीतिः परस्मिन्।
तादृग्भेदाग्रहोपप्लुतमतियुगलस्थापनायां नियोगात्"॥ इति।

नन्वेवं "संदिग्धे न्यायः प्रवर्तते" इति शास्त्रज्ञव्यवहारानुसारेण संशयात्मकस्यैकधर्मिविशेष्यक विरुद्धकोटिद्वयस्यासंभवान्न संशयज्ञानस्य यथार्थत्वं सङ्गच्छते किन्तु तस्य अन्यथाख्यातित्वमेवेति चेन्न।

तद्वत्ताज्ञानस्य तदभाववत्ताज्ञानस्य च परस्परं बाधकत्वेन एककाले तदुभयविषयकज्ञानस्यासंभवेन विशिष्टज्ञानानुपपत्त्या अयं स्थाणुर्वा पुरुषो वेति संशये अयमिति पुरोवर्तिमात्रमगृहीतविशेषणमनुभूयते स्थाणुपुरुषयोस्तु स्मरणमेवेति ज्ञानद्वयाभ्युपगमेन अख्यात्यैव निर्वाहात्।

एवं च ऊर्ध्वत्वादिसाधारणधर्मवत्ताज्ञानादिरूपसंशयज्ञानसामग्र्यैव अयं स्थाणुर्वा पुरुषो वेति व्यवहारोपपत्तेः न तदतिरक्तं संशयज्ञानं स्वीकर्तव्यमिति।

तथा चैतत् सिद्धं यत् विशिष्टाद्वैतिनां मते सर्वत्र भ्रमेषु यथार्थख्यातिर्वक्तुं न शक्यते। किन्तु भूतभौतिकपदार्थेषु परस्परभ्रमस्थल एव। देहात्मभ्रम—प्रतीकोपासनादि-स्थले तु अन्यथा ख्यातिर्वा शरणम् इति।

एतावता प्रबन्धेन मतभेदेन बुद्धितत्त्वं न्यरूपि। अथ रामानुजमते प्रमाणानि कति अङ्गीक्रियन्ते इति विचार्यते।

### प्रमाणसंख्याविचारः

"प्रत्यक्षादित्रिकं यत् पृथगभिदधता भाष्यकारेण शेषं।
नैव क्षिप्तं न चोपस्कृतमिह न ततः स्यात् तदाधिक्यसिद्धिः"॥

इत्यादिश्लोकेन श्रीमन्निगमान्तमहादेशिकाः विशिष्टाद्वैतसिद्धान्ते प्रमाणानि त्रीण्येवेति प्रत्यपादयन्। अयमाशयः। प्रत्यक्षानुमानशब्दाः त्रीणि प्रमाणानि भाष्य-कारेण श्रीभाष्यादिग्रन्थेषु कण्ठतः प्रतिपादितानि न तु उपमानार्थापत्त्यनुपलब्ध्यादीनि तस्मात् विशिष्टाद्वैतिनां मते त्रीण्येव प्रमाणानि इति।

विशिष्टाद्वैतसिद्धान्त्येकदेशिनस्तु भाष्यकारेण प्रमाणत्रिकव्यतिरिक्तार्थापत्त्यादि-प्रमाणविषये आत्मनः सम्मतिर्वा असम्मतिर्वा कुत्रापि न प्रादर्शि। प्रत्युत श्रीभाष्ये— "योग्यानुपलब्ध्यैवाभावः समर्थित इत्युपशाम्यतु भवान्" इत्यादिग्रन्थेन सामान्यतः प्रस्तावस्यैव दर्शनात् प्रमाणपञ्चकमपि सिद्ध्यतीति ब्रुवन्ति। "योग्यानुपलब्ध्यैवे" त्यादिभाष्यग्रन्थस्य परमतानुवादकत्वात् स्वमते तात्पर्याभावान्न तेन प्रमाणाधिक्यं वक्तुं शक्यते। तस्मात् रामानुजमतसयूथ्यानां प्रमाणाधिकगणना अन्वारुह्यवादेनैव निर्वोढव्या न तु तत्र परमतात्पर्येणेति त्रीण्येव प्रमाणानीति देशिकचरणानामभिप्रायः। अतः भाष्यकारेण अर्थापत्त्यादेः प्रमाणत्वं न युक्तमिति क्षेपस्य, अर्थापत्तिरपि प्रमाण-मिति स्वीकृतेर्वा कुत्रापि नोक्तत्वादिति। तथाचेतत्सिद्धं यत् रामानुजमते प्रत्यक्षानुमान-शब्दभेदेन त्रीण्येव प्रमाणानीति।

अथ क्रमप्राप्तत्वात् प्रत्यक्षे विशेषः निरूप्यते।

### निर्विकल्पकविचारः

प्रत्यक्षे सविकल्पकनिर्विकल्पकयोः स्वरूपविषये नैयायिकमतापेक्षया विशिष्टाद्वैतिनां मते वैलक्षण्यस्य दर्शनात् तदधिकृत्य प्रस्तूयते।

निष्प्रकारकं ज्ञानमतीन्द्रियं निर्विकल्पकपदवाच्यमिति नैयायिकाः। इदमित्थ-

मित्येवं विशिष्टविषयकत्वेनैव सर्वेषां प्रतीतेर्जायमानतया सप्रकारकमेव ज्ञानं निर्विकल्पकं । तच्च अनुवृत्ताकारत्वविशिष्टप्रकारशून्यत्वे सति विशिष्टविषयकमेवेति ब्रुवन्ति रामानुजाचार्याः ।

अत्रेदं विचार्यते । निर्विकल्पकज्ञानस्य निष्प्रकारकत्वे किं प्रत्यक्षं प्रमाणं ? उत अनुमानं वा ? नाद्यः, पण्डितपामरसाधारण्येन सर्वेषामेव प्रप्रथमं ( प्रथमाक्षसंनिपातसमनन्तरं ) इदमित्थम् ( इयं गौः ) इत्यादिरीत्या गोत्वादिविशिष्टविषयकत्वेनैव अनुभवान्नात्र प्रत्यक्षेण निष्प्रकारकत्वं (अविशिष्टविषयकत्वं) वक्तुं शक्यते ।

किं च भवद्भिरेव निर्विकल्पकज्ञानस्य अतीन्द्रियत्वोपगमात् न प्रत्यक्षेण तस्य सिद्धिः संभवति । न द्वितीयः । विशिष्टज्ञानं-विशेषणज्ञानपूर्वकं—विशिष्टज्ञानत्वात् सुरभि चन्दनमिति ज्ञानवत् इत्यनुमानेन—गोत्वप्रकारकविशिष्टप्रत्यक्षे (सविकल्पके) विशेषणज्ञानस्य कारणत्वेन विशेषणपदवाच्यगोत्वज्ञानमेव वैशिष्ट्याविषयकं निर्विकल्पकमित्यर्थात्सिद्ध्यतीति वक्तव्यम् । तच्च न घटते । उपदर्शितानुमाने भिन्नसामग्रीवेद्यत्वस्योपाधित्वात् । यत्र विशेषणं-विशेष्यं च भिन्नसामग्रीवेद्यं तत्रैव विशिष्टज्ञानं-विशेषणज्ञानपूर्वकं दृष्टं यथा सुरभि चन्दनमितिविशिष्टप्रत्यक्षम् । तत्र हि विशेषणं सौरभं घ्राणेन्द्रियवेद्यं–विशेष्यं चन्दनं चक्षुर्वेद्यमिति भिन्नसामग्रीवेद्यत्वात् आदौ सौरभरूपविशेषणज्ञानं तेन च सुरभिचन्दनमिति विशिष्टप्रत्यक्षं भवति । एकेन्द्रिययोग्ययोर्गोगोत्वयोरेककाले विशिष्टज्ञानसंभवात् आदौ गोत्वज्ञानं ततः गोत्वविशिष्टव्यक्तिज्ञानमिति कल्पनं न युज्यते । एवं च सुरभिचन्दनमित्यादिविशिष्टज्ञानमादाय भिन्नसामग्रीवेद्यत्वरूपोपाधेः साध्यव्यापकत्वं निर्विकल्पकरूपपक्ष द्वारा साधनाव्यापकत्वं च बोध्यम् ।

ननु एकचक्षुर्वेद्ययोरपि दण्डतद्वतोर्विषये कदाचित् आदौ दण्डरूपविशेषणज्ञानं ततो दण्डी पुरुष इति–विशिष्टज्ञानं चोत्पद्यत इति दृष्टम् । तद्वत् गौरिति विशिष्टप्रत्यक्षमप्यस्त्विति चेन्न । तत्रापि सामग्रीप्रवाहवशात् प्रथमं प्रत्येकग्रहणसामग्रीप्रवृत्तिः ततः विशिष्टग्रहणं स्वसामग्रीवशादिति विशेषणज्ञानस्याकारणत्वात् । विशेषणज्ञानानन्तर्यमात्रस्य कारणत्वनिश्चायकत्वाभावात् । युगपत् योग्यैकेन्द्रियसंबद्धानां विशेषणविशेष्यतत्संबन्धानां युगपद्विशिष्टप्रत्ययस्य विशेषणज्ञानं विनाप्युत्पत्त्या व्यतिरेकव्यभिचारेण विशेषणज्ञानस्य विशिष्टबुद्धिं प्रति कारणत्वाभावात् । इत्थं च विशेषणज्ञानकारणत्वेन निर्विकल्पकसिद्धिर्दुर्वचैवेति भावः ।

न च निर्विकल्पकेऽपि जातिगुणादिविशेषणानां भानोपगमे सविकल्पकनिर्विकल्पकयोः वैलक्षण्यानुपपत्तिः तत्रापि ( सविकल्पकेऽपि ) जात्यादीनां भानात् । किञ्च निर्गतो विकल्पः प्रकारः ( विशेषणं ) यस्मिन्निति व्युत्पत्त्या प्रकारतासामान्याभावस्यैव निर्विकल्पकपदवाच्यत्वप्रतीतेः तत्रापि प्रकारतादीनां भानोपगमे निर्विकल्पकशब्दार्थस्याआधापयनुपपत्तिः। अतोऽत्र नैयायिकोक्तं निष्प्रकारकं ज्ञानमेव निर्विकल्पकपदवाच्यमिति वाच्यम्। निर्विकल्पकशब्दस्य प्रकारसामान्यशून्यमिति नार्थः। तत्र विकल्पशब्दः अनुवृत्ताकारत्वविशिष्टप्रकारपरः। तथा च निर्विकल्पकमित्यस्य अनुवृत्ताकारत्वविशिष्टप्रकारशून्यमित्यर्थः। यथा अल्पधनेऽपि पुरुषे धनाभाववद्वाचो दरिद्रशब्दः प्रयुज्यमानः विवक्षितबहुधनाभावे पर्यवस्यति–तद्वत् । अतोऽत्र न शब्दार्थानुपपत्तिः ।

एवं संस्कारासहकृतेन्द्रियजन्यं ज्ञानं निर्विकल्पकं, संस्कारसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकमित्युभयोर्लक्षणकथनाच्च न वैलक्षण्यानुपपत्तिः । तथा चोक्तं तत्त्वमुक्ताकलापे सर्वार्थसिद्धौ च—

"तस्मात्संस्कारशून्येन्द्रिय जनितमतिर्निर्विकल्पेति वाच्या" इति

"कथं तस्य निर्विकल्पकशब्दवाच्यत्वं अल्पधने दरिद्रव्यवहारवत्" इति

एवञ्चेतत्सिद्धं यत् विशिष्टाद्वैतिनां मते न निष्प्रकारकं ज्ञानं निर्विकल्पकं अपि तु अनुवृत्ताकारत्वविशिष्ट प्रकारताशून्यज्ञानमेव। तच्च विशिष्टविषयकमिति ।

## अनुमानवेद्य योगिप्रत्यक्षनिरासः

"धर्मादयः कस्यचित् प्रत्यक्षाः सत्त्वात्" इत्याद्यनुमानेन अदृष्टादेः अस्मद्दृश्यत्वासंभवेन तादृशसाक्षात्कर्तृत्वेन विलक्षणज्ञानादिमन्तः योगिनः अवश्यं स्वीकर्तव्या इति सर्वेषामेवार्थानां योगिप्रत्यक्षविषयत्वोपपादनपूर्वकं योगिप्रत्यक्षं साधयन्ति केचित् । तत्रेदं विचार्यते ।

उपदर्शितानुमाने सत्त्वरूपहेतुरस्तु प्रत्यक्षत्वरूपसाध्यं मास्त्वित्येवमप्रयोजकशंकायां विपक्षे बाधको वक्तव्यः स च न घटते—तथाविधानुकूलतर्कस्याऽभावात् ।

न च "सर्वं ह पश्यः पश्यति" "सदा पश्यन्ति सूरयः" इत्यादिश्रुतिभिः धर्मादीनामपि दृश्यत्वप्रतिपादनात् तस्य तेषामपि अप्रत्यक्षत्वे तादृशश्रुतिबाधापत्त्या श्रुतिबाध एव प्रकृते विपक्षे बाधकतर्कः स च यद्यत्र धर्मादीनामप्रत्यक्षत्वं तदा "सर्वं ह पश्यति" इत्यादिश्रुतिबाध इत्येवंरूप इति वाच्यम्। तथा सति अस्माभिः

(साधारणपुरुषैः) अननुभूयमानस्य धर्मादिदृश्यत्वस्य सिद्धौ श्रुतेरेव प्रमाणत्वेन (शरणीकरणीयतया) श्रुत्या अनुमानस्याऽन्यथासिद्धत्वेन अनुमानेन योगिप्रत्यक्षत्वं दुरुपपादमेव स्यात्। किञ्च प्रत्यक्ष इति साध्यपदेन चक्षुरिन्द्रियजन्यज्ञानरूपं लौकिकं चेद्विवक्ष्यते तदा अनुभवविरोधः लोके धर्मादौ कस्यापि पुरुषस्य चक्षुरिन्द्रियजन्य-प्रत्यक्ष (लौकिकप्रत्यक्षविषत्व)ादर्शनात्। एवं साध्यत्वे ईश्वरप्रत्यक्षत्वस्याप्युपादातुं शक्यत्वेन तस्य नित्यत्वेन तत्र इन्द्रियजन्यत्वादिघटितसाध्यस्याऽभावेन सत्वरूपहेतोः सत्त्वाच्च व्यभिचारः स्यात्।

न च वृक्षे वृक्षे च पश्यामीत्यादिरामायणवाक्येन मारीचादेः भावनया रामादिसाक्षात्कारस्य प्रतिपादितत्वात् भावनोत्थमेव लौकिकं प्रत्यक्षं योगिप्रत्यक्ष-पदवाच्यमिति वाच्यम्। मारीचादेः भयादिनिमित्तकतयैव पश्यामीति व्यवहारात् वस्तुतः तत्र चक्षुरिन्द्रियजन्यत्वाभावेन साक्षात्कारात्मकज्ञानस्यायथार्थत्वात्।

न च योगिनां मनसः प्रकृष्टशक्तिमत्त्वेन दूरस्थितवस्तुनोऽपि ग्रहणसंभवात् सर्वग्राहित्वं युज्यत इति योगिमानसप्रत्यक्षसिद्धिरिति वाच्यम्। उपाध्यभावे मनसोऽपि सर्वविषयग्राहित्वानुपपत्तेः। अन्यथा इन्द्रियाणां प्रतिनियतस्वस्वविषयानतिक्रम्य स्व (इन्द्रिय) शक्तेरुपगमे धर्मादयः चाक्षुषा इतिवत् स्पार्शना इत्यप्यनुमानप्रयोगा—पत्तेरिति भावः।

ननु सर्पाः चक्षुषैव श्रवणादीनि कुर्वन्ति, काकोऽपि दूरस्थं पश्यति, आलोकं विनाप्यन्धकारे उलूको निरीक्षते। अतस्सर्वमपि इन्द्रियं स्वस्वविषयानतिक्रम्यापि सर्वार्थग्रहणसमर्थमेवेति चेन्न। काकादीनां—दूरस्थवस्तुग्रहणशक्तेः स्वस्वविषयानतिलं-घनेनैव दर्शनात्। न हि काकः चक्षुषा रसं गृह्णाति न वा उलूकः चक्षुषा जिघ्रति, अतश्च चक्षुषः रूप-रूपि-तदेकार्थसमवायिमात्रग्रहणनियमान्न स्वविषयमुल्लंघ्य इन्द्रियेण भिन्नविषयाः गृह्यन्ते।

एवं सर्पादिजन्तुविशेषे श्रवणेन्द्रियस्य चक्षुरिन्द्रियस्य चैकस्थानवर्तित्वेन इन्द्रिय-द्वयेन प्रतिनियतविषयग्रहणेऽपि एकेन्द्रियेणैव गृह्यत इव भ्रमो भवति, न वस्तुतः। इत्थं च तत्तदिन्द्रियाणां प्रतिनियततत्तद्विषयग्राहित्वमेव न तु सर्वविषयग्राहित्व-मिति।

न च इन्द्रियाणां प्रतिनियतविषयग्राहित्वे पूर्वाचार्यैः भगवतो वरदराजस्य विषये—

"त्वक् च दृक् च निपिपासति जिह्वा विह्वला श्रवणवत्परिवृत्तौ" इत्यादि-श्लोकेन त्वगिन्द्रियं चक्षुरिन्द्रियं च रसनेन्द्रियकार्यं रसभूतत्वत्पानं कर्तुमिच्छतीत्यर्थस्य वर्णितत्वात् तत्र इन्द्रियव्यापारानियमः कथं संगच्छत इति वाच्यम्। तादृशस्थले भक्तिविशेषातिशयद्योतनायैव तथा प्रयोगस्य करणान्न तस्य मुख्यत्वं किन्त्वौपचारिकत्वमेवेत्यदोषात्।

एवं च योगिप्रत्यक्षस्य प्रामाणिकत्वे तस्य श्रुत्यैव सिद्धिर्वक्तव्या न पुनरनुमानेन तस्य दुर्निरूपत्वात्। तदुक्तं–सर्वार्थसिद्धौ—

"यथौपनिषदस्त्वीशो नानुमानेन सिद्धयति"
तथा योगी च शास्त्रेण केवलेन प्रसिद्धयतु" ॥ इति।

**अनुमानस्य प्रत्यक्षातिरिक्तत्वस्थापनम्**

अथ प्रत्यक्ष एव अनुमानस्य अन्तर्भावसंभवात् असुमानस्य पृथक् प्रामाण्यं न संभवतीति आशंक्य निराक्रियते। तथा हि प्रत्यक्षं तावत् संयोग-संयुक्त-समवायादि-विविधसंनिकर्षैर्भवतीति नैयायिकानां सिद्धान्तः, तत्र चक्षुषः घटेन सह संयोग-सत्त्वात् संयोगरूपसंनिकर्षेण घटप्रत्यक्षं भवति, एवं घटनिष्ठरूपे संयोगाभावेऽपि चक्षुस्संयुक्तघटेन सह समवायरूपसम्बन्धसत्त्वात् प्रत्यक्षत्वं यथोपपद्यते, तद्वदेव पर्वतोऽग्निमान् धूमादित्यनुमितिस्थलेऽपि धूमेन सह चक्षुरिन्द्रियस्य संयोगस्य सद्भावेन तादृशचक्षुस्संयुक्तधूमव्यापकत्वस्य च अग्नौ विद्यमानत्वेन चक्षुस्संयुक्तव्यापकत्वाख्य-संबन्धस्यैव संनिकर्षत्वेन वक्तुं शक्यतया तादृशसंनिकर्षेण अग्नेः प्रत्यक्षत्वस्यैव संभवात् पार्थक्येन पर्वते अग्निज्ञानार्थमनुमानप्रमाणाभ्युपगमः व्यर्थ एव स्यादिति नात्र अनुमानस्य प्रत्यक्षात् बहिर्भावो युज्यते।

न च अग्निज्ञानस्य प्रत्यक्षत्वे सर्वेषां पुरुषाणां (अग्निधूमव्याप्तिज्ञानविधुराणामपि) स्वरूपतः चक्षुस्संयुक्तव्यापकत्वरूपसंनिकर्षस्य निराबाधतया अविशेषेण धूमदर्शनमात्रेण अग्निज्ञानापत्तिरिति वाच्यम्। चक्षुस्संयुक्तव्यापकत्वरूपसंनिकर्षे अग्निधूमव्याप्तिज्ञानस्य सहकारिकारणभावेन धूमदर्शनमात्रेण अग्निप्रत्यक्षापत्तेरसंभवात्। इत्थं च व्याप्तिज्ञानसहकृतचक्षुस्संयुक्तव्यापकत्वरूपसंनिकर्षेणैव अग्नेः प्रत्यक्षत्वसंभवेन अग्निज्ञानार्थं प्रत्यक्षातिरिक्तं अनुमानप्रमाणं नाङ्गीकर्तव्यमिति चेत्। अत्रोच्यते। धूमवान् पर्वत इति शब्दप्रयोगानन्तरं यस्य धूमज्ञानं जन्यते तत्र

शाब्दधूमज्ञानेनाऽपि अग्निज्ञानोदयात् तादृशस्थले अग्नौ चक्षुस्संयुक्तव्यापकत्वरूप-संनिकर्षस्याऽभावेन इन्द्रियस्य निर्व्यापारत्वेन तस्य प्रत्यक्षत्वानुपपत्तेः। एवं स्मरणा-त्मकधूमलिङ्गज्ञानेनाऽपि अग्निज्ञानदर्शनात्—तत्रापि संनिकर्षाप्रसक्तेर्नाग्निप्रत्यक्ष-त्वमुपपद्यते।

किंच अग्न्यादिज्ञानं प्रति इन्द्रियं न साक्षात् करणं किन्तु धूमादिज्ञान एव, धूमेनैव साकं इन्द्रियस्य साक्षात्संसर्गसत्त्वात्, अतः वह्न्यादिज्ञानं न प्रत्यक्षप्रमाणकं अपि तु धूमादिज्ञानमेवेति नात्र प्रत्यक्षेण अग्निसिद्धिः वक्तुं शक्यते।

न च धूमादिज्ञानस्य अवान्तरव्यापारत्वसंभवेन, तद्द्वारा इन्द्रियं वह्न्यादि-ज्ञानं जनयतीति अग्न्यादिज्ञानस्य प्रत्यक्षत्वमेवेति वाच्यम्।

यद्धि यज्जनयित्वैव यज्जनयति तस्य तत्र तदवान्तरव्यापारत्वमित्यवान्तर-व्यापारलक्षणस्य कथितत्वात् प्रकृते इन्द्रियार्थसंनिकर्षजन्यधूमादिज्ञानमन्तरेणाऽपि-स्मृत्यारूढैः श्रुतैर्वा लिंगैः अग्निज्ञानदर्शनात् धूमादिज्ञानस्य अवान्तरव्यापारत्वासंभवात्। अत्रायं भावः। घटोत्पत्तौ दण्डः कारणं चक्रभ्रमणं च अवान्तरव्यापार इति व्यवह्रियते। तत्र भ्रमणरूपमवान्तरव्यापारमुत्पादयित्वैव दण्डेन घटोत्पत्तेर्दर्शनात् भ्रमणाद्यवान्तर-व्यापारकत्वं दण्डस्य युज्यते, इह तु धूमादिज्ञानमन्तरेणापि प्रत्यक्षेण वह्न्यादेः द्रष्टुं शक्यत्वेन धूमादिज्ञानं जनयित्वैव वह्न्यादिज्ञानं जनयतीति नियमस्य वक्तुमशक्यत्वेन नात्र चक्षुरिन्द्रियस्य वह्न्यादिप्रत्यक्षे धूमादिज्ञानमवान्तरव्यापारः। अतोऽनुमानादेव अग्न्यादिसाध्यसिद्धिर्वक्तव्येति तदर्थमनुमानप्रमाणं पृथगेव स्वीकर्तव्यमिति। एवं मनसः प्रत्यक्षे तद्व्यतिरिक्ते सर्वत्र शाब्दादिज्ञानसामान्ये कारणत्वेन तदिन्द्रियजन्यत्व-मात्रेण अग्न्यादिज्ञानस्य मानसप्रत्यक्षे अन्तर्भावोऽपि दुर्वचः, तस्मात् प्रत्यक्षबहिर्भूत-मेव अनुमानमिति।

नन्वेवमपि अग्निमान् इत्यनुमितिः यदा धूमचक्षुःसन्निकर्षोऽस्ति तदा प्रत्यक्षे-अन्तर्भवतु उपदर्शितरीत्या चक्षुस्संयुक्तव्यापकत्वरूपसंनिकर्षस्याऽबाधात्। अथवा महान-सादिदृष्टान्ते अग्निधूमयोः व्याप्तेः गृहीतत्वात् तादृशव्याप्तिसंस्काराधीनतया पर्वते धूमदर्शनमात्रेण उत्पन्ना अग्निमानिति मतिः स्मृतिरूपा वाऽस्तु न तु तदुभयातिरिक्त-मनुमानमिति चेन्न। साध्यस्य पर्वतरूपपक्षधर्मत्वप्रतीतिः नेन्द्रियात् भवितुमर्हति पर्वते

अग्निना सह चक्षुषः साक्षात् संतिकर्षाभावात्। तथा महानसादिदृष्टान्त एव अग्नि-धूमयोः साहचर्यानुभवसत्त्वात् तादृशानुभवजनितसंस्कारेण महानसोऽग्निमान् इत्याकारक स्मरणात्मकज्ञानमेव उत्पत्तुमर्हति न तु पर्वतो वह्निमान् इत्येवं साध्यस्य पक्षधर्मत्वज्ञानम्।

एवं अग्निव्याप्यधूमवानयं पर्वतः इत्याकारकोपनयेनापि न पर्वते अग्निज्ञानं स्मरणात्मकं भवितुमर्हति तथा पूर्वमनुभवाभावात्। तस्मादत्र संस्कारेण अक्षेण वा प्रत्यक्षस्मरणरूपज्ञानयोः दुर्वचत्वेन साध्यस्य पक्षवृत्तित्वज्ञानार्थं पृथगेव अनुमानप्रमाण मवश्यमभ्युपगन्तव्यमिति निष्कर्षः।

केवलव्यतिरेक्यनुमाननिरासः

तच्च अनुमानं अन्वयव्यतिरेकिलिंगकं केवलान्वयिलिङ्गकं केवलव्यतिरेकिलिङ्गकं चेति त्रिविधमभ्युपगच्छन्ति नैयायिकाः। भगवद्रामानुजानुयायिनस्तु केवलव्यतिरेकि-लिङ्गकस्थले अनुमानात् प्राक् साध्यस्य ज्ञानासंभवेन प्रतियोगिज्ञानाभावे अभाव-ज्ञानानुत्पत्त्या साध्याभावहेत्वभावयोर्व्यतिरेकव्याप्ति र्न संगच्छते। अत एव च केवल-व्यतिरेकिलिङ्गकानुमानं नाङ्गीक्रियत इत्याचक्षते। अयमाशयः। केवलव्यतिरेकिलिङ्ग-कानुमानस्थले अनुमितेः प्राक् कुत्रापि साध्यप्रसिद्धिः अस्ति? न वा? अस्ति चेत् कुत्र? पक्षे-सपक्षे विपक्षे वा? न तावत् पक्षे साध्यस्य ज्ञानं संभवति, संदिग्धसाध्य-वत्त्वस्यैव पक्षत्वात् संशयात्मकसाध्यज्ञानस्य च व्याप्त्यप्रयोजकत्वात्।

किंच पक्षे अनुमितेः प्राक् निर्णयात्मक साध्यज्ञानोपगमे सिद्धसाधनं दोषस्स्यात् पूर्वतः सिद्धस्यैव साधनात्।

नापि पक्षेतरस्मिन् सपक्षे साध्यज्ञानं संभवति तथा सति अन्वयव्याप्तेरेव वक्तुं शक्यतया हेतोः केवलव्यतिरेकित्वव्यवहारोऽनुपपन्नस्स्यात्। निश्चितसाध्यवत्त्वस्यैव सपक्षशब्दार्थतया तत्रैव हेतुसाध्ययोः सामानाधिकरण्यग्रहसंभवात्।

न च विपक्षे साध्यज्ञानमस्तीति साम्प्रतं, तथात्वे व्याघातः, साध्याभाववत्त्व-स्यैव विपक्षत्वात्। एवं च पक्षेऽन्यत्रापि अनुमितेः पूर्वं साध्यज्ञानाभावेन साध्यहेत्वोः तदभावौ प्रति प्रतियोगित्वेन प्रतियोगिज्ञानाभावे च साध्याभावहेत्वभावयोः व्याप्ति-ज्ञानस्यापि दुर्वचतया न केवलव्यतिरेकिलिङ्गकानुमानं युज्यत इति।

ननु पृथिवी इतरभिन्नेत्याद्यभावसाध्यककेवलव्यतिरेकिस्थले अनुमितेः प्राक् साध्याप्रसिद्ध्या प्रतियोग्यप्रसिद्धेः तत्र व्यतिरेकव्याप्तेः दुर्वचत्वेऽपि[1] शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् इति परिशेषानुमानेन आकाशसाधनस्थले शब्दः द्रव्याश्रितः गुणत्वादिति सामान्यानुमानेन गुणत्वस्य द्रव्याश्रितत्वस्य च अन्वयव्याप्तेः परिशेषानुमितेः प्रागेव सिद्धत्वेन अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसाध्ये द्रव्याश्रितत्वस्याऽपि घटकतया तस्य च पूर्वत एव ज्ञानसंभवेन प्रतियोगिज्ञानस्य सुवचत्वेन प्रकृते साध्याभावहेत्वभावयोर्व्यतिरेकव्याप्तिस्सुवचैव। व्यतिरेकव्याप्तिश्च यत्र यत्र अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वाभावः तत्र तत्र तदनाश्रितत्वे सति द्रव्याश्रितत्वादिरूपहेत्वभाव इत्येवंरूपा सिद्ध्यतीति चेन्न। गुणत्वरूपसामान्यहेतुना यत्किञ्चित्द्रव्याश्रितत्वरूपसामान्यसाध्यस्यैव साधनात् अष्टद्रव्यातिरिक्तद्रव्यरूपविशेषणविशिष्टद्रव्याश्रितत्वरूपविशेषसाध्यज्ञानानुपपत्तेः। सामान्यस्य विशेषं प्रत्यसाधकत्वात्। एवं च अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसाध्यं प्रति अष्टद्रव्यानाश्रितत्वघटितद्रव्याश्रितत्वरूपविशेष एव हेतुरिति वक्तव्यः, तथा सति तादृशविशेषहेतुना सह अष्टद्रव्यातिरिक्तेत्यादिविशेषसाध्यस्य इतः पूर्वमप्रसिद्ध्या अन्वयव्याप्तेरभावेन प्रतियोगिज्ञानाप्रसिद्ध्या अभावज्ञानासंभव इति पूर्वोक्तदोषः अपरिहार्य एव स्यात् — साध्यस्य पूर्वं अविदितत्वे तेन सह व्याप्तेरयोगात्।

न च वह्निसामान्येन धूमसामान्यस्य व्याप्तौ गृहीतायां यथा पक्षधर्मताबलात् पक्षे पर्वतीयवह्निरूपविशेषसिद्धिः तथा सामान्यव्याप्तिविशिष्टगुणत्वरूपसामान्यहेतुज्ञानादेव शब्दरूपपक्षधर्मताबलात् अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वरूपविशेषलाभो भवत्ये-

---

१. न्यायग्रन्थे—शब्दः किञ्चिदाश्रितः गुणत्वादित्यनुमानेन आदौ गुणत्वहेतुना सामान्यतः द्रव्यसमवेतत्वं प्रसाध्य तदनु शब्दः न स्पर्शवतां पृथिव्यप्तेजोवायूनां गुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् इत्यनुमानेन पृथिव्यादिचतुर्णां द्रव्याणां गुणो न भवति शब्द इत्यभ्यधायि। ततः शब्दः न दिक्कालमनसां गुणः विशेषगुणत्वात् इति, शब्दः नात्मविशेषगुणः बहिरिन्द्रिययोग्यत्वादिति च अनुमानद्वयेन आत्मदिक्कालमनोगुणत्वं न्यषेधि। तस्मात् पृथिव्याद्यष्टद्रव्याणां शब्दं प्रत्यनाश्रयत्वे सिद्धे शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः इति परिशेषानुमानेन आकाशमात्रद्रव्याश्रितत्वं शब्दस्य एष्टव्यम् ततश्च शब्दाश्रयतया आकाशसिद्धिर्निष्प्रत्यूहेत्युपावर्णि। अयमर्थोऽनुसन्धेयः।

वेति वाच्यम् । तथात्वेऽपि शब्दः आकाश एवास्ति नत्वन्यत्रेति अधिकरणनियमो दुर्घट-एव स्यात् पृथिव्यादिव्यावर्तन इव आकाशव्यावर्तनेऽपि हेतुसद्भावाविशेषात् ।

न च परिशेषानुमानमेव अधिकरणनियामकमिति युक्तम्, परिशेषस्य अन्यथाऽपि वक्तुं शक्यत्वात् । अत्रेदमवधेयम् । यद्यत्र स्वेच्छया इतरपरिशेषः उच्येत तदा परेच्छया वस्त्वन्तरपरिशेषोऽपि सुवचः, विनिगमनाविरहात् । यथा दिक्कालमनस्सु ( द्रव्येषु ) सामान्यगुणस्यैव सत्वेन विशेषगुणत्वहेतुना न शब्दः दिक्कालमनसां गुणः, विशेषगुणत्वादित्यनुमानेन तद्व्यावृत्तिः क्रियते तथैव भवद्भिः आत्मनो विभुत्वोपगमात् तन्निष्ठज्ञानादिषु गुणेषु मनोरूपे ( अन्तरि )न्द्रियमात्र-ग्राह्यत्वेन श्रोत्रेन्द्रिय ग्राह्यत्वस्याभावात् श्रोत्रेन्द्रियग्राह्यत्वहेतुकेन शब्दः न विभूनां गुणः श्रोत्रेन्द्रियग्राह्यत्वादित्यनुमानेन आकाशरूपविभुगुणत्वमपि बाध्येत । अत्र च यत्र यत्र विभुगुणत्वाभावाभावः ( विभुगुणत्वं ) तत्र तत्र श्रोत्रेन्द्रियग्राह्यत्वाभावः यथा आत्मनिष्ठज्ञानादि इत्येवं व्याप्तिर्बोध्या । न च शब्दान्तर्भावेण विभुगुणत्वं साधयितुं शक्यम् तस्य पक्षत्वेन अनुमितेः प्राक् तत्र संदिग्धत्वात् । इत्थं च परिशेषस्य विनिगम-कत्वासंभवात् परिशेषानुमानेन आकाश एव शब्दाधिकरणमिति नियमनानुपपत्त्या नात्र केवलव्यतिरेकिहेतोरनुमापकत्वं सिद्ध्यतीति भावः ।

अथ पृथिवी इतरभिन्ना गन्धवत्त्वात् इति अभावसाध्यक केवलव्यतिरेकिस्थले अनुमितेः पूर्वं इतरभेदरूपसाध्यज्ञानाभावेऽपि भेदाभावस्य प्रतियोगितावच्छेदक-स्वरूपत्वोपगमात् इतरभेदाभावरूपसाध्याभावस्य इतरत्वरूपतया ( भावात्मकतया ) तस्य च अनुमितेः पूर्वं प्रसिद्धेस्सत्त्वेन इतरभेदाभावरूपमितरत्वं यत्र जलादौ तत्र गन्धाभाव इति रीत्या केवलव्यतिरेकव्याप्तिस्सिद्ध्यत्येवेति चेन्न । साध्यविपरीतत्वेन गृहीतस्य पदार्थस्य व्याप्ते रेवव्यतिरेक व्याप्तिशब्देनाभिधानात् वस्तुतः इतरभेदाभावस्य इतरत्वरूपत्वेऽपि तस्य इतरभेदरूपसाध्यविपरीताकारत्वेनाग्रहणात्तादृशप्रसिद्धेः प्रकृतानु-पयुक्तत्वात् ।

अयं भावः । इतरभेदाभावरूप साध्यव्यतिरेकस्य भावरूपत्वेऽपि व्यतिरेक-व्याप्तिकथनावस्थायां साध्याभावरूपतया कथनमवश्यम्भावि । यत् इतरस्मान्न भिद्यते तत् गन्धादिमन्न भवतीति हि व्यतिरेकव्याप्तिकथनम् । अन्यथा इतरभेदरूपसाध्य-विपरीतत्वाभावे व्यतिरेकव्यवहारानुपपत्तिः । तथा च भावरूपत्वे अभावरूपत्वे च

व्यतिरेकस्य साध्यविरोधित्वेन ग्रहणावश्यम्भावात् अनुमितेः पूर्वं इतरभेदरूपसाध्य-प्रसिद्धेरभावेन तद्विरोधित्वेन इतरभेदाभावस्य ग्रहणासंभवात् नात्र हेतोः केवलव्यति-रेकित्वं, अन्वयाऽपरिज्ञाने व्यतिरेकपरिज्ञानस्याप्यशक्यत्वात्।

एवं चेतत्सिद्धं—यत् सर्वत्र अन्वयव्यतिरेकाभ्यामर्थतत्त्वनिर्णयात् हेतौ अन्वय-व्यतिरेकौ सर्वप्रधानौ, सर्वमभिधेयं प्रमेयत्वात् इत्यादौ अनुकूलतर्कसहकारेण अप्रयोजकत्वशंकायाः दूरोत्सारितत्वात् केवलान्वय्यपि हेतुः स्वीक्रियते। साध्यहेत्वोः व्याप्यव्यापकभावं निश्चित्य पश्चादेव व्यापकाभावात् व्याप्याभाव इति न्यायेन साध्याभावव्यापकीभूताभावप्रतियोगी हेतुरिति व्यतिरेकव्याप्तेर्वक्तव्यतया केवल-व्यतिरेकिस्थले साध्यस्य पूर्वमज्ञानात् व्यतिरेकव्याप्तेर्दुर्ग्रहत्वेन नात्र केवल व्यतिरेकित्वं लिंगस्य युज्यते, अत एव तस्य असाधकत्वमिति भावः।

ननु गौः इतरभिन्ना सास्नादिमत्त्वात्, पृथिवी इतरभिन्ना गन्धवत्त्वात् इत्येवं केवलव्यतिरेक्यनुमानानभ्युपगमे गन्धवत्त्वलक्षणेन पृथिव्यां जलादिभेदसाधनं, गवि सास्नादिमत्त्वलक्षणेन अश्वादिभेदसाधन च अशक्यमेव स्यात्। न चेष्टापत्तिः। तथा सति गव्येव अयं गौरिति व्यवहारः नत्वश्वे इति नियामकस्य वक्तुमशक्यतया पदार्थानां परस्परमविलक्षणत्वापत्तिः। अयमाशयः। "व्यावृत्तिः व्यवहारो वा लक्षणस्य प्रयोजनमित्यभियुक्तवचनानुसारं लक्षणकार्यस्य इतरभेदस्य (व्यावृत्तिरूपप्रयोजनस्य) अनभ्युपगमे लक्षणस्याप्यकल्पनीयत्वापत्त्या सर्वं वस्तु मिथो विलक्षणत्वेनागृहीतं स्यात् इति केवलव्यतिरेक्यनुमानमवश्यं स्वीकर्तव्यमिति। अत्रेदं समाधानं वर्णयन्ति।

लक्षणस्यैव भेदत्वेन तद्व्यतिरिक्तस्य तस्य दुर्वचतया लक्षणप्रतीतिवेलायामेव भेदप्रतीतेरपि संभवेन सर्ववस्तूनां परस्परं विलक्षणत्वज्ञानोपपत्तेः। अत्रेदं चिन्तनीयम्।

विरुद्धधर्माध्यासो हि भेदः यथा घटे विद्यमानपटभेदो नाम पटत्वविरुद्धघटत्वरूप-धर्माऽध्यास एव नत्वन्यः। एवं पृथिवीत्वजातेः जलत्वजातिविरुद्धतया पृथिवीत्वजाति-मत्व—जलत्वजातिमत्त्वादिलक्षणानां तथा सास्नादिमत्त्व—गन्धवत्त्वादिलक्षणानां च परस्परविरुद्धतया लक्षणान्यपि विरुद्धधर्मा एव भवन्तीति भेदलक्षणयोर्न भिन्नत्वम्। तस्मात् लक्षणेन साध्यस्य कस्याप्यभावेन नात्र केवलव्यतिरेक्यनुमानस्यावश्यकत्वम्।

न च गन्धवतो पृथिवी, सास्नादिमती गौः गन्धवत्त्वं पृथिव्याः लक्षणमित्येवं-जातीयकस्य वाक्यस्यैव लक्षणत्वेन नात्र लक्षणस्य भेदस्य च ऐक्यं संभवतीति वाच्यम् ।

लक्ष्यते विशेष्यते (व्यावर्त्यते) अनेन व्यक्तिरिति लक्षणशब्दव्युत्पत्त्या भेद एव लक्षणशब्दस्य मुख्यार्थः। उपदर्शितवाक्ये लक्षणव्यवहारस्तु औपचारिक इति न काप्यनुपपत्तिः भेदलक्षणयोरभेदे। अथवा भेदानुमापकमेव लक्षणं न तु भेदः इति स्वीकारेऽपि इतरभेदः अन्वयव्याप्त्यैव साध्यते। अन्वयव्याप्तिश्च पृथिव्येकदेशे घटादौ संभवत्येव—तत्र प्रत्यक्षेणैव अनादिभेदस्य दर्शनात्। इत्थं च घटादिदृष्टान्तेन तदितरस्मिन् आज्यादौ जलत्वसंशये सत्यपि जलादीतरभेदसाधनस्य सुशकत्वेन अन्वयिनः हेतोरेव इतरभेदानुमापकत्वसंभवेन तदर्थं केवलव्यतिरेकिहेतोरभ्युपगमो न युज्यत इति भावः।

अथ व्यावृत्तिः व्यवहारो वा लक्षणस्य प्रयोजनमिति यदभिहितं तदपि न संगच्छते। तथा हि—पृथिवी इतरभिन्ना गन्धवत्त्वादित्यत्र गन्धवत्त्वरूपलक्षणहेतुना पृथिवीसामान्ये इतरभेदः साध्यते ? अथ पृथिव्येकदेशे घटादावेव वा ? घटादौ जलादिभेदस्य प्रत्यक्षेणैव सिद्धेः तस्यैव पुनस्साधने सिद्धसाधनं स्यात्।

अथ घटादौ प्रत्येकं जलादिभेदस्य प्रत्यक्षसिद्धत्वेऽपि परमाण्वादिसकलपार्थिव-वस्तुषु युगपत् जलादिभेदस्यानुमितेः प्रागसिद्धतया न सिद्धसाधनावसर इति कृत्स्नक्षोण्या-मेव इतरभेदः साध्यत इति न दोष इत्युच्येत तदा पक्षाप्रसिद्धिः। अयं भावः—प्रसिद्ध-एव पक्षे साध्यं साधयितुं शक्यते न त्वप्रसिद्धे। प्रसिद्धिश्च पक्षस्य सपक्षविपक्षाभ्यां व्यावृत्तत्वेन, तथा च सर्वापि पृथिवी इतरभेदाभावरूपसाध्याभाववद्विपक्षभिन्नतया अनुमितेः प्रागेव प्रसिद्धा चेत् अनुमेयं नावशिष्यते, व्यावृत्तेरेवानुमेयत्वात्।

यद्यत्र कृत्स्नाऽपि पृथिवी विपक्षव्यावृत्तत्वेन अप्रसिद्धा चेत् तदा अनुमान-प्रवृत्त्यनुपपत्तिः। न हि पक्षप्रतीतिमन्तरेण अनुमानं प्रवर्तते। तस्मात् गन्धवत्त्वादि-लक्षणं प्रति पृथिवीसामान्ये इतरभेदरूपव्यावृत्त्यादेः प्रयोजनत्वसंभवेन व्यावृत्तिः व्यवहारो वा लक्षणस्य प्रयोजनमित्यभियुक्तवचनस्य अन्वयव्याप्तिमूलकत्वेनैव सार्थकत्वं वक्तव्यं न तु केवलव्यतिरेकव्याप्तिमूलकत्वेनेति निगूढाभिसन्धिः।

## मोक्षविचारः

अथ वेदान्तशास्त्रे प्रधानतया प्रतिपाद्यं मोक्षस्वरूपमधिकृत्य विचार्यते। सर्वैरपि दार्शनिकैः मोक्षपदार्थः अंगीक्रियते, परं तु प्रतिदर्शनं भिन्नभिन्नरीत्या तत्र तत्र मोक्षस्वरूपं निरूपितम्। इह ग्रन्थगौरवभिया रामानुजाचार्याणां मते मोक्षः कः? के च तत्र विशेषा इत्येतावन्मात्रं प्रस्तूयते।

श्रीभाष्ये अत्राधिकरणे "त्र्य्यन्तनिष्णातास्तु निखिलजगदेककारणस्य अशेषहेयप्रत्यनीकानन्त ज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासंख्येय-कल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परब्रह्मणश्शरीरतया प्रकारभूतस्य अनुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादि कर्मरूपाविद्यातिरोहितस्वरूपस्य अविद्योच्छेदपूर्वकं स्वाभाविकपरमात्मानुभवो मोक्ष" इति ग्रन्थेन विशिष्टाद्वैतवेदान्त्यभिमतमोक्षस्वरूपमुपवर्णयामासुः श्रीभगवद्रामा-नुजाचार्याः। उपदर्शितवाक्यसमुदायेन जीवानामपहतपाप्मत्वादिस्वस्वरूपाविर्भाव-पूर्वकपरिपूर्णब्रह्मानुभवो मोक्ष इति फलितोऽर्थो भवति।

### उक्तार्थे कतिपयशङ्कासमाधानम्

मोक्षे विष्णुशेषाः जीवाः भगवत्कैङ्कर्यैकनिरता इत्येवं भवद्भिरभ्युपगमात् कैङ्कर्यस्य मानस वाचिक कायिकरूपत्रिविधसेवारूपतया सेवायाश्च लोके दुःखोत्पाद-कत्वेनैव दर्शनात् मुक्तानां सेवाकाले निरतिशयसुखानन्दमयपरिपूर्णब्रह्मानुभवस्य, परमात्मसेवा-दुःखकरी सेवात्वात् स्वामिभृत्यसेवावदित्यनुमानेन बाधितत्वात् तस्य मोक्षरूपत्वं न संभवतीति चेत् अत्र ब्रूमः। "रसो वै सः" रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" आनन्दं ब्रह्मणो रूपं तच्च मोक्षेऽभिव्यज्यते" निरस्तातिशयाह्लाद सुखभावैक-लक्षणं, भेषजं भगवत्प्राप्तिः एकान्तात्यन्तिको मता" इत्यादिश्रुतिस्मृतिभिः वैकुण्ठे भगवत्स्वरूपस्य तत्सेवायाश्च आनन्दरूपत्वेनैव प्रतिपादनात् तादृशधर्मिग्राहकश्रुत्या दुःखकृत्त्वरूपसाध्यस्य बाधः।

एवं परमात्मसेवा दुःखकरी, त्याद्यनुमाने पापघटितत्वमुपाधिः। संसार्यवस्थायां जीवकृतसेवायाः दुःखकृत्त्वे पापघटितत्वस्यैव प्रयोजकतया मुक्तावस्थायां विधूतपापत्वेन तत्कालीनपरमात्मसेवायाः न दुःखकारित्वम्। अतोऽत्र पक्षभूतपरमात्मसेवायां सेवा-त्वस्य सत्त्वेऽपि पापघटितत्वरूपोपाधेरसत्वेन साधनाऽव्यापकत्वं बद्धावस्थजीवसेवायां साध्यव्यापकत्वं चोपाधेरक्षुण्णमिति सोपाधिकत्वादपि नोपदर्शितानुमानेन दुःखकृत्त्वं साधयितुं शक्यते। अत्रेदमनुसन्धेयम्—

लोके पुंसां प्रवृत्तिः आत्माभिमानानुगुणपुरुषार्थमुद्दिश्यैव दृश्यते। तत्र देहात्माभिमानिनां देहपोषणादौ प्रवृत्तिः। पशु-पक्षि-नर-सुराणां स्वदेहाभिमानानुगुणं आहारादौ प्रवृत्तिः। देहातिरिक्तात्मविवेके सति ऐहिकं विहाय यथारुचि स्वर्गादौ प्रवृत्तिः तथा विष्णुशेषत्वमेव स्वरूपमिति विवेके सति पतिशेषत्वविवेकिन्याः पत्न्याः पतिपरिचर्यायामिव विष्णुपरिचर्यायामेव प्रवृत्तिरुत्साहपूर्विका भवतीति भगवत्परिचर्यायाः सुखस्वरूपत्वं युज्यत इति भगवत्कैङ्कर्यपर्यन्तपरिपूर्णब्रह्मानुभवस्य मोक्षत्वं सिद्ध्यति।

## परिपूर्णब्रह्मानुभवस्य दुःखमिश्रितत्व शंकानिरासः

ननु मुक्तस्य सर्वज्ञत्वेन दुःखविषयकबुद्धेरपि सत्त्वात् तस्यापि दुःखित्वापत्तिः, बद्धस्यापि विषयविशेषसंदर्शने दुःखदर्शनेन अबुद्धिपूर्वकदुःखोत्पत्त्यसंभवात्। नचानुकूलसुखमात्रविषया मुक्तधीरिति युक्तं, तथा सति मुक्तावस्थायां "सर्वं ह पश्यः पश्यतो" त्यादिश्रुतेः अनुकूलसुखमात्रदर्शनविषयकत्वेन संकोचापत्तेः। अतो मुक्तस्य सर्वज्ञत्वेन दुःखविषयकबुद्धिसत्त्वे दुःखित्वापत्त्या मोक्षे दुःखमिश्रित एव ब्रह्मानुभव इति चेन्न। सर्वस्यापि जगतः भगवच्छरीरत्वेन भगवद्विभूतितया आनुकूल्यमेव जीवस्य स्वाभाविकं रूपम्। इयाँस्तु विशेषः। प्रकृतौ तत्तज्जन्मनि प्रतिकूलतया भातस्याऽपि वस्तुजातस्य आनुकूल्यमेव (सुखरूपत्वमेव) जीवस्य स्वाभाविकं परं तु बद्धावस्थायां संसारजनकपापेन जीवज्ञानस्य संकुचिततया प्रतिबन्धकवशात् स्वतः प्राप्तस्यापि आनुकूल्यस्य प्रकाशो न भवति मोक्षावस्थायां तु प्रतिबन्धकनिवृत्त्या पूर्वमव्यक्तमपि आनुकूल्यं प्रकाशं भजतीति। एवञ्च मुक्तस्य सर्वज्ञत्वेऽपि सर्वस्यापि भगवद्विभूतितया सुखत्वेनैव भानान्न दुःखित्वमिति न परिपूर्णब्रह्मानुभवरूपमोक्षस्य दुःखमिश्रितत्वमिति।

न चेदानीमनुकूलतया ज्ञातेऽपि पूर्वमिदं प्रतिकूलमासीदिति ज्ञानविषयत्वेन दुःखित्वापत्तिरिति वाच्यम्। मोक्षकाले वस्तुतो दुःखानुभवस्याविद्यमानतया प्राचीनकाले (संसारकाले) अहं दुःखी आसम्" इत्येवंविषयकज्ञानेन (स्मरणेन) कस्यापि दुःखित्वानुपपत्तेः तथा अनुभवादर्शनात् न हि प्राप्ताभिषेकं प्राचीनकारागृहवासधीः दुःखाकरोति। तस्मात् प्राचीनकाले प्रातिकूल्यज्ञानस्य स्वकर्मोपाधिकृतभगवन्निग्रहैकप्रयुक्ततया मोक्षदशायां तादृशोपाधेरभावेन सर्वस्याप्यनुकूलतयैव भानात् न परिपूर्णब्रह्मानुभवरूपमोक्षस्य दुःखमिश्रितत्वमिति भावः।

## नित्यसूरिसिद्धिः

अथ मुक्तव्यतिरिक्ताः नित्यसूरिणः बन्धप्रयोजककर्माऽभावात् सर्वदा (अनादितः एव) भगवदनुभवं कुर्वन्तीति प्रस्तूयते। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रुत्या सदादर्शनस्य प्रतिपादनात् मुक्तव्यतिरिक्त नित्यसूरिसिद्धिः। यद्यपि मोक्ष-प्राप्त्यनन्तरं मुक्तानां भगवद्दर्शनं सदा भवत्येव तथापि नित्यसूरिणां यदा कदापि संसारबन्धस्याऽसत्त्वेन सर्वकालावच्छेदेन यथा द्रष्टृत्वं तथा मुक्तानां न संभवति संसार्यवस्थायां भगवद्दर्शनाभावात्।

किञ्च बद्धजीवानामेव कालविशेषे मुक्तत्वात् तेषां क्रमेण एकैकश एव भगवद्दर्शन-संभवेन नित्यसूरिपदवाच्यानन्तगरुडादिवत् युगपत् सर्वेषां दर्शनाभावेन च न सदा दर्शनं युज्यते। अतो मुक्तव्यतिरिक्ताः नित्यसूरिण एव सदा पश्यन्तीति मुक्तव्यतिरिक्त नित्य-सूरिसिद्धिर्निष्प्रत्यूहैव।

न च नित्यसूरिणां अनादिशुद्धत्वात् तेषां मुक्तानां च मोक्षे ब्रह्मानुभवविषये तारतम्यापत्तिरिति वाच्यम्। उभयोरपि पारतन्त्र्यलक्षणभगवच्छेषत्वस्य तुल्यतया ब्रह्मानुभवे तारतम्यानुपपत्तेः। तथा च सूत्रितम् "भोगमात्रसाम्यलिङ्गाच्चेति"।

## सायुज्यस्यैव मोक्षपदवाच्यत्वं

अथ परिपूर्णब्रह्मानुभवस्य मोक्षत्वेन मुक्तानां नित्यसूरिणां च भोगे (तादृशानु-भवे) तारतम्यं नास्तीति यदवादि तन्न घटते। तथा हि—

"एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति" इत्युपनिषदि तथा भागवते—

"लोकेषु विष्णोर्निवसन्ति केचित् समीपमृच्छन्ति च केचिदन्ये।
अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः"॥

इति ग्रन्थेन सायुज्य-सालोक्य-सामीप्य-सारूप्यादिभेदेन मोक्षस्य चतुर्विधत्व-प्रतिपादनात् अग्निहोत्र-दर्शपूर्णमासादिसाधनविशेषभेदेन तत्साध्यस्वर्गादिफले तारतम्यवत् चतुर्विधेष्वपि मोक्षेषु तारतम्यस्यापि आवश्यकतया परिपूर्णब्रह्मानुभवस्य एकस्यैव मोक्षपदवाच्यत्वं तत्र च (भोगे) तारतम्याभावश्च न संगच्छते। अतश्च मोक्षे भोगे च वैषम्यापत्तिरिति चेत्—अत्रोच्यते।

९

सायुज्यस्यैव मुख्यवृत्त्या मोक्षपदवाच्यत्वेन सालोक्यादौ मोक्षव्यवहारस्य गौण त्वाच्च नात्र मोक्षे भेदः। अयमाशयः सालोक्य-सामीप्य-सारूप्याणां सायुज्यरूप मोक्ष एवान्तर्भूतत्वात् न मुख्यवृत्त्या मोक्षपदवाच्यत्वम्। तत्र सालोक्यं नाम समानलोकवृत्तित्वं, अर्थात् नित्यसूरिणां मुक्तानां च वैकुण्ठात्मकैकलोकवृत्तित्वं। एवं समानरूपवत्त्वमेव सारूप्यं, समानत्वञ्च भगवद्रूपेण सह बोध्यम्। तथा भगवत्समीपप्राप्तिरेव सामीप्यम्। सायुज्यं नामैकभोग्यकत्वम्। अत्र च ब्रह्मणः द्वयोश्चेतनयोर्भोग्यत्वेन समानत्वात् परिपूर्णब्रह्मानुभवरूपभोगोऽपि समान इति भोगसाम्यमिह आक्षेपेण लभ्यते। तदुक्तं सर्वार्थसिद्धौ—"अत्र सालोक्यादिनयाद्युज्यमानं युक् शब्दार्थः, तेन भोगसाम्यमाक्षिप्यत" इति। तथा च द्वयोः समानभोग्यकत्वमेव सायुज्यमिति निगमान्तमहादेशिकाः।

श्रुतप्रकाशिकाचार्यास्तु समानभोगकत्वमेव सायुज्यं, तदेव च भोगसाम्यं, तच्च द्वयोः भोगे वैषम्यं नास्ति; किन्तु समानमेव ततश्चैक्यापत्तिः न सायुज्यमिति प्रत्यपीपदन्। तथा च ग्रन्थसन्दर्भः "सायुज्यशब्दस्य समानगुणयोगवाचित्वात्, युज्यत इति युक् शब्दो गुणपरः धर्मिणि हि गुणः सम्बध्यते, समानगुणकः सयुक्, तस्य भावः सायुज्यमिति हि व्युत्पत्ति"रिति। एवं च पक्षद्वयेऽपि सायुज्य एव सालोक्यादित्रिकस्यान्तर्भावः, न तु सालोक्यादौ सायुज्यस्य यतः भोगसाम्यरूपसायुज्यस्य भोग्यसाम्यरूपसायुज्यस्य वा वैकुण्ठलोके समानरूपं गृहीत्वा समीपमुपेतस्यैव पुरुषस्य ब्रह्मानुभवरूपभोगे साम्यप्रतिपादनात्, ब्रह्मानुभवसमये च सालोक्यादीनामपि सत्त्वात्, सायुज्य एव तेषामन्तर्भावो युक्तः। किञ्च सायुज्यस्य सालोक्याद्युत्तरकालीनत्वेन तत्रैव सालोक्यादीनामन्तर्भावः, न तु सायुज्यादीनां सालोक्ये। लोकप्राप्तेः पूर्वं भोगसाम्यस्यालब्धत्वात्, सायुज्यस्यैव मुख्यतया मोक्षपदवाच्यत्वं, इतरेषां गौणत्वमिति नात्र मोक्षभेदप्रयुक्तः फलभेदः।

केचित्तु सयुग्भाव एव सायुज्यं, सयुग्भावश्चैक्यमेवेति जीवस्य ब्रह्मणा सहैक्यमेव सायुज्यपदवाच्यमिति तस्यैव मोक्षत्वं वर्णयन्ति। तत्रेदमभिधीयते—समानं युक् ययोस्तौ सयुजौ तयोर्भावः सायुज्यमिति व्युत्पत्त्या द्वयोर्भोग्यैक्यवत्त्वमेव सायुज्यशब्दार्थः। न हि सयुक्शब्दः एकशब्दपर्यायः, तथा क्वचिदपि प्रयोगाभावात्। अतश्च ब्रह्मणा सहैक्यं सायुज्यशब्देन बोधयितुं न शक्यते।

किञ्चैक्यापत्तेः सायुज्यपदार्थत्वे "एतासामेव देवतानां सायुज्यं, सार्ष्टितां समानलोकतामाप्नोति" इति श्रुतिविरोधोऽपि स्यात्। तत्र हि एकस्य बहुदेवतासायुज्यं प्रति-

पांद्यते । इदं च आत्मनो निरवयवत्वेनाऽच्छेद्यतया युगपदनेकदेवताभिस्सह ऐक्यां-संभवान्न युज्यते । यद्यात्मा सावयवस्स्यात् तदा अवयवभेदेनाऽनेकदेवतासंबन्धस्य कथञ्चित् सुवचत्वेन ऐक्यं वक्तुं शक्येत, नत्वेतदस्ति । एवमेकस्यात्मनः क्रमेणापि ऐक्यापत्तिरूपमनेकदेवतासायुज्यं वक्तुं न शक्यते । आदौ आत्मनः अग्निदेवतया सह तदनु वरुणदेवतया ततः इन्द्रादिदेवतयेति रीत्या विभागो वक्तव्यः तथा विभागयोग्य-त्वोपगमे तत्तद्देवताभिः सह संयोगविशेषमात्रमेव स्यात् नत्वैक्यं ऐक्ये सति विभागा-संभवात् ।

न च विभागाभावः इष्ट इति न दोष इति वाच्यम् । तथा सति एकदेवतयैव ऐक्यापत्त्या अनेकदेवतासायुज्यमनुपपन्नमेव स्यात् ।

इत्थं "द्वासुपर्णा सयुजा सखाया तयोरन्यः" इति श्रुतौ द्वयोरेव सयुजेत्यनेन प्रयोगदर्शनान्नात्र सयुक् शब्दः एकशब्दपर्यायः किन्तु समानभोग्यकत्वं समानभोग-कत्वं वा सायुज्यमिति भावः । एवञ्चैतत्सिद्धं रामानुजमते परिपूर्णब्रह्मानुभवो मोक्षः स च सर्वेषां मुक्तानां समानः, अत एव तस्यैव सायुज्यपदवाच्यत्वं इतरेषान्तु ( सालो-क्यादीनां तु ) तत्रैवान्तर्भाव इति ।

तत्त्वमुक्ताकलापस्य नायकादिसरत्रये ।
जिज्ञासूपकाराय सारांशो लिखितो मया ॥
अय्याश्रीदेवनाथार्य गुरुशिष्येण धीमता ।
श्रीकृष्णतातयार्येण रामावरजसूनुना ॥

## विशिष्टाद्वैत वेदान्ते प्रमाणप्रमेयविवरणप्रदर्शनपद्धिका

प्रत्यक्षानुमानशब्दभेदेन प्रमाणानि त्रीणि ।

प्रमाकरणं प्रमाणम् ।

अबाध्य व्यवहारहेतुः ज्ञानं प्रमा (सर्वमपि धर्मभूतज्ञानं स्वप्रकाशं द्रव्यं यथार्थं च) मिति–मातृ–मेयविषयकं त्रिपुटं ।

साक्षात् प्रतिपत्-प्रत्यक्षम् (साक्षात्त्वं च लैङ्गिकत्व-शाब्दत्व-स्मृतित्वरहित-ज्ञानत्वम् इदं च लक्षणं मुक्तामुक्तप्रत्यक्षसाधारणं ।

तद्द्विविधम् निर्विकल्पकं, सविकल्पकं चेति । संस्कारनिरपेक्षेन्द्रियजन्यं ज्ञानं (अनुवृत्तिरहितं) निर्विकल्पकं, संस्कारसहितेन्द्रियजन्यं ज्ञानं अनुवृत्तिविषयकं सविकल्पकम्, ज्ञानद्वयमपि विशिष्टविषयकमेव ।

योगिप्रत्यक्षं नाङ्गीक्रियते ।

व्याप्यदर्शनात् असंनिकृष्टार्थविज्ञानम् अनुमानम् ।

अन्वयव्यतिरेकि, केवलान्वयिभेदेन द्विविधमेव अनुमानम्, केवलव्यतिरेकि नाङ्गीक्रियते ।

व्याप्तिपक्षधर्मताज्ञानयोरनुमितिकारणता ।

प्रथमदर्शने व्याप्तिग्रहणं भूयोदर्शनैर्व्यभिचारशंकानिराकरणं तर्केण पुनः व्यभिचारशंकानिदानभूतोपाधिनिराकरणमिति विभागः ।

प्रतिज्ञाहेतूदाहरणभेदेन त्रय एव अवयवा इति केचन । प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पंचापि अवयवाः इति वि-वेदान्तैकदेशिनः ।

हेत्वाभासः असिद्धः एक एवाभ्युपगम्यते । अनेकान्त्यादिहेत्वाभासजातं सर्वं व्याप्त्यभावे पक्षधर्मत्वाभावे वा विश्राम्यति न तु ताभ्यामतिरिक्तम् ।

लौकिकः वैदिकश्च शब्दः प्रमाणम् । स च स्वतन्त्रः न तु वैशेषिकवत् अनुमानेऽन्तर्गतः । आकाङ्क्षा योग्यता आसत्तिश्चेति त्रीणि शाब्दबोधे सरकारिकारणानि ।

बोधकत्वमेव शक्तिः न तु संकेतः । सा च सिद्धपरवाक्येऽपि अंगीक्रियते ।

विशिष्टे एव शक्तिः न तु व्यक्तिमात्रे जातिमात्रे वा । वृत्तिः द्विधा मुख्या गौणी चेति ।

श्रुतिप्रमाणानुसारं चेतनाचेतनयोः भगवच्छरीरत्वम् ।

यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम् तच्छेषतैकस्वरूपं च तत् तस्य शरीरमिति शरीरलक्षणम् ।

अन्विताभिधानवादः अभिहितान्वयवादश्च संमतः तदुक्तम्–'तत्तस्वारस्यलोकप्रतिपदनुगमात् तच्च नाधिक्षिपामः' इति । अन्विताभिधानवादे आदरः अभिहितान्वयवादे असंमतत्वाभावश्च द्योत्यते ।

लिङर्थः कृतिसाध्यत्वविशेषः आप्ताभिप्रायश्च ।

प्रामाण्यं स्वतः, अप्रामाण्यं तु परतः इति ।

वेदः अपौरुषेयः अपौरुषेयत्वं च न मीमांसकोक्तरीत्या वर्णनित्यत्वप्रयुक्तं किन्तु "धाता यथा पूर्वमकल्पयत्" इति श्रुत्या पूर्वस्मिन् कल्पे येन क्रमेण वर्णाः उच्चारिताः तेनैव क्रमेण संस्कारविशेषेण तमेव क्रमविशेषं स्मृत्वा उच्चार्यमाणत्वम् ततश्च, आनुपूर्वीनित्यत्वम् । अमुं च क्रमं सर्वेश्वरः संस्कारनिरपेक्षमेव स्वयं अनुसंधत्ते ।

पुराणेषु सात्त्विकपुराणानां प्रामाण्यम् । राजसादीनां तु न ।

पांचरात्रागमस्याऽपि सर्वांशे प्रामाण्यमभ्युपगम्यते भगवदुक्तत्वात् । अबाधितत्वाच्च ।

स्मृतिः—यथार्थाः "स्मृति प्रत्यक्षमैतिह्य" मित्यादिश्रुत्यनुसारेण प्रमाणं चेति कश्चित्पक्षः ।

नैयायिकोक्तस्य उपमानस्य शब्दे, मीमांसकोक्तस्य स्मृतौ अनुमितौ बा यथायोग्यं अन्तर्भावः न तूपमानं अतिरिक्तं प्रमाणम् ।

अर्थापत्तेः अनुमानेऽन्तर्भावः ।

अनुपलब्धिः न पृथक् प्रमाणम् किन्तु अभावस्य भावान्तररूपत्वेन तद्ग्राहकम् प्रत्यक्षमेव, तस्य च सहकारिणी ।

ऐतिह्यस्य शब्दे, संभवस्य च अनुमानेऽन्तर्भावः ।

ईश्वरः आगमैकवेद्यः न तु अनुमानप्रमाणगम्यः अभिन्ननिमित्तोपादनं च । एवं विभुः सर्वज्ञः चिदचिच्छरीरकः पर-व्यूह-विभवान्तर्याम्यर्चावताररूपेण पंचप्रकारश्चेति ।

जीवः अणुः स्वयंप्रकाशः प्रतिशरीरं भिन्नः नित्यः कर्ता भोक्ता शरीरी बद्ध-मुक्त-नित्यभेदेन त्रिधा भिन्नश्च ।

ईश्वरस्य नित्यानां मुक्तानां च भोग्य-भोगोपकरण-भोगस्थानरूपा नित्यविभूतिः । सैव वैकुण्ठलोकः शुद्धसत्त्वं चेति व्यपदिश्यते ।

जीवस्य वैकुण्ठलोके अपहतपाप्मत्वादिस्वस्वरूपाविर्भावपूर्वकपरिपूर्णब्रह्मानुभवो मोक्षः। मोक्षोपायश्च भक्तिः प्रपत्तिश्चेति द्विविधः।

द्रव्यं—आदौ प्रकृति काल जीवेश नित्यविभूति ज्ञानभेदेन सामान्यतः षोढाविभक्तम्, ततः जडद्रव्यं आकाश वायु तेजो जल पृथिवीकाल भेदेन षोढा।

पृथिव्यादिषु नित्यानित्यविभागो नाङ्गीक्रियते परमाणोरनभ्युपगमात्।

इन्द्रियाणि न भौतिकानि किन्तु आहङ्कारिकाणि

आकाशः प्रत्यक्षः नत्वनुमेयः आकाशे एव दिशः अन्तर्भूतत्वात् तदतिरिक्ता दिक् नानुमन्यते।

वायुरपि प्रत्यक्षः नत्वनुमेयः।

सुवर्णं च पार्थिवं न तु तैजसम्

तमः पार्थिवं न तु आलोकाभावः।

अद्रव्यपदवाच्याः गुणाः रूप-रस-गन्ध-स्पर्श-शब्द-संयोग-शक्ति-सत्त्व-रजस्तमांसि दश इतरेषां नैयायिकोक्तगुणानां क्लृप्तेष्वेवान्तर्भावः।

संयोग विशेष एव कर्म न तु तदतिरिक्तमिति केचित्, अपरे तु अतिरिक्तमिति ब्रुवन्ति।

सामान्यं (जातिः) न गोत्वादिधर्मः अपि तु संस्थानविशेषः स च गवादीनां परस्परं सौसादृश्यमेवेति न जातेरतिरिक्तत्वं।

प्रामाणिकत्वमेव सत्त्वं न तु तदतिरिक्ता सत्ता नाम जातिः

वस्तूनां परस्परं स्वभाव एव व्यावर्तकः न तु तदति रिक्तः विशेषः, अतो विशेषपदार्थों नांगीक्रियते। एवं परमाणव एव नाभ्युपगच्छन्ति वि० वेदान्तिनः, अतः तेषां व्यावर्तकतया न विशेषसिद्धिः।

समवायः अप्रत्यक्षः नाङ्गीक्रियते किन्तु तत्स्थाने विशेष्यविशेषणयोः स्वभावेनैव गोत्वस्यैव गवासह सम्बन्धः पृथिव्यैव गन्धस्य संबन्धः (अपृथक्सिद्ध) इति नियमः संपद्यते न तदर्थं समवायः अभ्युपगन्तव्यः।

भावान्तरमेव अभावः न तु तदतिरिक्तः यथा गवि विद्यमानः अश्वत्वाभावः गोत्वमेव न तु तदतिरिक्त इति।

इत्थं वि-वेदान्तिमते द्रव्याद्रव्यभेदेन पदार्थः द्विविधः न तु षट् न वा सप्त इति।

# कृतज्ञतानिवेदनम्

सर्वप्रथमं ग्रन्थस्यास्य प्रकाशनाय स्वसमीपस्थ-स्वहस्तलिखितमातृकाप्रदान-पूर्वकं प्रेरितवताम् अस्माकं वेद-न्याय-मीमांसा-वेदान्तादिसर्वशास्त्रोपदेशादिना आत्म-सत्तामनुगृहीतवताम्, प्रातःस्मरणीयानां ज्ञानवैराग्यानुष्ठानशेवधीनाम् ( श्रीवैकुण्ठ-वासिनाम् ) आचार्यसार्वभौमानां देशिकदर्शनधुरन्धर-रामानुजसिद्धान्तभास्करेत्यादि-बिरुदभूषितानां श्री उ.वे.ति.च.श. नावल्पाक्कं अय्या **श्रीदेवनाथताताचार्य**महादेशिकानां चरणकमलं ध्यायामि ।

एवं मूलमातृकातो मुद्रणौपयिकतया प्रतिलिपिकरणसमये तालपत्रे कतिपय-स्थलेषु स्फुटतयाऽक्षराणामप्रतीतेः सम्भावितक्लेशं तत्र तत्र प्रकरणार्थानुसन्धानपूर्वकं सोपपत्ति इदमित्थं भवितुमर्हतीति तत्तत्स्थलोचिताक्षरविशेषनिर्णयादिना दूरीकृत्य नितरामनुगृहीतवताम्, सदाचारसम्पन्नानां न्याय-मीमांसा-वेदान्तशास्त्रज्ञानां स्वपुत्राणा-मस्माकं सर्वेषामपि वेदशास्त्राध्ययनाध्यापनादिसन्मार्गे प्रवर्तनां कृत्वा जन्म-साफल्यं च विहितवतामस्मत्पितृचरणानां श्री० उ.वे.ति.च.श. नावल्पाक्कं वलयपेट्टै रामानुजताताचार्याणां पादारविन्दयोः प्रणामाञ्जलिं समर्पयामि ।

अद्रव्यसरस्य आनन्ददायिनीव्याख्यानभागस्य अन्यत्रालब्धस्य अन्वेषणसमये यदृच्छया स्वयं तन्मूलमातृका-( तालपत्र )-प्रदानेन उपकारं कृतवते अस्मत्पितुः पैतृष्वसेयस्य विल्लियंपाक्कं चक्रवर्ती श्री उ. वे. देवनाथाचार्यस्य विदुषः पुत्राय **श्रीनिवासाचार्याय** कृतज्ञतां निवेदयामि ।

पूर्वनिर्दिष्टमातृकायामपि कतिपयस्थले अक्षराणां त्रुटिः, अन्ते द्वित्राणां श्लोकानां व्याख्यानुपलब्धिश्चासीत्, तत्पूरणार्थं कृतयत्नानामस्माकं मैसूर-प्राच्यविद्यासंशोधन-संस्थातस्तद्भागनिरीक्षणाय समुचितमार्गप्रदर्शनेन अनल्पोपकारं विहितवद्भ्यो न्याय-वेदान्ताद्यनेकशास्त्रपारङ्गतेभ्यः **पण्डितरत्न-के० एस० वरदाचार्येभ्य**श्च भूयांसि नमांसि विधीयन्ते ।

एतत्संपादनकर्मणि विषयविवेचनपूर्वकं सम्भावितसर्वप्रकारेण महत्साहाय्यं विधाय मामन्वगृह्णन्, येषां निस्सीमकृपया ग्रन्थस्यास्य परिनिष्ठितं रूपं सम्पन्नं, तेभ्यो मदग्रजेभ्यो न्याय-मीमांसा-वेदान्तशास्त्रविद्भ्यः काशीहिन्दूविश्वविद्यालयस्य मीमांसाधर्मशास्त्रविभागाध्यक्षेभ्यः **प्रो० एन्० आर० श्रीनिवासताताचार्येभ्य**श्च धन्यवादा निवेद्यन्ते ।

ग्रन्थस्यास्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयद्वारा प्रकाशनाय स्वीकृतिप्रदानेन अस्माननुगृह्णतां, संस्कृतविद्याक्षेत्रे भारते अन्यत्र च प्रथितयशसां, प्राच्यप्रतीच्योभय-विद्यानिष्णातानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालय-दिल्लीस्थ-लालबहादुरशास्त्रि-राष्ट्रियसंस्कृतविद्यापीठादिषु कौलपत्य-कौलाधिपत्यादिविशिष्टपदमलङ्कुर्वाणानां प्रकृत-मूलग्रन्थनिर्मातॄणां सर्वतन्त्रस्वतन्त्र-कवितार्किकसिंह-**श्रीमद्वेङ्कटनाथार्य**णां निगमान्त-गुरूणां सन्निधौ तदीयकाव्यग्रन्थोद्धरणपूर्वकं तत्र तत्र स्वारस्यानुभवद्वारा भक्ति प्रकटयताम् **आचार्य-श्री० वि० वेङ्कटाचल**महाभागानां सविधे सप्रणामं हार्दिकीं कृतज्ञतां प्रकटीकरोमि । प्रसङ्गेऽस्मिन् ग्रन्थमिमं 'शिवसङ्कल्प'-पुरोवाचा समलङ्कृत-वद्भ्यः प्राच्यप्रतीच्योभयविद्यानिष्णातेभ्यो मनीषिप्रवरेभ्यः सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य कुलपतिभ्यः **डॉ० मण्डनमिश्र**महोदयेभ्यः सविधे प्रणतिपुरस्सरं हार्दिकीं कृतज्ञतां ज्ञापयामि ।

एतावत्पर्यन्तम् अमुद्रितस्य सम्पूर्णानन्ददायिनीव्याख्यानोपेतस्य ग्रन्थरत्नस्य प्रकाशनाय स्वीकृतिं प्रदत्तवद्भ्यः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनसमिति-सदस्येभ्यः, विशिष्य ईदृशदुर्लभग्रन्थप्रकाशनादिना उत्तमकार्येण अस्माकमेतादृशग्रन्थ-सम्पादनकर्मणि उत्साहमभिवर्द्धय महता परिश्रमेण मुद्रणाय समुचितव्यवस्थां विधाय विदुषामेतद्ग्रन्थदिदृक्षूणां सुलभतया नयनगोचरतामापादयद्भ्यः प्रकाशनाधिकारिभ्यः **डॉ० हरिश्चन्द्रमणित्रिपाठि**महाभागेभ्यश्च भूयो भूयो धन्यवादास्समर्प्यन्ते ।

संस्कृतग्रन्थमुद्रणे स्वतोऽभिरुचिमादधते, अस्य ग्रन्थस्य यथाशक्ति मुद्रणकार्यं श्रद्धया कृतवते विजयप्रेस--अधिकारिणे **श्रीगिरीशचन्द्र**महोदयाय कृतज्ञताज्ञापनपुरस्सरं मङ्गलमाशंसामि ।

इति सुधीविधेयः
अक्षरार्थव्याख्यातुरन्तेवासी
**एन० आर० कण्णन्** ( विद्यावाचस्पतिः )
( वलयपेट्टै ना० रा० श्रीकृष्णताताचार्यः )

# तत्त्वमुक्ताकलापे

## नायकसरः

व्याप्त्याद्यव्याकुलाभिः श्रुतिभिरधिगतो विश्वनेता स विश्वं
क्रीडाकारुण्यतन्त्रः सृजति समतया जीवकर्मानुरूपम् ।
रोषोऽपि प्रीतये स्यात्सुनिरसविषयस्तस्य निस्सीमशक्तेः
स्वेच्छायां सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः ॥ १ ॥

अप्रत्यक्षः परात्मा तदिह न घटते धातुरध्यक्षबाधो
योग्यादृष्टेरभावान्न खलु न भवता स्वीकृतस्स्वेतरात्मा ।
तस्मिन् देहानपेक्षे श्रुतिभिर (धगते) वसिते देहबाधान्न बाधो
वेदेभ्यो नानुमानं न च पुरुषवचस्तिष्ठते बद्धवैरम् ॥ २ ॥

वाच्यत्वं वेद्यतां च स्वयमभिदधति ब्रह्मणोऽनुश्रवान्ताः
वाक्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता ।
नो चेत्पूर्वापरोक्तिस्ववचनकलहस्सर्ववेदान्तबाध-
स्तत्सिद्धिर्हेतुभिश्चेत्प्रसजति विहतिर्धर्मिसाध्यादिशब्दैः ॥ ३ ॥

नित्यं ब्रह्मादिशब्दा निरुपधिकसतो लक्षका इत्ययुक्तं
मुख्यस्यान्यस्य हानेर्न च निपुणधियो मुख्यमिच्छन्ति लक्ष्यम् ।
मुख्यत्वे बाधकं च क्वचिदपि न वयं किञ्चिदालोकयामो
मुख्यं लक्ष्यं च वाचः पदमिति न च तद्गोचरत्वातिपातः ॥ ४ ॥

निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे
सद्ब्रह्माद्यास्समानप्रकरणपठिताश्शङ्कितान्यार्थशब्दाः ।
अन्तर्यन्ता च नारायण इति कथितः कारणं चान्तरात्मे-
त्यस्मादप्यैककण्ठ्यं भवति निरुपधिस्तत्र शम्भ्वादिशब्दः ॥ ५ ॥

विष्णोरप्यस्त्यभिख्या शिव इति शुभतारूढिरत्रानुपाधि-
स्तस्माद्ध्येयश्श्रुतोऽसौ शिव इति शिव एवेति वाक्यं त्वनूक्तिः ।
उक्तं नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथा स्यात्
ब्रह्मेशादेर्महत्यामुपनिषदि लयाद्युक्तमेवं तु नात्र ॥ ६ ॥

यः प्रोक्तस्सर्वकर्तुः परमखिलतनोर्नापरं किञ्चिदस्ती-
त्यस्यैव स्यादनूक्त्योत्तरतरकथनं न ह्वितोन्यस्य बाधात् ।
विश्वव्याप्तस्य तस्योचितमुपधिपरिच्छेदनादुन्मितत्वं
स्वस्यैव प्रापकत्वादशिथिलचिदचिद्धारणाच्चैष सेतुः ॥ ७ ॥

पुंसूक्तं सर्ववेदप्रपठनमहितं यत्परत्वैकतानं
तस्यैव श्रीपतित्वं विशदमभिदधे ह्युत्तरत्रानुवाके ।
आम्नातश्चैष नारायण इति निखिलब्रह्मविद्यासु वेद्य-
स्तत्तद्विद्याप्रदेशश्रुतविविधपदप्रत्यभिज्ञप्तिपूर्वम् ॥ ८ ॥

रुद्रेन्द्रादिश्च यत्र स्फुरति परतयाऽनन्यथासिद्धलिङ्गैः
तत्तत्तत्त्वैर्विशिष्टो हरिरखिलतनुस्तासु विद्यासु वेद्यः ।
पारम्यं त्वान्यपर्यान्न भवति न किरित्यादिभिः स्तोत्रवाक्यै-
रन्याकूतैर्नमस्यादिभिरपि न परः स्यादनैकान्त्यदुःस्थैः ॥ ९ ॥

धर्माणां स्थापनार्थं स्वयमपि भजते शासिता शासनं स्वं
स्वस्यापि प्रत्यवायानभिनयति नृणां पापभीतिं विधित्सुः ।
शुद्धैस्स्वेच्छावतारैर्भजति सुलभतां तावतोल्पस्त्यनूक्तिः
प्रोक्तो विष्णुश्शिखायामपि हि स पुरुषः प्राप्तताराधमात्रः ॥ १० ॥

आद्यं रामायणं तस्स च निगमगणे पञ्चमः पञ्चरात्रं
सत्त्वोपज्ञं पुराणं मनुमुखमुनिभिर्निर्मितं धर्मशास्त्रम् ।
त्यक्तान्यो मूलवेदः कठपरिपठिता वल्लिकास्तापनीयं
सौबालब्रह्मबिन्दुप्रभृतिकमपि नस्तत्परं तत्परत्वे ॥ ११ ॥

मध्यस्थोक्तिर्विरुद्धे परमहिमपरे तत्र तत्रैतदुक्तिः
वृत्तान्तास्ते विचित्राः स्वमतमभिहितं देवतातत्त्वविद्भिः ।
वैषम्यं शिल्पशास्त्रप्रभृतिषु विविधं वैदिकस्वीकृतत्वं
प्रज्ञासंस्कारभाजां भवति भगवति स्वप्रधाने प्रमाणम् ॥ १२ ॥

इन्द्रेशानाद्यभिख्या स्वयमिह महदाद्युक्तिभिर्वा विशिष्टा
तत्तत्पारम्यमानं न भवति बलवद्धर्मिमानोपरोधात् ।
नो चेत्स्यान्नैक ईशो न भवति यदि वा कश्चिदन्योन्यबाधात्
लोकेऽप्यन्वर्थभावं न हि दधति महावृक्षमुख्यास्समाख्याः ॥ १३ ॥

एकं त्रेधा विभक्तं त्रितयसमधिकं तत्त्वमीशास्त्रयस्ते
विष्णवन्या मूर्तिरीष्टे प्रभवननियमः कल्पभेदात् त्रयाणाम् ।
इन्द्रादीनामिव स्यान्निजसुकृतवशादीश्वराणां प्रवाहः
स्यादेकस्येश्वरत्वं प्रतिफलनवदित्यादि चैवं परास्तम् ॥ १४ ॥

सर्गादीनामसिद्धौ न हि निगमगिरां भज्यते सम्प्रदायः
तत्सिद्धौ नानुमानं प्रभवति यदिदं बाधशून्यं विपक्षे।
शास्त्रेभ्यस्तत्प्रसिद्धौ सह परिपठनाद्विश्वकर्ताऽपि सिध्ये-
द्धर्मानुष्ठापनार्थं तदनुमितिरितो नैव शक्या कदाचित् ॥ १५ ॥

साध्यं यादृक्सपक्षे नियतमवगतं स्याद्धि पक्षेऽपि तादृक्
तस्मात्कर्मादियुक्तः प्रसजति विमते कार्यताद्यैस्तु कर्ता।
एतत्तत्सिद्ध्यसिद्ध्योर्न घटत इति न क्ष्मादिपक्षे सपक्ष-
व्याप्ताकारप्रसङ्गात्तदनुपगमने न क्वचित्स्यात्प्रसङ्गः ॥ १६ ॥

यत्कार्यस्योपयुक्तं तदिह भवतु नः किं परेणेति चेन्न
ज्ञानादेरुद्भवे तद्विषयनियमनेऽप्यर्थनादिन्द्रियादेः।
नित्यं ज्ञानं विभोस्तन्न नियतविषयं तेन नान्यार्थनं चे-
न्नानित्यस्यैव दृष्टेस्तव कथमजसंयोगभङ्गोऽन्यथा स्यात् ॥ १७ ॥

किं वा धीच्छे गृहीते विषयनियतये ते हि यत्नोऽत्र नेच्छेत्
निर्हेतुस्तत्प्रमेष्टा भवतु विषयवानेष तद्वत्स्वतस्ते।
प्रोक्ते यत्ने स्वभावाद्विषयवति सधीः स्यादितीदं क्व दृष्टं
यद्वा धीस्तं हि नित्यं न तु जनयति ते सा कथं तन्नियन्त्री ॥ १८ ॥

निःश्वासादिप्रयत्नक्रम इह भवतां जीव एवास्त्वदृष्टै-
र्यद्वा तैरेव सर्वं घटत इति भवेत्तत्कृता सिद्धसाध्यम्।
क्लृप्तावन्यस्य कर्तृद्वयमुपनमिति त्वत्सपक्षे तथा स्यात्
पक्षेऽपीत्यव्यवस्था यदि विफलतया त्यक्तिराद्येऽपि सा स्यात् ॥ १९ ॥

साध्यो हेत्वादिवेदी मत इह कलया सर्वथा वा तवासौ
पूर्वत्रेशो न सिध्येन्न कथमपि भवेद्व्याप्तिसिद्धिः परत्र।
पक्षस्पर्शाद्विशेषान्न खलु समधिकं पक्षधर्मत्वलभ्यं
कल्प्योऽन्यस्ते विशेषस्सुकृतविषमता जीवशक्तिस्तु सिद्धा ॥ २० ॥

कार्यं स्यात्कर्त्रभावेऽप्यवधिभिरितरैः कालवत्स ह्यसिद्धः
ते चादृष्टप्रयुक्तास्तदपि यतनवत्स्यात्तु यत्नानपेक्षम्।
एकत्यागेऽन्यहेतुत्यजनमिति च न ध्वंसवत्सावधित्वात्
तस्माद्धेतोरभावे न फलमिति गतिस्तद्विशेषे विशेषः ॥ २१ ॥

धर्मो यावत्सपक्षानुगत उपधिरित्यभ्युपेतस्त्वयाऽपि
त्यागे तस्यात्र तद्वच्छिथिलितनियमाः क्वापि नोपाधयस्स्युः।
तादृग्धर्मात्ययाच्च प्रकरणसमता स्यान्न चातिप्रसङ्गः
पक्षादिस्थित्यबाधा न्निरुपधिकतया स्यात्परात्मानुमा तु ॥ २२ ॥

सर्वस्यावीतहेतोरपि च निरसनं द्रक्ष्यसि स्वप्रसङ्गे
श्रुत्याऽत्र व्याप्तिसिद्धावलमनुमितिभिर्निष्फलः संप्लवोऽपि ।
तस्मादुल्लोकभूमा स कथमनुमया विश्वकर्ता प्रसिध्येत्
शास्त्रानुक्तत्वबाधद्वयपरिहृतये शास्त्रयोनित्वसूत्रम् ॥ २३ ॥

प्राज्ञाधिष्ठानशून्यं न तु परिणमितुं शक्तमव्यक्ततत्त्वं
वास्यादौ व्याप्तिसिद्धेरिति यदभिहितं सांख्यसिद्धान्तभङ्गे ।
सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणान् प्रत्युपात्तः प्रसङ्गो
नेष्टे तत्सिद्ध्यसिद्ध्योरनुमितिरिति खल्वाशयस्सूत्रकर्तुः ॥ २४ ॥

अस्यैवाचिन्त्यशक्तेरखिलजनयितुः स्यादुपादानभावः
सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या ।
निष्कृष्टेऽस्मिन् शरीरिण्यखिलगुणगणालङ्कृतानन्दरूपे
संपद्यन्ते समस्तास्समुचितगतयो निर्विकारादिवादाः ॥ २५ ॥

कर्तोपादानमेव स्वसुखमुखगणे स्वप्रयत्नप्रसूते
संयोगं स्वस्य मूर्तैस्स्वयमुपजनयन्नीश्वरोऽप्येवमिष्टः ।
सर्वोपादानभावस्तत इह घटते सर्वकर्तर्यमुष्मिन्
सर्वश्रुत्यैकरस्यप्रणयिभिरुचितं द्वारमत्राभ्युपेतम् ॥ २६ ॥

साविद्यं केऽपि सोपाधिकमथ कतिचिच्छक्तिभिर्जुष्टमन्ये
स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम् ।
नित्यत्वं विग्रहत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तु-
स्तद्वैशिष्ट्यं च शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः ॥ २७ ॥

ब्रह्मोपात्तान्विकारान् कतिचिदभिदधुश्चेतनाचेतनेशान्
नैतद्युक्तं यदीशादनधिकमनघं निर्विकारं श्रुतं तत् ।
भिन्नाया ब्रह्मशक्तेर्विकृतय इति चेद्ब्रह्मजन्यत्वभङ्गो
भेदाभेदोपपाद्यं सकलमिति मते सप्तभङ्गी न दूष्या ॥ २८ ॥

विश्वं चित्तद्गुणानुद्भव इह घटते रत्नगन्धादिनीत्या
सर्वं ब्रह्मेत्यधीतं त्रिविधमिति च तद्वाशताद्यस्य चोक्तम् ।
तस्मात्सर्वानुवृत्तं सदनवधिदशाचित्रमित्यप्ययुक्तं
प्रत्यक्षागोचरत्वप्रभृतिबहुभिदावादिसर्वोक्तिबाधात् ॥ २९ ॥

अव्यक्तं त्वन्मतेऽपि ह्यनवयवमथाप्येतदंशा विकाराः
ते चान्योन्यं विचित्रा पुनरपि विलयं तत्र तत्त्वेन यान्ति ।
इत्थं ब्रह्मापि जीवः परिणमति विहृत्यर्थमित्यप्यसारं
स्वानर्थैकप्रवृत्ते प्रसजति च तदा सर्वशास्त्रोपरोधः ॥ ३० ॥

ब्रह्मैवोपाधिभिन्नं भजति बहुविधां संसृतिं सोऽप्यनादि-
स्तस्मान्नात्यन्तभिन्नो जड इति तु मते दुःखमद्वारकं स्यात् ।
सौभर्यादौ व्यवस्था न कथमुपधिभिः स्वावतारेषु चैषा
सर्वज्ञस्स्वैक्यवेदी कथमनवधिभिर्जीवदुःखैर्न दुःख्येत् ॥ ३१ ॥

बन्धो ब्रह्मण्यशेषे प्रसजति स यदोपाधिसंयोगमात्रात्
सादेश्याच्चेदुपाधौ व्यभिचरति भवेद्बन्धमोक्षाव्यवस्था ।
अच्छेद्ये छेदनादिर्विहत उपधिभिर्न स्वतोंऽशस्तवास्मिन्
नोपाधिर्जीवतामप्यनुभवितुमलं ब्रह्मरूपोऽप्यचित्त्वात् ॥ ३२ ॥

नापि ब्रह्मण्यविद्यास्थगितनिजतनौ विश्वमेतद्विवृत्तं
तस्मिन् सा स्वप्रकाशे कथमिव विलगेत्तत्प्रकाशैकबाध्या ।
न ह्येतस्मिन्नविद्याविलयकृदधिको वृत्तिवेद्यो विशेषो
बाध्यो वृत्तिस्वरूपाद्यदि भवति तदा ज्ञानबाध्यत्वभङ्गः ॥ ३३ ॥

छन्नत्वे स्वप्रकाशादनधिकवपुषो ब्रह्मणस्स्यादभावो
भावानां छादनं हि स्फुरणविलयनं तस्य वोत्पत्तिरोधः ।
मिथ्यादोषाद्भ्रमोक्तौ कथमधिकरणं सत्यमित्येव वाच्यं
नाधिष्ठानानवस्था भवतु तव यथा नास्त्यविद्यानवस्था ॥ ३४ ॥

दोषाभावेऽप्यविद्या स्फुरति यदि ततः किं न विश्वं तथा स्यात्
सा चान्यां कल्पिकां चेदभिलषति तदा साऽपि चेत्यव्यवस्था ।
नापेक्षा चेदनादेरकलुषधिषणागोचरत्वात्सतो स्यात्
ब्रह्मैवास्यास्तु दोषो यदि न तु विरमेद् ब्रह्मणो नित्यभावात् ॥ ३५॥

ज्ञातेऽज्ञातेऽप्यभावः खलु दुरवगमस्संविदस्तेन भावः
स्यादज्ञानं यदीहाप्यपरिहृतमिदं तद्विरोधादिसाम्यात् ।
तुल्यैवाकारभेदात्परिहृतिरुभयोः क्लृप्तिरत्राधिका ते
मुग्धोऽस्मीत्यादिसाक्षात्कृतिरपि नियतं तत्प्रतिद्वन्द्विगर्भा ॥ ३६ ॥

स्वाजन्मान्यस्वदेश्यस्वविषयवृतिकृत्स्वव्यपोह्यार्थपूर्वा
ध्वान्तोत्थाद्यप्रभावद्विमतमतिरिहापूर्वनिर्भासनाच्चेत् ।
अज्ञानाज्ञानभेत्त्रो किमियमनुमितिः स्वेष्टभङ्गोऽन्यथा तु
व्यर्थोऽसाविन्द्रियादिष्वतिचरणमसिद्ध्यादि च स्याद्विकल्पे ॥ ३७ ॥

यच्चोक्तं दैवदत्ती मितिरितरमितिन्यायतो हन्त्यनादि
मात्वात्तन्मित्यभावाधिकमिति तदपि स्यादबाधं विपक्षे ।
नाभावो भावतोऽन्यो न च पुरुषभिदाऽस्त्येकजीवत्ववादे
दृष्टान्ते ध्वंसकत्वं न च विदितमिदं ध्वंसतामात्रसिद्धेः ॥ ३८ ॥

अस्पृष्टावद्यतोक्तेर्न खलु विषयतामभ्युपेयादविद्या
न क्षेत्रज्ञोऽपि तापत्रयपरितपनान्नापि तद्ब्रह्म मौग्ध्यात् ।
मिथ्यात्वात्तद्द्वेषभावो न भवति यदि किं तन्निरासप्रयासै-
रुच्छेत्तव्यापुमर्थान्वयत इह परः कोऽभिलष्येत दोषः ॥ ३९ ॥

शुद्धे ब्रह्मण्यविद्या यदि न घटते तस्य जीवैक्यवाद-
स्तस्मान्निर्दोषतोक्तिर्निरुपधिदशया निर्वहेदित्ययुक्तम् ।
प्रत्यक्षादिप्रमाणानुगुणबहुविधश्रुत्यबाधेन नेतुं
शक्येऽप्यैक्यादिवाक्ये बहुगुणनिधये ब्रह्मणेऽसूयसि त्वम् ॥ ४० ॥

मायाविद्यादिशब्दैः प्रकृतिरभिमता ज्ञानकर्मादयो वे-
त्येतत्तत्तत्प्रदेशे स्फुटविदितमतो न त्वदिष्टाऽस्त्यविद्या ।
किं चाविद्यादिशून्यः पर इति विविधाम्नायकण्ठोक्तमर्थं
क्षेप्तुं मायादिशब्दः क्षम इति वदतः स्यादविद्या तवैव ॥ ४१ ॥

निर्दोषश्रुत्यबाधप्रणयिभिरुदितो ब्रह्मजीवानुबन्धी
मायाविद्याविभागोऽप्यफल इह परोन्मोहनार्था हि माया ।
मिथ्यार्थान् दर्शयित्वा विहरणमपि तैस्तादृशं भावयन्तो
मायैव स्यादविद्या न कथमितरथा स्यादनुच्छेदनीया ॥ ४२ ॥

मिथ्याभूतस्य सत्यं निरुपधि भजते न ह्युपादानभावं
तस्योपाधिश्च मिथ्यात्मक इति निरधिष्ठानता नास्य युक्ता ।
तस्मात्सत्यानृते द्वे मिथुनमिति न सद्विश्वसत्ता ह्यबाध्या
सद्विद्यायां च कार्यं ननु कथमसतस्सद्भवेदित्युपात्तम् ॥ ४३ ॥

कार्याणां यत्सरूपं किमपि गुणमयं कारणं कापिलोक्तं
तत्क्षिप्तं माक्षिकादेः क्रिमिमुखजननात्सूत्रकारैर्द्वितीये ।
तस्मान्मिथ्यात्मकस्य स्वयमनुपधिकं सत्यमेवास्तु सूतिः
सत्योपादानवादे जगदपि न मृषा स्यादितीष्टं त्विदं नः ॥ ४४ ॥

दृश्यत्वाद्विश्वमिथ्यावचसि विहतयोऽसिद्धयश्चात्र बह्व्यः
पक्षादेस्सिद्ध्यसिद्ध्योर्न हि गतिरितरा नापि वादाङ्गमीदृक् ।
मर्यादां लोकसिद्धां विजहत इह ते नापरा सा प्रसिध्ये-
न्निर्मर्यादोक्तिमात्राज्जगदपलपतः किं न सत्यं ततस्तत् ॥ ४५ ॥

साध्ये सत्येतरत्वे कथित इह भवेत्स्वस्य हि स्वान्यभावो
नान्यत्सत्यं तु दृष्टं तदवधिकभिदासाधने चेष्टसिद्धिः ।
सत्यत्वं चेन्निषेध्यं प्रसजति दहनेऽप्युष्णतायां निषेधः
साध्यं त्वक्षाद्यबाध्यं यदि किमपि परं तेन न व्याप्तिसिद्धिः ॥ ४६ ॥

स्वात्यन्ताभावदेशे विदितमिति यदि स्थाप्यमिष्टं क्वचित्त-
त्त्रैवेति स्वशक्यं क्वचिदपि न तथा ह्यस्ति सिद्धान्तसिद्धिः ।
बाधश्चास्मिन्नुपाधिस्समधिकदशादेशकालाद्युपाधौ
नासौ साध्योऽत्र मानं निखिलमपि यतस्तद्विधानेकतानम् ॥ ४७ ॥

तुच्छत्वं ते न ह्योष्टं सदसदितरता व्याहतत्वादिदुःस्था-
सिद्धा चासौ परेषां भवदनभिमतोऽन्यात्मना वेद्यतादिः ।
विश्वं हीदं मृषा नस्तदितरवपुषा त्वन्मतारोपितैश्च
स्यादेवं दूरतस्ते ध्रुवमपसरतोऽप्युक्तदोषानुषङ्गः ॥ ४८ ॥

साध्यं मिथ्या न वा ते द्वितयमनुचितं निष्फलत्वादिदोषा-
दाद्यं ह्योष्टं ममापि प्रसजति भजतस्सत्यभेदः परस्मिन् ।
पक्षीकारेऽस्य बाधादिकमतिचरणं तद्बहिष्कारपक्षे
तच्चेद्ब्रह्मस्वरूपं भुवनमभिहितं हन्त सद्ब्रह्मकं स्यात् ॥ ४९ ॥

इष्टं ब्रह्मापि दृश्यं तव च कथयतस्तस्य जिज्ञास्यतादीन्
मिथ्या चेद्दृश्यताऽस्मिन्ननु विमतिपदेऽप्येवमेषा त्वयेष्टा ।
लिङ्गं जाड्यादिकं चेत्तदपि मम मते ह्यंशतस्स्यादसिद्धं
मिथ्यालिङ्गेश्च सिध्येत्किमपि यदि भवेद्बाष्पधूमोऽग्निलिङ्गम् ॥ ५० ॥

व्यावृत्तं शुक्तिरूप्यं विदितमिह मृषा विश्वमेवं न किं स्यात्
मैवं हेतोरयुक्तेस्स खलु भिदुरता बाध्यता नाशिता वा ।
आद्येऽनैकान्त्यमन्त्ये स्वसमयविहतिर्मध्यमे स्यादसिद्धि-
र्धीविच्छेदादिकल्पान्तरमपि कथितैर्दूषितं दोषबृन्दैः ॥ ५१ ॥

यत्स्यात्तत्सर्वदा स्याद्यदि च न भवेत्तच्च न स्यात्कदाऽपि
क्वापि व्योमारविन्दादिवदिति यदि न व्याहतेस्साध्यहेत्वोः ।
मध्ये सत्त्वं गृहीत्वा खलु तदुभयतोऽसत्त्वलिङ्गं गृहीतं
सामग्र्या चावधी द्वौ स्फुटतरविदितौ साऽपि तत्तत्प्रवाहात् ॥ ५२ ॥

आम्नायस्यापि शक्तिर्न खलु गमयितुं स्वोपजीव्यप्रतीपं
यूपादित्यैक्यवाक्यप्रभृतिभिरितरथा नोपचारं भजेत ।
अक्षाम्नायः स्वपूर्वापरविहतिभयान्नेति नेत्यादिवाक्यं
वैलक्षण्यादिमात्रं प्रथयति भुवनाद्ब्रह्मणो विश्वमूर्तेः ॥ ५३ ॥

प्रत्यक्षेणैव पुंसां भवति दृढतरो देह एवात्ममोहो
ज्वालैक्यप्रत्यभिज्ञाद्युभयमपि च तद्बाध्यते ह्यागमाद्यैः ।
तस्मादक्षादिसिद्धं श्रुतिभिरपि जगद्बाध्यतामित्ययुक्तं
संदेहार्थेषु शक्तं यदिह न खलु तद्दोषदूरेष्वपि स्यात् ॥ ५४ ॥

प्रत्यक्षं दोषमूलं श्रुतिरिह न तथा पौरुषेयत्वहाने-
स्तस्मात्सा बाधिकाऽस्येत्यसदखिलधियामन्ततो दोषसाम्यात् ।
शास्त्रस्यापि ह्यविद्याप्रभृतिभिरुदयस्सम्मतस्त्वन्मतस्थै-
स्तस्यानाविद्यभावे न हि निखिलभिदापह्नवश्शक्यशङ्कः ॥ ५५ ॥

दोषोत्थत्वाविशेषे न हि भवति परं पूर्वबाधप्रगल्भं
दोषज्ञानं तु मा भूदविदुषि पुरुषे वस्तुतस्त्वन्यथा तत् ।
निर्दोषत्वाभिमन्तृस्वसमयिमतिभिः किं न मिथ्याकृतान्ताः
प्राबल्यं चेन्निषेधः पर इति मुखरं तुर्यबुद्धस्य तूर्यम् ॥ ५६ ॥

निर्दोषं यच्च शास्त्रं तदपि बहुविधं बोधयत्येव भेदं
वाक्ये तत्त्वोपदेशप्रकरणपठिते नान्यपर्यं प्रतीमः ।
नात्रापच्छेदनीतिर्नियतिमति सदोपक्रमन्यायसिद्धेः
स्वप्रख्याप्यापलापे श्रुतिरपि वृषलोद्वाहमन्त्रायते वः ॥ ५७ ॥

भेदः प्रत्यक्षसिद्धो न निगमविषयस्स्यादिति त्वर्भकोक्तिः
प्रख्यातादन्यमेनं प्रथयति यदसौ त्वन्मताद्वैतवन्नः ।
सन्मात्रग्राहि चाक्षं नियमयसि ततो ब्रह्म दृश्यं मृषा स्यात्
किं ते श्रुत्या तदानीं फलमभिलषतां क्वापशूद्राधिकारः ॥ ५८ ॥

वेदा बुद्धागमाश्च स्वयमपि हि मृषा मानता चैवमेषां
बोद्धा बुद्धिः फलं च स्थिरतदितरताद्यन्तरालं च बुद्धेः ।
आतस्त्रैविद्यडिम्भान् ग्रसितुमुपनिषद्द्वारवाणोपगूढैः
प्रायः प्रच्छादिता स्वा पटुभिरसुरता पौण्डूकाद्वैतनिष्ठैः ॥ ५९ ॥

त्वन्निष्ठा सिद्ध्यसिद्ध्योः परमतनियतिस्सिद्धिमेवाधिरूढा
वेदस्यामानतायां त्वदभिमतहतिर्मानतायां च तद्वत् ।
साध्याऽसाध्याऽपि मुक्तिस्त्वदुपगमहता तत्समं चान्यदित्थं
रक्षोभ्यः प्रेषितोऽयं रघुपतिविशिखो राहुमीमांसकेभ्यः ॥ ६० ॥

शुद्धस्याशुद्धसृष्टिक्रम इति कथितश्शुद्धसत्त्वे तु तत्त्वे
स्थानं नित्यं श्रुतं तत्स्मृतमपि कलया तत्र देहाद्यवस्था ।
सृष्टेः प्रागेकमेवेत्यपि निगमवचः स्रक्ष्यमाणव्यपेक्षं
नो चेत्स्वाभीष्टमायोपधिविलये स्वस्ति विश्वप्रसूत्यै ॥ ६१ ॥

ज्ञानत्वं चेद्रहस्यागमविदितमिति स्वीकृतं नित्यभूतेः
षाड्गुण्यात्मत्वमेवं प्रसजति सह तत्पाठतोऽतो जडा सा ।
तत्सम्बन्धात्कुतश्चित्तदुपचरणमित्याहुरेके परे तु
ज्ञानत्वाजाड्यकण्ठोक्त्यनुगुणमवदन् मुख्यतामात्मनीव ॥ ६२ ॥

निस्संकोचा समस्तं चुलकयति मतिर्नित्यमुक्तेश्वराणां
बद्धानां नित्यभूतिर्न विलसति ततः कस्य सा स्वप्रकाशा ।
मैवं नित्येश्वरादेस्सति मतिविभवे साऽस्तु तेनानपेक्षा
वेद्यानुद्भासकाले मतिरिव न तु सा बन्धकाले विभाति ॥ ६३ ॥

तत्त्वान्यप्राकृतानि त्रिगुण इव परीणामतश्चेद्भवेयुः
स्थानादि स्यादनित्यं न यदि न घटते भूततादीति चेन्न ।
अत्रत्यक्ष्मादितत्त्वक्रमनियतगुणप्रक्रियाद्यैकरूप्या-
न्नित्येऽपि स्यान्निमित्तानुगतिनियमितस्तत्तदाख्याविशेषः ॥ ६४ ॥

निर्दिष्टं पौष्करादौ स्वयमखिलकृता स्वं वपुर्नित्यसिद्धं
नित्या लिङ्गेति चैकायननिगमविदो वाक्यभाष्यादि चैवम् ।
नित्यत्वं वासुदेवाह्वयवपुषि जगौ मोक्षधर्मे मुनीन्द्रो
नित्येच्छातस्तदा तत्तदिह विहृतिमान् सांशजन्मादितर्कः ॥ ६५ ॥

अस्त्रैर्वा भूषणैर्वा किमिह भगवतोऽवाप्तकामस्य तस्मा-
द्देवो देहेऽपि वीतावरण इति जगुः केऽपि जैनोपजल्पाः ।
किं वा देहेन विश्वात्मन इति वदतां किं प्रतिब्रूयुरेते
तच्चेत्त स्याश्रितार्थं तदधिकरणकं सर्वमप्येवमस्तु ॥ ६६ ॥

रूपस्थानायुधाख्याजनिलयविधृतिव्यापृतीच्छागुणादे-
र्विश्वाधारे निषेधो विधिरपि विषयद्वैतशाम्यद्विरोधौ ।
इत्थंभूते निषेधः क्वचिदपि न विधिं बाधते सावकाशः
कल्याणैरस्य योगस्तदितरविरहोऽप्येकवाक्यश्रुतौ च ॥ ६७ ॥

देहादिर्देवतानां हविरनुभवनं संनिधेर्यौगपद्यं
प्रीतिर्दानं फलस्याप्यसदिति कथयन्त्यर्धलोकायतस्थाः ।
तत्राध्यक्षादिदूरस्वमहिमसदृशाशेषवैशिष्ट्यमासां
तत्तद्विध्यर्थवादप्रभृतिभिरविदुस्तत्परैरेव शिष्टाः ॥ ६८ ॥

साधुत्राणादिहेतोस्तदुचितसमये विग्रहांशैः स्वकीयैः
स्वेच्छातस्सत्यरूपो विभुरवतरति स्वान् गुणौघाननुज्झन् ।
व्यूहे संकर्षणादौ गुणनियतिरभिव्यक्तिवैषम्यमात्रा-
द्वृद्धिह्रासाद्यभावात्म हि भवति सदा पूर्णषाड्गुण्यशाली ॥ ६९ ॥

शास्त्रादीनां प्रवृत्तिः प्रतितनु नियता स्याद्धि संकर्षणादौ
जीवादौ या विभज्याभिमतिरिह लयोत्पत्तिरक्षाविधिश्च ।
तत्तद्विद्याविशेषप्रतिनियतगुणन्यायतस्तौ तु नेयौ
सर्वस्यैकोऽभिमन्ता स हि सकलजगद्व्यापृतिष्वेककर्ता ॥ ७० ॥

त्रिव्यूहः क्वापि देवः क्वचिदपि चतुर्व्यूह उक्तस्तदेवं
व्याघातेऽन्योन्यबाधादुभयमिदमसत्कल्पनामात्रमस्तु ।
तन्नाद्ये व्यूहभेदे त्रियुगगुणतया चिन्तनीये परस्मा-
द्युक्ताभेदाविवक्षा तदनुपगमने तत्त्वसंख्यादिबाधः ॥ ७१ ॥

मूर्त्तीनां मूलमूलिप्रभृतिषु बहुधा वैपरीत्यप्रतीते-
र्वर्णादौ बीजतादिव्यवहृतिवदियं वर्णना भावनार्था ।
मैवं कालादिभेदात्प्रशमितविहृतौ कल्पितत्वं न कल्प्यं
नो चेद्ब्रह्माद्युदन्तेष्वपि विषमकथाभेदवैयाकुली स्यात् ॥ ७२ ॥

ईशस्य व्यष्टिभेदानभिदधति मनोवाङ्मयादीन् यदन्ये
तत्र त्रेधा यदीष्टा विकृतिरविषया निर्विकारागमाः स्युः ।
नित्यत्रित्वे तु नैकेश्वरनियमगतिर्भ्रान्तिसिद्धे विभागे
मायादायादपक्षः श्रुतिरपि नियतैरस्त्वधिष्ठानभेदैः ॥ ७३ ॥

युक्तिः प्रश्नोत्तरादेर्न हि पुरुषभिदां बुद्धिभेदं च मुक्त्वा
तस्माद्बुद्ध्यहादिभेदे कतिचन पुरुषाः स्युः परेणानुबद्धाः ।
तन्न स्वच्छन्दलीलः स्वयमभिनयति स्वान्यतां सर्ववेदी
तद्वच्छिष्यादिवृत्तिप्रसृतिमिह सतां शिक्षयन् सानुकम्पः ॥ ७४ ॥

विश्वान्तर्वर्तिबालोदरगतमखिलं कस्य विश्वासभूमि-
स्तस्मादौपेन्द्रिमदृग्भवतु रसवशादिन्द्रजालं प्रवृत्तम् ।
मा भूदाश्चर्यशक्तेरवितथमिदमित्येव सर्वाप्तिसिद्धे-
र्व्याघातस्योपशान्तिस्तदनुगुणदशाभेदयोगादिभिः स्यात् ॥ ७५ ॥

यद्भावित्वेन बुद्धं भवति तदथ चातीतरूपं तदस्मि-
न्नुल्लेखो भिद्यते चेदकरणजमतेरैकरूप्यं प्रकुप्येत् ।
प्राचीनोल्लेख एव स्थितवति तु गते भाविबुद्धिर्भ्रमः स्यात्
मैवं पूर्वापरादिक्रमनियतसदोल्लेखसत्यत्वसिद्धेः ॥ ७६ ॥

नीलं किंचित्तदानीमरुणमिति न खल्विन्द्रजालादृतेऽद्धा
नो चेदेवं विरोधः क्वचिदपि न भवेत्कश्च जैनेऽपराधः ।
तस्मादीशो विरुद्धद्वितयमघटयन् सर्वशक्तिः कथं स्या-
न्मैवं व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः ॥ ७७ ॥

संगृह्य ज्ञानयत्नौ कतिचन निखिलस्रष्टुरिच्छां तु नैच्छन्
तस्यां द्वेषः क एषामनुमितिशरणानीकनासीरभाजाम् ।
श्रुत्या तद्बोधयत्नावभिदधति यदि क्षम्यतामेवमिच्छा
निर्वाह्यं स्वाप्तकामप्रभृतिवचनमप्यान्यपर्योपरुद्धम् ॥ ७८ ॥

स्वीकृत्येशानतत्त्वं कतिचन जहतस्तत्प्रसादादिसाध्यं
गङ्गाम्भः पञ्चगव्यप्रभृतिवदवदन् पावनत्वादि तस्य।
तच्छ्रुत्यादिप्रतीपं यदपि च फलदं दर्शितं निष्प्रसादं
तच्चैतस्य प्रसादादिति हि निजगदुर्धर्ममर्मज्ञचित्ताः ॥ ७९ ॥

अत्यन्तोदन्तचिन्तासहचरणसहैरेभिरस्मिन् परस्मिन्
भक्तिश्रद्धास्तिकत्वप्रभृतिगुणसिरावेधिभिस्तर्कशस्त्रैः ।
स्वार्थत्वस्वाश्रयत्वस्ववशयतनताद्यूहवर्गोपवर्गं
छिन्द्येताच्छेदपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् ॥ ८० ॥

# तत्त्वमुक्ताकलापे

## बुद्धिसरः

धीत्वाद्वेद्यीति सिद्धा स्वयमितरमतिर्बुद्धि लक्ष्मादि धीवत्
यद्वा सर्वज्ञधीवन्न स मतियुगवान्नापि चैकोनवेदो।
नो चेद्धारामतौ सा प्रथममपि सती नावबुद्धेति धीः स्यात्
स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनोत्या ॥ १ ॥

स्मृत्या शब्दानुमानप्रभृतिभिरपि धीर्वेद्यते स्वप्रकाशा
धीत्वादेस्तामवेद्यामनुपधि वदतः स्वोक्तिबाधादयः स्युः।
वेद्यत्वे सा जडा स्यादिति च विहतिमव्याप्तिभङ्गश्च नो चे-
च्छिष्याचार्यादिसर्वव्यवहृतिविरहाज्जातमौनं जगत्स्यात् ॥ २ ॥

बुद्धेरर्थप्रकाशादनुमितिरिति चेत्तन्न साध्याविशेषात्
साध्याद्भेदेऽपि बुद्धिर्यत उदयति ते स्यात्ततोऽर्थप्रकाशः।
मध्ये बुद्धिः किमर्था ननु सममुभयोरप्यसाधारणत्वं
तत्सा नित्यानुमेया यदि फलति तदा बुद्धितत्त्वापलापः ॥ ३ ॥

ज्ञातुर्ज्ञप्तेरलोपं कथयति निगमः स्मर्यते चैवमेषा
तस्मादेकस्वसिद्धौ प्रसरणभिदया तद्भिदैकत्र पुंसि।
योग्यादृष्टेरभावान्न च भवति सुषुप्त्याद्यवस्थासु बाध-
स्तत्तद्वस्तुप्रकाशक्षणविरहवती न प्रकाशेत बुद्धिः ॥ ४ ॥

उत्पत्त्यादेरभावान्न यदि दृशि भिदा नो दशाभेददृष्टेः
दृष्टादृष्टव्यवस्था क्वचिदिह पुरुषे बुद्ध्यवस्थाभिरेव।
अज्ञानाद्यैरनैकान्तिकमपि न च धीरात्मभेदेप्यभिन्ना
ज्ञत्वाज्ञत्वादिभेदः कथमिव घटते सर्वथैका मतिश्चेत् ॥ ५ ॥

भेदादिर्दृश्यभावान्न दृशि दृशितया दृश्यधर्मा न दृक् चेत्
पूर्वस्मिन्नित्यताद्यैरनियतिविहती वाग्विरोधादि शेषे।
बाधश्चात्र द्वयोस्स्यात् स्वमत इह च यैस्साध्यते ये च साध्या
नैते मिथ्या विरोधान्न दृशिरविमतेः स्यादभावोऽपि धर्मः ॥ ६ ॥

बुद्धिर्द्रव्यं विकारान्वयत इतरवद्बोद्धृवच्चाजडत्वात्
संकोचादिप्रयोगा बहव इह तथा न ह्यमुख्या भवेयुः।
एवं नास्या गुणत्वं गलति न खलु तत्तन्त्रसङ्केतसिद्धं
लोके धर्मस्वभावो गुण इति विदितं साऽपि सिद्धा प्रभावत् ॥ ७ ॥

नित्या धीर्हेतुतोऽस्या भवति विषयितेत्येवमिच्छन्त एव
द्रव्यत्वं नास्ति बुद्धेरिति गुणगणने तामपि स्थापयन्ति।
अद्रव्यत्वं कथं स्याद्विकृतिमति विकृत्युज्झने पूर्ववत् स्या-
दित्थंभूताद्विकारान्न भवति यदि नातिप्रसङ्गप्रसङ्गात् ॥ ८ ॥

सर्वं ज्ञानं न मानं परमतविजयान्नाप्रमाणं स्वबाधा-
न्मानामानव्यवस्था तदियमनुमता लौकिकैर्यौक्तिकैश्च।
तत्राभाने त्ववर्ज्यं स्वरसमिति वदन्त्यन्यथाभानमेके
तत्सामग्र्यैव तादृग्व्यवहृतिमपरे लाघवादाश्रयन्ति ॥ ९ ॥

नार्थैरुक्ता यथार्था विमतमतिरपि न्यायतत्त्वे तदेत-
द्भाष्येऽनूक्तं तदत्र व्यवहृतिरुभयी बाधिताबाधिताख्या।
शुक्तौ रूप्यं प्रभाम्भः श्रुतिनयवशतः स्वाप्नमप्यस्तु सत्यं
योग्यायोग्यादिभेदाग्रह इह चरमां गाहते संप्रतिष्ठाम् ॥ १० ॥

भेदाज्ञानात् प्रवृत्तौ न कथमुपरतिः स्यादभेदाप्रतीत्या
रूप्यारूप्यभ्रमादाविव यदि न यतोऽनिष्टभेदाग्रहात् सा।
आधारे भेदवर्जं स्फुरति सदृशवस्त्वन्तरे चोपपन्ना
तत्तद्वस्तूचितैव व्यवहृतिनियतिस्त्वन्मते बुद्धिवन्नः ॥ ११ ॥

अन्यस्मिन्नन्यबुद्धिर्न यदि न घटते तत्प्रवृत्तिस्तदिच्छो
रिष्टं तत्साधनं वा यदभिमतमतोऽन्यत्र सा नेति चेन्न।
रत्नांशौ रत्नबुद्ध्या विदुरनवगते रत्न एव प्रवृत्ति
ज्ञातस्येष्टानुषङ्गादविदितमपि खल्वाददीतात्र चैवम् ॥ १२ ॥

शुक्तित्वारूप्यतादेर्न तु रजततया भाति शुक्तिर्विगीता
यद्वा धीत्वाद्यथार्था विमतमतिरतो बुद्धिबाधोक्त्ययोगः।
वैशिष्ट्यासिद्धिमात्रप्रथनमिह परं बाधकस्यापि कृत्यं
किंचासत्ख्यातिरंशे प्रसजति भवतामन्यथाख्यातिवेद्ये ॥ १३ ॥

योऽसौ बोधोऽन्यथाधीजनक इति जगे भ्रान्तिरित्युच्यतेऽसौ
नेत्थं बोधापलापः क्वचिदपि वदतां बोधमध्यक्षसिद्धम्।
यत्र प्रत्यक्षसिद्धादधिकमपि परे निष्फलं कल्पयेयुः
सिद्धैरेवात्र तत्तद्व्यवहृतिरिति हि स्थापितं भाष्यकारैः ॥ १४ ॥

एकाधारे विरुद्धाकृतियुगयुगपत्ख्यातिरन्योन्यबाध्या
डोलाविक्षेपकल्पा तदनियतिरियं धीक्रमे साक्षिणी नः।
तस्मात्तत्तद्विशेषस्मृतिसमसमयं छन्नतत्तद्विरोधः
ख्यातस्साधारणोऽर्थः परमिह विशये येन बुद्ध्यन्तरं वः ॥ १५ ॥

दुस्साधा बाधधीभ्यां सदसदितरता कुत्रचिद् व्याहतत्वात्
सत्त्वासत्त्वं च ताभ्यां कथमिव न भवेद्व्याहतेश्चेत् समं तत्।
दृष्टत्वाद्वा विशेषः क्वचिदपि न हि नस्सर्वरूपेण सत्त्वं
नासत्ता चानुपाधिर्न च विमतिरिह ब्रह्मतुच्छातिरेके ॥ १६ ॥

रूप्यं जातं तदा चेन्न रजतमिति धीरप्रमा स्यादमुष्मिन्
कार्यासामर्थ्यमात्रान्न तदिति कथनं कल्पतेऽतिप्रसक्त्यै।
शुक्तौ चैतत्तदात्वे कथमिव जनयेद् दुर्घटानाद्यविद्या
नाक्षादिस्त्वर्थहेतुर्न च रजतमतिस्सा हि तेनैव जन्या ॥ १७ ॥

सत्त्वासत्त्वद्वयाख्यद्वयविरहचतुष्कोटिमुक्तं च तत्त्वं
व्याघाताद्यैर्विधूतं न यदि तव कथं सप्तभङ्गीनिषेधः।
तुच्छालीकादिशब्दाः क्वचन सति परं क्वाप्यसत्त्वे प्रवृत्ताः
वन्ध्यापुत्रादिशब्दैर्भजति च समतां विध्यलीकादिवादः ॥ १८ ॥

व्याघातातिप्रसङ्गौ प्रमितिपरिभवे मानतोऽमानतो वा
मानान्मानस्य सिद्धौ स्वतदितरपरित्राणमेकप्रवृत्त्या।
साधीयानेष पन्थास्समयिभिरखिलैरर्थ्यतां सार्थनीत्या
नो चेदुच्छिन्नलोकव्यवहृतिनियमाः कामचाराः कथास्स्युः ॥ १९ ॥

ज्ञानाकाराधिकं हि प्रथितमिदमिति श्वेतपीतादि बाह्यं
तादात्म्ये तस्य साध्ये सहमतिनियमाद्यन्यथैवात्र सिद्धम्।
ग्राह्यात्मत्वान्मृषा स्यान्मतिरपि यदि वा ग्राह्यमप्यस्तु तथ्यं
किंचान्योन्यं विरुद्धैर्युगपदवगतैर्धीरभिन्ना कथं स्यात् ॥ २० ॥

हन्त त्र्यण्वन्तपक्षे कणभुगभिमतो नावयव्यस्ति कश्चित्
संघातो नांशतोऽन्यस्तदणुषु न भवेद् दृश्यतेत्यन्धचोद्यम्।
संसर्गैर्विश्वमेतद् घटत इह यथादृष्टि दृश्याणुपक्षे
नादृष्टं कल्पयामः परिणतिभिरसौ दृश्यतादिः श्रुते स्यात् ॥ २१ ॥

आत्मख्यातौ मतीनां मिथ इतरतया संविदन्या न सिध्ये-
दन्योन्यार्थानभिज्ञाः कथमिव च धियो वादजल्पादि कुर्युः।
मानाभासादिसीमा न कथमपि भवेद् ग्राह्यमिथ्यात्वसाम्यात्
सर्वं तत्संवृतेश्चेन्न खलु सदितरा साऽपि तत्तन्नियन्त्री ॥ २२ ॥

एकाकारप्रतीतिर्निजमतिविहता नैव दृष्टे गुरुत्वं
व्यर्थोऽस्मिन् संमतिस्ते बहिरपि नियतं वक्ष्यते ग्राह्यलक्ष्म ।
व्याघातो लिङ्गसंख्यापरिमितिवचसां नास्त्युपाधिप्रभेदा-
देकं नानाकृति स्यान्निजगुणभिदया बाधिते धीः स्वहेतोः ॥ २३ ॥

धीत्वात्स्वान्यार्थशून्या विमतमतिरिति स्वोक्तिबुद्ध्यादि भग्नं
ज्ञानज्ञानेऽतिचारः क्षणिकविविधधीस्सन्ततेः संमतत्वात् ।
दृष्टान्तस्साध्यशून्यो न च निरुपधिकासत्प्रतीतं क्वचिन्न।
तावन्मिथ्यात्वक्लृप्तौ न तु फलति तवाशेषबाह्यार्थभङ्गः ॥ २४ ॥

प्रत्यक्षं संप्रयुक्ते स्मृतिरपि विदिते व्याप्तिसिद्धेऽनुमा स्यात्
शाब्दो धीरन्वितादौ भवति तदनुगा भ्रान्तिधीः क्वाप्यसिद्धेः ।
व्योमाम्भोजादिशब्दोऽप्यनियतमतिकृत् स्यात् पदार्थं त्यजेच्चेत्
नो चेत्स्यादन्यथाधीर्ध्रुवमिह यदि वाऽनन्वितत्वाप्रतीतिः ॥ २५ ॥

नेष्टः स्वान्यग्रहश्चेत् क्वचिदपि न हि धीर्धर्मिणी वः कृतान्ते
बुद्ध्यात्मा वासनातो न च किमपि तयाऽपेक्षणीयं बहिष्ठम् ।
धीसन्ताने त्वनादौ भवति च निखिला वासनैकः क्षणस्त-
न्निश्शेषध्वंसिनी सा युगपदखिलमप्युद्भमेत् कल्पनौघम् ॥ २६ ॥

स्वाकारोऽर्थैः स्वबुद्धौ निहित इति च नाधारहानाद्ययोगात्
स्वच्छे च्छाया परस्मिन्न च भवति न च स्यादसौ रूपशून्ये ।
साम्यासत्त्वाद्ययोगाद्विषयविषयिणोर्नापि भेदाग्रहः स्या-
न्नैकाका[रेण रक्तं] रोपरक्तं द्वयमपि स च ते ग्राह्यतो नातिरिक्तः ॥ २७ ॥

संसर्गाद्बोध्यबुद्ध्योरभिदधति सिताद्याकृतेस्सिद्धिमन्ये
सादेश्यात् तन्मतेऽसौ न तु भवति तथा कालजोऽतिप्रसक्तः ।
व्यंशे नैवाभिमुख्यं विषयविषयिताऽत्राकृतेः प्रागसिद्धा
क्वास्यास्संसृष्टनाशे जनिरिति कुसृतिः पूगताम्बूलनीतिः ॥ २८ ॥

भ्रान्तौ रूप्यादिरर्थो विलसति निरधिष्ठान इत्याहुरेके
तन्नाधिष्ठानदृष्टेरनियतिविरहादन्यथाऽतिप्रसङ्गात् ।
निष्ठ्यूतस्वाक्षिदोषप्रभृतिषु च भवेत् केश [गुच्छ] पुञ्जादिबुद्धिः
किंचैषाप्यन्यथा धीर्यदनिदमिदमित्यत्र भातं ब्रवीषि ॥ २९ ॥

ख्यातिं भ्रान्तिस्वरूपां जगदुरविषयां केऽपि तद्धीविरुद्धं
ख्यातिः कस्यापि पुंसः क्वचिदपि विषये सिद्धरूपा हि सिद्धा ।
अत्रार्थासत्त्वतः स्यादियमविषयता सर्वथा सत्ततो वा
तादृक्त्वेऽप्यन्यथाख्यात्यसदधिगमयोरेव पर्याय एषः ॥ ३० ॥

प्रत्यक्षादित्रयं च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्धा
प्रत्यक्षं त्वत्र साक्षात् प्रतिपदनुमितिर्व्याप्यतो व्यापके धीः ।
शाब्दी वाचार्थबुद्धिः स्मृतिरपि कथिता संस्क्रियामात्रजा सा
येषामिष्टान्यथाधीः पृथगभिदधिरे तैरिहान्येऽपि भेदाः ॥ ३१ ॥

ईदृक्त्वात्यन्तशून्ये न हि मिषति मतिर्नापि युक्तिस्तथात्वे
सामग्रीभेदवेद्ये पृथगवगतिरस्त्वत्र नैषाऽन्यथात्वात् ।
धीत्वादेर्वा विशिष्टं प्रथयति जनिता बुद्धिराद्याक्षयोगैः
तस्मात्संस्कारशून्येन्द्रियजनितमतिर्निर्विकल्पेति वाच्या ॥ ३२ ॥

लिङ्गाद्यव्यापृताक्षान्वयवति विषयेऽक्षार्थजन्यो विकल्प-
स्संस्कारस्त्विन्द्रियाणामिह सहकुरुतां तावता न स्मृतित्वम् ।
न स्यात्तस्यान्यथात्वं बहुविहृतिहतैः कल्पनात्वादिलिङ्गैः
स्याद्वानैकान्त्यमेषामनियतिमविसंवादिबाधश्च सूते ॥ ३३ ॥

शब्दात् प्रागर्थसिद्धेः परमपि च तयोरक्षभेदादिबोधात्
शब्दैक्ये वाच्यभेदादपि बहुषु पदेष्वेकवाच्यप्रसिद्धेः ।
साम्यासत्त्याद्ययोगाद्युगपदवगतेर्व्यक्तिजात्यादिशब्दैः
शब्दाध्यासो न युक्तः प्रथयति विषयं किंतु संज्ञा तटस्था ॥ ३४ ॥

धीत्वाच्छब्दानुविद्धां विमतमतिमृशन्त्यत्र शाब्दा न सत्त-
त्तस्यार्थः स्मार्यभावात् स्फुरतु च स कथं बालमूकादिबोधे ।
सूक्ष्मा वाङ्मात्रकल्प्या न हि समधिकता तादृशी क्वापि संज्ञा
वाचस्सूक्ष्माद्यवस्थाकथनमपि विदुर्भावनाद्यर्थमाप्ताः ॥ ३५ ॥

सत्त्वाद्यैरक्षगम्यं विमतमिति वदन् वक्तु बाधं विपक्षे
श्रुत्यालम्बे तु सैव प्रसजति शरणं तादृशादृष्टसिद्धौ ।
अध्यक्षं लौकिकं चेदधिगतिविहतं भावनोत्थं न युक्तं
नित्यं त्वक्षानपेक्षं निरुपधिरिह ते दुर्वचोऽक्षप्रकर्षः ॥ ३६ ॥

प्रत्येकं ह्यक्षवेद्यं प्रतिनियततया सर्वलोकप्रसिद्धं
काकोलूकादिकानामपि निजविषये ह्यैक्षि चक्षुःप्रकर्षः ।
मान्थालव्यालपूर्वेष्वपि खलु रसनास्पर्शनादिक्रमात् स्या-
दक्षस्थानैक्यमात्रं स्थितविषयमतस्त्वक्पिपासादिवाक्यम् ॥ ३७ ॥

संयुक्तव्यापकत्वप्रभृतिसहकृतेर्व्याप्तिधीसव्यपेक्षै-
रक्षैरेवानुमाधीर्भवतु किमितरत्कल्पयित्वेति चेन्न ।
निर्व्यापारेन्द्रियस्याप्युदयति खलु सा भूतभाव्यादिलिङ्गैः
स्मृत्यारूढैः श्रुतैर्वा मन इह सकलज्ञानसामान्यमिष्टम् ॥ ३८ ॥

पक्षस्थं व्याप्यमादौ विदितमिह तु न व्यापकस्य प्रसक्ति-
र्व्याप्तिस्तेन स्मृता स्यान्न च तत उभयोर्निश्चयः पक्षयोगे ।
तादृग्व्याप्यान्वितोऽसाविति मतिरपि न व्यापकं तत्र यच्छेत्
तस्मात्तद्व्यापिपक्षान्वयनियतमतिर्निक्षितस्संस्कृतेर्वा ॥ ३९ ॥

नायोग्यस्याक्षबाधः स्वविषयविहतिं न क्षमेतानुमानं
स्वस्यैवापेक्षितत्वादनुमितिमखिलां बाधते नागमोऽपि ।
निस्सन्देहप्रवृत्तेरिह निपुणधियां नाप्यसौ संशयात्मा
वैशिष्ट्यान्न स्मृतिश्चेत्यनुमितिरुदिताऽध्यक्षवन्मानमन्यत् ॥ ४० ॥

सामान्यं प्राक्प्रसिद्धं न पुनरनुगमस्सिद्धपूर्वो विशेषे
व्याप्तिस्सर्वापि भग्ना क्वचिदपि सकलव्याप्यसङ्गत्यदृष्टेः ।
भूयोदृष्टेर्व्यवस्था न हि भवति तथोपाधयः स्युर्दुरूहा
इत्याद्याः स्वेष्टतर्कस्थिरनियमजुषां दर्शनेनैव बाध्याः ॥ ४१ ॥

दृष्टेऽतीचारशङ्का न भवति यदि सा क्वापि देशान्तरादौ
सिद्धा तत्रानुमानस्थितिरथ न तदा क्वातिशङ्कावकाशः ।
व्याघातान्ता तु शङ्का न पुनरुदयति स्वप्रवृत्त्यादिभङ्गा-
द्यावच्छङ्कं च तर्कप्रसृतिरिह ततो नानवस्थादिदोषः ॥ ४२ ॥

व्याप्यत्वं यस्य यत्र स्फुरति सहचरे सोऽस्य हेतोरुपाधि-
स्साध्यव्यापी समोऽयं समगणि निपुणैस्साधनाव्यापकश्च ।
योग्यादृष्ट्या च तर्कैरपि तमपनुदेच्छङ्कितं निश्चितं वा
साम्यं नात्राहुरेके तदभिमतमिह व्यापकादर्शनादि ॥ ४३ ॥

नित्यो व्यापी च न स्यादुपधिरिह सदा सर्वतस्तत्प्रसङ्गा-
न्नाप्येष व्याप्यमात्राकृतिरवियुतितो नैकलिङ्गोपपत्तेः ।
नासौ पक्षेतरत्वप्रभृतिरपि भवेद्व्यापकोऽतिप्रसङ्गा—
त्तुल्यस्साध्येन पक्षे सह यदि घटते साधनं व्याप्नुयात् सः ॥ ४४ ॥

दृष्टं साध्यस्य यत्स्यात् सममधिकमपि क्वापि पक्षान्यता वा
तस्याभावेऽपि साध्ये सति यदि न भवेद्बाधकं व्यापि नैतत् ।
दुर्वारे बाधके तद्द्वयमपि दहनानुष्णतादावुपाधिः
साध्यं तद्व्याप्यतां वा हरतु स विरहात् पक्षतो हेतुतश्च ॥ ४५ ॥

व्याप्तिः पक्षान्वयश्चेत्युभयमविकलं यस्य हेतुस्स सम्य-
ङ्ङाभासौ तद्विहीनौ तदुभयविततिस्स्यादनैकान्तिकादिः ।
तत्तद्व्याक्रान्तुमोत्प्रेक्षणमपि घटते न क्वचित् साध्यसिद्ध्यै
स्वव्याघातादिदोषादविषयनियतेर्वाञ्छितालाभतश्च ॥ ४६ ॥

साध्येन व्याप्तिमेके जगदुरिह सकृद्दर्शनेनैव गम्यां
शङ्कानिर्धूतिमात्रं फलमिति च परं भूयसां दर्शनानाम् ।
धूतोपाधिस्तु योगः स्फुरति बहुविधैर्दर्शनैरेव पश्चात्
तज्जात्याधारभावाद्युगपदखिलमप्यक्षसंबन्धि तत्र ॥ ४७ ॥

अस्मिन् सत्येतदस्तीत्यवितथनियतेरन्वयव्याप्त्यभिख्या
तस्याभावे तु तन्नेत्ययमपि नियमस्तौ पृथक् चापृथक् च ।
तस्मात् त्रेधानुमानं कतिचिदकथयन्नेकहानाद् द्विधैके
कश्चिच्चेद्व्याप्तियुग्मप्रिय इह भविता वर्णयत्वेकविध्यम् ॥ ४८ ॥

सर्वस्थः केवलान्वय्यघटितसरणिः स्यात् स्ववृत्तेर्विकल्पे
साध्ये स्वस्मिन्नवृत्ते भवति च स तदा साध्यहानेर्विपक्षः ।
हेतोस्तद्वृत्त्यवृत्त्योरभिमतविहतिस्तत्र चैवं विकल्पा-
दित्युत्प्रेक्षाविभागं विघटयतु न वा सर्वथा व्याप्तिसिद्धिः ॥ ४९ ॥

तत्तद्धीव्यक्तिभेदात्प्रमितिविषयता मानसिद्धा घटादौ
प्रत्यक्षत्वं च तद्वत्तदिदमुभयमप्यक्षसिद्धं तथैव ।
इत्थं तद्वृत्त्यवृत्तिव्यतिकरकलहैः केवलान्वय्यपोहे
दुर्वारः शून्यवादो न तमभिमनुषे स्थापयन् किञ्चिदिष्टम् ॥ ५० ॥

ख्यातत्वाच्छब्दवाच्यो विमतिविषय इत्यादिरूपे तु साध्ये
व्यर्थोऽसौ हेतुरित्थं विमतिसमुदयासंभवादित्ययुक्तम् ।
व्याघातव्यक्त्यभावात् श्रुतिशकलबलात् कूटयुक्त्यादिभिर्वा
पाकः कश्चित् प्रमुह्यन् प्रमितिगतिकथापवित्रमैर्हि प्रबोध्यः ॥ ५१ ॥

पक्षेऽन्यत्रापि साध्यं न मितमविदिते नापि संबन्धधीः स्यात्
क्वापीत्यप्यस्य सिद्धावृजुरविहतिमान्नास्ति सामान्यहेतुः ।
सत्यप्यस्मिन्न शक्याधिकरणनियतिः स्वेच्छया सर्वसाम्या-
द्वैषम्यं दुर्वचं तत्प्रमितिकरणता क्वापि नावीतहेतोः ॥ ५२ ॥

साध्याभावो विपक्षे कथमिव विदितस्तस्य साध्याप्रसिद्धे-
र्भावात्मन्यप्यमुष्मिन् प्रतिभटवपुषा ह्यत्र ते व्याप्तिसिद्धिः ।
इत्यज्ञातान्वयेऽस्मिन् कथमिव सुशकः स्यादभावो नियन्तुं
हेतौ सारोऽन्वयोऽतः क्वचिदनुपधिकः केवलान्वय्यपीष्टः ॥ ५३ ॥

संत्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात्
मैवं लक्ष्मैव भेदस्तदवगमकमित्याप्तवाक्ये तदुक्तिः ।
यद्वा गन्धादिरप्त्वप्रभृतिविरहितेष्वेव दृष्टो घटादि-
ष्वाज्यादावन्वयी स्यादयमिव विमतेष्वेकलक्ष्मण्यपोहः ॥ ५४ ॥

भेदोऽबादेर्घटादौ विदित इतरथा त्वप्रसिद्धिः पुरोक्ता
कृत्स्नक्षोण्यन्वितोऽसौ न विदित इति चेत् पक्षसिद्धिः कथं स्यात् ।
व्याहारेऽप्येवमूह्यं न खलु न विदितं तन्निमित्तं घटादौ
नो चेत्तत्तन्निमित्तव्यवहृतिनियमस्थापनं दुश्शकं ते ॥ ५५ ॥

विद्यास्थानेषु धर्म्येष्विह यदगणयन् विस्तरं न्यायपूर्वं
तत्रापि ह्यक्षपादस्स इति न नियतिर्न्यायतत्त्वेऽनुगम्ये ।
नार्षत्वादिप्रधानं क्वचिदपि यदि वा वार्तिकं क्वापि युक्तं
यद्वा नेयं कथंचिन्निखिलमपि न किं निर्वहन्त्येवमन्ये ॥ ५६ ॥

अन्यस्मै स्वप्रतीतं प्रकटयति यया वाक्यवृत्त्याऽनुमानं
तत्रोदाहृत्युपेताऽप्यविकलमिह तद्बोधयेन्नोपनीतिः ।
युक्ता तूदाहृतिस्स्वोपनयनिगमना सप्रतिज्ञादिका वा
वक्तव्या वावदूकैस्तदधिकमपि वा संमतैः स्याद्यथेष्टम् ॥ ५७ ॥

कार्यैर्वा कारणैर्वा स्वगुणत उत वा किञ्चिदस्तीति सिद्धं
पक्षीकारादियोग्यं समयनियमितव्यक्तिभेदो न दोषः ।
सिद्धान्तास्पृष्टचित्तैरिति खलु पशुभिः पामरैर्वाऽनुमेयं
नो चेद्रोचेत कस्मै विषमितमनसे वादसंग्रामकेलिः ॥ ५८ ॥

आभासोद्धारवाक्ये स्वयमिह पठितेऽप्यक्षतान्यस्य शङ्का
स्याच्चेन्व्यर्थोपनीतिर्निगमनमपि ते तत्तदर्थे यदात्थ ।
तस्मादुद्घाटितानां परिहृतिरुचिता जेतुमिच्छोर्विशेषा-
दुक्ते माने विमर्शो यदि भवति परं तत्र तर्कोऽपि वाच्यः ॥ ५९ ॥

तर्को व्याप्याभ्युपेतावनभिमतिपदव्यापकस्य प्रसक्ति-
र्मानप्रत्यूहघातिद्विविषय उदितः पञ्चधाऽऽत्माश्रयादिः ।
विश्रान्तिर्वैपरीत्ये प्रतिहृतिविरहोऽनिष्टताऽनानुकूल्यं
व्याप्तिश्चास्याङ्गमेनं कतिचिदनुमितेस्तादृशं भेदमाहुः ॥ ६० ॥

यस्सर्वं नाभ्युपेयात् स्वपरमतविदा केन किं तस्य साध्यं
प्रश्नोऽसावुत्तरं नः कथमनधिकृते कल्पनीयाः कथाः स्युः ।
मध्यस्थोऽप्येतदेवं यदि न न मनुते योजयेन्नात्र वादं
नो चेन्माध्यस्थ्यहानिः परमनधिकृतिस्त[त्र]स्य शिष्याय वाच्या ॥ ६१॥

निर्दिष्टा व्युत्थितोक्तेर्विततिरिह कथा सा त्रिधा तत्र वादः
कर्तव्यो मानतर्कैरभिमतिनियतैस्तत्त्वसिद्धयै विरागैः ।
जल्पाख्याऽन्या जयार्था भवति कथकयोस्साधनाक्षेपवत्त्वे
सैव प्रोक्ता वितण्डा त्यजति परमते साधनं तां द्विधैके ॥ ६२ ॥

साध्येन व्याप्तिमेके जगदुरिह सकृद्दर्शनेनैव गम्यां
शङ्कानिर्धूतिमात्रं फलमिति च परं भूयसां दर्शनानाम् ।
धूतोपाधिस्तु योगः स्फुरति बहुविधैर्दर्शनैरेव पश्चात्
तज्जात्याधारभावाद्युगपदखिलमप्यक्षसंबन्धि तत्र ॥ ४७ ॥

अस्मिन् सत्येतदस्तीत्यवितथनियतेरन्वयव्याप्त्यभिख्या
तस्याभावे तु तन्नेत्ययमपि नियमस्तौ पृथक् चापृथक् च ।
तस्मात् त्रेधानुमानं कतिचिदकथयन्नेकहानाद् द्विधैके
कश्चिच्चेद्व्याप्तियुग्मप्रिय इह भविता वर्णयत्वैकविध्यम् ॥ ४८ ॥

सर्वस्थः केवलान्वय्यघटितसरणिः स्यात् स्ववृत्तेर्विकल्पे
साध्ये स्वस्मिान्नवृत्ते भवति च स तदा साध्यहानेर्विपक्षः ।
हेतोस्तद्वृत्त्यवृत्त्योरभिमतविहतिस्तत्र चैवं विकल्पा-
दित्युत्प्रेक्षाविभागं विघटयतु न वा सर्वथा व्याप्तिसिद्धिः ॥ ४९ ॥

तत्तद्धीव्यक्तिभेदात्प्रमितिविषयता मानसिद्धा घटादौ
प्रत्यक्षत्वं च तद्वत्तदिदमुभयमध्यक्षसिद्धं तथैव ।
इत्थं तद्वृत्त्यवृत्तिव्यतिकरकलहैः केवलान्वय्यपोहे
दुर्वारः शून्यवादो न तमभिमनुषे स्थापयन् किञ्चिदिष्टम् ॥ ५० ॥

ख्यातत्वाच्छब्दवाच्यो विमतिविषय इत्यादिरूपे तु साध्ये
व्यर्थोऽसौ हेतुरित्थं विमतिसमुदयासंभवादित्ययुक्तम् ।
व्याघातव्यक्त्यभावात् श्रुतिशकलबलात् कूटयुक्त्यादिभिर्वा
पाकः कश्चित् प्रमुह्यन् प्रमितिगतिकथापक्त्रिमैर्हि प्रबोध्यः ॥ ५१ ॥

पक्षेऽन्यत्रापि साध्यं न मितमविदिते नापि संबन्धधीः स्यात्
क्वापीत्यप्यस्य सिद्धावृजुरविहतिमान्नास्ति सामान्यहेतुः ।
सत्यप्यस्मिन्न शक्याधिकरणनियतिः स्वेच्छया सर्वसाम्या-
द्वैषम्यं दुर्वचं तत्प्रमितिकरणता क्वापि नावीतहेतोः ॥ ५२ ॥

साध्याभावो विपक्षे कथमिव विदितस्तस्य साध्याप्रसिद्धे-
र्भावात्मन्यप्यमुष्मिन् प्रतिभटवपुषा ह्यत्र ते व्याप्तिसिद्धिः ।
इत्यज्ञातान्वयेऽस्मिन् कथमिव सुशकः स्यादभावो नियन्तुं
हेतौ सारोऽन्वयोऽतः क्वचिदनुपधिकः केवलान्वय्यपीष्टः ॥ ५३ ॥

संत्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात्
मैवं लक्ष्मैव भेदस्तदवगमकमित्याप्तवाक्ये तदुक्तिः ।
यद्वा गन्धादिरप्त्वप्रभृतिविरहितेष्वेव दृष्टो घटादि-
ष्वाज्यादावन्वयी स्यादयमिव विमतेष्वेकलक्ष्मण्यपोह्यः ॥ ५४ ॥

भेदोऽत्रादेर्घटादौ विदित इतरथा त्वप्रसिद्धिः पुरोक्ता
कृत्स्नक्षोण्यन्वितोऽसौ न विदित इति चेत् पक्षसिद्धिः कथं स्यात् ।
व्याहारेऽप्येवमूह्यं न खलु न विदितं तन्निमित्तं घटादौ
नो चेत्तत्तन्निमित्तव्यवहृतिनियमस्थापनं दुश्शकं ते ॥ ५५ ॥

विद्यास्थानेषु धर्म्येष्विह यदगणयन् विस्तरं न्यायपूर्वं
तत्रापि ह्यक्षपादस्य इति न नियतिर्न्यायतत्त्वेऽनुगम्ये ।
नार्षत्वादिप्रधानं क्वचिदपि यदि वा वार्तिकं क्वापि युक्तं
यद्वा नेयं कथंचिन्निखिलमपि न किं निर्वहन्त्येवमन्ये ॥ ५६ ॥

अन्यस्मै स्वप्रतीतं प्रकटयति यया वाक्यवृत्त्याऽनुमानं
तत्रोदाहृत्युपेताऽप्यविकलमिह तद्बोधयेन्नोपनीतिः ।
युक्ता तूदाहृतिस्त्वोपनयनिगमना सप्रतिज्ञादिका वा
वक्तव्या वावदूकैस्तदधिकमपि वा संमतैः स्याद्यथेष्टम् ॥ ५७ ॥

कार्यैर्वा कारणैर्वा स्वगुणत उत वा किञ्चिदस्तीति सिद्धं
पक्षीकारादियोग्यं समयनियमितव्यक्तिभेदो न दोषः ।
सिद्धान्तास्पृष्टचित्तैरिति खलु पशुभिः पामरैर्वाऽनुमेयं
नो चेद्रोचेत कस्मै विषमितमनसे वादसंग्रामकेलिः ॥ ५८ ॥

आभासोद्धारवाक्ये स्वयमिह पठितेऽप्यक्षतान्यस्य शङ्का
स्याच्चेद्व्यर्थोपनीतिर्निगमनमपि ते तत्तदर्थे यदात्थ ।
तस्मादुद्घाटितानां परिहृतिरुचिता जेतुमिच्छोर्विशेषा-
दुक्ते माने विमर्शो यदि भवति परं तत्र तर्कोऽपि वाच्यः ॥ ५९ ॥

तर्को व्याप्त्याभ्युपेतावनभिमतिपदव्यापकस्य प्रसक्ति-
र्मानप्रत्यूहघातिद्विविषय उदितः पञ्चधाऽऽत्माश्रयादिः ।
विश्रान्तिर्वैपरीत्ये प्रतिहतिविरहोऽनिष्टताऽनानुकूल्यं
व्याप्तिश्चास्याङ्गमेनं कतिचिदनुमितेस्तादृशं भेदमाहुः ॥ ६० ॥

यस्सर्वं नाभ्युपेयात् स्वपरमतविदा केन किं तस्य साध्यं
प्रश्नोऽसावुत्तरं नः कथमनधिकृते कल्पनीयाः कथाः स्युः ।
मध्यस्थोऽप्येतदेवं यदि न न मनुते योजयेन्नात्र वादं
नो चेन्माध्यस्थ्यहानिः परमनधिकृतिस्त[त्र]स्य शिष्याय वाच्या ॥ ६१॥

निर्दिष्टा व्युत्थितोक्तेर्विततिरिह कथा सा त्रिधा तत्र वादः
कर्तव्यो मानतर्कैरभिमतिनियतैस्तत्त्वसिद्ध्यै विरागैः ।
जल्पाख्याऽन्या जयार्था भवति कथकयोस्साधनाक्षेपवत्त्वे
सैव प्रोक्ता वितण्डा त्यजति परमते साधनं तां द्विषेके ॥ ६२ ॥

कर्तव्यत्वेन यत्तु प्रमितिपरवशैः कल्पितं स्वेच्छया वा
यच्चाकर्तव्यमेवं परिभवनपदं तत्प्रहाणग्रहौ स्तः।
स्वाचारद्यूतसंयत्प्रभृतिषु च तथा स्वीकृतेयं व्यवस्था
नैनामीषद्वितण्डाऽप्यलमतिपतितुं साधनांशोज्झिताऽपि ॥ ६३ ॥

सद्दोषोक्त्या कथायां परपरिभवनं स्वोक्तहान्यादिनाम्ना
तत्त्वाबोधस्य लिङ्गं विविधमकथयन्निग्रहस्थानमाप्ताः।
तत्राचोद्यानुयोगं द्विविधमशकनासिद्धिभेदादवोचन्
पूर्वो जातिः परस्तु च्छलमनृतवचः स्यादकालग्रहश्च ॥ ६४ ॥

जातिः स्वव्याहृता वागुपधिनियतिभिर्भिद्यतेऽनेकधा सा
युक्तत्यागस्त्वयुक्तग्रहणमविषये वृत्तिरप्यत्र दोषाः।
स्वव्याघातोऽनुवृत्तश्छलमपि वचसां कल्पितार्थे निषेध
स्तत्तद्वृत्तिप्रभेदादिदमपि विविधं विस्तरेणालमत्र ॥ ६५ ॥

यस्मिन्मानप्रवृत्तिस्तदिदमशरणैरभ्युपेत्यं हि सर्वै-
र्व्याघातो यत्र दृष्टस्तदपि न शरणं साधने दूषणे वा।
इत्थं सिद्धे कथानां रहसि कथकयोस्सावधानत्वभूम्ने
षट्पक्ष्यन्ता सदुक्तिः परिषदनुमता रुद्धरोधावकाशा ॥ ६६ ॥

वाक्यार्थो यस्त्वपूर्वो न खलु किमपि तद्व्याप्यमस्मिन् पदादौ
साङ्गत्यं बोधकत्वादधिकमनुमितौ ग्राह्यमत्रैतदेव।
वक्तृज्ञानानुमानादिकमपि न भवेदन्ततो व्याप्त्यभावा-
त्तत्तल्लिङ्गाप्रतीतावपि मतिजननाद्वक्त्रभावाच्च वेदे ॥ ६७ ॥

प्रत्येकं स्वानुभूतात्तदुभयमधिकं संस्कृतिद्वन्द्वयोगात्
स्मृत्यारूढं विजानन्त्यनुमितिवचसोर्वेद्यमप्येवमस्तु।
पारोक्ष्यं तत्स्मृतित्वादनधिकमिति न प्रागनिर्धारितांश-
ज्ञानस्य स्पष्टदृष्टेः परिहृतहरितस्त्वेतदस्पष्टमाहुः ॥ ६८ ॥

प्रत्यक्षादीव मानं विमतिपदवचो हेतुदोषाद्यभावा-
द्वाक्यत्वादप्रमाणं विमतमिति यदि स्वोक्तिबाधादयः स्युः।
अव्युत्पन्नस्य बोधं न जनयति वचस्संगतिज्ञानहाने-
र्लिङ्गव्याप्तिप्रतीतेः पुरत इव न चावद्यमेतावताऽस्य ॥ ६९ ॥

वक्त्री व्युत्पत्तितः प्राग्यदि निजविषयं वाग्विभक्त्यन्वयाद्यैः
किं व्युत्पत्त्या तिरश्चामपि न कथमितो बालकानां च बोधः।
स्वा[र्थे]र्थश्शब्दस्तथा चेत्तदपि न विषयैस्तस्य साम्यात्तदन्यै
रव्युत्पन्नत्वतो वा स्वमपि न गमयेदेष तद्वत्स्ववाच्यम् ॥ ७० ॥

शब्दस्संकेतितोऽर्थं गमयति विमतोऽपीति शास्त्रप्रतीपं
तत्कर्ताऽद्य ह्यसिद्धस्स च दुरधिगमस्सृष्टिकालेऽनुमानैः।
श्रुत्या चेत्प्रत्युतैतद्विभुरपि तनुते वेदतो नामरूपे
व्याकृत्यादेर्विरुद्धौ क्रमजनिविलयौ क्षुद्रभाषासु नैवम् ॥ ७१ ॥

व्युत्पत्तिः कार्य एव प्रथमसमुदिता वृद्धवाक्यात्प्रवृत्तौ
तत्सर्वास्तत्पराः स्युर्गिर इति यदि न क्वापि सिद्धेऽपि सिद्धेः।
स्याद्वा कार्यैकलक्ष्या प्रथममिह कुतश्शब्दशक्ति नियच्छे-
त्तात्पर्यं चान्यथाऽपि ह्यनितरशरणैर्लोकवेदप्रयोगैः ॥ ७२ ॥

कोऽसौ पाञ्चाल इत्याद्यनुभवतु वचस्सिद्धतात्पर्ययोगं
शास्त्रं कार्यैकशेषं गमयति निखिलं सिद्धमित्यर्धरम्यम्।
यत्र ज्ञानं पुमर्थस्तदवधिवचनं तत्र बाधोऽपि नास्मि-
न्नातो नाट्यादिनीतिर्निधिवचननयादन्यथा स्याद्विरोधः ॥ ७३ ॥

कस्मैचिज्ज्ञापयैतत्स्वमिति परकृतां वीक्ष्य चेष्टां तदन्य-
स्तस्मै ब्रूते ततस्तद्गमकमिह वचो वेत्ति चेष्टाविदन्यः।
तत्तद्वाच्येषु शब्दैर्हितविदभिहितैरङ्गुलीयोगपूर्वं
जानन्नन्यत्र तत्तत्स्वहितजनकृतिं शिक्षणार्थामिवैति ॥ ७४ ॥

कश्चित् कस्यापि पुंसस्सुतजनिमिह तत्प्रीतिकृत्त्वं च जानन्
तज्जन्मोक्तिप्रहृष्टे पितरि सुतजनेर्वेत्ति तद्वाच्यभावम्।
शक्यं तद्धर्षहेतुस्स इति नियमनं सन्निधानादियुक्ते-
रासीदत्सु प्रसूत्याद्यनियतिकथनं कार्यवाक्येऽपि शक्यम् ॥ ७५ ॥

शब्दस्यैतस्य वाच्यस्स्वयमिति च तथा वाचकोऽसावमुष्ये-
त्येवं शिक्ष्येत पश्चात् कतिपयवचसां पूर्वनिर्ज्ञातशक्तिः।
इत्थं व्युत्पन्नतत्तत्सहपठितिवशाद्वाचकान् वेत्ति कांश्चि-
द्यौ लोके ते हि वेदे समधिकमिह यत्तत्तु तत्रैव वेद्यम् ॥ ७६ ॥

व्युत्पाद्यं नाप्रतीतं प्रसजति विदिते नैरपेक्ष्यं श्रुतीना-
मिन्द्राद्यर्थे पदानामिति दुरधिगमा नामतेत्यप्ययुक्तम्।
अप्रत्यक्षेषु सिंहप्रभृतिषु वचनैः कैश्चिदारण्यकोक्तैः
व्युत्पद्यन्ते हि पौराः स्वयमपि च वदन्त्येवमत्रापि वार्ता ॥ ७७ ॥

व्यक्तिः शब्दैर्न बोध्या यदि न खलु भवेदन्वितज्ञप्तिसिद्धि-
स्तच्छक्तिर्व्यक्तिमात्रे न च भवति यतः स्वोपलम्भादिबाधः।
धर्मो धर्मी च नैकं किमपि न च तयोर्भिन्नयोरप्यभेद-
स्तस्मात्तां तद्विशिष्टामभिदधति पदान्यन्यथा गत्यभावात् ॥ ७८ ॥

जातिं व्यक्त्या विहीनां स्पृशति न धिषणा तेन जातौ प्रवृत्ता
शक्तिर्व्यक्तिं स्पृशेच्चेत् स्थित इह वचसां तद्विशिष्टावगाहः ।
जातेर्बोधः स्वहेतोः स्थितिरपि हि भवेत्क्वापि गोत्वोक्तिनीत्या
शब्दात्तत्पारतन्त्र्यं स्फुरति यदि पराबोधने तन्न शक्यम् ॥ ७९ ॥

जातौ शक्तिर्लघुत्वात् भवति च वचसां भाषणं जातिमात्रे
भेदो निष्कर्षकेभ्यस्त्विह परमजहल्लक्षणाया निरूढिः ।
इत्युक्तं कैश्चिदेवं यदि भवति तदोपाधिशब्देऽपि नीति,
र्मन्दं वैषम्यमात्रं भवतु च नियतिः प्रत्ययैर्लक्षणायाः ॥ ८० ॥

मत्वर्थीयानुशिष्टिर्गुणवचनगणे वैभवात्स्यादसौत्री
शक्तिस्तत्रापि तत्तद्गुणवति नियता जातिशब्दाविशेषात् ।
निष्कृष्यैषां प्रयोगे क्वचिदगतितया द्रव्य [शक्ति] वृत्तिर्निरुद्धा
शक्तिस्साम्ये विभक्तेस्तदवधिररुणाधिक्रियायामभाषि ॥ ८१ ॥

जीवं देवादिशब्दो वदति तदपृथक्सिद्धभावाभिधाना-
न्निष्कर्षाभावयुक्ताद् बहुरिह च दृढो लोकवेदप्रयोगः ।
आत्मासंबन्धकाले स्थितिरनवगता देवमर्त्यादिमूर्ते-
र्जीवात्मानुप्रवेशाज्जगति विभुरपि व्याकरोन्नामरूपे ॥ ८२ ॥

संस्थानैक्याद्यभावे बहुषु निरुपधिर्देहशब्दस्य रूढि,
र्लोकाम्नायप्रयोगानुगतमिह ततो लक्ष्म निष्कर्षणीयम् ।
अव्याप्तत्वादिदुःस्थं परमतपठितं लक्षणं तत्र तस्मा-
द्यद्वोतुल्याश्रयं यद्वपुरिदमपृथक्सिद्धिमद्द्रव्यमस्य ॥ ८३ ॥

शब्दैस्तन्वंशरूपप्रभृतिभिरखिलः स्थाप्यते विश्वमूर्ते-
रित्थंभावः प्रपञ्चस्तदनवगमतस्तत्पृथक्सिद्धमोहः ।
श्रोत्राद्यैराश्रयेभ्यः स्फुरति खलु पृथक्च्छब्दगन्धादिधर्मो
जीवात्मन्यप्यदृश्ये वपुरपि हि दृशा गृह्यतेऽनन्यनिष्ठम् ॥ ८४ ॥

निष्कर्षाकूतहानौ विमतिपदपदान्यन्तरात्मानमेकं
तन्मूर्तेर्वाचकत्वादभिदधति यथा रामकृष्णादिशब्दाः ।
सर्वेषामाप्तमुख्यैरगणि च वचसां शाश्वतेऽस्मिन् प्रतिष्ठा
पाकैस्तस्याप्रतीतेर्जगति तदितरैः स्याच्च भङ्क्त्वा प्रयोगः ॥ ८५ ॥

व्युत्पत्तिर्वाचकानां स्थिरचरविषये लोकतो नेश्वरादा-
वव्युत्पन्नार्थवृत्तिस्त्वधिपतिनयतः स्यादमुख्येति चेन्न ।
व्युत्पत्तेः पूरणं हि श्रुतिशिरसि कृतं नोपरोधः कथंचि-
द्देहित्वं चाधिपत्यात् समधिकमिह खल्वक्षपादप्रणीतात् ॥ ८६ ॥

न ह्यक्षैःकैऽपि वर्णाभ्यधिकमिह विदुर्वाचकं सावधानाः
शब्दादर्थं प्रतीमस्त्विति च जनवचो नैकमन्यव्ध्यनक्ति ।
सामग्र्यैक्यादिनीत्या भवति मतिरियं तादृशे वर्णसंघे
संभेदे वा पदानामिति न तदधिकः कोऽपि शब्दोऽपरोक्षः ॥ ८७ ॥

यादृग्भिः स्फोटधीस्ते भवति भवतु तैरर्थधीरेव वर्णैः
वर्णेषूक्तो विकल्पस्समगतिरुभयोर्यौगपद्यक्रमादिः ।
वाक्यस्फोटेऽपि तुल्यं तदिदमिह पदैरक्षरैर्वाऽवगम्ये
स्फोटे तद्बुद्धिबोध्ये सति च न घटते तत्तदध्यासक्लृप्तिः ॥ ८८ ॥

शब्दो ब्रह्मेति यत्तन्मुनिभिरभिदधे स ह्यचिद्भेद इष्टः
सूक्ष्माकारस्तु सोऽर्थं न गमयति यतस्सत्तया नैष हेतुः ।
स्फोटस्त्वं वर्णजुष्टस्त्विति यदभिहितं भारते साऽपि शक्तिः
वर्णानां स्यात्तयाऽर्थः स्फुट इति घटते स्फोटशब्दोऽपि तस्याम् ॥ ८९ ॥

यत्प्रत्येकादिकल्पे गमकविषययोरप्रतीत्यादिदोषात्
बौद्धाश्शब्दाश्च बुद्धिं कतिचिदभिदधुर्वाक्यवाक्यार्थरूपाम् ।
नैतद्बाह्येन बाह्यो विदित इति मतेर्बाधकोक्तेश्च साम्या-
द्वाक्यादावैक्यबुद्धेस्त्वनुकथितनयादन्यथासिद्धितश्च ॥ ९० ॥

आचष्टे प्रत्ययश्च प्रकृतिरपि मिथः श्लिष्टमित्यभ्युपेतं
स्पष्टं दण्ड्यादिशब्देष्वपि तदितरथा धीविरोधप्रसङ्गात् ।
अन्योन्यस्मारितार्थान्वितमभिदधति स्वार्थमेवं पदानि
स्यान्नातश्चक्रकादिर्न च पुनरभिधा नापि वाक्यस्य भेदः ॥ ९१ ॥

स्वार्थे शब्दस्य चासावपि मिलितमतौ व्यापृतावित्यनेकाः
कल्प्यास्ते शक्तयः स्युः कथमपि न भवेत्तादृशी शक्तिरेका ।
अर्थेषु स्मारितेषु प्रथममथ च तद्योग्यतादौ विमृष्टे
शब्दैरेवान्विते धीर्मम भवति तव स्वार्थबोधव्यपेतैः ॥ ९२ ॥

संसर्गं वाक्यवेद्यं स्फुटमभिदधते कानिचिद्भाष्यवाक्या-
न्याद्यव्युत्पत्तिरुक्ता प्रतिपदमिह च क्वापि मान्यस्य हानिः ।
इत्थं मत्वा सयूथ्याः कतिचिदभिहितान्योन्यसंसर्गमीषु-
स्तत्तत्स्वारस्यलोकप्रतिपदनुगमात्तच्च नाधिक्षिपामः ॥ ९३ ॥

द्वारे भिन्ने समानाधिकरणवचसामैक्यतात्पर्यसिद्धेः
भेदाभेदस्थितानामिदमनुगुणमित्याहंतादेर्दुराशा ।
वस्तुस्थित्यैकरूप्ये वचनमितरथा बोधयत्स्यान्न मानं
तन्मानत्वाद्द्विधैकं स्थितमिति च न सद्भेद एवोपपत्तेः ॥ ९४ ॥

ऐकाधार्याद्विगीतं तदिदमिति नयाल्लक्षयेन्निर्विशेषं
मैवं बाधातिचारस्ववचनहतिभिः स्वोक्तदृष्टान्तदौस्थ्यात् ।
तत्तेदन्ताविरोधो वचसि न हि भवेत्तादृशाध्यक्षनीत्या
नो चेत् स्याद्वस्समस्तं क्षणिकमिह पुनर्देशभेदः क्रमात् स्यात् ॥ ९५ ॥

सत्याद्युक्तिः प्रकृष्टद्युतिरुडुपतिरित्यादिवद्वस्तुमात्रं
ब्रूते लक्ष्मोक्तिभावादिति यदि न तथा स्वोक्तिबाधादिदोषात् ।
रोधस्सद्वाक्यभावाद्भवति च कथितोदाहृतिस्साध्यहीना
प्रश्नोक्तेश्चाविशिष्टं न विषय इति नापृष्टजल्पोपहासः ॥ ९६ ॥

एकत्रार्थे समानाधिकरणवचसां वृत्तिरुक्ता तत्रोऽत्र
स्थाप्ये तत्तन्निमित्ते प्रसजति हि भिदा धर्मिणोऽपीति चेन्न ।
नेतव्यं लक्ष्मवाक्यं प्रतिपदनुगुणं साऽत्र सिद्धा विशिष्टे
व्युत्पत्तेस्तादृशत्वाद् भवति तु विहृतेः क्वापि भिन्नं विशेष्यम् ॥ ९७ ॥

नानाधर्मप्रणाड्या बहुभिरपि पदैर्धर्मिणोऽत्रैक्यसिद्धौ
नान्योन्याधारतैक्ये प्रसजत उचितज्ञापनैकप्रवृत्तेः ।
बोध्ये सर्वैर्विशिष्टे न च वचनभिदा तच्च सूत्रादिसिद्धं
तात्पर्यं च स्वरूपे क्वचिदपि न भवेन्निर्निमित्तेऽनुपाख्ये ॥ ९८ ॥

बोध्यं चेन्निर्विशेषं बहुभिरपि पदैरेकतोऽन्यद्वृथा स्या-
दन्यव्यावृत्तिभेदात् फलमभिदधतः स्यादखण्डत्वहानिः ।
व्यावृत्तिश्चेत्स्वरूपं भ्रम इह न भवेद् भासमाने तु तस्मिं-
स्तस्मात् स्वार्थेषु मुक्तेष्वखिलपदगता लक्षणैवात्र लाभः ॥ ९९ ॥

बाधार्थं यत्समानाधिकरणवचनं नाविशिष्टं वदेत्त-
त्तत्रैकोऽध्यासयोग्याकृति वदति परो भेदयुक्तं तु शब्दः ।
निर्दिष्टे वस्तुमात्रे भवतु कथमिहारोपितं बाधनीयं
भ्रान्तिर्भेदाप्रतीतौ विरमतु च कथं हेतुपौष्कल्ययुक्ता ॥ १०० ॥

मानं बाधाद्यभावान्निगम इतरवद्वक्तृदोषस्तु नास्मिन्
बाधोऽप्यस्यानुमाद्यैरपि न हि सुवचस्तद्बलेनैव बाध्यैः ।
संदिग्धा नात्र बुद्धिर्न च न समुदिता तेन विज्ञानसिद्धा-
वुत्सर्गाम्नानमेतन्मतिकलुषजयः स्याच्च मीमांसयैव ॥ १०१ ॥

मानं वेदोऽपि वक्तुर्गुणत इति परं न्यायवित्साधयिष्यन्
सामान्याद् बुद्धिहेतोः प्रमितिमधिकतस्साधयत्यन्यनीत्या ।
कार्यत्वं भेदकं स त्विह वदतु कथं धीविशेषस्वहेतौ
सिद्धेऽसिद्धेऽपि नित्यप्रमितिमति विभौ निष्फलत्वादमुष्य ॥ १०२ ॥

संवित्तीनां यथावस्थितनिजविषयोल्लेख औत्सर्गिकः स्या-
द्वह्न्यादेर्दाहकत्वप्रभृतिवदुपधेरन्यथात्वं भ्रमांशे ।
नित्यज्ञानप्रमात्वं वदसि च निरुपाध्येव निर्हेतुकत्वा-
द्दोषाभावात् प्रमा चेच्छ्रुतिरपि जयिनी दोषदूरोज्झिता नः ॥ १०३ ॥

सर्वं साक्षात्करोति स्वत उपधिगणैरुज्झितस्सप्रसादः
प्रामाण्यं तत्र नोपाध्युपनतमिति तत्तुल्यताऽन्यत्र युक्ता ।
आत्मस्वात्मांशयोरत्र क्वचिदपि न भवेद् भ्रान्तिरंशान्तरेऽपि
स्यादेषा न स्वरूपे क्वचन परमसौ द्विप्रकारे प्रकारे ॥ १०४ ॥

भ्रान्तिज्ञानेऽपि सत्यं किमपि तव मतेऽप्यस्त्यधिष्ठानपूर्वं
सत्यैकालम्बि चैकं समयिभिरखिलैर्दुस्त्यजं स्वार्थसिद्धयै ।
बुद्धेस्तत्पक्षपातः स्वयमपि कथितस्सौगतैरेव कैश्चित्
स्वात्मांशे सत्यता च स्वत इति तदसौ वैदिकोक्ते वृथेर्ष्या ॥ १०५ ॥

अप्रामाण्यं स्वभावो गुणत इतरदित्यत्र न ह्यस्ति हेतु-
र्नाभावो हेत्वपेक्षस्स्थिति च न नियमादन्यथाऽतिप्रसङ्गात् ।
किञ्चाभावोऽपि भावान्तरमिति मथने स्वेष्टभङ्गश्च भावी
मुक्तौ शुद्धां हि बुद्धिं वदसि न यदि सा विभ्रमः स्यान्न वा स्यात् ॥ १०६ ॥

मानत्वामानते द्वे स्वत इति वदतस्सांख्यसिद्धान्तिनस्ते
व्यक्तिद्वैतं तयोश्चेत् प्रतिनियततयोपाधिभेदोऽभ्युपेत्यः ।
व्यक्त्यैक्ये व्याहृतिः स्यादथ निजविषयेष्वंशतस्ते तथाऽपि
स्याद्धीस्सर्वा तथेति स्वपरसमययोर्द्वेषरागौ जुषस्व ॥ १०७ ॥

ज्ञानं मानं स्वतश्चेत्कथमिव विशयः कस्य चित्क्वापि भावी
मीमांसा चानपेक्ष्येत्यसदुपधिकृताकारशङ्कोपपत्तेः ।
नेत्रालोकादिनीतेर्भवति च निगमोऽप्यत्र मीमांसयार्थी
हेतूनां साध्यसिद्धौ सहकृदनुविधिर्हेतुभावं न हन्ति ॥ १०८ ॥

सर्वज्ञस्य प्रमाया न खलु न विषयः स्यात्स्वकीयं प्रमात्वं
निर्बाधा धीः प्रमेति प्रमितिरपि निजं गाहते मानभावम् ।
मानेऽर्थः स्वात्मनैव स्फुरति न च परं भाति शङ्कानिरासे
भ्रान्त्या स्वार्थान्यथात्वं स्वयमनवगतं बाधकैर्वेद्यतेऽतः ॥ १०९ ॥

दृष्टं मान्थालभोगिप्रभृतिषु करणस्थानभेदादिचित्रं
तादृग्द्वीपान्तरादौ श्रुतमपि न मृषा वेदसिद्धे तथा नः ।
यत्रानाप्तोक्तताधीनं भवति विहतिर्नापि संभावनायाः
किं व्याप्त्याऽत्रोपचारो विहतिमति भवेन्नैव तद्व्याप्तिदौःस्थ्ये ॥ ११० ॥

वाक्यत्वात् कर्तृमत्यः श्रुतय इति यदि ब्रूहि बाधं विपक्षे
श्रुत्या स्मृत्या च बाध्या त्वदनुमितिरियं कर्तुरत्रास्मृतेश्च ।
त्वं तावत्तिष्ठ लोकैर्नं हि पुरुषगुणप्रत्ययात्तद्गृहीति-
स्सन्तश्चापह्नवीरंस्तमिह न मुनयस्सत्यनिष्ठाः कृतज्ञाः ॥ १११ ॥

आदौ वेदैक्यवादस्त्वविभजनवशात्तावता नान्यसृष्टि-
स्सर्वेषामेकवेदान्वयमपि जगदुः कालभेदप्रतिष्ठम् ।
तत्तच्छाखाविभागः प्रवचननियता काठकाद्या समाख्या
द्रष्टा मन्त्रादिकर्ता परिहृत इह चानित्ययोगः प्रवाहैः ॥ ११२ ॥

भेदो मन्वन्तरादौ भवति च नियतोऽनादिसिद्धे तदंशे
पुंसूक्तादौ श्रुतीनां जनिवचनमपि प्राग्वदाविष्कृतौ स्यात् ।
आज्ञारूपत्वमासां न च गलति विभो [रेकरूपा] रैक्यरूप्याभिसन्धे-
र्योऽसौ देवः प्रमाणं स च न शिथिलयेच्छवितमन्तं क्रमं तम् ॥ ११३ ॥

प्रेक्षावन्तो महान्तः परिजगृहुरिमं सार्थमङ्गैरनन्तं
नेत्थं बाह्यागमानां प्रसृतिरनुपधेस्तद्गृहीतेरभावात् ।
दृश्यन्ते गत्यभावो नियतिषु लघिमा वञ्चनं तर्कमोहो
वृत्तिस्वास्थ्यादि चैषामुपधिरधिगमे वैपरीत्यं तु वेदे ॥ ११४ ॥

नित्यैरस्पृष्टदोषैर्भवति च निगमैः पौरुषेयेषु बाधः
पाषण्डत्वप्रथैषां जगति न च मृषा पक्षपातप्रहाणे ।
अन्योन्यं चैषु बाधः प्रसजति कृतकेष्वाप्तिमोहादिसाम्यात्
संवादोंऽशेषु तुल्यः परमिह कुहनासिद्धयेऽन्यप्रवेशः ॥ ११५ ॥

संवादे मानवादेः श्रुतिभिरविरले संग्रहे तत्समाने
ताभिश्चाप्तत्वसिद्धौ स्वकथित उचितस्तस्य तन्मूलभावः ।
नाक्षं लिङ्गं नरोक्तिभ्रम इह घटते विप्रलिप्साऽपि मूलं
नाज्ञाते भावनाऽपि श्रुतिविषयतया भाति योगे तु धर्मः ॥ ११६ ॥

या मूलं त्वष्टकादेरियमपि मनुजैः क्वाप्यधीता श्रुतित्वात्
सा चेन्नित्यानुमेया प्रसजति न कथं तादृशाध्यक्षक्लृप्तिः ।
सर्वस्मिन् पूर्वपूर्वस्मृतिरपि निगमोपज्ञमित्याचरिष्णौ
नित्यादृश्ये च मूले नियतमिह भवेदन्धसन्ताननीतिः ॥ ११७ ॥

शाखोच्छेदस्त्विदानीमिह यदि स मतस्सर्वतश्चेदसिद्धिः
व्यासागस्त्यप्रधानैर्भवति च मुनिभिर्भूषिताऽद्यापि भूमिः ।
उच्छिन्ना सा यथैवाचरितुरविदिता तत्तदाचारमूलं
तद्वत्सा विप्रकीर्णा क्रमसमधिगमः कालवद्देशतोऽपि ॥ ११८ ॥

दृष्टे वेदैर्विरोधे स्मृतिपरिहृणं सूत्रभाष्यादिसिद्धं
तद्वन्नीतिः पुराणप्रभृतिषु भविनां संभवाद्विभ्रमादेः।
स्यादन्योन्यं विरोधे त्विह बलनियतिस्सात्त्विकत्वादिभेदा-
न्मात्स्यादौ दर्शितं तच्छ्रुतिहतिरहितैस्तत्परैरेव वाक्यैः ॥ ११९ ॥

भागे वेदाविरुद्धे पशुपतिकपिलाद्यागमास्स्युः प्रमाणं
मोहाद्यर्थं तु शेषं मुनिभिरभिहितं यत्र मज्जन्ति डिम्भाः।
भूयस्यर्थे प्रधाने विहृतिमति सतां संशयश्च क्वचित्स्यात्
श्रुत्या बाधं न रुन्धे श्रुतिसहपठितिर्हेत्वहन्तव्यता च ॥ १२० ॥

निर्दोषाम्नायमौलिश्रुतनिखिलजगन्मूलसर्वज्ञमूले
हेतुर्व्यूढे चतुर्धा क्वचिदपि न भवेद्विभ्रमः पञ्चरात्रे।
युक्ता भक्तानुकम्पागरिमसमुदिते विप्रलिप्साऽपि नास्मिन्
वेदाच्छ्रैष्ठ्योक्तिरर्थस्थितिविशदतया भूमविद्यादिवच्च ॥ १२१ ॥

जीवोत्पत्त्यादिवादो निगमवदिह तन्नित्यतोक्तेश्च साम्या-
ज्जीवाद्याख्यानिरूढिस्त्वभिमतिभिदया स्याच्च संकर्षणादौ।
मन्वादेश्चोपजीव्यं हिततममिदमित्यादिकं भारतोक्तं
तत्त्वाप्यैक्यं विकल्पः क्वचिदभिमतवत्तादृशाम्नायभेदात् ॥ १२२ ॥

सर्वे सर्वज्ञबुद्धेर्ननु विषयतया नित्यसिद्धाः कृतान्ता-
स्तस्मात्तेन प्रवर्त्ये सति समयगणे कस्यचित्को विशेषः।
मैवं तत्त्वे विकल्पत्यजि विहृतिमतामेकशेषत्वमाना-
त्तन्निष्ठा स्यात् कनिष्ठा नमति न विदुषोऽनामिकादिः परस्मै ॥ १२३ ॥

अर्थे पूर्वानुभूते सहमितसदृशख्यात्यदृष्टप्रभेदैः
संस्कारानुग्रहे या परिणमति मतिस्सा स्मृतिस्त्रिप्रकारा।
याथार्थ्येऽपि स्वपूर्वानुभवमनुसरेद्ग्राह्यशून्या न चैषा
हेतुश्चार्थक्रियादेः स्मृतिवदनुभवोऽप्यस्ति नष्टादिकेषु ॥ १२४ ॥

पूर्वं श्यामत्वमात्राद्भवति न हि मितिः पाकरक्तेऽपि तद्धी-
स्तत्ताभानं तथा चेत् प्रसजति तदिदं प्रत्यभिज्ञादिकेऽपि।
याथार्थ्यं पारतन्त्र्यान्न च गलति न चेदभ्युपेतातिवृत्ति-
र्वेदे मानैस्सहोक्ता स्मृतिरपि विफला त्वक्षपादाद्यनुक्तिः ॥ १२५ ॥

जातः पूर्वानुभूत्या स्मृतिमुपजनयेत्क्वापि संस्कार एव
प्रागदृष्टव्यक्तिमात्रप्रतिनियतिमती कीदृशादन्वयात्स्यात् ।
मैवं कार्ये त्वबाध्ये ननु तदनुगुणः कल्प्यते हेतुयोग-
स्तज्ज्ञानोत्पाद्यभावस्स इति च विदितः किं तदन्येन नाम्ना ॥ १२६ ॥

तुल्यातुल्यान्तरे धीः स्मृतिरियमिव गौस्सेति बोधोऽनुमानं
यत्तुल्यो यस्य चेतत्सम इति निजयोर्हस्तयोर्व्याप्तिसिद्धेः ।
चिह्नोष्मीते निमित्ते पदमपि विदितं शक्तमाप्तातिदेशे
व्युत्पत्तिर्लक्षणैः स्वैः क्वचिदपि न भवेदन्यथाऽतीन्द्रियेषु ॥ १२७ ॥

अर्थापत्तिः परोक्ता न पृथगनुमितेर्व्याप्तिबोधादिसाम्या-
दव्याप्यानामयुक्तिर्न हि भवति न चाव्यापकाः स्थापकाः स्युः ।
जीवन् क्वापीति बोधो न गृह इति मतिं निश्चितां नोपरुन्धे
नातस्तच्छान्तये सा न यदि सममिदं सम्मते चानुमाने ॥ १२८ ॥

तत्तदभावैरभावव्यवहृतिनियतो मानमन्यत् किमर्थं
स्मर्तव्यस्मृत्यभावात् परमनुमिमते प्रातरश्वाद्यभावम् ।
स्यादक्षादभावधीवद्विमतिविषयधीरन्वयादेस्समत्वात्
भावग्राहिण्यभावं तदुचितसहकार्यागमे बोधयन्ति ॥ १२९ ॥

ऐतिह्यं वृद्धवाक्यं बहुदिवसगते यत्त्वनिर्धार्य मूलं
मानं चेदागमस्तत्तदितरदपि च स्यात्तदाभास एव ।
लक्षादिभ्यश्शतादिप्रमितिरनुमितिर्व्योम्न्यतादेरबाधा-
च्चेष्टालिप्यादि लिङ्गं शितमतिभिरतश्शिष्टमप्येवमूह्यम् ॥ १३० ॥

मानत्रित्वे तु मन्वाद्यनुमतिविषये तत्र यत्कैश्चिदासै-
राधिक्यं क्वाप्यधीतं तदपि सुघटितं गोबलीवर्दनीत्या ।
उक्तार्थोदाहृतिर्वा भवतु बहुमुखी शिष्यमेधामहिम्ने
सर्वं च स्वेष्टतन्त्रेष्वनुकथनशतं निर्वहन्त्येवमूहैः ॥ १३१ ॥

प्रत्यक्षादित्रिकं यत्पृथगभिदधता भाष्यकारेण शेषं
नैव क्षिप्तं न चोपस्कृतमिह न ततः स्यात्तदाधिक्यसिद्धिः ।
रीतिः सर्वीदितानामियमिति हि तथोदासि सङ्ख्याविवादे
तेनान्वारुह्य तत्तत्समधिकगणना स्वीकृता नस्सयूथ्यैः ॥ १३२ ॥

मानं सर्वोपजीव्या प्रथममिह भवेदक्षजन्या मनीषा
तन्मूला चानुमा स्यात्तदुभयजनितस्त्वागमो द्विप्रकारः ।
मूलं न क्वापि बाध्यं क्वचिदधिकबलैर्मूलजातीयबाधः
स्यादेतैः कर्ममालाघटितभवघटीयन्त्रजभ्रान्तिशान्तिः ॥ १३३ ॥

सर्वं संदिग्धसत्त्वं क्षणिकमगुणकं नित्यमाकस्मिकं वा
बुद्धिः कृत्स्ना न मानं निखिलमपि ततः स्यान्मृषा धीतरद्धा ।
प्रख्योपाख्यादवीयः किमपि नियतिमन्नामरूपं च नेत्या-
द्युद्वेलापार्थजल्पानपहसितुमसौ वर्णितो मानभेदः ॥ १३४ ॥

प्रज्ञाव्युत्पत्तिपाकव्यवहरणफलश्रेणिनिश्रेणिकाया-
मारूढा निष्प्रकम्पा प्रमितिगुणकरालम्बनात्सत्परीक्षा ।
मिथ्यालोकादिशापैरपि न न भवति प्राप्तविस्रम्भसौधा
तत्साह्याद्वाह्यपाटच्चरमुषितमिदं सद्धनं प्रत्यनेष्यम ॥ १३५ ॥



# तत्त्वमुक्ताकलापे

## अद्रव्यसरः

तत्तद्द्रव्येषु दृष्टं नियतिमदपृक्सिद्धमद्रव्यजातं
तद्वद्विश्वं परस्य व्यवधिनियमनान्न स्वरूपेऽस्य दोषः।
इत्थं निर्धार्य भाव्ये भगवति विविधोदाहृतिव्यक्तिसिद्ध्यै
निर्बाधान् द्रव्यधर्मान्निरनुगतिगलद्दुर्नयान्निर्णयामः॥ १॥

व्याख्यातं द्रव्यषट्कं व्यतिभिदुरमथाद्रव्यचिन्ताऽस्य सत्ता
धीभेदादेः पुरोक्ता निजगदुरनुपादानतां तस्य लक्ष्म।
द्रव्यादत्यन्तभिन्नं स्विदमनुपधिकं तद्विशिष्यात् स्वभावात्
दृष्टे न ह्यस्त्ययुक्तं न कथमितरथा विश्वतत्त्वापलापः॥ २॥

अद्रव्यं द्रव्यसिद्धौ तदुपहिततया तच्च लक्ष्येत तस्मा-
देकासिद्धौ द्वयं नेत्यपि न सदुभयान्योन्यवैशिष्ट्यदृष्टेः।
आधारे द्रव्यशब्दस्तदधिकरणकेऽनाश्रये त्वन्यदित्थं
व्युत्पत्तिर्विश्वहृद्या न तदपलपति स्वर्गकर्णीसुतोऽपि॥ ३॥

सामान्यात्मा विशेषाकृतिरपि यदि न स्वीकृतो धर्मवर्गः
स्यातां न भ्रान्तिबाधौ न किमपि कथकास्साधयेयुः स्वसाध्यम्।
यस्मिन् बाधानवस्थे क्वचन न खलु तन्नीतिरन्यत्र दृष्टे
नो चेन्निश्शेषकुक्षिम्भरिरुपनिपतन् दुस्तरश्शून्यपक्षः॥ ४॥

चादीनां वृत्तियोग्यं यदुत पदविदोऽसत्त्वमद्रव्यमाहु-
र्नैतावत्तन्मृषात्वं गमयति न च तद्बाधकं किंचिदस्ति।
तात्पर्यं चान्यदत्र स्फुटविदितमतस्तत्र सत्त्वेतरत्वा-
दन्यः कश्चिन्नञर्थः परमिह निपुणैर्द्योतकत्वादि चिन्त्यम्॥ ५॥

आहुर्द्रव्येषु धर्मान् कतिचन गुणपर्यायवैषम्यभिन्नान्
पर्यायाणां गुणत्वे स्थितवति सहजागन्तुतामात्रमेतत्।
मिथ्याभूतान् विकारानभिदधति परे सत्यरूपान् स्वभावान्
तानेकद्व्यादिरूपानभिदधतु कथं निर्गुणानां क्षणानाम्॥ ६॥

बाह्यर्थेऽर्थे बौद्धतोकाः किल जननजराभङ्गरूपान् विकारा-
नाद्यन्तौ चित्तचैत्तेष्वपि जगदुरमी तत्स्वरूपं न वा स्युः।
पूर्वस्मिन्नक्रमः स्यादुपरि तु न कथं तस्य धर्मास्त एते
तन्मिथ्यात्वे तु नित्यं निखिलमपि भवेत्तुच्छमेवान्यदा स्यात् ॥ ७ ॥

आदावैक्येन बुद्धिर्द्वयमपि मिलितं गृह्णती व्यक्तिजात्यो-
र्भेदाभेदाविरोधं दिशति यदि न तत्तद्विशिष्टैक्यबुद्धेः।
इत्थंत्वेदंत्वशून्यं न हि किमपि कदाऽप्यर्भकोऽपि प्रतीया-
त्तद्वैशिष्ट्यप्रतीतिर्निरुपधिरपृथक्सिद्धिमात्रेण सिध्येत् ॥ ८ ॥

व्यक्त्या जातेरभेदं यदि वदसि पृथक्सिद्ध्यभावादलिङ्गे-
र्भेदाभावोऽक्षबाध्यस्तव च न हि मतो नान्यथाऽत्रास्य युक्तिः।
धर्म्यैक्यादेकवाक्स्यान्न तु भवति ततो धर्मधर्म्यैक्यबुद्धि-
स्तद्बोधश्चाप्युपाधिर्न स इह भवता दृश्य इत्यभ्युपेते ॥ ९ ॥

सत्त्वान्नैकान्तमाहुर्विमतमितरवत् केऽपि तद्धीविरुद्धं
न ह्यत्राकारभेदात् परिहृतिरनवस्थानदोषप्रसङ्गात्।
स्वव्यापारोक्तिचर्यासमयनियतयोऽप्येवमेवाकुलाः स्यु-
र्दृष्टान्तेऽपि ह्युपाधिद्वयवति नियतस्थौल्यसौक्ष्म्यादियोगः ॥ १० ॥

सिद्धे वस्तुन्यशेषैः स्वमतमुभयथा वर्ण्यते तत्रतत्र
स्यादर्थस्यैकरूप्ये कथमिदमिति चेत्तन्न भिन्नाशयोक्तेः।
मन्तव्या वैभवोक्तिः: क्वचिदनभिमते संशयोक्तिः क्वचिद्वा
भाग [द्वन्द्वा]द्वैतान्नृसिंहप्रभृतिषु घटते चित्रसंस्थानयोगः ॥ ११ ॥

स्यादस्ति स्याच्च नास्ति द्वितयमनुभयं स्यात्त्रिभिश्चान्तिमं त्रि-
स्सैषोक्ता सप्तभङ्गी जिनसमयजडैर्द्रव्यपर्यायवर्गे।
दृष्टां सार्वत्रिकीं तां स्वपरमतकथातत्फलादौ विवक्षन्
कक्षीकुर्वीत धूतः कथकपरिषदा कां दिशं कान्दिशीकः ॥ १२ ॥

भेदे वस्तुस्वरूपे भ्रम इह न भवेद्धर्मपक्षेऽनवस्था
स्याद्वाऽन्योन्याश्रयादिस्तदयमनृत इत्युक्तिबाधादिदुःस्थम्।
धर्मः क्वापि स्वरूपं क्वचिदिति च यथादृष्टि नोक्तप्रसङ्गो
यद्दृष्ट्या यत्र यस्याध्यसनपरिहृतिस्सोऽस्य तस्मात्तु भेदः ॥ १३ ॥

भेदो गृह्येत बुद्ध्वाऽधिकरणमवधिं चेति न ह्यक्रमोऽस्मिन्
प्रत्यक्षस्य क्रमोऽपि क्षणभिदुरतया नेति तुल्यं भ्रमेऽपि।
अक्षान्धादिव्यवस्थाक्षतिरपि युगपद्योग्यधर्मैर्ग्रहोऽत-
स्तद्युक्ते भिन्नशब्दः कथिततदुपधिज्ञप्त्यपेक्षः क्रमात्स्यात् ॥ १४ ॥

अद्रव्ये नेकरूपे ह्यगणिषत गुणाः सत्त्वमुख्या द्विधाऽऽद्यं
शुद्धं तन्नित्यभूतौ त्रितयमिह चतुर्विंशतौ व्याप्तितः स्यात् ।
पञ्चान्ये शब्दपूर्वा अपि परिगणिता भूतवर्गेष्वथान्यः
संख्यानादिश्च भेदः परिणमति यथासंभवं द्रव्यवर्गे ॥ १५ ॥

स्थित्युत्पत्त्यन्तलीलाविधिषु भगवताऽधिष्ठिताः शास्त्रवेद्याः
सत्त्वाद्याः स्थूलसूक्ष्मप्रकृतिगतगुणा हेतुभूतास्सुखादेः ।
साम्ये तेषां त्रयाणां सदृशपरिणतिः स्यादिहान्यान्यथात्वे
क्लृप्ताऽन्यैर्द्रव्यतैषां श्रुतिपथविहृता कुत्रचित्तूपचारः ॥ १६ ॥

बुद्धित्वादिः प्रधाने समपरिणतिरित्येवमागन्तुधर्माः
द्रव्येष्वन्येषु चान्ये कतिचन कथिताः केचिदध्यक्षसिद्धाः ।
आनन्त्यादर्थमान्द्याद् दुरवगमतया सूक्ष्मवैषम्यभेदै-
रैकैकश्येन चिन्तामिह जहति बुधा निश्चितापेक्षितार्थाः ॥ १७ ॥

शब्दाद्यास्तत्तदक्षप्रतिनियतिजुषस्सर्वतन्त्रप्रसिद्धा-
स्तैरेकद्व्यादिसंख्यैर्द्युपवनहुतभुग्वारिभूम्यस्समेताः ।
पञ्चीकारादिनैषां विनिमितगुणता व्योमनैल्यादिबोधे
तद्योगात्तत्र तत्तद्गुणजनिरिति चेन्नान्यथाऽत्रोपपत्तेः ॥ १८ ॥

कस्तूरीचम्पकादौ समविषमतया सम्मतस्सौरभादि-
स्तद्वच्छब्दादयोऽमी त्रिगुणतदधिकद्रव्यनिष्ठा गुणाः स्युः ।
निष्कृष्टे शास्त्रदृष्ट्या न कथमपि मिथस्संकरश्शङ्कनीयः
स्वाच्छन्द्याच्छङ्कमानः स्वमिव सुरगुरुं किं न शङ्केत मुग्धम् ॥ १९ ॥

शब्दो नैकेषु युक्त्याऽप्युचित इह पुनः पारिशेष्यं तु मन्दं
वायुश्शब्दस्वभावश्श्रुतिशिरसि यतः स्मर्यते च स्वरात्मा ।
गन्धालोकादिनीतिं यदिह निजगदुर्यामुनाद्यास्ततोऽपि
स्पष्टो भेर्यादिनिष्ठोऽयमिति गतिवचो गन्धवत्तद्वि[शेषे]शिष्टे ॥ २० ॥

सत्यान् सत्यापयन्तः कतिचन चतुरः स्पर्शरूपादिधातून्
शब्दं स्वार्हाक्षसिद्धं चतुरधिकरणं प्राहुरेभ्यो न भिन्नम् ।
किं तद् भेदाप्रतीतेः प्रबलविहतितस्संमतैक्यप्रमातः
स्वाच्छन्द्याद्देशनाया विभवत इति वा वीक्ष्य शिष्टा विजह्रुः ॥ २१ ॥

शब्दोऽवस्थाविशेषः श्रुतिभिरभिहितस्तेन नैष स्वनिष्ठो
व्योमादेश्चाविभुत्वात् क्वचिदपि न तु तत्सन्निधिस्तद्विदूरे ।
साक्षादक्षाप्तिसाक्षात्कृत इति घटवद् द्रव्यमित्यप्यसारं
साध्यात् प्राग्धेत्वसिद्धेर्न हि परमतवन्नाभसं श्रोत्रमत्र ॥ २२ ॥

वर्णानां सध्वनीनामभिदधति हरिद्वासस: पुद्गलत्वं
नाक्षादेस्सिद्धमेतन्न च तदभिमते शब्दित: शब्दशब्द:।
सूक्ष्मद्रव्ये हि धर्मः श्रुतिविषयदशालक्षणो दुस्त्यजस्तै-
स्तस्मान्नास्मत्समीक्षामतिपतितुममी शक्नुयुस्तद्वदन्ये ॥ २३ ॥

वर्णे स्थैर्यं विरुद्धान्वयविरहवति प्रत्यभिज्ञा नियच्छे-
त्तैव्र्यादिव्यञ्जकस्थं भ्रमवशघटितं तत्र कल्प्येत दिग्वत् ।
एकाक्षग्राह्यसंवित्प्रतिनियतिरपि ह्यञ्जनादाविव स्या-
द्व्यक्त्या स्यात् कार्यताधीर्यदि न निगदितो नैगमैरस्य नाशः ॥ २४ ॥

ध्वन्यात्मा वायुभेदः श्रुतिविषयतयाऽपाठि तौतातिताद्यैः
तद्वत् पञ्चाशदेते समकरणतया वर्णिताः किं न वर्णाः ।
तैव्र्यादिर्वर्णधर्मो नियत इति यथादर्शनं स्थापनीयं
स्पर्शादौ चैवमिष्टं तदिह न सुलभा द्रव्यता नित्यता च ॥ २५ ॥

शब्दानित्यत्वतोऽपि श्रुतिषु न विलयः स्यात् क्रमव्यक्तिनीत्या
तन्नित्यत्वे च काव्यादिकमपि न कथं नित्यमित्यभ्युपैषि ।
तस्मान्नित्यैकरूपक्रमनियमवशान्नित्यभावः श्रुतीना-
मीशोऽप्यध्यापको नः पर [मि]मतिचकितैर्वर्णनित्यत्वमुक्तम् ॥ २६ ॥

नैवोष्णौ नापि शीतौ क्षितिसततगती तत्र तोयादियोगात्
शीतत्वादिप्रतीतिस्तदुपधिकतया तत्रतत्रैव दृष्टेः ।
आयुर्वेदे तुषारो मरुदिति कथनं त्वद्भिराप्यायिकाभि-
र्वृद्धिह्रासौ समाद्येर्भवत इति परं तच्चिकित्सानियत्यै ॥ २७ ॥

स्यादुष्णः कृष्णवर्त्मा सलिलमपि तथा शीतमस्तु प्रकृत्या
स्पर्शोऽन्योऽप्यत्र दृष्टस्स तु भवतु रुमाक्षिप्तलावण्यवच्चेत् ।
मैवं संसृष्टवस्तूपधिनियततया तद्विवेकस्य युक्तेः
प्रायश्शीतो भवेतिप्रभृतिकमपि तद्ग्राहकत्वादिरोधात् ॥ २८ ॥

पीता भूः श्वेतमम्भो हुतवहपवनौ रक्तधूम्रौ तथा द्यौ-
र्नीलेति क्वापि शिष्टं तदिह न नियतां वर्णसत्तां ब्रवीति ।
ध्यानार्थं मन्त्रवर्णेष्विव कथितमिदं व्योमवातौ ह्यरूपौ
पीतैकान्त्यं भुवोऽक्षश्रुतिहतमथ तत्प्राचुरी साऽस्तु मा वा ॥ २९ ॥

कृष्णामाम्नासिषुः क्ष्मां तदिह न विरहं वक्ति रूपान्तराणां
प्रत्यक्षादेर्विरोधात्पचनविषमितं स्पर्शगन्धादि चास्याः ।
पाथस्तेजोविशेषे स्फुरति वसुमती भागतो वर्णभेदो
न ह्यम्भः क्वापि दृष्टं विपरिणतगुणं पाकसंस्कारतोऽपि ॥ ३० ॥

आरब्धं रूपभेदैरवयवनियतैश्चित्रमन्यत्तु रूपं
काणादाः कल्पयन्तः क्व तदिति कथयन्त्वंशतस्तद्विकल्पे ।
नांशेष्वेतत्तदिष्टं न च तदभिहितः कश्चिदंशीति तूक्तं
स्वाधारव्यापकत्वं सुगममिह तथा स्पर्शगन्धादिचैत्र्यम् ॥ ३१ ॥

स्नेहः प्रत्यक्षसिद्धो यदुपधिरुदके स्निग्धधीस्स द्रवत्वा-
त्तोयत्वाच्चातिरिक्तः क्वचिदिह यदसौ भाति ताभ्यां विनाऽपि ।
सौवर्णादिद्रवाणां न च भवति यतः पांसुसंग्राहकत्वं
पर्यायानुक्तिरस्मिन् भवति विषमता चेति केचिद् गृणन्ति ॥ ३२ ॥

अन्ये स्नेहं तु रूपं किमपि निजगदुः स्निग्धवर्णोक्त्यबाधात्
इष्टत्वात् दुस्त्यजं तद्भवति खलु भिदा काऽपि गन्धादिकेऽपि ।
अप्त्वादेः पांसुसङ्गस्सुगममिदमयस्कान्तजात्यादिनोत्या
न ह्यन्यत्तत्र क्लृप्तं न च न दृढमितं पार्थिवे पिच्छिलत्वम् ॥ ३३ ॥

मासृण्यादिप्रभेदोपहितगुरुतयाऽवादिनिम्नाभिमुख्यं
माषव्रीह्यादिराशौ भवति च पतने तादृशं तारतम्यम् ।
किंचादृष्टान्यक्लृप्तिर्ज्वलनपवनयोर्न क्रियायां तथाऽस्मि-
न्नित्येकेऽन्ये तु दृष्ट्वा गुणमधिकमुशन्त्यादिमस्यन्दहेतुम् ॥ ३४ ॥

तोये दृष्टं स्वभावाद् घृतकनकमुखे पाकजन्यं द्रवत्वं
तैलादौ नैव पाकानुगम इति भवेत्तादृशावंशक्लृप्तिः ।
भस्मीभावाद्यनर्हे यदुत कणभुजा सूत्रितं तैजसत्वं
हैमादिश्लिष्टभौमावयवनयविदामित्थमेतन्न हृद्यम् ॥ ३५ ॥

पातस्तुल्योऽम्बुभूम्योः पवनदहनयोस्तिर्यगूर्ध्वप्रवृत्त्या
पाते भेदात् पलादिप्रतिनियतिरपि ह्यंशवैषम्यतः स्यात् ।
भागानां तारतम्याज्जलशिखिमरुतां स्यन्दनादे[र्भिदेष्टा]र्विशेष-
स्तस्मात् सर्वोऽप्यदृष्टादिह भवतु न चेत् स्याद् गुणोऽन्योऽनलादौ ॥ ३६ ॥

त्वक्संवेद्यं गुरुत्वं कतिचिदभिदधुस्तत्तु तेषां गुरुत्वं
नोर्ध्वं स्पृष्ट्वा प्रतीमस्तदिह परधृते नाप्यधस्तात्स्पृशन्तः।
न ह्यन्यालम्बितोऽर्थो भवति लघुतरः स्पर्शनं नोपरुद्धं
तेनाक्रान्तौ प्रणुत्तिक्रम इति गुरुणा तर्कितस्तोलनाद्यैः॥ ३७॥

क्षित्यादौ सांख्यदृष्ट्या यदि किमपि तम [:] स्कार्यमिष्टं गुरुत्वं
तद्वत् कल्प्येत वह्निप्रभृतिषु न कथं सत्त्वकार्यं लघुत्वम्।
यादृग्भूताद् गुणात्तद्वदसि च पतनं तादृशादस्तु तस्मात्
क्लृप्तिस्त्वन्यस्य गुर्वी भवतु तदधिकं काममाप्तोपदेशात्॥ ३८॥

एकद्व्यादिप्रतीतिव्यवहृतिविषयो यो गुणस्सा तु संख्या
क्वाप्यैक्यं नित्यसिद्धं क्वचिदवयवगैर्जन्यते तत्तदैक्यैः।
द्वित्रित्वाद्यं त्वनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यं
तत्तत्पुंमात्रदृश्यं क्षणिकमिति कथा काऽपि कौतस्कुतानाम्॥ ३९॥

तत्र द्वित्वाद्यपेक्षामतिविषयभिदामात्रमेवास्त्वभीष्टं
द्वित्वाद्युत्पत्तिमूलं यदभिलपसि तद्व्याहृतेरस्तु मूलम्।
द्वित्वादिप्रागभावैर्ध्रुवमिह हि विना धीविशेषोऽभ्युपेयः
तन्मूलं निर्गुणानां विगणनमपि च स्थापनीयं गुणानाम्॥ ४०॥

कैवल्यं नैकसंख्यापरविरहतया नापि मुख्यान्यभावो
सङ्घातैक्यं तु राशिक्रममवयवि तु प्राङ्निरस्तं ततोऽन्यत्।
तेनासङ्घातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या
स्वाधारैकायुरेषा परमुपचरिता सेयमद्रव्यवर्गे॥ ४१॥

ऐक्यं स्वाभेदमाहुः कतिचन न भिदाऽस्त्येकमेवेति दृष्टे-
र्भेदादृष्ट्यैक्यमोहस्तदिति च वचनं तत्रतत्राभ्युपेतम्।
अन्ये त्वेतत्स्वसत्त्वं विदुरितरसमुच्चित्यवस्थानुवृत्तं
तत्पक्षेऽपि स्वरूपादधिकमिदमिह द्वित्वमोहादिसिद्धेः॥ ४२॥

अन्यत् गृह्णात्यभिज्ञा तदिदमिति पुनः प्रत्यभिज्ञाऽन्यदैक्यं
कालक्षेत्रादिभेदग्रहजनितभिदाभ्रान्तिशान्तिस्ततः स्यात्।
मोहस्तत्रैकताधीर्ज्वलन इव भवेत् प्रत्यभिज्ञा त्वतश्चेत्
स्वव्याघातोऽनुमाया भ्रम इह निखिला स्यादभिज्ञाऽपि तद्वत्॥ ४३॥

अद्रव्येऽप्यस्ति संख्याव्यवहृतिबलतस्सा ततोऽन्या गुणादेः
मैवं संख्यासु संख्याव्यवहृतिवदियं स्यात्त्विहोपाधिसाम्यात् ।
नो चेत्प्राप्ताऽनवस्थाव्यवहृतिनियतिस्थापनं तुल्यचर्चं
तस्मात् काणादक्लृप्तिर्गुरुमतकथकैर्युक्तमत्रापि सोढुम् ॥ ४४ ॥

देशाधिक्यादिसिद्धावुपधिभिरिह तद्युक्तसंयोगभेदात्
देशव्याप्तिप्रभेदः परिमितिरिति चेन्नोपधीनां मितत्वात् ।
देशैस्तन्न्यूनतादौ प्रसजति हि मिथस्संश्रयस्तत्स्वतस्सा
मन्तव्या क्वापि राशिप्रभृतिषु तु परं देशसंबन्धभेदः ॥ ४५ ॥

बौद्धास्तुच्छामणूनामभिदधति परिच्छित्तिमाकाशधातुं
वस्तुस्थित्या परिच्छित्त्यभवनवशतस्स्यादमीषां विभुत्वम् ।
अन्यत्रासत्त्वरूपा परिमितिरिति हि स्थापितं सा मृषा चेत्
प्राप्तं सर्वत्र सत्त्वं प्रथमसरगता स्मर्यतां व्योम्नि युक्तिः ॥ ४६ ॥

स्थूलाणुह्रस्वदीर्घेतरदुपनिषदि स्थापितं ब्रह्म तस्मिन्
सर्वोत्कृष्टं महत्त्वं श्रुतमपि तदिह स्थूलतान्या निषिद्धा ।
अन्ये स्वाहुर्विभूनामपरिमितवचःप्रत्ययान्मित्यभावं
भावैकात्म्यन्यभावे परिमितिविरहोऽप्यत्र भावान्तरं स्यात् ॥ ४७ ॥

नात्यन्ताणोर्महत्ताऽस्त्यवयविनि हते मध्यमं क्वास्तु मानं
तद्धेतुष्वेव तद्धीरपि तव घटते लाघवोत्कण्ठितस्य ।
एवं त्यक्ते महत्त्वे परममहदपि त्याज्यमेवेति चेन्न
त्यागाभावात्तदिष्टादधिकमनधिकं वाऽस्तु न क्वापि दोषः ॥ ४८ ॥

द्रव्यं कृत्स्नं स्वभावात् परिमितिरहितं व्यापकैकस्वयुक्ते-
रौपाधिक्यंशक्लृप्तिर्घटगगननयास्स्यादवस्था ह्युपाधिः ।
स्वाभावैर्वेष्टितत्वं घटत इह घटाद्याकृतौ द्रव्यधर्मे
पार्श्वोक्तिस्तावता स्यादिति न सदवधेरन्यथाऽप्यत्र सिद्धेः ॥ ४९ ॥

अव्यक्ते स्यादणुत्वप्रभृतिपरिणतिः स्तम्भकुम्भादिनीत्या
नाणुत्वं पूर्वसिद्धं नरमृगरचनाद्यव्यवस्थाक्रमेण ।
इत्युक्तं सांख्यशैवप्रभृतिसमयिभिस्तत्तथैवास्तु मा वा
नित्याणौ जीवतत्त्वे न कथमपि भवेदण्वस्थाप्रसूतिः ॥ ५० ॥

चर्चा तुल्यैव भिन्नं पृथगितरदिति प्रत्यये तत्पृथक्त्वं
भेदाख्यो नीलपीतप्रभृतिरभिमतः किं मुधाऽन्यस्य क्लृप्तिः।
नाप्यज्ञातावधीनां पृथगिदमिति धीर्नापि भिन्नादिवाचां
साकं क्वापि प्रयोगो न च पृथगिति धीर्द्रव्य एवेति सिद्धम् ॥ ५१ ॥

तन्त्वादीनां पटादिव्यवहृतिनियता दृश्यते काऽप्यवस्था
सा चेद् द्रव्यस्वरूपं भवति विफलता कारकव्यापृतीनाम्।
तत्रासंयुक्तबुद्धिः कथमिव च भवेत् स्थैर्यवादस्थितानां
नैरन्तर्यं च भावो मम तदघटितं मध्यमेवान्तरं च ॥ ५२ ॥

सर्वं द्रव्यं सभागं न यदि कथमुपाध्यन्वयो भागतः स्यात्
कात्स्न्र्येनोपाधियोगे कथमणुविभुनोस्सूक्ष्मतादीति जैनाः।
सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावा-
दौपाधिक्यंशक्लृप्तिः कथमिव न भवेद् द्विष्ठसंबन्धदृष्टेः ॥ ५३ ॥

नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्ययोगोऽपि योग्यः
केचित्, तं हेत्वभावाज्जहति विहृतिकृन्नित्यधीकल्पने तत्।
स्याद्वा तत्सिद्धयसिद्धयोरनुमितिरपटुर्बाधहानेर्विपक्षे
शास्त्रैरन्यद्विभुः स्यात् परधृतमपृथक्सिद्धिरेवं ततोऽस्य ॥ ५४ ॥

संयोगाद्विश्वसृष्टिः प्रकृतिपुरुषयोस्तादृशैस्तद्विशेषैः
ब्रह्मादिस्तम्बनिष्ठा जगति विषमता यन्त्रभेदादयश्च।
अक्षाणामर्थयोगाद्विविधमतिरबाद्यन्वयादङ्कुरादिः
शुद्धाशुद्धादियोगान्नियतमपि फलं न्यायतत्त्वे(स्य)न्यघोषः ॥ ५५ ॥

संयुक्ते द्रव्ययुग्मे सति समुपनतो यस्तु संयोगनाशः
संग्राह्योऽयं विभागव्यवहृतिविषयस्सोऽपि तद्धेतुतः स्यात्।
स्वन्निर्दिष्टे विभागे गतवति च सतोः स्याद्विभक्तप्रतीतिः
भूयस्संयोगसिद्धौ कथमिति तु यथा स्वद्विभागान्तरादौ ॥ ५६ ॥

कोऽसौ संयोगनाशस्तव मत इति चेत् सोऽयमन्यत्र योग-
स्तस्य प्राचा विरोधात् स तु मिषति तथाऽऽलोचितस्त[स्य]द्विनाशः।
अज्ञातप्राच्ययोगः परमभिमनुते स्वेन रूपेण चैनं
सर्वोऽप्येवं ह्यभावः स्फुटमिह न पुनः कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥

स्पन्दावृत्त्यादिभेदात् परमपरमिति प्रत्ययौ तत्तदर्थे
कालाधिक्यादिमात्रान्न खलु समधिकं शक्नुयातां विधातुम् ।
दृष्टिर्नान्यस्य क्लृप्तिर्भवति गुरुतरातिप्रसङ्गोऽन्यथा स्यात्
किं न स्यातां गुणाद्यैः परतदितरते पूर्वभावादि चान्यत् ॥ ५८ ॥

द्रव्यं प्राग् बुद्धिरुक्ता परमिह विषयैस्सङ्गमादिर्निरूप्य-
स्संयोगं भाष्यकाराः प्रथममकथयन्न्यायतत्त्वानुसारात् ।
तत्संयोगे समेऽपि स्फुरति न निखिलं तेन योग्यत्वमन्यत्
ग्राह्यं संबन्धसाम्ये नियतविषयता दृश्यते ह्यीन्द्रियेषु ॥ ५९ ॥

नित्यं नित्यादिबुद्धिर्निखिलविषयिणी तद्वदेव स्वभावः
शास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः कर्मभिस्तन्निरोधः ।
संकोचोल्लासयोश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदा-
न्निश्शेषोपाधिमोक्षे निखिलविषयतामश्नुवीत स्वभावात् ॥ ६० ॥

मुक्तानां धीः क्रमाच्चेत् प्रसरति न कदाऽप्यन्तमेषाऽधिगच्छेत्
संक्षिप्तायाश्च दूरान्तिकपरिपतने यौगपद्यं न शक्यम् ।
संयोगो भूतभा[वि]व्येष्वपि न हि घटते तद्धि यस्सांप्रतिक्या
इत्याद्यैर्न क्षतिः स्यात् श्रुतिमुखविदिते योग्यतावैभवेऽस्याः ॥ ६१ ॥

वेगस्याचिन्त्यरूपो रविशशिनयनाद्यंशुवर्गेषु भूमा
भागानन्त्येऽप्यणूनामतिपतनमतो ह्याहुरन्योन्यमेके ।
इत्थं सर्वैरबाध्यां गतिमनुवदतां मुक्तबुद्धेर्विकासे
युज्यन्ते यौगपद्यप्रभृतय इति तु श्रद्दधीध्वं श्रुतार्थाः ॥ ६२ ॥

यत्सूक्ष्मं विप्रकृष्टं व्यवहितमपि तद् गृह्णती योगिबुद्धि-
र्भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिद्धा ।
नष्टादिष्वक्षतो धीः कथमिति यदि न प्रत्यभिज्ञादिनीते-
श्चित्रास्संबन्धभेदाः करणविषययोस्तत्र तत्राभ्युपेताः ॥ ६३ ॥

नित्याया एव बुद्धेस्स्वयमभिदधतः केचिदद्रव्यभावं
संबन्धं धर्मतोऽस्याः कृतकमकथयन् भूषणन्यायसक्ताः ।
स्वाभीष्टद्रव्यलक्ष्मस्मृतिविरहकृतं नूनमेषां तदेतत्
सौत्रं तल्लक्षणं तैरनुमतमिह च स्याद्धि कार्याश्रयत्वम् ॥ ६४ ॥

प्राकट्यं नाम धर्मं कतिचन विषये बुद्धिसंबन्धजन्यं
मन्यन्ते तन्न दृष्टं व्यवहरणविधावानुगुण्यं तु भानम् ।
क्वापि स्वाभाविकं स्यात् क्वचन भवति धीगोंचरत्वात्मकं तत्
भातीत्यादिप्रयोगः स्वदत इति नयात्तत्र कर्मत्वगर्भः ॥ ६५ ॥

इष्टद्विष्टप्रनष्टादिषु च परगतैः कथ्यतेऽन्यद्विशिष्टं
ज्ञातत्वोक्तावपीत्थं व्यवहृतिनियमास्तावतैवोपपन्नाः ।
प्राकट्येऽस्मिन् गुणादिष्वपि कथमधिकं भूतभव्येषु च स्यात्
कर्मत्वं तु क्रियार्थे सति फल इति च प्रायिकव्याप्तिहानेः ॥ ६६ ॥

आधत्ते धीः क्रियात्वात् किमपि गमनवत् कर्मणीत्यप्य [सारं] युक्तं
दत्तानेकोत्तरत्वान्न च फलमधिकं भाति हानादिमात्रात् ।
हेतुर्धात्वर्थता चेदतिचरणमथ स्पन्दता स्यादसिद्धि-
र्धीस्वारस्यानृशंस्यादनुमतमधिकं कैश्चिदस्मत्सयूथ्यैः ॥ ६७ ॥

इच्छाद्वेषप्रयत्नाः सुखमितरदपि ज्ञानतो नातिरिक्ता
या धीस्तद्धेतुरिष्टा न तदधिकतया कल्पने कोऽपि लाभः ।
पर्यायत्वं विशेषे न तु भवति यथा प्रत्यभिज्ञादिभेदे
नो चेदीर्ष्याभ्यसूयाभयधृतिकरुणाद्यन्यदऽन्यच्च कल्प्यम् ॥ ६८ ॥

चेतस्स्रोतस्स्रुतीनां चिदवधिकतया चैत्तसङ्केतभाजां
रागद्वेषादिकानामभिदधतु कथंभावमस्थेमभावाः ।
एतेषां हेतुसाध्यक्रमनियतिमतां सर्वचित्साक्षिकाणां
कथ्येतातथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः ॥ ६९ ॥

तत्रेच्छैव द्विधोक्ता विषयनियमतो रागविद्वेषनाम्ना
पूर्वस्तीव्रस्तु कामः पर इह भजते तादृशः क्रोधसंज्ञाम् ।
एकैवेच्छा सिसृक्षा भगवत उदिता संजिहीर्षेति चान्यै-
स्तद्वल्लोके न किं स्यादधिकमिह तु चेत्कल्प्यतेऽतिप्रसक्तिः ॥ ७० ॥

इच्छातः कार्यसिद्धौ किमिह यतनमित्यन्तरा कल्प्यतेऽन्य-
त्तन्मोघत्वोपलब्धेरिति यदि यतने कल्पितेऽप्येतदेवम् ।
मैवं व्यावर्तमानादनुगतमधिकं वर्ण्यते मानविद्भिः
वाञ्छन्तोऽपि ह्ययत्ना वयमिह पवनस्पन्दनेन्दूदयादौ ॥ ७१ ॥

प्राणस्पन्दस्सुषुप्तिप्रभृतिषु घटते तादृशादृष्टमात्रात्
यस्त्वं यत्ने निदानं वदसि भव [तु]ति तल्लाघवात् प्राणवृत्तौ।
धीवृत्तिश्चैव यत्नः स्थित इति स कथं काष्ठकल्पे सुषुप्ते
नो चेद् बाह्यानलादेर्ज्वलनमपि ततः कल्प्यतां न त्वदृष्टात् ॥ ७२ ॥

स्याद् दुःखाभावमात्रं सुखमभिदधतो वैपरीत्यप्रसक्तिः
स्वापादौ दुःखसिद्धिर्न यदि सुखमपि ह्यत्र नैवास्ति तादृक्।
शीतोष्णातीतनीतेर्द्वितयसमधिकावस्थितिर्दुस्त्यजाऽत-
स्तत्तच्छब्दप्रयोगेष्वनियतिरुचितैस्संघटेतोपचारैः ॥ ७३ ॥

भेदस्त्रेधा मतोनां ह्युपधिनियमितैरानुकूल्यादिधर्मै-
स्तस्यैवात्यन्तहानेर्निरुपधिकसुखस्तादृशो धीविकासः।
निस्सीमब्रह्मतत्त्वानुभवभवमहाह्लाददुग्धार्णवेऽस्मिन्
निश्शेषैश्वर्यजीवानुभवरसभरो बिन्दुभावोपलभ्यः ॥ ७४ ॥

संसारे नास्ति किञ्चित् सुखमिति कतिचित्तद्धटेतोपचारा-
न्नो चेद्व्युत्पत्तिहीनं सुखपदमधिकं तत्सुखं नाभिदध्यात्।
तस्माद् दुःखोत्तरत्वप्रभृतिभिरिह तद्दुःखमित्युक्तमाप्तै
क्ष्वेलोपश्लेषदुष्टे मधुनि विषमिति व्याहृतिः किं न दृष्टा ॥ ७५ ॥

धर्मोऽधर्मश्च तत्तत्फलकरणतया शास्त्रसिद्धं क्रियादि-
द्वारं स्वेतस्य कालान्तरनियतफले स्यादिहादृष्टमन्यत्।
आहुस्तत् केचिदन्तःकरणपरिणतिं वासनां चेतसोऽन्ये
पुंधर्मं केचिदेके विभु किमपि परे पुद्गलांस्तत्सयूथ्याः ॥ ७६ ॥

तुल्ये सेवादिहेतौ फलभिदुरतया साध्यते चेददृष्टं
हेतोस्सूक्ष्मोऽस्तु भेदो न खलु समुचिता धर्मिणोऽन्यस्य क्लृप्तिः।
व्याख्यातं यत्तु बाह्यैर्विषयसमफलप्रापकत्वं क्रियाणां
तत्सूतेऽतिप्रसक्तिं तदिह न निगमादन्यतोऽदृष्टसिद्धिः ॥ ७७ ॥

निस्संकोचान्निषेधात् क्वचन फलतयाऽनूदितांहस्तु हिंसा
रुन्धे सामान्यभङ्गे विधिरनुमितिरप्यत्र बाधादिदुःस्था।
स्वल्पो दोषो विमृष्टे सुपरिहर इह क्रत्वनुग्राहके स्या-
दित्युक्तं सांख्यसक्तैः पशुहितवचनान्नेति शारीरकोक्तम् ॥ ७८ ॥

सिध्येद्वा विश्ववृत्तेरनितरफलता स्थापनाद्यैरदृष्टं
तत्सत्ताज्ञप्तिमात्रात्तदुचितनियतानुष्ठितिर्नैव सिध्येत् ।
तस्माच्चर्याविशेषे श्रुतिरिह शरणं स्वर्गमोक्षादिहेतौ
सैवादृष्टस्वरूपं प्रथयतु बहुधा तत्तदुक्ताद्विविक्तम् ॥ ७९ ॥

शक्तिर्यागादिकस्य स्वफलवितरणे संभवे वा फलस्य
स्थाप्या मध्ये तयोरित्यबहुमतिपदं सत्सु तौतातिती वाक् ।
शक्ताभावे हि शक्तिर्न भवति शमितो धर्मधर्म्यैक्यजल्प-
स्तद्द्वारे शक्तिशब्दो यदि भवतु परं क्लृप्तिमस्य क्षिपामः ॥ ८० ॥

द्वारं तत्तत्फलाप्तेः श्रुतिभिरवधृतौ देवताप्रीतिकोपौ
व्याचक्रे देवपूजा यजनमिति न तन्न श्रुतं वाक्यविद्भिः ।
आम्नातेऽपेक्षितेऽर्थे न च नयनिपुणैरश्रुतं कल्पनीयं
नो चेत्स्याद्दत्ततोयाञ्जलिरिह भवतां रात्रिसत्रादिनीतिः ॥ ८१ ॥

आराध्यादिप्रकाशः स्फुटमुपकुरुते मन्त्रसाध्यो विधीनां
प्राशस्त्यादिप्रतीतिर्न च भवति मृषावर्णनैरर्थवादैः ।
सत्येऽप्याकाङ्क्षितेऽर्थे तदुभयगमिते वाक्यभेदादि न स्या-
ल्लोकेऽप्येवं हि दृष्टं तदनुगतिमुचां सर्वशास्त्रप्रकोपः ॥ ८२ ॥

बुद्धिर्मन्त्रार्थवादैर्भवति दृढतरा देवतातद्गुणादौ
बाधश्चातीन्द्रियेऽक्षैर्न हि भवति धियां मानता च स्वतो नः ।
दुःखासंभिन्नदेशादिकमिव फलदा देवता तत्रतत्र
प्राप्या च श्रूयतेऽतः कथय कथमियं शब्दमात्रादिरूपा ॥ ८३ ॥

प्राचीनेन्द्राद्यपाये दिशतु कृतफलं को नु कल्पान्तरादा-
वन्ये तत्तत्पदस्था न तदुपजनकाः प्रागनाराधितत्वात् ।
मैवं यस्य श्रुतिश्च स्मृतिरपि नियतादेशरूपे स एक-
स्सर्वाराध्यान्तरात्मा न हि गलितपदो नापि सुप्तस्तदाऽपि ॥ ८४ ॥

अस्त्वेवं कर्मवर्गे स्वयमिह फलदो हव्यकव्यैकभोक्ता
तन्निघ्नैस्तैः किमन्तर्गडुभिरिति च न स्वोक्तिबाधप्रसक्तेः ।
कर्माराध्यत्वमेषां दिशति फलमसौ पूर्वमाराधितस्तैः
श्रद्धेयाः श्राद्धभोक्तृद्विजवदत इमे निर्जरास्तस्य देहाः ॥ ८५ ॥

विश्वेशाकूतभेदव्यवहितफलदे वेधघण्टापथेऽस्मिन्
संस्काराणां गतार्था सरणिरपि तथा मन्त्रणप्रोक्षणाद्यैः।
राजेच्छोपात्तभोग्यप्रभृतिनियमवत्तत्र कार्यान्तरादि-
स्सत्त्वादीनां गुणानां विपरिणतिभिदां तत्फलं केचिदूचुः॥ ८६॥

कृष्यादौ मर्दनादावपि च न हि परप्रीतिमूला फलाप्ति-
स्तद्वत् स्याच्छास्त्रसिद्धेष्विति न सदफलं ह्यत्र दृष्टान्तमात्रम्।
दृष्टौ चाज्ञानुवृत्तिप्रभृतिषु फलदौ शासितुः प्रीतिकोपौ
शिष्टौ चातस्समीची तदुपगतिरिह त्यक्तिरिष्टेऽपि वांशे॥ ८७॥

प्रध्वस्तं कर्म कालान्तरभवितृफलासाधकं तल्लिङादे-
र्वाच्योऽर्थः स्थायि कार्यं न यदि कथमिवान्वेतु कामी नियोज्यः।
तच्चापूर्वं प्रधानं फलजनकमपि स्यान्नियोज्यप्रसिद्ध्यै
नित्ये नैष्फल्यमस्येत्यभिदधुरपरे तेऽपि निर्धूतकल्पाः॥ ८८॥

कृत्युद्देश्यं सुखादि स्वत इह न परं स्यादनन्यार्थवेद्यं
क्लृप्तिश्चान्यस्य हेतोरपि च परिहृतं तत्परत्वं श्रुतीनाम्।
नित्ये चापूर्वतोऽन्यत् फलमनघगिरस्सस्मरुर्दुस्त्यजं त-
न्नो चेत् स्वस्मिन्नियोगायुतमपि निपुणान्नैव शक्तं नियोक्तुम्॥ ८९॥

व्युत्पत्तिश्चेल्लिङादेः स्वयमवगमिते स्यान्मिथस्संश्रयादि-
र्नान्यैरत्रानुभूतिः स्मृतिरपि न च वस्तद्द्वयान्यो विमर्शः।
अर्थापत्त्या मिते चेन्न गुरुमतमिदं मन्यसे तत्तथा चेत्
कल्प्येत द्वारमात्रं तदिति न खलु तद्वाच्यभावादिकल्प्यम्॥ ९०॥

देवप्रीत्यादिकं वा विदितमिह विधिप्रत्ययस्यास्तु वाच्यं
नात्रान्योन्याश्रयो न श्रुतपरिहरणं नापि क्लृप्तिर्गरिष्ठा।
प्राधान्यं स्याच्च किञ्चिन्नृपभजननयात् सिद्धमेतच्च शास्त्रै-
रित्थं स्वर्थविरोधेऽप्यतिगरिमभयान्नेष्यते शब्दशक्तिः॥ ९१॥

स्वव्यापारं विशेष्ये स्वयमभिदधते नैव शब्दाः कदाचित्
श्रुत्वा लिङ्व्यापृतिं वा कुत इह यतनं स्वोपयोगाद्यबोधे।
तस्मादास्माकतत्तद्यतनकृदभिधा स्वस्य वाच्या लिङादे-
रित्युक्तिं बह्ववद्यामममनिषत बुधास्त्रस्तरीमात्ररूपाम्॥ ९२॥

न स्यात् पुंसः प्रवृत्त्यै विदितमपि गिरा स्वेष्टहेतुत्वमात्रं
दुस्साधादावयोगादथ सहकुरुते साध्यतैकार्थयोगः ।
इत्थं शक्तिर्द्वये स्याद्गरिमहतमिदं किञ्चिदत्रार्थतश्चे-
दिष्टोपायत्वमर्थादुचितमिह ततः खण्डिता मण्डनोक्तिः ॥ ९३ ॥

धात्वर्थस्यैव रूपं किमपि हि कथयन्त्यत्र सर्वे लकाराः
कर्तृव्यापारसाध्यं त्वभिदधति विधिप्रत्ययास्तल्लिङाद्याः ।
वैघट्यं द्वारसिद्धिः प्रशमयति तथा सन्ति लोकोक्तिभेदा-
स्सिद्धं शब्दानुशिष्ट्या त्विदमुचितमिति स्थापितं भाष्यकारैः ॥ ९४ ॥

इष्टस्वर्गादिकस्य त्वितरदपि यदा साध्यमुक्तं तदाऽर्थात्
सिद्धं तत्साधनत्वं सुगममिह तदाऽनर्थकत्वं निषेध्ये ।
नित्यत्वेनोपदिष्टेष्वकरणमपि तत्तुल्यमेवार्थलब्धं
सामान्यात् प्राप्तमेतत् फलनियतिरपि व्यज्यते तत्तदुक्त्या ॥ ९५ ॥

सन्ति ह्यन्ये लिङर्थाः कथयितुपुरुषाकूतभेदास्तथाऽत्रा-
प्यासस्याहुर्नियोगं हितमभिलषितं केऽपि भाष्याशयस्थम् ।
शास्त्राज्ञाचेदनात्वं श्रुतिषु विधिपदैरन्वितत्वं नञोऽपि
स्वादेशे चावधूते भवति समुचितः प्रत्यवायः स्वतन्त्रात् ॥ ९६ ॥

षाड्गुण्यस्यैव कुक्षौ गुणगण इतरः श्रीसखस्यैव विश्वं
षट्स्वन्ये ज्ञानशक्त्योर्विततय इति च व्यक्तमुक्तं हि तज्ज्ञैः ।
निस्सीमानन्दभावस्थिरचरचिदचिच्छासनप्रेरणाद्या
ऐशानज्ञानधर्माः कतिचन नियताः केचिदागन्तवश्च ॥ ९७ ॥

हेतोः कार्योपयुक्तं यदिह भवति तच्छक्तिशब्दाभिलप्यं
तच्चामुष्य स्वधर्मस्तदितरदपि वाऽपेक्षितत्वाविशेषात् ।
विश्वं तद्विष्णुशक्तिर्मुनिभिरभिदधे तत्रतत्रोपयोगा-
दन्या सर्वाद्भुतैकोदधिरगणि न सा तत्स्वरूपादिमात्रम् ॥ ९८ ॥

यद्भ्रंशान्मन्त्ररुद्धो न दहति दहनश्शक्तिरेषाऽस्तु सोऽयं
हेतुर्मन्त्राद्यभावस्स च गत इति तद्धेत्वभावाददाहः ।
शक्तेर्नाशे किमस्याः पुनरिह जनकं वृत्तिरोधस्तु युक्तो
वह्नेरित्यादिघोषो विरमति विदिते शब्दतश्शक्तितत्त्वे ॥ ९९ ॥

शब्दादिष्वस्ति शक्तिर्यदि कथमिव न द्रव्यतैषां गुणित्वे
सा चेन्नास्त्येषु कार्यं किमपि कथमितः स्यादितीदं न युक्तम् ।
शक्तिश्शक्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे
निस्तारश्चेत्स्वभावात् फणिमरणमिह प्रस्तुते किं प्रवृत्तम् ॥ १०० ॥

बाह्याक्षादेरवृत्तौ चिरविदितमपि स्मर्यते येन सोऽयं
संस्कारस्तुल्यदृष्टिप्रभृतिसहकृतश्चेतसस्साह्यकारी ।
नासौ पूर्वानुभूतिः कथमुपकुरुतां सा पुरैव प्रनष्टा
तुल्यादेर्नापि दृष्टिः कथमनवगते सा स्मृतिं नैव कुर्यात् ॥ १०१ ॥

यज्जन्यां संस्क्रियां यत् किमपि नियमतो बोधयिष्यत्यदृष्टं
तत्तद्वेद्यावलम्बिस्मृतिमुपजनयेत् संमतं च द्वयोस्तत् ।
न ह्यन्यद् दृश्यतेऽत्र क्वचन तदधिके कल्पिते गौरवं स्या-
दित्युत्प्रेक्षा न युक्ता न हि परजनिते क्वापि तत्संस्क्रियोक्तिः ॥ १०२ ॥

बुद्धेरर्थेषु पूर्वप्रसरणजनितस्तेषु भूयोऽवगाहे
संस्कारः कारणं तन्मतिगत उचितस्सोऽत्र धीद्रव्यपक्षे ।
आत्माधारस्य तद्धीप्रसरजनकताक्लृप्तिरौचित्यहीना
धीनिष्ठेनैव तेन ह्युचितमविकृतेरात्मनः कुण्ठतादिः ॥ १०३ ॥

शीघ्रं यातीति कर्मातिशयसमधिको दृश्यते कुत्र वेग-
स्तद्भेदैर्वेगभेदं कथयसि च समस्तीव्रमन्दक्रमादिः ।
तत्कर्मस्वाद्विगीते प्रथमवदुचिता तद्गुणोत्पन्नता चेत्
बाधो नास्मिन्विपक्षे गुणपरिपदि वा कर्म सत्तत्त्वतः स्यात् ॥ १०४ ॥

शाखाकोदण्डचर्मप्रभृतिषु सति चाकर्षणादौ कुतश्चिद्
भूयः स्वस्थानयानं भवति स तु गुणः स्यात् स्थितस्थापकश्चेत् ।
मैवं संस्थानभेदस्स भवतु नियतो यद्विशिष्टे तवासौ
तेन द्रौत्यं विलम्बो विरतिरपि परावर्तने जाघटीति ॥ १०५ ॥

प्राग्देशप्रापकोऽसौ किमिति नियमितो मेदिनीमात्रनिष्ठ-
स्तोयाग्न्यादावदृष्टेरिति यदि न पृथिव्येकदेशेऽप्यदृष्टेः ।
भूम्यंशे दृश्यते तत्फलमिति यदि नाबादिभेदेऽपि साम्यात्
भूपष्टम्भादिभेदादिदमिति च विपर्यासकल्पेऽप्यपायात् ॥ १०६ ॥

केचिद्देशान्तराप्तेर्जनिमभिदधते कर्म या कर्मजेष्टा
नेत्येकेऽम्भः प्रवाहस्थिरवपुषि झषे तत्प्रतीतेरभावात् ।
खादौ स्रोतःप्रदेशान्तरयुतिरुदके खादिदेशान्तराप्ति-
स्तुल्या तल्लौल्यदृष्टिः पयसि तदधिकं कर्म नालम्बते चेत् ॥ १०७ ॥

कर्मत्वान्नाक्षयोग्यं विमतमिति यदि व्याप्तिशून्यं तदेत-
द्योग्यत्वेऽपि ह्यदृष्टिस्सहकृदपगमादर्यमादिक्रियाणाम् ।
नो चेत्कर्मैव न स्यात् फलमपि हि भवेत्कर्महेतोस्त्वदिष्टाद्
द्विष्ठत्वाद्वा फलस्य द्वितयमपि भवेत्कर्मवत्सर्वदा वः ॥ १०८ ॥

केचित्कर्मादिरूपं जगदुरसमवाय्याह्वयं हेतुभेदं
किं तैरेवं निमित्ताश्रयमिह जनकं नानिमित्तं विभक्तम् ।
तत्प्रत्यासत्तिमात्रं व्यभिचरति यदि स्वावक्लृप्तेऽपि तुल्यं
युक्त्या नैयत्यमत्रेत्यपि सममथवा स्वस्ति वः स्वैरवाग्भ्यः ॥ १०९ ॥

कर्मोत्क्षेपादिभेदात् कतिचिदकथयन् पञ्चधा तच्च मन्दं
दिग्भेदात्तस्य भेदे दशविधमपि तत्कल्पनं सांप्रतं स्यात् ।
यत्किञ्चिद्भेदकाच्चेदनवधिकभिदा कर्महेतुध्रुवाच्चे-
दव्याप्तिर्बुद्धितश्चेदियमितरसमा संकरस्त्वत्र सह्यः ॥ ११० ॥

मृत्स्वर्णादिप्रसूते भवति हि घटधीर्नान्यदन्यद् घटत्वं
नैकं बाध्यं समत्वात्तदिह परिहृतिः कुत्रचित्क्वापि योगः ।
पारापर्यं विरोधः परिहरणसमावेशनं चास्त्युपाधौ
तुल्यं चातिप्रसङ्गादिकमिति न यथादृष्टभङ्गः क्वचित्स्यात् ॥ १११ ॥

जातिः प्राणप्रदात्री गुण इह तदनुप्राणिते भेद[कः]कं स्या-
दित्याहुः केऽपि नेत्थं नियतिरुभयथाऽप्यर्थदृष्टेर्निशादौ ।
तेनान्वेष्टव्यभेदप्रतिनियतिमता केनचिन्नित्यरूप्यं
प्राप्ता यादृच्छिकीषु प्रमितिषु [तु] च यथादर्शनं तद्व्यवस्था ॥ ११२ ॥

भिन्नेष्वेकावमर्शो न तु निरुपधिकस्तेषु चैक्यं विरुद्धं
ज्ञानाकारोऽपि बाह्यो न हि भवति न चासिद्धमारोपणीयम् ।
तस्माद् गोत्वादिबुद्धिव्यवहृतिविषयः कोऽपि सत्योऽनुवृत्त-
स्तस्य त्यागेऽनुमादेः क्षतिरिति कणभुक्तन्त्रभक्ता गृणन्ति ॥ ११३ ॥

मध्ये यद्यस्ति जातिर्मतिविहतमथो नास्ति भिन्ना भवेत् सा
तस्मादन्यत्र वृत्तिर्न च सकलमतिः क्वापि कृत्स्नांशवृत्त्योः ।
धर्मिध्वंसे तु धर्मस्थितिरपि न भवेन्नात्र गत्यादि च स्या-
दित्याद्यैर्बाह्यजल्पैरनितरगतिका संविदक्षोभणीया ॥ ११४ ॥

अन्यापोहस्तु गोत्वप्रभृतिरिति तु नेदंतया तत्प्रतीते-
रन्योन्यापोहबुद्ध्या नियतिरिति मिथस्संश्रयस्तत्प्रतीतौ ।
विध्याक्षेपक्षमत्वाद्विषमसमतया बुद्धिनैयत्यसिद्धे-
श्शब्दार्थत्वादपोहो विमतिपदमिति व्याप्तिभङ्गादिदुःस्थम् ॥ ११५ ॥

युज्येतोपाधितश्चेदनुगतधिषणा तत्र नेष्टाऽन्यक्लृप्ति-
स्तस्मात् संघातवर्गेष्ववयवरचनाभेदतोऽन्यन्न सिध्येत् ।
सौसादृश्यात्तु जातिव्यवहृतिनियमस्तेन नातिप्रसक्ति-
र्नो चेन्मूर्तत्वमुख्यैस्त्वदभिमतिनयाव्यज्यतां जातिरन्या ॥ ११६ ॥

जातेर्यन्व्यञ्जकं ते तदपि यदि मतं जातितस्संगृहीतं
साऽपि व्यङ्ग्याऽन्यतस्स्यात्तदुपरि च भवेज्जातिसंस्थानमाला ।
स्वेनैव व्यञ्जकस्याप्यनुगतिरिति चेत्तर्हि जातिः किमर्था
व्यावृत्तानां स्वभावाद्यदि तदनुगतव्यञ्जकत्वं जितस्त्वम् ॥ ११७ ॥

व्यावृत्तेर्व्यक्तिवन्न व्यवहृतिनियमस्साध्यता नानुवृत्तौ
तद्धर्मस्यानुवृत्तौ तदभिमतमिह स्वीक्रियेतेति चेन्न ।
केचित्संस्थानभेदाः क्वचन खलु मिथो भान्ति सादृश्यरूपा-
स्तस्मादन्योन्यजैकस्मृतिविषयतया तत्तदेकावमर्शः ॥ ११८ ॥

सादृश्यस्यानुवृत्तौ भवति परमता जातिरेवान्यथा चे-
त्तन्मूला नानुवृत्तव्यवहृतिरुचितेत्येतदप्यात्तसारम् ।
एकैकस्थं तु तैस्तैर्निरुपधिनियतैस्स्वप्रतिद्वन्द्विकं स्यात्
धर्माभावप्रतीतिप्रभृतिनियमवद् दुस्त्यजेयं व्यवस्था ॥ ११९ ॥

सादृश्यं शक्तिसंख्याप्रभृति च कतिचिद्भिन्नमूचुर्गुणादेः
स्यादत्रातिप्रसक्तिः प्रतिगुणमगुणीकारलिङ्गोपलब्धेः ।
साधर्म्यात् संग्रहश्चेत् सममिदमुभयोर्येन केनापि यद्वा
किं दन्तादन्ति कृत्वा फलमिह बलिभुग्दन्तचिन्तान्तरेऽस्मिन् ॥ १२० ॥

गन्धादौ सन्निदेशो न हि भवति न च द्रव्यभेदे निरंशे
तस्माज्जात्याऽनुवृत्तव्यवहृतिरिति चेदुक्ततुल्योत्तरं तत् ।
तत्तद्वस्तुस्वभावाद् घटत इह मिथस्सप्रतिद्वन्द्विकत्वं
तज्जात्याधारतादेरपि तव नियतिस्तत्र न ह्यन्यतः स्यात् ॥ १२१ ॥

सत्तासामान्यमेके त्रिषु परिजगृहुः केऽपि जातावपीदं
प्रख्यादीनां समत्वात्कथय न किमिदं सर्वनिष्ठं गृहीतम् ।
किञ्च प्रामाणिकत्वप्रभृतिसमधिकं सत्त्वमन्यन्न दृष्टं
तद्ब्रह्मेत्याश्रितं यैर्ध्रुवमपलपितं तत्तु तैर्धर्मतोक्तेः ॥ १२२ ॥

यज्जातीयं यदा यद्यदवधि गुणकं यत्र न ह्यन्यदीदृक्
दृष्टैरित्थं विशेषैर्जगति विषमतां वक्ति वैशेषिकोऽपि ।
नित्येष्वत्यन्ततुल्येष्वपि नियतदशाभेदयोगोऽस्ति शास्त्रात्
प्राच्योपाध्यादयो वा विदुरतिभिदुरान् योगिवर्यादयस्तान् ॥ १२३ ॥

मुक्तास्वस्वत्पक्षक्लृप्ता न हि निगम[दृशां]विदां तादृशाण्वादयो वा
येषामन्योन्यभेदी गजतुरगनयात्कल्प्यतेऽन्यो विशेषः ।
जात्यैक्याद्यः पृथक्त्वैरिह न यदि फलं स्याद्विशेषैः कथं तत्
तेषामप्यस्त्युपाधिस्सम इति न भिदाऽस्त्यत्र संरम्भमात्रात् ॥ १२४ ॥

नास्मद्दृष्ट्या विशेषाः प्रणिहितमनसां तद्धियां क्वोपयोग-
स्तत्तद्वस्तुप्रकाशस्सुलभ इह पुनर्भिन्नधीरस्तु मा वा ।
वि[श्व] स्वं स्रष्टुर्विशिष्टप्रमितिमिह न ते कुर्वते नित्यसिद्धां
तस्मात्तत्सिद्ध्यसिध्योर्न फलमनुमया नागमोऽप्यत्र तादृक् ॥ १२५ ॥

बन्धं नाध्यक्षयामस्समधिकमपृथक्सिद्धयोस्तत्स्वरूपात्
कल्प्ये तस्यातिरेके तदुपरि च तथेत्यप्रकम्प्याऽनवस्था ।
ताभ्यामेष स्वभावाद्घटित इति कृता भक्तिरस्त्वेतयोस्ते
नो चेत् ज्ञानादिकानां विषयविषयिताद्यापतेदन्यदेवम् ॥ १२६ ॥

सम्बन्धे सर्वतुल्ये प्रसजति गुणजात्यादिसङ्कीर्णभावः
तत्तद्द्वन्द्वस्वभावादनियतिशमने निष्फलाऽन्यस्य क्लृप्तिः ।
त्यक्ते तत्तद्विशेषे स्वयमुभयसमे चात्र संबन्धरूपे
नानासम्बन्धपक्षेऽप्ययमधिकरणाधेयभेदः कथं स्यात् ॥ १२७ ॥

धर्मो धर्मी द्वयं वा कृतकमभिमतं यत्र सम्बन्धमत्र
प्राहुः कार्यं स्वभावात्तदुभयघटितं केऽपि दत्तोत्तरं तत् ।
सिद्धेऽसिद्धे समं वा तदुदय इति तु प्रेक्ष्य पक्षत्रयेऽपि
प्रागुक्तेभ्योऽतिरिक्तान् प्रणिहितमनसः पश्यत प्रत्यवायान् ॥ १२८ ॥

सोऽभावो यः स्वभावं नियमयति दशादेशकालादिभेदो
नेवं सर्वाश्रितानां त्यजनमनितरस्थाप्यधीप्रापितत्वात् ।
तत्तत्प्रत्यर्थिभावस्फुरणसहकृतो नञ्प्रयोगक्षमोऽसौ
नाभावानामभावं स्वमपि कलयसे भावभेदादितोऽन्यम् ॥ १२९ ॥

प्रध्वंसप्रागभावो द्वितनुरभिमतः प्रागभावात्ययश्च
प्रागूर्ध्वानाद्यनन्तप्रतिनियतदशासन्ततिः स्यात्तथा नः ।
क्लृप्तेऽन्यस्मिन्नभावे परमपि च[पु]पराभावपारम्परीत-
स्संपद्येतानवस्था स्वत उपरमणं दृष्ट एवास्त्वभीष्टे ॥ १३० ॥

द्रव्येष्वेव ह्यवस्था क्रमत उपनता जन्मभङ्गादिरूपा
नावस्थानामवस्थान्वय इति न भवेत् कार्यतादीति चेन्न ।
ता एवान्योन्यवैरव्यतिभिदुरतयाऽन्योन्यनाशादिरूपा-
श्चिन्त्यो जन्मादिषट्कव्यवहृतिविषयस्तत्तदर्थे यथार्हम् ॥ १३१ ॥

नाभावः कारणानां कथमपि विषयो निःस्वभावत्वयुक्तेः
नाशोऽप्यस्यानपेक्ष्यः स्वयमसत इति प्रागभावादि नित्यम् ।
स्वाभावग्रस्तमेतन्निखिलमपि जगन्निःस्वभावं ततः स्यात्
मेवं भावान्तरात्मन्यधिकवपुषि वा तत्स्वभावत्वदृष्टेः ॥ १३२ ॥

एतावन्तः पदार्था न तु पर इति तत्सिद्ध्यसिद्ध्योरयुक्तं
मेवं योऽस्त्येष सिद्धान्न पर इति वचस्येष दोषो न तु स्यात् ।
सत्येव स्यात्तथापि ह्यधिकमनधिकं वेति शङ्कावकाशो
नैवं चेन्नैव शङ्का न च परिहरणं भित्तिलाभे हि चित्रम् ॥ १३३ ॥

इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं
विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च ।
यन्नास्मिन् क्वापि नैतत् क्षममिह कुहकैरिन्द्रजालं न तैस्तै-
रेकं तत्सर्वसिद्ध्यै कलयत हृदये तत्त्वमुक्ताकलापम् ॥ १३४ ॥

निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे
यत्रोदासि द्विधा वा समगणि गहने सम्मते सन्सतीनाम् ।
निष्क्रष्टुं कश्चिदन्यः प्रभुरिह भगवल्लक्ष्मणाचार्यमुद्रा-
मक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥ १३५ ॥

दृष्टेऽप्यह्नु त्यभावादनुमितिविषये लाघवस्यानुरोधा-
च्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः
त्रातं सम्यग्यतीन्द्रैरिदमखिलतमः कर्शनं दर्शनं नः ॥ १३६ ॥

हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-
क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।
दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त-
त्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥ १३७ ॥

अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोह-
स्तत्त्वोदर्का न तर्कास्तदिह जगति किं मेधया साधयामः ।
तिष्ठन्त्वेतल्लघिष्ठाः कतिचन दधतो मानसे मानसेतुं
हंहो सभ्यानसभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति ॥ १३८ ॥

स्यादित्थं शिक्षितार्थो य इह यतिपतिच्छात्रहस्ताग्रहनृत्य-
न्नाराचन्यासरेखासहचरितमतिस्सर्वतन्त्रस्वतन्त्रः ।
शुष्कोपन्यासशिक्षापटिमकटुरट[द्रूण्ड]द्वैरिविद्वत्करोटी-
कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १३९ ॥

गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद् दूरवान्तं
कां शङ्कां शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ १४० ॥

॥ समाप्तश्चायं तत्त्वमुक्ताकलापः ॥

शुभमस्तु



# सव्याख्यतत्त्वमुक्ताकलापविषयसूची

## नायकसरः

## बुद्धिसरः

## अद्रव्यसरः

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमन्निगमान्तमहादेशिकप्रणीतः

# तत्त्वमुक्ताकलापः

श्रीमन्नृसिंहदेवकृतानन्ददायिनीव्याख्यासनाथीकृतश्रीमन्निगमान्त-
महादेशिकप्रणीत ( स्वोपज्ञ ) सर्वार्थसिद्धिव्याख्यया, अप्या-
श्रीदेवनाथताताचार्यविरचिताक्षरार्थव्याख्यया च
संवलितः

## [ द्वितीयो भागः ]

|| श्रीः ||

|| श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ||

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमन्निगमान्तमहादेशिकप्रणीतः

# तत्त्वमुक्ताकलापः

## नायकसरः तृतीयः

व्याप्त्याद्यव्याकुलाभिः श्रुतिभिरधिगतो विश्वनेता स विश्वं
क्रीडाकारुण्यतन्त्रः सृजति समतया जीवकर्मानुरूपम् ।
रोषोऽपि प्रीतये स्यात्सुनिरसविषयस्तस्य निस्सीमशक्तेः
स्वेच्छा[यां] तत्सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः ॥१॥

### सर्वार्थसिद्धिः

तदेवं प्रत्यगर्थद्वये प्रथमोद्दिष्टो जीवश्चिन्तितः । अथेश्वरश्चिन्त्यते । तत्र तावत्प्रमाणविशेषात् सिद्धिं प्रस्तौति—व्याप्त्याद्यव्याकुलाभिरिति ॥ धर्मप्रवृत्तियुक्तसर्वदेशकालव्यापितयाऽन्यथाकरणशङ्कानर्हाभिरित्यर्थः । यद्वा अनुमानवद्व्याप्तिपक्षधर्मतानिरूपणजनितव्यभिचारसंभवादिरहिताभिरिति । श्रुतिभिरिति भ्रमादिमूलत्वासंभवख्यापनम् । शब्दानां सिद्धे व्युत्पत्तिस्तत्र तात्पर्यं च साधयिष्यते । विश्वनेता—विश्वेषां यथेष्टं विनियोक्ता । स कथं श्रुतिभिरधिगतः, कारणवाक्येषु सदादिशब्दैः 'तद्धेदं तर्ह्यव्याकृतमासी'दित्यादिप्रदर्शितस्याव्यक्तापरपर्यायस्य प्रधानस्याभिधानादिति चेत्, तन्न; अव्यक्तस्य तदैक्षत, 'सोऽकामयत' इत्याद्युक्तस्वसङ्कल्पपूर्वकसृष्ट्याद्यसंभवात् । न खल्वीक्षणादिशब्दो भाक्तः; मुख्ये बाधकाभावस्य साधकभूयस्त्वस्य च शारीरके स्थापितत्वात् ।

सदेव सोम्येदमग्र आसीदित्याद्यचेतनसामानाधिकरण्यात् कारणमचेतनमिति चेन्न; सामानाधिकरण्यस्य स्थूलसूक्ष्मचिदचिद्वस्तुविशिष्टविवक्षयाऽप्युपपत्तेः । सर्वं च जगत् कर्तुश्शरीरतयाऽऽम्नातम्; 'अस्मान्मायी सृजते विश्वमेत'दिति । ईदृशी च सृष्टिः 'सोऽभिध्याय शरीरात्स्वा'दित्युपबृंहिता । अधीयते चाथर्वणिकाः –

विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥
सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् ।
गौरनाद्यन्तवती सा जनित्री भूतभावनी ॥

इति। अगीयत चैतत्—मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरमिति। अतस्साक्षात् संकल्पाश्रयत्वम्, व्यवधानेन तु विकाराश्रयत्वमिति सर्वाविरोधः।

ननु सद्विद्यायां मृत्पिण्डलोहमणिनखनिकृन्तनदृष्टान्तैः यथा पृथिव्यामोषधयस्संभवन्तीत्याथर्वणिकवाक्याच्चाचेतनमात्रोपादानत्वं जगतः प्रतीयत इति चेन्न; मृत्पिण्डादिनिदर्शनानामेकविज्ञानेन सर्वविज्ञानस्यासंभवचोद्यपरिहारपरत्वात्, यथा पृथिव्यामिति वाक्यस्य त्वेकस्माद्विचित्रानन्तोत्पत्तिसंभवार्थत्वात्। न तु चेतननैरपेक्ष्यमेतैस्सूच्यम्; अन्यथा यथा सतः पुरुषात्केशलोमानीति चेतनसन्निधिसापेक्षोत्पत्तिनिदर्शनायोगात्। अस्तु तर्हि तद्वदयस्कान्तादिनयेन निर्व्यापारपुरुषसन्निधानात् प्रकृतेः प्रवृत्तिः, सर्वस्य च कार्यजातस्य जीवकर्महेतुकत्वात्, अपहतपाप्मत्वसर्वज्ञत्वादीनां च तस्मिन्नवस्थाभेदेनोपपत्तेरिति, तन्न। यथोर्णनाभिस्सृजते गृह्णते चेति प्रथमोक्तदृष्टान्तवैघट्यात्।

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥

इति पुरुषस्यापि पराधिष्ठाने जगत्सृष्ट्युपयोगोक्तेः।

न च जीवस्य संवर्तसमयसंहृतकरणकलेबरस्य मुख्येक्षणादिसंभवः। मुक्तस्तर्हि प्रकृतिपुरुषयोरधिष्ठाता स्यात्; तस्य सत्यसंकल्पस्य स्वेच्छया पितृलोकादिविचित्रकार्यस्रष्टृत्वाम्नानान्मुख्येक्षणसिद्धेः। जीवान्यत्ववादाश्च बद्धान्यत्वविषयाः स्युः। ममैवांशो जीवलोके जीवभूतस्सनातन इति जीवत्वस्यावस्थारूपत्वोक्तेः; मुक्तस्यैव हिरण्यगर्भादिदेहाधिष्ठानेन सृष्टिस्थित्यादिहेतुत्वमिति सर्वपुराणादिसामरस्यमिति; तदपि मन्दम्। एकस्यैवानाद्यन्तस्य सर्वमुक्तोपसृप्यत्वश्रवणात्, मम साधर्म्यमागताः, स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते इत्याद्युपबृंहणविरोधाच्च।

सायुज्यं प्रतिपन्ना ये तीव्रभक्ता स्तपस्विनः।
किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ॥

इति च भगवदुक्तिः। मोक्षधर्मे च अनेन साम्यं यास्यामीति मुमुक्षोरभिसन्धिवचनम्। प्रपञ्चितं चैतत्—'परेण पर [धर्मी च] धर्मेण भवत्येष समेत्य वै' इत्यादिभिः एकस्य च सर्वप्रशासितृत्वं निस्सीमत्वं च श्रुतिस्मृतिशतसिद्धम्। अपि च मुक्तास्सर्वे किं संभूय जगत् सृजन्ति उत प्रतिनियतकार्याः? नाद्यः; स यदि पितृलोककाम इत्यादिभिरव्यवस्थितेच्छादृष्टेः, सर्वेषामेकरूपेच्छाक्लृप्तौ गौरवात्, तथा चाश्रवणात्।

न द्वितीयः, इदं सर्वमसृजतेत्यादिभिरेकस्य सर्वकर्तृत्वोक्तेः। समुदायैकत्वविवक्षा तु क्लिष्टा निर्मूला च; श्रुत्या क्लृप्त्या वा तदयोगात्। अतः पतिं विश्वस्यात्मेश्वरमिति श्रुत एक एव सर्वकर्तेश्वरः।

प्रयोजनादिविरहात्र कर्तेश इति ब्रुवन्।
तस्य सिद्धावसिद्धौ च व्याघातादिपराहतः॥

मा भूदनुमानम् प्रसङ्गस्तु स्यादिति चेन्न; प्रयोजनशून्यत्वे कर्तृत्वं न स्यात्। अस्ति च कर्तृत्वम्; अतः प्रयोजनवानिति विपर्ययविश्रमात्। तथा सति नेश्वरस्य बाधः प्रयोजनसाधकानुग्रहार्थत्वात्। अथ प्रयोजनवत्त्वे कर्मवश्यत्वप्रसक्तिः; तदभावात् प्रयोजनशून्य इति। एवमपि प्रयोजनशून्यविश्वकर्तृत्ववादिनामिष्टप्रसङ्गः। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति चेत्, तर्हि प्रवृत्तिदर्शनात् प्रयोजनं किञ्चिदङ्गीकुरुष्व। स्वार्थं परार्थं वा प्रवर्तते इत्यत्रोभयार्थमित्याह—स इति। विषमसृष्ट्या साम्यं दुःखसृष्ट्या कारुण्यं च भज्येतेत्यत्राह—समतयेति। साम्यकारुण्यवत् यथाकर्म फलदायित्वमपि श्रुतिबलादङ्गीकार्यम्। अतस्तदविरोधेन गुणान्तरं व्यवस्थाप्यमिति भावः। दुःखनिवर्तनांशे कारुण्यसिद्धिः।

ननु स्वसृष्टदुःखनिवर्तनेन कारुण्यलाभाद्वरं दुःखानुत्पादनमेव। अतस्सुखैकतानं जनयेज्जगत् करुणया सृजन्निति चेत्; किमयमीश्वरं प्रत्युपदेशः ? अन्यान् प्रति वा ? नाद्यः, तस्य परोपदेशाधीनप्रवृत्तित्वाभावात्। न द्वितीयः, तत्तत्प्रमाणसिद्धवस्तुस्वभावानामपर्यनुयोज्यत्वात्। स्मर्यते च—

शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता॥ इति।

ननु दयावैकल्यपरिहारायानुग्रहांश एव भगवतः कर्तृत्वमङ्गीक्रियताम्; स्यादेतत्, एवं यदि वयमेव स्वेच्छया वस्तु व्यवस्थापयामः, किंतु प्रमाणदृष्ट्यैव। अतो निग्रहांशेऽपि निरङ्कुशं कर्तृत्वम्। अथ स्यात्—क्रोधो हि निग्रहहेतुः; स च स्वाश्रयदुःखाविनाभूतः, अरोषणो ह्यसौ देव इति प्रसिद्धस्य च कथं क्रोध इति चेन्न; एतौ द्वौ विबुधश्रेष्ठावित्यादिषु कण्ठोक्तेः। भाक्तोऽयं क्रोधशब्द इति चेत्तन्न; प्रसादशब्दस्यापि तथात्वप्रसङ्गात्। अस्त्वेवमिति चेन्न; भिक्षुपादप्रसारणन्यायेन निरीश्वरवादावतारात्। अतः क्रोधावश्यंभावादीश्वरस्यापि दुःखावश्यंभाव इत्यत्राह—रोषोऽपीति। क्रोधरोषादिशब्दार्थौ हि परपीडेच्छामात्रम्। स तावन्न स्वरूपतो दुःखम्; दुःखहेतुत्वमप्यस्याशक्यविषये, तथा दृष्टेः। स्मर्यते हि—

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषणौ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः॥ इति।

न सर्वशक्तेरीश्वरस्य चिकीर्षितमशक्यं किञ्चिदस्ति। अतोऽस्य न दुःखाय क्रोधः, प्रत्युत निग्रहविहारेण प्रीतये स्यादिति।

ननु इह विहारः क्रीडा; सा चारतिपरिहारार्था लोके प्रसिद्धा। जगतः स्रष्टारमधिकृत्य स एकाकी न रमेतेति श्रूयते। अतः क्रीडायोगादरतियोगः, तदभावाद्वा तदभावः स्यात्। मैवम्; क्रीडा हि प्रीतिविशेषप्रभवः स्वयंप्रियो व्यापारः, अन्यथा तल्लक्षणमव्यापकं स्यात्; अतो नारतिप्रसङ्गः। अरतिश्रुतिश्च तदानीमेकाकित्वमनिष्टम्, अतो ब्रह्मादिसृष्टावुदयुङ्क्तेत्यभिसन्धत्ते, न पुरुषान्तरवदप्रवृत्तिजन्यदुःखभयात् प्रावर्ततेति; अशास्त्रवश्यस्य दुःखानर्हत्वात्। तथाऽपि क्रीडार्थं सृजतो विश्वं विहन्येत कृतार्थतेत्यत्राह—स्वेच्छायामिति। अवाप्तसमस्तकामवादो हि न काम्यनिवृत्तिपरः, अवाचकत्वात्, सत्यकामत्वश्रुतिविरोधाच्च। नापि कामनानिषेधार्थः; सोऽकामयत, सत्यसंकल्प इत्यादिबाधात्। अतो यथाकामं सर्वसिद्धिमभिसन्धत्ते इति।

सहकारिभिरारम्भे न स्वातन्त्र्यं विहन्यते।
तत्सद्भावप्रवृत्त्योश्च स्वाधीनत्वव्यवस्थितेः॥

कारकान्तरवैधुर्ये किमपेक्ष्य स्वतन्त्रता।
शरीरमप्यधिष्ठेयं सहकार्येव कुर्वतः॥

निरपेक्षस्वतन्त्रस्य सहकारिमतस्सदा।
अप्रवृत्तिः प्रवृत्तिर्वा नित्यं स्यादिति चेन्न तत्॥

तत्तदिच्छाविशेषेण तत्क्रमस्योपपत्तितः।
इच्छासन्तत्यनादित्वान्न च मूलक्षयः क्वचित्॥

गुणेतरविपर्यासमन्योन्यसहकारिताम्।
विवक्षातः क्वचित् प्राहुः निस्समत्वान्निमित्तताम्॥

प्राप्यः परमभोग्यत्वान्निषेव्यः स्वामिभावतः।
शक्तिकारुण्यभूम्ना च शरण्यस्सीदतां प्रभुः॥

बहिरन्तश्च तव्द्याप्तिस्तत्र यत्रोभयं भवेत्।
विभोरणोश्च न बहिर्नान्तिस्तस्मान्न सा तयोः॥

विभोर्नच्छिद्रमणुना नाणूनां विभुना च तत्।
यथाप्रमाणं संबन्धमात्रमेव तयोर्भवेत्॥

आकाशव्यतिभेदादेरसंभाव्यस्य चोदना।
आकाशादिकमिच्छद्भिरनिच्छद्भिश्च दुर्वचा॥

न विभज्येत गच्छद्भिर्न विहन्ति गतिं च यत्।
अस्पर्शत्वात्तथाभूतं विभु वाऽविभु वाऽस्ति नः॥

विभ्वणुप्रतिषेधेन मध्यमं च निषेधता ।
सर्वासत्त्वं च दुस्साधं सदसत्त्वविकल्पतः ॥

समस्तमूर्तसंयोगस्संभवेद्यस्य तद्विभु ।
तत्संभवोज्झितं द्रव्यं महत्त्वाणुत्वचित्रितम् ॥

अणोरणीयान्महतो महीयानित्यनुश्रवः ।
विश्वव्यापित्वतात्पर्यान्न मिथो बाधमृच्छति ॥

यदल्पपरिमाणेन पृथूनां ग्रसनं श्रुतम् ।
अचिन्त्यमिदमित्येके चिन्तनश्रमभीरवः ॥ १ ॥

---

## सर्वार्थसिद्धिव्याख्या आनन्ददायिनी

### ( श्रीमन्नृसिंहदेवनिर्मिता )

देवि ! त्वां मम बल्लभेति निगमाः स्त्रीषूत्तमामब्रुवन्
देव ! त्वां मम पादचिह्नघटितोरस्कं परं तेऽवदन् ।
इत्येवं वृषशैलनित्यगृहिणोर्नर्मोक्तिपारम्परी
अस्माकं दिशतादनन्तमसकृत्कल्याणपारम्परीम् ॥

उद्देशक्रमात्संगतिरित्याह-**तदेवमिति** । तस्मात् प्रथमोद्दिष्टत्वादेव हेतोरित्यर्थः। उद्देशे वा किं नियामकमित्यत्राह—**अथेति**। धर्मस्य धर्म्यनन्तरभावित्वात् बुद्धेश्चेतनधर्मत्वादिति भावः। लक्षणप्रमाणाभ्यां वस्तुसिद्धिः, तत्रापि प्रमाणेन सिद्धे वस्तुनि लक्षणाद्व्यावृत्तिसिद्धिरिति प्रथमं श्रुतिप्रमाणसिद्धमाह—**तत्र तावदिति**। वृद्धप्रसिद्धिप्राचुर्यादाह— **यद्वेति**। श्रूयत इति श्रुतिरिति नित्यतावगमादित्यभिप्रायेणाह—**अस्मादीति**। ननु कार्यार्थ एव शब्दानां व्युत्पत्तेः सिद्धे ब्रह्मणि श्रुतिः कथं प्रमाणं स्यादित्यत्राह—**शब्दानामिति**। बुद्धिसर इति शेषः। ननु श्रुतिवाक्ये जडकारणत्वप्रतीतेः कथमीश्वरसिद्धिरित्याशङ्क्य ईक्षत्यधिकरणादिन्यायैस्तत्सिद्धिं स्मारयति-**स कथमित्यादिना**। **शारीरक इति**। 'गौणश्चेन्नात्मशब्दात्' ( ब्र. सू. १-१-६ ) इत्यादिभिरित्यर्थः। ननु चेतनपरत्वे ह्यचेतनवाचिशब्दसामानाधिकरण्यं न स्यादिति शङ्कते **सदेवेति**। सच्छब्दः सूक्ष्माचिद्विशिष्टचित्पर इति परिहरति—**सामानाधिकरण्यस्येति**। विशिष्टवाचित्वे प्रमाणमाह—**सर्वं चेति**। अपृथक्सिद्धधर्मवाचकानां धर्मिबोधकत्वादिति भावः।

ननु 'अस्मात्' इत्यादिवाक्ये प्रकृतेरेवोपादानत्वप्रतीतिरितीश्वरो निमित्तमात्रमिति शङ्कां पराकरोति-**अस्मादिति**। स्वाच्छरीरादित्युपबृंहणेन अस्मान्मायीति मायाशरीरकः परमात्मा अस्मात् स्वशरीरभूतादेव विश्वं सृजतीत्यर्थः। प्रकृतिशरीर-

कात् स्वस्मादित्यन्ये । अन्यथा श्रुत्यन्तरविरोधमभिप्रेत्याह—**अधीयत इति**। अधिष्ठानस्य शरीरत्वादिति भावः। एवमनभ्युपगमे 'सोऽकामयत' इत्यादिश्रुतिविरोधं, निर्विकारत्वविरोधपरिहारं चाभिप्रेत्याह **अत इति**। ननु सदादिशब्दानां चेतनपरत्वे स्वावान्तरवाक्यविरोधादाथर्वणवाक्यविरोधाच्चेक्षणं गौणं नेतव्यमिति शङ्कते—**नन्विति**। सद्विद्यावाक्यगतनिदर्शनस्याविरोधं दर्शयति—**मृत्पिण्डादीति**। तावताऽपि प्रकृतोपपत्तेरिति भावः। **एकस्मादिति**-लोमानीत्यचेतनस्योपादानताप्रतिपादने न तात्पर्यमिति भावः। उक्तार्थ उपपत्तिमाह—**यथा सत इति**। सतश्चेतनत्वेऽपि स न जीवः, किंत्वीश्वर इत्यानन्दमयाधिकरणसिद्धार्थं वक्तुं जीवपरत्वं शङ्कते—**अस्त्विति**। सतः पुरुषात् केशलोमानीति वाक्यप्रतिपाद्यस्य पुरुषस्य निर्व्यापारस्यापि सन्निधिमात्रेण केशादिविकारवदित्यर्थः। तत्रोपष्टम्भकान्तरमाह—**सर्वस्य चेति**। कर्मवश्यस्यापहतपाप्मत्वं कथमित्यत्राह—**अपहतेति**। "यथा सतः पुरुषात्" इत्यत्रापि परमात्मैव चेतनद्वाराऽधिष्ठाय जनयतीति न तद्विरोधोऽपीत्याह—**प्रकृतिं पुरुषं चैवेति**। यथाऽचेतनस्येक्षणाद्ययोगात् न कारणवाक्यप्रतिपाद्यत्वं तथा जीवस्यापीत्याह—**न चेति**। ननु जीवस्य मुख्येक्षणानुपपत्त्या न कारणत्वमिति शङ्कते—**मुक्तस्तर्हीति**। किंच तस्यैव कारणत्वं युक्तम्; क्वचित् सङ्कल्पमात्रेण सृष्टौ कारणत्वस्याङ्गीकारादित्याह—**तस्येति**।

ननु 'पृथगात्मानं' इत्यादिभेदश्रुतेः कथमेवमित्यत्राह- **जीवान्यत्ववादाश्चेति**। **समैवेति**। अन्यथा 'जीवभूतस्सनातनः' इति विरुध्येतेति भावः। ननु जगत्कारणस्य हिरण्यगर्भाद्यधिष्ठातृत्वं दृश्यते, न चान्यो जीवो जीवान्तरमधिष्ठातुं समर्थ इत्यत्राह—**मुक्तस्यैवेति**। सङ्कल्पमात्रेण सृजतोऽधिष्ठातृत्वोपपत्तेरिति भावः। 'मुक्तोपसृप्यव्यपदेशाच्च' इति सौत्रहेतुना निराचष्टे—**एकस्यैवेति**। **समेत्यादि**। मुक्तेभ्योऽपि भेदावगमादिति भावः। ननु उपबृंहण एव स्वातन्त्र्यमतुलत्वेन विशेषितं, तथा च प्राप्यस्य यत् स्वातन्त्र्यं तादृशमिति लभ्यते। तत् स्वातन्त्र्यं च सृष्टिसंहारकर्तृत्वमेव, भेदवादश्च कथंचिन्नेय इत्यत्राह—**सायुज्यमिति**। नित्यं किङ्करा इति युक्तं, न तु नित्यं निरुपद्रवा इति, व्यवधानात्। नन्वत्र साम्यशब्द ऐक्यपरोऽस्त्वित्यत्राह—**प्रपञ्चितमिति**। परेण समेत्य परधर्मीव परमात्मेव भवतीत्यर्थः। **एकस्य चेति**।

'एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।

एकश्शास्ता न द्वितीयोऽस्ति शास्ता' इत्यादिभिस्सिद्धमित्यर्थः।

**स यदीति**—यदिशब्देनाव्यवस्थाप्रतीतेरित्यर्थः। ननु च श्रुत्यैवैकरूपेच्छावत्त्वमुच्यत इत्यत्राह—**अश्रवणादिति**। **इदं सर्वमिति**। यद्यपि प्रथमपक्षेऽपीदं दूषणमस्ति, तथाऽपि दूषणान्तरस्य सत्त्वात्तदुक्तमिति ध्येयम्। ननु कचित् क्लिष्टाऽप्यभ्युपगम्यत इति चेत्तत्राह-**निर्मूला चेति**। यत्र प्रमाणमस्ति तत्र क्लिष्टाऽप्यङ्गीकार्येति भावः। ननु प्रकृतेऽपि तदस्त्वित्याशङ्क्य किं तत्कल्पने श्रुतिरस्ति उत युक्तिरिति विकल्प्य

तदुभयमपि दूषयति—**श्रुत्येति**। तदभावादिति भावः। नन्वीश्वरस्य प्रयोजनाभावान्न कर्तृत्वमिति जैनोद्गारमनुसृत्य जीव एक एव कारणं इति युक्तिबलादेकत्वश्रुतिः समुदायैकत्वपरेति शङ्कामनुवदति—**प्रयोजनादीति**। ईश्वरो न जगत्कर्ता प्रेक्षावत्त्वे सति तत्कृतिसाध्यप्रयोजनरहितत्वादित्यनुमाने पक्ष ईश्वरस्सिद्धो, न वा ; आद्ये कर्तृत्वेन सिद्धत्वाद्धर्मिग्राहकमानबाधः। द्वितीये त्वाश्रयासिद्धिरिति दूषणानुमानं व्याहतमित्यर्थः। **मा भूदनुमानमिति**। पक्षधर्मतायास्तर्काङ्गेषु परिगणनाभावात्तत्र नेदं दूषणमिति भावः। एवमप्यननुकूलत्वरूपतर्काङ्गशून्यत्वात् तर्काङ्गाभासत्वमित्याह—**नेति**।

ननु प्रयोजनवत्त्वं कर्मवश्यताव्याप्तमिति कथमकर्मवश्ये प्रयोजनवत्त्वमिति शङ्कते—**अथेति**। प्रयोजनवत्त्वं कर्तृत्वव्यापकं न वा ; द्वितीय आह—**एवमपीति**। प्रयोजनवत्त्वं माऽस्त्वित्ति भावः। प्रथमं शङ्कते—**प्रयोजनेति**। परिहरति—**तर्हीति**। कर्मवश्यत्वं तद्व्याप्यकर्तृत्वाव्यापकत्वान्न तद्व्यापकमिति भावः। **तदनुरोधेन**—यथाकर्मफलदायित्वानुरोधेन कारुण्यसमत्वादिकं व्यवस्थाप्यमित्यर्थः। ननु यथाकर्म फलदाने किं करुणयेत्यत्राह—**दुःखेति**। प्रयोजननिरपेक्षदुःखनिराचिकीर्षा कारुण्यमिति भावः। **नन्विति**। प्रक्षालनाद्धीति न्यायादिति भावः। द्वितीय आह—**तत्तदिति**। प्रमाणसिद्धतत्तत्स्वभावानां तत्तत्कार्यजननशक्तीनामित्यर्थः। 'ब्रह्मणस्तास्तु' इति दुःखजननसामर्थ्यमप्यपरिहार्यमित्यर्थः।

ननु दुःखनिवर्तनात् कारुण्यमित्युक्तं तदयुक्तम् ; यदि कर्मानुरोधेन दुःखं जनयेत् तदनुभवेनैव नाश्यं, अन्यथा कर्मफलत्वाभावप्रसङ्गात्। अथ भाविदुःखानुत्पादो निवर्तनशब्दार्थः ; तस्य कर्माधीनतया तत्सत्त्वे तदुत्पादावश्यंभावात्। अत एव दशवर्षाद्यनुभाव्यदुःखस्य मासमात्रानुभवेन निवर्तनमित्यपि न संभवति। तावत्कालिकानुभवस्य कर्मफलत्वेन कर्मानतिक्रमतः तदयोगादिति चेत्, अत्रोक्तमाचार्यैः—अनेकजन्मानुभाव्यकर्मणः क्षणकालादिसाध्यप्रायश्चित्तादिना निवर्तनमेव कारुण्यम्। नचैतदपि कर्माधीनमिति वाच्यम्। निवर्त्यसमानत्वाभावात्। नचैवं क्षणसाध्यदुष्कर्मणामप्यनेकजन्मानुभाव्यदुःखजनकत्वापादनान्नैर्घृण्यमपि स्यादिति शङ्क्यम्। तच्छमनोपायस्यापि सुकरस्य प्रदानादिति न दोष इति। परिहारमाशङ्कते—**अरोषण इति**। निग्रह हेतुक्रोधाभावान्न सर्वकर्तृत्वमिति भावः। परिहारं खण्डयति—**एतौ द्वाविति**। अरोषणवचनमन्यपरमिति भावः। वैपरीत्यं शङ्कते—**भाक्तोऽयमिति**। **प्रसादशब्दस्यापीति**। यद्यप्येकसमासपदोपात्तत्वेऽपि 'पिकद्विरेफावलिगीतशोभम्' इत्यादौ कस्यचिल्लक्षणायामपि नान्यस्य तथात्वं ; तथाऽपि लोके पुंमिच्छापरतन्त्रत्वाद्वैदिके न्यायाधीनत्वान्न लोकसाम्यमिति भावः। **भिक्षुपादेति**। वेदान्तभागस्यैव भाक्तत्वप्रसङ्गादिति भावः। किं क्रोधस्य दुःखाविनाभावः तादात्म्येन तदुत्पत्त्या वा ; नाद्य इत्याह—**स तावदिति**। सः क्रोधशब्दार्थः। न द्वितीय इत्याह—**दुःखहेतुत्वमपीति**। न क्रोधमात्रं दुःखहेतुरिति भावः। स्मृतिमपि स्वोक्तार्थे प्रमाणयति—**स्मर्यते हीति**। यथा

कामनामात्रस्य न दुःखकरत्वं तथा क्रोधमात्रस्यापीति भावः। शक्यविषयक्रोधस्य प्रीतिहेतुत्वमेवेत्याह—**प्रत्युतेति**। अरतिर्दुःखम्। **तदभावाद्वेति**। अरत्यभावे क्रीडाऽपि न स्यादिति भावः। **क्रीडा हीति**।

प्रीत्या प्रसूतव्यापारः क्रीडेत्याहुर्मनीषिणः।

इत्युक्तत्वादिति भावः। **अन्यथेति**। अरतिपरिहारव्यापारत्वं चेल्लक्षणं राजकुमारादिक्रीडायां प्रीतिविशेषप्रभवायामव्यापकमित्यर्थः।

नन्वरतिविशेषपरिहारार्थत्वं क्वचिदिष्यते, न वा; नाद्यः त्वदुक्तलक्षणस्याप्यव्याप्तेः। न द्वितीयः; तथा सति पूर्वपक्षिलक्षणस्यासम्भव एवेत्यव्याप्तिकथनमसङ्गतमिति चेत्; अरतिविशेषपरिहारार्थस्यापि प्रीतिविशेषप्रभवत्वमस्त्येवातो न दोष इत्याहुः। ननु 'एकाकी न रमेत' इति श्रुतिबलादरतिरस्तीत्याशङ्क्य तत्र किं रतिरिच्छेति तद्विरोधिद्वेष उच्यते; उत दुःखमेव; नाद्य इत्याह—**अरतिश्रुतिश्चेति**। तथाच सृष्ट्यनुकूलत्वादिष्टापत्तिरिति भावः। द्वितीयं दूषयति—**न पुनरिति**। दुःखकारणाभावादिति भावः। ननु यदि साध्यप्रयोजनं तर्ह्यवाप्तसमस्तकामत्ववचनविरोधं मद्दकारिकां पठन् शङ्कते—**तथाऽपीति**। **कृतार्थता** अवाप्तसमस्तकामता। अवाप्तसमस्तकामवचनं किं शक्त्यैव कामान्तरं निराकरोति; उत तात्पर्यगत्येति विकल्पचाद्यं दूषयति-**अवाचकत्वादिति**। द्वितीयं दूषयति-**नापीति**। अविरुद्धार्थे तात्पर्यं कल्प्यमिति भावः। तर्हि तस्य कोऽर्थ इत्यत्राह **अत इति**। अवाप्तशब्दोऽवाप्तप्रायपर इति भावः।

ननु चेतनकर्मानुरूपं सृजतीत्युक्तम्; तथा सति कर्मादिसापेक्षत्वे स्वातन्त्र्यं न स्यादिति शङ्कामनूद्य निराचष्टे-**सहकारिभिरिति**। अन्ये तु यदीश्वरो जगत्कर्ताऽभ्युपगम्यते तस्य स्वातन्त्र्यमपि वाच्यम्। तच्च प्रकृत्यादिसापेक्षस्य विरुद्धमतो न सोऽस्ति; यद्वोदासीन इति निरीश्वरसेश्वरसांख्ययोः शङ्कां निराकरोति—**सहकारिभिरितीत्याहुः**। तत्र हेतुमाह-**तदिति**। सहकारिणामपि प्रकृत्यादीनामीश्वराधीनत्वेन स्वातन्त्र्यस्यैवोपबृंहणात्। किं च स्वातन्त्र्यादेव सहकारिसापेक्षत्वं; अन्यथा नियाम्याभावे नियामकत्वायोगादित्याह-**कारकान्तरेति**। किंचिल्लोके स्वातन्त्र्यं निरपेक्षं न दृष्टमिति तादृशशङ्काया बीजमपि नास्तीत्याह—**शरीरमपीति**। निरपेक्षस्य स्वातन्त्र्याङ्गीकारे बाधकमाशङ्कते-**निरपेक्षेति**। सामग्र्याः पूर्णत्वात् कार्यविलम्बायोगादिति भावः। स्वसङ्कल्पाधीनसहकारिसम्पत्तिर्न सर्वदा तत्क्रमाच्च कार्यक्रम इति परिहरति—**न तदिति**।

ननु संकल्प इच्छा, सा च न सर्वदेति कथं स क्रम इत्यत आह—**तत्तदिच्छेति**। ननु तथा सति प्राथमिकेच्छा नेच्छाधीना, सा च सर्वदाऽस्तीति तन्मूलकेच्छाऽपि सर्वदेति न परंपरेत्यत्राह-**अनादित्वादिति**। इच्छासन्तत्यनादित्वादिति भावः। नन्वेकस्यैव कथमुपादानत्वं कर्तृत्वं च गुणप्रधानभावादिविरोधादित्यत्राह—

**गुणेतरेति**। गुणेतरविपर्यासः एकस्यैव गुणप्रधानभावः परस्परोपकारकत्वं विवक्षितं किंचिदाकारभेदविवक्षयेत्यर्थः। **निमित्ततामिति**। सर्वनियन्तृत्वेन कर्तृतामित्यर्थः। किं विवक्षाप्रयासेन ; कर्तृत्वमेव त्यज्यतामित्याशङ्क्यान्यार्थं विवक्षा कर्तव्येत्याह—**प्राप्य इति**। परमानन्दलक्षणतया प्राप्यत्वं शेषित्वात् सेव्यः कैंकर्यप्रतिसम्बन्धीत्यर्थः। सीदतामकिंचनानां निरतिशयदयादिशालित्वाच्छरण्यत्वं तस्येत्यर्थः। प्रसङ्गाद्धर्मान्तराण्यप्याह—**बहिरिति**। यत्र पदार्थे बहिरन्तः प्रदेशरूपोभयं भवेदित्यर्थः। **विभोरिति**। विभोर्बहिः प्रदेशाभावान्न बहिर्व्याप्तिः, अणोरन्तरभावान्नान्तर्व्याप्तिरित्यर्थः।

ननु विभोरप्यभावप्रदेशोऽस्ति। अणोरप्यन्तः प्रदेशो विद्यते। अणुस्थले विभोरभावेन वृत्त्यभावात् तस्मिन्वा तदयोगादित्यत आह—**विभोरिति**। तत्र हेतुमाह—**यथेति**। स्पर्शवन्मूर्तयोरेव परस्परप्रतिघातकत्वेनात्र परस्परप्रतिघातकत्वाभावादित्यर्थः। आकाशव्यतिभेदः आकाशेन प्रतिघातः। **इच्छद्भिः** बौद्धव्यतिरिक्तैः। **अनिच्छद्भिः** चार्वाकादिभिः। सिद्धावप्रतिघातकत्वेन सिद्धिः असिद्धावापादनासम्भवादिति भावः। तत्र युक्तिमाह—**न विभज्येतेति**। यत् गच्छद्भिर्न विभज्येत न भेदं प्राप्नोति जलादिवत्; नापि कुड्यादिवत् गतिरोधकं तादृशं विभ्वण्वादिकमस्त्येवेत्यर्थः। उक्तरीत्या विभ्वण्वोः प्रतिषेधे सुतरां मध्यमं प्रतिषिद्धमिति सर्वासत्त्वं माध्यमिको वदति। तस्य सिद्ध्यसिद्धिव्याघातेनासत्त्वं दुःसाधमित्यर्थः। सत्त्वं सिद्धत्वमसत्त्वमसिद्धत्वम्। ननु सर्वत्र वृत्तिमत्त्वं विभुत्वमिति वक्तव्यम्; तथा चाधारदेशे वृत्त्यसम्भवात् कथं विभुत्वमित्यत्राह—**समस्तेति**। सर्वमूर्तयोगित्वं विभुत्वमित्यर्थः। **तत्संभवोज्झितमित्यादि**। विभुत्वरहितं द्रव्यं किंचिदणुत्वविशिष्टं किंचिन्महत्त्वविशिष्टमित्यर्थः। नन्विदं लक्षणमीश्वरेऽव्याप्तं, अणुत्वस्यापि श्रुत्याऽवगमादित्यत्राह—**अणोरणीयानित्यादि**। अस्याः श्रुतेरणुत्वपरत्वाभावादिति भावः। नन्वीश्वरेऽणुत्वमहत्त्वे न विरुद्धे, तस्याचिन्त्यस्वभावत्वादिति शङ्कामनूद्य परिहरति—**यदिति**। अल्पपरिमाणशरीरेणेश्वरेण ब्रह्माण्डादिग्रसनं कृष्णाद्यवतारादौ श्रुतमित्यर्थः। तत्राप्यधिकमेव शरीरं तदल्पपरिमाणतया दृश्यत इति न विरोध इति वक्ष्यत इत्यर्थः। पक्षान्तरमाह—**अचिन्त्यमिति**। हेतुभिरपनोद्यं न भवतीत्यर्थः। विस्तरस्तु स्वावसरे भविष्यतीति भाव; ॥ १ ॥

---

## तत्त्वमुक्ताकलापव्याख्या अक्षरार्थः

**( अप्पा श्रीदेवनाथताताचार्यमहादेशिकरचितः )**

**॥ श्रीमते हयग्रीवाय नमः ॥**

**वेदान्ता जगतां हेतुं यमेवैकं प्रचक्षते।**
**श्रीनिवासः श्रियं दत्तां निस्समाभ्यधिकस्स नः ॥**

द्विविधे प्रत्यगर्थे जीवनिरूपणानन्तरमीश्वरं निरूपयितुमारभते। **व्याप्त्यादीति** व्याप्तिरत्र सकलास्तिककुलनिलयदेशकालव्याप्तिः, आदिनाऽपौरुषेयत्वादिः, इत्युभय-

मपि विवक्षितम्। ताभ्यामव्याकुलाभिः अप्रामाण्यशङ्कानास्कन्दिताभिरित्यर्थः। धार्मिकमहाजनपरिग्रहेणापौरुषेयत्वस्थापनेन च श्रुतीनां प्रामाण्यं परीक्षकैर्निश्चितमिति भावः। तेन साधकबाधकानुमानादिदमेव चोद्यं दर्शितम्।

तादृशीभिर्भूयसीभिः श्रुतिभिः नित्यं श्रूयमाणाभिः निश्चितनित्यसत्ताक इत्यर्थः। अत्र श्रुतय एव प्रमाणमिति भावः। तथा च सूत्रं शास्त्रयोनित्वादिति। स क इति चेदाह विश्वनेतेति विश्वेषां यथेष्टं विनियोजक इत्यर्थः। कथमन्येषामयं विनियोजक इत्यत्राह स विश्वमिति। यतस्स विश्वं सृजति ततस्तद्विनियोजक इति भावः। तस्य प्रयोजनाभावान्न सृजेत् स इत्यत्राह—क्रीडेति सार्वभौमादेरिवतस्यापि लीलाप्रयोजनस्य दयया परानुग्रहप्रयोजनस्य च सत्त्वात् सृजतीति भावः। तर्हि विषमसृष्ट्या तस्य वैषम्यं प्रसज्येतेत्यत्राह—समतयेति। विषमस्रष्टुः कथं साम्यमित्यत्राह—कर्मानुरूपमिति तत्तत्कर्मानुरूपफलप्रदत्वमेवास्य साम्यं, तत्र वैषम्यं तु तत्तत्कर्माधीनमिति भावः। अत एव कारुण्यभङ्गोऽपि तस्य न प्रसज्यते, तथा च "वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयतीति" कर्मानुरूपफलदायित्वोपगमे पापकर्मानुगुणफलदानाय कोपस्याप्यावश्यकतया दुःखवत्त्वमपि स्यादित्यत्राह—रोषोऽपीति। अशक्यविषये कोपो दुःखायैवावकल्पते, न शक्यविषये किंतु निग्रहात् प्रीतये भवेदित्यर्थः। न सर्वशक्तेरीश्वरस्य चिकीर्षितमशक्यं किंचिदस्तीति भावः। तथाऽपि तस्य 'क्रीडार्थं सृजतो विश्वं न युज्येत कृतार्थते'त्यत्राह स्वेच्छायामिति। अवाप्तसमस्तकामत्ववादः सत्यकामस्य भगवतः यथाकामं सर्वसिद्धिमभिसंधत्त इति भावः। एवं "तदैक्षत बहु स्यां प्रजायेय" "अस्मान्मायी सृजते विश्वमेतत्" "विकारजननीमज्ञामष्टरूपामजां ध्रुवां"—

"ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः।
सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्॥"

"यथोर्णनाभिः सृजते गृह्णते च तथाऽक्षरात् संभवतीह विश्वं" इत्यादिश्रुतिभिः

'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्'॥
"प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ॥

इत्याद्युपबृंहणैरुपबृंहिताभिः निखिलहेयप्रत्यनीककल्याणैकतानः स्वेतर समस्तचिदचिद्वस्तुशरीरकः जगन्निमित्तोपादानकारणं सर्वज्ञः सर्वशक्तिः कर्मानुरूपनिग्रहानुग्रहफलप्रदः सत्यकामः सत्यसङ्कल्पः अवाप्तसमस्तकामो भगवान् सिद्ध्यतीति प्रतिपादितम्॥ १॥

इत्यागमिकेश्वरसिद्धिः

अप्रत्यक्षः परात्मा तदिह न घटते धातुरध्यक्षबाधो
योग्यादृष्टेरभावान्न खलु न भवता स्वीकृतः स्वेतरात्मा ।
तस्मिन्देहानपेक्षे श्रुतिभिर [धिगते] वसिते देहबाधान्न बाधो
वेदेभ्यो नानुमानं न च पुरुषवचस्तिष्ठते बद्धवैरम् ॥ २ ॥

**सर्वार्थ०**—यद्यङ्कुराद्युत्पत्तौ कश्चित् कर्ता, स कथं न दृश्येत ? अतो यूपादित्यैक्यमिव प्रत्यक्षबाधितं न श्रुतिः प्रतिपादयतीत्यत्राह—**अप्रत्यक्ष इति** ॥ सर्वेषां स्वव्यतिरिक्तस्यात्मनः प्रत्यक्षत्वासिद्धेः; ईश्वरेऽपि योग्यानुपलब्ध्यभावान्नात्र प्रत्यक्षबाध इत्यर्थः इह—दूर्वादिकार्योत्पत्तौ । कर्तुरदृष्टस्य कथं सिद्धिरिति चार्वाकचोद्यं वारयति—**न खल्विति** । अयं भावः—न तावदर्धलोकायतिकैरद्वैतिभिरिवात्मभेदोऽनङ्गीकृतः । भिन्नाश्चात्मानः परस्परमप्रत्यक्षाः । एवमीश्वरोऽपि स्वप्रत्यक्षोऽन्याप्रत्यक्षतया निषेद्धुं न शक्य इति । अनुमानादात्मान्तरस्वीकार इति चेत्, आगमादीश्वरोऽपि स्वीकर्तव्यः; प्रमाणत्वेन श्रद्धेयत्वाविशेषात्, परोक्षत्वेन न्यक्कारस्यानुमानेऽपि प्रसङ्गात् । लोकायतिकानां तु यद्यपि भूतपरिणतिरूपः परात्माऽपि प्रत्यक्षः, तथाऽपि चैतन्यविशिष्टो न प्रत्यक्षेण गृह्यते; यद्यन्यतस्तु कुतश्चित् तद्विशिष्टतया गृहीतः, एवमीश्वरोऽपि किं न गृह्येत ? बाधानर्हत्वात्; शरीरतया परात्मग्रहणमिति चेत्, आत्मनः शरीरत्वे सिद्धे हि तथा ग्रहणम्, तदन्यत्वसिद्धौ तु परशरीरेऽपि तथैव स्यादिति । अस्तु तर्हि व्यापकानुपलब्ध्या बाधः, कर्तुर्हि शरीरं व्यापकम्; न चाङ्कुराद्युत्पत्तौ शरीरं दृश्यते, अतीन्द्रियं तत्र शरीरमस्त्विति चेन्न; अङ्कुराद्युत्पादकतया तादृशशरीरानभ्युपगमात् । तदभ्युपगमेऽपि करणकलेबरसापेक्षस्य कर्तुः कथमीश्वरत्वम् ? तत्राह—**तस्मिन्निति** । देहानपेक्ष इत्युपलक्षणम् । श्रूयते हि—पश्यत्यचक्षुस्स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीतेति । यदि सर्वशरीरत्वस्य श्रुतिस्मृतिसिद्धत्वात् सर्वेषु कार्येषु शरीरसापेक्षत्वमिति, तथा सति न व्यापकानुपलब्ध्या बाधः । सर्वकार्यानुगुणतत्तद्द्रव्यशरीरकतया शास्त्रैरुपलब्धेः । अथ विगीतमकर्तृकं कर्मवश्याजन्यत्वादित्याद्यनुमानैरीश्वरस्य बाध इत्युच्येत । तत्राह—**वेदेभ्य इति** । अयं भावः—आप्तशास्त्रस्यानुमानैर्विरोधे शास्त्रेणैव तेषां बाधोपपत्तिः; अन्यथा स्वर्गनरकादीनामतीन्द्रियाणां कुतश्चिदनुमानाद् बाधप्रसङ्गात् । शक्यं हि विगीतं न दुःखासंभिन्नसुखसाधनम्. साधनत्वात् किल्बिषवदिति । एवमन्यत्राप्यूह्यम् ।

किं चात्र नैयायिकादिसंमतैरीश्वरानुमानैर्बाधः प्रतिरोधो वा दुर्वारः; विपक्षे बाधकसदसद्भावौ समचर्चौ । अस्तु तर्ह्यादिविदुषस्सिद्धस्य कपिलस्यागमेन ब्रह्मकारणवादभङ्ग इत्यत्राह—**न चेति** । नित्यनिर्दोषश्रुतिविरोधे हि स्मृतेरेव बाध्यत्वं विरोधाधिकरणसिद्धम् । अन्यथा बौद्धाद्यागमैरपि किं न कृत्स्नवेदबाधः ? तेषां भ्रमादिमूलत्वसंभावनयेति चेत्; सममेतत् । सर्वज्ञस्सांख्याचार्यः परमाप्त इति चेन्न; समाधिजनितसार्वज्ञ्यानामपि कर्मभेदैः कदाचिद्भ्रमसंभवात् । न च सार्वज्ञ्ये प्रमाणमस्ति; आहुश्च—

कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं भवेत् ॥

इति । ननु ददृशुः कपिलं तत्र वासुदेवं सनातनमित्यादिभिः स्वतस्सर्वज्ञपरमकारुणिकावतारतया सिद्धस्य कथमनाप्तत्वशङ्केति चेन्न; बुद्धेऽपि समत्वात्; आविष्टत्वमात्रं तत्रेति चेदत्रापि तथा, विरोधाभावात्; अन्यथा बुद्धादीन् प्रेरयत ईश्वरस्यासुरादिषु विप्रलिप्सा दुस्त्यजा । मोहयिष्यामि मानवानित्यादि च स्वयमेवाह । अतः पौरुषेयवाक्यमार्षमपि वेदाविरोधेन नेतव्यमिति । एवं निरीश्वरमीमांसका अपि निर्मूला निगमान्तविद्भिरनुग्राह्याः ।

य एवं स्यादसर्वज्ञः सर्वज्ञं न स बुध्यते ।
इति ब्रुवाणाः सार्वज्ञ्यं लभन्तां तन्निषेधतः ॥ २ ॥

---

आनन्द०—आक्षेपसङ्गतिरित्यभिप्रायेणाह—यद्यङ्कुरेति । ईश्वरस्यापि स्वव्यतिरिक्तात्मत्वादप्रत्यक्षत्वमित्यर्थः । ननु तर्हि योग्यानुपलब्ध्यभावे सति नाहमीश्वर इति बुद्धेः प्रत्यक्षत्वोपपादनमयुक्तं स्यादिति चेन्न । अन्योन्याभावप्रत्यक्षेऽधिकरणप्रत्यक्षस्यैव प्रयोजकत्वादिति भावः । ननु देहातिरिक्तात्मनोऽनङ्गीकारात् कथं तन्निदर्शनेन परमात्मनः प्रत्यक्षत्वाभावकथनमित्यत्राह—चार्वाकेति । नन्वात्मभेदाङ्गीकारमात्रात् नात्मनि बाधकाभावः, घटभेदवदप्रयोजकत्वादित्यत्राह—अयं भाव इति । अर्धलोकायतिकाः मीमांसकाः जगद्रूपशरीरातिरिक्तपरमात्मानङ्गीकारात् । स्वप्रत्यक्ष इति । यथा जीवानां स्वान्यप्रत्यक्षायोग्यतया योग्यानुपलब्धिराहित्यान्नाभावः, एवमीश्वरोऽपि योग्यानुपलब्धिराहित्यान्न निषेद्धुं शक्य इति भावः । ननु बाधकाभावमात्रं न साधकमतिप्रसङ्गात् । जीवेत्वनुमानं साधकमस्तीति शङ्कते–अनुमानादिति । ननु लोकायतिकं प्रति नेयं प्रतिबन्दी, तन्मते शरीरस्यैवात्मतया तस्य प्रत्यक्षप्रमाणगम्यत्वादिति शङ्कते–लोकायतिकेति । परिहरति—चैतन्येति । ननु यावद्धर्मविशिष्टतया ग्रहणं न वक्तव्यं, किंचिद्धर्मविशिष्टतयाऽपि ग्रहणे धर्मिसिद्धेरित्याशङ्कते—शरीरतयेति । किं शरीरत्वमेवात्मत्वं, यद्वा ज्ञानाश्रयत्वमिति विकल्प्याद्यं दूषयति—आत्मन इति । द्वितीयं दूषयति–तदन्यत्व इति । परशरीरे ज्ञानस्य सिद्धिर्न स्यादनुपलम्भादिति भावः । नन्वस्त्वनुमानमिति शङ्कते –अस्तु तर्हीति । अङ्कुरादि कर्तृजन्यं न भवति शरीराजन्यत्वादाकाशवदित्युनुमानेनाङ्कुरादिस्थले कर्तुरभावेऽवगते नेश्वरसिद्धिरिति भावः अङ्कुरादीति । दृष्टविपरीताङ्गीकारे निर्हेतुकैवोत्पत्तिरभ्युपगम्येतेति भावः । सापेक्षस्येति । परतन्त्रतया स्वातन्त्र्यलक्षणेश्वरत्वस्य विरोधादिति भावः । ननु दृष्टविपरीताङ्गीकारे निर्हेतुकैवोत्पत्तिरभ्युपगम्येतेत्यत्राह—श्रूयते हीति । प्रमाणाधीनत्वाद्व्यवस्थाया इति भावः । वस्तुतस्तु न व्यापकानुलब्धिरित्याह—यदीति ।

केचित्तु व्यापकानुपलब्धिरित्यनेन किं करचरणाद्यात्मकशरीरानुपलब्धिर्विवक्षिता; किं वा शरीरमात्रानुपलब्धिरिति विकल्प्याद्यं दूषयति—**देहाद्यनपेक्ष** इति। द्वितीयं दूषयति **यद्यीतीत्याहुः**। ननु 'उत्ताना वै देवगवा वहन्ति' इत्यादीनामनुमानेन बाधो न स्यादित्यत्राह—**अयं भाव इति**। आप्तत्वमनन्यपरत्वम्। तथा चोत्तानादिवाक्यस्यान्यपरत्वान्न दोष इति भावः। किल्बिषं—निषिद्धम्। अनुमानस्याभासत्वाच्च न बाधशङ्केत्याह—**किंचेति**। **विरोधाधिकरणसिद्धमिति**। 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति पूर्वतन्त्राधिकरणसिद्धौदुम्बरीसर्ववेष्टनस्य बाध इत्यर्थः। नन्वीश्वरस्य भ्रमाभावात् कपिलस्य तदवतारत्वात्तदुक्तौ कथमनाश्वासोऽन्यथाऽतिप्रसङ्गादित्याशङ्क्ते—**नन्विति**। **अत्रापीति**। सत्यमीश्वरस्य भ्रमाभावः; तथाऽपि कपिलस्येश्वराधिष्ठेयत्वेन वस्तुतस्तदन्यत्वात् यदाऽधिष्ठानं नास्ति तदा भ्रमादिसभवेन तन्मूलत्वसंभवादिति भावः। ननु तद्विशेषाधिष्ठानमाहात्म्यादेव भ्रमाभावात्, कथं तन्मूलत्वमित्यत्राह—**अन्यथाऽपीति**। विप्रलिप्सामूलत्वसंभवात्, न चान्यत्राप्यनाश्वासः, वैदिकविरोधरूपहेत्वभावादिति भावः।

नन्वीश्वरस्सर्वज्ञ इत्युच्यते; स केनचित् ज्ञायते चेत् सार्वज्ञ्यविशिष्टतया ज्ञानात् सोऽपि सर्वज्ञः स्यादित्यनन्तसर्वज्ञापत्तिः। यदि बोद्धा न सर्वज्ञः, तर्हि स नेश्वरं जानीयात्। तथा चाप्रमितस्य तस्य न सिद्धिरिति **चार्वाकपुराणकथां** भिक्षित्वा जल्पन्तोऽर्धलोकायतिका भ्रमनिरासेनानुग्राह्या इत्याह—**एवं निरीश्वरेति**। निर्मूलाः भग्नाभिमानाः। **य इति**। असर्वज्ञो जीवोऽङ्गीकृतः स सर्वज्ञं न बुध्यते न जानाति सार्वज्ञ्यविशिष्टेश्वरज्ञाने सर्वज्ञत्वप्रसङ्गेनासर्वज्ञत्वविरोधान्न बुध्यते चेत् ईश्वरो न सिध्येदित्यर्थः। तद्दूषयति—**इतीति**। सर्वज्ञनिषेधवादी प्रष्टव्यः, स किं सर्वज्ञं जानाति न वा, उभयत्राप्याह—**निषेधत इति**। प्रतियोगिनो ज्ञानाभावे निषेधाभावात्, निषेधे च तज्ज्ञानस्यावश्यकत्वात् स्वस्य सार्वज्ञ्यं दुर्वारमिति भावः। क्वचित्तु **सर्वज्ञमिति** पाठः। तदा सिद्ध्यसिद्धिव्याघात इति भावः। तथा च नागमसिद्धेर्बाध इति ध्येयम्। वेदेभ्यस्तिष्ठत इति मूलस्य वेदान् प्रति बद्धवैरं वैरंप्रकाशयत् स्थातुं न समर्थमित्यर्थः। श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति चतुर्थी। 'प्रकाशन' इत्यादिना तङ्॥ २॥

---

अक्ष०—अङ्कुरादिकार्ये जायमाने कर्तुरीश्वरस्यानुपलम्भात् प्रत्यक्षबाधेन यूपादित्यवत् श्रुतय ईश्वरं साधयितुं न क्षमन्त इत्यत्राह—**अप्रत्यक्ष इति**। स्वात्मनः प्रत्यक्षत्वसंभवेऽपि परात्मा–स्वेतरात्मा अप्रत्यक्षः। न–प्रत्यक्षविषयः प्रत्यक्षयोग्यतारहित इति यावत्। तस्मादिह अङ्कुरादिकार्ये धातुरीश्वरस्य प्रत्यक्षबाधो न वक्तुं शक्य-इत्यर्थः। कुत इति चेदाह—**योग्येति** अभावप्रत्यक्षहेतोः योग्यानुपलब्धेरभावादित्यर्थः। योग्यताविरहेऽप्यनुलब्धेर्बाधकत्वोपगमे परात्मसामान्यस्यैव बाधस्स्यात्। कुत्र चेष्टापत्तिरिति स्वेतरजीवाङ्गीकारिणा भवता चार्वाकेण न वक्तुं शक्यत्याह—

न खल्विति। भवता चार्वाकेणेश्वरानभ्युपगमेऽपि स्वेतरजीवात्मा स्वीकृत एव खलु ? अतोऽनुपलब्धिमात्रस्य बाधकत्वं नेष्टव्यमिति भावः। न चास्मन्मते भूतपरिणतेरेवात्मत्वात् उपलब्धिरस्त्येवेति वाच्यं; चैतन्यवैशिष्टयेन तदुपलम्भाभावात्। चैतन्यविशिष्ट एव ह्यात्मा-तर्हि अस्तु बाधकानुपलब्ध्याऽबाधः कर्तुर्हि शरीरं व्यापकं, न चाङ्कुरादौ शरीरं दृश्यते तत्राह--तस्मिन्निति। 'पश्यत्यचक्षुस्सशृणोत्यकर्ण' इत्यादिश्रुतिभिः करण कलेवरनिरपेक्षकर्तृत्वाधिगमात् न देहबाधेन बाध इत्यर्थः। विगीतमकर्तृकं शरीराजन्यत्वादित्यनुमानेनेश्वरबाध इत्यत्राह--वेदेभ्य इति। शास्त्रेणानुमानस्य विरोधेऽनुमानं न बाधकं भवितुमर्हति, तथा कपिलादिपुरुषवचनमपीत्यर्थः। अन्यथा नास्तिकप्रयुक्तानुमानबौद्धागमादिना कृत्स्नवेदवैदिकबाधापत्तेरिति भावः ॥ २ ॥

**इतीश्वरस्य निर्बाधत्वम् ॥**

---

**वाच्यत्वं वेद्यतां च स्वयमभिदधति ब्रह्मणोऽनुश्रवान्ता**
**वाक्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता।**
**नो चेत् पूर्वापरोक्तिस्ववचनकलहस्सर्ववेदान्तबाधः**
**तत्सिद्धिर्हेतुभिश्चेत् प्रसजति विहतिर्धर्मिसाध्यादिशब्दैः ॥ ३ ॥**

**सर्वार्थ०**—श्रुतिभिरधिगत इत्याद्ययुक्तम्, स्वयंप्रकाशतया तत्सिद्धेः; अतो वेद्यत्वमेव न यत्र, तत्र कथं शब्दवेद्यत्वम्? यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, यद्वाचाऽनभ्युदितमित्यादिभिश्च तदुभयं निषिध्यत इत्यत्राह—**वाच्यत्वमिति**। अयं भावः--स्वप्रकाशत्वं तावन्निगमवेद्यत्वेऽपि घटते; दर्शनस्पर्शनाभ्यामेकार्थग्रहणवदुपपत्तेः। अथानन्यवेद्यत्वमेव स्वयंप्रकाशत्वम्; तदा कथं ततस्तत्साध्यत्वम्? अवेद्यत्वग्राहकात्तत् साध्यत इति चेत्, किं तद्ग्राहकम्? न तावद्ब्रह्मस्वरूपम् तस्य स्ववेद्यत्वावेद्यत्वयोरुदासीनत्वात्; अन्यथा तत्र तत्संशयाद्यनुत्पत्तिप्रसङ्गात्। नापि वृत्तिज्ञानानि, तद्ग्राहकत्वे तदभावे च तदवेद्यत्वसाधनायोगात्। एवं साक्षिण्यप्यवेद्यत्वग्रहणा युक्तिर्भाव्या। ग्राहकान्तरैरग्राह्यं गृह्यत इत्यविरोध इति चेत्तर्हि घटादेरप्यवेद्यत्वं सिद्धम्; स्वग्राहकेतराग्राह्यत्वात्। यैश्च त्रय्यन्तैरवाच्यत्वादिकं सिषाधयिषसि, त एव स्वयं वाच्यत्वादिकमभिदधति 'तस्योदिति नाम, अथ नामधेयं सत्य'मित्यादिषु तद्वाचकविधानात्। 'सर्वे वेदा यत्रैकं भवन्ति, यो वेद निहितं गुहायां परमे व्योमन्, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मित्यादिषु वाक्यतोऽन्यतश्च वेद्यत्वप्रतिपादनादिति। तर्हि, यतो वाचो निवर्तन्त इत्यादेर्निर्विषयत्वप्रसङ्ग इत्यत्राह—**वाक्चित्तेति**। सैषाऽऽनन्दस्य मीमांसा भवतीत्यादिना ब्रह्मानन्दस्यापरिच्छेद्यताप्रतिपादने हि वाक्यतात्पर्यं गम्यते। अन्यथा ब्रह्मविदाप्नोति परम्, आनन्दं ब्रह्मणो विद्वानित्यादिपूर्वापरविरोधः स्ववचनविरोधश्च स्यात्। तदिदमाह—**नो चेदिति**। ब्रह्मप्रतिपादकभागश्च सर्वो निर्विषयः स्यादित्यत्राह—

**सर्वेति**। उपलक्षणमेतत् वेदोपबृंहणशतबाधस्य; वेदैश्च सर्वैरहमेव वेद्यः, वचसां वाच्यमुत्तममित्यादिभिश्च यतो वाचो निवर्तन्त इत्यादेरान्यपर्यं ग्राह्यम्।

माऽस्त्वत्र श्रुतिभिरवाच्यत्वादिसिद्धिः, अनुमानतस्तु स्यादिति शङ्कते—**तत्सिद्धिरिति**। श्रुतिवदेव विरोधप्रसक्त्या परिहरति—**प्रसजतीति**। ब्रह्म अवाच्यमवेद्यं वा एवंत्वादिति हि प्रयोक्तव्यम्; तत्र ब्रह्मपदं साध्याधारं ब्रूते न वा? आद्ये कथं तद्विरुद्धसाध्यधीः? द्वितीये तु निरर्थकता निराश्रयसाध्योक्तिश्च। एवं साध्यपदमपि धर्मिपदसमानाधिकरणं न वा? पूर्वत्र स्वस्य धर्मिणं ब्रूते, स्वव्यापारविरुद्धं च ब्रूत इति चित्रमेतत्। उत्तरत्रानन्वयः। हेतुपदे च स्वपक्षधर्मत्ववाचिनि प्रकृत्यंशो धर्मिविषयः। अन्यथा कथं प्रत्ययांशस्य तन्निष्ठभावाभिधायित्वम्? अतो धर्म्युल्लेखनतद्भाववाचकं हेतुपदं न स्वप्रवृत्तिविरुद्धं साध्यं साधयेत्। एवमनुग्राहकतर्केऽपि धर्मिप्रसञ्जकप्रसञ्जनीयपदेषु विहृतिरवधार्या। प्रतिप्रयोगोऽपि—विगीतं वेद्यं वाच्यं च, भासमानत्वादिति। नात्र द्वितीयस्य व्यक्त्याऽनैकान्त्यम्; जातिवद्व्यक्तेरपि वाच्यत्वस्य वक्ष्यमाणत्वात्; युष्माकं च तत्र विमत्यभावात्। नन्वत्र धर्मिपदस्य धर्मिणि मुख्यवृत्तिरसिद्धा, सिषाधयिषितावस्थत्वात्; उपचाराभ्युपगमे तु विवक्षितविरोधः स्यात्। मैवम्; वृत्तिमात्रस्य स्वपरसंमतत्वेन वाच्यत्वानिश्चयेऽपि प्रयोगोपपत्तेः।

दुस्साधंक्वचिदप्येवमवाच्यत्वादि कस्यचित्।
किं पुनस्सर्ववचसां प्रतिष्ठा यत्र तत्र तु॥

---

**आनन्द०**—आक्षेपिकीं संगतिमाह—**नन्वित्यादिना**। ननु स्वप्रकाशत्वविरोधाद्वेद्यत्वादिकं नोपपद्यत इति श्रुतिरन्यपरा स्यादित्यत्राह—**अयं भाव इति**। स्वप्रकाशत्वं नाम स्वेन प्रकाशमानत्वं विवक्षितमुत स्वाधारकस्वात्मेश्वरत्वादिवदितरावेद्यत्वमिति विकल्प्याद्ये विरोधाभावमाह—**स्वप्रकाशत्वमिति**। न ह्येकेन प्रकाशोऽपरप्रकाशविरोधीति भावः। द्वितीयं दूषयति—**अथानन्यवेद्यत्वमिति**। तद्दूषयति—**तदेति**। ज्ञानाभावे न स्वसिद्धिरिति भावः। इदमुपलक्षणम्—ब्रह्मणोऽपि स्वप्रकाशसिद्धिर्न स्यादिति द्रष्टव्यम्, अभावस्य प्रकाशरूपत्वाभावात्। नन्ववेद्यत्वं स्वेन सिध्यतीति न ब्रूमो येनैवमुपालम्भः स्यादिति शङ्कते—**अवेद्यत्वग्राहकादिति**। **तस्येति**। नन्ववेद्यत्वं स्वरूपमेव स्वव्यतिरिक्तधर्माप्रकाशेऽपि तत्प्रकाश उपपद्यते। किं च स्वव्यतिरिक्तत्वेऽपि साक्षिणाऽन्तःकरणादेरिव प्रकाश उपपद्यत इत्यत्राह—**अन्यथेति**। **तद्ग्राहकत्वे तदभावे चेति**। वृत्तिज्ञानस्य ग्राहकत्वे वेद्यत्वस्यैव सत्त्वेनावेद्यत्वस्याभावात् अग्रहणे च ग्राहकाभावादसिद्धिरित्यर्थः।

नन्ववेद्यत्वस्य वृत्तिज्ञानवेद्यत्वेऽपि ब्रह्मणो वेद्यत्वाभावः कथं न स्यात्, भावाभावयोरेकत्र ग्रह एव विरोधादिति चेन्न। न तावद्वेद्यत्वं नास्तीति निरधिकरणाभावप्रतीतिः, तथात्वे ब्रह्मणो वेद्यत्वं न स्यात्। न हि वह्निरस्तीति बुद्ध्या पर्वते वह्निसिद्धिः। एवं च ब्रह्मावेद्यमिति धर्मिणि तद्धीरिति ब्रह्मणोऽपि वेद्यत्वमिति विरोधो

दुर्वार इत्यूह्यम्। ननु साक्षिणः स्वप्रकाशत्वमिवेदमुपपद्यते। परैरपि जीवस्य स्वप्रकाशत्वस्वीकारादित्यत्राह—**एवं साक्षिणीति**। तत्रापि नावेद्यत्वं स्वप्रकाशत्वमिति वक्तुं शक्यमिति भावः। **ग्राहकान्तरेति**। तथा च विरोध इति भावः। ननु वेदान्तबलादेवावाच्यत्वादिकं सिध्यतीत्यत्राह—**यैरिति**। **अवेद्यत्वमाद्यर्थः**। नामनामधेयशब्दौ वाचकत्वबोधकौ। यत्र ब्रह्मणि विषये मुख्यवृत्त्यैकार्थप्रतिपादका भवन्तीत्यर्थः। नन्ववाच्यतादिश्रुतिबलादेव वाच्यवेद्यतादिश्रुतीनामन्यपरत्वं किं न स्यादित्यत्राह—**अन्यथेति**।

ननु 'ब्रह्म वेदेत्यस्य प्रपञ्चमिथ्यात्वं वेदेत्यर्थस्स्यात्। तथा च न विरोधः। ब्रह्मैव भवति इतरशून्यो भवतीत्यर्थः। 'आनन्दं ब्रह्मणो विद्वान्' इत्यत्रापि तथा ब्रह्मानन्दव्यतिरिक्तं मिथ्यात्वेन जानन्नित्यर्थः किं न स्यादित्राह—**ब्रह्मप्रतिपादकभाग इति**। तथा सति ब्रह्मणि प्रमाणाभावाद्वेदान्तानां मिथ्यात्वपरत्वात् स्वप्रकाशत्वस्य वेद्यत्वाभावरूपस्य किञ्चिद्वस्तुसाधकत्वाभावात् ब्रह्म शशशृङ्गप्रायं स्यादिति माध्यमिकागमप्रसरः स्यादिति भावः। नन्वनुमानस्याशब्दात्मकत्वात् कथं श्रुतिवत्' इति स्वचनादिविरोध उच्यत इत्यत्राह—**ब्रह्मावाच्यमिति**। **आद्य इति**। साध्याधारस्य ब्रह्मपदवाच्यत्वात्तत्पदवेद्यत्वाच्च अयोग्यत्वेन पक्षपदं न साध्यपदेनान्वितं सद् बोधजनकमित्यर्थः। **द्वितीये त्विति**। धर्मिसाधकत्वाभावादपार्थकं निग्रहस्थानमित्यर्थः। अर्थान्तरं चेत्याह—**निराश्रयेति**। **चित्रमेतदिति**। अवाच्यमवेद्यमिति साध्यपदं स्वव्यापारेणैव वाच्यत्ववेद्यत्वरूपेण विरुद्धमवाच्यत्वमवेद्यत्वं च प्रतिपादयितुं न शक्नोतीति स्वस्य स्वेन विरोधित्वमिति चित्रमित्यर्थः। **अनन्वय इति**। अनर्थको नाम निग्रह इत्यर्थः। **हेतुपदे त्वसपक्षधर्मवाचिनीति**। सपक्षो न भवतीत्यसपक्षः। पक्षधर्मवाचिनि हेतुपद इत्यर्थः। असपक्षधर्मवाचीति क्वचित्पाठः। तदा प्रकृत्यंश इत्यनेन समानाधिकृतस्यासपक्षधर्मो हेतुस्तदवाचीत्यर्थः। केचित्तु—**हेतुपदे पक्षधर्मवाचिनीति पाठमाहुः**। **अन्यथेति**। प्रत्ययानां प्रकृत्यर्थान्वित स्वार्थाभिधायित्वादिति भावः। ततः किमित्यत्राह—**अत इति**। तथा सति स्वव्यापाररूपवाच्यत्ववेद्यत्ववति धर्मिणि विषये प्रतिज्ञावाक्येन नान्वयं बोधयेत्। तथाचानर्थके निग्रहे प्रवेशः। तथा वाच्यत्वादिमति ज्ञाते हेतुवाक्यप्रतिपन्नो हेतुस्तद्विरुद्धतया न साधयेदित्यर्थाद्धेत्वाभासोऽपीत्यर्थः। **एवमिति**।

यदि ब्रह्म वाच्यं न स्यात् अवेद्यं न स्यात् जडं स्यादित्यत्रापि पक्षादिपदेषु द्रष्टव्यम्। ननु गवादिपदानां जातिवाचकतया व्यक्तेर्वाच्यत्वाभावाद्वाच्यत्वसाधने व्यभिचार इत्यत्राह—**नात्रेति**। **युष्माकमिति**। ब्रह्मणो वाच्यत्वे जडत्वं स्यात् घटादिवदिति वदता वाच्यत्वस्याङ्गीकारात्। अन्यथा ब्रह्मवाच्यं यदि स्याज्जडं स्यात् घटादिवदित्यापादनस्यापि प्रसङ्गेन तुल्यदोषापत्तेरिति भावः। ननु ब्रह्म वाच्यं वेद्यं चेत्यनुमाने ब्रह्मपदेन पक्षनिर्देशो नोपपद्यते, तस्य तद्वाचकत्वसन्देहात्। ततस्तद-

प्रतीतेराश्रयासिद्धिरपार्थकता च स्यादिति शङ्कते—नन्विति । **विवक्षितविरोध इति ।** यद्यपि ब्रह्मपदलक्ष्यस्य पदान्तरवाच्यत्वेऽपि विरोधो नास्ति, तथाऽपि ब्रह्मपदवाच्यत्वं न सिध्येदित्यर्थः । पक्षनिर्देशो वृत्तिविशेषनिर्णयपूर्वक एवेति निर्बन्धो नास्तीत्यप्रयोजकत्वादित्यभिप्रायेणाह —**सैवमिति ।** ननु पदानां प्रयोगो व्युत्पत्त्यधीनः ; व्युत्पत्तिश्च शक्तिनिर्णयः, तन्मूलकवृत्त्यन्तरनिर्णयो वा, तथा च न दोषातिक्रम इत्यत्राह—**वृत्तिमात्रस्येति ।** तथा च प्रयोक्तुः श्रोतुश्चेदमस्य बोधकमिति ज्ञानमेव प्रयोजकं, न तु विशेषज्ञानमिति भावः । वस्तुतस्तु—विशेषतोऽपि ज्ञानमस्त्येव प्रयोक्तुः शक्तत्वेन श्रोतुस्तदन्यवृत्तिमत्त्वेन । न चैवं सिद्धसाधनबाधादिदोषः ; कथायामनुमानोच्छेदापत्तेः । **कस्यचित्** वचसः, प्रतिष्ठाभूतेऽपि क्वचित् वस्तुनि, एवं उक्तरीत्या वाच्यत्वादि, दुःसाधं साधयितुमशक्यं, सर्ववचसां समस्तशब्दानां, प्रतिष्ठा वाचित्वं यत्र ब्रह्मणि, तत्र किं पुनः, दण्डापूपिकान्यसिद्धमित्यर्थः ॥ २ ॥

---

अक्ष०—'यतो वाचो निवर्तन्ते यद्वाचाऽनभ्युदित'मित्युक्तस्य स्वयंप्रकाशस्य ब्रह्मणो वेद्यत्व–वाच्यत्वायोगात् 'श्रुतिभिरधिगतो विश्वनेता' इत्युक्तमयुक्तमित्याक्षिपन्तमद्वैतिनं प्रत्याह—**वाच्यत्वमिति ।** "यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः "सर्वे वेदा यत्पदमामनन्ति" "ब्रह्मविदाप्नोति परं" यो वेद निहितं गुहायामित्यादयः **अनुश्रवान्ताः वेदान्ताः** ब्रह्मणो वाच्यत्वं वेद्यतां च स्वयं स्फुटमभिदधतीत्यर्थः । वचसां वाच्यमुत्तमं, "वेदैश्च सर्वैरहमेव वेद्यः" इत्याद्युपबृंहण वचनानामपीदमुपलक्षणं–स्वयंप्रकाशत्वं परप्रकाश्यत्वेऽप्यविरुद्धमिति भावः । तर्हि 'यतो वाचा निवर्तन्त' इत्यादेः को विषय इत्यत्राह —**वाक्चित्तेति ।** ब्रह्मानन्दपरिच्छित्त्यभावतात्पर्येण प्रवृत्तेरित्यर्थः । अन्यथा पूर्वापरप्रकरणविरोधमाह **नो चेदिति ।** "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" आनन्दं 'ब्रह्मणो विद्वान्' इत्यादिपूर्वापरविरोधः, अवाच्यं ब्रह्मेति स्ववचनमपि व्याहतं, अवाच्यत्वे ब्रह्मेतिवचनायोगात् किं बहुना ? ब्रह्मप्रतिपादकवेदान्तभागः सर्वोऽपि निर्विषयस्स्यादित्याह—**सर्वेति ।** अनुमानादवाच्यत्वसिद्धिमाशङ्कते—**तत्सिद्धिरिति** तत्र व्याघातमाह—**प्रसजतीति ।** ब्रह्म अवाच्यं अवेद्यं वा स्वयंप्रकाशत्वादित्येवं हि प्रयोक्तव्यं भवता । तत्र धर्मिवाचिपदेन ब्रह्मणो वचने कथं तद्विरुद्धसाध्यधीः ? अवचने निरर्थकता आश्रयासिद्धिश्च । एवं साध्यपदस्य धर्मिपदसामानाधिकरण्ये धर्मिवाचित्वं, स्ववाच्यधर्मिणि अवाच्यत्वबोधकत्वं च विरुद्धं, एवं पक्षधर्मबोधके हेतुपदेऽपि व्याहतिरूहनीया ॥ ३ ॥

इत्यवाच्यत्वावेद्यत्वपरिहारः ॥

नित्यं ब्रह्मादिशब्दा निरुपधिकसतो लक्षका इत्ययुक्तं
मुख्यस्यान्यस्य हानेर्न च निपुणधियो मुख्यमिच्छन्ति लक्ष्यम् ।
मुख्यत्वे बाधकं च क्वचिदपि न वयं किञ्चिदालोकयामो
मुख्यं लक्ष्यं च वाचः पदमिति न च तद्गोचरत्वातिपातः ॥४॥

**सर्वा०**—ननु लक्षणया धर्म्यादिपदानि प्रवर्तन्ताम्, मुख्यवृत्तिविषयत्वाभावस्तु साध्यत इति को विरोध इत्यत्राह—**नित्यमिति** । अयुक्तत्वं कुत इत्यत्राह-**मुख्यस्येति** । तीरं गङ्गापदलक्ष्यमितिवन्मुख्यवृत्त्यनर्हं किंचिन्न लाक्षणिकं दृष्टम् । सामान्यतो विशेषतो वा स्ववाचकपदान्तरनिर्दिष्टे हि पदान्तरस्य लक्षणा वाच्या । अन्यथा ब्रह्मादिशब्दा लक्षणया प्रवर्तन्त इत्युक्ते परेष्टमात्रोक्तिः स्यात् । व्यक्तिविशेषमनिष्कृष्य ब्रह्मशब्दवेद्ये लक्षणया प्रवर्तन्त इत्युक्तेऽपि प्रकृत्यादौ तथा प्रवृत्तेरुक्तदोषो दुर्वारः । अथ सर्वकारणत्वादिलक्षिते लक्षणावृत्तिर्ब्रह्मादिशब्दानां साध्येत, तदा तत्र मुख्यवृत्तौ न काचिदनुपपत्तिः ; प्रवृत्तिनिमित्तपौष्कल्यादुपपत्तिरेव । अन्यस्य तु मुख्यस्य हानिः, तद्गुणलेशयोगात् प्रयोगोपपत्तेः । साध्यवाचकपदमप्यवाच्यसंबन्धिनि लक्षणया वर्तत इति वक्तव्यम् । न चान्यत् किञ्चिदवाच्यं, दृष्टमिष्टं वा । तदभ्युपगमेऽप्यत्र ब्रह्मणस्तत्संबन्धित्वं साधितं स्यात्; न त्ववाच्यत्वम् । स्वयंप्रकाशत्वादिति हेतुपदं त्वत्र स्वयंप्रकाशसंबन्धिपरं स्यात्; तथा सत्यन्यत् स्वयंप्रकाशम्, ब्रह्म तु तत्संबन्धिमात्रमिति साधु सिद्धान्तस्समर्थितः ! अथ काल्पनिकं मुख्यवृत्तिविषयत्वं ब्रह्मणः स्यादित्यत्राह—**न चेति** । अयं भावः—त्वन्मतेऽन्येषामपि हि मुख्यत्वं काल्पनिकमेव; तथा सति यस्य पदस्य यन्मुख्यं तत्तस्य लक्ष्यमिति तवैवेदं शोभते । लक्षणानिमित्तं चात्र नास्तीत्याह—**मुख्यत्व इति** । क्वचिदपि-सद्ब्रह्मादिशब्देषु कुत्रचिदपीत्यर्थः । किंच श्रुतिविरोधपरिहाराय मुख्यवृत्तिबाध इष्टः, लक्षणावृत्त्यङ्गीकारेऽपि तद्विरोधस्ते स्थित एवेत्याह—**मुख्यमिति** । विरोधशमनं त्वस्मदिष्टमेव साधीय इति भावः ॥४॥

---

**आनन्द०**—ननु लाक्षणिकशब्देन पक्षादिनिर्देशे न मिथो विरोध इत्याक्षेपेण संगतिमभिप्रेत्याह—**नन्विति** । अत्र किं धर्मिविशेषे लक्षणा साध्यते उत लक्षणामात्रमिति विकल्प्याद्य आह—**तीरमिति** । तथा च व्याघात इति भावः । तदेवोपपादयति—**सामान्यत इति** । द्वितीय आह-**अन्यथेति** । ब्रह्मादिशब्दा लक्षणया प्रवर्तन्त इतीष्टापत्तिरिति भावः । किं च ब्रह्म शब्दवेद्यं इत्यत्रापि सामान्यतो लक्षणा; यद्वा व्यक्तिविशेषनिर्देशेनेति विकल्प्याद्यं दूषयति—**वृत्तिविशेषमनिष्कृष्येति** । द्वितीयमाशङ्कते—**अथेति** । तत्र किं प्रवृत्तिनिमित्ताभावात् लक्षणा; यद्वाऽन्यत्र शक्तस्य नानार्थत्वभीत्येति विकल्प्य आद्य आह—**प्रवृत्तिनिमित्तेति** । बृहति बृंहयतीति श्रुत्युक्तस्य प्रवृत्तिनिमित्तस्य पूर्णत्वादित्यर्थः । द्वितीयं प्रतिवक्ति-**अन्यस्य त्विति** । **साध्यवाचकेति** । ननु अवाच्यपदं शक्तं अवाक्यत्वात्तथा च तत्सम्बन्धिनि लक्षणेत्ययुक्तमिति

चेत्। **अत्र वदन्ति**–समुदायेऽपि काचिच्छक्तिरस्त्येव, तदनुसृत्यैतस्याभिधानम्। अत एव **महाभाष्ये समर्थसूत्रे**—

'ब्राह्मणार्थो यथा नास्ति कश्चित् ब्राह्मणकम्बले' इत्यादिना तदुक्तिरिति। एतेन स्वयंप्रकाशसम्बन्धीत्यादिकमपि व्याख्यातम्।

ननु मुख्यस्य लक्ष्यत्वमनुपपन्नमिति मन्दम्, मुख्यशक्तेर्मिथ्यात्वादित्यत्राह–**अयं भाव इति। यस्य पदस्येति।** ननु घटपदस्य घट एव च्छिद्रेतरपरत्वे लक्षणाऽङ्गीकृता; तथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य काकेष्विति चेत्—उच्यते। यत् पदं यत्प्रवृत्तिनिमित्तकं तत्पदं तद्धर्मान्याप्रकारेण न लाक्षणिकमिति नियमः। प्रकृते च ब्रह्म बृहत्त्वगुणयोगेन वाच्यमिति न तेन रूपेण लाक्षणिकं ब्रह्मपदम्। यदि स्वरूपेण लक्षणा तदा लक्ष्यतावच्छेदकाभावाल्लक्षणैव न स्यात्। भावे वा घटादिकमपि तथेति ब्रह्मणि को विशेषः। यदि धर्मान्तरवत्तया लक्ष्यता तदा निर्विशेषसिद्धिर्नास्तीति व्यर्थः प्रयास इति भावः। **तद्विरोधस्ते स्थित एवेति।** "यतो वाचो निवर्तन्ते" इति वाङ्मात्रनिवृत्तिः प्रतीयते; न तु सम्बन्धविशेषेण। तथा च मुख्यवृत्तिनिवृत्तावुच्यमानायां मानाभावाल्लक्षणावृत्तिरेव निवर्ततां, विनिगमकाभावात्। तस्मादविशेषेण वृत्तिमात्रनिवृत्तिर्वाच्येति विरोधस्तदवस्थ इति भावः। तर्हि श्रुतेः का गतिरित्यपेक्षायामाह—**अस्मदुक्तमेवेति।** ब्रह्मानन्दस्यापरिच्छेद्यताप्रतिपादने तात्पर्यमित्युक्तगतिरित्यर्थः ॥४॥

---

अक्ष०–अथ पूर्वोक्तानुमानप्रयोगे लक्षणया धर्म्यादिपद प्रवृत्तिः, मुख्यवृत्तिविषयत्वाभावस्तु साध्यत इति को विरोध इत्याशयेनाह–नित्यमिति। यथा गङ्गादिपदं कदाचित् प्रवाहे मुख्यवृत्त्या प्रयुज्यते तीरे कदाचिल्लक्षणयेति भेदो दृश्यते न तथा ब्रह्मादिशब्दानां, किं तु सर्वदा लक्षणयैव निरुपधिकसति निष्प्रवृत्तिनिमित्तके ब्रह्मणि ब्रह्मादिशब्दाः प्रयुज्यन्त इत्यर्थः। एतेन ब्रह्मादिशब्दानां वाच्यमर्थान्तरमपि नास्ति तल्लक्ष्यार्थस्य वाचकं पदान्तरमपि नास्तीत्युक्तं भवति, तथा सति लक्ष्यार्थवाचकपदान्तराभावेन तीरं गङ्गापदलक्ष्यमितिवत् प्रकृते लक्ष्यार्थनिर्देशासंभवात् लक्षकपदवाच्यार्थान्तराभावेन शक्यसंबन्धोपपादनासंभवाच्च नैतद्युक्तमित्याह—इत्ययुक्तमिति। **मुख्यस्येति** वाच्यस्य वाचकस्य चेत्यर्थः। **अन्यस्य हानेरिति।** अन्यत्र तद्गुणलेशयोगादौपचारिकत्वादिति भावः। काल्पनिकं वाच्यत्वं ब्रह्मणस्यादित्यत्राह–**न चेति।** एकस्य पदस्यैक एवार्थो मुख्यं लक्ष्यं चेति निपुणधियो नेच्छन्तीत्यर्थः। भवन्मतेऽन्येषामपि वाच्यत्वं काल्पनिकमेवेति का विशेष इहेति भावः। लक्षणानिमित्तं चात्र नास्तीत्याह–बाधकं अन्वयानुपपत्त्यादिकं। क्वचिदपि–सद्ब्रह्मादिपदेषु क्वचिदपीत्यर्थः। यतो वाचो निवर्तन्त इति श्रुतिविरोधपरिहाराय हि भवता ब्रह्मणो वाच्यत्वं परित्यज्यते, लक्ष्यत्वोपगमेऽपि तद्विरोधो दुरुद्धर इत्याह—मुख्यं लक्ष्यं चेति ॥ ४ ॥

**इति सद्ब्रह्मादिशब्दानां नित्यलक्षकत्वानुपपत्तिः ॥**

निस्साधारण्यनारायणपदविषये निश्चयं यान्त्यबाधे
सद्ब्रह्माद्यास्समानप्रकरणपठिताश्शङ्कितान्यार्थशब्दाः ।
अन्तर्यन्ता च नारायण इति कथितः कारणं चान्तरात्मे-
त्यस्मादप्यैककण्ठ्यं भवति निरुपधिस्तत्र शम्भ्वादिशब्दः ॥५॥

**सर्वा०**—एवमीश्वरस्य त्र्यन्तवेद्यत्वं शब्दवाच्यत्वं च स्थापितम् । स तु हिरण्यगर्भादिष्वन्यतम इति शङ्कायां पुरुषनिर्णयादिसाधितं विशेषनिर्धारणं संगृह्णाति-निस्साधारण्येति ॥ साधकबाधकाभ्यामप्राप्ते शास्त्रमर्थवदित्यभिप्रायेणोक्तम्—अबाध इति । सदादिशब्दानां कथं शङ्कितान्यार्थत्वम् ! इत्थम्—सच्छब्दस्तावत् सत्तायोगिषु सर्वेषु प्रवृत्ततया न विशेषनिर्धारणार्हः । ब्रह्मशब्द एकरूढोऽपि बहुषु रूढवत् प्रयुक्ततयाऽन्यार्थत्वशङ्कार्हः स्यात् । आत्मशब्दश्च जीवपरादि-साधारणप्रयोगः । एवं पुरुषप्राणाक्षरादिशब्दा अपि । नारायणशब्दस्तु न जात्युपाधिवचनो न वाऽनेकरूढः । अतस्तेनान्येषां विषयविशेषनिर्धारणं युक्तम् । तत्र च हेतुः समानप्रकरणपठितत्वम्, अन्यथा पश्वधिकरणादेरपि भङ्गः स्यात् । प्रकारान्तरेणापि निर्दिधारयिषुराह-अन्तर्यन्तेति । यथा सुबालोपनिषदि 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति । एतेनान्तर्यामिब्राह्मणमप्येतद्विषयमिति निर्धारितम् । ततः किमित्यत्राह—कारणमिति । 'तत् सृष्टवा तदेवानुप्राविशदि'त्यादिना हि सर्वस्रष्टुस्स-र्वान्तर्यामित्वमप्याम्नातम् । फलितमाह—अस्मादिति । नारायण-शब्देन सदादिशब्दा-नामिति शेषः । ननु कारणं तु ध्येय इत्यत्र शम्भुराकाशमध्य इति समाख्यान्तरं दृष्टम्; ततः किम् ! कारणानुवादेन ध्येयत्वविधिपरं हीदं वाक्यम् । पुरोवादे च नारायणत्व-निर्णये तस्मिन्निरुपाधिकावयवार्थभूम्ना तद्वृत्तिरुपपन्ना; तथा च नारायणानुवाकेऽपि विश्वशम्भुवमित्युच्यते, शाश्वतं शिवमिति च; अतोऽन्यपरवाक्यस्थसमाख्यामात्रम-किञ्चित्करमिति भावः ॥५॥

---

**आनन्द०**—पूर्वशेषत्वान्न पृथक्संगतिरित्यभिप्रायेणाह—एवमिति । हिरण्य-गर्भादिष्विति । ननु विशेषनिर्धारणस्य न किञ्चित् प्रयोजनं दृश्यते । रुद्रादिपदचिह्नि-तोपनिषदामपि प्रमाणतया तदुक्तोपासनानामप्यङ्गीकारात् । तथाच वेदान्ते प्रतिपाद्यं जगत्कारणमेकम् । तन्त्रेष्वन्यतमादस्तु तद्विशेषनिर्णयोऽकिञ्चित्करः । तथाहि—दहरविद्यायामङ्गुष्ठमात्र उपास्यः । अन्तरादित्यविद्यायां पुण्डरीकाक्षत्वादिविशिष्टः । क्वचित्त्र्यक्षशूलपाण्यादिविग्रहविशिष्ट उपास्यः । कारणवाक्यान्यपि 'एको ह वै नारायण आसीत्' 'यदा तमस्तन्न दिवा न रात्रिः' 'न सन्न चासच्छिव एव केवलः' 'प्रजापतिर्वा एक एवाग्र आसीत्' इत्यादीनि तान्येकार्थान्यास्थेयानि । तथा क्वचिल्लक्ष्मीशब्दवाच्य-विशिष्टः, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इत्यादौ । क्वचिदुमाशब्दार्थविशिष्टः 'उमासहायं नीलकण्ठं प्रशान्तम्' इत्यादौ । स सर्वोऽप्येक एवेति सिद्धान्तः । स चोमालक्ष्म्योरैक्य-

भेदयोरविशिष्टः। ननु तथा सति भस्मत्रिपुण्ड्ररुद्राक्षादिधारणप्रसङ्ग इति चेन्न। तेषां नित्यतया विद्याङ्गत्वेन वा प्रमाणसिद्धत्वे दुष्परिहरत्वात्। वेदिकागमबहिष्कृतत्वे तु तत एव त्यागात्। अत एवाथर्वशिरस्युक्तविद्याङ्गभस्मोद्धूलनास्वीकारः। न चैवं चक्राद्यूर्ध्वपुण्ड्रधारणं विप्राणां नियतं न स्यादिति वाच्यम्। तेषां प्रामाणिकत्वेन उपनयनादिवन्नैयत्यसिद्धेः।

एतेन वैष्णवावैष्णवाद्याचारव्यवस्था न स्यादित्यपास्तम्। विष्ण्वादिनिष्ठत्वेनैव च तद्व्यवस्थोपपत्तेरिति चेत्। उच्यते—यद्यपि जगत्कारणादिवाक्यान्यप्येकनिष्ठान्येव। उपनिषदुक्तोपास्यमपि पुण्डरीकाक्षत्रयक्षलक्ष्मीगौर्युपेतं वस्त्वप्येकमेव। तथाऽपि क्वचिज्जीवविशिष्टोपासनं, क्वचिदविशिष्टोपासनमिति भिदा विद्यते। यत्र तु जीवलिङ्गं तत्र तद्विशिष्टोपासनमिति। तथाच परदेवतानिर्धारणाभावे अयं जीव इदं जीवलिङ्गमिति निर्णयाभावाद्यथावदुपासनं न स्यादिति महान्विशेषः। किं च परत्वनिर्णयाभावे मुमुक्षूणां विष्ण्वादिशरणागत्यनुष्ठानं न स्यात्। अपरदेवतायाः परिमितफलदत्वेन मोक्षदातृत्वायोगात्। एवं कर्मादावप्यपरदेवतायजनं परिमितफलदं परदेवता-यजनमपरिमितानन्तफलदमिति तन्निर्णयसापेक्षत्वमिति भावः। विस्तरस्तु—मदीयपरतत्त्वदीपिकायां द्रष्टव्यः पुरुषनिर्णयो यामुनाचार्यकृतप्रबन्धविशेषः।

ननु सदादिशब्दा न नानार्थाः, नानाशक्त्यभावादित्यभिप्रायेण शङ्कते—**सदादिशब्दानामिति। अन्यथेति।** 'पशुना यजेत' इत्यत्र पशुशब्दस्य 'छागस्य वपाया मेदसः' इति मन्त्रवर्णगतच्छागपरत्वं 'च्छागो वा मन्त्रवर्णात्' इति व्यवस्थापितं न स्यादित्यर्थः। भक्ताधिकरणाश्विरादिशब्दार्थः। यद्यप्यत्र न समान-प्रकरणत्वं तथाऽपि सामान्यस्य विशेषशब्देन निर्णय इत्यत्र तात्पर्यम्। किं च सदादिशब्दाः सामान्यत्वात् विशेषपराः। तथाऽन्तर्यामिणो विशेष्यत्वात्तदुपस्थापकादपि तत्परा इत्याह—**प्रकारान्तरेणेति।** नन्वन्तर्यामिब्राह्मणे 'यः पृथिव्यां तिष्ठन्' इत्यादौ विशेषपदाभावादन्तर्यामिपरत्वमात्रेण न विशेषसिद्धिरित्यत्राह **एतेनान्तर्यामिब्राह्मणमपीति।** सौबालेऽन्तर्यामित्वस्यैव नारायणैकनिष्ठत्वावगमात्तदैकार्थ्येन तदपि नारायणस्यैव प्रतिपादकमिति भावः। नन्वस्तु नारायणस्यान्तर्यामित्वं; कारणत्वमन्यस्यास्त्वित्याशङ्क्याह—**तत्सृष्ट्वेति।** कारणस्यान्तर्यामित्वावगमात् तस्य नारायणसाधारणतया कारणं नारायणमेवावगमयतीत्यर्थः। **समाख्यान्तरं दृष्टमिति।**

ननु निरपेक्षः शब्दः श्रुतिरिति श्रुतिलक्षणमुक्तम्। तत्राभिधानश्रुतिः पदार्थोपस्थापिका व्रीह्यादिशब्दात्मिकेति मीमांसकमर्यादा। तथाच शक्तिमत्त्वमेव श्रुतित्वमिति पर्यवसितत्वात् शम्भुशब्दोऽपि श्रुतिरेवेति कथं समाख्या। किं च 'शब्दादेव प्रमितः' इत्यधिकरणे "शब्दश्रुतिः-ईशानो भूतभव्यस्य इतीशानशब्दः" इति भाष्याद्युक्तमपि विरुध्येतेति चेत्। अत्र वदन्ति-शम्भुशब्दो न रूढः। असंज्ञायामेव डुप्रत्ययस्य मुख्यत्वात्। यद्यपि मितद्र्वादिष्वविशेषेण विधानं व्याख्यातं; तथापि विभ्वादिषु

चरितार्थत्वेन प्रोक्षणीन्यायेन शक्त्यकल्पनात्। न च नामानुशासनबलाद्रूढिः। द्विरेफाद्यनुशासने व्यभिचारात्। तत्रैव चन्द्रशेखरत्रिपुरान्तकगङ्गाधरादीनां केवलयौगिकानामनुशासनात्। तस्माद्व्याकरणानुसाराद्धौत्रौद्गात्राध्वर्यवादिसमाख्यावद्यौगिकार्थबलादर्थान्तरगमका इति समाख्येव समाख्या। न च शब्दादेवेत्यधिकरणभाष्यादि विरोधः। पदद्वयश्रुतिरित्यर्थत्वात्। प्रकृतिप्रत्यययोर्लिङ्गाद्यपेक्षया शीघ्रभावित्वात्। अत एव तृतीयाद्वितीयाश्रुत्या करणत्वकर्मत्वप्रतीतावपि परस्परशेषशेषिभावस्य वाक्यगम्यस्य शैघ्र्यात् लिङ्गस्य दुर्बलत्वम्, यत्र प्रकृतिप्रत्यययोरर्थैकत्वं, तत्र पदद्वयात्मकत्वमिति न विशेष इति।

केचित्तु—'ईशानः' इत्यत्रेशानश्रुतिरेवाभिप्रेता। तेन कर्तृत्वमसंकुचितं भासमानं जीवासंभावितं झटिति प्रकृत्यर्थेनैवान्वितमैन्द्रीन्यायेन लिङ्गादि बाधते। न चैवमत्रापि तथा वक्तुं शक्यम्। कर्तृत्वमात्रस्य प्रकृत्यर्थान्वितस्य वा साधारण्येन नारायणपरत्वविरोधाभावादिति वदन्ति। समाख्यया न किंचिदित्याह–ततः किमिति। तदेवोपपादयति–कारणानुवादेनेति। पुरोवादे चेति। यथाप्राप्त्यनुवादस्य युक्तत्वात्। किं च योगार्थस्य पूर्वमुपस्थितत्वात् रूढ्यङ्गीकारेऽपि वाजिनन्यायेन तत्तिरस्कार इत्याह—अवयवार्थभूम्नेति। अवयवार्थपौष्कल्यमाह—अत एवेति। शिवशब्दो यद्यपि देवताविशेषे रूढः, तथाऽप्यर्थान्तरेऽपि रूढतया सैन्धवादिवदर्थप्रकरणाद्यपेक्षो न स्वयमेवार्थनिर्णये समर्थः। अन्यथा यववराहाद्यधिकरणवैयर्थ्यात्। तत्रापि व्यवहारद्वयबलादुभयत्र शक्तावपि निर्णयसंभवात्। यववराहादिवच्चोदनाया अप्रामाण्याभावात्। नारायणादिप्रकरणपर्यालोचनायां तत्परत्वं सिद्धमिति न देवतान्तरगन्ध इति ॥५॥

---

अक्ष०-एवं श्रुतिभिरधिगत ईश्वरो हिरण्यगर्भादिष्वन्यतमस्स्यादिति शङ्कायां पुरुषनिर्णयादिसाधितविशेषनिर्धारणं संगृह्णाति निरिति। साधारण्यं–नानार्थेषु प्रयुक्तत्वं सच्छब्दः सत्तायोगिषु सर्वेषु प्रयुज्यते, ब्रह्मशब्दोऽपि बृहत्वयोगात् प्रकृतिजीवादिषु, आत्मशब्दस्तु जीवपरयोः, एवं पुरुषाक्षरादिशब्दा अपि। तादृशसाधारण्याभावात्। नारायणपदं निस्साधारण्यमासीत् विशेषवाचीति यावत्। तद्विषये-तद्बोध्ये। अबाधे–बाधरहिते। अर्थविशेषे निश्चयं यान्ति–जनयन्तीत्यर्थः। के शब्दाः शङ्कितान्यार्थाः–पूर्वोक्ताः सदादिशब्दाः। कथं विशेषनिर्णायका इत्यत्राह–समानेति। छागपशुन्यायात् गतिसामान्याच्चेति भावः। प्रकारान्तरेणापि निर्धारयति अन्तरिति। सुबालोपनिषदि' एष सर्व भूतान्तरात्मा·····दिव्यो देव एको नारायण' इति नारायण एवान्तर्यामीत्युक्तम्। किं तत इत्यत्राह–कारणं चेति। 'तत् सृष्टवा तदेवानुप्राविशत्' इति स्रष्टुरेव सर्वान्तर्यामित्वमाम्नातं, अतो नारायणस्यैवान्तर्यामित्वात् अन्तर्यामिण एव कारणत्वाच्च कारणवाक्यस्थ सदादिशब्दानां नारायणशब्देनैककण्ठ्यं भवतीत्याह–अस्मादपीति।

ननु कारणं तु ध्येय इत्यत्र शम्भुराकाशमध्ये ध्येय इति समाख्यान्तरं श्रुतमिति चेत्तत्राह—निरुपधिरिति। कारणवाक्ये उक्तरीत्या नारायण एव कारणमिति निर्णये जाते कारणानुवादेन ध्येयत्वपरेऽस्मिन् वाक्ये पुरोवादानुसारेण नारायण एव निरतिशयसुखावहे अवयवार्थपौष्कल्येन शम्भुशब्दोऽपि वर्तत इति वक्तुं शक्यत्वादिति भावः ॥५॥

---

**विष्णोरप्यस्त्यभिख्या शिव इति शुभतारूढिरत्रानुपाधि-**
**स्तस्माद्ध्येयः श्रुतोऽसौ शिव इति शिव एवेति वाक्यं त्वनुक्तिः।**
**उक्तं नारायणाधिष्ठितमिति च तमोऽनेकबाधोऽन्यथा स्यात्**
**ब्रह्मेशादेर्महत्यामुपनिषदि लयाद्युक्तमेवं तु नात्र ॥ ६ ॥**

**सर्वा०**—शिवशब्दस्य न केवलं शुभा[द्या]दिपौष्कल्यमात्रान्नारायणे वृत्तिः, किंतु नामतयाऽपीत्याह—**विष्णोरिति** ॥ 'सर्वश्शर्वश्शिवः स्थाणु'रिति हि तन्नामसहस्रे पठ्यते। ननु शुभतया रुद्रेऽस्य रूढिः स्यादित्यत्राह—**शुभेति**। शुभतया जनिता ह्यस्य रूढिः मङ्गलानां च मङ्गलमित्यादिभिर्निरुपाधिकशुभत्वशालिनि भगवत्येव युक्ता। अन्यत्र तु तद्गुणलेशयोगाद्वृत्तिः स्यात्। प्रसिद्धिप्रकर्षस्तु प्रणववेदादिषु ब्रह्मशब्दवत् प्रचुरप्रयोगमात्रात् स्यात्। यत्र तु शिवस्य ध्येयत्वोक्तिस्तत्रापि शाश्वतशिवानुवादेन ध्यानं विधीयते। नैतावता प्रसिद्धशिवस्य श्रुतिविरुद्धं कारणत्वं कल्पयितुं शक्यमित्याह—तस्मादिति। असौ—विष्णुरेव। महापुरुषवेदनस्य हि मुक्तिहेतुत्वं प्रतिपाद्य 'नान्यः पन्था' [अयनाय विद्यत] इति नियम्यते।

ननु यदा तमस्तदिति वाक्ये शिव एव केवल इत्युच्यते, अतः प्रसिद्धशिवः कारणमित्यत्राह—**शिव एवेति**। इदं तावद्वाक्यं न कारणतमसः प्रतिपादकं, यदेति कालविशेषप्राप्तानुवादात्। 'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयत' इति सुबालोपनिषद्वाक्येन तत्प्राप्तिः। सा चोपनिषन्नारायणस्यैव कारणत्वोपास्यत्वादिकं बहुधा वक्ति। अव्यक्ताक्षरक्रमेण तमःस्थाने 'यस्य मृत्युश्शरीर'मिति पठ्यते, अतो नारायणाधिष्ठततमोवाक्यमिह पुरोवादः। 'नासदा-सीन्नो सदासीत्तदानीं तम आसी'दित्यादिवाक्यमत्र पुरोवादः किं न स्यादिति चेत्, तथाऽपि तस्य सौबालवाक्यसमानार्थत्वं ग्राह्यम्। अतः कारणतमोधिष्ठातृत्वेन प्रसिद्धो नारायण एवात्र शब्दान्तरपरामृष्टः। अनन्तरं च तदक्षरम्, तत्सवितुर्वरेण्यमित्यादिना तत्प्रकारविशेषोपदेशः। मानवे च 'आसीदिदं तमोभूतमप्रज्ञात'मित्यारभ्य, तेन नारायणः स्मृत इत्यन्तेन स एव कारणतमोधिष्ठातेति स्पष्टमुक्तम्। तदेतत्सर्वमभिप्रेत्याह—**उक्तमिति**। एवमनभ्युपगमे बहुश्रुतिस्मृतीतिहासादिबाधः स्यादित्याह—**अनेकबाध इति**। अपि च नारायणकारणत्वप्रतिपादिकायां महोपनिषदि' न ब्रह्मा नेशानो नेमे द्यावापृथिवी 'इत्यादिना नारायणात् ब्रह्मेशानयोरुत्पत्त्यादिकं श्रुतम्। यदा तम इति वाक्ये, न दिवा न रात्रिरित्येतावदुक्तम्। एतेन 'हिरण्यगर्भस्समवर्तताग्रे' इति वाक्यमपि निरूढम्, अद्भ्यस्संभूतो हिरण्यगर्भ इत्यष्टाविति तद्विषयानुवाकान्तरसमानार्थत्वसिद्धेश्चेति ॥६॥

**आनन्द**—ननु यत्र नानार्थे प्रकरणाद्यपेक्षा तत्र नानार्थानां सामान्यविशेषभावाभावेनैकत्रोपसंहारासामर्थ्यम्। अत्र तु योगरूढिस्थल इव प्रवृत्तिनिमित्तद्वयेनापि विशेषणविशेष्यभावेन उभयार्थविशिष्टशिवोपासनविधिसंभवादित्याक्षेपेणाह—**शिवशब्दस्य न केवलमित्यादिना**। तथा चात्रापि सैन्धवादिवत् विरुद्धत्वान्न स्वयं निर्णयाय प्रभवतीति भावः। रूढिशक्त्यङ्गीकारेऽपि लिङ्गाद्यनुगृहीतया रूढ्या नारायण एव वृत्तिः स्यादिति दर्शयति—**किं त्विति**। तत्र रूढिशक्तौ प्रमाणमाह—**सर्व इति**। ननु शुभतमत्वमेव प्रवृत्तिनिमित्तं, न तु निमित्तान्तरमनेकार्थत्वकल्पने गौरवात्। तथा च शिवादन्यत्र तत्प्रयोगस्य गुणयोगेनाप्युपपत्तेः। सहस्रनामपठनस्य च 'यानि नामानि गौणानि' इत्युक्त्या रूढिसाधकत्वाभावादिति—शङ्कते—**नन्विति**। तर्हि निरुपाधिकशुभत्वशालिनि भगवत्येव प्रवृत्तिनिमित्तपौष्कल्यात् प्रवृत्तिर्युक्ता, न तु रुद्रादाविति भावः। ननु शिवशब्दस्य रुद्रे प्रवृत्तिनिमित्त-पौस्काल्याभावे प्रसिद्धिप्रकर्षो न स्यादित्यत्राह—**प्रसिद्धिप्रकर्षस्त्विति**। ब्रह्मशब्दस्य वेदादौ लाक्षणिकत्वादिति भावः। **यत्र त्विति**। 'सर्वाननशिरोग्रीवं' इत्यारभ्य 'तस्मात् सर्वगतः शिवः' इत्यादावित्यर्थः। **नैतावतेति**। अन्यपरशिवशब्दमात्रादित्यर्थः। ननु रुद्रपरत्वाभावेऽपि भगवत्परत्वं कथमित्यत्राह—**असौ विष्णुरेवेति**। 'शाश्वतं शिवमच्युतं नारायणं महाज्ञेयम्' इत्याद्युक्तेरिति भावः। श्रुत्यन्तरं चाह—**महापुरुषवेदनस्येति**। "तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते" इति निषेधान्मोक्षसाधनीभूतवेदनविषयत्वात् स शिवो विष्णुरेवेति भावः। तत्र किं तमोविधिपरं वाक्यं, यद्वा शिवविधायकमिति विकल्पयाद्यं दूषयति—**न कारणतमसः प्रतिपादकमिति**। ननु तद्वाक्येऽपि तमस एव कारणत्वं, न तु नारायणस्य, तमश्शब्देन नारायणाभिधानायोगात्। तस्य शरीरत्वाभिधानाभावादित्यत्राह—**अव्यक्ताक्षरक्रमेणेति**। शङ्कते—**नासदासीदिति**। तमोमात्रस्यैवात्र प्रतिपादनादिति भावः—**तथाऽपीति**। सर्वशाखाप्रत्ययन्यायेनेति भावः। **शब्दान्तरेति**। तमश्शब्दादिकमित्यर्थः। द्वितीयं दूषयति—**अनन्तरं त्विति**। 'यदा तमः' इत्यारभ्य तदितिपर्यन्तस्यानुवादतावगमात्तदनूद्य गायत्रीप्रतिपाद्यादित्यान्तर्वर्तिभगवतो विधेयान्तरस्यान्वयादित्यर्थः।

ननु 'नासदासीत्' इति वाक्यप्राप्तानुवादेन शिवत्वविधिरस्तु। न च तस्य सुबालोपनिषदाद्येकार्थतया नारायणपरत्वं; श्वेताश्वतरवाक्यैकार्थतया शिवपरत्वस्य वा भावाच्चेत्यत्राह—**मानवे चेति**।

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥
ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादिवृत्तोजाः प्रादुरासीत्तमोनुदः॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तस्सनातनः।
सर्वभूतमयोऽचिन्त्यः स एष स्वयमुद्बभौ॥

सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥

इत्याद्युपबृंहणशतैस्तमसो नारायणाधिष्ठितत्वावगमात् **पुरोवादनिर्णी**तार्थसापेक्षस्य तद्विरुद्धार्थविधानायोगाच्च । तथाऽपि शिवशब्दो माङ्गल्यपरः सन् जगत्कारणताप्रयुक्तदोषाभावं सूचयतीति भावः । **वस्तुतस्तु**—एकवाक्यताविरोधाच्छिवत्वं न विधेयमिति बोध्यम् । **बहुश्रुतीत्यादि** । महोपनिषन्मुण्डकतैत्तिरीयकविष्णुपुराणभारतज्योतिश्शास्त्रादिविरोधः स्यादित्यर्थः । किं च 'यदा तमः' इति वाक्यं महोपनिषदाद्येकार्थत्वेन नारायणपरं भवितुमर्हति । महोपनिषद्वाक्यं तु श्वेताश्वतराद्येकार्थतया रुद्रपरं भवितुं नार्हति विरोधादित्याह—**अपि चेति** । श्वेताश्वतरादौ नारायणस्य निषेधरूपेण लयो वा रुद्रादुत्पत्तिर्वा न श्रूयत इति महोपनिषदैकार्थ्यं संभवतीत्यर्थः । **एतेनेति** । नारायणादिनिषेधाभावात् तस्मादपि नारायणस्योत्पत्त्यप्रतिपादनाद्धिरण्यगर्भशब्दस्य रूढ्यङ्गीकारेऽपि 'हिरण्यगर्भो भूगर्भः' इति नारायणेऽपि रूढिसम्भवाच्चतुर्मुखपरत्वेऽपि सकलप्राणिवर्गापेक्षया प्राथम्यमादायाप्युपपत्तेर्नारायणकारणत्वाविरोध इत्यर्थः ।

**वस्तुतस्तु**—नारायणानुवाकशेषत्वात्तदैकार्थ्येन योगवृत्त्यादिद्वारेण नारायणपरमित्याह—**अद्भ्यसम्भूत इति** 'अद्भ्यः सम्भूतः' इत्यारभ्य 'हिरण्यगर्भः' इत्येतदन्ता अष्टावनुवाका नारायणानुवाकान्तर्गता इत्यर्थः ॥६॥

---

**अक्ष०**—अथर्वशिखायां कारणं तु ध्येय इत्यत्र न केवलं शम्भुशब्दमात्रश्रवणं किं तु शिवशब्दश्रवणमप्यस्ति शिवशब्दश्च शूलिनि रूढः, रूढिश्च योगाद्बलीयसी, अतः पशुपतेरपि कारणत्वमुपगन्तव्यमित्यत्राह **विष्णोरिति** । विष्णोरपि शिव इति नाम, 'सर्वश्शर्वश्शिवस्स्थाणु' रिति तन्नामसहस्रे पठितमस्तीत्यर्थः । अतो विष्णावपि रूढिरेव । सा च मङ्गलानां च मङ्गलमिति निरतिशयशुभतानिबन्धनत्वात् निरुपाधिकीति रुद्ररूढेर्बलीयसीत्याह—**शुभतेति** । तस्मात् प्रवृत्तिनिमित्तनियामकशुभत्वपौष्कल्यात् शिव एको ध्येयश्शिवंकर इति अथर्वशिखावाक्ये ध्येय इति श्रुतः शिवः असौ पूर्वोक्तो विष्णुरेव यश्शाश्वतं शिवमच्युतमित्यन्यत्राम्नायते न तु कार्यशिव इत्याह **तस्मादिति** । शिवं कर इति विशेषणात् प्रसिद्धशिवव्यावृत्तिः मुक्तिहेतुतया विष्णुरेव हि शिवं करः, नान्यः पन्था इति हि नियम्यत इति भावः ।

ननु 'यदा तमस्तदि'ति श्वेताश्वतरवाक्ये शिव एव केवल इति ह्युच्यते अतः प्रसिद्धकपालिशिवस्य कारणत्वं प्रलये एकाकिनोऽवस्थानादवगम्यत इत्यत्राह—शिव एवेतीति। अनूक्तिः यच्छब्दसत्वादनुवादक इत्यर्थः। अतः पुरोवादानुसारेणैवार्थोऽधिगन्तव्यः। 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयत' इति सुबालवाक्यमेव पुरोवादः, तत्र च नारायणस्यैव कारणत्वादिकं स्पष्टमुक्तमतः श्वेताश्वतरवाक्येऽपि कारणतमोऽधिष्ठातृनारायण एव शिवशब्देन परामृश्यत इति भावः। मानवे च "आसादिदं तमो भूत"मित्यारभ्य तेन नारायणस्स्मृत' इत्यन्तेन स एव कारणतमोऽधिष्ठातेति स्पष्टमुक्तमित्याह—उक्तमिति। एवमनभ्युपगमे बहुश्रुत्यादिविरोध इत्याह अनेकेति। महोपनिषदि ब्रह्मेशानादेर्लयाभिधानात् विष्णोस्तदनभिधानाच्चायमेवार्थ इत्याह—ब्रह्मेति ॥६॥

---

य: प्रोक्तस्सर्वकर्तुः परमखिलतनोर्नापरं किञ्चिदस्ती-
त्यस्यैव स्यादनुक्त्योत्तरतरकथनं न त्वितोऽन्यस्य बाधात्।
विश्वव्याप्तस्य तस्योचितमुपधिपरिच्छेदनादुन्मितत्वं
स्वस्यैव प्रापकत्वादशिथिलचिदचिद्धारणाच्चैष सेतुः ॥७॥

सर्वा०—ननु 'यस्मात् परं नापरमस्ति किञ्चि'दित्यादिना तेनेदं पूर्णं पुरुषेण सर्वमित्यन्तेन पुरुषसूक्तादप्रसिद्धं पुरुषमनूद्य ततो यदुत्तरतरमित्यादिना तस्मात् परस्यैव वेदनममृतत्वादिसाधकमुक्तम्; स एव सर्वेश्वरः स्यादित्यत्राह—यः प्रोक्त इति॥ सर्वकर्तृत्वं पुरुषसूक्तार्थप्रत्यभिज्ञया सिद्धम्। अखिलतनुत्वं च पुरुष एवेदं सर्वमितिवत् तेनेदं पूर्णं पुरुषेण सर्वमित्यनेन व्यञ्जितम्। यस्मादपरं किञ्चित् परं नास्तीत्यन्वयः। तेन न तत्समश्चाभ्यधिकश्च दृश्यत इत्ययमर्थोऽनूदिता भवति। एवं समाभ्यधिकदरिद्रस्य विश्वव्यापनाऽस्यैव सहेतुकं तता यदुत्तरतरमित्यनुवादः। अत एव तदरूपमनामयमित्यादिभिराकारान्तरोपदेशः। प्रकारान्तरस्यासिद्धत्वाद्यदुत्तरतरमित्यनुवादाद्यागमाभिप्रेत्याह—न त्वितोऽन्यस्येति। अयं भावः—य एतद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमेवापियन्तीति च तद्विषयमेव। अन्यथा नान्यः पन्था अयनायेति पुंसूक्तवाक्येन व्याघातः। एकविषयत्व एव ह्युभयत्रान्यवेदनस्य मोक्षहेतुत्वाभावोक्तिस्संघटते। तत्र बहुधा विरोधमप्याह—बाधादिति। पूर्ववाक्ये तावत् परान्तरनिषेधादुपक्रमनयेन तद्विरुद्धमुत्तरमुदेतुं नालम्, उत्तरत्र सर्वाननशिरोग्रीवत्वादिना सहस्रशीर्षा पुरुषः, सहस्रशीर्षं देवमित्याद्युक्तमिह प्रत्यभिज्ञातम्। अतोऽपि न तदन्यस्योत्तरतरत्वोक्तिसंभवः। अन्यथा न त्वत्समोऽस्त्यधिकः कुतोऽन्य इत्याद्युपबृंहणशतबाधश्चेति।

ननु पादोऽस्य विश्वाभूतानि, एष त आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वेत्यादिभिः कारणपुरुषस्य परिच्छिन्नत्वोक्त्या ततोऽन्यदपरिच्छिन्नं परतरमित्यत्राह—विश्वव्याप्तस्येति। अयं भावः—यत्र यत्र परिच्छेदोक्तिः तत्र तत्र विश्वव्याप्तत्वम-

प्युक्तम् । अतस्तथातथोपासनार्थमौपाधिकः परिच्छेद उच्यत इति । सेतुत्वश्रुत्या तेनोपायेन कूलान्तरवत् प्राप्यान्तरं गम्यत इत्यत्राह–स्वस्यैवेति । अमृतस्यैष सेतुरित्यत्र तावदमृतशब्देन श्रुत्यन्तरवत् ब्रह्माभिधाने स्वप्राप्तेः स्वयमुपाय इत्येतावदेव सिध्येत् । मोक्षाभिधानेऽपि तदुपायतयाऽन्यः परतरो न कल्पयितुं शक्यते । 'एष सेतुर्विधरण एषां लोकानामसंभेदाये'त्यत्र तु षिञ् बन्धने इति धातौ स्वस्मिन्नाधारे विश्वमसङ्कीर्णं बध्नातीति सेतुः । तत्रापि न ततः पर-संभवः । एतं सेतुं तीर्त्वेत्यत्रापि अन्धस्सन्ननन्धो भवतीत्यादिषूत्तरवाक्येषु पुरुषस्य प्राप्यान्तरानभिधानात् तरतिः प्राप्तिवचनः । एवं नेतं सेतुमित्यादावप्यन्यथासिद्धसेतुव्यपदेशो न प्राप्यान्तरकल्पनक्षम इति ॥७॥

---

आनन्द०—नन्वस्तु नारायण एव जगत्कारणं, ततोऽतिरिक्तमेव मुमुक्षूपास्यं प्राप्यं चेत्याक्षेपसङ्गत्योत्तीर्णपक्षमाशङ्कते—नन्वित्यादिना । ततो यदुत्तरतरमित्यादिनेति । ततः जगत्कारणत्वेन पुरुषसूक्तप्रतिपाद्यादुत्तरतरमधिकमित्यर्थः । ननु 'यस्मात्परम्' इत्यत्र सर्वकर्तृत्वसर्वशरीरत्वाद्यप्रतीतेर्मूले सर्वकर्तुस्सर्वतनोरित्युक्तिः कथमित्यत्राह—सर्वकर्तृत्वमित्यादिना । ननु यस्मात् परमित्यस्मिन्वाक्ये प्रपञ्च-मिथ्यात्वं प्रतीयत इत्यत्राह—यस्मादपरमिति । यस्मात् परमपि नास्ति, अपरमपि नास्तीत्युच्यमाने वाक्यभेदोऽपि, शब्दाध्याहारो नञ आवृत्तिश्चेति दोषाः स्युः । यदि च यस्मादन्यत्परं नास्तीत्युच्येत तदाऽन्यन्नास्तीत्यनेनैव मिथ्यात्वस्य सिद्धेरपरशब्दो व्यर्थ इति । ननु सिद्धान्तेऽपि यस्मात् परं नास्तीत्येतावता सिद्धेः समो दोष इति चेन्न । अपरशब्दस्यान्यपरत्वे तस्मिन् परत्वनिषेधे प्रपञ्चस्य ब्रह्मभेदबोधनेन प्रयोजन-वत्त्वात् । किं च पक्षद्वयेऽपि तुल्यनिषेधाभावान्न सर्वमिथ्यात्वं चेति भावः । एवमन्व-यानङ्गीकारे श्रुत्यन्तरविरोधोऽपीत्याह—तेनेति । यद्यपि परनिषेधोऽत्रास्ति, तथाऽपि तुल्यनिषेधोऽपि वचनान्तरसिद्धोऽत्राभिप्रेत इति भावः ।

केचित्तु यस्मात् परमन्यत् अपरं न्यूनमिति वाक्यार्थः । तेन ब्रह्मव्यतिरिक्तस्य सर्वस्यापि न्यूनत्वात् समाधिकनिषेधस्सिद्ध इत्याहुः । सहेतुकमिति । 'ततो यदुत्तरतरं' इत्यत्र तच्छब्दो 'यस्मात्परम्' इत्याद्युक्तमर्थं हेतुत्वेनाह । यस्मात् निस्समाभ्य-धिकादुत्तरतरं यत् पुरुषसूक्तप्रतिपाद्यं तदनूद्यारूपत्वादिविधिरित्यर्थः । प्रकारान्तर-स्येति । पुरुषसूक्तार्थादन्यस्यानेन वाक्येनानुवादो नोपपद्यते, तस्यासिद्धत्वात् । न चास्मादेव सिद्धिः, यच्छब्दानुविद्धस्यानुवादतया प्रापकत्वायोगादिति भावः । ननु यच्छब्दयोगे सत्यप्याग्नेयादिवाक्यवदप्राप्तार्थकत्वाद्विधिरस्तु । तद्विशिष्टवेदनमेव वा विधीयतामित्यत आह—अयं भाव इति । वित्तिविषयस्सर्वथा पुरुषसूक्तार्थ एव । तदन्यवेदनस्य मोक्षसाधनत्वनिषेधादिति भावः । बहुविरोधमेवोपपादयति—पूर्ववाक्य इत्यादिना । उपक्रमनयेनेति । 'श्रुतेर्जाताधिकारस्स्यात्' इत्यधिकरणे" उच्चैः ऋचा क्रियत, उच्चैः साम्ना, उपांशु यजुषा" इत्यादेः 'त्रयो वेदा अजायन्त' इत्युपक्रमा-

नुसारेणार्थो वर्णित इति भावः-उत्तरत्रेति। पुरुषसूक्तार्थबोधकत्वादुत्तरवाक्यस्य तेनापि विरोध इति भावः। उपबृंहणानुगृहीतोऽयमर्थ इत्याह—अन्यथेति।

ननु पुरुषसूक्तादेः प्रतिपाद्यस्य कारणस्य परिच्छिन्नत्वेन सर्वोत्तरत्वायोगादिति शङ्कते—नन्विति। ननु परिच्छेद औपाधिक इत्यत्र न किंचित् प्रमाणमित्यत्राह—अयं भाव इति। व्याप्तेरौपाधिकत्वासंभवात् परिच्छेद औपाधिक इति भावः। ननु 'अमृतस्यैष सेतुः' 'एष सेतुर्विधरणः' इत्यादौ जगत्कारणं सेतुत्वेन व्यपदिश्यते। सेतुश्च कूलान्तरप्राप्तिहेतुरिति मुक्तप्राप्यं सेतुभूतजगत्कारणादन्यत्परतरमस्तीत्यत्राह—सेतुत्वश्रुत्या चेति। श्रुत्यन्तरवदिति। 'तदक्षरं तदमृतम्' इत्यादाविवेत्यर्थः। मोक्षाभिधानेऽपीति। बन्धमोचनस्यामृतस्य परतत्वायोगादिति भावः। 'एष सेतुर्विधरणः, इत्यत्र तु नियन्तृत्वमर्थ इति न तत्र शङ्कावकाश इत्याह—एष सेतुरिति। तरतिः प्राप्तिवचन इति। तरणफले प्राप्तौ तरतिरित्यर्थः। अन्यथासिद्धेति। नियमनार्थः सेतुशब्द इति भावः। मूले उन्मितत्वं परिच्छिन्नत्वम् ॥७॥

---

अक्ष०—ननु श्वेताश्वतर एव 'यस्मात् परं नापरमस्ति किं चि' दित्यादिना तेनेदं पूर्णं पुरुषेण सर्वं' मित्यन्तेन पुरुषमनूद्य' ततो यदुत्तरतरं मित्यादिना तस्मात्परस्यैव वेदनममृतत्वादिसाधनमुक्तं, अतस्स एव सर्वेश्वर इत्यत्राह-यः प्रोक्त इति। पुरुषसूक्तैकार्थ्यादाह - यस्मादित्यस्य व्याख्यां सर्वकर्तुरिति। अखिलतनोरिति। तेनेदं पूर्णं पुरुषेण सर्वमिति सर्वान्तर्यामितया उक्तादित्यर्थः। अपरं अन्यत्। परं उत्कृष्टं किंचित् नास्तीत्युक्तस्यैव पुरुषोत्तमस्यानुवादेनोत्तरतरत्वकथनं तस्यैव प्रकारान्तरविधानायानुवादरूपं तदित्यर्थः। तत इति पदं पूर्वोक्तसर्वान्तर्यामित्वादिहेतुपरं न तु पूर्वोक्तपुरुषोत्तमरूपावधिपरमित्याह-नत्विति। अत्रान्यस्य कथने 'य एतद्विदुरमृतास्ते भवन्ती त्यनन्तरवाक्येऽपि तद्वेदनस्यैव मुक्तिसाधनतोक्त्यापत्त्या 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति पूर्ववाक्यविरोधस्स्यादिति भावः। परान्तरनिषेधोपक्रमेणापि बाधितमन्यस्योत्तरतरत्वकथनमित्याह-बाधादिति। ननु कारणस्य 'पादोऽस्य विश्वा भूतानि' अणीयान् व्रीहे र्वा इति परिच्छिन्नत्वोक्त्या अन्यदपरिच्छिन्नं परतरमस्त्वित्यत्राह—विश्वेति। अपरिच्छिन्नस्यैवोपासनार्थमौपाधिकं परिच्छन्नत्वमिति न विरोध इति भावः।

अमृतस्यैष सेतुरिति सेतुत्वव्यपदेशात् तीरान्तरवत् प्राप्यान्तरमधिगम्यत इत्यत्राह स्वस्यैवेति। अमृतस्य "आनन्दोऽजरोऽमृत" इत्युक्तस्य ब्रह्मणः सेतुः-प्रापक इति अमृतस्यैष सेतुरित्यस्यार्थः। एष सेतु विधरण इत्यत्राप्यसंकोर्णचेतनाचेतनधारणसमर्थ इत्यर्थः। 'एतं सेतुं तीर्त्वा' इत्यादौ तरतिः प्राप्तिवचन इति न कुत्रापि प्राप्यान्तरप्रसक्तिरिति भावः ॥७॥

पुंसूक्तं सर्ववेदप्रपठनमहितं यत्परत्वैकतानं
तस्यैव श्रीपतित्वं विशदमभिदधे ह्युत्तरत्रानुवाके ।
आम्नातश्चैष नारायण इति निखिलब्रह्मविद्यासु वेद्य-
स्तत्तद्विद्याप्रदेशश्रुतविविधपदप्रत्यभिज्ञप्तिपूर्वम् ॥८॥

**सर्वा०**—अथ पुरुषसूक्तस्य विनियोगविशेषान्नारायणपरत्वे सिद्धेऽपि शब्द-साधारण्यात् सन्दिहानानां प्राकरणिकादनन्यथासिद्धलिङ्गाद्विशेषनिश्चयमुत्पादयति-**पुंसूक्तमिति**। सर्ववेदप्रपठनमहितमित्यनेन परतत्त्वविषयप्रमाणानां मिथो-विरोधस्फूर्त्तौ बलाबलचिन्तायां परिग्रहातिशयादेतस्य प्राबल्यं सूच्यते। उक्तं च तदभिप्रायेण **महाभारते**—इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते इति। उत्तरानुवाकः पुरुषसूक्तोक्तमहापुरुषविषयः, सन्निध्यनुगुणशब्दार्थप्रत्यभिज्ञानात्। तत्र 'ह्रीश्च ते लक्ष्मीश्च पत्न्याविति' **तैत्तिरीयास्समामनन्ति**। **वाजसनेयिनस्तु**—श्रीश्च ते लक्ष्मीश्च पत्न्याविति। न चात्रानुवाकद्वये धातृप्रजापतिशब्दाभ्यामन्यविषयत्वमाशङ्कनीयम्; विश्वकर्मत्वष्टृशब्दाभ्यामपि प्रसङ्गात्। अतः प्रसिद्धतमलिङ्गानुरोधेन धातृप्रभृतिशब्दानां योगत एव मुख्यत्वमेष्टव्यम्। किंच **नारायणानुवाके** सहस्रशीर्षं देवमित्यादिभिः पुरुषसूक्तप्रभृति-सर्वपरविद्यावेद्यं पुरुषं प्रत्यभिज्ञाप्य तस्य नारायणत्वं बहुशोऽभ्यस्तम्। अतो यत्र यत्र परब्रह्मपरतत्त्वपरज्योतिःपरमात्मादिशब्दा दृष्टास्तत्र सर्वत्र नारायण एव प्रतिपाद्यत इति निश्चीयते। अतः परतत्त्वनिर्णयेऽयमेवानुवाकः पर्याप्त इत्यभिप्रायेणाह—**आम्नात इति** ॥८॥

---

**आनन्द०**—ननु पुरुषसूक्त एव नारायणः कुतः प्रतिपाद्य इत्याक्षेपसंगतिमभिप्रेत्याह-**अथेति**। **विनियोगविशेषादिति**।

यजेत्पुरुषसूक्तेन पुरुषं विष्णुमव्ययम् इत्यादिविनियोगादित्यर्थः। **शब्दसाधारण्यादिति**। पुरुषशब्दसाधारण्यादित्यर्थः। **विरोधस्फूर्त्ताविति**। वस्तुतो विरोध एव नास्तीति भावः। तदभिप्रायेण—प्राबल्याभिप्रायेण। संनिधिश्चानुगुणशब्दार्थप्रत्यभिज्ञानं चेति समाहारद्वन्द्वः। पुरुषं महान्तं सहस्रशीर्षमिति शब्दार्थप्रत्यभिज्ञा। **धातृप्रजापतिशब्दाभ्यामिति**। 'धाता पुरस्ताद्यमुदाजहार' इत्यत्र धातृशब्दः 'प्रजापतिश्चरति गर्भे अन्तः' इत्यत्र प्रजापतिशब्दश्च। **विश्वकर्मेत्यादि**। 'विश्वकर्मणः समवर्तताऽधि। तस्य त्वष्टा विदधद्रूपमेनि' इत्याभ्यां शब्दाभ्यामित्यर्थः। **तत इति**। यद्यपि श्रुतिरेव धात्रादिशब्दः, शक्तत्वात्। तथाऽप्यन्यत्र प्रयुक्तत्वेन संदेहात् 'सन्दिग्धे तु वाक्यशेषात्' इति न्यायेन वाक्यशेषवल्लिङ्गं बलवदिति भावः। **केचित्तु**-यववराहाधिकरणन्यायेन वाक्यार्थनिर्णयेऽपि लिङ्गं प्रयोजकमित्याहुः। **परविद्येति**। पुरुषसूक्तप्रभृति 'शंभुराकाशमध्ये ध्येयस्तं देवा जोतिषां ज्योतिः' इत्यादिपरविद्या विवक्षिताः। यतः सर्वविद्यावेद्यमनूद्यैव नारायणत्वं विदधाति तस्मादित्यर्थः। 'आम्नातश्चैष नारायणः' इत्यत्र यतिभङ्गो नाशङ्क्यः; नारशब्दस्य पदत्वात् स्वरसन्धेश्च ॥८॥

**अक्ष०**—पूर्वं पुरुषसूक्तानुसारेण ततो यदुत्तरतरमिति वाक्यस्यार्थौ वर्णनीय इत्युक्तं किमत्र नियामकमित्यत्राह—**पुंसूक्तमिति** । पुरुषसूक्तं सर्ववेदेषु पठितत्वात् प्रबलं, प्रमाणयोर्विरोधे बलाबलचिन्तायां परिग्रहातिशयः प्राबल्यहेतुरिति भावः। तत् विष्णुपारम्यैकप्रमापकमित्याह—**तदिति** । पुरुषसूक्तमित्यर्थः । सर्वकारणत्व-मोक्षसाधन-वेदनविषयत्वप्रतिपादनादिति भावः। धात्रादि साधारणशब्दानामेव तत्र सत्वात् विष्णोर्विशिष्य कथं परिस्फूर्तिस्स्यादित्यत्राह **तस्यैवेति**। उत्तरानुवाके तस्यैव हि सुव्यक्तं श्रियः पतित्वं 'ह्रीश्च ते लक्ष्मीश्च पत्न्या' विति अभिधीयत इत्यर्थः। सन्निधिशब्दार्थ-प्रत्यभिज्ञानादिना प्रकरणैक्यावगमात् तस्यैवेति विज्ञायत इति भावः। श्रियः पतित्वं च परमात्मनो विष्णोरेवासाधारणं लिङ्गमिति प्रसिद्धमतस्तदनुरोधेन धात्रादिपदानि तत्रैव योगतो नेतव्यानि भवन्ति। श्रियः पतिरयं परमपुरुष एव नारायणानुवाकेन पुरुषसूक्तोपक्रमसहस्रशीर्षपदेनैवोपक्रम्य नारायणइति सर्वपरविद्यावेद्य इति चाम्नायत इत्याह **आम्नातश्चेति** । कथमेतदित्यत्राह—**तत्तदिति** तत्तद्विद्याविधायकवाक्यस्थ-नानाविध ब्रह्म-शिवाक्षर-पुरुष-परतत्त्व-परज्योतिरादिपदेन तत्तद्विद्यावेद्यं प्रत्यभिज्ञाप्य तदनुवादेन नारायणत्वविधायकवाक्यभूयस्त्वेन श्रीमन्नारायण एव सर्वपरविद्यावेद्य इति सिद्धयतीति भावः। अतः परतत्त्वनिर्णये पुरुषसूक्तमेव नारायणानुवाकसहितं पर्याप्तं प्रमाणमित्युक्तं भवति। अतस्तदविरुद्धेनैव प्रमाणान्तरेण भाव्यम् ॥८॥

---

**रुद्रेन्द्रादिश्च यत्र स्फुरति परतयाऽनन्यथासिद्धलिङ्गै-**
**स्तत्तत्तत्त्वैर्विशिष्टो हरिरखिलतनुस्तासु विद्यासु वेद्यः।**
**पारम्यं त्वान्यपर्यान्न भवति न किरित्यादिभिः स्तोत्रवाक्यै-**
**रन्याकूतैर्नमस्यादिभिरपि न परः स्यादनैकान्त्यदुःस्थैः ॥९॥**

**सर्वा०**—तथाऽपि त्वाष्ट्रवधादिलिङ्गैः प्रसिद्धेन्द्रादिविषयासु मोक्षार्थविद्यासु का गतिरित्यत्राह—**रुद्रेन्द्रादिरिति** ॥ प्रसिद्धेन्द्रादिलिङ्गानां परमात्मलिङ्गानां चानन्यथासिद्धावुभयानुरोधेन सद्वारकमद्वारकं च तत्तद्विशिष्टब्रह्मोपासनपरत्वं स्वीकर्तव्यमित्यर्थः। कर्मविधिप्रकरणेषु न किरिन्द्र त्वदुत्तर इत्यादिभिः प्राकरणिकदेवताप्रशंसापरैः न तासां परत्वसिद्धिरित्याह—**पारम्यमिति** । न किरिन्द्र इत्यस्य वस्वादिल्यादिषु त्वदुत्तरो नास्तीति याथार्थ्यसिद्धिः। 'एक एव रुद्रो न द्वितीयाय तस्थे' इतीदमपि तत्रत्यपशुविशेषे द्वितीयानन्वयपरमिति **मीमांसा-भाष्यकारादिभिर्व्याख्यातम्**। एवमीदृशवाक्यान्तराणि यथार्हं नेतव्यानि। यस्तु नमस्कारभूम्ना बहुप्रदेशबहुवाक्यप्रतिपन्नतया तत्तदपदानविशेषैश्चान्यत्र क्वचित्परत्वं शङ्कते; तं प्रत्याह—**अन्याकूतैरिति** । नमस्कारस्तावद्बाधभीत्या सान्त्वनाभिप्रायेण लोकवद्वेदेऽपि दृष्टः; नमस्ते अस्तु मा मा हिंसीरिति तद्भूयस्त्वं च भीतिभूयस्त्वादेरपि स्यात्। अस्ति च तेषु तेषु देवताविशेषेषु नमस्कारस्तद्भूमा बहुप्रदेशपाठादिकमतिशयितापदानं च। अतो नैतैरेकः परः स्यात्, सर्वेषां च सर्वस्मात्परत्वं व्याघातदुःस्थमिति भावः ॥९॥

आनन्द०—ननु यदि लिङ्गबलाद्देवताविशेषपरत्वं, तर्हि लिङ्गबलादिन्द्रादिपरत्वं वा किं न स्यादित्याक्षेपसंगतिरित्याह—**तथाऽपीति**। **सद्वारकमद्वारकं चेति**। इन्द्रादीनां परत्वं न वचनान्तरसिद्धम्; अवरत्वस्यैव सिद्धेः। न चानेन वाक्येन इन्द्रादेः परत्वसिद्धिः। वाक्यान्तरविरोधात्। न चानेन वाक्येन नारायणस्य परत्वे विरोधः, अस्यापीन्द्रादिशरीरकनारायणपरतयोपपत्तेः। न च तेषामेव वाक्यानां तत्तच्छरीरकेन्द्रादिपरत्वं वक्तुं शक्यम्, इन्द्रादीनां तच्छरीरकत्वासिद्धेः। ननु वाक्यान्तरेण परत्वसिद्धेः सर्वं कल्प्यत इत्यत्राह-**कर्मविधीति**। अनेनान्यथासिद्धिः सूच्यते। ननु श्रुत्यर्थत्वे श्रुतार्थबाधेनाप्रामाण्यं स्यादित्यत्राह—**न किरिन्द्र इत्यस्येति**। किः क इत्यर्थः। बहुलग्रहणात् कादेशाद्यभावे मस्य विसर्जनीयः।

**यस्त्विति**। नमस्यत्वं परस्यैव; तद्बाहुल्यं शतरुद्रीयादिषु रुद्रस्यापीति सुतरां परत्वं सिध्यतीत्यर्थः। किं च त्रिपुरान्धकासुरदक्षाध्वरविध्वंसनाद्यपदानविशेषैः रुद्रस्यैव परत्वम्, तेषु विष्ण्वादिषु सत्स्वपि कुर्वतोऽवरत्वायोगादिति भावः। निरुपाधिकनमस्यत्वं हि परत्वप्रयोजकम्। न च रुद्रस्य निरुपाधिकं नमस्यत्वं, 'भस्तु मा मा हिँसीः' इत्युपाधिदर्शनात्, तद्बाहुल्यात्तद्बाहुल्यमिति नमस्कारबहुत्वमन्यथासिद्धं न परत्वसाधकमित्याह -**नमस्कारस्तावदिति**। व्यभिचारान्तरमप्याह—**अस्ति चेति**। इन्द्रयममृत्यूनामपि नमस्कार्यत्वस्य कर्मकाण्डादौ बहुषु स्थलेषु दर्शनात्; अपदानादिकं च चण्डीन्द्रादेर्दृश्यत इति भावः। ननु देवतानामप्यस्ति चेत् किं कुर्मः; कर्मवश्यत्वस्य हि यथाप्रमाणमभ्युपगन्तव्यत्वादित्यत्राह—**अत इति**। **सर्वेषां चेति**। सर्वेषां परत्वे स्वव्यतिरिक्तपरत्वस्य परस्परविरुद्धत्वात् व्याहतार्थकतया प्रामाण्यं न स्यादिति भावः ॥९॥

---

अक्ष०—नन्वेवं श्रीपतेरेव परत्वे मुमुक्षूपास्यत्वे च सति यत्र अम्बिकासाहित्यत्वाष्ट्रवधाद्यसाधारणलिङ्गैस्सह रुद्रेन्द्रादेः परतया श्रवणं तत्र कथं निर्वाह इत्यत्राह—**रुद्रेति**। आदिना हिरण्यगर्भग्रहणम्। **परतयेति**। 'एक एव रुद्रो न द्वितीयाय तस्थे' 'न किरिन्द्र त्वदुत्तरः' इत्यादावित्यर्थः। **अनन्यथासिद्धेति**। पिनाकहस्तवज्रहस्तत्वादिलिङ्गैरित्यर्थः। मोक्षसाधनविद्यासु तच्छ्रवणे तत्तच्छरीरकविष्णुरेव तत्र वेद्य इत्याह **तत्तदिति**–कथं तत्तच्छरीरकत्वमित्यत्राह–**अखिलतनुरिति** 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इत्यादिश्रुतेरिति भावः। तथा च सूत्रितं 'शास्त्रदृष्टया तूपदेशो वामदेववत्' इति। तेषां परतयोक्तिस्स्तुत्यर्थमित्याह–**पारम्यमिति आन्यपर्यादिति**–स्तुत्यभिप्रायादित्यर्थः। प्रकृतासु वस्वादिषु देवतासु मध्ये परत्वं पशुविशेषे रुद्रस्यैकस्यैव देवतात्वमवलम्ब्य न ततस्सर्वस्मात्परत्वमिति भावः। परत्वाभावे तस्मै नमकादौ बहुशो नमश्श्रवणं कथमुपपद्यत इत्यत्राह–**अन्याकूतैरिति**। अन्यथा हिंस्यादिति भयेन सांत्वनाद्यभिप्रायैरित्यर्थः। तथा च स्फुटं श्रूयते 'नमस्ते ऽस्तु मा मा हिंसीरिति। लोकेऽपि बाधकेभ्यो

परत्वाभावेऽपि नमस्कारः क्रियत इति परत्वानैकान्त्यैर्नमस्यादिभिरपि न पारम्यसिद्धिरिति भावः। नमस्यादिभिरित्यादिपदेन त्रिपुरभेदनाद्यपदानविशेषश्रवणादिग्रहणं। सर्वमिदमन्यासु देवतास्वप्यस्तीति न परत्वनियामकमिति भावः ॥९॥

---

**धर्माणां स्थापनार्थं स्वयमपि भजते शासिता शासनं स्वं**
**स्वस्यापि प्रत्यवायानभिनयति नृणां पापभीतिं विधित्सुः।**
**शुद्धैस्स्वेच्छावतारैर्भजति सुलभतां तावतोत्पत्त्यनूक्तिः**
**प्रोक्तो विष्णुशिखायामपि हि स पुरुषः प्राप्ततारार्धमात्रः ॥ १० ॥**

सर्वा०—नन्ववतारेषु भगवतश्शास्त्रार्थानुष्ठानं तत्फलभोगश्च श्रुतिस्मृतिषु बहुधा दृश्यते। अतस्तस्यापि कर्मवश्यत्वं स्यादित्यत्राह– **धर्माणामिति** ॥ तदेतत् न मे पार्थास्ति कर्तव्यम्, धर्मसंस्थापनार्थायेत्यादिभिस्सिद्धम्। यद्यपि जनितेन्द्रस्य, जनितोऽत विष्णोरित्येतत् प्रीणनद्रव्यप्रशंसार्थं, तथाऽप्यथर्वशिखायां ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्त इति ब्रह्मादेरिव भगवतोऽपि प्रसूतिः श्रूयते। अतस्तदतिरिक्तं कारणं तत्र ध्येयतयोच्यत इत्यत्राह—**शुद्धैरिति**। अकर्महेतुकैरप्राकृतैरित्यर्थः। सौलभ्यार्थावतारानुवादस्तस्यैव सर्वकारणस्य ध्येयत्वविधानार्थमिति भावः। तत्रैव प्रणवनिरूपणे स्वार्थस्थापनं व्यनक्ति—**प्रोक्त इति**। प्रणवस्य तिसृणां मात्राणां वर्णभेदांस्त्रिमूर्तिदेवताकत्वं चोक्त्वा तस्य चतुर्थ्या अर्धमात्रायास्सर्ववर्णत्वं पुरुषदेवताकत्वं चोक्तम्। स च पुरुषः सृष्टिस्थित्यन्तकरणीमित्यादावुक्त एव जनार्दनः। तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः, यथा पाण्ड्वाविकं, यथेन्द्रगोप इत्यादिना च पुरुषस्य सर्ववर्णविग्रहः श्रुतः। भारतादौ च विश्वरूपादिविग्रहे व्यक्तमेतत्।

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।
निरुपाधी च वर्तेते वासुदेवे सनातने ॥

इति च स्मर्यते इति ॥ १० ॥

---

आनन्द०—ननु भगवतः परत्वस्य कर्मवश्यत्वेन विरुद्धत्वात्तदन्यस्य परत्वं बलाद्वक्तव्यम्; तत्र बाधकाश्च कथंचित् परिहार्या इत्याक्षेपसङ्गत्याऽऽह—**नन्विति**। 'विष्णुर्वा अकामयत' इत्यादिश्रुतिः। 'अश्वमेधशतैरिष्टवा' इत्यादिस्मृतिः। **तदेतदिति**। कर्मवश्यत्वं हि न साक्षाच्छ्रूयते। अपि तु कर्मानुष्ठानजन्मादिभिः कल्प्यते। तत्रानुष्ठानेन कल्पयितुं न शक्यते, तदनुष्ठानप्रतिपादनप्रकरण एव शास्त्रवश्यत्वाभावोक्त्या कर्मवश्यत्वाभावावगमात् तदनुष्ठानस्यान्यहेतुकत्वादिति भावः। द्वितीयं शङ्कते—**यद्यपीति**। 'सोमः पवते जनिता मतीनां, जनितेन्द्रस्य, जनितोत विष्णोः' इत्यादीनां देवताप्रीणनहेतुसोमद्रव्यप्रशंसार्थत्वं तस्य प्रत्यक्षविरोधादिना सिद्धमित्यर्थः। **ब्रह्मादेरिवेति**। एकस्याख्यातस्य विरूपतयाऽर्थप्रतिपादकत्वायोगात् ब्रह्मादितुल्योत्पत्तिकत्वे कर्मवश्यत्वं सिध्यतीति भावः। **अत इति**। यतः कर्मवश्यस्य ध्येयत्वं

कारणत्वं च ब्रह्मादेरिवायुक्तं तत इत्यर्थः **अकर्महेतुकैरिति**। यद्यप्याख्यात एकरूपेण स्वार्थं बोधयति, तथाऽपि कर्मकृतत्वादिरूपेण न बोधयति, तत्र सामर्थ्याभावात्। अपि तु उत्पत्तित्वेन सामान्यतोऽवगम्यते। तथा च ब्रह्मादिसमभिव्याहारादिलिङ्गेन कर्मवश्यत्वमनुमेयम्। तत्र च 'न कर्मणा वर्धते' इत्यादिश्रुतिबाधान्नानुमानमिति भावः। ननु तर्हि ब्रह्मादिमध्ये विष्णूत्पत्तिः किमर्थं कथ्यत इत्यत्राह—**सौलभ्यार्थेति**। कर्मवश्यैस्सह सजातीयतयाऽवतारकथनेन दुरधिगमत्वशङ्कानिरासार्थं सौलभ्यं कथितं भवतीत्यर्थः।

ननु विष्णोरेव परमकारणत्वे हि सौलभ्यार्थावतारपरता वक्तुं शक्यते। तदेव न संभवति। अनेन वाक्येन त्रितयकारणस्यान्यस्य प्रतीतेरित्याह—**तत्रैवेति**। **पुरुषदेवताकत्वमिति**। पुरुषप्रतिपाद्यकत्वमित्यर्थः। प्रतिपाद्यार्थस्यैव देवतात्वात्। तथा च पुरुषस्य जगत्कारणत्वात् अर्धमात्राप्रतिपाद्यात् पुरुषान्मूर्तित्रयमुत्पन्नमिति कथनेन स्वजन्मन्यपि स्वस्य कारणत्वोक्तेस्सर्वकारणत्वं दृढीकृतमिति नोत्तीर्णं किंचिदस्तीति भावः। ननु पुरुषशब्दस्य साधारणत्वात् कथं नारायणोऽर्धमात्रार्थ इत्यत्राह—**स च पुरुष इति**। जगत्कारणत्वमन्यस्य नोपपद्यत इत्यर्थः। लिङ्गं चाह—**तस्य हैतस्येति**॥

ननु नानारूपवत्त्वं कथमित्यत्राह—**भारतादौ चेति**। नारायणस्य प्रतिपादनादिति भावः। किं च पुरुषशब्दादेव नारायणावगतिरित्याह—**भगवानिति**॥ १०॥

---

अक्ष०—नन्ववतारेषु भगवताऽपि कर्मणामनुष्ठानात् फलानुभवाच्च तस्य कर्मपारवश्यावश्यंभावात् तदतिरिक्त एव कश्चित् परस्स्यादित्यत्राह—**कर्मणामिति**। धर्माणां सम्यक् स्थापनार्थाय हि भगवतो युगे युगे संभवो भवतीति गीयते। स च संभूतः प्रशासिता सर्वेश्वर एव सन् **स्वयमपि**—स्वेच्छयैव। अपिरेवार्थकः। स्वशासनं भजते अनुवर्ततेऽनुतिष्ठति न तु परवशतयेत्यर्थः। स्वानुष्ठानप्रदर्शनेनान्यानप्यनुष्ठापयति। धर्मान् संस्थापयति—सर्वानुष्ठानविषयान् करोतीति भावः। फलानुभवस्तु जनानां पापभीतिजननायाभिनय एवेत्याह **स्वस्यापीति**।

नन्वथर्वशिखायां विष्णोरपि ब्रह्मादिवदुत्पत्तिः श्रूयत इत्यत्राह—**शुद्धैरिति** अप्राकृतैरित्यर्थः। **स्वेच्छेति** अकर्मकृतशरीरैरित्यर्थः। भजतीति-स्वोपासकानां सुलभो भवतीत्यर्थः। स्वसौलभ्यनिबन्धनमप्राकृतशरीरग्रहणं न तु कर्मनिबन्धनमिति भावः। शरीरसंयोगमात्रेण ब्रह्मादिवदुत्पत्त्यनुवाद इत्याह—**तावतेति** तस्यैव सौलभ्यातिशयेन ध्येयत्वसूचनायायमिहानुवाद इति भावः। अतएव विष्णुरेव परमपुरुष इति तत्रैव प्रणवविवरणे प्रोक्त इत्याह—**प्रोक्त इति** प्रणवस्य तिसृणां मात्राणां वर्णभेदान् देवताभेदांश्च निर्दिश्य चतुर्थ्या अर्धमात्रायाः पुरुषदेवताकत्वं, सर्ववर्णत्वं चोक्तम्।

भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।
निरुपाधी च वर्तेते वासुदेवे सनातने॥

इति हि स्मरन्ति। तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासः, यथा पाण्ड्वाविकं यथेन्द्रगोपः इत्यादौ पुरुषस्य सर्ववर्णत्वं श्रूयते। प्राप्तेति प्रणवार्धमात्रां देवतात्वेन प्राप्त इत्यर्थः॥ १०॥

---

**आद्यं रामायणं तत्स च निगमगणे पञ्चमः पञ्चरात्रं**
**सत्त्वोपज्ञं पुराणं मनुमुखमुनिभिर्निर्मितं धर्मशास्त्रम्।**
**त्यक्तान्यो मूलवेदः कठपरिपठिता वल्लिकास्तापनीयं**
**सौबालब्रह्मबिन्दुप्रभृतिकमपि नस्तत्परं तत्परत्वे॥ ११॥**

**सर्वार्थ०**—उक्तस्यार्थस्यानन्यथासिद्धस्थापकभूयस्त्वमाह—**आद्यमिति**॥ मानवादिभ्योऽपि पूर्वमित्यर्थः। तदिति परिग्रहप्रसिद्धिव्यञ्जनम्; स चेत्यपि तथैव। निगमगणे पञ्चमत्वं च 'वेदानध्यापयामास महाभारतपञ्चमा'निति प्रदर्शितम्। पञ्चरात्रस्य कात्स्न्येन प्रामाण्यं च महाभारतादिप्रसिद्धम्, शारीरके स्थापितं च। सत्त्वेन गुणेनादिभूतेन उपज्ञायमानत्वात् सत्त्वोपज्ञं वैष्णवादिपुराणम्। तेन मात्स्यादिषु विभक्तराजसतामसेभ्यः प्राबल्यं सूच्यते। **मनुमुखमुनिभिरिति**—अनेन मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यत इत्युक्तं मानवप्राबल्यं व्यज्यते। **त्यक्तान्यः**—परित्यक्तदेवतान्तरतद्धर्मः। **मूलवेदः**—अनन्यधर्ममूलभूतो वेदभागः। **कठवल्लीषु**—

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥

इति प्राप्यविशेषदर्शनात्तासु पुरुषादिशब्दोक्त उपास्यो विष्णुरेवेति युक्तम्। **तापनीयोपनिषत्तु** नृसिंहरूपभगवदवतारैकविषया। **सुबालोपनिषच्च** नारायणस्यैव परत्वं बहुधा प्रपञ्चयति। **ब्रह्मबिन्दूपनिषदपि** अहं वासुदेव इत्यहंग्रहोपासनदर्शनाद्वासुदेवविषया। **प्रभृतिशब्देन** नारायणोपनिषदादिसंग्रहः। **तत्परत्वे तत्परं**—भगवत्पारम्ये प्रधानाभिप्रायवदित्यर्थः॥ ११॥

---

**आनन्द०**—ननु यद्यपि पुरुषादिशब्दास्सन्ति तथाऽपि तदन्यत्वबोधकानामपि सत्त्वात्तदनुसारः किं न स्यादित्यत आह—**उक्तस्यार्थस्येति**। पूर्वशेषत्वान्न पृथक्सङ्गतिरिति भावः। रामायणद्वैविध्यभ्रमं वारयति—**मानवादिभ्य इति। तथैवेति।** प्रसिद्धिप्राचुर्यात् भारतमुपस्थापयतीति भावः। **सत्त्वोपज्ञमिति।** अनेन कात्स्न्येन प्रमापूर्वकत्वात् प्रामाण्यं सूच्यते। **अनन्यधर्मेति।** भगवद्धर्ममूलभूत इत्यर्थः। **प्राप्यविशेषदर्शनादिति।** ननु विष्णोः पदं प्राप्यमिति ततोऽन्यदेव प्राप्यमुपास्यं चास्तीति चेत्, मैवम्। 'विष्णवाख्यं परमं पदम्' इत्यादिबहुवचनानुरोधेन स्वरूपार्थकत्वात्। भेदपक्षेऽपि पदशब्दस्य चरणार्थत्वं वा। कमर्थित्वस्याशाब्दत्वात्। भावे वा स्थानार्थत्वं रूढेर्योगात् बलीयस्त्वादिति नातिरिक्तं विष्णोरुपास्यमिति **परतत्त्वनिर्णये** निर्णीत-

मिति भावः । 'अहं वासुदेव इति सततं मन्थयितव्यं मनसा मन्थानशैलेन' इत्यनेन विधीयमानोपासनस्याहंग्रहणरूपत्वात् 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति विधीयत इत्यर्थः। मूले - निगमगणे पञ्चमः निगमगणने पंचमत्वेन गणित इत्यर्थः। मुखशब्देन याज्ञवल्क्यादिग्रहः । उपनिषदादीत्यनेन एकायनशाखाग्रहः ।। ११ ।।

---

अक्ष० —भगवत्पारम्ये बहूनि प्रमाणानि सन्तीत्याह—आद्यमिति । उपबृंहणगणेषु प्रथममित्यर्थः। तत् दृष्टादृष्टार्थिभिः सर्वैरपि परिगृहीतत्वात् प्रसिद्धमित्यर्थः। स चेति पूर्ववदतिप्रसिद्ध इत्यर्थः। 'वेदानध्यापयामास महाभारतपञ्चमान्' इति भारतस्य पञ्चमत्वमुक्तम् । पञ्चरात्रस्य कात्स्न्येंन प्रामाण्यं भारतादिषूक्तं, शारीरके स्थापितं च । सत्त्वोपज्ञमिति सत्त्वगुणेनादिभूतेनोपज्ञायमानं सत्त्वगुणादि कारकमिति यावत् । पुराणं वैष्णवादि । मन्विति 'यद्वै किं च मनुरवदत् तत् भेषजं' इति श्रुत्यैव प्रशंसितमिति भावः। त्यक्तेति परित्यक्त देवतान्तर इत्यर्थः। मूलवेदः एकायनशाखा। कठेति-कठोपनिषत् तापनीयोपनिषत्, सुबालोपनिषत्, ब्रह्मबिन्दूपनिषत्, नारायणोपनिषद् इत्यादिकं विष्णोः पारम्ये सुस्पष्टतात्पर्यवदित्यर्थः। उक्तेषु संप्रतिपन्नप्रमाणेषु अधिकं मेनिरे विष्णुम् । 'न देवं केशवात् परं' 'यथागमं यथान्यायं निष्ठा नारायणः प्रभुः' "तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकाङ्क्षिभिः" 'श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदं' 'अप एव ससर्जादौ' 'आपो नारा इति प्रोक्ताः' 'सोऽध्वानः पारमाप्नोति 'तद्विष्णोः परमं पदं' 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' 'अहं वासुदेव इत्युपासीत' 'विश्वं नारायणं देवमक्षरं परमं प्रभुं' इत्यादिभिः विष्णुशब्दवाच्यस्य भगवतो नारायणस्यैवैककण्ठ्येन सर्वाधिकत्व, सर्वान्तरत्व, सर्वकारणत्व, मुमुक्षुध्येयत्व, परमप्राप्यत्वादिकं स्फुटं प्रतीयत इति भावः ॥ ११ ॥

---

**मध्यस्थोक्तिर्विरुद्धे परमहिमपरे तत्र तत्रैतदुक्ति-**
**वृत्तान्तास्ते विचित्राः स्वमतमभिहितं देवतातत्त्वविद्भिः ।**
**वैषम्यं शिल्पशास्त्रप्रभृतिषु विविधं वैदिकस्वीकृतत्वं**
**प्रज्ञासंस्कारभाजां भवति भगवति स्वप्रधाने प्रमाणम् ।। १२ ।।**

सर्वार्थ० —तत्राभ्युच्चययुक्तिमाह-मध्यस्थोक्तिरिति। राजसादिपुराणान्यतमेन सात्त्विकपुराणे विरुद्धे तदुभयमध्यस्थपुराणान्तरोक्तिसंवादान्निर्णयः स्यात् । ब्रह्मरुद्राद्येकैकमहिमतत्परे च पुराणे बहुषु प्रदेशेषु भगवत्पारम्यं दृश्यते। रक्तरुष्टयोरपि दोषगुणोक्तौ प्रत्ययितत्वमाहुः। वृत्तान्ताः—क्रान्त्वा निगीर्य पुनरुद्गिरतीत्यादिभिस्संगृहीताः। देवतातत्त्वविद्भिः—पराशरपाराशर्यादिभिः। विष्णोस्सकाशादुद्भूतम्, आलोड्य सर्वशास्त्राणि, सत्यं सत्यं पुनस्सत्यमित्यादिभिः स्वमतमभिहितम् । शिल्पशास्त्रे च परावरभावेन वैषम्यं दृश्यते; तत्र ह्युत्तममध्यमाधमविमानान्यधिकृत्योक्तम्-

स्यान्नागरद्राविलवेसरं च क्रमेण वै सत्त्वरजस्तमांसि ।
महीसुरोर्वीपतिवैश्यकास्ते हरिर्विधाता हर आदिदेवः ॥ इति ।

विष्णोरन्ये राध्यमाना न साक्षाच्छ्रीकरास्सुराः ।
सर्वदेवास्पदे विष्णौ धिष्ण्यं संपत्सुखावहम् ॥ इति ।

प्रभृतिशब्देनायुर्वेदादिसंग्रहः । पठ्यते–हरिं हरीतकीं चैवेत्यादि । ज्यौतिषे च धन्यं तदेव लग्नमित्यादि । वैदिकस्वीकृतत्वं–वेदविदुत्तमैः **सर्वैर्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचि**प्रभृतिभिर्भगवत एव परत्वेनाङ्गीकृतत्वम् । एतत्सर्वं सदाचार्यशिक्षाजनितप्रज्ञासंस्कारभाजाम् आत्मेश्वरमिति स्वप्रधानतयाऽधीते भगवति प्रमाणं भवतीति ॥ १२ ॥

---

**आनन्द०**—पूर्वसंगतिरेव संगतिरित्यभिप्रायेणाह—**अत्रे**ति । सात्विकपुराणस्य राजसेन विरोधे तामसं मध्यस्थम्, तथा तामसेन विरोधे राजसपुराणं मध्यस्थम् । तथा च राजसतामसयोरपि भगवत्परत्वस्य दर्शनात्सर्वानुगतं तदेव ग्राह्यमित्यर्थ इत्येके । अन्ये तु—पुराणं चतुर्विधं सात्विकराजसतामससंकीर्णभेदात् । संकीर्णं तु मध्यस्थं, तदनुरोधेनार्था वर्णनीय इति वदन्ति । किं च ब्रह्मरुद्रप्रतिपादकपुराणेष्वपि भगवतः पारम्यं प्रतिपाद्यत इत्यरातिकरलिखितविजयपत्रन्यायेनानुवृत्तं भगवतः पारम्यमेव सत्यम्, अन्यत्तत्तत्प्राकरणिककार्यान्तरार्थमर्थवादमात्रमित्यभिप्रायेणाह—**ब्रह्मरुद्रे**ति । तत्तत्पुराणेषु भगवत्पारम्यस्य वाऽर्थवादत्वं कुतो न स्यादित्यत्राह–**तत्रे**ति । रक्तरुष्टयोरित्यस्य व्युत्क्रमेणान्वयः ।

एवं तु मन्यमाना वै महत्त्वमपि यान्ति ते ।
अत्र विद्विष्टमनसो निरयं त्वधिविन्दति ।
तस्मान्मुनीश्वरा यूयं नारायणमनामयम् ।
भजध्वं भवतापघ्नं

इत्यादिस्कान्दादिवचनैर्भगवत्पारम्यानुरक्तस्य महत्त्वरूपातिशयोक्तेः विद्विष्टेति च द्वेषरूपदोषोक्तेश्च तत्र भगवत्परत्वे प्रत्ययितत्वं तात्पर्यवत्त्वं मुनयो वदन्तीत्यर्थः । तस्मिन्नर्थे विश्वसनीयत्वं व्याख्यातारो वदन्तीति केचित् । **क्रान्त्वा निगीर्ये**ति । अस्यार्थः स्तोत्रभाष्ये स्पष्टः । पराशरोक्तिमाह— **विष्णोरि**ति । तत्र हि—

विष्णोस्सकाशादुद्भूतं जगत्तत्रैव संस्थितम् ।
स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः ॥

इत्यादिर्भिर्विष्णुपरत्वमभिहितमित्यर्थः । व्यासवचनमुदाहरति—**आलोड्ये**ति ।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥
सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
वेदाच्छास्त्रं परं नास्ति न दैवं केशवात्परम् ॥

इत्यादिभिः प्रकटमभिहितमित्यर्थः । **शिल्पशास्त्रे चेति** । मरीचिसंहितायां देवालयप्रमाणान्युक्त्वाऽनन्तरमयं श्लोको विमानविषयः पठ्यते । तस्यैकत्र पक्षपाताभावात्तदुक्तं प्रमाणमित्यर्थः । **उत्तममध्यमाधमेति** ।

त्रेधा विमानं प्रवदन्ति तज्ज्ञा देवालये तद्विधिरुत्तमः स्यात् ।
यथाक्रमेणैव विमानमेषां विपर्ययेऽनर्थकरः प्रजानाम् ॥

इत्यादिनेति शेषः । **सत्त्वरजस्तमांसि** सत्त्वादिगुणमयानीत्यर्थः । सत्त्वमयोत्तमविमानाधिदेवतात्वात् परत्वमित्यर्थः । शिल्पे गार्ग्यसंहितायामपि परत्वं सिद्धमित्याह—**विष्णोरिति** । अस्यार्थः विष्णोरन्ये देवा आराध्यमाना न साक्षात् श्रीकराः फलप्रदा न भवन्ति, किं तु सर्वास्पदे विष्णौ धिष्ण्यं स्थानं तेषां सुखावहं सुखप्रदानसामर्थ्यवत्त्वादित्यर्थः । 'येऽप्यन्यदेवताभक्ताः' इति न्यायात् । ननु वैद्यशास्त्रे मुमुक्षूपास्यत्वोक्तेः परत्वमस्तु । ज्योतिश्शास्त्रे तु 'धन्यं यशस्यमायुष्यं'

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपतेरङ्घ्रियुगं स्मरामि ॥

इत्यादिना भगवदङ्घ्रिस्मरणस्य सर्वमङ्गलकरत्वप्रतिपादनमात्रेण कथं परत्वसिद्धिरिति चेत्, तत्स्मरणस्य सकलमङ्गलकरत्वे मोक्षरूपमङ्गलकरत्वस्यापि भावात् परत्वसिद्धिरिति भावः । ननु तर्ह्येतैः परिगृहीतत्वे सर्वे किमिति न गृह्णन्तीत्यत्राह—**एतत्सर्वमिति** । तादृशसुकृतालाभादिति भावः 'आत्मेश्वरम्' इत्यनेन—'उत्तीर्णं ब्रह्म धर्मि, तद्धर्मः शक्तिर्द्विधा भिन्ना सती पार्वतीविष्णुरूपेणावतिष्ठते । तत्र 'विष्णुः प्रकृतितया जगत्कारणम् । तदेव ब्रह्माद्यपेक्षया परम् । यद्वा—परस्मादुत्पन्ना विष्ण्वादयः समाः, वरगोष्ठीन्यायात् । कदाचिद्विष्णुः परः कदाचिद्रुद्रः, कदाचिद् ब्रह्मा च' इति नवीनशैवकल्पनं च निरस्तम् । तामसपुराणानां 'स्मृत्यनवकाशदोषप्रसङ्गात्' इति न्यायेन दुर्बलतयाऽन्यपरत्वात्तत्रैव कूर्मादिषु उपक्रमादिषु विष्णुपरत्वोक्त्या स्ववाक्यविरोधाच्च मन्वाद्यनुस्मरणस्य विरोधप्रशमनकारणत्वाच्चेति भावः ॥ १२ ॥

अक्ष०—एवमुपपादिते भगवतः परत्वेऽभ्युच्चययुक्तिमप्याह—**मध्यस्थोक्तिरिति**। सात्त्विकं राजसं तामसमिति त्रिविधे पुराणे भगवत्पारम्यपरेण सात्त्विकपुराणेन देवतान्तरपरत्वपरराजसादिपुराणस्य विरोधे सति राजसादिपुराणेष्वेव यत्र भगवत्पारम्यस्याप्यभिव्यञ्जकवचनव्यक्तिरस्ति सा मध्यस्थोक्तिः। तद्वत् विश्वसनीयं अनन्येश्वरे भगवति भवति प्रमाणमित्यर्थः। विरोधिभिरेव गुणवचने तत्र मध्यस्थान्तरानपेक्षणादिति भावः। वृत्तान्ताः—विस्मयनीयाः लोकानां क्रमण-निगिरणोद्गिरणादिरूपाः। एषामप्यन्ते श्रुतेन प्रमाणमित्यनेनान्वयः। एवमग्रेऽपि। देवतातत्त्वविद्भिः—पराशर पारशर्यादिभिरभिहितं स्वमतं 'विष्णोस्सकाशादुद्भूतं' 'आलोड्य सर्वशास्त्राणि' इत्यादिनेति भावः। शिल्पशास्त्रे च देवालयविमाननिर्माणप्रकरणेषु परावरभावेन त्रिविधं वैषम्यं 'सर्वदेवास्पदे विष्णौ धिष्ण्यं संपत्सुखावहं' इत्याद्युक्तमित्याह **वैषम्यमिति** प्रभृतीत्यायुर्वेदज्योतिश्शास्त्रादिग्रहणम्। आयुर्वेदे 'हरिं हरीतकीं चेति पठ्यते। ज्योतिषे 'तदेव लग्न'मित्यादि। बोधायनादिभिः भगवत्पारम्यस्य स्वीकृतत्वमस्तीत्याह **वैदिकेति** अत्र शिष्टपरिग्रहोऽप्यस्तीति भावः। एवं सति कथमत्र विवाद इत्यत्राह—**प्रज्ञेति** एतत्सर्वं सदाचार्यशिक्षाजनितप्रज्ञासंस्कारभाजामेव मनसि प्रमाणतया परिस्फुरति नान्येषामिति भावः॥ १२॥

---

**इन्द्रेशानाद्यभिख्या स्वयमिह महदाद्युक्तिभिर्वा विशिष्टा**
**तत्तत्पारम्यमानं न भवति बलवद्धर्मिमानोपरोधात्।**
**नो चेत्स्यान्नैक ईशो न भवति यदि वा कश्चिदन्योन्यबाधा-**
**ल्लोकेऽप्यन्वर्थभावं न हि दधति महावृक्षमुख्यास्समाख्याः॥ १३॥**

सर्वार्थ०—कश्चिदाह—ईश्वरशब्दो निर्विशेषणो महत्परमशब्दविशेषितश्च कस्यचित् समाख्या; अन्यस्य त्वेवं त्रिविधः पुरुषशब्दः; अतस्तयोरवसीयते परावरभाव इति। अत्रेन्द्रप्रतिबन्दि सहोक्त्या सूचयन् प्रतिवक्ति—**इन्द्रेशानादीति**॥ अयं भावः—इन्द्रशब्दो हि परमैश्वर्यवाचिधातुनिष्पन्नः केवलोऽपि परमेश्वरत्वं ब्रूते, किमुत महत्पूर्वः; तथाऽपि येन तत्र समाख्यासङ्कोचः स रुद्रेऽपि समः, कार्यत्वकर्मवश्यत्वयोस्समचर्चत्वादिति। समाख्यातः श्रुत्यादेर्बलीयस्त्वं सूचयन् हेतुमाह—**बलवदिति**। एवमनभ्युपगमे बाधकप्रसङ्गद्वयमाह—**नो चेदिति**। समाख्यामात्रावलम्बने रुद्रेन्द्रादयो बहव ईश्वराः स्युः, न वा कश्चित्, तुल्ययोगक्षेमत्वादिति भावः। नाममात्रस्यासाधकत्वं सर्वसंप्रतिपत्त्या दर्शयति—**लोकेऽपीति**। महौषधमहानद्यादिसंग्रहाय मुख्यशब्दः॥१३॥

आनन्द०—आक्षेपसङ्गत्यभिप्रायेणाह—**अत्र कश्चिदिति । एवं त्रिविध इति ।** केवलपुरुषशब्दो महापुरुषशब्दः परमपुरुषशब्द इत्येवंप्रकारेणेत्यर्थः । **अतस्तयोरिति ।** कल्पभेदेन परावरभावे विनिगमनाभावादिति भावः । यौगिकं नाम समाख्या । नन्विन्द्रादिसमाख्याया मानत्वं नास्तीत्ययुक्तं, धर्मिमानस्येन्द्राद्युपस्थापकस्य परत्वविरोधित्वाभावात्; प्रत्युतानुगुण्यमेवेत्यत्राह—**अयं भाव इति ।** केचित्तु—इन्द्रादिसमाख्यासाम्यमनुपपन्नं; तत्समाख्यायां परत्वानवगमादित्यत आह—**अयं भाव इती**त्याहुः । कार्यत्वकर्मवश्यत्वादिना हि धर्मिग्राहकेणोपस्थिते वस्तुनीन्द्रशब्दस्य समाख्यात्वग्रहः तथा च प्राथमिकेन धर्म्युपस्थापकेन परत्वविरोध्युपस्थापनेन बाधिता समाख्या न परत्वमिन्द्रे बोधयितुमलम्; तथा रुद्रेऽपीति भावः । ननु पुरुषोत्तमादिसमाख्यातो भगवतः परत्वं 'पुरुषोत्तमः कः' इत्यादिभिः कथं साध्यत इत्यत्राह—**नाममात्रस्येति ।** समाख्यामात्रस्य न साधकत्वमपि त्वबाधितस्य, पुरुषोत्तमादन्यस्मिन् समाख्या बाधितेति भावः । मूलं **अन्वर्थभावं न हि दधति** अवयवार्थो नास्ति, किं तु रूढिरेवेति भावः । **महावृक्षोऽर्कगुल्मम्** ॥ १२ ॥

---

अक्ष०—ऐश्वर्यवाचिनः ईशधातोर्निष्पन्न ईशानशब्दश्च निर्विशेषणो महदादिविशेषितश्च रुद्रस्य प्रख्यातसमाख्या । तया रुद्रस्य परत्वं गम्यते । पुरुषशब्दश्च सर्वावरपुरुषसाधारणो विष्णोस्समाख्या, तया च विष्णोरवरत्वं, तत्र महदादिविशेषणे चातिशयितमवरत्वमेव सिद्ध्येदित्याशङ्कामिह परिहरति—**इन्द्रेति ।** अत्रेन्द्राभिख्योदाहरणं प्रतिबन्दीसूचनाय, तस्या अपि परमैश्वर्यपरधातुनिष्पन्नत्वात् । आदिना ईश्वराभिख्याग्रहणं, स्वयमिति सावधारणं निर्विशेषणार्थकं । इह—इन्द्रे रुद्रे वा । महदादीत्यादिना परमोक्तेर्ग्रहणम् । **तत्तदिति**—इन्द्रेशानेत्यर्थः । इन्द्रमहेन्द्रादिसमाख्या यथा पुरन्दरपारम्ये न मानं तथा ईश्वरमहेश्वरादिसमाख्याऽपि पुरभिदः पारम्ये न मानं भवेदिति भावः । कुत इत्यत्राह—**बलवदिति ।** श्रुतिसमाख्ययोः श्रुतिर्बलीयसी । 'पतिं विश्वस्यात्मेश्वरं' 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतिः धर्मिग्राहिका नारायणस्य निस्समाभ्यधिकत्वं वक्ति, तद्विरोधेन दुर्बलाभ्यां पुरुषेश्वरसमाख्याभ्यां परावरभावविपर्यासबोधनं न शक्यमिति भावः । **नो चेदिति** श्रुतिविरुद्धेऽपि समाख्याया मानत्वोपगम इत्यर्थः । **नैक इति** इन्द्रसमाख्यया वृत्रहणोऽपि परमेश्वरत्वप्रसङ्गादिति भावः । ईश्वरसमाख्याविरोधादिन्द्रस्य न परत्वमिति चेदिन्द्रसमाख्याविरोधात् रुद्रस्यापि तन्न स्यादित्याह—**न भवतीति ।** कर्मवश्यत्वदर्शनमुभयत्रापि समानमिति भावः । तर्हि समाख्याया अर्थानुगतिः कथमित्यत्राह—**लोकेऽपीति** महावृक्ष महौषधादि समाख्या अन्वर्थभावं विनाऽपि आपेक्षिकमहत्त्वादिपरा बह्व्यस्सन्ति तद्वदिमा अपीति भावः । वस्तुतस्तु पुरुषपदं सर्वादित्वपरतया पारम्यसूचकमेव भगवतो नामधेयमवधेयम् ॥ १२ ॥

एकं त्रेधा विभक्तं त्रितयसमधिकं तत्त्वमीशास्त्रयस्ते
विष्णवन्या मूर्तिरीष्टे प्रभवननियमः कल्पभेदात् त्रयाणाम् ।
इन्द्रादीनामिव स्यान्निजसुकृतवशादीश्वराणां प्रवाहः
स्यादेकस्येश्वरत्वं प्रतिफलनवदित्यादि चैवं परास्तम् ॥ १४ ॥

**सर्वार्थ०**—अथात्र न्यायाभासमूलानि मतान्तराण्यनूद्य तेषां दत्तोत्तरत्वमाह—**एकमिति**। एकस्यैव रामकृष्णादिवत्साक्षादवतारे त्रिधा विभाग इति पक्षः, एकैव मूर्त्तिर्बिभिदे त्रिधा [से]ऽस्येत्यादिषु विवक्षितः; तत्र मूलभूतानां 'विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते' सृष्टिस्थित्यन्तकरणीमित्यादीनां, तवान्तरात्मा मम चेत्यादिवाक्यान्तरानुविधानात् क्षेत्रज्ञव्यवधानेन द्वयोरेकत्राव्यवधानेन च [वृत्ति] प्रतीतिं व्याचख्युः। त्रिमूर्त्युत्तीर्णं पुरुषान्तरं सच्चिन्मात्रं वा परतत्त्वमिति पक्षे, स संज्ञां याति भगवानेक एव जनार्दनः इत्यादिभिरपि बाधः। परस्परं भिन्ना ईश्वरास्त्रय इति पक्षश्चैकस्य सर्वप्रशासितृत्वादिभिर्निरस्तः। विष्णोरन्य एव ब्रह्मा रुद्र आदित्यो वा कश्चिदीश्वर इति वादोऽपि विष्णोरेव सर्वेश्वरत्वस्थापनादपास्तः। त्रय ईश्वरास्सत्त्वादिगुणोन्मेषभिदुरकल्पभेदाच्चक्रनेमिनीत्या निम्नोन्नतैश्वर्या इति कल्पनाऽपि निरस्ता। प्रवाहेश्वरपक्षश्च, 'न कर्मणा वर्धते नो कनीयान्' 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीया'नित्यादि श्रुतिभिरवधूतः। अस्त्वेक एवेश्वरः, तस्येश्वरत्वं नित्यसत्त्वविशेषसन्निधाननिबन्धनं प्रतिफलनकल्पमिति योगराद्धान्तश्च, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'त्यादिभिरपोढः। आदिशब्देन नित्यचिकीर्षाप्रयत्नवांश्चिकीर्षारहितोऽपि वा ज्ञानप्रयत्नमात्रवानित्यादिमतभेदसंग्रहः। एवं—श्रुतिलिङ्गादिप्राबल्यस्थापन प्रकारेणेत्यर्थः ॥ १४ ॥

---

**आनन्द०**—पूर्वसंगतिरेव संगतिरित्यभिप्रायेणाह—**अथेति**। **एकस्यैवेति**। एक आत्मा ब्रह्मविष्णुशिवरूपविग्रहवानिति तार्किकादय ऊचुरित्यर्थः। **एकैवेति**। एक एवात्मा ब्रह्मादिशरीरत्रयवानित्यर्थः। तत्र प्रमाणं नास्तीत्याह—**तत्रेति**। ननु वैष्णववचनैस्त्रैरूप्यं प्रतीयत इति चेत्; तत्राह—**तवेति**। सत्यं त्रैरूप्यं प्रतीयत इति, तथापि सद्वारकाद्वारकभेदेन प्रतिपादयतीति न तत्र प्रमाणमित्यर्थः। त्रिमूर्त्युत्तीर्णपुरुषान्तरमिति **शैवैकदेशिन** आहुः। तदुत्तीर्णं सच्चिन्मात्रमिति **मायिन** आहुः। मतद्वयमाह—**त्रिमूर्तीति**। अपिशब्देन पुरुषसूक्तमहोपनिषदादिबाधोऽपि सूच्यते। परस्परं भिन्नास्त्रय इति पौराणिकाः। तद्दूषयति—**एकस्येति**। 'एको देवः सर्वभूतेषु गूढः' 'एकमेव' 'नेह नानास्ति' इत्यादिभिरित्यर्थः। **विष्णोरन्य एवेति**। रुद्रयामले वामागमे च—

प्रकृतिर्विष्णुरीशान ईश्वरो जगतस्तथा।

इति। अन्यत्र च—

'ईश्वरश्शंभुरादित्यः पर्जन्यश्च हुताशनः'
इति दर्शनाद्विष्णोरन्यः पर इति कापालिका आहुरित्यर्थः।
'यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा।
तस्य तस्य तु माहात्म्यं'

इत्यारभ्य—

सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः।
अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम्॥

राजसेषु तु कल्पेषु माहात्म्यं ब्रह्मणो विदुः॥
इत्यादिवचनार्थभ्रान्तिमूलकं शैवैकदेशिमतमाह--**अथ इति**।

**प्रवाहेश्वरेति**। इन्द्रादिप्रवाहवदुपचितपुण्यविशेषाणामीश्वराणामपि प्रवाह इति मीमांसकमतम्। **नित्यचिकीर्षेति** तार्किकमतम्। तदेकदेशिमतमाह--**ज्ञानप्रयत्नेति**। पूर्वं स्वरूपाभ्युपगमोऽत्र गुणे प्रकारविशेषाभ्युपगम इति भेदः। आदिशब्देनाध्यस्तगुणवत्त्वमनित्यकर्माधीनगुणवत्त्वमित्यादिसंग्रहः। **श्रुतिलिङ्गादीति**। श्रुतिलिङ्गादिभिर्नारायणपरत्वे सिद्ध एते पक्षा निरस्ता इत्यर्थः॥ १४॥

---

**अक्ष०**—प्रबलश्रुत्यादिप्रमाणविरोधात् न्यायाभासमूलानि मतान्तराणि निरस्यति **एकमिति** एकमेवाऽऽत्मस्वरूपं त्रेधा ब्रह्म-विष्णु शिव शरीरत्रयेण रामकृष्णादिवद्विभक्तमित्यर्थः।

"सृष्टिस्थित्यन्तकरिणीं ब्रह्म-विष्णु-शिवात्मिकाम्।
स संज्ञां याति भगवानेक एव जनार्दनः॥

इत्युक्तेरिति भावः। 'तवान्तरात्मा मम च येचान्ये देहिसंज्ञिताः' इति वाक्यान्तरानुसारात् क्षेत्रज्ञव्यवधानेन द्वयोः ब्रह्मशिवयोः एकत्र विष्णावव्यवधानेनात्मभावं व्याचख्युः। त्रिमूर्त्युत्तीर्णं परतत्त्वं इति मतमाह—**त्रितयसमधिकमिति**। परस्परभिन्नास्त्रय ईश्वरा इति पक्षमाह-**ईशा-इति**। विष्ण्वन्य ईश्वर इति पक्षमाह—**विष्ण्वन्य** इति कल्पभेदात् त्रिमूर्तिष्वेकैकस्य क्रमेण प्रभुत्वमिति पक्षमाह **प्रभवनेति** सुकृतकर्मवशात् इन्द्रादानामिवेश्वराणामपि प्रवाह एव, नत्वेक एव कश्चित् सर्वदेश्वर इति मतमाह इन्द्रेति। एषां पक्षाणां विष्णुरेक एव सर्वदा सर्वेश्वर इति स्थापनात् निरासः। एकस्यैवेश्वरत्वेऽपि तस्य नित्यसत्त्वविशेषसंनिधाननिबन्धनं प्रतिफलनकल्पमीश्वरत्वं न तु वस्तुत इति योगसिद्धान्तमाह—**स्यादिति** आत्मनां ज्ञानक्रियादिरहितत्वादिति भावः। अत्र पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतिविरोधोऽवधेयः। आदिशब्देन नित्यचिकीर्षाप्रयत्नवान्, ज्ञानप्रयत्नमात्रवान् इत्यादिमतपरिग्रहः। सर्वमिदं एवं श्रुतिलिङ्गादिप्राबल्यसमर्थनेन निरस्तमित्याह—**एवमिति**॥ १४॥

सर्गादीनामसिद्धौ न हि निगमगिरां भज्यते संप्रदाय-
स्तत्सिद्धौ नानुमानं प्रभवति यदिदं बाधशून्यं विपक्षे।
शास्त्रेभ्यस्तत्प्रसिद्धौ सहपरिपठनाद्विश्वकर्ताऽपि सिध्ये-
द्धर्मानुष्ठापनार्थं तदनुमितिरतो नैव शक्या कदाचित् ॥ १५ ॥

**सर्वार्थ०**—श्रुतिसिद्ध ईश्वर इत्युक्तम्। अनुमानतोऽपि सिद्ध इति वदन्तः प्रतिवक्तव्याः। तत्र तावदुपदेशलिङ्गं दूष्यते—**सर्गादीनामिति**॥ किमस्मदादीनां धर्मोपदेशार्थमीश्वरः कल्प्यते उत कल्पादिसंभवानां पुरुषविशेषाणाम्? नाद्यः, पित्रादि क्रमेण संप्रदायप्रवृत्तेरीश्वरनैरपेक्ष्यात्। पित्रादिप्रेरणार्थमीश्वरोऽपेक्षित इति चेत्, न तर्हीदमुपदेशलिङ्गं, कार्यलिङ्गानुप्रवेशात्। न द्वितीयः, सर्गाद्यसिद्धाविदानीमिवानादिसंप्रदायाविच्छेदेन तत्प्रवर्तकानपेक्षणात्। सिद्धिस्तु सर्गादेरनुमानात् आगमाद्वेति विकल्पे पूर्वं दूषयति—**तत्सिद्धाविति**। अयं भावः—विश्वसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्यनुमानं तावत्सर्वात्ममोक्षमिच्छतामन्त्यमुक्तिसमय-भाविना सर्वकार्योच्छेदेन चरितार्थं स्यात्। वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादित-सजातीयसन्तानान्तराः नित्यत्वे सति तदारम्भकत्वात् घटादिपरमाणुवदित्यत्राप्युप-चयापचयभिदुरब्रह्माण्डभेदेन तत्तत्परमाणुनां प्रागपि ब्रह्माण्डसन्तत्यन्तरारम्भसंभवे-नार्थान्तरत्वापातादिति। साधारणदोषमाह—**यदिदमिति**। न तावत्सर्गाद्यभावे काचिदनुपपत्तिः। यद्यप्यारब्धानां भावानां नश्वरत्वमात्रं गम्यते, तथाऽपि तत्सन्ततेरना-मनुच्छेदोक्तौ न विरोधः। यत्तूक्तम्

प्रमायाः परतन्त्रत्वात् सर्गप्रलयसंभवात्।
तदन्यस्मिन्ननाश्वासान्न विधातुरसंभवः॥ [ विधान्तरसंभवः ]

इति, तत्राद्यो हेतुर्बुद्धिसरे दूषयिष्यते। द्वितीयस्त्विदानीं दूषितः। तृतीयोऽपि विमतः, संभवन्ति हि सर्गादिकाले प्राचीनसुकृतसञ्चयविपाकवै[जात्या]विध्यात् प्रतिबुद्ध-वेदराशयो देवा महर्षयश्च; ते युष्माभिरपि वेदवक्तुराप्तिख्यापनाय तदुपदेशग्रहणप्रवच-नाद्यर्थं च स्वीकृताः। ऋषित्वमपि सुप्तप्रबुद्धन्यायेन सुकृतवशात् प्रागधीतप्रस्मृतवेद-भागप्रत्यक्षीकरणमेव; श्रूयते हि अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत्, त ऋषयोऽभवँस्तदृषीणामृषित्वमिति। अतस्तैरेव सर्गोपपत्तौ किमन्येन? एतेन बहुपरिग्रहगौरवं चापास्तम्। विजातीयक्लृप्तावेव हि गौरवम्। न च बहुष्वनाश्वासः, एकस्मिन्निव तेष्वपि तत्परिहारस्य समचर्चत्वादिति। आगमात्सर्गादिसिद्धौ सर्वकर्तुरपि तत एव सिद्धिमाह—**शास्त्रेभ्य इति**। सर्वकर्तारं पुरस्कृत्यैव हि सर्गादिकथनम्; अतोऽनुमेयं नावशिष्यत इति भावः। विमतं प्रति प्रयोगसंभवेऽप्यनुमानासामर्थ्यं दर्शितम्। सांख्यागमैः सर्गादिसिद्धिः स्यादिति चेन्न, श्रुतिविरोधे बाधात्; अन्यथा सेश्वरसांख्येऽनुमेयाभाव एवेति। अनुमानान्तरैरपि सर्गाद्यसिद्धि तत एवोपदेशलिङ्गस्य निर्मूलतां चाभिप्रेत्य निगमयति—**धर्मेति** ॥ १५ ॥

आनन्द०—ननु श्रुत्येश्वरसिद्धिरित्यनुपपन्नं; प्रमाणान्तरसिद्धे तात्पर्याभावादित्याक्षेपसंगतिमभिप्रेत्याह–**श्रुतिसिद्ध ईश्वर इति**। केचित्तु श्रुतिसिद्धः श्रुत्यैव सिद्ध इत्यर्थ इत्याहुः। उपदेशो द्विविधः स्वरूपख्यापनमनुष्ठानप्रदर्शनमिति; अत्राद्यं दूषयति—**किमित्यादिना। न तर्हीति**। प्रेरकत्वेन कारणानि प्रति कर्तृत्वात् कार्यं कर्तृजन्यमित्यत्रैव पर्यवसितम्। तच्चाग्रे दूष्यत इति भावः। **इदानीमेवेति**। पित्रादिक्रमेणैवेत्यर्थः ननु नानुमानं प्रभवतीत्यनेन किं नास्तीति विवक्षितम्, उत सत्यपि तस्मिन्सामर्थ्यं नास्तीति, नाद्यः। विश्वसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वाद्दीपसंततिवत्, वर्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानकाः नित्यत्वे सति तदारम्भकत्वात् घटादिपरमाणुवदित्यनुमानसंभवात्। न द्वितीयः—व्याप्तिपक्षधर्मतादिमतस्साधकत्वादित्यत आह—**अयं भाव इति**। विश्वसन्ततेः प्रतिदिनमुच्छेदात् सिद्धसाधनमित्यत आह—**अत्यन्तमिति**। सजातीयसमानकालीनोच्छेदवदित्यर्थः। **सर्वकार्योच्छेदेन** महाप्रलयेनेति। इत्थं परमाणुमात्रपक्षीकारेऽशतस्सिद्धसाधनमित्यत आह—**वर्तमानेति**। नित्यत्वे सतीति विशेषणं घटपटाद्यारम्भकतन्तुकपालादौ व्यभिचारवारणाय। आत्मादौ व्यभिचारवारणाय तदारम्भकत्वादिति। तच्छब्दो हि सन्तानान्तर्गतद्रव्यपरः। तथा च द्रव्यारम्भकत्वादित्यर्थः। **अत्रापीति**। अवयविवादे प्रतिक्षणं परमाणुविभागसंयोगाभ्यां पूर्वब्रह्माण्डनाशब्रह्माण्डान्तरोत्पत्त्यादिसंभवादिति भावः। अप्रयोजकत्वदूषणमाह—**साधारणेति**।

ननूत्पन्नस्य विनाशित्वनियमात् ब्रह्माण्डस्य विनाशे प्रलयः सिद्ध इत्यत्राह—**यद्यपीति**। सत्यं तथापि सजातीयासमानकालीनविनाशो नास्तीति न सन्ततिविच्छेद इति भावः। प्रमा गुणजन्येतिवाक्यजन्यप्रमायां वक्तृवाक्यार्थयथार्थज्ञानस्य गुणत्वात् वेदशुकादिवाक्यजन्यप्रमायां वक्तृवाक्यार्थप्रमात्वेनेश्वरोया सिध्यतीतीश्वरसिद्धिः। किंच प्रलयानन्तरसर्गाद्यु पदेशेऽध्यापकपरंपराया विच्छिन्नत्वादुपदेशलिङ्गादीश्वरसिद्धिः। किंच कस्यचित् सर्वज्ञस्येश्वरस्याभावे सर्वेषां भ्रमादिसम्भवेनानाश्वाससम्भवाद्वेदवाक्यप्रमानुरोधेनेश्वरसिद्धिरितादमेवोपदेशलिङ्गकमनुमानमीश्वरसाधकमित्युदयनोक्तमनुवदति—**यत्तूक्तमिति**। विधातुरीश्वरस्यासंभवोऽसिद्धिरेवेत्यर्थः—**द्वितीयस्त्विति**। सर्गप्रलयसम्भव इत्येतदित्यर्थः। **तृतीयस्त्विति**। योगिषु विश्वासासम्भवाद्विश्वसनीयस्तदन्यः सिध्यतीत्यपि वक्तव्यं, तन्नापपद्यत इत्यर्थः। **विमतः**—असिद्धः। विमतिमेवोपपादयति—**संभवन्तीति**। तेष्वाश्वासाभावे बाधकमभिप्रेत्याह—**युष्माभिरपीति**। अन्यथेश्वरस्यासत्वमेव न सिध्येत्, तद्वचनानामप्रामाण्यशङ्काप्रसाद; तदुपदेशग्रहणे चाश्वासाभावादन्यथाऽपि ग्रहणशङ्का स्यात्। तदुपदिष्टं विस्मृत्य तत्प्रच्छादनाय तूपदिष्टादन्यदुपदिशतीति च शङ्का स्यादिति भावः। आदिशब्देन ग्रहणधारणादिसंभवेऽपि विप्रलिप्सयाऽन्यदेवोपदिशतीति शङ्कादि गृह्यते।

ननु यदि कश्चिदृषिराप्तो वेदमुपदिशेत्, स त्वादिकर्तेश्वर एव स्यादित्यत आह—**ऋषित्वमपीति**। पूर्वजन्मन्यधीतिसापेक्षतया परतन्त्रत्वान्नेश्वरत्वं तस्येति भावः। तत्र प्रमाणमाह—**अजानिति**। पूर्वजन्मतपस्सिद्धान् पृश्नीन् पृश्निनाम्नः स्वयंभु नित्यं ब्रह्म वेदः अभ्यानर्षत् अभ्यागच्छत्, प्रत्यक्षो अभवदिति यावत्। ननु ऋषीणामुपदेष्टृत्वेनाभ्युपगमे प्रतिकल्पं भेदेनाभ्युपगमात् गौरवं स्यादित्यत आह—**एतेनेत्यादिना**। जीवात्मनामेव क्लृप्तानामृषित्वात् न क्लृप्तिरिति भाव। **एकस्मिन्निति**। आश्वासकल्पकस्य तुल्यत्वादिति भावः। द्वितीयं दूषयति—**आगमादिति**। **सर्वकर्तारमिति**। 'यतो वा इमानि भूतानि जायन्ते' 'एतस्माज्जायते प्राणस्तस्मिन्नेव प्रलीयते' इति तत्पुरस्कारादिति भावः। **विमतं प्रतीति**। व्याप्त्यादिकमस्त्येव, तथाऽपि नाभिमतसाधकमिति भावः। **विरोध इति**। अनीश्वरात् सर्गादिकथन इत्यर्थः। आद्यद्वितीये दूषयति—**अनुमानान्तरैरिति**।। अनुष्ठानप्रदर्शनलिङ्गैरित्यर्थः। **तत इति**। उभयविधोपदेशस्याप्यन्यथासिद्धेरित्यर्थः ॥ १९ ॥

---

अक्ष०—अथ शास्त्रेणैवेश्वरसिद्धिरित्युक्तं स्थापयितुं तार्किकोक्तामानुमानिकसिद्धिं दूषयितुमारभते। तत्र प्रथमत उपेशलिङ्गं दूषयति **सर्गादीनामिति**। सृष्ट्यारम्भाणामित्यर्थः। सर्गप्रलयसंभवात् प्रलये प्रमातॄणामुपाध्यायादीनां प्रमाणानां वेदादीनां च विनाशात् पुनस्सर्गादावुत्पन्नानामनभिज्ञानां धर्माद्यनुष्ठानार्थमुपदेशस्यावश्यकत्वात् उपदेशस्य ज्ञानपूर्वकत्वात् तथाविधज्ञानाश्रयतया ईश्वरसिद्धिरिति ते वदन्ति। तत्र प्रत्याह—**असिद्धाविति** सर्गारम्भे प्रत्यक्षाभावादिति भावः। सर्गाद्यभावे इदानीमिव पित्राचार्यादिमुखेन सर्वदा वेदाद्युपदेशसंभवात् न कदाऽपि वेदसंप्रदायभङ्ग प्रसङ्गस्स्यादित्याह—**नहीति** विश्वसन्ततिः कदाचिदुच्छिद्यते सन्ततित्वात् दीपसन्ततिवदित्यनुमानात् प्रलयसिद्धौ सर्गादिसिद्धिरित्यत्राह—**तत्सिद्धाविति** सर्वमुक्त्यनन्तरमेव प्रलयोपगमेनाप्युक्तानुमानोपपत्त्या तदनन्तरं सर्गाद्यसिद्धेः, उक्तानुमानं न तत्साधकमिति भावः। किं चेदमप्रयोजकमित्याह—**यदिदमिति** यतो विपक्षे बाधशून्यं तस्मान्न साधकमित्यर्थः। न हि विश्वसन्तत्यनुच्छेदे किं चिद्बाधकमस्तीति भावः। आगमात् तत्सिद्धिरित्याह—**शास्त्रेभ्य** इति शास्त्रेषु सर्गारम्भेण सह स्रष्टुः 'स ऐक्षत लोकान्नु सृजा इत्यादिनेश्वरस्यापि पाठात् तत एव तत्सिद्धौ न पुनरुपदेशलिङ्गेन तत्साधनमावश्यकमिति भावः। अतो धर्मानुष्ठापनार्थं तदनुमितिरशक्येत्याह—**धर्मेति**। इदमुपलक्षणं 'तदन्यस्मिन्ननाश्वासादित्युक्तहेतोरसिद्धेरपि। सर्गादिकाल एव प्राचीनसुकृतवशेन प्रतिबुद्धवेदानामेव केषां चिद्देवानामृषीणां चेश्वरवत् विश्वसनीयानामुत्पत्तिसंभवादित्यवधेयम्। प्रमायाः परतन्त्रत्वादित्युक्तो हेतुः बुद्धिसरे दूषयिष्यते ॥ १५ ॥

**साध्यं यादृक् सपक्षे नियतमवगतं स्याद्धि पक्षेऽपि तादृक्**
**तस्मात्कर्मादियुक्तः प्रसजति विमते कार्यताद्यैस्तु कर्त्ता ।**
**एतत्तत्सिद्ध्यसिद्ध्योर्न घटत इति न क्ष्मादिपक्षे सपक्ष-**
**व्याप्ताकारप्रसङ्गात्तदनुपगमने न क्वचित्स्यात्प्रसङ्गः ॥१६॥**

**सर्वा०**—यानि च बहून्यनुमानानि संजगृहुः—

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ।
वाक्यात्संख्याविशेषाच्च साध्यो विश्व[सृड]विदव्ययः ॥

इति, तत्रान्वयिषु साधारण्यमाह—**साध्यमिति** ॥ यादृक् सपक्षे नियतमवगतम्—येनाकारेण व्याप्तं प्रमितमित्यर्थः । स्याद्धि पक्षेऽपि तादृक्—न हि पर्वते वह्निरनुमीयमानः उष्णत्वमपहाय सिध्येदिति भावः । व्यवहितेऽपि पश्चादुष्णत्वदर्शनात्तत्सिद्धिरिति चेन्न, प्रालेयमर्मरितैः पद्मपत्रादिभिः प्रालेयसन्निहितानुद्भूतरूपहुतवहानुमाने तदसिद्धेः । न च तत्रानुष्णो वह्निरनुमीयेत, मर्मरीभावस्यैवासिद्धिप्रसङ्गात् । यद्यनुष्णो वह्निः कश्चित्पचेत्, अन्वयव्यतिरेकवान्नीहार एव पाचकः किं न कल्प्येत ? एवं सामान्यतश्शिक्षितया व्याप्त्या प्रस्तुतेऽनिष्टप्रसङ्गमाह—**तस्मादिति** । कार्यत्वादिभिरुर्वीदूर्वादौ कर्ता यदि सिध्येत् कर्तृव्यापककायकरणकर्मादिमान् स्यात्; तथा च नाभ्युपगम्यत इत्यनिष्टता, विपर्यये विभ्रमश्च ।

नन्वनुमानवत्तर्कोऽपि धर्मिसिद्धिसापेक्षः, अन्यथा प्रसञ्जकं कुत्राहार्यम् ? अनिष्टं कुत्र वा प्रसञ्जानोयम् ? तदिहेश्वरसिद्धौ विदेहतयैव तत्सिद्धेः तद्विरुद्धप्रसङ्गानुत्थानम्, तदसिद्धौ निराश्रयस्तर्कः कुत्र किं प्रसञ्जयेदित्यभिप्रायेण चोदयति—**एतदिति** । परोक्तहेत्वाश्रय एव प्रतिकूलतर्काश्रय इत्यभिप्रायेण प्रतिवक्ति—**नेति** । विवृणोति—**क्ष्मादीति** । अयं भावः—यदि वयमीश्वरे धर्मिणि प्रसङ्गमवतारयामः, तदा सिद्ध्यसिद्धिविकल्पदौस्थ्यं स्तात्; यदि च पृथिव्यादावाश्रये कार्यत्वहेतुना कर्तारं देहादिमन्तमुपस्थापयेम, तदा दूर्वादौ व्यभिचारात् न प्रतिसाधनं न प्रतितर्कश्चेति स्यात्; किन्तु संप्रतिपन्ने पृथिव्यादौ धर्मिणि साध्यधर्मस्वभावात्तव्द्यापकप्रसक्तिं ब्रूमः; अतो न कश्चिद्विरोध इति । अथ साक्षात्परसाध्यमाश्रयीकृत्य प्रसङ्गः प्रयोक्तव्य इति मन्येत, तदा प्रसङ्गस्यैवोच्छेद इति प्रसञ्जयति—**तदनुपगमन इति** । परेष्टसाध्यविशेषस्य स्वीकारे बहिष्कारे च व्याघातस्य दुष्परिहरत्वादिति शेषः ॥ १६ ॥

---

**आनन्ददा०**—पूर्वसंगतिरेव संगतिरित्यभिप्रायेणाह—**यानि चेति** । **कार्येति** । अङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवत्, द्व्यणुकादिजनकपरमाण्वादिकं केनचित् प्रेर्यं कार्यजनकत्वात् वास्यादिवत्, पृथिव्यादिकं केनचिद्धृतं गुरुत्वे सति पतनरहितत्वात् वृक्षाग्रस्थफलवत्, क्षित्यादिकं कृतिजन्यं कार्यत्वाद्घटवत्, घटादिपदानि केनचित्संकेतितानि पदत्वात् डित्थादिपदवत्, वेदवाक्यजन्यप्रमा गुणजप्रमात्वात् वक्तृ-

प्रमाजन्या प्रमात्वात् गामानयेतिवाक्यजन्यप्रमावत्, वेदवाक्यं स्वार्थनित्यसर्वसाक्षात्कारवत्पुरुषजन्यं वेदत्वात् व्यतिरेकेण गगनवत्, वेदवाक्यानि केनचित्प्रणीतानि वाक्यत्वात् कालिदासवाक्यवत्, परमाणुगतद्वित्वं कस्यचिदपेक्षाबुद्धिजन्यं द्वित्वसंख्यात्वात् घटगतद्वित्ववदिति । अत्र सर्वत्रापि पक्षधर्मताबलादीश्वरसिद्धिरिति भावः ॥

ननु धूमव्यापकभूतो वह्निस्तृणजन्यत्वेनावगतः, तथाऽपि तृणजन्यत्वेन न वह्निसिद्धिरित्यत्राह—येनाकारेण व्याप्तमिति । एवं च व्यापकतया प्रतीतधर्मवत्त्वेन सिद्धिरित्यर्थः । नन्वनुमितौ व्यापकतावच्छेदकावच्छिन्नमात्रस्य सिद्धिरन्यथाऽतिप्रसङ्गादित्यत्राह—न हि पर्वत इति । नन्वनुमितौ नोष्णता विषया, अपि तु पश्चात्प्रत्यक्षेणावगम्यत—इत्याशङ्कते—व्यवहितेऽपीति । प्रालेयेति । तत्र पश्चात् प्रत्यक्षेणौष्ण्यग्रहणादिति भावः—मर्मरीभावस्येति । मर्मरीभावो दग्धता, तस्योष्णस्पर्शसाध्यत्वादित्यर्थः । ननु मर्मरीभावहेतुतयोष्णताऽप्यनुमीयतामिति चेत्तर्हि कर्तृतादेः शरीरवत्त्वादिव्याप्तया तदपि सिध्येदित्याह—कर्तृ व्यापकेति । यद्यपि—

व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ॥

इत्यत्र पक्षधर्मता नोक्तेत्याश्रयवत्त्वं स्वरूपसत्त्ववन्नाङ्गम्; तथाप्यनिष्टत्वं पराभिमते वस्तुनि तदनभिमतापादनेन; तच्च तद्वस्त्वभावे नोपपद्यत इत्यनिष्टत्वान्तर्गतमिति भावः । परोक्तेति । क्षित्यादिकर्तरि नापादनं; येन सिद्ध्यसिद्ध्यादिदोषः स्यात् । अपितु क्षित्यादावेव । यदि क्षित्यादिकं सकर्तृकं स्यात् शरीरिकर्तृकं स्यात् इत्याद्यापाद्यत इति न सिद्ध्यसिद्धिव्याघात इति भावः ।

ननु क्षित्यादिकं शरीरिकर्तृकं स्यात् कार्यत्वादिति यद्यापाद्यते तदाऽङ्कुरादौ व्यभिचार इति कथमापादनमिति चेत्—तत्राह—अयं भाव इति । यदि क्षित्यादौ कर्ता सिध्येत् स तु शरीर्यपि स्यात् । कर्तृतायाः शरीरादिव्याप्तेरिति भावः । ननु पक्षे पराभिमतसाध्यं निश्चित्यैव तर्कप्रवृत्तिः । न तु साध्यसामान्यव्याप्तया तत्प्रसञ्जनं; तथा च सिद्ध्यसिद्धिव्याघात इत्यत आह—अथ साक्षादिति । तर्हि क्वचिदपि प्रसङ्गो न स्यादित्याह—परेष्टेति । निश्चिते बाधेन तदापादनायोगात्, अनिश्चिते स्वाश्रयासिद्धिरिति भावः ॥ १६ ॥

---

अक्ष०—अथ कार्यायोजनधृत्यादेरिति कारिकोक्तमनुमानजातं दुदूषयिषुस्तत्रान्वयिषु सर्वेषु साधारणं दूषणमाह—साध्यमिति यादृक्—यादृशाकारविशिष्ट सपक्षे दृष्टान्ते नियतं व्यापकमवगतं तादृक्—तादृशाकारविशिष्टमेव पक्षेऽप्यवगतं स्यादित्यर्थः । महानसादिसिद्धोष्णत्वादिविशिष्ट एव हि वह्निः पर्वतेऽप्यनुमीयत इति भावः । ततः किमित्यत्राह—तस्मादिति सपक्षे व्यापकतया दृष्टस्य विशिष्टस्यैव

पक्षेऽप्युपगन्तव्यत्वात् घटादिसपक्षदृष्टकर्मतदधीनशरीरादिविशिष्ट एव कर्ता क्षित्यादिषु कार्यतादिलिङ्गैस्सिद्धयेत् नत्वशरीरेश्वर इत्यर्थः। क्षित्यादिकर्तुरीश्वरस्य घटादिकर्तुरिव सशरीरत्वप्रसङ्ग इति भावः। अत्र सिद्ध्यसिद्धिभ्यां व्याघातो न शङ्कनीय इत्याह—एतदिति। सशरीरत्वप्रसञ्जनमित्यर्थः। तदिति ईश्वरसिद्ध्यसिद्ध्योरित्यर्थः। न घटत इति ईश्वरसिद्धावशरीरतयैव सिद्धत्वात् तद्विरोधेन नायं प्रसङ्गस्स्यात्। तदसिद्धौ तु निराश्रयः प्रसङ्गो न स्यादित्यर्थः। इति नेति। ईश्वरे धर्मिणि नायं प्रसङ्गः क्रियते येनोक्तदोषः स्यादिति भावः। तर्हि प्रसङ्गोऽयं कस्मिन् धर्मिणि इत्यत्राह—क्ष्मादीति। यदि क्षित्यादि सकर्तृकं स्यात् तर्हि घटादिसपक्षवत् शरीरिकर्तृकं स्यादिति प्रसङ्गे विरोधाभावादिति भावः। पराभिमतसाध्यमाश्रयीकृत्यैव प्रसङ्गो वक्तव्य इत्युक्तौ प्रसङ्ग एव न स्यादित्याह तदनुपगमन इति पराभिमत साध्याभ्युपगमानभ्युपगमयोः व्याघातस्य दुष्परिहरत्वादिति भावः। तथा चेश्वरे सशरीरत्वस्येव क्षित्यादौ सशरीरकर्तृकत्वस्याप्यशरीर्यकर्तृकत्वपर्यवसितस्यानिष्टतया तत्प्रसङ्गस्य प्रतिकूलतर्करूपत्वात् कार्यत्वादिहेतुकान्यव्यनुमानानि प्रतिकूलतर्कपराहतानि न स्वाभीष्टसाधकानीत्युक्तं भवति ॥ १६ ॥

---

यत्कार्यस्योपयुक्तं तदिह भवतु नः किं परेणेति चेन्न
ज्ञानादेरुद्भवे तद्विषयनियमनेऽप्यर्थनादिन्द्रियादेः।
नित्यं ज्ञानं विभोस्तन्न नियतविषयं तेन नान्यार्थनं चे-
न्नानित्यस्यैव दृष्टेस्तव कथमजसंयोगभङ्गोऽन्यथा स्यात् ॥१७॥

**सर्वार्थ०**—ननु कार्योत्पत्तौ कर्तुर्ज्ञानचिकीर्षाप्रयत्नमात्रमुपयुज्यते, देहादेः कार्यव्यापकत्वादर्शनात् कार्यविशेषे तदुपयोगो दृष्ट इति चेत्, यत्र दृष्टस्तत्र तथाऽस्तु, न सर्वत्र; अतिप्रसङ्गादित्यभिप्रायेण शङ्कते—यदिति ॥ उपयुक्तं—ज्ञानचिकीर्षादिकम्। परेण—कार्योत्पत्त्यनुपयुक्तेनेत्यर्थः। अनुपयोगो दुर्वच इत्यभिप्रायेण—नेति। तत्साधयति—ज्ञानादेरिति। सपक्षव्याप्तप्रकारेण पक्षेऽपि कर्तुर्ज्ञानादिना कार्येण भवितव्यम्, ततस्तत्कारणतया कायकरणकर्मादियोगोऽपि दुस्त्यजः। प्रयत्नस्य विषयनियमश्चिकीर्षया; तस्याश्च प्रियाप्रियप्राप्तिपरिहारव्यापारकारणेन तावद्बुद्ध्या, सा च तत्तत्सामग्रीनियतविषयेति विषयनियमे स्थिते सामग्रीशून्यं ज्ञानं कथं सविषयम्? निर्विषये च तस्मिन् किं चिकीर्षेत अचिकीर्षुश्च कुतः प्रयतेत।

ननु कार्यस्यैव सामग्र्यपेक्षणम्, नित्यस्य तु स्वतस्सर्वविषयस्योत्पत्तिविषयनियत्योरभावात् किं सामग्र्येति शङ्कते—नित्यमिति। त्र्यन्तिनामिव नित्यज्ञानसिद्धावेतद्वक्तव्यं नान्यथेति स्थापयितुमाह— नेति। अहेतुकं ज्ञानं किं दृष्टमुत कल्पितम् नाद्यः, असिद्धेः, न द्वितीयः, दृष्टविजातीयक्लृप्त्ययोगादित्यभिप्रायेणाह—अनित्यस्येति। तादृश ज्ञानक्लृप्तौ परस्येष्टविरोधमाह—तवेति। मूर्तवद्द्रव्यत्वादिना विभूनां विभुना संयोगे

कल्प्यमाने संयोगकारणानामन्यतरकर्मोभयकर्मसंयोगानामसंभवात्तन्निषेधः कृतः, तथेहापि विज्ञानकारणानामिन्द्रियलिङ्गादीनामभावात्तदभावः स्यात्। नित्यत्वान्नैरपेक्ष्यमजसंयोगेऽपि सुवचम्। विभूनां मिथस्संयोगाभावे न किंचित्बाधकमिति चेन्नित्यज्ञानाभावेऽपि किम्? अस्मदाद्यशक्यकार्यानुत्पत्तिप्रसङ्ग इति चेत्; न, कारणान्तरैव तदुत्पत्त्युपपत्तेः। कर्तृनिरपेक्षैः कारणान्तरैः कार्योत्पत्तिर्न दृष्टेति चेत्, अन्यत्रादृष्टाऽप्यत्र तथा स्यात् प्रध्वंसस्येव निमित्तमात्रजन्यत्वम्। वरं हि कल्पितस्य ज्ञानादेः कारणनैरपेक्ष्यकल्पनात् सिद्धस्य हेतुवर्गस्य क्वचित् कर्तृनैरपेक्ष्याङ्गीकारः अजसंयोगस्वीकारो वेति; स्वीक्रियतां का हानिरिति चेत् सिद्धान्तहानिरिति ॥१७॥

---

**आनन्द०**—ननु शरीरादिमत्त्वं न कर्तृत्वव्यापकमप्रयोजकत्वादित्याक्षेपसंगतिरित्यभिप्रायेणाह—**नन्विति**। परशब्दोऽन्यार्थं इत्याह—**कार्योत्पत्तीति**। **तत्साधयतीति**। दुर्वचत्वमेवेत्यर्थः। **सपक्षव्याप्तप्रकारेणेति**। ज्ञानत्वावच्छेदेन कार्यत्वावधारणादित्यर्थः। **आदिशब्देन** यत्नादिग्रहः। **ततस्तत्कारणतयेति**। ज्ञानादिकारणतयेत्यर्थः। **आदिशब्देन** प्रवृत्त्यादिग्रहः। किं च ज्ञानं सविषयं निर्विषयं वेति विकल्पं मनसि कृत्वाऽऽद्य आह—**प्रयत्नस्येति**। प्रियाप्रियप्राप्तिपरिहारहेतुयत्नस्य चिकीर्षाद्वारा ज्ञानसाध्यत्वादिति भावः। **सा चेति**। नियतविषयज्ञानस्य कारणाधीनत्वात् तत्कारणतया शरीरादिकमावश्यकमिति भावः। द्वितीय आह—**निर्विषये चेति**। चिकीर्षाप्रयत्नयोः ज्ञानविषयविषयकत्वनियमात्, अन्यथाऽन्यज्ञानादन्यचिकीर्षाप्रसङ्गः। वस्तुतस्सर्वगोचरयोस्तयोः प्रसङ्ग इति भावः। **अप्यन्तिनामिवेति**। नित्यज्ञानसिद्धावेवं वक्तुं शक्यं, तत्सिद्धिश्च किं वेदान्तात्, उतानुमानात्, नाद्यःअनुमेयत्वाभावप्रसङ्गात्। न द्वितीयः—उक्तरीत्या जन्यस्येव सिद्धिप्रसङ्गादिति भाव;। **तादृशज्ञानक्लृप्ताविति**। कारणानपेक्षज्ञानक्लृप्तावित्यर्थः। ननु कारणाभावे हि कार्यं ज्ञानं निवर्तेत; न तु नित्यत्वमपीत्यत आह—**नित्यत्वादिति**। ननु नित्यसंयोगोऽङ्गीकर्तुं शक्यते, यदि प्रमाणमस्ति। न चासति तत्कल्पनमित्याह—**विभूनामिति**। तर्हि नित्यज्ञानेऽपि न प्रमाणं कल्पकमित्याह – **नित्यज्ञानाभावेऽपि किमिति**। अन्यत्र साहचर्यमात्रमप्रयोजकं कर्तृनिरपेक्षमेव कारकं जनकमस्त्विति नान्यथानुपपत्तिरित्याह—**अन्यत्रेति**। किं च कार्यान्यथानुपपत्तिपरिहाराय ज्ञानकल्पनेऽपि ज्ञाने कारणाभावादनुपपत्तिस्तदवस्था; तथेच्छादावपीति शान्तिकर्मणि वेतालोदयः स्यात्। यदि च ज्ञानादि कारणनिरपेक्षमिति कल्प्यते तदा कार्य एव कर्तृनिरपेक्षत्वं वक्तुमुचितं लाघवादित्याह— **वरं हीति**। **अजसंयोगस्वीकारो वेति** वाशब्दश्चार्थः ॥ १७ ॥

---

**अक्षरार्थ**—ननु कार्योत्पत्तौ कर्तुर्यावदुपयुज्यते तावतैव विशिष्टः कर्ता, कार्यत्वादिहेतुना पक्षेऽप्यवगम्येत, न ततः परेणापि सपक्षदृष्टेन विशिष्टः तावच्चेह ज्ञानचिकीर्षाप्रयत्नाद्येव, न तु शरीरादिकं कार्यसामान्याव्यापकत्वात् न हि योग्यमपि

शरीरं दृश्यते क्षित्यङ्कुरादि कार्यसामान्ये जायमाने। अतः क्षित्यादिकर्तरि शरीरित्वापादनमनुपपन्नमित्याशयेनाशङ्कते यत्कार्यस्योपयुक्तमिति परिहरति नेति ज्ञानादेरिति आदिना चिकीर्षायत्नादिपरिग्रहः। उद्भवे—उत्पत्तौ। सपक्षवत् पक्षेऽपि कर्तुः ज्ञानादिना जन्येनैव भवितव्यमिति तत्कारणतया शरीरेन्द्रियकर्मादियोगोऽपि दुस्त्यज इति भावः। तद्विषयेति-प्रयत्नस्य विषयनियमश्चिकीर्षया, तस्याश्च विषयनियमः प्रियाप्रियप्राप्तिपरिहारकारणेन ज्ञानेन, तस्य च शरीरेन्द्रियादिसामग्र्या विषयनियमो वक्तव्य इति शरीरेन्द्रियादिकमपि कार्यसामान्ये साक्षात् परम्परया वोपयुज्यत एवेति तदपेक्षणमावश्यकमेवेति भावः। अथेश्वरज्ञानस्य नित्यत्वात् सर्वविषयकत्वाच्च तस्योद्भवे विषयनियमे वा नान्यापेक्षेति शङ्कते नित्यमिति। विभोः—ईश्वरस्य। न नियतविषयमिति सर्वविषयकत्वादिति भावः। परिहरति नेति नित्यज्ञानस्य क्वचिदप्यदृष्टेः दृष्टविजातीयस्य कल्पनायोगाच्चेति भावः। अन्यथा तन्मते अनिष्टं प्रसञ्जयति तवेति त्वदुक्तः विभुद्वयनित्यसंयोगभङ्गो नोपपद्यतेत्यर्थः। लोकदृष्टानित्यसंयोगकारणान्यतरकर्माद्यसंभवाद्धि तन्निरासः क्रियते। नित्यत्वोपगमे कारणनिरपेक्षत्वात् कथं तन्निरासस्स्यादिति भावः ॥ १७ ॥

---

किं वा धीच्छे गृहीते विषयनियतये ते हि यत्नोऽत्र नेच्छे-
न्निर्हेतुस्तत्प्रमेष्टा भवतु विषयवानेष तद्वत्स्वतस्ते ।
प्रोक्ते यत्ने स्वभावाद्विषयवति सधीः स्यादितीयं क्व दृष्टं
यद्वा धीस्तं हि नित्यं न तु जनयति ते सा कथं तन्नियन्त्री ॥१८॥

**सर्वार्थ०**—नन्वहेतुसंयोगमिच्छद्भिरहेतुकज्ञानं न दूष्यम्, तद्दूषणे वा सिद्धान्तहानिः स्यादित्यत्राह—किं वेति॥ कर्तुरनुमानेऽपि प्रयत्नमात्राधारत्वमनुमीयताम्, प्रयत्नव्यापकतया ते अपि सिध्येतामिति चेन्न; जीवनपूर्वकप्रयत्नमन्विच्छतां तत्र व्याप्तिभङ्गात्। अतः प्रयत्नक्लृप्तावपि ज्ञानचिकीर्षानैरपेक्ष्यमाह—विषयेति। सर्वकार्यविषयस्य हि प्रयत्नस्य विषयनियमाभावादेव न तदर्थं चिकीर्षाद्यपेक्षा। उक्तमर्थं प्रतिबन्दिगतं विवृणोति—निर्हेतुरिति। अयं भावः—अन्यत्र ज्ञानं सर्वं सकारणकं तत्प्रामाण्यं च कारणगुणाधीनमिति स्थापयद्भिरीश्वरज्ञानं तत्प्रामाण्यं च निष्कारणकमिति दृष्टविपरीतं कल्प्यते। अत्र ज्ञानचिकीर्षाख्यधर्म्यन्तरक्लृप्तिमपहाय प्रयत्नमात्रेऽन्यनिरपेक्षं विषयित्वमङ्गीकर्तुं युक्तम्।

नित्या चेश्वरबुद्धिस्ते नानुभूतिर्न च स्मृतिः।
न प्रभा न भ्रमश्च स्यात्तत्तत्कारणवर्जनात् ॥
अनुभूत्यादिहेतूनामभावेऽपि तथा यदि।
स्मृतिहेतोरभावेऽपि स्मृतिरेषा न किं भवेत् ॥

कुतश्चित् प्रमात्वादिकल्पनेऽपि तद्वदेव यत्नस्य विषयित्वेऽन्यनैरपेक्ष्यमपरिहार्य-

मिति। अत्र परोक्तं प्रसङ्गमनूद्य प्रतिषेधति—प्रोक्त इति। ज्ञानस्य स्वत एव सविषयित्वमित्येतदेव क्व दृष्टम्? सर्वत्र ज्ञाने सामग्रीनियतविषयत्वदर्शनात्। नित्यस्य चेश्वरयत्नस्य कार्यविशेषानुगुणसहकारिलाभमन्तरेण कार्यविषयत्वं नाम न किञ्चित् संभवति। न च विषयित्वमेव ज्ञानलक्षणम्, शक्त्यादीनापि विषयधर्माणां धीत्वप्रसङ्गात्। यस्त्विच्छामनङ्गीकृत्य बुद्धियत्नावीश्वरस्य ब्रूते, सोऽपि प्रत्युत्पन्नवादी; नित्ययत्नमात्रेणापि सर्वकार्यसिद्धेरुक्तत्वात्। अबुद्धिपूर्वंप्रवृत्तस्य कथं स्वतन्त्रः कर्तेति लक्षणयोगः, कथंतरामीश्वरत्वयोग इति चेत्, अनिच्छापूर्वप्रवृत्तस्यापि सममेतत्। अत एव कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वरूपं कर्तृत्वं कथमचेतनस्येत्यपि प्रत्युक्तम्, प्रयत्नवत एव प्रयोक्तृत्वसंभवात् तन्नित्यतया प्रयोज्यत्वाभावाच्च।

ननु चेतनत्वमात्मलक्षणम्, तदभावे तत्त्वं न स्यादिति चेत्, मैवम्; यत्नवत्त्वेन तल्लक्षणसिद्धेः; अन्यथेच्छाविरहेऽपि तदसिद्धिप्रसङ्गः। इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मलिङ्गमित्याक्षपादी सहपठितिः, क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणमिति काणभक्षीव कथंचिन्नेया। ज्ञानाद्यत्यन्तायोगव्यच्छेदवन्निष्ठद्रव्यत्वावान्तरजात्याधार आत्मेति। अस्तु तर्हि यत्नमात्रवानीश्वरः, तथाऽप्यनुमानं न प्रतिक्षिप्तमिति चेन्न यस्सर्वज्ञस्सर्ववित् तदैक्षत बहु स्यां प्रजायेय, सोऽकामयत बहु स्यां प्रजायेयेत्यादिश्रुतिशतविरोधादिति। दूषणान्तरमाह - यद्वेति। धीर्हि जनयित्री चिकीर्षया विषयं नियच्छेत्; साऽपि तादृशो यत्नस्य। इह तु जनकत्वाभावान्न ततस्तद्विषयनियमः, सामानाधिकरण्यमात्रात्तन्नियमे जीवेश्वरगुणान्तराणामपि सविषयत्वप्रसङ्ग इति भावः ॥१८॥

---

आनन्द०—आक्षेपिकी सङ्गतिरित्याह—नन्विति।

नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम।

'सर्वव्यापी सर्वभूतान्तरात्मा' 'व्याप्य नारायणः स्थितः' इत्यादिप्रमाणबलादजसंयोगोऽस्तु। न च नित्यज्ञानेच्छयोः प्रमाणमस्ति। न च कार्यत्वानुमानं प्रमाणं, प्रयत्नमात्रेण चरितार्थत्वादित्याह—कर्तुरनुमानेऽपीति। ननु कार्यत्वहेतुना यथा प्रयत्नसिद्धिः तथा प्रयत्नवत्त्वहेतुना ज्ञानादिसिद्धि शङ्कते—प्रयत्नेति। ते—ज्ञानचिकीर्षे। जीवनेति। सुषुप्तावपि प्रयत्नाङ्गीकारादिति भावः। सर्वकार्येति। जीवनयोनिप्रयत्ननियमेऽपि न तदपेक्षेति चिकीर्षायोनौ तदपेक्षेति वक्तव्यं; तथा च सर्वविषयकस्य नित्यत्वादेव न तदपेक्षेति भावः। ननु ज्ञानवदेव प्रयत्नस्यापि निर्हेतुकत्वाङ्गीकारात्तद्दृष्टान्तेन तदापादनमयुक्तमनिष्टत्वाभावादित्यत्राह—अयं भाव इति।

यद्यपि प्रयत्नो नित्य एव, तथाऽपि तद्धर्मो विषयित्वं ज्ञानाधीनमिति वदन्तं प्रति नित्यज्ञानप्रामाण्यमिव तदपि तन्निरपेक्षमस्त्विति न तर्काङ्गहानिरिति भावः। प्रत्युत बाधमप्याह—**नित्येत्यादिना**। यावद्विशेषबाधे सामान्यबाध इति भावः।

ज्ञानं द्विविधं स्मृत्यनुभवभेदात् प्रमाभ्रमभेदाच्च। एतेष्वन्तर्भावाभावे ज्ञानत्वमेव न स्यात्। न चात्रान्तर्भावः, तत्कारणाजन्यत्वादित्याह—**तत्तत्कारणेति**। अनुभूत्यादिकारणेत्यर्थः। माऽस्त्वनुभूत्यादिकारणमित्यत्राह—**अनुभूत्यादिहेतूनामिति**। **स्मृतिहेतोरिति**। तथा च विनिगमकाभावे विरोधात् ज्ञानमेव न स्यादिति भावः। किं च ज्ञानादिकं प्रमाणेन नित्यतया सिध्येत्; तर्हि तत एव सविषयकः प्रयत्नोऽपि सिध्येदिति किं ज्ञानेनेत्याह—**कुतश्चिदिति**। ननु ज्ञानं स्वतो विषयि, इच्छाकृत्योस्तदधीनं विषयित्वमिति तदभावे तयोस्तन्न स्यादिति परोक्तप्रसङ्गं परिहरति—**ज्ञानस्येति**। ज्ञानवदेव यत्नस्यापि स्वत एव विषयित्वं, यदि ज्ञानानुविधानदर्शनात् न तथा, तदा ज्ञानस्यापि सामग्र्यनुविधानदर्शनात्तन्न स्यादिति भावः। कि च ईश्वरयत्नस्य विषयित्वं हि तत्तत्कार्यसामग्र्यायत्तं, न तु ज्ञानाधीनमित्याह—**नित्यस्येति**। ननु विषयित्वं स्वभावतोऽन्यतो वाऽस्तु; ज्ञानस्यैव विषयित्वमसाधारणम्, तदन्येषां तदधीनं गौणमित्याशङ्क्य परिहरति—**न च विषयित्वमेवेति**। शक्त्यादीनामपि विषयित्वमस्त्येव, घटविषयशक्तिरिति व्यवहारादिति भावः। **विषयिधर्माणामिति**। विषयिणो ज्ञानस्य धर्म इव धर्मो यस्य विषयित्वधर्माणामित्यर्थः।

**यस्त्विति**। विषयिनियमार्थं हि ज्ञानाद्यङ्गीकारः। तत्र स्वतो विषयिणो ज्ञानस्य यत्नविषयनियमार्थमङ्गीकारोऽस्तु, किमिच्छया स्वतो विषयित्वरहितयेति भावः। **प्रत्युत्पन्नवादी**—पूर्ववृत्तानभिज्ञ इत्यर्थः। तत्र हेतुमाह—**नित्ययत्नमात्रेणेति**। ननु यत्नस्य विषयितासिद्धयर्थं न ज्ञानं, अपि तु कर्तृतासिद्धयर्थमिति शङ्कते—**अबुद्धीति**। स्वातन्त्र्यं हि प्रेरणहेतुज्ञानवत्त्वं दण्डादिव्यावृत्तं वक्तव्यमिति भावः। **अनिच्छापूर्वेति**। इच्छापरित्यागस्तर्हि न स्यादिति भावः। **अत एवेति**। यतोऽन्यप्रयोक्तृबुद्धयपेक्षाऽत इत्यर्थः। अन्यथासिद्धत्वान्नेदं युक्तमित्याह—**प्रयत्नवत एवेति**। एतेन कर्तृत्वचेतनत्वाद्यर्थत्रितयं भवत्वितीष्टापत्तिरपि परास्ता, यत्नमात्रादेवोपपत्तेरिति द्रष्टव्यम्। **क्रियावद्गुणवदिति**। यथा सर्वद्रव्याणां क्रियावत्त्वाभावेऽपि सहपाठस्तथा सर्वात्मनां ज्ञानाभावेऽपि सहपाठः स्यात्। अन्यथा ज्ञानेच्छादिवद्द्वेषसुखदुःखादिप्रसङ्ग इति भावः।

ननु लिङ्गं ह्यसाधारणो धर्मः, स च लक्षणमेवेति यदि निर्बन्धः, तत्राह—**ज्ञानेति**। ज्ञानसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं तदर्थ इत्यर्थः। द्रव्यत्वव्याप्यत्वं ज्ञानसमानाधिकरणत्वं च घटत्वसत्तादिकमादाय घटगुणादौ चातिव्याप्तिवारकम्। तादृशोपाधिमादाय घटादावेव तद्वारकं जातिपदमिति बोध्यम्। यद्यपि कारणनिरपेक्षत्वं यत्नस्य चेदङ्गीक्रियते तर्हि कस्यचित् कार्यस्य कर्तृनिरपेक्षत्वं वक्तुं शक्यं लाघवादित्युक्तमेव, तथाऽपि दूषणान्तरमप्यस्तीत्यभिप्रायेणाह—**यस्सर्वज्ञ इति**। किं

च ज्ञानस्य स्वतो विषयिता; तदधीना चिकर्षायत्नयोरिति तदङ्गीकारस्तथाऽपि प्रकृते न तदधीनविषयिता वक्तुं शक्येति तदङ्गीकारो व्यर्थ इत्याह—धीर्हीति । तदधीनविषयितायां तज्जन्यताया एव नियामकत्वादिति भावः । जीवेश्वरेति । क्रियागुणादीनामपि तत्सामानाधिकरण्याविशेषादिति भावः ।। १८ ।।

---

अक्षरार्थ—पूर्वमनुमानादीश्वरस्य कर्तृतया साधने तज्ज्ञानस्य नित्यत्वासिद्धया तत्सामग्र्या तत्र शरीरादिना भवितव्यमित्युक्तम् । इदानीं यत्नोपगमेनैव कर्तृत्वोपपत्त्या तस्य ज्ञानाद्येव न सिद्ध्यतीत्याह—किं वेति भगवतः ज्ञानेच्छे किमर्थमङ्गीकृते यत्नाङ्गीकारेणैव कर्तृत्वोपपत्तेरिति भावः । यत्नस्य विषयनियमाय तदङ्गीकार इत्यत्राह—विषयेति यतो भगवति प्रयत्ना विषयनियतये धीच्छे नेच्छेत्—नापेक्षेतेत्यर्थः । तस्य सर्वविषयकत्वेन विषयनियमस्यैवाभावादिति भावः । ज्ञानादिकं विना यत्नस्य कथं विषयलाभ इत्यत्र प्रतिबन्दीगर्भमुत्तरमाह निर्हेतुरिति । भगवतो ज्ञानं नित्यमिति भवतेष्यते, अतस्सामग्र्यभावात् कथं तस्य विषयलाभः ? स्वत एवेति चेत् तद्वत् प्रयत्नोऽपि ते मते ,लब्धविषयो भवत्वित्यर्थः । यत्र स्वतो विषयवत्वं तत्र धीत्वमिति व्याप्त्या यत्न इत्युक्तोऽयं धीरेव स्यादित्यत्राह-इदं क्व दृष्टमिति स्वतो विषयवत्वस्य धीत्वव्याप्यत्वं न दृष्टमित्यर्थः । त्वदिष्टजीवनयोनियत्ने उक्तव्याप्तिभङ्गादिति भावः । यद्वा सर्वत्र ज्ञाने सामग्रीनियतविषयवत्वस्यैव दर्शनात् स्वतो विषयवत्वं कुत्रापि ज्ञाने न दृष्टमित्यर्थः । अतो धीत्व सामानाधिकरण्यस्यैवाभावात् कथं तदापादकत्वमिति भावः । दूषणान्तरमाह—यद्वेति धीर्हि नित्यं भगवतः प्रयत्नं नैव जनयति कथं सा नित्ये यत्ने विषयनियामिका स्यादित्यर्थः । जन्यजनकभावाभावेऽपि सामानाधिकरण्यमात्रेण विषयनियामकत्वोपगमे समानाधिकरण सङ्ख्यादिगुणान्तराणामपि विषयनियमापादकत्वापत्तिरिति भावः ॥ १८ ॥

---

निश्वासादिप्रयत्नक्रम इह भवतां जीव एवास्त्वदृष्टै-
र्यद्वा तैरेव सर्वं घटत इति भवेत्तत्कृता सिद्धसाध्यम् ।
क्लृप्तावन्यस्य कर्तृद्वयमुपनमति त्वत्सपक्षे तथा स्यात्
पक्षेऽपीत्यव्यवस्था यदि विफलतया त्यक्तिराद्येऽपि सा स्यात् ॥१९॥

सर्वा०—अस्तु नित्ययत्नवानीश्वरोऽनुमेयः संप्लवाभ्युपगमादवशिष्टमागमिकं स्यादित्यत्राह—निश्वासेति ॥ जीवनपूर्वकप्रयत्नन्यायाददृष्टविशेषजनितयन्नवद्भिर्जीवैः क्षित्यादेः सकर्तृकत्वसंभवे किं नित्ययत्नतदाधारकल्पनागौरवेण ? यादृशैरेवादृष्टैः शरीरादिनिरपेक्षैस्सहकृत ईश्वरस्स्रष्टेति मन्यसे, तादृशैरेव तत्फलभोक्तृष्वेव यत्नक्लृप्तेर्लघुत्वात् । एतेन मनःकरणकागन्तुकज्ञानादिमानीश्वर इति मतान्तरमपि निरस्तम्, तत्रापि देहादिनिरपेक्षमनःप्रवृत्तिक्लृप्तेर्गुरुत्वात् । अथवा कल्पनीये हि यत्ने सर्वमिदं चिन्त्यं, तत्कल्पनैव न युक्तेत्याह—यद्वेति । व्यवस्थापकैरदृष्टैरेव यत्नादिनिरपेक्षै-

रित्यर्थः। सर्वं द्व्यणुकादि पर्वतादि च। उत्पत्तुमर्हति; एतेनानुमानस्य किमायातमित्यत्राह—भवेदिति। तत्कृता—चोदितमनुतिष्ठता। तत एव फलद्वारभूतादृष्टकर्त्रा जीवेनेत्यर्थः।

न च क्रियाहेतुगुणेष्वन्यतमेन कार्यसंभवे तत्र गुणान्तरमपि हेतुतया कल्प्यम्; अदृष्टस्य च सर्वकार्यनिमित्तत्वेऽपि विशेषतः क्वचित् क्रियाहेतुगुणत्वं ब्रूथ। अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्यक्पवनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानीति, तत्कस्य हेतोः? नूनं क्रियाहेतुगुणान्तरनिवृत्त्यै स्यात्। एवं सति यत्रादृष्टप्रागल्भ्यम्, तत्र मुधा तत्पूर्वक्षणवर्तिज्ञानचिकीर्षाप्रयत्नक्लृप्तिः, प्राचीनैरेव तैर्जीवस्य तत्कर्तृत्वोपपत्तेः। अन्यथा शराभिचारकृष्यादिप्रयोगे वेधपीडादिकर्तृत्वं प्रयोक्तुर्न स्यात्। मा भूदिति चेन्न, लौकिकवैदिकचित्तविसंवादात्। नन्वदृष्टमचेतनं चेतनानधिष्ठितं कथं प्रवर्तेत इत्थम्—स्वकारणोपनीतसहकारिसंपन्नतातिरिक्ततत्प्रवृत्त्यभावात्कारणानामपि तत्तत्कारणोपनेयत्वात्। तान्यप्यचेतनानि चेतनाधिष्ठेयानीति चेन्न, ईश्वरप्रयत्ने तदभावात्। चैतन्यायोगव्यवच्छेदवन्निष्ठतामात्रेण तस्यापि तदधिष्ठितत्वमिति चेन्न, तावतोऽधिष्ठानशब्दार्थतया कैश्चिदप्यनङ्गीकारात्। मयैवमङ्गीकृतमिति चेत्, अन्यैरपि तर्हि चैतन्यात्यन्तायोगव्यवच्छेदवन्निष्ठत्वमेव चेतनाधिष्ठितत्वमदृष्टानामित्यङ्गीक्रियेत। ईश्वरधीविशेषमदृष्टमिच्छता त्वया नैवमङ्गीकार्यमिति चेन्न, तथाविधादृष्टे त्वयाऽपि कारणवर्गानुप्रवेशिनो नित्यस्येश्वरज्ञानस्याचेतनस्य चेतनाधिगतत्वकल्पने तादृशचेतनान्तरक्लृप्तिप्रसङ्गः।

ईश्वराकूतभेदं च श्रौतादृष्टं यदीच्छसि।
नृगुणापूर्वक्लृप्तिस्ते निष्फलैव तदा भवेत्॥

नन्वीश्वरप्रयत्नादेरसिद्धौ न त्वयाऽत्र व्यभिचार उदाहार्यः। तत्सिद्धौ तद्व्यतिरिक्ताचेतनेषु चेतनाधिष्ठाननियमसिद्धिरिति चेदन्येषामपि तद्वदृष्टादिव्यतिरिक्तविषये तन्नियमः स्यात्। अतोऽदृष्टवद्भिर्जीवैरेव जगदुत्पत्तिसिद्धिरिति सिद्धसाधनता दुर्वारा। जीवातिरिक्तकर्तृकल्पनेऽनिष्टं प्रसञ्जयति—कल्प्ताविति। एककर्तृकतया प्रसिद्धे सपक्षे कर्तृद्वयं स्यात्, अनेककर्तृकेऽपि संप्रतिपन्नातिरिक्तकर्तृकत्वम्। कल्प्यमानो हि न केवलं क्षित्यादिमात्रकर्तृत्वेन कल्प्यते, तत्प्रयत्नस्य परिच्छेदकाभावेन सर्वविषयत्वात्, ततः किमित्यत्राह—तथेति। अयं भावः—क्षित्यादिकर्तरि साध्यमाने विश्वकर्त्रा तेन घटादेर्द्विकर्तृकत्वमायातम्, ततस्तद्दृष्टान्तेन पक्षस्य द्विकर्तृकत्वमापतेत्; ततस्सपक्षस्य त्रिकर्तृकत्वं स्यात्; एवं क्रमेणोपर्युपरि क्लृप्तावनन्तेश्वरापत्त्या द्यावापृथिवी जनयन् देव एकः, एकश्शास्ता न द्वितोय इति व्यवस्था भज्येतेति। अत्र परोक्तं कल्पनागौरवं शङ्कते—यदीति। एकेनेश्वरेण विश्वकार्यसिद्धौ द्वितीयक्लृप्तेर्निष्फलत्वात् तत्परित्याग इति। तत्र गौरवभिया त्याग एकस्मिन्नपि स्यादित्याह—आद्येऽपीति। उक्तं हि जीवैरेव कर्तृभिरदृष्टद्वारा सर्वकार्यं सिध्येदिति॥१९॥

आनन्द०—ननु श्रुतिविरोधो नास्त्येवेत्याक्षेपिकी सङ्गतिरित्यभिप्रायेणाह—**अस्त्विति**। **संप्लवः**—प्रमाणसंवादः। ननु श्रुतेरनुवादकता स्यादित्यत्राह—**अवशिष्टेति**। ज्ञानानन्दादिगुणविषयतया प्रमाणं स्यादिति भावः। अनुमानेनेश्वरसिद्धौ हि प्रमाणसंप्लवः स्यात्, तत्सिद्धिरेव नास्तीत्याह—**जीवनपूर्वकप्रयत्नन्यायादिति**। यादृशैरेवेति यद्यपि नित्ययत्नस्योत्पत्तौ नादृष्टापेक्षा, तथापि कार्यजनने तदपेक्षाऽस्तीति भावः। ईश्वरस्य ज्ञानं जन्यमेव, अशरीरस्यापि मनस्सहकारिवशादुत्पद्यते, मनश्चास्मदादिसम्बन्ध्येव मनोन्तरं वेति सर्वदा ज्ञानचिकीर्षाकृतिमत्त्वान्न सर्वदा सृष्ट्यादिप्रसङ्ग इति **वार्तिकटीकोक्तपक्षान्तरमपि** निरस्तमित्याह—**एतेनेति**। एतच्छब्दार्थमाह—**तत्रापीति**। **देहादीति**। लाघवात् कार्यविशेषस्यैव कर्तृनैरपेक्ष्यं कल्प्यतामिति भावः।

ननु क्रियाहेतुगुणानामन्यतमेनैव कार्यसम्भव इति सत्यं, तथाऽपि स गुणः साक्षात् क्रियाजनको विवक्षित इत्यत्राह—**अदृष्टस्य चेति**। निमित्तत्वं दृष्टद्वारा क्रियाजनकत्वं, क्वचित्क्रियाहेतुगुणत्वमद्वारकं क्रियाहेतुत्वम्। **तत् कस्य हेतोरिति**। एतान्यदृष्टकारितानीति कल्पनं कस्मै प्रयोजनायेत्यर्थः। **नूनमिति**। अन्यथा विशेषोक्तेः प्रयोजनाभावाद्यत्नमन्तरेण क्रियाजनकमिति तत एव द्व्यणुकादिप्रक्रमेण जगत्सृष्टिरस्त्वित्यर्थः। ननु क्रियासिद्धये न यत्नादिक्लृप्तिः। किं तु सकर्तृकत्वव्याप्तया कर्तृसिद्धौ ज्ञानादिमतः कर्तृत्वात्तत्सिद्धिरित्यत आह—**प्राचीनैरेवेति**। अदृष्टजनकैः ज्ञानचिकीर्षादिभिरेवेत्यर्थः। **तत्कृत्त्वोपपत्तेरिति** क्वचित्पाठः। तदा तत् जगत् करोतीति तत्कृत् तस्य भावः, जगत्कर्तृत्वमिति यावत्। नन्वद्वारकक्रियाजनकत्वे कर्तृत्वमन्यथा कुलाल इव तद्भोक्तुरपि कर्तृत्वं स्यादित्यत्राह—**अन्यथेति**। **लौकिकेत्यादि**। कृष्यादौ लौकिकैः कर्तृताव्यवहारात् अभिचरतो हिंसाकर्तृत्वस्य वैदिकैर्व्यवहारादित्यर्थः। अन्यथा हिंसकप्रायश्चित्तोपदेशस्तस्य न स्यादिति भावः। नन्वदृष्टद्वाराऽपि कर्तृत्वेऽतिप्रसङ्ग इति चेत्तर्हि सद्वारककर्तृत्वेऽप्यतिप्रसङ्गः स्यात्। ननु यत्र कर्तृताग्राहकमस्ति तत्र हि मध्यवर्तिनां द्वारत्वं, यत्र तु तन्नास्ति तत्र न सद्वारकमपि कर्तृत्वं, यथा कुलालपितुरिति चेत्तर्ह्यत्रापि समानम्। कृष्यादावभिचारे च तत्सत्त्वाददृष्टद्वाराऽपि कर्तृत्वं, यत्र तन्नास्ति तत्र न तद्द्वारा कर्तृत्वं, यथा भोक्तृघटादाविति ध्येयम्।

**नन्विति**। तदानीं तदर्थं तज्ज्ञानादिमता भवितव्यमिति भावः। **स्वकारणेति**। अन्यथासिद्धत्वान्न ज्ञानादिकल्पनमिति भावः। ननु प्रवृत्त्यन्यथाऽनुपपत्त्या न कल्पनम्, अपि तु व्याप्त्येत्याह—**तान्यपीति**। व्याप्तिर्नेति प्रतिवक्ति—**ईश्वरेति**। नन्वीश्वरश्चेतनः प्रयत्नमप्यधितिष्ठतु, सर्वविषयकत्वेन ज्ञानस्य प्रयत्नविषयत्वस्यापि संभवादिति चेत्, न, तदधिष्ठानं हि न तद्गोचरज्ञानमात्रेण, तथा सति पर्वताधिष्ठानस्यापि दर्शनमात्रेण प्रसङ्गात्, अपि तु तद्व्यापारहेतुयत्नजनकत्वेन। न चात्र तद्गोचर-

व्यापारजनकयत्नजनकत्वं, यत्नस्य नित्यत्वात् । ननु तद्गोचरयत्नवत्त्वमेव तत्त्वमस्तु, तच्च तत्राप्यस्त्येव, तद्यत्नस्य सर्वविषयकत्वादिति चेत्तर्हि स्वस्य स्वप्रेर्यत्वप्रसङ्गेनात्माश्रयात् सर्वदा प्रेरणप्रसङ्गाच्च । किं च ज्ञानस्य तदधिष्ठाने किमायातं यत्नमात्रेण चरितार्थत्वादिति भावः । **चैतन्यायोगेति** । तथा च न व्यभिचार इति भावः । **अन्यैरपीति** । तथा च परार्थज्ञानादिमद्भिश्चेतनैरर्थान्तरमिति भावः । **ईश्वरेति** । तथा च ज्ञानादिमत ईश्वरस्य सिद्धिरिति भावः । **तथाविधेति** ।

यद्यपीश्वरस्सिद्धः, तथाऽपि व्याप्तेरभावात् परेक्तिर्भग्ना । वस्तुतस्तादृशो वेदान्तादेवास्माभिः सिद्ध इति नानुमानप्रवृत्तिरिति ध्येयम् । त्वया व्याप्तिर्वक्तुं न शक्येत्याह—**त्वन्मतेऽपीति** । चेतनाधिष्ठितत्वं विना प्रवृत्तिर्न स्यादित्यनुपपत्तिपरिहारार्थं कल्प्यते, तत्कल्पनेऽपि तादवस्थ्ये किं तत्कल्पनयेति भावः । किं च मदभिमतादृष्टमादाय चेत् ज्ञानादिमानीश्वरोऽस्तीत्युच्यते, तददृष्टस्य चेतनगुणत्वं त्वदभिमतं भज्येतेत्याह—**ईश्वरेति** । **आकूतं**अभिप्रायं । **श्रौतं**— श्रुतिसिद्धम् । स एनं पिप्रीषति इति श्रुतिः । **नृगुणः**—आत्मगुणः । **अपूर्वं**—अदृष्टम् । सिद्ध्यसिद्धिव्याघातं शङ्कते—**नन्विति** । **अन्येषामपीति** । क्वचिच्चेतनानधिष्ठितत्वस्यावश्यकत्वे लाघवाददृष्ट एव तथाऽस्त्विति भावः । यदि विपक्षे बाधकाभावेऽपि साहचर्यदर्शनमात्रात्कर्तृसाधनं तदाऽतिप्रसङ्गमाह—**जीवातिरिक्तेति** । **अनेककर्तृकेऽपीति** । गोपुरादावित्यर्थः । ननु क्षित्यादिमात्रं प्रतिकर्तृत्वात् घटादौ द्विकर्तृत्वाभावेन व्याप्त्यभावात् कथं घटादिदृष्टान्तेन द्विकर्तृकत्वसिद्धिः, कथं वाऽनवस्थेत्यत्राह—**तत्प्रयत्नस्येति** । परिच्छेदकस्य कारणविशेषस्याभावादित्यर्थः । ननु सकर्तृकत्वसिद्धिमात्रेण कथमनवस्था स्यात्, तथात्वे वा वह्न्याद्यनुमानेऽपि प्रसङ्गादित्यत्राह—**अयं भाव इति** । नन्वस्तूत्पत्तिज्ञप्त्योरविरोधित्वादित्यत आह—**द्यावापृथिवीति** । ननु प्रतिकूलतर्कपराहतत्वात् न द्वितीयादिसिद्धिरिति चेत्, तस्मादेव क्षित्यादौ कर्तृसिद्धिरपि न स्यादित्याह—**एकेनेत्यादिना** ॥ १९ ॥

---

**अक्षरार्थ**—अथानुमानादीश्वरस्य क्षित्यादिकार्यकर्तृत्वौपयिकप्रयत्नमात्रसिद्धावप्यागमाच्छेषसिद्धिस्स्यादित्यत्राह—**निश्वासादीति** उच्छ्वासनिश्वासहेतुरबुद्धिपूर्वकः अदृष्टाधीनः प्रयत्नो जीवनयोनिरिति तार्किकैर्व्यपदिश्यते । **तत्क्रमः** – तत्सदृशः **इह**—क्षित्यादिकार्ये भवतां तार्किकाणामानुमानिकेश्वरवादिनां जीव एवादृष्टैः तत्कृतकर्मजन्यैः प्रयत्नो भवत्वित्यर्थः ।

यदि बुद्धिपूर्वकप्रयत्नः क्षित्यादिकार्यानुकूल इष्येत तदा जीवस्य सर्वकार्यबुद्ध्यसंभवात् सकर्तृकत्वानुमानेन तदतिरिक्तस्सिद्ध्येत् अदृष्टैकहेतुकयत्नस्य कार्यहेतुत्वे तस्य बुद्धिं विनाऽपि संभवेन तदाश्रयताया जीवेऽपि संभवात् तमादायार्थान्तरप्रसङ्गो दुर्वार इति भावः । **साक्षात्**—जीवयत्नमप्यद्वारीकृत्य अदृष्टैरेव साक्षात् सर्वं संपत्स्यत इत्याह **यद्वेति** । ततः सकर्तृकत्वानुमाने अदृष्टहेतुकर्मकर्तृजीवमादाय सिद्धसाधन-

मित्याह तत्कृतेति कर्त्रन्तरस्य साधनेऽनवस्थामाह—क्लृप्ताविति कथमित्यत्राह—कर्तृद्वयमिति कार्यत्वहेतुना सर्वकार्यसाधारणस्य लाघवादेकस्य कर्तुस्साधने तस्य घटादौ तदभिमतसपक्षेऽपि प्राप्त्या तत्तदसाधारणकुलालादिना कर्तृद्वयं प्राप्नोति। अथ तद्दृष्टान्तेन क्षित्यादिकेऽपि सर्वसाधारण्येन कर्तृद्वयसाधने घटादिसपक्षे कर्तृत्रयमिति रीत्याऽनवस्थेत्यर्थः। अनेककर्त्रभ्युपगमे प्रयोजनाभावात् द्वितीयादि-कर्तृत्याग इति चेत् तत्प्रथमस्यापि तुल्यमिति तत्त्याग एवोचितस्स्यादित्याह—यदीति त्यक्तिः—त्यागः। आद्ये–प्राथमिके। कर्तरि-सा-त्यक्तिरित्यर्थः। अदृष्टैरेव सर्व-संभवस्योक्तत्वादिति भावः॥ १९॥

---

साध्यो हेत्वादिवेदी मत इह कलया सर्वथा वा तवासौ
पूर्वत्रेशो न सिध्येन्न कथमपि भवेद्व्याप्तिसिद्धिः परत्र।
पक्षस्पर्शाद्विशेषान्न खलु समधिकं पक्षधर्मत्वलभ्यं
कल्प्योऽन्यस्ते विशेषस्सुकृतविषमिता जीवशक्तिस्तु सिद्धा॥२०॥

**सर्वार्थ०**—पुनरपि विकल्पमुखेनानिष्टमाह—साध्य इति। किमत्रोपादानादि-ज्ञानवन्मात्रं सिषाधयिषितम्, उतोपादानादिकृत्स्नगोचरज्ञानवानिति विकल्पः। तत्राद्यं दूषयति—पूर्वत्रेति। जानन्ति हि जीवा जगदुपादानं पृथिव्यादिद्रव्यम्, कुम्भाद्युप-योगिपरमाणुद्व्यणुकादिज्ञानाभावेऽपि कुम्भादिकर्तृत्वं सर्वानुमतम्। द्व्यणुकप्रभृतिजगदुप-करणं च यागादि जानन्त्येव जीवाः। तच्छक्तेर्द्वारस्य वा साक्षात्काराभावेऽपि कुम्भादिन्यायाद्यागादिप्रवृत्तिरिष्टा। संप्रदानं च भोक्तारं स्वात्मानमात्मीयान् वा, प्रयोजनं चेष्टप्राप्तिमनिष्टनिवृत्तिं वा न हि ते न जानीयुः, अतस्तेषामेव क्षित्यादिकर्तृत्व-मविरुद्धम्। उत्तरं दूषयति—न कथमपीति। न हि कुम्भादिसामग्र्यन्तर्गतं सर्वं कुम्भकारादयो जानन्ति। योगिनां स्वकार्यसामग्रीसाकल्यज्ञानमस्तीति चेत्, किमतः योगसिद्धसार्वज्ञ्या अपि हि न कुतश्चित् कल्पयितुं शक्यन्ते; अतो न तत्कार्यैस्सपक्ष-सिद्धिः, आगमतस्सिद्धौ तु तद्वदीश्वरोऽपि तदनुविधेयस्सिद्ध इति नानुमेयं किञ्चित्।

अस्तु व्याप्त्या कर्तृमात्रमपस्थाप्यम्, पक्षधर्मताबलात् सार्वज्ञ्यादिविशेषसिद्धि-रित्यत्राह—पक्षेति। व्याप्यस्य पक्षधर्मतया हि व्यापकस्य प्रागविदितो धर्मिविशेष-संबन्धस्सिध्येत्। न तु सदपि सपक्षदृष्टवैजात्यम्, अन्यथा धूमानुमिते वह्नौ तार्णतादि-विशयविलोपप्रसङ्गात्। सपक्षदृष्टान्यतामात्रमपि नानुमेयनियतम्, जातिव्याप्त्यैजात्यनुमाने तदनभ्युपगमात्। अतो नात्र व्याप्यपक्षधर्मतया विवक्षितविशेषसिद्धिः। परिशेषा-त्तर्हि तत्सिद्धिरिति चेन्न, परिशेषानुमानमपि हि क्षित्यादिकं सामान्यतस्सिद्धं तत्कर्तारं वा पक्षीकृत्य स्यात्? आद्ये किञ्चिज्ज्ञकर्तृकत्वनिषेधो वा? स्वतस्सर्वज्ञकर्तृकत्वं वा साध्यम्। नाद्यः, तत्संभवस्य स्थापितत्वात्। न द्वितीयः, तद्धि कृत्स्नं कार्यं पक्षीकृत्य

कार्यत्वलिङ्गेन वा साध्यम् ? प्रकृतपक्षमात्रनिष्ठेन वा केनचित् ? पूर्वत्र किमन्वयिपुरस्कारेण, व्यतिरेकिण एवास्य युष्माभिः पृथगुपन्यासात्। अत एव कार्यविशेषतोऽपि सर्वज्ञानुमाने तेनैवालं किमन्वयिना कार्यलिङ्गेन ? क्षित्यादिकर्तृपक्षीकारेण जीवासंभावितविशेषसाधनं तु दुश्शकम्, तादृशविशेषासंभवेऽपि जीवानामेव तत्कर्तृत्वस्य दर्शितत्वात्; तेषामेव तद्विरुद्धविशेषानुमानायोगाच्च।

ननु घटादिकर्तृव्यावृत्तो विशेषः क्षित्यादिकर्तॄणां स्वीकार्यः, तदुत्पत्त्यासन्नपूर्वकाले तेषां तदनुगुणबुद्ध्यादिरहितत्वात्। अतो दृष्टविपरीतक्लृप्त्यविशेषे किमीश्वरक्लृप्तिप्रद्वेषेणेत्यत्राह—कल्प्य इति। अयं भावः—निश्वासादावबधीपूर्वयत्नेनापि कर्तृत्वं त्वयैष्टव्यम्, कालविप्रकृष्टबुद्ध्याऽपि कर्तृत्वमाभिचारिकपरपीडादौ लोकवेदसिद्धम्। कुम्भाद्युत्पत्तावपि कुम्भकारादेश्चक्रचीवरदण्डसूत्रादिव्यापारहेतुभूतस्वदेहादिव्यापारे ह्यव्यवहितप्रवृत्त्युपयोगः, नान्यथा; समवायिनिष्पत्तौ वयं दृष्टान्तानुरोधेन व्यवहितव्यापारादपि कर्तृत्वं ब्रूमः, भवद्भिस्त्वदृष्टचरमेव वैषम्यं कल्प्यत इति। अथ स्यात्, कुम्भादिकृदसंभावितो गोपुरादिकर्तृषु बुद्धिशक्तिप्रकर्षो दृष्टः, मनुष्यासंभावितश्च शकुन्तलूतादिजन्त्वन्तरेषु, मनुष्येषु च विश्वामित्रादिषु एवं देवासुरसिद्धादिषु पितामहपर्यन्तेषु; इति स्थिते बुद्धिशक्तिप्रकर्षतारतम्यस्य क्वचिद्विश्रमाद्यत्रासौ स ईश्वरस्सेद्धुमर्हतीति तत्राह—सुकृतेति। कर्मभेदतन्त्रमेव तारतम्यं त्वया निर्दर्शितं। जन्मौषधिमन्त्रतपःसमाधिजाश्च सर्वास्सिद्धयस्ततददृष्टेष्वायतन्ते। एवं सत्यदृष्टाधीनधीशक्तिप्रकर्षतारतम्यं कालभेदेन कर्मवश्येष्वेव केषुचिद्भवतु; न विश्रमस्थानान्तरं मृग्यमिति भावः ॥२०॥

---

आनन्द०—प्रसङ्ग एव सङ्गतिरित्याह—पुनरपि। उपादानादीत्यादिशब्देन निमित्तादिग्रहः। जानन्ति हीति। जगतां देवतिर्यङ्मनुष्यस्थावरादीनामुपादानं पृथिव्यादि जानन्तीत्यर्थः। ननु द्व्यणुकादिज्ञानाभावात् कथं जीवस्य कर्तृत्वमित्यत्राह—कुम्भाद्युपयोगीति। द्व्यणुकादि यद्यपि न कारणं, तथाऽपि प्रयोजकत्वमत्र विवक्षितमिति भावः। ननु यत्किंचिदुपकरणज्ञानमेव विवक्षितं लाघवात्, तच्च घटकर्तरि विद्यत एव। द्व्यणुकादौ तु तदभावात् जीवस्य कथं कर्तृत्वमित्यत्राह—व्यणुकेति। यागादेस्सर्वकार्योपकरणत्वादिति भावः। ननु फलज्ञानं तत्साधने प्रवर्तकम्, तज्जन्यादृष्टस्य ज्ञानाभावे कथं तस्य प्रवृत्तिः, अप्रवृत्तस्य वा कथं कर्तृत्वमित्यत्राह—द्वारस्य चेति। अदृष्टस्य तज्जन्यत्वेऽप्यफलत्वात् तदज्ञानेऽपि प्रवृत्तिस्संभवत्येवेति भावः। अत्र कुम्भादिज्ञानान्मृदादिप्रवृत्तिर्दृष्टेत्येव पाठः। यागादिप्रवृत्तिरिति लेखकप्रमादकृत इत्याहुः। केचित्तु यागादेरदृष्टद्वारा कुम्भादिप्रयोजकत्वमभिप्रेत्येदमित्याहुः।

कार्यप्रयोजकत्वाविशेषाद्यत् किंचित्तदानुकूल्यज्ञानं सर्वसुलभमित्यर्थान्तरं सुलभमित्याह **संप्रदानं चेति** । यद्यपि सम्प्रदाने न घटप्रयोजकत्वं, तथाऽपि तत्फलत्वनिर्वाहकमिति फलेऽन्तर्भाव इति भावः । **प्रयोजनं चेति** घटस्य प्रयोजनमित्यर्थः । ननु कार्योपादानज्ञानवत्त्वमेव कर्तृत्वं जीवानां, व्द्यणुकादिकार्योपादानज्ञानं नास्त्येवेत्यत्राह– **अत इति** । अयं भावः—अत्र किं लोकव्यवहारसिद्धस्साध्यते, उत पारिभाषिकः । नाद्यः—कार्यानुकूलज्ञानवत एव कर्तृत्वात् । न द्वितीयः–शब्दादौ व्यभिचारात्, गायतो गानकर्तृत्वव्यवहारात्तदतिरिक्तकर्तृत्वे चाप्रयोजकत्वात् । **न हि कुम्भादौति** । तथा च व्याप्यत्वासिद्धिरिति भावः ।

ननु योगिजन्यकार्यं सपक्षः, तदन्यत् सर्वं पक्ष इति न व्याप्यत्वासिद्धिरिति शङ्कते–**योगिनामिति** । एवमप्यसिद्धिदूषणं न परित्यक्तमित्याह–**किमत इति** । अत्र किमनुमानसिद्धं योगिनं मत्वा आशङ्कोतागमसिद्धमिति विकल्प्याद्य आह— **योगसिद्धेति** । तत्रापि व्याप्तिग्रहेऽनवस्थापातादिति भावः । द्वितीयं दूषयति— **आगमत इति** । तथा च पक्षाभावादाश्रयासिद्धिरिति भावः । **धर्मिविशेषसम्बन्धः** पक्षीयत्वम् । **अन्यथेति** । पक्षीयत्वातिरिक्तमपि सिध्यति चेदित्यर्थः । सपक्षदृष्टव्यक्तिभेदोऽपि नानुमानेन सिध्यति, दूरे तद्वैजात्यमित्याह—**सपक्षदृष्टेति** । क्वचित्तत् सिद्धिर्मानान्तरादिति भावः । नन्वल्पज्ञानां कर्तृत्वबाधे परिशेषात् सिद्धिरिति शङ्कते–**परिशेषादिति** । **आद्ये**-क्षित्यादिसकर्तृकानुमाने । **तत्सम्भवस्येति** । अनुपपत्तिघटितलिङ्गस्यासिद्धेरित्यर्थः । बाधो दोष इत्यपरे । **व्यतिरेकिण इति** । कार्यमात्रस्य पक्षत्वेन सपक्षाभावाव्द्यतिरेकित्वम् । अनेन कर्तृसिद्धेराद्यमन्वय्यनुमानं व्यर्थमिति भावः । द्वितीयं दूषयति—**अत एवेति** । **किमन्वयिनेति** । एकदैव विशिष्टकर्तृत्वसिद्धेरिति भावः । प्रथमविकल्पे द्वितीयं शिरो दूषयति—**क्षित्यादिकर्तृपक्षीकारेणेति** । जीवासम्भावितनित्यज्ञानादिमत्त्वसाधनमिति भावः । किं च जीवभिन्ने कर्तरि विशेषस्साध्यते, उत जीव एव कर्तरीति विकल्प्य आद्य आह—**तादृशेति** । सामान्यानुमाने जीवस्यैव कर्तृत्वेनार्थान्तरस्य दर्शितत्वादाश्रयासिद्धिरिति भावः । द्वितीय आह–**तेषामेवेति** । जीवानां स्वभावविरुद्धनित्यज्ञानानुमानायोगात् बाध इति भावः ।

ननु कल्प्यत्वं भवतामप्यविशिष्टमिति चेत्तत्राह–**अयं भाव इति** । नास्माभिर्दृष्टविरुद्धं कल्प्यते, किं तु दृष्टसजातीयमेव सद्वारककर्तृत्वं ज्ञानादिरहितजन्ययत्नवत्त्वं चेति भावः । **अव्यवहितप्रवृत्तिः**—अव्यवहितयत्नः । **नान्यसमवायीति** । अन्यसमवेतघटाद्यवयविनि न साक्षादुपयोग इत्यर्थः । तथा च व्यवहितयत्नवतोऽपि कुलालादेः कर्तृत्वं घटादौ दृष्टम् । न चादृष्टाद्वारकत्वं विशेष इति वाच्यम्; भृत्याद्यव्यापारवदप्रयोजकत्वादिति भावः । **अदृष्टचरमिति** । क्वचिदपि नित्यज्ञानादेरभावात् ज्ञानत्वाद्यवच्छेदेन जन्यत्वावधारणादिति भावः । **शकुन्ते** नभसि गतिः, लूते स्वोदरात्तन्तु-

सृष्टिः तन्निगरणं च, आदिशब्देन गजकपित्थादि गृह्यते। विश्वामित्रादिष्विप्यादि-शब्देन वसिष्ठादिग्रहः। बुद्धिशक्तिप्रकर्षतारतम्यस्येति। उक्तप्रकर्षतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात्तेजःप्रकर्षतारतम्यवदित्यनुमानेनेति शेषः। कर्मभेदेति। तथा च सपक्षदृष्टवैजात्यं न साधयितुं शक्यमिति भावः। अत इति। विश्रमस्थानं यत्तस्य हि जगत्कर्तृत्वं वाच्यम्; स हि कर्मवश्येषु कश्चिज्जीव इति न नियत एक-स्तत्कर्ता सिध्यति। एतेन—यो जगत्कर्ता स एवेश्वर इति निरस्तम्, तस्यैकत्वासिद्धेरिति भावः॥ २०॥

---

अक्षरार्थ—पुनरिह विकल्पमुखेन सर्वज्ञकर्तृसिद्धिस्ते न संभवतीत्याह—साध्य इति किमिह यत्किञ्चिदुपादानादिगोचरज्ञानवत्कर्तृकत्वमात्रं सिषाधयिषितमुत कृत्स्नगोचरज्ञानवत्कर्तृकत्वमिति विकल्पा विवक्षितः। कलया—किंचिदंशेन, सर्वथा वा कृत्स्नांशेन वेत्यर्थः। तत्राद्ये कल्पे दोषमाह—पूर्वत्रेति न सिद्धयेदिति यत्किंचिद्-गोचरज्ञानस्य जीवेऽपि संभवादिति भावः। द्वितीयकल्पे दोषमाह न कथमिति सपक्षे घटादौ सर्वज्ञकर्तृकत्वाभावादिति भावः। कार्यत्वहेताः घटादावधिगतयोपादा-नाद्यभिज्ञकर्तृकत्वसामान्यव्याप्त्यैव क्षित्यादिके पक्षधर्मताबलात् सर्वज्ञकर्तृकत्वसिद्धि-रस्त्वित्यत्राह—पक्षेति वह्न्यादेः पर्वतीयत्वादिवत् कर्तुः क्षित्यादिसंबन्धित्वमेव पक्षधर्मताबलात् गम्येत, न ततोऽधिकं सर्वज्ञत्वमल्पज्ञत्वं वेति भावः।

ननु जीवानां क्षित्यादिकर्तृत्वोपगमे तदुत्पत्तेः पूर्वं तदुपादानादिज्ञानाभावात् अधीनपूर्वककर्तृत्वादिकं कल्पनीयं, तद्वदशरीरकर्तृकत्वकल्पने को दोष इत्यत्राह—कल्प्य इति अन्य इति। अधीपूर्वककर्तृत्वादिकं भवताऽपि जीवनयोनिकर्त्रादौ जीवेऽपोष्यते, अशरीरकर्तृकत्वादि विशेषस्तु अन्यः क्वचिदप्यसिद्धः कल्पयितव्य इति भावः। महोमहीधरादिकरणशक्तिः जीवेष्वदृष्टा कथं कल्पयितुं शक्यतं इत्यत्राह—सुकृतेति तत्तत्सुकृततारतम्येन घटपटगोपुरप्रासादादिकर्तृषु जीवेष्वपि शक्तितार तम्यं दृश्यते तद्वत् क्षित्यादिकार्येऽपि सुकृतविशेषात् शक्त्यतिशयाङ्गीकारे नापरिदृष्ट कल्पनापालम्भसंभव इति भावः॥ २०॥

---

कार्यं स्यात् कर्त्रभावेऽप्यवधिभिरितरैः कालवत्स ह्यसिद्ध-
स्ते चादृष्टप्रयुक्तास्तदपि यतनवत्स्यात्तु यत्नानपेक्षम्।
एकत्यागेऽन्यहेतुत्यजनमिति च न ध्वंसवत्सावधित्वात्
तस्माद्धेतोरभावे न फलमिति गतिस्तद्विशेषे विशेषः॥२१॥

सर्वार्थ०—अथात्र परेष्टं विपक्षे बाधं दूषयति—कार्यमिति॥ एवं हि मन्यते-कारणाभावे कार्याभाव उभयाभ्युपेतः; कारणान्तराणि च कर्त्रुपहितमर्यादानि कथं कर्त्रभावे व्याप्रियेरन्? अतः कार्यस्य सांख्यसौगतचार्वाकवर्तन्या नित्यत्वमसत्त्वमाक-

स्मिकत्वं वा स्यादिति। तत्रेदमुत्तरम्—कार्यमिति। अयं प्रतिविधिः कारणाभावे कार्यं न स्यान्न तु कारणविशेषाभावे; अन्यथा क्वचिद् दृष्टस्य कर्मकारकादेरभावेऽपि क्रियानुत्पत्तिप्रसङ्गात्; अतः कर्त्रभावेऽपि कारणान्तरैः कार्यसिद्ध्युपपत्तिरिति।

ननु कालो यथा सर्वकार्यनिमित्तं तथेश्वरोऽपि; तत्परित्यागे समानन्यायः कालोऽपि त्यज्यतामित्यत्राह—कालवदिति। कालोऽप्युपाधिविशेषातिरिक्तो न वेति यथामतमस्तु; स तावल्लोकशास्त्रसिद्धः, कालप्रतीक्षया कर्षकादिप्रवृत्तेः, काले कर्मचोदनात्, शुभाशुभकालविभागे च कस्यचिद्वेदाङ्गस्य व्यापारात्। नन्ववधोनामप्यचेतनानां चेतनानधिष्ठितत्वे प्रवृत्तिर्न स्यादित्यत्राह—ते चेति। अदृष्टप्रेरितानामेव प्रवृत्त्युपपत्तौ किं तत्र प्रयत्नगवेषणेन? अदृष्टस्याप्यचेतनस्य प्रवृत्तौ चेतनाधिष्ठानमपेक्षितमित्यत्राह—तदपीति। ईश्वरप्रयत्नो ह्यचेतनाऽपि जगत्सृष्टौ न प्रयोजकप्रयत्नाधिष्ठितः; न च कुम्भारम्भ इव जीवप्रयत्नसहकृतः, अतस्तत्र व्याप्तिसङ्कोचावश्यंभावादत्रादृष्टेऽपि क्वचित् सङ्कोचः स्यात्; अन्यथा गौरवात्। ईश्वरप्रयत्नस्य नित्यत्वात् प्रयत्नानाधिष्ठितत्वमिति चेन्न, नित्यानामपि परमाण्वादीनां तदपेक्षाङ्गीकारात्। अन्यत्रान्वयव्यतिरेकनियमवतामन्यतमस्य त्यागे सर्वहेतुत्यागोऽपि स्यादिति शङ्कते—एकेति। सर्वहेतुत्यागे कादाचित्कत्वविरोधं प्रकृते तदभावं चाभिप्रेत्याह—नेति। प्रतिबन्दि सूचयन् अन्यहेत्वपरित्यागे हेतुमाह—ध्वंसवदिति। ध्वंसा ह्यभूत्वा भवन् हेतुमपेक्षमाणस्समवाय्यसमवायिनोरसंभवान्निमित्तमात्रनिष्पाद्यस्त्वया स्वीकृतः, तथा पक्षेऽपि जीवातिरिक्तस्य कर्तुः कल्पयितुमशक्यत्वात् कथंचिज्जीवकर्तृकत्वं कर्तृनिरपेक्षत्वं वा स्वीक्रियतामिति भावः। विपक्षे बाधकाभावं निगमयति—तस्मादिति। हेत्वभावे कार्यं न स्यात् न तु कार्यमात्रानपेक्षितहेतुविशेषाभावे; तत्र तु कार्यविशेषनिवृत्तिर्वा, यथा कलमबीजाभावे कलमाङ्कुरस्य हेत्वभावे फलाभावो विशेषस्तु विशेषवानिति न्यायात्। अथवा कारणान्तरैरेव कार्यसिद्धिः यथा प्रध्वंसस्येति विशेषः॥ २१॥

---

आनन्द०—आक्षेपसङ्गतिमाह—अथेति। कथं कर्त्रभावे व्याप्रियेरन्निति। अव्यापृतानां जनकत्वाभावादिति भावः। नित्यत्वं सांख्यानां, असत्त्वं बौद्धस्य। आकस्मिकत्वमहेतुकत्वं, तच्चार्वाकस्य। कालो हीति। नन्वत्रापीश्वरशब्दवाच्यः प्रसिद्ध इति चेत्, न, जीवानामेवेश्वरशब्दवाच्यत्वेनोपपत्तेः। किञ्च यत्किंचित्प्रसिद्धिमात्रेण न निमित्तकारणत्वं, आकाशादेरपि प्रसङ्गात्। किन्तु तत्कारणताग्राहकप्रमाणं, न चात्र तदस्तीत्याह—कालप्रतीक्षयेति। अनेनान्वयव्यतिरेकौ श्रुतिस्मृत्यादयश्च प्रमाणमिति भावः। यदुक्तं कारणान्तराणीत्यादिना तदाशङ्कते—नन्विति। तदुपहितमर्यादैव कारणान्तरमिति नियमो नेत्याह—अदृष्टेति। नियमोऽस्तीत्याशङ्कते—अदृष्टस्यापीति। एवमपि न नियम इत्याह—ईश्वरेति। ननु प्रयत्नस्य न प्रयत्नान्तरमपेक्षितमिति चेत् तत्राह—न चेति। न जन्यप्रयत्नातिरिक्तस्य प्रयत्नाधिष्ठितत्वं

दृष्टमित्यर्थः। अतस्तत्रेति। तथा च नियमसंकोचस्यावश्यकत्वे अदृष्ट एव तथाऽस्त्वित्यर्थः। अन्यथेति। अदृष्टातिरिक्तस्यापि कस्यचित् कल्पनीयत्वादित्यर्थः। अन्यत्रान्वयव्यतिरेकेति। अन्यत्र कर्तुरन्वयव्यतिरेकदर्शनादिति भावः। ननु ध्वंसस्य भावत्वाभावात् समवायानपेक्षाऽस्तु; प्रकृते तु कर्तुरभावे कार्यं न स्यादित्यत आह—कथं चिदिति। तथा व्याप्तिसिद्धावपि न विवक्षितसिद्धिरिति भावः। न तु कार्यमात्रेति। कर्तुः कार्यत्वावच्छेदेन हेतुत्वासिद्धेः; क्वचिद्दर्शनमप्रयोजकं, शरीरहेतुकत्ववदिति भावः। मीमांसकसंमतिमाह—हेत्वभाव इति। कारणमात्राभावे फलस्य कार्यमात्रस्याभाव इत्यर्थः। विशेषः कार्यविशेषः, विशेषवान्—कारणविशेवान्, अन्वयमुखेन। कारणविशेषाभावे कार्यविशेषाभावोऽभिप्रेतः। केचित्तु—विशेषः कारणविशेषाभावः कार्यविशेषाभाववानित्यर्थ इत्याहुः। ननु पक्षातिरिक्ते सर्वत्र हेतुतया सिद्धस्य कार्यमात्रे कथं हेतुत्वं न स्यात् कल्पकस्य त्वस्य सत्त्वादित्यत्राह—अथवेति। अन्यथासिद्धत्वादिति भावः॥ २१॥

---

अक्षरार्थ—अत्र परोक्तं कर्त्रभावे कार्याभाव इति विपक्षे बाधकं दूषयति कार्यमिति कर्तुरभावेऽपि इतरैः कारणैरेव कार्यं स्यादित्यर्थः। कार्याभावो न कर्त्रभावव्यापकः स्यादिति भावः। कार्यसामान्ये कालस्येव ईश्वरस्यापि कर्तृत्वेन कारणतया तदभावे न किंचिदपि कार्यं स्यादित्यत्राह—कालवदिति कालो लोकवेदसिद्धः कालप्रतीक्षया कर्षकाः प्रवर्तन्ते कालविशेषेष्वेव कर्माणि चोद्यन्ते तद्वत् स कर्ता न लोकसिद्धोऽस्तीत्यर्थः। कर्तृव्यतिरिक्तानां कारणानामचेतनतया चेतनाधिष्ठानं विना न प्रवृत्तिस्स्यादित्यत्राह ते चेति। कर्तारं विनाऽप्यदृष्टप्रेरिताः परमाण इव प्रवर्तेरन्निति भावः। अदृष्टमप्यचेतनतया चेतनाधिष्ठानसापेक्षमेव कार्यकरं, अचेतनं चेतनाधिष्ठितं कार्यं करोतीति व्याप्तेरित्यत्राह—तदपीति—अदृष्टमपीत्यर्थः। यत्नवदिति ईश्वरप्रयत्नवदित्यर्थः। यत्नानपेक्षमिति—यथा वेश्वरप्रयत्नस्याचेतनत्वेऽपि कार्योत्पादे न यत्नान्तरसापेक्षत्वरूपं चेतनाधिष्ठितत्वं, तद्वत् अदृष्टस्याप्युपेयतामित्यर्थः। उक्तव्याप्तेः क्वचित् संकोचे परत्रापि तत्संभवादिति भावः। कर्तृत्यागे हेत्वन्तरस्यापि त्यागस्स्यादिति शंकां निरस्यति एकेति ध्वंसवदिति ध्वंसस्य समवाय्यसमवायिकारणासंभवेऽपि निमित्तकारणेन सावधिकत्वोपगमवत् क्षित्यादिकार्यस्य कर्तुरसंभवेऽदृष्टादिना सावधिकत्वस्योपगन्तव्यत्वादिति भावः। विपक्षे बाधकाभावं निगमयति तस्मादिति कारणाभावे कार्यं न स्यात् न तु कारणविशेषाभावेऽपीति भावः। विशेषः—कार्यविशेषाभावः॥ २१॥

**धर्मो यावत्सपक्षानुगत उपधिरित्यभ्युपेतस्त्वयाऽपि**
**त्यागे तस्यात्र तद्वच्छिथिलितनियमाः क्वापि नोपाधयः स्युः ।**
**तादृग्धर्मात्ययाच्च प्रकरणसमता स्यान्न चातिप्रसङ्गः**
**पक्षादिस्थित्यबाधान्निरुपधिकतया स्यात्परात्मानुमा तु ॥ २२ ॥**

**सर्वार्थ०**—सोपाधिकत्वमपि दर्शयितुमाह—**धर्म इति** ॥ यावत्सपक्षानुगतः—पक्षे विपक्षे चावर्तमानस्सपक्षाभिव्याप्त इत्यर्थः । अस्ति चात्र तादृशो धर्मः शरीरजन्यत्वम् । यद्यप्यसौ पक्षीकृते शरीरगुणादिविशेषे वर्तते, तथाऽपि साधनव्यापकत्वाभावात् स्वनिवृत्त्या साध्यनिवर्तनशक्तेश्चोपाधिः स्यादेव । तादृशस्य धर्मस्यात्रोपाधित्वानङ्गीकारेऽतिप्रसङ्गमाह - त्याग इति । न हि निषिद्धत्वादीनामेतस्य च विशेषोऽस्ति, येन त एव तत्रतत्रोपाधायः स्युः, नासावत्रेति नियम्येत ।

एवं सोपाधिकत्वे मतभेदेन व्याप्यत्वासिद्धिः, व्यापकनिवृत्त्या व्याप्यनिवृत्तिर्वा स्यादिति भावः । शरीराजन्यत्वसमबलत्वाभिमाने प्रतिरोधमाह – तादृगिति । ननूपाधौ प्रतिसाधने च शरीरोपादानं व्यर्थम्; आत्मादिषु जन्यत्वनिवृत्तिमात्रेण सकर्तृकत्वनिवृत्तावुपपन्नायां विशिष्टनिवृत्त्यनपेक्षणात् । अतो निरुपाधिकं निष्प्रतिसाधनं च विश्वकृदनुमानम् । मैवम्; क्षित्यादिकं सकर्तृकमित्यत्र न हि कर्तृसंबन्धमात्रं साध्यम्, सिद्धसाधनत्वात्; सन्ति हि त्वत्पक्षे कुम्भादिकर्तारश्चेतनाः स्वरूपतस्सर्वत्र संबद्धाश्च तैः क्षित्यादयः, अस्मत्पक्षेऽपि—

> अङ्गुलस्याष्टभागोऽपि न सोऽस्ति द्विजसत्तम ।
> न सन्ति प्राणिनो यत्र कर्मबन्धनिबन्धनाः ॥

दारुण्यग्निर्यथा तैलं तिले तद्वत्पुमानपि ।" इत्यादिभिस्सर्वमचेतनं पुण्यपापकर्तृचेतनमिश्रम्; अतस्सकर्तृकमिति चेतनव्यापारपूर्वकत्वं साध्यम् । तत्र व्यापारपूर्वकत्वनिवृत्तिमात्रेण कादाचित्कत्वनिवृत्त्युपपत्तौ तद्विशेषणवैयर्थ्यं स्यात् व्याप्त्युपयोगाभावेऽपि सिद्धसाधनत्वनिवृत्त्यै तदुपादानमिति चेत्तर्हि शरीराजन्यत्वेऽप्यसिद्धिपरिहारे विशेषणं समर्थमाशङ्क्य एकामसिद्धिं परिहरतो द्वितीयापत्तेरित्युक्तं वितथं स्यात् ।

ननु ज्ञानादित्रिकवान् कर्ता, तत्पूर्वकत्वे साध्ये व्यापारगर्भतया न पृथग्व्यापारपदोपादानं येन विशेषणवैयर्थ्यापत्तिरिति चेन्न, अन्यतमनिवृत्तिमात्रेण कार्यत्वनिवृत्त्युपपत्तौ त्रिकोपादानवैयर्थ्यात् । अन्यतमसाधने त्वदिष्टमसाधितं स्यात् । शेषं शास्त्रतः सेत्स्यतीति चेन्न; कार्यत्वनिवृत्तेर्हेतुपूर्वकत्वनिवृत्तिप्रयुक्ततया प्रयत्नादिनिवृत्तेरप्रयोजकतापातात् । तदिह तत्तद्विशेषव्यतिरेकस्यापि व्याप्तिनिवेशाङ्गीकारे शरीरजन्यत्वव्यतिरेकेऽपि न वैयर्थ्यं वाच्यमिति । नन्वेवमदृष्टचरसौधादिदर्शने सावयवत्वात् कार्यत्वमनुमाय तत एव तदुचितकर्तृमत्त्वानुमानं कुलालादिपूर्वकत्वनिवृत्त्या बाध्येत प्रतिरुध्येत वेति मन्दशङ्कां वारयति—**न चेति** । व्याप्तितदभावाभ्यं विशेषादिति

शेषः। यद्यव्यापकधर्मस्य निवर्त्यतया प्रत्यवस्थीयेत, तदा सर्वत्र तस्याः सुलभत्वात् क्वचिदप्यनुमाने पक्षो न स्यात्। साध्यवत्तया वर्ण्यमानो हि पक्षः। तदभावे तत्सापेक्षौ सपक्षविपक्षावपि न स्याताम्; ततोऽनुमानकथैवोत्सीदेत्। प्रस्तुतेऽपि नैवं प्रसङ्गः, तद्व्याप्ते रुक्तत्वादित्यभिप्रायेणाह—पक्षादीति।

यद्वा, शरीरजन्यत्वमुपाधिरित्यत्र पक्षव्यवच्छेदार्थं हि विशेषणम्, तथा सति पक्षेतरत्वमप्युपाधिः स्यादित्यत्रोक्तं—न चेति। नात्र पक्षान्यत्वेऽतिप्रसङ्गः, उपाधेः साध्यसमव्याप्तिस्वीकारपक्षे अन्वयव्यतिरेकिणि पक्षेतरत्वस्य साध्यातिव्याप्तत्वात्, केवलान्वयिनि साध्यसमव्याप्तत्वेऽपि पक्षेतरत्वान्यत्वेनाप्युपाधेर्विशेषणात्; अन्यथाऽनुमानोच्छेदप्रसङ्गात्। इयमेव साध्यव्यापित्वमात्रमुपाधेरपेक्षितमिति पक्षेऽपि गतिः। ईदृशं चेदं शरीरजन्यत्वमिहोपाधिः स्यादेवेति। पक्षेतरत्वे तूपाधौ पूर्ववदेव पक्षादिव्यवस्था भज्येत, इह तु न तथेत्याह—पक्षादीति।

ईश्वरानुमानाभावे तद्वत्स्वेतरात्मानुमानमपि न स्यात्, स्वात्मसाध्येष्वेव व्याप्तिनियमप्रसक्तेरित्यत्राह—निरुपधिकतयेति। यदि परशरीरस्थलिङ्गैः कर्तुर्भोक्तुश्चानुमाने स्वशरीरस्थतया स्वकर्तृकतया वा व्याप्तिरवच्छिद्येत, तदा हृदयविसंवादः; चेतनान्तरानुमानाभावे व्युत्पत्तिरेव न स्यात्; कुतश्शिष्याचार्यवादिप्रतिवादिशत्रुमित्रादिसंव्यवहारः?

नच स्वेनान्यदेहादेरधिष्ठानादिसंभवः।
सौभरिन्यायतस्तत्तत्प्रतिसन्धिप्रसङ्गतः ॥

न च स्वान्यानुमानेऽपि विजातीयत्वकल्पना।
निरुपाधिकता तत्र भवेदनुमितेस्ततः॥

तुशब्दः कल्पनागौरवनिवृत्त्यर्थः, उक्तबाधकतर्कसूचनार्थो वा। किंच—

परदेहस्थलिङ्गानामन्यथासिद्धिकल्पने ।
स्वदेहेऽपि तथैवेति नैरात्म्यमवशिष्यते॥

आगमादात्मनां सिद्धावीश्वरस्य तु किं पुनः।
परात्मनिश्चयाभावे त्वागमोऽपि न सेत्स्यति॥ २२॥

---

आनन्द०—दूषणप्रसङ्गादाह—सोपाधिकत्वमपीति। पक्षे विपक्षे चेति। पक्षग्रहणेन साधनाव्यापकत्वमभिमतं, विपक्षावृत्तिवचनेन समव्याप्तिरभिमता, सपक्षाभिव्याप्त इत्यनेन साध्यव्यापकत्वं बोध्यम्। शरीरगुणादिविशेषाः शरीरजन्यरूपादयः। तथापीति। पक्षावृत्तित्वस्य साधनाव्यापकत्वसिद्ध्यर्थत्वादेकदेशावृत्तित्वमात्रेणापि उपाधे स्साधनव्यापकत्वा·······भावादिति भावः। तादृशस्येति। साधनाव्यापकत्वे सति साध्यसमव्याप्तस्येत्यर्थः। न हीति। उपाधितापादकस्यैतदन्यत्वघटितत्वा-

भावादित्यर्थः। **मतभेदेनेति**। असिद्धयापादकत्वं सत्प्रतिपक्षोत्थापकत्वमिति मतभेद इति भावः। असिद्धयापादकत्वमुपाधेरुपपादयति—**व्यापकेति**। केचित्तु बाधमाह—**व्यापकेतीत्याहुः**। अपरे त्वनौपाधिकत्वं व्याप्तिरिति तदभावतया व्याप्यत्वासिद्धिमाहुः। सत्प्रतिपक्षोत्थापकत्वमाह—**शरीराजन्यत्वेति**। **ननूपाधौ प्रतिसाधन इति**। उपाधौ सति यत्प्रतिसाधनं उपाधिप्रयुक्तप्रतिसाधनं उपाध्यभाव इति यावत्। केचित्तु—उपाधौ प्रतिसाधने चेति चकारमपि पठित्वोभयत्र वैयर्थ्यमाहुः। युक्तं च तथा; अतो निरुपाधिकमित्याद्यपि युज्यते। अनुकूलतर्कसाहित्य एव व्याप्तिर्न साहचर्यमात्रात्। तथा च कर्तृव्यापारजन्यत्वाभावे कार्यत्वं न स्यादिति तर्कानुग्रहादेव व्याप्त्यादिसिद्धिरिति वक्तव्यं, तदेव न संभवति, शरीराजन्यत्व उक्तदूषणग्रासादित्याह—**मैवमित्यादिना**। **सन्ति हीति**। विभुत्वादिति भावः। ननु त्वत्पक्षे जीवानामणुत्वमित्यत्राह—**अस्मत्पक्ष इति**। विष्णुपुराणादिषु व्याप्त्यभिधानादिति भावः। **कर्तृव्यापारपूर्वकत्वं** कर्तृव्यापारजन्यत्वम्। **विशेषणवैयर्थ्यमिति**। कर्तृभागवैयर्थ्यम्। उदयनोक्तविरोधमाह—**तर्हीत्यादिना**।

**क्षित्यादिकमकर्तृकं** अजन्यत्वादित्युक्ते पक्षेऽसिद्धिः स्यात्; तामेकामसिद्धिं परिहर्तुं शरीरविशेषणोपादाने शरीराजन्यत्वं पक्षे वर्तत इत्यसिद्धिः परिहृता भवति। तथाऽपि जन्यत्वाभावेनैवाकर्तृत्वव्याप्तिग्रहसंभवे शरीरविशेषणविशिष्टे व्याप्तेर्नीलधूम इवाभावाद्व्याप्यत्वासिद्धिः स्यादिति स्वरूपासिद्धिं परिहरतो व्याप्यत्वासिद्धिः स्यादिति भावः। **वस्तुतस्तु**—शरीरजन्यत्वाभावोऽन्य एव; तथा च यन्निष्ठा व्याप्तिरिति न्यायेन न वैयर्थ्यमिति ध्येयम्। **नन्विति**। अव्यवधानेन ज्ञानादीनां पूर्वसत्त्वस्य विवक्षितत्वान्न सिद्धसाधनमपीति भावः। **अन्यतमेति**। यद्यपि विनिगमकाभावात् त्रयाणामपि सिद्धिः स्यात्; अन्यथैकस्यापि सिद्धिर्न स्यात्; तथाऽपि त्रयाणामपि सिद्धिर्नास्ति, अप्रयोजकत्वात्; तदाह—न **कार्यत्वनिवृत्तेरिति**। **तत्तद्विशेषेति**। हेतुविशेषव्यतिरेकस्येत्यर्थः। **मन्दशङ्कामिति**। दृष्टसाजात्यात्तत्रैव किंचिदुत्कर्षमात्रे तद्विरोधाभावात् क्षित्यादौ तु दृष्टकारणत्यागो ज्ञानादीनां दृष्टविरुद्धनित्यत्वकल्पनं चेति मन्दतेति भावः। अन्यत्रापि गोपुरादौ कर्तृसिद्धिर्न स्यादित्यत आह—**यदीति**। कुलालत्वस्य शरीरादिवत् कर्तृताप्रयोजकत्वाभावात् तद्व्यावृत्तेर्न कर्तृतानिवृत्तिरिति भावः। ननु साध्यव्यावृत्त्या पक्षतानिवृत्तिरित्यत्राह—**साध्यवत्तयेति**। सिषाधयिषितसाध्यवतः पक्षत्वादिति भावः। **तदभाव इति**। सर्वस्यापि तदर्थत्वादिति भावः। उपाध्युद्भावनप्रसङ्गे उपाध्युद्भावनमेवोचितमित्यभिप्रायेणाह—**यद्वेति**।

**साध्यातिव्याप्तत्वात्** साध्यापेक्षया व्याप्यत्वाभावादित्यर्थः। **केवलान्वयिनीति**। यद्यपि तत्रापि पक्षेतरत्वस्य पक्षे साध्याव्यापकं तथापि पक्षादन्यत्र साध्यसमव्याप्तिनिश्चयापनुमानप्रतिबन्धः स्यात्; अन्यथा निषिद्धत्वादावपि पक्षे साध्यसंदेहेनोपाधेर्दूषकता स्यादिति भावः। **अन्यथेति**। ननु बाधोन्नीतस्य पक्षेतरत्वस्योपाधि-

त्वाविरोध इति चेत्तदितरपक्षेतरत्वस्योपाध्याभासत्वे तात्पर्यादिति भावः। ननु स्वेतरानुमानवदोश्वरानुमानमपि स्यादित्यभिप्रायेण शङ्कते—ईश्वरेति। हृदयविसंवाद- इति। स्वानुभवविरोध इत्यर्थः। तथा च स्वशरीरचेष्टायां चेष्टात्वेन सात्मकत्वेन प्रयोज्यप्रयोजकत्वग्रहो दण्डघटादिवत्, तथा च परशरीरेप्यात्मानुमानं तस्मिश्च पर्वतीयवह्नाविव भेदश्च सिध्यतीत्याह—चेतनान्तरेति। ननु स्वान्यानुमानमयुक्तं, तथा व्याप्त्यभावादित्याशङ्क्य स्वेनात्मवत्त्वानुमानमप्ययुक्तं, तथा व्याप्तिविरहा- दित्याह—न चेति। यद्यपि नोभयथाऽपि व्याप्तिः। तथाऽप्यन्यथानुपपत्त्या भेदसिद्धि- रिति भावः। ननु तर्हि क्षित्यादावपि जीवविलक्षणानुमानप्रसङ्ग इत्यत्राह—न चेति। यद्यपि भेदस्सिध्यति, न तु शरीरादिनिरपेक्षत्वादिवैलक्षण्यं व्याप्त्यभावात् दृश्यमान- व्याप्तिविरोधाच्चेति भावः। बाधकाभावमात्रं स्वयं न साधकमित्यभिप्रायेणाह— उक्तबाधकेति। केचित्तु—सूचनार्थो वेत्यत्र वाशब्दश्चार्थ इत्याहुः। ननु देहादि- व्यापारश्शरीरप्राणादिभिरेवान्यथासिद्ध इति न परदेहेनात्मसाधनमित्यत्राह—किं च परदेहेति। स्वस्मिन्नपि देहप्राणादिभेदस्यास्फुटत्वात्; यदि स्फुटत्वं तादृशस्य परत्रा- प्यनुमातुं शक्यत्वादिति भावः। यदि वेदात् जीवात्मनिश्चयः तर्हीश्वरोऽपि तत एव निश्चेतुं शक्य इति नानुमेयता। यदि परो वेदान्न सिध्येत् तुल्यन्यायाज्जीवोऽपि ततो न सिध्येदित्याह—आगमेति। केचित्तु—आगमोऽपि न सेत्स्यति—आगमः कुत्रापि प्रमाणं न स्यात्, तुल्यत्वादित्याहुः॥ २२॥

---

अक्षरार्थ—अत्रेश्वरानुमानस्य सोपाधिकत्वं दर्शयितुमाह—धर्म इति। यावदिति साध्यसमव्याप्तत्वे सति साधनाव्यापक उपाधिरित्यर्थः। समव्याप्तिः, साधनाव्यापकत्वं च कथमत्र लभ्यत इति चेत् यावच्छब्देनावधारणविवक्षया, सपक्षानुगतिमात्र कथनाद्वा पक्षविपक्षाननुगतिर्लभ्यते, ततश्च समव्याप्तिः, साधनाव्यापकत्वमप्यवगम्यत इत्याशयात्। त्वयाऽपि आनुमानिकेश्वरवादिनाऽपीत्यर्थः। अतश्शरीरजन्यत्वमीश्वरा- नुमाने भवत्युपाधिरिति भावः। तथाविधस्य धर्मस्योपाधित्वानङ्गीकारेऽतिप्रसङ्गमाह त्यागइति तद्वत्—शरीरजन्यत्वादिवत्। वेधहिंसा अधर्मः हिंसात्वात् इत्यादौ निषिद्ध- त्वादयोऽपि विशेषाभावान्नोपाधयस्स्युः त एव तत्रोपाधयो नासावत्रेति नियन्तुम शक्तेरिति भावः। एवं सोपाधिकत्वे सतोश्वरानुमानं व्याप्यत्वासिद्धमुक्तोपाध्यभावेन सत्प्रतिपक्षितं वा स्यादित्याह तादृगिति प्रकरणसमता—सत्प्रतिपक्षता। क्षित्यादिकं अकर्तृकं शरीराजन्यत्वात् गगनवदिति प्रयोगादिति भावः।

नन्वेवं पक्षेतरत्वस्याप्युपाधित्वप्रसङ्ग इत्यत्राह नचेति। पक्षेतरत्वस्योपाधित्वो- पगमे तदभावेन पक्षे साध्याभावनिश्चयात् साध्यवत्तया वर्णनीयस्य पक्षस्यासिद्धया तत्सापेक्षसपक्षविपक्षयोरप्यसिद्धयाऽनुमानोच्छेदस्स्यात्। अतस्तद्वारणाय तदन्यत्वमप्यु- पाधिलक्षणे निवेशनीयमिति भावः।

न चैवं शरीरजन्यत्वोपाध्युपगमे दोषप्रसक्तिरित्याह **पक्षादीति** एतदनुमान-भङ्गेऽप्यनुमानान्तराविरोधादिति भावः।

नन्वेवमीश्वरानुमानवत् स्वेतरात्मानुमानमपि न स्यादित्यत्राह—**निरुपधीति**

इति अन्वय्यनुमानभङ्गः ॥ २२ ॥

---

**सर्वस्यावीतहेतोरपि च निरसनं द्रक्ष्यसि स्वप्रसङ्गे**
**श्रुत्याऽत्र व्याप्तिसिद्धावलमनुमितिभिर्निष्फलस्संप्लवोऽपि ।**
**तस्मादुल्लोकभूमा स कथमनुमया विश्वकर्ता प्रसिध्ये-**
**च्छास्त्रानुक्तत्वबाधद्वयपरिहृतये शास्त्रयोनित्वसूत्रम् ॥ २३ ॥**

**सर्वार्थ०**—अथ स्यात्—अन्वयिनि हेतौ यावत्सपक्षान्वयिधर्मसंभवेन सोपाधिकता शङ्क्येत, केवलव्यतिरेकिणि तु सपक्षाभावान्न तच्छङ्केति, अत आह—**सर्वस्येति**। स्वप्रसङ्गे -हेतुचिन्तावसरे। अयं भावः—व्यर्थविशेषणत्वमर्थान्तरत्वं च केवलव्यतिरेकिणां सर्वेषां द्योत्यते। तथाहि; सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कादाचित्कत्वादित्यत्र व्यतिरेके कर्तृपूर्वकत्वनिवृत्त्यैव कादाचित्कत्वनिवृत्तावुपपन्नायां किं सर्वविद्विशेषणेन? सिद्धसाधनत्वनिवृत्त्यै तद्ग्रह इति चेन्न; शरीराजन्यत्वहेतावसिद्धिपरिहारे विशेषणं समर्थमिति वदन्तं प्रति एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति युष्मदुक्तस्यात्र दुर्वारत्वात्। तर्हि कर्तृपदं हित्वा सर्वंवित्पूर्वकमित्येतावदुक्तौ न वैयर्थ्यमिति चेत्, तथाऽपि वित्पूर्वकत्वनिवृत्त्या व्याप्तिसिद्धौ सर्वविशेषणवैयर्थ्यमेव। एवं नित्यज्ञानपूर्वकत्वादिनिर्देशेऽपि द्रष्टव्यम्।

न च विशेषणेऽपि सिद्धसाधनतापरिहारः, सर्वेषां चेतनानां सर्वशब्दार्थवेदिनामसर्ववित्त्वायोगात्; अन्यथा सर्ववित्साधनस्यापि दुश्शकत्वात्। विशेषतस्सर्वं न सर्वे विजानन्तीति चेन्न; विशेषाणामपि सर्वशब्दसंग्रहात्। सर्वसाक्षात्कर्तृपूर्वकत्वं साधयाम इति चेन्न; योगिभिरर्थान्तरतापातात्। नित्यसाक्षात्कारिपूर्वकत्वं साध्यमिति चेत्, एवमपि व्याप्तौ नित्यविशेषणवैयर्थ्यमेव। अन्यतो विशेषणसाफल्ये शरीराजन्यत्वेऽपि साफल्यं सिध्येदेव। वेदास्सर्वज्ञप्रणीताः वेदत्वादित्यत्राप्येवमर्थान्तरत्वविशेषणवैयर्थ्ये बोद्धव्ये, प्रणीतत्वनिवृत्तिमात्रेण सर्वज्ञप्रणीतत्वनिवृत्तिमात्रेण वा व्याप्तिग्रहोपपत्तेः। अपि च केवलव्यतिरेकिणस्सपक्षे सत्याभासत्वं संगिरध्वे। सन्ति चानन्तानि सर्वज्ञप्रणीतानि वेदेतरवाक्यानि भारतादिमध्यपातीनि स्मृतितन्त्ररूपाणि, कल्पादिषु लोकवेदसंव्यवहारप्रवर्त्तनोपयिकानि च। न च तेषु वेदत्वम्, प्रसिद्धिविरोधात्, अवेदत्वेनैव महर्षिप्रभृतिभिर्व्यपदेशाच्च। अतस्तेषां न वेदत्वेन पक्षीकरणं शक्यम्। संग्राहकान्तरं च दुर्वचम्, जीवप्रणीतेतरवाक्यत्वमोश्वरप्रोक्तत्वं वा नान्यतस्सिद्धम्। इत एव तत्साधनेऽन्योन्याश्रयः; तदिह तेषां पक्षीकारे तदभावे वा वेदत्वहेतुस्तेष्वसिध्यन् हेत्वाभास [ कक्षां ] त्वं नातिक्रामेत्। एवं वक्ष्यमाणैश्च वेदनित्यत्वसाधकैर्बाधोऽप्यत्र

मन्तव्यः। एवं घटः सर्वज्ञकर्तृकः घटत्वात्, यजुस्सर्वज्ञप्रणीतं यजुष्ट्वादित्यादिविशेष-पक्षीकारेण प्रयोगाश्च निरस्ता वेदितव्याः।

ननु कार्याणां सर्वेषां सर्वज्ञपूर्वकत्वव्याप्तिः श्रुत्या सिध्यति। अविदितनिगम-वृत्तान्तानां नालिकेरद्वीपवासिनामिव वह्नौ महेश्वरे मा भूदनुमानम्, अन्येषां तु तत्प्रवृत्तिसंभव इत्यत्राह—श्रुत्येति। व्याप्तिग्राहकेणैव साध्यसिद्धौ किमत्रानुमिति-साध्यमित्यर्थः। संप्लववादे सिद्धेऽपि मानान्तरस्य प्रवृत्तिः स्यादित्यत्राह—निष्फल इति। मानान्तरसिद्धे वस्तुन्याकारान्तरसमर्पणे हि संप्लवश्शोभेत। अन्यथा सिद्ध-साधनत्वं वा, सर्वत्र सिद्धसाधनत्वदोषोच्छेदो वा स्यादिति भावः। अत्र—

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥

इति न्यायाचार्यसंगृहीतानां सर्वेषां हेतूनां स्थालीपुलाकन्यायेन निरस्तप्रायत्वं निगमन-व्याजेन नियमयति—तस्मादिति। नन्वनिरस्तेऽपि जगत्कर्तुरनुमाने परतत्त्वपरमहित-परमपुरुषार्थेषु शारीरकं निष्प्रतिघातम्। अतः किमत्र तन्निरासप्रयासेनेत्यत्राह—शास्त्रेति यदि जगत्कर्तुरनुमानं न प्रतिषिध्येत तदा मतान्तरप्रामाण्यव्यवसायिनः कस्यचित् इदं सर्वमसृजत, यतो वा इमानि भूतानि जायन्त इत्यादिवाक्यानामनुमान-सिद्धानुवादित्वं मन्यमानस्य जगत्कर्तृवादिवाक्यानामनुमानविरुद्धापस्थापकत्वे मूलघाति-त्वात्, तत्सिद्धमात्रबोधने नैरपेक्ष्यात्, सिद्धांशेऽनुमानानाघ्रातासंभवाच्च, सिद्धपरवाक्य-विमर्शो न कार्य इति मोहः स्यात्; अतस्तदनुजिघृक्षयाऽनुमानं निरसनीयम्।

किञ्च विश्वकर्तुरनुमेयत्वं मन्यमानस्य तत्तद्वादिकल्पितैर्हेतुभिर्बाधद्वयमापद्येत; ब्रह्मण आनन्द इत्याद्युक्तप्रामाणिकत्यागात्, अप्रामाणिकायथापूर्ववेदकल्पनस्वीकाराच्च। यद्वा प्रागुक्ताभ्यां प्रतिप्रमाणतर्काभ्यां बाधद्वयम्। अथवा अनुमितेस्सोपाधिकत्वादि-कारणदोषात् साक्षादकर्तृकत्वानुमानेन साध्यप्रतिषेधाच्च। अपि वा विश्वकर्तर्यनुमानं प्रवर्तमानं स्वयं तावन्नित्यप्रयत्नं समानन्यायतया स्वोपस्थापितानुमानेन नित्यशरीरादि-रहितत्वं चोपस्थाप्यागमविषयमपहरेत्।

तस्मादेवंविधानेक बाधशङ्काऽननुतये।
नित्यनिर्दोषशास्त्रैकवेद्यत्वमिह सूचितम्॥

शब्दप्रमाणके तस्मिन् यथाशब्दं व्यवस्थितिः।
सर्वैरनतिलङ्घ्येति न शङ्कातङ्कसंभवः॥

नन्वीश्वरानुमानदूषणे—

विद्याचोरो गुरुद्रोही वेदेश्वरविदूषकः।
त एते बहुपाप्मानस्सद्यो दण्ड्या इति श्रुतिः॥

इति शास्त्रविरोधः स्यादिति चेन्न; अनुमानदूषणेऽप्यागमात् तत्सिद्धेः। अन्यथा अस्मदादिप्रत्यक्षवेद्यत्वनिषेधेन तवापि तद्दूषकत्वप्रसङ्गः—

आगमेनानुमानेन ध्यानाभ्यास[रसेन]वशेन च।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥

इत्याप्तोक्तिः कथम् ? इत्थम्—श्रवणमननध्यानानां योगहेतुत्वस्य विवक्षितत्वात्। मननं चात्रानुग्राहकयुक्तिभिः स्थिरीकरणम्; तदेवात्र श्रवणानन्तरभावितया अनुमानशब्देन ग्रहीतुमुचितम्; अनुग्राहकयुक्तय एव वा, यस्तर्केणानुसन्धत्त इति स्मरणात्। तर्कानुमानयोरदूरविप्रकर्षात्समाख्याविपर्यासश्च दृष्ट इति ॥ २३ ॥

---

आनन्द०—आक्षेपसंगतिमभिप्रेत्याह—**अथेति**। **हेतुचिन्तावसर इति**। बुद्धिसरेऽनुमानचिन्तावसर इत्यर्थः। ननु तत्र केवलव्यतिरेकिमात्रं दूषितं न त्वीश्वरसाधकव्यतिरेकीत्यत्राह—**अयं भाव इति**। सामान्यदूषणमेव विशेषस्यापि दूषणमिति भावः। कथमत्र व्यर्थविशेषणत्वमित्यत्राह—**तथा हीति**। सर्ववित्त्वेनेश्वरसिद्धिरिति भावः। **तथाऽपीति**। तथा च नेश्वरसिद्धिरिति भावः।

ननु नित्यज्ञानवत्पूर्वकं कादाचित्कत्वादिति व्यतिरेकप्रयोगेन जीवेनान्यथासिद्धिरित्यत्राह—**एवमिति**। नित्यत्वादेर्व्यर्थत्वादिति भावः। सर्ववित्पूर्वमित्यत्रैव पक्षे सिद्धसाधनमित्याह—**न च विशेषणेऽपीति**। सर्वशब्दस्य समस्तवस्तूपस्थापकत्वादिति भावः। **अन्यथेति**। साध्यज्ञानस्य तद्विशेषज्ञानाभावादसंभवेन व्याप्तिग्रहायोगादिति भावः। ननु विशेषेण सर्ववित्पूर्वकत्वे साध्ये न सामान्येन सर्वविदमादाय सिद्धसाधनमिति शङ्कते—**विशेषत इति**। **विशेषाणामपीति**।

ननु सर्वत्वेन सर्वविशेषज्ञानेऽपि तत्तद्विशेषप्रकारकसर्वज्ञानस्य विवक्षितस्याभावात् कथं सिद्धसाधनमिति चेन्न; प्रमेयवत् सर्वमित्यादौ तथाऽपि सत्त्वात्। ननु तत्तद्विशेषप्रकारकसंशय विरोधिविशेषप्रकारकत्वं विवक्षितमिति चेन्न। तथाऽपि तादृशसंशयविरोधित्वेन तत्प्रसङ्गस्य दुर्वारत्वात्। ननु यावत्संशयविरोधितादृशज्ञानवत्त्वं विवक्षितम्, उक्तज्ञानं तु प्रमेयवन्न वेति संशयविरोधि, न तु तत्तद्विशेषप्रकारकसंशयविरोधि, न च प्रमेयत्वेन तत्कोटिकस्संशयो वा प्रसिद्धः, येन तद्विरोधितामादायातिप्रसङ्गस्स्यादिति चेत्। अत्राहुः—किमत्र संशयमात्रविरोधित्वं विवक्षितम्; उत समानाधिकरणसंशयविरोधित्वम्; नाद्यः असिद्धः। अन्यथा संशयमात्रोच्छेदापत्तेः। न द्वितीयः—ईश्वरस्य दोषाभावेन संशयाभावात् बाधापत्तेः। न समानकालेन संशयासमानाधिकरणज्ञानपूर्वकत्वं साध्यं; तथात्वेऽप्यप्रसिद्धेस्तादवस्थ्यात् सर्वविशेषणवैयर्थ्याच्चेति। **योगिभिरिति**। योगजधर्मजन्यसाक्षात्कारसत्त्वादिति भावः। **स्मृतीति**। **स्मृतिर्विष्णुस्मृतिरित्येके**। स्मृतीतितन्त्रविशेषणम्। **पञ्चरात्रादीत्यपरे**। **कल्पादाविति**। घटादिशब्दव्युत्पादनार्थं प्रयोज्यप्रयोजकभावेन प्रयुक्तानि घटमानयेत्यादीनीत्यर्थः।

नन्वीश्वरसिद्धेः पूर्वं सर्वज्ञप्रणीतत्वमसिद्धमिति कथमसाधारण्यमिति चेन्न। तर्हि तद्वदेव सर्वज्ञाप्रणीतत्वेऽप्युपपत्तेरप्रयोजकत्वात् साध्याप्रसिद्धेश्चेति भावः। **संग्राहकान्तरं चेति**। नन्वीश्वरप्रणीतत्वादिकं संग्राहकमिति चेत्, न। तत्सिद्धेः पूर्वं तदसिद्धेः; तदाह -**जीवेतरेति**। आश्रयासिद्धिमुक्त्वा स्वरूपासिद्धिमाह—**तद्विहेति**। अत्र किं सर्वज्ञप्रणीतत्वं हेतुरुत वेदत्वं स्वरूपासिद्धेः। न द्वितीयः—भागासिद्धेरसाधारण्यवदाभासत्वं दुर्लङ्घ्यमित्यर्थः। **वक्ष्यमाणैरिति**। बुद्धिसर इति शेषः। ननु निगमजन्यज्ञानरहितानां व्याप्तिज्ञानाभावात्कथमीश्वरानुमानमित्यत्राह - **अविदितेति**। नाळिकेरद्वीपे वह्नेरप्रसिद्धेः न तत्र वह्न्यनुमानमिति भावः। **संप्लववादे** संवादपक्षे। **मानान्तरेति**। संप्लवेऽप्यविदिताकारो वक्तव्य इत्यर्थः।

ननु 'कार्यायोजन' इत्यादिना संगृहीतानि सर्वानुमानानि न दूषितानीत्यत्राह—**अत्रेत्यादिना**। ननु सिद्धपरवाक्यानामपि कार्यत्वभ्रान्तिनिरासश्चेत् प्रयोजनं तर्हि पुरुषाभ्रान्त्यनुसारेण सूत्रं कर्तव्यमिति न व्यवस्था स्यादित्यत्राह—**किं चेति**। निरतिशयानन्दबाधो वेदनित्यत्वबाधश्चेति द्वयमापद्येत। ईश्वरसाधकस्य तदुपजीविनो वा बलवत्त्वादिति भावः। ननु कर्तृमात्रानुमानेऽपि नोक्तबाधद्वयं, श्रुतिविरोधादित्यनुमान एव बाधद्वयमित्यभिप्रायेणाह—**यद्वेति**। तथा चानुमानमेव न संभवतीत्यर्थः। अव्यवधानकारकाप्रकृतपरित्यागेन हेतुरित्याभिप्रायेणाह—**अथ वेति**। किं चानुमानाङ्गीकारे श्रुतेर्बाधः स्यादित्याह - **अपि वेति**। **नित्यशरीरादिरहितत्वं** सर्वदा शरीरशून्यत्वमित्यर्थः। शास्त्रैकवेद्यत्वे नैते दोषा इत्याह - **तस्मादिति**। कथमेते दोषा न सन्तीत्यत्राह—**शब्देति**। नन्वीश्वरानुमानदूषणमीश्वराभाववादे पर्यवस्यतीति नास्तिकत्वदोषः स्यादित्याशङ्क्य परिहरति—**नन्वित्यादिना**। **आगमादिति**। नास्तिकत्वं नास्तीति भावः।

ननु 'आगमेनानुमानेन' इत्यनुमानवेद्यत्वं योगशास्त्रसिद्धं विरुध्येतेति शङ्कामनूद्य परिहरति—**आगमेनेति**। अनुमानशब्दप्रयोगे निमित्तमाह—**तर्केति**। 'अनुमानानुगृहीतं च प्रमाणं प्रगल्भते' इति **न्यायभाष्यदर्शनादित्यर्थः**। यद्वा—अदूतरविप्रकर्षमात्रेण ताच्छब्द्यमित्याह—**समाख्याविपर्यासश्चेति**। गङ्गायां घोष इत्यादावित्यर्थः। तस्मादुल्लोकभूमेति मूलस्य लोकविलक्षणमित्यर्थः॥ २३॥

---

**अक्षरार्थ०**—नन्वन्वयिहेतौ यावत्सपक्षानुगतधर्मसंभवेन सोपाधिकत्वशङ्कासंभवेऽपि केवलव्यतिरेकिहेतौ सपक्षाभावान्न तच्छङ्क्यमित्यत्राह **सर्वस्येति**। **अवीतहेतोरिति** केवलव्यतिरेकिण इत्यर्थः। **स्वप्रसङ्ग इति** हेतुनिरूपणावसर इत्यर्थः। **निरसनमिति** केवलव्यतिरेकिणि साध्याप्रसिद्ध्या तदभावज्ञानासंभवेन तद्व्यासेर्दुग्रहत्वोक्तेः। केवलव्यतिरेकिसामान्यमग्रे निरसिष्यत इति भावेन सर्वस्येति द्रक्ष्यसीति चेत्युक्तम्।

ईश्वरसाधकव्यतिरेकिविशेषस्य तु सर्वं कार्यं सर्ववित्कर्तृपूर्वकं कार्यत्वादित्यादेः सर्वपदादेः व्यभिचारवारणप्रयोजनाभावात् व्यर्थविशेषणत्वं, तत्त्यागे जीवमादाय सिद्धसाधनमित्यादि दूषणतोऽपि निरसनं भवतीति भावः।

ननु कार्याणां सर्वेषां सर्वज्ञत्वपूर्वकत्वव्याप्तिः श्रुत्या सिद्ध्यतीत्यत्राह **श्रुत्येति**। **अलमिति**। अनुमितिसाध्यविश्वकर्तुरपि शास्त्रेणैव सिद्धेरिति भावः। सिद्धेऽपि मानान्तरस्य प्रवृत्तिस्स्यादित्यत्राह—**निष्फल इति**। मानान्तरसिद्धे वस्तुनि प्रकारान्तरबोधने सति हि संप्लवः मानान्तरस्यापि समुच्चय उचितस्स्यात्। अन्यथा सिद्धसाधनादेरुच्छेदस्स्यादिति भावः। निगमयति **तस्मादिति**। एवं स्थालीपुलाकन्यायेन सर्वेषामीश्वरानुमानानां निरस्तप्रायत्वादित्यर्थः। **उल्लोकभूमा** सार्वज्ञ्याशरीरत्वादिविशिष्टः। किमर्थमीश्वरानुमाननिराकरणमित्यत्राह—**शास्त्रेति**। अनुमानानिराकरणे आनुमानिक एवेश्वर न शास्त्रोक्त इति कस्यचिन्मोहस्स्यात्। तेनोपजीव्यानुमान्यविरोधेन नित्यशरीरादिबोधकशास्त्रस्य बाधश्च स्यात्, तदुभयपरिहाराय शास्त्रयोनित्वसूत्रे शास्त्रैकप्रमाणकत्वमुक्तमिति भावः॥ २३॥ इति **ईश्वरानुमानभङ्गः**॥

---

**प्राज्ञाधिष्ठानशून्यं न तु परिणमितुं शक्तमव्यक्ततत्त्वं**
**वास्यादौ व्याप्तिसिद्धेरिति यदभिहितं सांख्यसिद्धान्तभङ्गे।**
**सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणान् प्रत्युपात्तः प्रसङ्गो**
**नेष्टे तत्सिद्ध्यसिद्ध्योरनुमितिरिति खल्वाशयस्सूत्रकर्तुः॥ २४॥**

**सर्वार्थ०**—तथाऽपि सांख्याधिकरणविरोधः स्यात्; तत्र हि परोक्तानां पक्षदृष्टान्तभूतानामचेतनानां संप्रतिपन्नवत् प्राज्ञाधिष्ठितत्वं सूत्रभाष्याभ्यां साध्यते; अतश्शास्त्रयोनित्वसूत्रमन्यपरं नेतव्यमिति शङ्कायां तावद्विरुद्धोक्तिमनुवदति—**प्राज्ञेति**॥ तात्पर्यवृत्त्या विरोधं शमयति—**सोऽपीति**। तात्पर्यभेदं विवृणोति—**नेति**। प्राज्ञानधिष्ठितत्वमनुमातुं न शक्यमिति सांख्याधिकरणतात्पर्यम्। शास्त्रयोन्यधिकरणस्य त्वधिष्ठितत्वं नानुमातुं शक्यमिति। अतस्साधकबाधकाभावे शास्त्रं निरङ्कुशप्रसरमिति सूत्रकाराभिप्राय एव भाष्ये दर्शित इति॥ २४॥

---

**आनन्द०**—आक्षेपसंगतिं दर्शयति—**तथाहीति**। **मूलं—नेष्टे तत्सिद्ध्यसिद्ध्योरित्यादि**। प्राज्ञव्युदासे प्राज्ञानधिष्ठितत्वेऽनुमानेन साध्यमाने अनुमितिर्नेष्टे न सिध्यति। प्राज्ञः सिद्ध्यति नेति प्राज्ञसिद्ध्यसिद्धिभ्यां व्याघातात् प्राज्ञानधिष्ठितत्वसाधने प्राज्ञाधिष्ठितत्वं साहचर्यादेव साधयितुं शक्यमिति सत्प्रतिपक्षः स्यादित्यर्थः। सूत्रकर्तुरिति 'जनिकर्तुः' इति ज्ञापकात् समासः॥ २४॥

अक्षरार्थ०—अत्र सांख्याधिकरणविरोधमाशंक्य परिहरति प्राज्ञेति। तत्र परोक्तानां पक्षदृष्टान्तभूतानामचेतनानां संप्रतिपन्नवास्यादिवत् प्राज्ञाधिष्ठितत्वं सूत्रभाष्यादिषु साध्यते। शास्त्रयोनित्वाधिकरणे अनुमाननिराकरणे तद्विरोधस्स्यात्। अतः शास्त्रयोनित्वसूत्रं शास्त्रस्य योनिरिति व्युत्पत्त्या शास्त्रं प्रति हेतुत्वपरं व्याख्येयमित्यत्राशंकितुराशयः। अव्यक्ततत्त्वम् प्रकृत्याद्यचेतनं प्राज्ञाधिष्ठानं विना न परिणमितुं शक्नुयादित्यर्थः। अचेतनं चेतनाधिष्ठितमेव कार्यंकरमिति व्याप्तिः वास्यादौ लोकसिद्धेत्याह—वास्यादाविति। परिहरति सोऽपीति तत्रोक्तः अनुमानप्रयोग इत्यर्थः। अनुमानादीश्वरनिराकर्तॄन् प्रति प्रतिप्रयोग इत्याह—प्राज्ञेति। कथं विरोधपरिहारइत्यात्रह नेष्ट इति। ईश्वरस्य साधने बाधने वा अनुमानं न समर्थमिति सूत्रकाराशयइति भावः। एवमुभाभ्यामधिकरणाभ्यां शब्दप्रमाणलक्षणघटकं असन्निकृष्टत्वं ब्रह्मणः उपपादितं भवति। यथाहुः।

असन्निकृष्टवाचा च द्वयमत्र जिहासितम्।
ताद्रूप्येण परिच्छित्तिः तद्विपर्ययतोऽपि वा॥ इति।

येन रूपेण शास्त्रेण योऽर्थो बोध्यते तेन रूपेण तद्विपर्ययेण वा मानान्तरेणानधिगतश्चेत् तस्मिन् शास्त्रं प्रमाणं भवेदिति भावः॥२४॥

॥ इति शास्त्रयोन्यधिकरणसांख्याधिकरणविरोधपरिहारः॥

---

अस्यैवाचिन्त्यशक्तेरखिलजनयितुस्स्यादुपादानभाव-
स्सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या।
निष्कृष्टेऽस्मिन् शरीरिण्य[खि]मलगुणगणालङ्कृतानन्दरूपे
संपद्यन्ते समस्तास्समुचितगतयो निर्विकारादिवावाः॥ २५॥

सर्वार्थ०—श्रुतिसिद्धस्य विश्वकर्तुः श्रौतमुपादानत्वमपि प्रस्तौति—अस्येति॥ अखिलजनयितुरस्यैवेति विरोधशङ्कासूचनम्; अचिन्त्यशक्तेरिति परिहारनिदानगर्भम्। विकारापुरुषार्थनिषेधकशास्त्रविरोधशान्त्यै सर्वोपादानत्वं बाल्युवपरिणतिवत् सद्वारकमित्याह—सूक्ष्मेति। सूक्ष्मस्थूलत्वोक्तिर्हेतुकार्यभावघटनार्था। अनेकधेत्युक्त्या तम एकीभवतीत्यादिप्रसिद्धप्राच्यावस्थातो वैषम्यं व्यज्यते। उपादानतया विकाराद्याश्रयस्य कथं तदभावोपदेश इत्यत्राह—निष्कृष्ट इति॥ २५॥

---

आनन्द०—प्रसङ्गसङ्गतिमाह—श्रुतिसिद्धस्येति। विरोधशङ्केति। कर्तुरुपादानत्वविरोधशङ्केत्यर्थः। परिहारेति। अचिन्त्यशक्तित्वादेव कर्तृत्वमुपादानत्वं च युज्यते। लोके कर्तुरनुपादानत्वं शक्त्यभावनिबन्धनमिति भावः। निष्कलं निष्क्रियमिति विकारनिषेधशास्त्रं; कृत्स्नो रसघन एवेति कृत्स्नरसघनशब्दाभ्यां पुरुषार्थानन्दतायोगव्यवच्छेदकाभ्यां तदन्य तद्विरोधिनिषेधलाभात् पुरुषार्थनिषेधकं शास्त्रम्। प्राच्यावस्थात इति। च्विप्रत्ययेन भूतपूर्वैकत्वावस्थावगमादिति भावः। ननु सद्वारकत्वेनोपादानत्वे भूतलस्य घटाद्युपादानत्वप्रसङ्गः। न च बालस्थविरादौ कथमिति वाच्यम्।

तत्रापि शरीरस्यैव उपादानोपादेयभावादिति चेन्न। यदि साक्षात्तदाधारत्वेनोपादानत्वं तदाऽपि भूतलस्य घटाद्युपादानत्वप्रसङ्गः। न च समवायसम्बन्धेन तदाश्रयत्वं विवक्षितमिति न दोष इति वाच्यम्। तथाऽप्यपृथक्सिद्धयोरेव समवाय इति कार्यकारणयोरपृथक्सिद्धयोरुपादानोपादेयभावोऽस्तु। यद्यत्राप्यतिप्रसक्तिशङ्का सा समवाये अपीति तथैव परिहार्या। साक्षात्त्वविशेषणं तु व्यर्थम्। यच्च शरीरस्यैवोपादानत्वमिति तद्व्यवहारविरोधान्निरस्तम्। बालो देवदत्तः स्थविरोऽभूदिति हि विशिष्टे व्यवहारः 'निष्कृष्टेऽस्मिन् शरीरिणि' इत्यादिमूलस्य प्रकृतिगतत्वाद्विकारस्य नात्मस्वरूपे साक्षाद्विकार इति भावः। आदिशब्देनानन्दाद्युपदेशपरिग्रहः ॥२५॥

---

**अक्षरार्थ०**—ईश्वरे अनुमाननिरसनेन शास्त्रैकवेद्यत्वस्थापनात् तत्र निमित्तत्वमिव शास्त्रादुपादानत्वमपि निराबाधं सिद्धयतीत्याह—अस्येति। शास्त्रयोनेरित्यर्थः। उभयविधकारणतानिर्वाहायोक्तमचिन्त्यशक्तेरिति। निमित्तकारणतामाह—अखिलजनयितुरिति। एवकारेण विरोधशंकासूचनम्। उपादानत्वेन परिणामोपगमे निर्विकारत्वश्रुतिविरोधस्स्यादित्यत्राह—सूक्ष्मेति। जीवस्य शरीरद्वारा बाल्युवादिपरिणामवत् अव्यक्तादिशरीरद्वारकपरिणामोपगमात् शरीरिणि निष्कृष्टे ब्रह्मणि निर्विकारत्ववाचां प्रवृत्तेः न कश्चिद्विरोध इति भावः। सूक्ष्मत्वं कारणावस्थशरीरसामान्यसाधारणं नामरूपविशेषराहित्यम्। स्थूलवृत्त्येति। कार्यावस्थसामान्यस्य साधारणं नामरूपविशेषवत्त्वमेव स्थूलत्वम्। तत्र कार्यावस्थायां तम एकीभवतीति प्राच्यकारणावस्थावैषम्यसूचनायानेकधेत्युक्तम्। तेजोऽबन्नादिना बहुभवनेनेत्यर्थः। निष्कृष्टे चिदचिद्विनिर्मुक्ते केवले। अस्मिन् कारणे ब्रह्मणि। शरीरिणीति निमित्तोपादानत्वोभय (निर्विकारतादि) निर्वाहानुगुणं विशेषणम्। शरीरद्वारा परिणामोपगमादुपादानत्वं साक्षात्परिणामानभ्युपगमात् निर्विकारत्वं, अधिष्ठातृत्वात् संकल्पयितृत्वात् निमित्तत्वं च सम्यगुपपन्नमिति भावः। तथा च सूत्रितं प्रकृतिश्चेत्यादि। विशिष्टस्य कारणत्वेऽपि विशेष्यस्य ब्रह्मणः हेयप्रत्यनीककल्याणगुणाकरानन्दरूपत्वमक्षतमित्याह—अमलेत्यादिना ॥२५॥ इति निर्विकारस्याप्युपादानत्वम् ॥

---

कर्तोपादानमेव स्वसुखमुखगुणे स्वप्रयत्नप्रसूते
संयोगं स्वस्य मूर्तैस्स्वयमुपजनयन्नीश्वरोऽप्येवमिष्टः।
सर्वोपादानभावस्तत इह घटते सर्वकर्तर्यमुष्मिन्
सर्वश्रुत्यैकरस्यप्रणयिभिरुचितं द्वारमत्राभ्युपेतम् ॥ २६ ॥

**सर्वार्थ०**—ननु यद्यस्य निमित्तं न तत्तस्योपादानमिति स्थिते साक्षात्सद्वारकं वा कथमुपादानत्वमित्यत्र परप्रक्रिययेव विरोधं परिहरति—कर्तेति ॥ जीवस्तावत्तैस्तैरुपायैः स्वसुखादीनुत्पादयति, तेषां समवायिकारणं च भवतीति मन्यसे; तावदेव च निमित्तोपादानत्वम्। ईश्वरेऽपि तदुभयं क्वचिदङ्गीकरोषीत्याह- संयोगमिति। नचात्रोपा-

दानत्वं भाक्तम्; विपरिवर्तस्य सुवचत्वात्। अतः प्रकृत्यधिकरणसाधितं न प्रतिक्षेप्तुं शक्यमित्याह—**सर्वेति**। तर्हि (सोऽकामयत तदात्मानं स्वयमकुरुत) इत्यादिकं स्वरूपपरिणामवादिब्रह्मदत्तभास्करादिमतभेदैरव्यवहितमेव किं न निरुह्यत इत्यत्राह—**सर्वश्रुतीति**। अन्यथा जीवानां प्रतिकल्पमुत्पत्तिप्रलयौ स्यातामू; अकृताभ्यागमः कृतविप्रणाशो विषमसृष्ट्यादिभङ्गश्च भवेयुः। ब्रह्मणस्तदंशस्य वा सर्वेश्वरस्य बहु स्यामिति सङ्कल्पयतोऽनादिजीवद्वारा क्लेशाद्यन्वयः, त्रिगुणांशद्वारा विकारान्वय इति पक्षेऽपि सर्वदोषाकरत्वं विरुद्धधर्माध्यासश्च दुस्त्यजः। अतश्चिदचिच्छरीरद्वारा बहुभवनादिकमिति कृत्स्नविद्भिर्निरुह्यत इति ॥ २६ ॥

---

**आनन्द०**—आक्षेपसंगतिमाह—**नन्विति**। **विपरिवर्तस्येति**। निमित्तत्वमेव भाक्तं कुतो न स्यादित्यर्थः। **आदिशब्देन** मायिमतादिसंग्रहः। **अव्यवहितमेवेति**। तत्रैव स्वारस्यादिति भावः। निरुह्यत इति निपूर्वो रुहिः कल्पनार्थः। तेषां पक्षे विरोधमाह—**अन्यथेति**। **जीवानामिति**। 'न जायते' 'नित्यो नित्यानां' इत्यादिजीवविषयश्रुतिविरोध इत्यर्थः। **विषमेति**। तद्धेतुकर्माभावादिति भावः। **ब्रह्मणस्तदंशस्य** वेति मतभेदेन बोध्यम्; जीवाभिन्नत्वादिति भावः। **त्रिगुणांशद्वारेति**। यादवभास्करमते त्रिगुणस्य ब्रह्मांशत्वादिति भावः। **अत इति**। तथा च स्वरूपे उक्तदोषाभावादिति भावः ॥ २६ ॥

---

**अक्षरार्थ**—ननु निमित्तकारणस्योपादानादिभिन्नत्वेन लक्षणात् कर्तुर्निमित्तकारणत्वेन संप्रतिपन्नत्वादुपादानत्वं न घटेतेत्यत्राह—**कर्तेति**। प्रत्यगात्मनो यस्सुखादिर्गुणः स्वप्रयत्नेन साधितः तत्र तत्साधकप्रयत्नवत्त्वेन कर्तृभूतः प्रत्यगात्मा समवायेनाश्रयतयोपादानमपीति परैरपि स्वीक्रियते, तथा ईश्वरश्च स्वस्य विभुत्वेन स्वस्यावश्याभ्युपगन्तव्यसर्वमूर्तसंयोगे सामान्यकारणतया निमित्तभूत आश्रयतयोपादानमपीति च स्वीकृतः। अत उपादानभिन्नत्वमिति निमित्तकारणलक्षणे उपादनताभिन्नकारणतावत्वमेव विवक्षणीयमिति कर्तुरुपादानत्वं न दुर्घटमित्याह—**सर्वेति**। **तत इति** निमित्तकारणस्योपादानभिन्नत्वनियमाभावादित्यर्थः। व्याप्त्यभावेन सर्वकर्तृत्वेन निमित्तकारणे तत्त्वेन अमुष्मिन् ईश्वरे उपादानभेदो न साधयितुं शक्य इति भावः।

तर्हि यादवप्रकाशादिवत् साक्षादेव ब्रह्मणः परिणामोऽभ्युपगम्यतां किं द्वारकल्पनयेत्यत्राह **सर्वश्रुतीति** साक्षात्परिणामित्वोपगमे निर्विकारत्वश्रुतिविरोधप्रसङ्गात् सर्वश्रुति प्रामाण्यवादिभिः तदविरोधाय बालयुवभाव इव शरीरभूतचिदचिद्द्वारावलम्बनमुचितमभ्युपगम्यत इति भावः। अन्यथा जीवानां प्रतिकल्पमुत्पत्तिप्रलयप्रसङ्गाव अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गाच्च स्रष्टुः वैषम्यनैर्घृण्यप्रसङ्गो दुर्वारः स्यात्॥२६॥

**इति ईश्वरस्य जगन्निमित्तोपादनत्वोपपत्तिः ॥**

साविद्यं केऽपि सोपाधिकमथ कतिचिच्छक्तिभिर्जुष्टमन्ये
स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम् ।
नित्यत्वं विग्रहत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तु-
स्तद्वैशिष्ट्यं च शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः ॥२७॥

**सर्वार्थ०**—एवं वैशिष्ट्यादुपादानमपि कर्तैव । अन्यैरपि त्रय्यन्तवादिभिर्यत्किंचिद्वैशिष्ट्यमङ्गीकृतमित्याह—**सावद्यमिति** ॥ अद्वैतव्याख्यायिनः खल्वाहुः—अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभवतो विवर्ता यस्यैते वियदखिलतेजोबवनयः ॥ इति । **भास्करीयास्तु**—चिदचिदंशविभक्तं ब्रह्मद्रव्यमचिदंशेन विक्रियते, तद्विकारोपहितेन चिदंशेन संसरतीति । **यादवप्रकाशीयास्तु**—सर्वात्मकं सद्रूपं ब्रह्म चिदचिदीश्वररूपांशत्रयशक्तिविशिष्टं समुद्र इव फेनबुद्बुदतरङ्गप्रभेदेन सावान्तरभेदत्रिविधव्यष्टिभावेन परिणमते इति । एवमद्वितीयश्रुत्यविरुद्धान्यविद्योपाधिशक्तिरूपविशेषणानि चेद्विचित्रचिदचिदुपादानतोपयोगीनि स्वीक्रियन्ते, तदा श्रुतिस्मृतिशतसिद्धस्वरूपविशेषणाभ्युपगमे कः प्रद्वेषः ? स्वपक्षस्य प्रमाणतस्सिद्धिं विरोधाभावादौचित्यातिशयं च प्रपञ्चयति—**नित्यत्वमिति** । कोऽपराधोऽतिरिक्त इत्यनेन विशेषणपरिग्रहमात्रमपराधश्चेत् सर्वेषामपि समानदोषत्वम्, अतिरिक्तापराधोऽपि तेषामेवेति व्यज्यते ॥ २७ ॥

---

**आनन्द०**—ननूपादनत्वसिद्ध्यर्थं वैशिष्ट्यं जगत्कर्तुरङ्गीक्रियते चेत् 'एकमेवाद्वितीयं' इत्यादिश्रुतिविरोध इत्याशङ्क्य परिहरति—**एवमिति** । प्रसङ्ग एव सङ्गतिरित्यन्ये । कर्तैवोपादानमपीत्यर्थः । **अविद्याद्वितयं** मूलाविद्यातूलाविद्यारूपेणाविद्याद्वितयम् । मायाविद्यारूपेण द्वितयमिति केचित् । **प्रभवतः** उत्पद्यमानस्य । **चिदचिदंशविभक्तमिति** । चैतन्यमुपाधिश्च द्वितयं ब्रह्म, उपाधिपरिणामविशिष्टतया चिदंशस्य जीवादिभाव इत्यर्थः । **अतिरिक्तापराधोऽपीति** । साविद्यत्वविकारत्वाद्यपराध इत्यर्थः । मूले प्रकृतिजीवयोर्नित्यत्वं शरीरत्वं चेश्वरापेक्षयेत्यर्थः । **शास्त्रप्रथितं**-शास्त्रे 'यस्य पृथिवी शरीरं' यस्याव्यक्तं शरीरं 'यस्यात्मा शरीरं' इत्यादिना प्रतिपादितमित्यर्थः ॥ २७ ॥

---

**अक्षरार्थ**—पूर्वं कर्तोपादानमेवेत्युक्तमिदानीमुपादानं कर्तैवेत्युच्यते । कोऽनयोर्भेद इति न शङ्कनीयं उपादानत्वसाधनकर्तृत्वसाधनयोर्विषय भेदस्य स्फुटत्वात्, स्वाभिमतं कर्तृत्वमभ्युपगम्य विशिष्टोपादानत्वमाक्षिपन्तं तार्किकं प्रति कर्तोपादानमेवेति पूर्वं साधितम् । इदानीं स्वाभिमतं विशिष्टोपादानभावमुपगम्य कर्तृत्वादिविशेषनिरासकानद्वैतिनः प्रति वैशिष्ट्येनोपादानं कर्तैवेति साध्यत इति प्रतिपक्षिभेदाच्च । केऽन्ये विशिष्टमुपादानं मन्यन्ते कानि वा विशेषणानीत्यत्राह—**साविद्यमिति** अविद्याविशिष्टमुपादानमिति शाङ्कराः । सोपाधिकमुपादानमिति भास्करादयः । शक्तिभिर्जुष्टमिति यादवाद्याः । सृष्टेः प्राग्विशेषणानामपि सत्वोपगमे एकाद्वितीयादि

श्रुतेः कथमुपपत्तिरित्यत्राह—तद्विशिष्टेति अविद्यादिविशेषणविशिष्टेत्यर्थः । एकाद्वितीयत्व निर्विकारत्वोपादानत्वश्रवणान्यथाऽनुपपत्त्या अविद्यादीनामुपादानविशेषणत्वाभ्युपगमे श्रुतिस्मृतिशतसिद्धचिदचिद्रूपविशेषणाभ्युपगमो निराक्षेप एव स्यादिति भावः ।

एवं शास्त्रप्रमितं नित्यत्व कर्तृत्वादिकमपि ब्रह्मणि नापह्नवमर्हतीति वदतामस्माकं कोऽतिरिक्तोऽपराध इत्याह—(नित्यत्वमिति । प्रकृतिपुरुषयो) विग्रहत्वं शरीरत्वमन्तर्यामिब्राह्मणादिसिद्धम् । कर्तृत्वं विश्वस्य कर्ता भुवनस्य गोप्ता इत्यादौ सिद्धम् । तस्मादुपादानं कर्तैव भवतीति भावः ॥२७॥ इति जगत्कारणवैशिष्ट्यावश्यं भावः ॥

**ब्रह्मोपात्तान् विकारान् कतिचिदभिदधुश्चेतनाचेतनेशा-**
**न्नैतद्युक्तं यदीशादनधिकमनघं निर्विकारं श्रुतं तत् ।**
**भिन्नाया ब्रह्मशक्तेर्विकृतय इति चेद् ब्रह्मजन्यत्वभङ्गो**
**भेदाभेदोपपाद्यं सकलमिति मते सप्तभङ्गी न दूष्या ॥ २८ ॥**

**सर्वार्थ०** नन्वेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृत्तत्कार्यदृष्टान्तैस्तदुपपादनात्
ईश्वराव्याकृतप्राणैर्विराट्सिन्धुरिवोर्मिभिः ।
यत्प्रनृत्यदिवाभाति तस्मै सद्ब्रह्मणे नमः ॥

इति कात्यायनकारिकया च सद्ब्रह्मोदन्वदूर्मिभेदाश्चिदचिदीश्वरा इति निर्धार्यते, तदेतदनुवक्ति - ब्रह्मेति ॥ प्रतिज्ञाया अनन्यथासिद्धबहुश्रुत्यविरोधाद्विशिष्टैकानेकविषयविज्ञानार्थत्वात् दृष्टान्तानामप्युपादानोपादेयैक्यसंभवार्थत्वादृषिवचनस्यापि न चानृषेर्दर्शनमस्ति किंचिदिति न्यायेन विरोधाधिकरणनीत्या चानपेक्ष्यत्वात् नित्यो नित्यानां चेतनश्चेतनानाम्, अजामेकाम्, न त्वेवाहं जातु नासम्, प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीत्यादिश्रुतिस्मृतिशतदृष्टेश्चापन्यायमूलमेतदित्यभिप्रायेणाह **नैतद्युक्तमिति** । त्रिष्वपि विकारतयाऽभिमतेषु श्रुतिविरोधादयुक्तिमुपपादयति—**यदिति** ।

नारायणः परं ब्रह्मेत्यादिभिरीश्वरस्यैव परब्रह्मत्वं सिद्धम् । अतो न तत्तदुपादानम्; अवतारणपरिणत्याऽपि नेश्वरस्योपादेयत्वम्; स एव सृज्य इत्यादिकमपि वि[श्वसृष्टि]शिष्टविषयम् । स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्, न कर्मणा वर्धते नो कनीयानित्यादिभिरकर्मवश्यतया प्रसिद्धस्य न खलु निरयनिपातादिदुरत्ययदुःखकारणदुरितपराधीनानन्तजीवभावेन परिणामः । नास्य जरयैतज्जीर्यति, सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिभिर्विकारजाड्यादिविधुरतया श्रुतस्य कथं तद्विपरीतविकारागमः ? तत्र परोक्तं परिहाराभासं शङ्कते—**भिन्नाया** इति । अभिन्नत्वे परिहारगन्धाभावात् भिन्नत्वानुवादः; यदि ब्रह्मव्यतिरिक्ता तच्छक्तिर्विक्रियते तदा ब्रह्मण उपादानत्वं न स्यात् । अनादितया श्रुतस्य त्रिकस्य जन्यत्वायोगश्च न परिहृत इत्यभिप्रायेणाह—**ब्रह्मजन्यत्वभङ्ग** इति । अथ शक्तिशक्तिमतोरभेदाद् ब्रह्मण उपादानत्वनिर्विकारत्वादिकमिति परेष्टमनुवक्ति—**भेदाभेदेति** । अत्रानिष्टमाह—**सप्तभङ्गीति** । स्यादस्ति स्यान्नास्तीत्यादीनां विरोधस्फोटयात्तदुक्तिः । सर्वोऽपि परपक्षो न दूष्यः; कथंचिदभेदात्, स्वपक्षस्य परपक्षत्वेऽपि विरोधस्य दुर्वचत्वादिति तात्पर्यम् ॥ २८ ॥

आनन्द० —ननु 'यथैकस्मिन् मृण्मये पिण्डे विज्ञाते सर्वं मृण्मयं विज्ञातं स्यात्' इत्यादि दृष्टान्तानुरोधाच्चिदचितो ब्रह्मणाऽत्यन्तभेदो, दोषस्तु कथंचित्परिहार्य इति शङ्कया संगतिरित्याह—**नन्विति**। विराट्च्छब्देन जीव उच्यते अव्याकृतप्राणशब्दाभ्यां प्रकृतिस्तद्विकारश्च ब्रह्मण एव त ऊर्मय इव ऊर्मयः परिणामा इति। **निर्धार्यत इति**। **यादवभास्करीयैरिति** शेषः। **अत्र प्रतिज्ञाया इति**। एकविज्ञानप्रतिज्ञाया इत्यर्थः। **अविरोधात्**—अविरोधायेत्यर्थः। अन्यथा भेदनिर्विकारनित्यनिर्दोषत्वादिश्रुतिविरोधः स्यादित्यर्थः। यथैकेनेत्यादि दृष्टान्तविरोधं परिहरति—**दृष्टान्तानामपीति**। न हि दृष्टान्तेन न यावत्साम्यं वक्तव्यं, अपि तु सिषाधयिषिततद्धर्मवत्तया। तथा चैककारण-विज्ञानात्तदुपात्तसर्वकार्यविज्ञानस्य विवक्षितस्य साधने स्वरूपपरिणामो दार्ष्टान्तिके नापादनीय इति भावः। **कात्यायनवचनस्यान्यथासिद्धिमाह—ऋषीति**। **न चानृषेर्दर्शनमस्तीति**। किंचित् श्रुत्या विरुद्धं ऋषयो यदि वदन्ति तस्य 'विरोधे त्वनपेक्षं स्यादसति अनुमानम्' इत्यादिभिरप्रामाण्यं सिद्धमित्यर्थः। श्रुतिविरोधमेव दर्शयति—**नित्येति**। **अपन्यायमूलमेतदिति**। एतत् मतमित्यर्थ इत्यन्ये। **कात्यायन-वचनमित्यपरे**। **अवतारेति**। अवतारस्य सोऽकामयत इत्याद्युक्तजगदुपादानावस्थे-श्वरावस्थान्तरत्वादिति भावः। ननु 'स एव सृज्यः स्रष्टा च' इत्यादिवचनानां का गति-रिति चेत्तत्राह—**स एवेति**। जीवभावेन परिणामे दोषमाह—**स न साधुनेत्यादिना**। अचिद्रूपेण परिणामे दोषमाह—**नास्येत्यादिना**। स्वव्याघातं चाह—**अनादितयेति**। नन्वस्मिन्नपि पक्षे निर्विकारादिपूर्वोक्तदोषाणां सत्त्वेऽपि तदुपेक्ष्य दूषणान्तरकथनस्या-भिप्रायमाह—**स्यादस्तीत्यादि** ॥ २८ ॥

---

**अक्षरार्थ**—अथ विशिष्टोपादानोपपादनप्रकारः स्वाभिमत एव साधीयानिति दर्शयितुं परोक्तप्रकारेषु दोषान् दर्शयिष्यन् अन्तिमोक्ते शक्तिभिर्जुष्टमिति पूर्वोक्तप्रकारे संनिहितत्वात् प्रथमतो दोषान् वक्तुं तमनुवदति **ब्रह्मेति** ब्रह्मजन्यान् परिणामान् चेतनाचेतनेश्वरान् केचिदूचुरित्यर्थः।

"ईश्वराव्याकृतप्राणै विराट् सिन्धुरिवोर्मिभिः।
यत् प्रनृत्यदिवाऽऽभाति तस्मै सद्ब्रह्मणे नमः॥"

इति कात्यायनवचनादिति भावः। निरस्यति **नैतदिति** कुत इत्यत्राह **यदीति** यस्मात् ईश्वरात् अनधिकं अभिन्नं अवस्थाविशेषप्रयुक्तभेदेनापि शून्यं। परं ब्रह्म श्रुतं नारायणः परं ब्रह्मेति। अनघं अकर्मवश्यमिति च श्रुतं, न कर्मणा वर्धते नो कनीया-निति च निर्विकारमिति च श्रुतम्। "नास्य जरयैतज्जीर्यति" सत्यं ज्ञानमिति च। तस्मादित्यर्थः। अत्यन्तमभेदे उपादानोपादेयभावस्य, अकर्मवश्यत्वे कर्मवश्यजीवभावस्य निर्विकारत्वे विकारिप्रकृतिभावस्य चासंभावादिति भावः।

ब्रह्मशक्तेरेव विकारोपगमे नैष दोष इति शंकामनुवक्ति—**भिन्नाया** इति। शक्तेः ब्रह्मभिन्नत्वान्न पूर्वोक्तदोष इति भावः। तत्र दोषमाह—**ब्रह्मजन्यत्वभङ्ग** इति। शक्तिजन्यत्वे ब्रह्मजन्यत्वायोगादिति भावः। ब्रह्मशक्त्योर्भेदाभेदोपगमात् सर्वमुपपन्नमित्यत्राह—**सप्तभङ्गीति**। विरुद्धसमुच्चयोपगमे स्यादस्ति, स्यान्नास्तीत्यादि सप्तभङ्ग्या अपि उपपादनसंभवात् "नैकस्मिन्नसंभवात्" इति तद्दूषणमनुपपन्नं स्यादित्यर्थः। इदमुपलक्षणं—भेदाभेदोपगमे सर्वोऽपि परपक्षो न दूषणीय इति भावः॥ २८॥ इति ब्रह्मणश्चिदचिदीश्वरविकारवत्त्वभङ्गः॥

---

**विश्वं चित्तद्गुणानुद्भव इह घटते रत्नगन्धादिनीत्या**
**सर्वं ब्रह्मेत्यधीतं त्रिविधमिति च तद्दाशताद्यस्य चोक्तम्।**
**तस्मात् सर्वानुवृत्तं सदनवधिदशाचित्रमित्यप्ययुक्तं**
**प्रत्यक्षागोचरत्वप्रभृतिबहुभिदा वादिसर्वोक्तिबाधात्॥ २९॥**

**सर्वार्थ०**—अथ सच्चित्सुखस्वरूपं ब्रह्म सर्वत्र तादात्म्येनानुवृत्तमित्येतदनूद्य प्रत्याह—**विश्वमिति**। चिच्छब्देन स्वप्रकाशत्वं चेतनत्वं च तन्त्रेण गृह्येते। उपलम्भविरोधनिवृत्त्यर्थमाह—**तद्गुणानुद्भव** इति। रत्ने गन्धस्य नित्यानुपलम्भात्तन्निदर्शनम्। न हि नित्यगन्धानुपलम्भेऽपि रत्नस्य पृथिवीत्वं नाङ्गीकृतम्; एवमिहापि। अयं भावः—विश्वस्य स्वप्रकाशत्वं तावन्न निषेद्धुं शक्यम्; प्रत्यात्मं स्वप्रकाशत्वस्य परैरनुपलम्भेऽप्यङ्गीकारात्। चेतनत्वमपि घटादेर्न प्रत्यक्षतः प्रतिक्षेप्तुं युक्तम्; परचैतन्ये सर्वत्र योग्यानुपलम्भाभावात्। कार्याभावादपि न तत्प्रतिक्षेपः, सुषुप्त्यादिनयेन कार्याभावोपपत्तेः; स्वभावभेदाच्च नित्यानुद्भवोपपत्तिरिति। चिद्रूपत्वे सिद्धे हि चैतन्यानुद्भवः कल्प्यः; तदेव तु कथमित्यत्राह—**सर्वमिति**। सर्वं खल्विति श्रुत्या सर्वस्य ब्रह्मत्वं विधीयते, तच्च ज्ञानादिस्वभावगर्भम्। भोक्तृभोग्यादीन् प्रक्रम्य सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदिति श्रूयते। अत्र हि स्वरूपत्रैविध्यं स्वारसिकम्। ब्रह्मदाशा ब्रह्मदासा इत्यादौ च ब्रह्मण एव दाशत्वादिकमाम्नातम्। तत्र व्यवधानक्लृप्तिस्तु गुर्वी; तस्मात् स्वरूपतादात्म्येन चिदचिदीश्वरानुवृत्तं सद् ब्रह्मैकम्; तदेव त्रिनयपूर्वावान्तरव्यष्टिभिरनन्तविषमावस्थाविशिष्टमिति भावः। त्र्यात्मके ब्रह्मणि चित्रपटन्यायसूचनार्थः चित्रशब्दः। एतदपि दूषयति—**इत्यप्ययुक्तमिति**। श्रुतस्य कथमयुक्तिरित्यत्राह—**प्रत्यक्षेति**। अद्रेश्यमग्राह्यं निष्कलं निष्क्रियं शान्तमित्यादिभिः श्रुतिभिस्तावद्बाधस्सिद्धः। भेदश्रुतयश्च नाभेदं सहन्ते; शरीरात्मभावश्रुतयश्च भेदगर्भाः; अत एवाभेदश्रुतयोऽपि विशिष्टैक्यविषयाः स्थापनीयाः।

किञ्चाचेतनस्य चेतनस्य वा कस्यचिद्ब्रह्मत्वविधौ किमत्रेदं विधेयम्? सत्त्वमिति चेत्तन्न; सर्वत्र सर्वेषां सुप्रसिद्धत्वेन तदुपदेशायोगात्। कारणत्वमिति चेत्, तत्प्रातिस्विककार्यं प्रति प्रसिद्धमेव। आदिकारणत्वं तु कार्यस्य विरुद्धम्। कार्यस्य कारणद्रव्यतादात्म्यमुपदिश्यत इति चेन्न, श्रुतिसिद्धविशिष्टकारणतादात्म्ये स्वदिष्टासिद्धेः।

प्रदर्शितं च विशिष्टपरिणामस्य युष्माभिरपि दुस्त्यजत्वम् । ईश्वरत्वमंशान्तरयोरुपदिश्यत इचि चेन्न; प्रत्यक्षाद्यशेषप्रमाणविरोधात् । न च परागादेः पर्वतत्वं शरावादेर्वा मणिकत्वं संव्यवहरन्ति । साजात्यविवक्षया तथा संव्यवहारः स्यादिति चेत्तर्ह्यत्र सत्ताजात्यैवेश्वरसाजात्यमुपदिष्टं स्यात् । तत्र चानुपदेश्यत्वमुक्तमेव । एवं सर्वश्रुतिबाधाद् ब्रह्मसामानाधिकरण्यत्रैविध्यश्रुतिश्चाविरुद्धविषयतया नीयेतेति । यदपि कल्पयन्ति जीवव्यष्टिवदीश्वरव्यष्टयोऽप्यनन्ताः, तत्र प्राणमयमनोमयवाङ्मयरूपः प्रथमो विभागः, तिस्रश्च ब्रह्मादिमूर्तयस्तव्द्यष्टय इति; इदमप्येकस्यैव चैतन्यस्य स्वमायाकल्पितविचित्रान्तःकरणदर्पणप्रतिबिम्बिततया विश्वतैजसप्राज्ञरूपविभाग इति वल्गुसिवदनाद तंव्यम् ॥ २९ ॥

---

आनन्द०—पूर्वसङ्गत्या यादवमतं विशिष्य दूषयति—अथेति । ननु स्वप्रकाशानानन्दतादात्म्ये सर्वस्य तदात्मकतया सर्वत्रोपलम्भप्रसङ्गः । नचानुद्भवादनुपलम्भः; क्वचिदप्युपलम्भाभावप्रसङ्गादत आह—अयं भाव इति । किं स्वप्रकाशस्योपलम्भमात्रमापाद्यते; उत सर्वैरिति विकल्प्य नाद्य इत्याह—प्रत्यात्ममिति । चेतनत्वनिषेधासंभवप्रतिपादनेनैव द्वितीयं प्रत्याचष्टे—चेतनत्वमपीति । अयोग्यत्वान्न सर्वैरुपलम्भ इति भावः। ननु परचैतन्यस्य प्रत्यक्षानुपलम्भो भवतु न बाधकः; तथापि कार्याभावात्तन्निषेधः सिध्यतीत्यत आह—कार्याभावादपीति । ननु तर्हि सुप्त इव कदाचित्कार्यं स्यादित्यत्राह—स्वभावेति । उपलम्भानुरोधेन कल्प्यत्वादिति भावः। ननु ब्रह्मत्वविधाने विज्ञानत्वं कथमित्यत्राह—तच्चेति । 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यादिति भावः। अत्र हीति । विशिष्टैक्यविषयत्वस्य स्वारस्यादिति भावः। अस्मिन्नर्थेऽनुग्राहकं चाह—ब्रह्म दाशा इति । ननु ब्रह्मदाशत्वादिकं तच्छरीरत्वेनाप्युपपद्यत इत्यत आह—तत्र व्यवधानेति । चित्रपटन्यायेति । चिदचिदीश्वरात्मकत्वादिति भावः। बाधस्तावदिति । अद्रेश्यमिति प्रत्यक्षत्वनिषेधात् निष्कलमित्यवयवरूपविभागनिषेधात् निष्क्रियमिति विकारनिषेधात् बाध इत्यर्थः। भेदश्रुतयश्चेति । 'निरञ्जनः परमं साम्यं' 'सर्वान्कामान् ब्रह्मणो विपश्चिता' 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिनिरुपाधिकभेदश्रुतय इत्यर्थः। शरीरात्मेति । उपाध्यनिर्देशेन सार्वकालिकत्वावगमादित्यर्थः। अभेदश्रुतिनिर्वाहमाह—अत एवेति । नन्वभेदश्रुतिवशात् भेदश्रुतिरेव किमर्थमन्यथा न नेतव्या; तथात्वेऽपि भेदनिर्देशस्य स्वारस्याहानेरित्यत्राह—किं चेति । ब्रह्मत्वविधाविति । 'सदेव' इत्यादिना सत्ता ब्रह्मत्वमिति गम्यते। 'यतो वा' इत्यादिना कारणत्वम्, अन्तर्यामिब्राह्मणानुरोधेन ईश्वरत्वमिति सन्देह इति भावः। तस्मात् भेदश्रुत्यनुसार एव न्याय्य इत्याह—एवमिति । ब्रह्मदत्तो ह्येवमाह—ईश्वरस्य मनोमयवाङ्मयप्राणमयभेदेन प्रथमो विभागः। अनन्तरं ब्रह्मविष्णुरुद्ररूपेणापरो विभागः। मनोमयादयस्त्रयो मनोवाक्प्राणानामधिष्ठातारः। अधिष्ठानकाले च आदित्याग्निचन्द्रतेजस्त्रयमधिष्ठायाधितिष्ठन्ति । मनोवाक्प्राणाः

सत्त्वतमोरजःपरिणामविशेषाः' इत्यादि; तदाह—**यद्यपीति** । जीवविभागवदीश्वर-विभागोऽपीत्यर्थः । **अनादर्तव्यमिति** । मायिकल्पितवत् प्रमाणशून्यत्वात् परित्याज्य-मित्यर्थः । मायिभिरुक्तं 'अहमर्थो द्विविधो जीवरूप ईश्वररूपश्च । ईश्वररूपस्त्रिविधः सत्वरजस्तमोमयत्वभेदेन । तथा च तत्प्रतिबिम्ब ईश्वरोऽपि प्राज्ञतैजसविश्वरूपेण । ते च जाग्रत्स्वप्नसुषुप्ति प्रवर्तकाः' इति ॥ २९ ॥

---

**अक्ष०**—अत्र सच्चिदानन्दरूपं ब्रह्म सर्वत्रानुस्यूतमस्तीति मतं निरसितुं तदनुवक्ति **विश्वमिति** । **चिदिति** स्वप्रकाशं चेतनं चेत्यर्थः । तर्हि घटादिषु चैतन्यं कुतो नोपलभ्यत इत्यत्राह—**तद्गुणेति** घटादिषु चैतन्यगुणस्यानुद्भूतत्वान्नोपलंभ इति भावः । तत्र दृष्टान्तमाह—**रत्नेति** रत्नानां पार्थिवत्वेन गन्धवत्वावश्यंभावेऽपि यथा तद्गन्धस्य कदाचिदपि नोपलम्भ अनुद्भूतत्वात् तथा घटादिषु सतोऽपि चैतन्यस्य नोपलम्भ इति भावः । आदिशब्देन परात्मचैतन्यादि गृह्यते परात्मचैतन्यादेरुद्भूतत्वेऽपि अन्येषामनुपलम्भवत् घटादिचैतन्यस्याप्यस्माकं परकीयत्वेनानुपलम्भो घटत एवेति भावः । तत्र चैतन्यकार्यस्याप्यनुपलम्भस्तु सुषुप्तिन्यायादुपपन्न इति वदन्ति । उक्तार्थे किं प्रमाणमित्यत्राह—**सर्वमिति** 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या सर्वस्य ब्रह्मत्वमव-गम्यते । तच्च—सच्चिदानन्दरूपत्वं । 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इत्यत्र भोक्तृ-भोग्येश्वराणां ब्रह्मत्वं श्रूयते । तथा 'ब्रह्म दाशाः ब्रह्म दासाः' इत्यत्र दाशतादि ब्रह्मणो गम्यते । अतस्सर्वानुवृत्तं सर्वंनिरवधिकावस्थाविचित्रमित्याहुरित्याह—**तस्मादिति** तन्निरस्यति **अयुक्तमिति** कुत इत्यत्राह **प्रत्यक्षेति** अद्रेश्यमग्राह्य मिति ब्रह्मणः प्रत्यक्षाद्यगोचरत्वं श्रूयते । घटादेस्तु प्रत्यक्षादिविषयत्वमस्ति । 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्योऽभिचाकशीति' 'अस्मान्मायी सृजते तस्मिंश्चान्यो मायया संनिरुद्ध' इत्यादि चेतनाचेतनेश्वरस्वरूपभेदबोधकबहुप्रमाणबाधात् चिद-चिदीशस्वरूपैक्यमयुक्तम् । अतः सर्वसामानाधिकरण्यादेस्तत्तदन्तरात्मतया निर्वाह एव श्रेयानिति भावः ॥ २९ ॥ इति **सर्वानुवृत्तसन्मात्रब्रह्मत्वभङ्गः**॥

---

**अव्यक्तं त्वन्मतेऽपि ह्यनवयवमथाप्येतदंशा विकारा-**
**स्ते चान्योन्यं विचित्राः पुनरपि विलयं तत्र तत्त्वेन यान्ति ।**
**इत्थं ब्रह्मापि जीवः परिणमति विहृत्यर्थमित्यप्यसारं**
**स्वानर्थैकप्रवृत्तेः प्रसजति च तदा सर्वशास्त्रोपघातः ॥ ३० ॥**

**सर्वार्थ**—अन्ये तु भेदाभेदिन आहुः—निष्कलचिदानन्दजलनिधिरपारस्वानन्दा-नुभवप्रीतिजनितनानाविकार एव स्वल्पमंशं जडरूपं संकल्प्य तमेवाजडेन चिदंशान्तरेण संयोज्यानन्तविचित्रसुखदुःखानुभवभागिनं कृत्वा तद्दर्शनेन प्रीयत इति । यथोक्तम्—त्वं चिन्महोदधिरणुं तव बिन्दुमेकं कृत्वा जडं तमजडेन नियोज्येत्यादि । दृश्यन्ते जगति

कतिचिदात्मपीडावहां क्रीडां सादरमनुतिष्ठन्तः। अन्यथा कथमवतारेषु तादृशा विहाराः, कथं च स्वेच्छया कर्मफलान्यनुभवेदिति। एतदनुभाषते—**अव्यक्तमिति**॥ तदिदमसमञ्जवृत्तान्तादप्यधिकं जुगुप्सनीयतममित्याह—**असारमिति**। **अव्यक्त-निदर्शनमिह** मन्दप्रलोभनमिति कृत्वा तद्दूषयितुं परोक्तप्रक्रियामेव हेतुमाह—**स्वानर्थेति** अयं भावः—यद्यपि दुःखप्रायेषूपायेषु प्रभूतसुखार्थिनः प्रवर्तन्ते, यद्यपि भ्रान्तिज्ञानवतां पुंसां प्रहारोऽपि सुखायत इत्यादिन्यायेन बालिशैस्ताडनादिभिः क्रीडारस उपादीयते। तथाऽपि सर्वज्ञस्य सर्वशक्तेः स्वदुःखलवोत्पादनमपि न युक्तम्, किं पुनरनन्तजीवात्म-भावेन दुर्विषहदुःखोत्पादनम्? अतः क्रीडारस [कणिका] कारणिका सत्यपि निरवधिक-स्वानर्थनिमित्तनिर्मितेति, अत्र स्वानर्थैकप्रवृत्त ईश्वरः स्यात्। अवतारवृत्तान्ताः शैलूषन्यायेन निरूढा इति। अस्मन्मते तु विशेषणगता दोषा न विशेष्यं स्पृशन्ति, ऐक्यभेदाभेदानङ्गीकारात्, अकर्मवश्ये संसर्गजदोषाणामसंभवाच्चेति ॥ ३० ॥

---

**आनन्द०**—तदेकदेशिनस्तु—ईश्वर एव ब्रह्म, न तु ततोऽतिरिक्तं सन्मात्रम्। तत्तु स्वसङ्कल्पादेव चिदचिदीश्वररूपं विभागं लीलार्थं करोतीति वदन्ति; तन्मत-माह—**अन्ये त्विति**। **यथोक्तमिति**। शिलालिग्रन्थ इत्यर्थः। (तेन नानाविकारजनि-तानि सुखानि दुःखान्यालम्ब्य सर्वजगदेकतया प्रतीत इति भावान्तरम्)। नन्वीश्वरस्य सर्वज्ञस्य कथं स्वानर्थे प्रवृत्तिरित्यत्राह—**दृश्यन्ते चेति**। असमंजसः सगरस्य ज्येष्ठपुत्रो भ्रान्तबुद्धिः। ननु स्वानर्थे प्रवृत्तिरपि दृश्यत इत्यादि प्रतिपादितमेवेति कथमिदं दूषणमित्यत्राह—**अयं भाव इति**। **सर्वज्ञस्येति**। तथा चाज्ञानाशक्त्यादिप्रयुक्त-दुःखासम्भवात् कथं स्वेच्छया जीवभाव इति भावः। ननु जीवभावेन क्रीडायामीश्वरस्य कश्चिद्रसविशेषोऽस्तीति तदर्थं दुःखमपि सत्यमिति न सर्वज्ञत्वविरोध इत्यत्राह—**क्रीडारसेति**। **काकणिका** वराटिका किंचित् क्षुद्रं वस्तु। तथा च सर्वज्ञताविरोध इति भावः। अभिनयमात्रत्वान्नावतारवृत्तान्तोदाहरणं युक्तमित्याह—**अवतारेति**। ननु सिद्धान्तेऽपि सर्वाधारत्वादीश्वरस्य स दोषस्तदवस्थ इत्यत्राह—**अस्मन्मते त्विति**। जीवगतानां दोषाणां साक्षात्सम्बन्धाभावादिति भावः। तत्र हेतुः **ऐक्येति**। ननु शरीरसम्बन्धस्य जीववदीश्वरेऽपि तुल्यत्वात्तत्प्रयुक्ता दोषाः किमिति न स्युरित्यत्राह—**अकर्मवश्य इति**। मूले—**सर्वशास्त्रोपरोधः**—'न कर्मणा वर्धते नो कनीयान्' 'निर्विकारं निरञ्जनं निरवद्यम्' इत्यादिश्रुतिविरोध इत्यर्थः ॥ ३० ॥

---

**अक्ष०**—इह भेदाभेदवादिनामन्येषामन्यादृशीं कल्पनामपि निरसितुमनुवदति—**अव्यक्तमिति** निष्कलत्वेन निरवयवत्वेन श्रुतमेव ब्रह्म स्वीयं स्वल्पमंशं जडत्वेन परिकल्प्य तमेवाजडेन चिदंशान्तरेण संयोज्य अनन्तविचित्रसुखदुःखानुभवभागिनं कृत्वा प्रीयत इति ते वदन्ति। तत्र निरवयवस्याप्यांशिकविकारसद्भावे अव्यक्तं निदर्शयन्ति। अव्यक्तं प्रकृतिः। सा तु निरवयवा। तथापि विशिष्टाद्वैतिनोऽपि मते।

अथापि महदहंकारादिविकारास्तदंशा इष्यन्ते। ते चान्योन्यं विचित्रा भवन्ति। पुनरपि विलयं तत्र प्रकृतावेव प्रकृतित्वेन यान्ति। निरवयवाया एव प्रकृतेरंशा महदादिरूपेण विचित्रा भूत्वा पुनर्लीयमानाः प्रकृतिरेव भवन्तीत्युपगम्यत इत्यर्थः। तथा निरवयवं ब्रह्मापि जीवादिरूपेण परिणमतीत्याह—इत्थमिति किमर्थमित्यत्राह विहृतीति यथा बाला विहारार्थं श्रमावहमपि धावनातिलङ्घनादि कर्म कुर्वन्ति तथा ब्रह्माऽपि जीवादिर्भूत्वा सुखदुःखविकारादिभाक् विहरतीति भावः। निरस्यति असारमिति कुत इत्यत्राह—स्वानर्थेति बालिशानां स्वदुःखावहविहारप्रवृत्तिसंभवेऽपि सर्वज्ञस्य दुःखलेशस्पर्शसंभावनायामपि न प्रवृत्तिस्स्यात्। अनन्तजीवभावेन परिणामोपगमे असंख्यदुःखानुभवावश्यंभावात् स्वानर्थैकप्रवृत्तिरेव कथिता स्यात्। ततश्च 'यस्सर्वज्ञः सर्ववित्' निरवद्यं निरञ्जनं' 'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' इत्यादि सर्वशास्त्रोपघातस्स्यादित्यर्थः ॥ ३० ॥

॥ इति ब्रह्मणः स्वलीलार्थं जीवादिपरिणामवादभङ्गः ॥

---

ब्रह्मैवोपाधिभिन्नं भजति बहुविधां संसृतिं सोऽप्यनादि-
स्तस्मान्नात्यन्तभिन्नो जड इति तु मते दुःखमद्वारकं स्यात्।
सौभर्यादौ व्यवस्था न कथमुपधिभिः स्वावतारेषु चैषा
सर्वज्ञः स्वैक्यवेदी कथमनवधिभिर्जीवदुःखैर्न दुःख्येत् ॥ ३१ ॥

सवार्थ—उक्तपक्षासन्नं भास्करपक्षमुपालभते—ब्रह्मैवेति। एवकारो विशेषं व्यनक्ति—महाकाशघटाकाशादिनयादीश्वरान्निमयश्च जीवानां भेदेन गुणदोषसंकरपरिजिहीर्षया उपाधिभिन्नत्वे स्वीकृतेऽपि प्रलयदशायामुपाधिविलयेन भेदाभावे मुक्तिप्रसङ्गः। ततश्च प्राग्वदकृताभ्यागमादिः स्यादित्यत्राह—सोऽपीति। उपाधिभेद इत्यर्थः। प्रलयेऽपि प्रतिजीवमुपाधयस्सूक्ष्मरूपेण तिष्ठन्ति, ततस्तदवच्छिन्नजीवभेदस्थितिरुपपद्यत इति भावः। अनाद्युपाधिभेदस्वीकारे ब्रह्मव्यतिरिक्ताङ्गीकारः स्यादित्यत्राह—तस्मात्ति। बहुधा भिन्नोऽपि ह्युपाधिर्ब्रह्माभिन्नः, तस्मान्नाब्रह्मतत्त्वाङ्गीकृतिरिति भावः। ब्रह्मतादात्म्याविशेऽपि उपाधेस्तद्गतो वैषम्यमाह—जड इति। पूर्वापरदूष्येभ्यो विशेषं व्यनक्ति—इति तु मत इति। दुःखमद्वारकं स्यात्—न ह्यस्मन्मतवद्विशेषणद्वारकम्, न च त्वन्मते विकारवदुपाध्यंशद्वारकमित्यर्थः। औपाधिक्यां व्यवस्थितावतिप्रसङ्गमाह—सौभर्यादीति। अस्ति हि योगिनां युगपदनेकदेहभृतां तत्तद्देहोपाधिकृतभोगप्रतिसन्धानम्। स्मर्यते हि "आत्मनो वै शरीराणि बहूनि मनुजेश्वर। प्राप्य योगबलं कुर्या"दित्यादि। अवतारेषु नैकालिकावतारान्तरवृत्तान्तव्यवहारास्तत्रतत्र दृश्यन्ते। तथाऽपि कर्मोपरोधादप्रतिसन्धानमित्यत्राह—सर्वज्ञ इति। न हि नित्यसर्वज्ञतयाऽभ्युपगत ईश्वरांशः स्वात्मगतमुपाधिं तत्परिच्छिन्नं स्वांशं च स्वेनाभिन्नं न वेत्ति ततश्चाहमेवोपाधिपरवशतयाऽनन्तदुःखमनुभवामीति न कथं दुःख्येत् ॥ ३१ ॥

आनन्द०—प्रसङ्गसङ्गतिमाह—उक्तेति । ब्रह्मण एव विभागाङ्गीकारादासन्नत्वं बोध्यम् । पुंस्त्वं संसृतिपरत्वे न स्यादित्यत आह—उपाधिभेद इत्यर्थं इति । प्रलयेऽनुपपत्तिमाशङ्क्याह—सूक्ष्मरूपेणेति । अनादीति । 'एकमेवाद्वितीयं' इत्यादिना ब्रह्मान्यस्य निषेधादिति भावः । बहुधा भिन्नोऽपीति । ननु तर्हि भेदाभेदस्वीकारे यादवपक्षात् को भेद इत्यत्राह—उपाधेस्तद्वत इति । अनाद्युपाधिविभागाङ्गीकारादौपाधिकत्वेन भेद इति भावः । पूर्वापरेति । ननु यद्यपि परस्माद्दूष्याद्वैषम्यं सत्यत्वमिथ्यात्वाभ्यामस्तु; पूर्वस्मात् कथं वैषम्यमद्वारकत्वाविशेषादिति चेद्, अत्राहुः—पूर्वत्राभेदोऽपि स्वाभाविक इति स्वाभाविकाभेदात् प्रसक्तो दोषः स्वाभाविकभेदादप्रसक्तः किं न स्यादिति वचनमात्रं वक्तुं शक्यमत्र तदपि न संभवतीति वैषम्यमिति । ननु विकारवदंशपरिणतान्तःकरणवृत्तित्वेन सद्वारकत्वाद्दोषाणां सिद्धान्ततुल्यतेत्यत्राह—न चेति । औपाधिकजीवगतत्वाङ्गीकारात्, अन्यथौपाधिकजीवकल्पनावैयर्थ्यादिति भावः । वस्तुतस्तु—उपाधेरप्यभेदस्य स्वाभाविकत्वात् भेदस्य त्वौपाधिकत्वादुपाधिगतत्वेऽपि दोषस्तदवस्थ इति न सिद्धान्तसाम्यमिति भावः । ननूपाधिवशादेवाननुसन्धानं सेत्स्यतीत्यत आह—औपाधिक्यामिति । ननु योगिनां देहान्तरावच्छिन्नसुखानुसन्धाने किं मानमित्यत्राह—स्मर्यंते हीति । तत्र प्रतिसन्धानाभावे त्वन्मते शरीरबाहुल्यकल्पनं योगिनो व्यर्थम्; देवदत्तयज्ञदत्तादिन्यायेनौपाधिकभेदे लोकशरीराणामिव स्वभोगसाधनत्वायोगादिति भावः । अवतारवृत्तान्ताः—प्रतिसंधीयमाना इति शेषः । न हि नित्यसर्वज्ञतयेति । अन्यथा सर्वज्ञत्वाभावप्रसङ्गादिति भावः ॥ ३१ ॥

---

अक्ष०—अथ भास्करमतं दूषयितुमनुवदति ब्रह्मैवेति । एवकारो विरोधं द्योतयति । ब्रह्मण एवोपाधिसंबन्धेन बहुविधस्संसारो भवतीति भावः । महाकाशघटाकाशन्यायेनेश्वरात् जीवात्मनां, मिथश्चोपाधिभेदेन भेदात् गुणदोषासंकर इति ते मन्यन्ते । तथाऽपि प्रलये तदुपाधिनाशे मुक्तिरकृताभ्यागमादिर्वा स्यादित्यत्राह—सोऽपीति उपाधिभेद इत्यर्थः । प्रलयेऽपि प्रतिजीवमुपाधिस्सूक्ष्मरूपेण तिष्ठतीति भावः । तर्ह्यद्वैतहानिरित्यत्राह—तस्मादिति । अभेदे सत्यपि भेदोऽप्यस्तीत्याह जड इति । एतन्मते दूषणमाह—दुःखमिति । न ह्यस्मन्मतवत् विशेषणद्वारकं न वा यादवप्रकाशवत् विकार्यंशभेदद्वारकं, अतस्सर्वजीवदुःखानुभवानां ब्रह्मैव साक्षादाश्रयः स्यात् । आत्मैक्येऽप्युपाधिभेदात् व्यवस्था स्यादित्यत्राह—सौभर्यादाविति । तस्य सर्वशरीरावच्छिन्न सर्वसुखाद्यनुभवनिवहलिप्सया हि कायव्यूहपरिग्रहः । अतस्तत्र शरीरभेदेन न व्यवस्थाऽऽसीत् । तत्कथमुपपद्यते ? यद्युपाधिभेदो व्यवस्थापकस्स्यात् इति भावः । एवं भगवदवतारेषु विग्रहभेदेऽपि व्यवस्थितिरपि उपाधिभेदस्याव्यवस्थापकत्वे गमनिकेत्याह—स्वावतारेष्विति ।

वस्तुत आत्मैक्येऽपि ब्रह्म तन्न जानाति केनचित् तिरोधानात् इत्यत्राह— सर्वज्ञ इत्यादि। ब्रह्मणस्सर्वज्ञत्वेन सर्वेष्वात्मसु स्वैक्यवेदनावश्यंभावात् अनन्तजीवानवधिक दुःखानुभवप्रतिसंधानमनिवारणीयमापद्येतेति भावः ॥ ३१ ॥

---

बन्धो ब्रह्मण्यशेषे प्रसजति स यदोपाधिसंयोगमात्रात्
सादेश्याच्चेदुपाधौ व्यभिचरति भवेद्बन्धमोक्षाव्यवस्था।
अच्छेद्ये च्छेदनादिर्विहत उपधिभिर्न स्वतोंऽशस्तवास्मि-
न्नोपाधिर्जीवतामप्यनुभवितुमलं ब्रह्मरूपोऽप्यचित्त्वात् ॥ ३२ ॥

सर्वार्थ०—अपि चात्रोपाध्यवच्छिन्नं ब्रह्म जीव इति परोक्ते किमुपाधिसंयोगमात्रविशेषितं ब्रह्मस्वरूपमेव जीवः? उत घटाकाशवदवच्छेदेन विभक्तो भागः? अथ घटोदकवद्विच्छेदेन? यद्वा विदारिताग्रदारुनयात् किञ्चिद्विदलनेन? यद्वा उपाधिसंयोगव्यञ्जितविभागः कश्चित्सहजोंऽशः? घटाद्यवच्छिन्नपृथिव्यंशवदुपाधिभावेन परिच्छन्न एव वा कश्चिद् ब्रह्मांशः? इति विकल्पं विभाव्य प्रथमे दोषमाह—बन्ध इति। अत्र नित्यमुक्त ईश्वरांशो निष्क्रष्टुं न शक्यः, बद्धमुक्तविभागश्च न स्यादिति भावः। द्वितीयमनुवक्ति—सादेश्याच्चेदिति। तत्रोपाधिसञ्चारदशायां घटाकाशनोत्येव नियतजीवांशासंभवात् बद्धमुक्तप्रदेशनियमाभावमाह—उपाधाविति। कर्मनिरपेक्षो बन्धः, तत्कालसमुचितविद्यानिरपेक्षो मोक्षश्च स्यादित्याकूतम्। एवं सति

आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैकोऽप्यनेकस्थो जलाधारेष्ववांशुमान् ॥

इति स्मृतिः कथमिति चेत्; इत्थम्—आकाशोऽपि पृथिव्यादिवत् सभागः, पञ्चीकरणप्रक्रियया तत्सिद्धेः। तद्भागानां स्वेकरूपाणामपि यथा घटादिसंयोगभेदैरेव मिथो वैषम्यम् एवमात्मनां देवादिपिण्डसंयोगभेदैरिति जीवविषयत्वे निर्वाहः। परमात्मविषयत्वेऽपि ब्रूमः। अत्र तत्तत्संसर्गप्रयुक्तविकारादिराहित्ये तात्पर्यम्। एतच्च वृद्धिह्रासादिसूत्रभाष्ये व्यक्तमनुसंधेयमिति।

एक एव हि भूतात्मा भूतेभूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ इत्यपि गतार्थम्। घटध्वंसे घटाकाशो न भिन्नो नभसो यथेति मुक्तविषयस्मृतिरप्यौपाधिकविशेषनिवृत्तिपरा। न ह्यत्र घटाकाशस्य नभस्तत्त्वतादात्म्यं नि[दर्श्य] दिश्यते, तस्य घटसंयोगदशायामप्यवस्थानात्। नापि बहिर्भूतमहाकाशादितादात्म्यम्; तस्य घटध्वंसदशायामप्यसंभवात्। तत्समानतापत्तिस्त्वैक्यविरोधिन्येव। तृतीयचतुर्थौ दूषयति—अच्छेद्य इति। पञ्चमेऽपसिद्धान्तमाह—न स्वत इति। षष्ठे त्वचिदंशक्लृप्तिव्याघातमाह—नोपाधिरिति। भूतेन्द्रियचैतन्यवादसमोऽयं पक्ष इति च भावः ॥३२॥

आनन्द०—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—अपि चेति। उपाधिसंयोगमात्रादित्यनेन सूचितं विकल्पमाह—किमुपाधिसंयोगेति। सादेश्याच्चेदित्यनेन सूचितमाह—उत घटाकाशवदिति। छेदनादिर्विहत इत्यनेन सूचितमाह—अथ घटोदकवदिति। यद्वा विदारिताग्रेति। न स्वतोंऽश इत्यनेन सूचितमाह—यद्वोपाधिसंयोगव्यञ्जितेति। नोपाधिरित्यनेन सूचितमाह—घटाद्यवच्छिन्न इति। किं जोवविषयमुत ब्रह्मविषयमिति विकल्प्य उभयथाऽपि तव न प्रमाणमित्याह—आकाशोऽपीति। एतादृशवचनानि यथा घटकरकादिषु वृद्धिह्रासभाक्षु पृथक्पृथक् संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैर्न स्पृश्यते तथाऽयं परमात्मेत्यादिना 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च' इत्यत्र भाष्येण भाष्यकारो निरूह इत्याह—एतच्चेति। भूतात्मेत्यत्र भूतानां प्राणिनामन्तरात्मेतीश्वरविषयतया गतार्थमित्याह—एक एव हीत्यादि। तत्र हेतुमाह—न हीति। घटध्वंस इति विशेषोक्तिर्वैयर्थ्यादित्यर्थः। असंभवादिति। तत्प्रदेशस्य प्रदेशान्तरत्वायोगादिति भावः। नन्वौपाधिको भेद इत्यस्योपाधिनिष्ठो भेद इत्यर्थः। तथा चोपाधेरेव बहुधा भिन्नस्य केचिदंशाश्चेतयन्तां? तथा च न पूर्वोक्तदोषा इत्यत्राह—भूतेन्द्रियेति। तथा सति देहातिरिक्तात्मा नैव स्यादिति भावः॥ ३२॥

---

अक्ष०—अत्र ब्रह्मैवोपाधिभिन्नं जीव इति परोक्तं विकल्प्य दूषयति—बन्ध इति। किमिहोक्त उपाधिभेदः उपाधिसंयोगः, उत घटाकाशस्येव उपाधिदेशावच्छेदः, अथवा घटोदकस्येवोपाधिना छेदः, आहो विदारिताग्रविदलनवत् किंचिद्विदलनं आहोस्वित् उपाधियोगव्यंग्यः सहजोंशः, किमुपाधिभावेन परिच्छेद एव वेति विकल्पाः क्रमेण दूष्यन्ते। उपाधिसंयुक्तं ब्रह्मस्वरूपं जीव इति यद्युच्यते तर्हि कृत्स्नं ब्रह्म जीव एव स्यात् इत्याहाशेष इति। जीवातिरिक्तं ईश्वरस्वरूपमेव न स्यादिति भावः। द्वितीयविकल्पे दूषणमाह उपाधाविति। शरीराद्युपाधौ गच्छति सति शरीराद्यवच्छिन्नब्रह्मदेशानां भिन्नभिन्नतया नियतजीवांशाभावात् बन्धमोक्षव्यवस्था न संभवति नियतबद्धमुक्तप्रदेशाभावात् मुक्तप्रदेशस्यापि संचरता पुनरुपाधिनाऽवच्छेदे बद्धत्वापाताच्चेति भावः। तृतीय चतुर्थविकल्पौ प्रतिवक्ति अच्छेद्य इति। अच्छेद्योऽयमिति श्रुतेरिति भावः। पञ्चमं कल्पं प्रत्याह—न स्वत इति। तवेति अद्वैताभिनिवेशिन इति भावः। तेनापसिद्धान्तप्रसङ्गस्सूचितः। षष्ठं कल्पं प्रतिक्षिपति नोपाधिरिति कुत इत्यत्राह—अचित्वादिति उपाधेरचिदंशत्वाभ्युपगमादिति भावः। उपाधेः ब्रह्मतादात्म्योपगमात् चिदंशजीवरूपत्वोपगमे चिदचिदंशद्वयकल्पनाविरोधस्स्यादिति भावः। अतो ब्रह्मैवोपाधिभिन्नं जीव इत्युक्तं विकल्पासहतया दुरुक्तमेवेति बोध्यम्॥ ३२॥

**औपाधिकजीवभावभङ्गः**

नापि ब्रह्मण्यविद्यास्थगितनिजतनौ विभ्रमेतद्विवृत्तं
तस्मिन् सा स्वप्रकाशे कथमिव विलगेत्तत्प्रकाशैकबाध्या ।
न ह्येतस्मिन्नविद्याविलयकृदधिको वृत्तिवेद्यो विशेषो
बाधो वृत्तिस्वरूपाद्यदि भवति तदा ज्ञानबाध्यत्वभङ्गः ॥ ३३ ॥

सर्वार्थ०—एवमिह जैनगन्धिनां जल्पितानि निराकारिषत । अथ सौगतगन्धिनां निराक्रियन्ते । तत्र प्रत्यस्तमितसमस्तभेदकूटस्थविज्ञानैकरसं ब्रह्मानाद्यनिर्वचनीयाविद्यातिरोहितस्वरूमनन्तभेदप्रपञ्चात्मना विवर्तत इति मृषावादस्तावदपोह्यते—नापीति । आस्तां तिरोधानम्, आलोकसन्निधावन्धकारस्येवानादिस्वप्रकाशब्रह्मसंनिधौ तदज्ञानस्य स्वरूपलब्धिरेव न स्यादित्यभिप्रायेणाह—तस्मिन्निति । प्रदीपकज्जलन्यायशङ्कापनुत्त्यै विरोधं व्यनक्ति—तत्प्रकाशैकबाध्येति । ननु ब्रह्मस्वरूपप्रकाशो नाज्ञानं बाधते, किंतु साक्षित्वेनावस्थाय साधयत्येव '। तत्त्वावेदकवाक्यजन्यं तु वृत्तिज्ञानं तद्बाधकमित्यत्र वृत्तेर्बाधकत्वं विषयस्थविशेषप्रकाशनशक्त्या स्वरूपशक्त्या वेति विकल्पं सङ्कल्प्य प्रथमं प्रतिक्षिपति—न हीति । अधिकः—स्वरूपादन्यः, विशेषस्याविद्याविलयहेतुत्वं स्वधीद्वारा । यदि तु वृत्तिः कल्पितविशेषविषयतया ब्रह्माज्ञानं बाधेत तर्हि तत्त्वधीबाध्यत्वं तस्य न स्यात् । द्वितीयमनुवदति—बाध इति । वृत्तिस्वरूपात्प्रदीपवह्निमुद्गरादिवत् किञ्चित्प्रकाशनिरपेक्षादिति यावत् । दूषयति—तदेति । अज्ञानस्य ज्ञाननिवर्त्यत्वं न स्यात्; तत एव मिथ्यात्वलक्षणातिक्रम इति भावः ॥ ३३ ॥

---

आनन्द०—प्रसङ्गसंगतिमाह—एवमिति । अवसरसंगतिरित्यन्ये । प्रत्यस्तो निरस्तो मितो ज्ञातो भेदो यस्येति तथोक्तः । यद्वा प्रत्यस्तमितः निरस्त इत्यर्थः । विवर्तो विकारः । आस्तामिति । तद्विचारो वन्ध्यासुतस्योद्वाहविचारतुल्य इत्यर्थः । प्रदीपेति । कज्जलस्य प्रदीपजन्यत्वमेव न तु निवर्त्यत्वम् । तथाऽनाङ्गीकारेऽनिर्मोक्षप्रसङ्ग इति भावः । स्वरूपशक्त्या वृत्तित्वेन विशेषस्य स्वरूपातिरिक्तस्य सत्यत्वे द्वैतप्रसङ्गेन कल्पितं तद्वक्तव्यमिति तत्राह—यदि त्विति । ननु माऽस्तु तत्त्वधीबाध्यत्वं, तावताऽविद्यानिवृत्तौ विशेषाभावादिति चेत् न । तथात्वे तद्विषयस्यापि विशेषस्याध्यासहेतुत्वेनाविद्यास्थित्या भाव्यमिति शुक्त्यज्ञानवदेकदेशेन निवृत्तिः स्यात् न तु कार्त्स्न्येन ।

ननु मूलाज्ञानेन विशेषोऽप्यध्यस्त एव स्वगोचरज्ञानेन तद्बाधताम्, तस्मिन् बाधिते उपादाननिवृत्त्या विशेषो निवर्तत इति सर्वनिवृत्तिलक्षणो मोक्षः संगच्छत इति चेत्, न । तथा सति तस्य मिथ्यात्वं न स्यात्; ज्ञाननिवर्त्यस्वाभावात् न च यथाकथंचित् ज्ञानाधीननिवृत्तिमत्त्वं विवक्षितमिति वाच्यम् । तथा सति पुरुषोत्तमादि दर्शनजन्यनिवृत्तिमत्पापादेरिव सत्यत्वे बाधकाभावात् । न च ज्ञानानिवर्त्यत्वेऽपि मिथ्योपादानकत्वात् मिथ्यात्वमिति वाच्यम् । असत्यात् सत्योत्पत्ति वदतस्तव

तदयोगात्। उपादानत्वनिमित्तत्ववैषम्यस्याकिंचित्करत्वादित्याह—**वृत्तिस्वरूपादिति**। तथा सति निर्विशेषज्ञानार्थं अखण्डार्थकल्पनादिवैयर्थ्यमिति भावः। **अज्ञानस्येति**। निवर्तकस्य किंचित्प्रकाशरूपत्वाभावे ज्ञानत्वाभावादिति भावः। तर्हि को दोष इत्यत्राह—**तत एवेति** ॥ ३३ ॥

---

अक्ष०—अथ मृषावादिमतं दूषयितुमारभते **नापीति**। **अविद्येति**। अविद्यातिरोहितस्वरूप इत्यर्थः। विवृत्तमिति—विसदृशपरिणामभूतमित्यर्थः। तमसा तिरोहिते रज्वादौ सर्पादिवदविद्यातिरोहिते ब्रह्मण्येव विश्वमिदं भिन्नसत्ताकं प्रतीयमानमनिर्वचनीयमिति भावः। दूषयति **तस्मिन्निति** ब्रह्मणीत्यर्थः। रज्वादिव्यावृत्तये **स्वप्रकाश** इति। स्वत एव प्रकाशमाने तिरोधानमनुपपन्नमिति भावः। अविद्याया दीपघटन्यायेन ब्रह्माच्छादकत्वं स्यादित्यत्राह—**कथमिवेति**। संनिधेरेवासंभवे कुतस्तिरोधिरिति भावः। कुत इत्यत्राह **तदिति**। न हि बाधक संनिधौ बाध्यं प्रभवतीति भावः। स्वरूपप्रकाशो न बाधकः, किंतु वृत्तिज्ञानरूप इत्यत्राह—**न होति** एतस्मिन् ब्रह्मणि। **अविद्यति** अविद्याबाधकतावच्छेदकविषयताश्रयः कश्चिद्धर्मो न ह्यस्तीत्यर्थः। सविशेषत्वप्रसंगभीरुणा भवता नाभ्युपेत्य इति भावः। विषयभेदाभावे अन्यतरनियमस्य निर्निबन्धनतया वृत्तिज्ञानस्याप्यबाधकत्वप्रसङ्गात् अविद्या न कदाप्युच्छिद्येत।

ननु मा भूत् वृत्त्यवच्छिन्नचैतन्यस्य विषयभेदाभावात् अविद्याबाधकत्वं, तथाप्यन्तः करणवृत्तेरेव स्वरूपेण विषयनिरपेक्षं मुद्गरादिवदविद्याबाधकत्वमुपेयत इत्यत्राह— **बाध इति ज्ञानेति** अन्तःकरणवृत्तेः जडत्वेन ज्ञानभिन्नत्वादिति भावः। ज्ञानबाध्यत्वभंगे मिथ्यात्वभंगेन सत्यत्वप्रसङ्गेऽपसिद्धान्तभियेष्टापत्तिर्न संभवतीति भावः ॥ ३३ ॥ **साविद्यब्रह्मविवर्तवादभङ्गः**।

---

**छन्नत्वे स्वप्रकाशादनधिकवपुषो ब्रह्मणः स्यादभावो**
**भावानां छादनं हि स्फुरणविलयनं तस्य वोत्पत्तिरोधः।**
**मिथ्या दोषाद्भ्रमोक्तौ कथमधिकरणं सत्यमित्येव वाच्यं**
**नाधिष्ठानानवस्था भवतु तव यथा नास्त्यविद्याऽनवस्था ॥ ३४ ॥**

**सर्वार्थ०**—तिरोधिमपि दूषयति—**छन्नत्व** इति। घटादीनां स्वस्वरूपातिरिक्तप्रकाशवत्त्वात्तन्निवर्तकैस्तिरोधानं युक्तम्; ब्रह्मणस्तु न तथेत्याशयः। अभावापत्ति तिरोधानविकल्पेन व्यनक्ति—**भावानामिति**। **स्फुरणविलयनं**—सिद्धस्य प्रकाशस्य नाशः। **तस्य**—स्फुरणस्येत्यर्थः, असिद्धस्येत्यर्थापन्नम्। ननु वृत्त्यधीनप्रकाशान्तरापेक्षया तिरोधानं सिध्येत्, तन्न; तस्यापि ह्यनुत्पन्नस्य नाश्यत्वायोगादुत्पत्तिरोध इत्येष्टव्यम्।

ततश्च सत्यामविद्यायां कथं तद्बाधिका वृत्तिरुत्पद्यते ? अन्यतस्तन्निवृत्तौ किं पुनरेषा वृत्तिस्साधयेत् ? स्वयमेवाविद्यां निवर्त्योत्पद्यत इति चेन्न; परस्पराश्रयापत्तेः, स्वोत्पत्त्या प्रतिबन्धकनिवृत्तिः तया च सेति। एवं तिरोधानं दूषितम्। तदधीनं विक्षेपमपि विक्षिपति—मिथ्येति। सर्वासु भ्रान्तिष्वधिष्ठानदोषयोस्सत्यत्वमारोप्यस्य च मिथ्यात्वं दृष्टम्। ततश्च माध्यमिकं प्रति निरधिष्ठानभ्रमानुपपत्तिं वदन्, भ्रममूलस्य दोषस्य कथं मिथ्यात्वं ब्रवीषि ? यद्यधिष्ठानं मिथ्या तदा तदध्यासस्याधिष्ठानान्तरं वाच्यम्। एवं चानवस्था स्यादिति चेत्, दोषमिथ्यात्वेऽपि तदध्यासार्थं दोषान्तरापेक्षयाऽनवस्था स्यादेव; यदि दोषस्य स्वरूपतः प्रवाहतो वाऽनादित्वान्नानवस्थादोष इति मन्यसे। एवमधिष्ठानमिथ्यात्वेऽप्यधिष्ठानस्य दोषवदुभयथाऽनादित्वान्न दोषः स्यात्।

अथ स्यात्—न वयं निरधिष्ठानभ्रमभीत्याऽधिष्ठानस्य सत्यत्वं ब्रूमः; अपि तु सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिसिद्धमङ्गीकुर्म इति, तर्हि दोषतयाऽभिमताया जगत्प्रकृतेरपि गौरनाद्यन्तवती सा जनित्री भूतभावनी अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम्, इत्यादिभिरन[वयवत्व]श्वरत्ववचनात् सर्वकालानुवृत्त्या सत्यत्वमङ्गीकार्यम्। भूयश्चान्ते विश्वमायानिवृत्तिरिति तद्विनाशः श्रुत इति चेन्न; पुरुषस्य मायासंबन्धनिवृत्तौ तत्र तात्पर्यात्। मायाशब्द एव मिथ्यात्वं बोधयतीति चेन्न, आश्चर्यसृष्टिहेतुतया तदुपपत्तेः; अन्यथा देवमायेव निर्मिता तेन मायासहस्रं तदित्यादिविरोधात्। न च शुक्तिरूप्यादिषु क्वचिदपि मायाशब्दो दृष्टः। नापि मिथ्याशब्दपर्यायतया मायाशब्दं लोकवेदनिघण्टुकाराः पठन्ति। अनृतेन हि प्रत्यूढा इत्यत्रानृतशब्दो न जगत्प्रकृतिविषयः, किंतु ऋतेतरदुष्कर्मपरः ; ऋतेतरदुष्कर्मपरः; ऋतं चात्र फलाभिसन्धिरहितं कर्म स्यात्। कारणविषयत्वेऽपि ब्रह्मविषयासच्छब्दवदान्यपर्यमवसेयम्। एतेन 'नासदासीन्नो सदासीत्तदानीं न सत्तन्नासदुच्यत' इत्याद्यपि सदसच्छब्दाभिप्रेतव्यष्टिभेदप्रलयपरतया न तद्वैलक्षण्याय योज्यमिति ॥३०॥

---

आनन्द०—दूषणप्रसङ्ग एव सङ्गतिरिति सूचयति—तिरोधिमपीति। व्यवहारसामग्र्यां सत्यां व्यवहाराभावो नास्ति न प्रकाशत इति व्यवहारयोग्यत्वमित्यादेरतिरोहितेऽपि सम्भवात्तिरोधाननिवृत्तावपि अतिप्रसक्तेरप्रकाशमानेऽपि दुःखादौ तिरोधानाद्यभावात्तिरोधानाभावे च विप्रलम्भादिव्यवहारवैपरीत्यादतिव्याप्त्यव्याप्त्योश्च प्रसङ्गात्तिरोधानशब्दार्थसम्भवे लोकसिद्धतिरोधानशब्दार्थाभिप्रायेणाह—तिरोधानविकल्पेनेति। विलयनपरत्वभ्रान्तिं वारयति—स्फुरणस्येत्यर्थ इति। अर्थापन्नमिति। अर्थादापन्नमित्यर्थः। उत्पन्नस्योत्पत्तिप्रतिबन्धासम्भवादिति भावः। ततश्चेति। उत्पत्तिप्रतिबन्धकतिरोधायकसत्त्वे प्रतिबन्धकाभावरूपकारणाभावाद्वृत्तिरेव नोदियादित्यर्थः। ननु रजतमिति धियि सत्यामेव नेदं रजतमिति धीरुत्पद्यते। ततश्च तत्र विशेषदर्शनादिविशिष्टैव प्रतिबन्धिकेति विशेषदर्शनेऽसति प्रतिबन्धकाभावात्ति-

रोधायकस्यापि प्रत्यक्षशब्दादिविशेषवृत्तिसामग्र्यसमवहितस्यैव प्रतिबन्धकत्वमिति कथं वृत्त्यनुत्पत्तिरिति चेत्तत्राह—**एवं तिरोधनमिति**। अयं भावः—नित्यं हि ज्ञानं व्यवहारहेतुश्चेत्कल्पितं तिरोधानमकिंचित्करम्। वृत्तिज्ञानस्य व्यवहारहेतुत्वे च वृत्तिसामग्रीभूतप्रत्यक्षादेस्सत्त्वे वृत्तिरुत्पद्यत एवेत्यस्मिन् पक्षेऽपि तिरोधानमकिंचित्करमेवेति। **विक्षिपति**—निरस्यतीत्यर्थः।

**उभयथा**—स्वरूपतः प्रवाहतश्चेत्यर्थः। **अथेति**। तथा च कस्यापि सत्यत्वमनपेक्षितमिति भावः। **सर्वकालानुवृत्त्येति**। मिथ्याभूतस्य ज्ञाननिवर्त्यत्वानुरोधेन सर्वकालानुवृत्त्ययोगात्तदनुवृत्तावपि तस्य मिथ्यात्वे तस्य पारिभाषिकत्वप्रसङ्गाद् अनिर्मोक्षापत्तेश्चेति भावः। **भूयश्चान्त इति**। तथा च न नित्यत्वं श्रुतमिति भावः। **न च शुक्तिरूप्यादाविति**। तथा च क्वचित् प्रयोगोऽस्ति चेदुक्तरीत्याऽन्यथा नेय इति भावः। ननु 'अनृतेन हि प्रत्यूढाः' इति जगत्कारणप्रकृतेरनृतत्वाभिधानान्मिथ्यात्वं सिध्यतीत्यत्राह—**अनृतेन हीति**। प्रत्यूढिस्तिरोधानम्। नन्वनृतशब्दस्य दुष्कर्मपरत्वं कथमित्यत्राह—**ऋतं चेति**। 'ऋतं पिबन्तौ सुकृतस्य लोके' इत्यादौ सत्कर्मणि ऋतशब्ददर्शनात्तदन्यदुष्कर्मपर इत्यर्थः। **कारणविषयत्वेऽपीति**। प्रकृतिपरत्वेऽप्यनित्यभोगप्रदत्वादिरूपान्यपर्यमित्यर्थः।

ननु 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्, इति नासदासीयसूक्तोपक्रमस्थेन वाक्येन 'न सत्तन्नासदुच्यते' इति स्मृत्या च जगत्कारणप्रकृतेरनिर्वचनीयत्वमुच्यते। 'नासदासीन्नो सदासीत्' इति प्रलये विद्यमानस्य प्रधानद्रव्यस्य सदसद्भिन्नत्वप्रतिपादनात् तदेवानिर्वचनीयत्वं मिथ्यात्वमिति चेत् तत्राह—**एतेनेति**। अयं भावः—'यदन्यद्वायोरन्तरिक्षाच्च तत्सत् वायुरन्तरिक्षं चात्येति' इति सदसच्छब्दयोः प्रत्यक्षपरोक्षभूतवाचकत्वदर्शनात् 'न सत्तन्नासदुच्यते' इति स्मृतेश्च भूतपञ्चकविषयत्वाच्च प्रलयकाले पृथिव्यादिभूतपञ्चकाभावपरतयाऽनिर्वचनीयप्रतिपादनपरत्वाभावात्, अन्यथा सर्वदा सदसद्विलक्षणरूपप्रपञ्चस्य सत्त्वेन तदानीमिति प्रलयकालमात्रोपादानायोगात्; तदाह—**सदसच्छब्दाभिप्रेतव्यष्टिमेवेति**। व्यष्टीनामेव सदसच्छब्दवाच्यत्वमिति भावः ॥३४॥

---

**अक्षरार्थ०**—ब्रह्मणस्तिरोधानं न संभवतीत्युक्तं, तिरोधानोपगमे दोषमाह—**छन्नत्व इति**। तिरोहितत्व इत्यर्थः। **स्वप्रकाशादिति**—प्रकाशैकस्वरूपस्येत्यर्थः। रज्जुत्वादेः प्रकाशातिरिक्तत्वेन तिरोधानेऽपि सद्भावो युक्तः, न तु ब्रह्मणः प्रकाशात्मकस्येति भावः। **उपपादयति भावानामिति**। तत्तिरोधानं नाम तत्प्रकाशविनाशस्तदुत्पत्तिनिरोधो वा स्यादित्यर्थः। ततश्च प्रकाशानतिरिक्तस्य ब्रह्मणस्तिरोधाने तस्य विनाशः, प्रागभावो वा प्रसज्येतेति माध्यमिकवत् शून्यत्वमेव स्यादिति भावः।

भ्रमाधिष्ठानतया शुक्त्यादेरिव ब्रह्मणस्सत्यत्वमित्यत्राह—मिथ्येति। मिथ्याभूताविद्यादिदोषाद् भ्रममुपगच्छतां अधिष्ठानमिथ्यात्वोपगमे किं बाधकमिति भावः। अधिष्ठानमिथ्यात्वे तद्भ्रमायाधिष्ठानान्तरमुपगन्तव्यमित्येवमनवस्था स्यादित्यत्राह नेति। त्वन्मतेऽविद्यायाः यथा मिथ्यात्वेऽपि तद्भ्रमहेतुतयाऽविद्यान्तरमित्येवं रीत्या अनवस्था न प्रसज्यते, तथाऽधिष्ठानविषयेऽपि वक्तुं शक्यत्वादिति भावः।

'सत्यं ज्ञानमनन्तं ब्रह्म इति शास्त्रादधिष्ठानस्य सत्यत्वमिति चेत् अविद्याया अपि प्रकृतेः 'गौरनाद्यन्तवती सा जनित्री भूतभाविनी'ति शास्त्रात् नित्यत्वसिद्धया सत्यत्वमिति तुल्यमेव।

अतस्संप्रतिपन्नभ्रमेष्वधिष्ठानदोषयोरुभयोरपि सत्यत्वदर्शनात् प्रपंचभ्रमेऽधिष्ठानमात्रस्य सत्यत्वावलम्बने प्रमाणाभावात् त्वन्मतेऽपि निरधिष्ठाननिर्हेतुकभ्रमानुपपत्तिरित्युक्तम् ॥३४॥ इति तिरोधानाद्यनुपपत्तिः ॥

---

दोषाभावेऽप्यविद्या स्फुरति यदि ततः किं न विश्वं तथा स्यात्
सा चान्यां कल्पितां चेदभिलषति तथा साऽपि चेत्यव्यवस्था।
नापेक्षा चेदनादेरकलुषधिषणागोचरत्वात् सती स्यात्
ब्रह्मैवास्यास्तु दोषो यदि न तु विरमेत् ब्रह्मणो नित्यभावात् ॥३५॥

सर्वार्थ०—अथाविद्यास्वरूपसिद्धिरूपब्रह्मणस्तत्साक्षित्वं दोषनिरपेक्षं तत्सापेक्षं वेति विकल्पे पूर्वानुवादेनानिष्टमाह—दोषेति। मिथ्याभूतस्य कस्यचिद् दोषनिरपेक्षप्रकाशत्वे वियदादिप्रपञ्चस्यापि तथात्वं लाघवात् स्वीकार्यमेव। न चासौ प्रपञ्चप्रतिभासहेतुर्दृष्टः, येन लोकसिद्धदोषवन्न त्यज्येतेति भावः। अनुमानं तु निरसिष्यते। उत्तरानुवादेनानवस्थामाह—सेति। अनवस्थापरिहारं शङ्कते—नापेक्षेति। स्वरूपानादेस्तावदविद्याया न कल्पकापेक्षा, प्रवाहानादेर्नानवस्था दोषः स्वकारणातिरिक्तानपेक्षणादिति भावः। पक्षद्वयेऽप्यनिष्टमाह—अकलुषेति। स्वरूपानादिरविद्या निर्दोषया संविदा भाति; अन्यथा अनवस्थानात्। तथा च सत्यत्वं दुस्त्यजम्। अविद्या स्वप्रकाशे स्वकार्यप्रकाशे च स्वयमेव दोष इति मन्यसे, तर्हि सर्वमप्यनिर्वचनीयं दोषान्तरमनपेक्ष्यावभासेत, अविशेषात्। अन्यदनिर्वचनीयं कादाचित्कत्वात् कारणमपेक्षत इति चेत्, किमतः? न हि मृदादयो घटादीनां हेतवोऽपि दोषा इति व्यवह्रियन्ते, न च स्वेष्टमुक्तिहेतोर्दोषत्वं ब्रूषे।

भवन्तु वा हेतवो दोषाः। अविद्याप्रवाहवादिभिः पूर्वनिवृत्तावप्युत्तरस्य स्थैर्यमङ्गीकृतम्, चिरप्रकाशश्च। तत्र दोषनिवृत्तावपि सिध्यता प्रकाशेन प्रागवद्विषयस्य सत्यत्वं प्रसज्येत। सामग्र्यवस्थपूर्वदोषचरमक्षणजनितावुत्तरप्रकाशौ चिरमनुवर्तेते इति चेन्न; विषयस्थैर्येऽपि वृत्तिप्रकाशानामाशुतरविनाशित्वाभ्युपगमात्, सामग्रीसन्तत्या धारावाहिकदृष्टेश्च। न चाध्यासकाल एवाविद्या भाति, पश्चात्तु स्वरूपेणैवावतिष्ठत

इति वाच्यम्, संविदधीनस्वसिद्धेस्तस्या अप्रकाशमानक्षणावस्थानायोगात् । ईश्वरस्य भातीति चेन्न; ईश्वरस्य बुद्धेरप्यदोषायत्तप्रकाशत्वे तद्विषयस्य सत्यत्वं सिध्येत्; दोषायत्तत्वे तु तद्दोषप्रकाशो निर्दोषस्य सदोषस्य वेति विकल्पदौःस्थ्यं प्राग्वत् । अथान्यनिरपेक्षं ब्रह्मैवाविद्याप्रकाशप्रयोजको दोष इति शङ्कते—**ब्रह्मेति** । एवं सति स्वरूपतः प्रवाहतो वाऽनादिरविद्या नोच्छिद्यत इत्याह—**न त्विति** । तत्र निरपेक्षदोषानुवृत्तिं हेतुमाह—**ब्रह्मण इति** । तत्त्वधीप्रागभावविशिष्टस्य दोषत्वात् तदभावे कथमविद्या भासेतेति चेत्, हन्तैवं प्राप्ताप्राप्तविवेकेन तत्त्वधीप्रागभावस्यैव दोषत्वमायातम्, अलं भावरूपाविद्यादोहलेनेति ॥३५॥

---

**आनन्द०**—अविद्याध्यास एव न संभवति कुतस्तरां तदधीनाध्यास इति पूर्वसंगत्याऽऽह—**अथेति** । **मिथ्याभूतस्येति** । तदर्थमविद्या व्यर्थेति भावः । ननु रूप्याध्यासे चाकचक्यादेरिवान्वयव्यतिरेकसहकृतप्रत्यक्षसिद्धत्वादविद्या स्वीकार्येत्यत्राह—**न चेति** । ननु विमतं प्रमाणज्ञानमिति वक्ष्यमाणानुमानात् सिद्धिरित्यत्राह—**अनुमानं त्विति** । उत्तर पद्य इति शेषः । **स्वकारणातिरिक्तेति** । मूलक्षयकृत्त्वाभावादित्यर्थः । **अन्यथेति** । तस्य दोषाङ्गीकारे तस्यापि तथेत्यनवस्थेत्यर्थः । **तथा चेति** । निर्दोषसंविद एव विषयसत्यत्वापादकत्वादिति भावः । **अन्यदिति** । यद्यप्यन्यस्य दोषत्वं वक्तुं शक्यते, तथाऽपि स्वप्रकाशेन तस्य दोषत्वं तदध्यासपूर्वभावित्वाभावात् । तथा च अनिर्वचनीयान्तरस्य कारणतया सिध्यन् दोषोऽविद्येति भावः । **किमत इति** । अस्तु कारणं, स तु न दोषः किं तु दण्डादिरेव, न तु तदतिरिक्ताविद्याख्यं दोषान्तरमित्यर्थः । यदि कारणानामेव दोषत्वं तदा दोषमाह—**स्वेष्टेति** । तथा सति मुक्तेर्मिथ्यात्वमापद्यत इति भावः । **पूर्वनिवृत्तावपीति** । उत्तराविद्यां सम्पाद्य पूर्वस्य निवृत्तौ उत्तरमविद्योपादानकं न स्यात्, तत्सत्त्वे तु तयैवोपपत्तावविद्यान्तरं व्यर्थमित्येकाविद्यापक्ष एव स्यात्तथोत्तरप्रकाशश्च ब्रह्मप्रकाशवच्चिरप्रकाश एवेति दोषसहितप्रकाशत्वाभावात् सत्यत्वमापद्येतेति भावः । ननु पूर्वदोषजनितत्वादुत्तरस्य दोषस्य तत्प्रकाशस्य च न दोषनिरपेक्षप्रकाशत्वेन सत्यतेति शङ्कते—**सामग्र्यवस्थेति** । उत्तरं च प्रकाशश्च उत्तराविद्या प्रकाशश्चेत्यर्थः । **विषयस्थैर्येऽपीति** । विषयनिवृत्तावपि ज्ञानसत्त्वाशंसा गगनकुसुममकरन्दाशंसातुल्येत्यर्थः । ननु धारास्थले स्थैर्यविगमात् विषयापगमेऽपि स्थैर्यमस्त्वित्यत आह—**सामग्रीति** । सामग्रीभेदस्य कार्यभेदकत्वादिति भावः । नन्वविद्या प्रकाशकत्वाभावेऽप्यनुवर्ततां, न तु तन्निवृत्त्या निवृत्तिरित्यत्राह—**न चाध्यासकाल इति** । **संविदधीनेति** । तथा च तत्सिद्धिर्न स्यादिति भावः । ननु स्वगोचरसंविन्मात्रसत्त्वं विवक्षितं, न त्वस्मदादिसंवित्सत्त्वमित्याशङ्कते—**ईश्वरस्येति** । **अथेति** । तथा च नानवस्थेति भावः । तत्त्वधीरपि यदि चैतन्यं तदा प्रागभावस्यैवासिद्धेरध्यास एव कदाऽपि न स्यादिति जन्यवृत्तिरूपधीरेव वाच्येत्यभिप्रायेणाह—**हन्तेति** ॥३५॥

अक्षरार्थ०—इह मिथ्याभूताविद्यासिद्धिरेव न संभवितुमर्हतीत्याह दोषाभाव-इत्यादिना। अविद्याया मिथ्यात्वे तत्सिद्ध्यर्थं ,तद्दर्शनरूपं तत्साक्षित्वं कस्यचिदस्तीत्युपगन्तव्यं, मिथ्याभूतस्य संविदधीनसिद्धिकत्वोपगमेनाप्रकाशमानावस्थानायोगात्। तच्चाविद्यासाक्षित्वं दोषान्तरमन्तरेणापि भवतीति यद्युपगम्यते तर्हि तद्वत् प्रपंचोऽपि मिथ्यात्वे अपि दोषं विनैव स्फुरतीति स्वीकारः कुतो न स्यादिति प्रथमपादार्थः।

असत्यप्रपञ्चदर्शनायादृश्यमानाविद्यादोषकल्पनं गौरवादयुक्तमिति भावः। अविद्याऽपि स्वदर्शनाय दोषान्तरमपेक्षत इत्यभ्युपगमानुवादेन तत्र दोषमाह—सा चेत्यादिना अविद्यादर्शनहेतुदोषान्तरमपि मिथ्यात्वात्स्वदर्शनाय, साऽपि अदृश्यमानं दोषान्तरं कल्पयेदिति रीत्याऽनवस्था प्रसज्येतेत्यर्थः।

पुनरपि दोषनिरपेक्षदर्शनपक्षमनिष्टान्तरप्रसञ्जनायानुवदति नापेक्षा चेदिति। अविद्यादर्शने दोषान्तरस्येत्यादिः। अनादेरिति—अविद्याया अनादित्वोपगमात् कारणदोषप्रसक्तिर्नेति भावः। अकलुषेति दोषाजन्यधीविषयत्वात् ब्रह्मेवाविद्याऽपि सत्यभूता स्यादित्यर्थः। ततश्चाद्वैतभंगप्रसङ्ग इति भावः।

नन्वविद्याया दर्शनमपि दोषाधीनमेव। तत्र दोषश्च ब्रह्मैव, तस्य च नित्यत्वात् न पूर्वोक्त दोष इत्याशयमुल्लिख्य दूषयति ब्रह्मैवेति। अस्याः अविद्यायाः। दूषयति—न त्विति। अविद्यायाः कदाऽपि विरतिरेव न स्यादित्यर्थः। कुत इत्यत्राह ब्रह्मण इति। अनिवर्त्यत्वे मिथ्यात्वं न स्यादिति भावः ॥३५॥

। इति अविद्यादर्शनानुपपत्तिः ॥

---

ज्ञातेऽज्ञातेऽप्यभावः खलु दुरवगमस्संविदस्ते न [वेद्यं] भावः
स्यादज्ञानं यदीहाप्यपरिहृतमिदं तद्विरोधादिसाम्यात्।
तुल्यैवाकारभेदात् परिहृतिरुभयोः क्लृप्तिरत्राधिका ते
मुग्धोऽस्मीत्यादिसाक्षात्कृतिरपि नियतं तत्प्रतिद्वन्द्विगर्भा ॥३६॥

सर्वार्थ०–ननु यदज्ञानमात्मसाक्षिकं भाति, तद्भावरूपमेव स्यात् ज्ञानप्रागभावस्य दुर्ग्रहत्वादिति शङ्कते—ज्ञात इति॥ अयं भावः—अभावो ह्याश्रयप्रतियोगिनिरूप्यः; प्रतियोगि च ज्ञानम्, तत्र सर्वज्ञानाभावस्तावन्न कदाचिदपि ग्राह्यः; अभावज्ञानस्य तदाश्रयप्रतियोगिज्ञानस्य च विद्यमानत्वात्। अथ विषयविशेषावच्छिन्नस्य ज्ञानान्तरस्य प्रागभावः सुग्रह इत्युच्येत, तदपि न, विषयविशेषज्ञानसदसद्भावयोस्तज्ज्ञानाभावस्य दुर्ग्रहत्वात्। षष्ठप्रमाणवेद्यश्चाभावः कथमपरोक्षधीविषयः स्यात्? भावरूपाज्ञाने तु न तावद्भावाभावरूपत्वविरोधः; न चान्यत् किंचिदिह स्यादिति। अतः स्वेष्टस्य फलितत्वमाह—तेनेति। ईदृशं दुर्ग्रहत्वं त्वदिष्टेऽपि स्यादिति प्रत्याह–इहापीति। तत्र तदुक्तमेव हेतुमाह–

तद्विरोधेति। भावरूपस्यापि ह्यज्ञानस्य ज्ञानविरोधित्वं समानम्; तस्य तद्बाध्यत्वाभ्युपगमात्। आदिशब्देन विषयविशेषनिरूप्यप्रतिसंबन्ध्यादिसापेक्षत्वग्रहः। अपरोक्षधीविषयत्वं च मतान्तरेणाभावस्याप्यस्ति। षष्ठप्रमाणवेद्यत्वेऽपि विरोधस्समः। तत्रापि प्रमाणतया अभिमत उपलब्ध्यभावः केनचित् प्रमाणेन निर्धार्यते। तेन च ज्ञानप्रागभावोऽपि गृह्यमाण आश्रयप्रतियोगिस्वधीसद्भावे कथं सिध्येत्? मा भूत्ततोऽपि ज्ञानाभावग्रह इति चेत्तन्न; ज्ञानाभावस्य दुर्ग्रहत्वं साधयताऽपि हि गृहीत एव ज्ञानाभावः। अन्यथा कथं प्रमाणज्ञानं पक्षीकृत्य स्वप्रागभावव्यतिरिक्तेत्यादि वक्ष्यसि? देवदत्तप्रमापक्षीकारेण तत्स्थप्रमाभावातिरेकिण इत्यादि च?

ननु भावरूपाज्ञानग्रहणे किं तदितरज्ञानेन प्रतियोग्यादिनिरपेक्षत्वादिति चेन्न; अज्ञानमिति गृह्यमाणस्य तदन्यतया तद्विरोधितया तदभावतया वा प्रतीतौ प्रतियोग्यादिभिर्नैरपेक्ष्यायोगात्। नन्वज्ञानावच्छेदकतया सामान्यतः किंचिद्विषयं प्रतियोगि साक्षिचैतन्येन ज्ञाताज्ञातसर्वग्राहिणा विषयीक्रियते; विशेषतस्तु गृह्णत् प्रमाणज्ञानं चानादिभावरूपाज्ञानबाधकमिति तत्राह—तुल्येति। अभावरूपेऽप्यज्ञाने तथैव प्रतियोगिधीव्यवस्थितेति न विरोध इत्यर्थः। तुल्यत्वे कथमितरप्रद्वेष इत्यत्राह—कलृप्तिरिति। लाघवादभावपक्ष एव ग्राह्य इति भावः। स्यादेतत्—प्रतिसंबन्ध्यपेक्षानियमे हि प्रतिबन्धवतारः, स्वरूपेण तु मुग्धोऽस्मि मूढोऽस्मीत्यज्ञानं साक्षिणा प्रकाश्यते; अतो न विरोध इति; तत्राह—मुग्ध इति। अयं भावः—मोहादिशब्दाः खल्वत्र बुद्ध्यभावरूढास्सविषयप्रतियोग्यवच्छिन्नमेव स्वार्थमुपस्थापयन्ति, प्रलयादिशब्दव[त्तत्र]त् नञ्प्रयोगाभावमात्रान्नैरपेक्ष्याभिमान इति ॥३६॥

---

आनन्द०--नन्वहमज्ञ इति प्रत्यक्षेनेव भावरूपाज्ञानसिद्धिरित्युत्थितेः सङ्गतिरित्याह—नन्विति। आत्मसाक्षिकं—प्रत्यक्षमित्यर्थः। ननु ज्ञातेऽज्ञाते वा कथं दुरधिगमोऽभावः तत्त्वे वा कथं तस्याभावत्वं विरोधादित्यत आह—अयं भाव इति। अहमज्ञो, न जानामीति किं ज्ञानसामान्याभावो विषयः, आहोस्वित् तद्विशेषाभाव इति विकल्पमभिप्रेत्याद्यं दूषयति—तत्रेति। अभावेति। सामान्याभावस्य यत्किंचित्प्रतियोगिनाऽपि विरोधादिति भावः। द्वितीयं शङ्कते—अथेति। विषयविशेषज्ञानेति। तज्ज्ञानसत्त्वे प्रतियोगिन एव सत्त्वेनाभावस्याभावात् तदसत्त्वे तद्विशिष्टप्रतियोगिज्ञानाभावेनाभावग्रहणासम्भवादित्यर्थः। ननु विषयविशेषज्ञानस्य कस्यचित् सत्त्वेऽपि कस्यचित् प्रागभावसम्भवात् तद्ग्रहः स्यादिति चेन्न। तथाऽपि प्रतियोगिसजातीयस्याप्रतियोगिनोऽपि सत्त्वं तज्ज्ञानप्रतिबन्धकमेव, येनाकारेणाभावज्ञाने प्रतियोगी भासते तदाकारेण ज्ञायमानस्यान्यस्यापि प्रतिबन्धकत्वात्। अन्यथा घटे ज्ञायमान एव घटं न जानामीत्यनुभवापातादिति भावः। अभावमात्रस्यैवाप्रत्यक्षत्वान्न ज्ञानाभावः प्रत्यक्षविषय इत्याह—षष्ठेति। ननु तदभावव्याप्यत्वं विरोधोऽस्त्वित्यत्राह—न चान्यति।

स्वविषयज्ञानेन सह तादृशस्यापि विरोधस्याभावादित्यर्थः। **अत इति**। न जानाम्यहमज्ञ इत्यादिप्रत्यक्षविषयस्याभावरूपत्वानुपपत्तेर्भावत्वं वाच्यमित्यर्थः। न चान्य दित्यत्रोत्तरमाह—**भावरूपस्यापीति**। नन्वस्तु विरोधस्तथाऽपि न ज्ञानमात्रेण, अपि तु समानविषयकेणेत्यत आह—**आविशब्देनेति**।

**षष्ठेति**। अधिकरणज्ञानं प्रतियोगिज्ञानं च स्वयमपि प्रतियोगिनाविति प्रतियोग्युपलम्भेनानुपलम्भस्याभावात् कथमनुपलब्ध्याऽप्यभावग्रह इति भावः। किंचानुपलब्धिरपि ज्ञातैवाभावधीहेतुरन्यथा परोक्षत्वानुपपत्तेः। उपलम्भसंस्कारप्रमोषस्थलेऽनुपलब्धिभ्रमादभावभ्रमानुपपत्तेश्च। तथा च तत्प्रतियोगिज्ञानसत्त्वेऽनुपलम्भायोगात् अनुपलब्धिर्ज्ञानाभावस्य ग्राहिकेत्यनुपलब्धिवादिनोऽपि ज्ञानाभावः प्रत्यक्ष एष्टव्य इत्याह—**तत्रापीति**। अनुपलब्धिरज्ञातैवाभावधीहेतुः, परोक्षता चेन्द्रियाजन्यतयेति शङ्कते—**मा भूदिति**। **गृहीत एव ज्ञानाभाव इति**। नन्वज्ञातयैव ज्ञानानुपलब्ध्या ज्ञानाभावो गृह्यत इति चेन्न। तथासत्यघटं भूतलमितिवत् अहमज्ञ इत्याद्यनुभवस्याप्यनुपलब्धित्वापत्तेः न प्रत्यक्षेण भावरूपाज्ञानसिद्धिरिति ध्येयम्। **अज्ञानमिति** अन्यथा ज्ञानाभावेऽपि तन्निरपेक्षग्रहोऽस्त्विति भावः। **ज्ञाताज्ञातेति**। ज्ञातत्वेनाज्ञातत्वेन च सर्वं साक्षिवेद्यमित्यभ्युपगमादिति भावः। **विशेषतश्च गृह्णत्** साक्षिज्ञानमिति शेषः। **प्रमाणज्ञानम्**—वृत्तिज्ञानम् इतरत् भावरूपाज्ञानम्।

ननु मुग्धोस्मीत्यत्र प्रतियोग्यादिनैरपेक्ष्यव्यवहारात् कथं तदन्तर्भाव इत्यत्राह—**अयं भाव इति**॥३६॥

---

**अक्षरार्थ०**—अहमज्ञ इति प्रत्यक्षेण प्रतीयमानस्याज्ञानस्याभावरूपत्वे दुर्ग्रहत्वापत्त्या भावरूपत्वमेष्टव्यमिति वादमनूद्य दूषयति · **ज्ञात इति**। प्रतियोग्यादौ ज्ञाते सतीत्यर्थः। **अज्ञातेऽपीत्यत्रापि** प्रतियोग्यादाविति विशेष्यमवसेयम्। **अभाव इति**। संविद् इत्यनेनान्वितत्वात् ज्ञानाभाव इत्यर्थः। **दुरवगम इति** दुर्ग्रहस्स्यादित्यर्थः। प्रतियोग्यादिज्ञानसत्त्वे तदा विरोधात् ज्ञानाभावो न विद्येत, अविद्यमानस्य च प्रत्यक्षेण ग्रहणं न स्यात्, विद्यमानमात्रग्राहित्वात् प्रत्यक्षस्य। प्रतियोग्यादिज्ञानासत्त्वे तु कारणाभावादभावग्रह एव न संभवेदिति भावः। तेन दुर्ग्रहत्वप्रसङ्गेन भावस्स्यादज्ञानमित्युपगन्तव्यम्।

भावाभावरूपत्वाभावात् न तदा ज्ञानाज्ञानयोर्विरोध इति परोक्तं यदीत्यनूद्य इदं दुर्ग्रहत्वं भावरूपत्वेऽपि तुल्यमिति अपरिहृतमिति प्रसञ्जयति **इहापीति** भावरूपत्वेऽपीत्यर्थः। कुत इत्यत्राह—**तद्विरोधाविति** भावरूपत्वेऽपि अज्ञानस्य ज्ञानेन विरोधस्समानः। अत एव ज्ञाननिवर्त्यत्वं भवताऽप्युपगम्यते। अज्ञानमिति नञर्थान्येनापि ज्ञानविरोधः स्फुटीक्रियते। तदन्य तद्विरुद्ध, तदभावेष्वेव नञो विधानात्। तत्र प्रतियोग्यादिग्रहणे विरोधः, अग्रहणे हेत्वभावश्च समानः।

अथ सामान्यरूपेण किंचिद्विषयं ज्ञानं भावरूपाज्ञानस्य प्रतियोगितया गृह्यते, विशेषरूपेण गृह्णत् प्रमाणज्ञानाभावरूपाज्ञानं बाधत इति उक्तदोषस्य परिहार इति यद्युच्यते तत्राह— **तुल्यैवेति** अभावरूपत्वेऽप्ययं परिहारस्तुल्य इति भावः। तुल्यत्वे भावरूपाज्ञानमेवास्त्वित्यत्राह—**क्लृप्तिरिति** भावरूपाज्ञानकल्पने गौरवमधिकमिति भावः। मुग्धोऽस्मीत्याद्यज्ञानसाक्षात्कारे न प्रतियोग्यादिग्रहापेक्षेत्यत्राह—**मुग्ध इति**। **तत्प्रतिद्वन्द्वीति** मोहादिशब्दा ज्ञानाभावरूढा इति भावः ॥३६॥

॥ इति भावरूपाज्ञानप्रत्यक्षभङ्गः ॥

**स्वाजन्मान्यस्वदेशस्वविषयवृतिकृत्स्वव्यपोह्यार्थपूर्वात्**
**ध्वान्तोत्थाद्यप्रभावद्विमतमितिरिहापूर्वनिर्भासनाच्चेत् ।**
**अज्ञानाज्ञानभेत्त्री किमियमनुमितिः स्वेष्टभङ्गोऽन्यथा तु**
**व्यर्थाऽसाविन्द्रियादिष्वतिचरणमसिद्ध्यादि च स्याद्विकल्पे ॥३७॥**

**सर्वार्थ०—अथ पञ्चपादिकाविवरणोक्तमनुमानमनुभाषते—स्वाजन्मेति** ॥ विप्रतिपन्नं मानज्ञानं स्वप्रागभावव्यतिरिक्तस्वदेशगतस्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति प्रयोगः। अत्रैतदनुमानज्ञानं स्वविषयावरणनिवर्तकं न वेति विकल्पे प्रथममनुयुङ्क्ते —**अज्ञानेति**। तदभ्युपगमेऽनिष्टमाह—**स्वेष्टभङ्ग इति**। अज्ञानस्य ह्यज्ञानान्तरावृतत्वे तदपि तथेत्यनन्ताविद्याक्लृप्तिगौरवं स्यात्, आवृता च साक्षिणा न दृश्येत। तत्कटाक्षविरहादलब्धस्वरूपा वन्ध्यासुतेव न प्रजाः प्रजनयेदिति भावः। द्वितीयमनूद्य दूषयति—**अन्यथा त्विति**। यद्यज्ञानविषयाज्ञानमनयाऽनुमित्या न निरस्येत, निष्फलैवासौ प्रसज्येत निरसनीयाभावात्, प्रकाशितमात्रप्रकाशकत्वाद्वा। अपि चेयमनुमितिः पक्षकोटिस्तदन्या वा? आद्येऽतो बाधः; द्वितीये तस्यामतिचारः। हेतुविकल्पे च दोषानाह—**इन्द्रियादिष्विति**।

अयं भावः—प्रकाशहेतुत्वम्, ज्ञानकरणत्वम्, तदनुग्राहकत्वम्, ज्ञानत्वम्, विषयविस्फुरणरूपत्वम्, स्वविषयावरणनिरासकत्वन्मन्यद्वा किञ्चित्? नाद्यः, आत्मादृष्टादिभिरनेकान्त्यात्, ज्ञानस्य च ज्ञानहेतुत्वनियमाभावात्। अत एव न द्वितीयतृतीयौ ; इन्द्रियादिष्वतिचाराच्च। नापि चतुर्थः, दृष्टान्तस्य साधनविकलत्वात्, साक्षिज्ञाने च विपक्षे हेतुवृत्तेस्सपक्षवृत्त्यभावाच्च विरुद्धत्वापत्तेः। नापि पञ्चमः, पक्षसपक्षयोर्हेतुवृत्त्यभावादेव। नापि षष्ठः, तस्य साध्यानुप्रविष्टत्वात्। सप्तमस्तु कश्चिन्न दृश्यत एवेति। चकारात् दोषान्तराण्यपि द्योत्यन्ते। तथा हि—स्वप्रागभावव्यतिरिक्तेतिं स्वदेशगतेति च पृथगुपादानं निरर्थकम्; अभावव्यतिरिक्तेत्येतावतैव वेद्यगत[वृ]त्त्यभिव्यक्तिप्रागभावस्यापि व्यवच्छित्तेः। स्वविषयावरणे च स्थिते स्वोत्पत्तिरेव न संभवतीत्युक्तम्। ब्रह्माश्रयतया चाभ्युपगतस्य विश्वप्रकृतेः तदज्ञानस्य न घटाद्यज्ञानवत् प्रमाणज्ञानदेशगतत्वं युक्तमिति ॥३७॥

**आनन्द०**—नन्वस्त्वनुमानं प्रमाणमित्याक्षेपसङ्गत्याऽऽह—**अत्र पञ्चेति** । **विप्रतिपन्नमिति** पक्षनिर्देशः । **स्वप्रागभावेति** । स्वस्य प्रमाणज्ञानस्य प्रागाभावात् भिन्नं च स्वविषयावरणं च स्वनिवर्त्यं च यत् वस्त्वन्तरं तत्पूर्वकमित्यर्थः । स्वप्रागभावस्य वेद्यगतवित्त्यभिव्यक्तिप्रागभावस्वोत्पादकादृष्टस्वोत्पत्तिप्रतिबन्धकादृष्टानि साध्यविशेषणव्यवच्छेद्यानि । वस्त्वन्तरशब्दो वैशद्यार्थः । धाराद्वितीयज्ञाने व्यभिचारवारणायाप्रकाशितशब्दः । आलोकमध्यारोपितदीपव्यवच्छेदार्थोऽन्धकारशब्दः । द्वितीयादिप्रभाव्यवच्छेदकः प्रथमोत्पन्नशब्दः । इन्द्रनीलप्रभाव्यावृत्तये प्रदीपग्रहणमिति विशेषणप्रयोजनं द्रष्टव्यम् । **अनुमानज्ञानं**—अज्ञानविषयकानुमितिरित्यर्थः । नन्वज्ञानविषयकाज्ञानमप्यस्त्येव, तन्निवर्तनं चानुमित्याऽस्त्वित्यत्राह—**अज्ञानस्येति** । किं चाज्ञानस्याप्यावृतत्वेऽज्ञानस्याध्यास एव न स्यादित्याह—**आवृता चेति** ।

ननु सर्वं ज्ञाततयाऽज्ञाततया वा साक्षिविषयत्वात् कथं न दृश्यते; कथंतरां स्वरूपालाभ इति चेत् । **अत्र वदन्ति**—मिथ्याभूतस्याध्यासेनैव स्वरूपलाभः । अध्यासो हि ज्ञाततयेव, अन्यथा प्रतिभाससमानकालत्वायोगेनानादितापातात् । तथा च ज्ञानाधीनसत्ताकस्य ज्ञानविषयत्वाभावे स्वरूपालाभ एवेति नाज्ञाततयाऽपि प्रकाश इति । नन्वज्ञानानिवर्तकत्वेऽपि प्रकाशकत्वात् सार्थक्यमिति चेत्तत्राह—**प्रकाशितमात्रेति** । तद्गोचराज्ञाने सति तत्प्रकाशायोगात् ज्ञानान्तरेण तन्निवृत्तौ तत एव तत्प्रकाश इति वैयर्थ्यम् । स्वत एवाज्ञानशून्यत्वे सुतरां वैयर्थ्यमिति भावः । **अतिचारः**—व्यभिचारः । नन्विन्द्रियादिष्वतिचरणमित्यनुपपन्नं स्वार्थिककप्रत्ययान्तस्य प्रकाशकशब्दस्येन्द्रियादिबोधकत्वाभावादित्यत्राह—**अयं भाव इति** । तस्य कप्रत्ययान्ताकप्रत्ययान्तसाधारण्यादिति भावः । असिद्धिमप्याह—**ज्ञानस्य चेति** । परामर्शादिस्तद्धेतुत्वादाह—**नियमाभावादिति** । सव्यापारत्वं, तच्चात्मादावप्यस्तीति व्यभिचार इत्यभिप्रायेणाह—**अत एवेति** । यदीन्द्रियादेरेव करणत्वमिति नियमः, तदा तत्रैव व्यभिचार इत्याह—**इन्द्रियादिष्विति** । **दृष्टान्तस्येति** । प्रदीपस्य ज्ञानत्वाभावेन व्याप्यत्वासिद्धिरिति भावः । **साक्षिज्ञाने चेति** ।

ननु साक्षिप्रकाशस्याप्रकाशितार्थप्रकाशत्वेनैव हेतुत्वं वाच्यम् । तथा चाज्ञाननिवर्तकत्वमप्यस्त्येवेति कथं विपक्षवृत्तित्वमिति चेत् । अत्र वदन्ति—साक्षिज्ञानं न स्वत एवाज्ञाननिवर्तकम् । तथासति अज्ञानस्यानादिर्निवृत्तिप्रसङ्गात् । एवं च प्रमाणज्ञानसाहित्ये सति निवर्तकत्वम् । तया च न साध्यवत्त्वं, अप्रकाशितार्थप्रकाशकत्वं तु रूप्यादिप्रकाशकत्वेनाप्युपपद्यते । रूप्यादेरध्यासात् प्रागप्रकाशितत्वाद्वस्तुतः प्रागभावाभावात् तद्घटितं साध्यं नेति बोध्यमिति । विषयगतं यत् घटः स्फुरतीति स्फुरणं तत्त्वमिति पञ्चमं पक्षमाह—**नापि पञ्चम इति** । प्रमाणज्ञानस्य विषयगतस्फुरणत्वाभावादिति भावः । **तस्येति** ।

ननु स्वविषयावरणनिवर्त्तकत्वं साध्यानुप्रविष्टं भवतु, न तावताऽपि साध्याविशेषो विशिष्टस्यान्यत्वादिति चेत् । अत्राहुः—स्वविषयावरणनिवर्तकत्वं हि प्रागभावादिनिवर्तकत्वेप्यस्तीति वक्तव्यम्, अन्यथा तदादाय सिद्धसाधनादिवारणाय विशेषणवैयर्थ्यात् । तथाच धाराऽदिद्वितीयादिज्ञानेऽपि व्यभिचार इति तद्व्यवच्छेदार्थं विशिष्टमेव हेतुभावं भजते । भावरूपमेव चावरणं सिषाधयिषितमिति साध्याविशेष इति । आश्रयासिद्धिरित्याह—**स्वविषयावरणे चेति** । आवरणं नाम तज्ज्ञानोत्पत्तिज्ञानप्रतिबन्धः, तस्मिन् सति कथं तदुत्पत्तिः । न च नवीनोक्तरीत्या नास्ति न प्रकाशत इति व्यवहारजनकत्वाद्व्यवहारसामग्र्यां सत्यामिति वक्तुं शक्यं, व्यवहारसामग्र्यन्तर्गतस्य स्वविषयनिश्चयस्य सत्त्वेऽपि यदि नास्तीत्याद्यावरणसत्त्वं तथा सत्यावरणनिवृत्तिरेव न स्यादविरोधात्, न चाविद्यानिवृत्तिरस्तु तन्निवृत्तयाऽऽवरणाभाव इति शक्यशङ्कम् । अविद्याया एव विरोधेन समकालत्वाभावे तत्कार्यावरणादेः सुतरां तत्कालत्वायोगादिति भावः । किंच बाधोऽनिष्टं चेत्याह—**विश्वप्रकृतेरिति** । अन्यथा जीवस्य विश्वोपादानत्वप्रसङ्ग इति भावः ॥३७।

---

अक्षरार्थं०—भावरूपाज्ञाने पञ्चपादिकाविवरणोक्तमनुमानप्रयोगमनूद्य दूषयति—**स्वाजन्मान्येति** । स्वाजन्म-स्वोत्पत्त्यभावः स्वप्रागभाव इति यावत् । तदन्येति साध्यघटकार्थविशेषणं, ततश्च स्वप्रागभावव्यतिरिक्त-स्वदेशगत-स्वविषयावरण-स्वनिवर्त्यार्थपूर्विकेति साध्यनिर्देशः प्रथमपादेन क्रियते । अत्र स्वप्रागभावं, स्वोत्पत्तेः प्राक् विषयगतामज्ञाततां, स्वप्रतिबन्धकमदृष्टं, स्वकारणमदृष्टं चादायार्थान्तरवारणाय क्रमेण साध्यकोटाविमानि विशेषणानीति वदन्ति । दृष्टान्तमाह—**ध्वान्तेति** अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदित्यर्थः । पक्षं **निर्दिशति विमतेति** विप्रतिपन्नं प्रमाणज्ञानमित्यर्थः । अत्र साक्षिचैतन्यव्युदासाय **प्रमाणेति** । धारावाहिज्ञानव्यावृत्तये **विप्रतिपन्नमिति** । हेतुमाह—**अपूर्वेति** अप्रकाशितार्थप्रकाशकत्वादित्यर्थः । इति परोक्तमनूद्य दूषणमाह—**अज्ञानेति** । अत्रान्ते विकल्प इत्युक्तस्येदमनुमानं स्वविषयावरणनिवर्तकं न वेति विकल्प इत्यप्यर्थः । तत्राद्यकल्पं स्वविषयाज्ञानावरणाज्ञानान्तरनिवर्तकमित्युक्तं यद्यङ्गीकरोषि तदा स्वेष्टभङ्ग इत्यर्थः । अज्ञानस्याज्ञानान्तरावृतत्वे तदपि तथेत्यनवस्थया गौरवम् । अज्ञानस्याज्ञानान्तरावृतत्वे साक्षिणाऽपि तन्न दृश्येत, तददर्शने मिथ्याभूतस्यास्य स्वरूपलाभ एव न भवति, अलब्धस्वरूपं च तत् कथं प्रपञ्चदर्शनं जनयेदिति भावः । अन्यथा **त्विति** द्वितीयकल्पाङ्गीकार इत्यर्थः । दूषणमाह - **व्यर्थेति** । निरसनीयाभावात् निष्फलेत्यर्थः । दूषणान्तरमाह—**इन्द्रियेति** । आदिना आलोकादिपरिग्रहः । तत्र साध्याभावेऽपि हेतुसत्वात् व्यभिचार इति भावः । हेतोः ज्ञानस्वरूपत्वे दृष्टान्ते हेत्वसिद्धिः । सपक्षावृत्तेः हेतोर्विपक्षे साक्षिणि वृत्तेर्विरोधश्चेत्याह- **असिद्धयावीति** अभावान्येत्यनेनैव व्यावृत्तिसिद्धया विशेषणद्वयवैयर्थ्यसूचकश्चकारः ॥ ३७ ॥

**॥ इति पञ्चपादिकाविवरणोक्तभावरूपाज्ञानानुमानभङ्गः ॥**

यच्चोक्तं दैवदत्ती मितिरितरमितिन्यायतो ह्यस्त्यनादि
मात्वात्तन्मित्यभावाधिकमिति तदपि स्यादबाधं विपक्षे ।
नाभावो भावतोऽन्यो न च पुरुषभिदाऽस्त्येकजीवत्ववादे
दृष्टान्ते ध्वंसकत्वं न च विदितमिदं ध्वंसतामात्रसिद्धेः ॥३८॥

सर्वार्थ०—यत्तु कश्चिदाह—देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः । अनादेर्ध्वंसिनी मात्वाद्यज्ञदत्तप्रमा यथा ॥ इति, तदनु-भाषते—**यच्चेति** ॥ दषयति—**तदिति** । अपिना पूर्वानुमानेऽप्ययं दोषोऽस्तीति ख्याप्यते; विपक्षे बाधकमेव हि प्रतिबन्धरहस्यमाहुः, न चेह तदस्ति ; अतो नेदं साधकमिति भावः । भावान्तराभावनयेन दूषणमाह—**नाभाव** इति । यद्यभावो भावातिरिक्तः स्यात्तदा ह्यत्राभावव्यवच्छेदार्थं विशेषणं स्यात् । न च भावातिरिक्तोऽभाव इति वक्ष्यते । माभूत्तर्हि विशेषणमिति चेन्न ; परसंमतमात्रसाधने सिद्धसाधनात्, तावदुक्त्या च त्वदिष्टासिद्धेः, तदतिरिक्तस्य चानुपस्थापनात् । परस्य पक्षदृष्टान्तविभागायोगमप्याह—**न चेति** ।

ये ह्यद्वैतिनो जीवमप्येकमेवेच्छन्ति तन्मते देवदत्त एव यज्ञदत्त इत्यपि कल्प्यते । लोकव्यवहारमात्रात् परसंमत्या वा पक्षादिभेदक्लृप्तिरिति चेन्न; स्वानभ्युपगतस्य साधनाङ्गत्वेनोपादानायोगात् । अस्तु नानाजीवमतेन दृष्टान्तोक्तिरिति चेन्न ; तन्मतेऽपि जीवानां प्रमाधारत्वासिद्धेः । न हि स्वरूपचैतन्यं वा साक्षिचैतन्यं वा जीवतया कल्पितं वा जीवाश्रितमिति युष्माभिः कल्प्यते, वृत्तिरूपा प्रमाऽन्तःकरणनिष्ठा कथ्यते । अतः पुरुषस्थतया प्रमानिर्देशो न युक्तः । कृपाणादिप्रतिफलितमुखमलिनिमादिन्यायेन प्रातीतिकतया पुरुषस्थत्वोक्तिरिति चेन्न; प्रातीतिकस[त्तायां]तामर्थक्रियाकारित्वानभ्युपगमात् । अन्तःकरणवृत्तिद्वयमेव पक्षदृष्टान्ताविति चेन्न ; तस्य परसंमत्यभावेन परान् प्रति प्रयोगायोगात् ।

किंच देवदत्तनिष्ठधारावाहिकद्वितीयादिज्ञानेषु देवदत्तप्रमाभावातिरिक्तानादिनिवर्तकत्वाभावेऽपि प्रमात्वं दृष्टम्, तद्व्यवच्छेदाय पूर्ववदप्रकाशितार्थप्रमात्वादिविशेषणेऽपि देवदत्तप्रमान्तराभावातिरिक्तानादिस्वप्रागभावध्वंसनात् सिद्धसाधनत्वम् । देवदत्तप्रमाभावत्वात्यन्ताभाववदनादिध्वंसकत्वं साध्यमिति चेत्, इदमपि स्वजन्यसंस्कारप्रागभावध्वंसनेन दत्तोत्तरमेव । किंच, अनादेर्ध्वंसिनीत्यत्र ध्वंसरूपत्वमात्रं वा ध्वंससंबन्धित्वं वा ध्वंसहेतुत्वं वा विवक्षितम् ? नाद्यः, अनभ्युपगमात् । न च ध्वंसो घातक इति युज्यते । न द्वितीयः, विवक्षितस्याज्ञाननिवर्तकत्वस्यानुक्तेः । अस्ति हि स्वजन्यसंस्कारप्रागभावोऽनादिः तस्य च ध्वंसरूपस्संस्कार एकाश्रयत्वादिना स्वसंबन्धी च । दृष्टान्ते चानादिप्रतियोगिकध्वंससंबन्धित्वासिद्धेः । अतस्तृतीयः परिशिष्यते । अत्रापि दृष्टान्तस्य साध्यविकलत्वमाह—**दृष्टान्त** इति । उक्तं हि पूर्वमेव प्रागभावस्य कार्यस्य चैकक्षणसंपातायोगात्तयोर्वध्यघातकभावो न संभवतीति । एतदेवाभिप्रेत्याह—**ध्वंसतामात्रसिद्धेरिति** ।

अपि चात्र स्वप्रागभावातिरिक्तानादिध्वंसकत्वसाधने तद्ध्वंसनीयमनादि किंचिद्भावरूपमिति कुतस्सिद्धम् ? न तावद्व्याप्तया, दृष्टान्ते तदसिद्धेः। नापि पक्षधर्मताबलात्, पक्षस्थस्य हेतोस्तादृशबलादृष्टेः; दृष्टस्य च [तादृश] पक्षधर्मसंबन्धमात्ररूपस्य पक्षसाध्यसंबन्धमात्रार्थत्वात्। न च परिशेषात्; अभावान्तरनिवर्तकत्वेऽपि विरोधाभावात्। दण्डचक्रादयो हि स्वाभावातिरिक्तं घटाभावं निवर्तयन्ति। तद्वद्देवदत्तप्रमाऽपि संस्कारोत्पत्तिहेतुभूता स्वसंस्कारप्रागभावं ध्वंसयत्येव। एतत्परिहाराय अभावव्यतिरिक्तानादि ध्वंसिनीत्येतावन्मात्रमुपाददीमहीति चेत्; हन्त तर्हि सिद्धसाधनत्वं परिजिहीर्षता दृष्टान्तस्य साध्यविकलत्वापत्तौ न दृष्टिर्दीयते ॥३८॥

---

आनन्द० — प्रसङ्गसङ्गतिरित्याह—**यत्त्विति**। **चित्सुखोक्तकारिकां पठति-देवदत्तेति**। देवदत्तप्रमा तत्स्थप्रमाभावव्यतिरिक्तानादिनिवर्तिका प्रमात्वात् यज्ञदत्तप्रमावदिति प्रयोगो द्रष्टव्यः। सिद्धसाधनवारणायं देवदत्तेति पक्षविशेषणम्। प्रागभाव निवर्तकत्वेन सिद्धसाधनवारणाय प्रमाभावव्यतिरिक्तेति। तावत्युक्ते दृष्टान्ते साध्यवैकल्यम्; तत्परिहाराय तत्स्थेति। पूर्वज्ञानादिनिवर्तकत्वेन सिद्धसाधनपरिहारायानादीति। **प्रतिबन्धः** व्याप्तिः। **परसम्मतमात्रेति**। अनादिनिवर्तकत्वस्य प्रागभावनिवर्तकत्वेन सिद्धसाधनादिति भावः। नन्वभावान्तरं यन्मते नास्ति तन्मतेऽपि यन्निवर्तते भावरूपं न तदनादि। तथाच कथं सिद्धसाधनमित्यत्राह—**तावदुक्तचेति**। तदेवोपपादयति—**तदतिरिक्तेति**। तथाचेदमेवाभावरूपमिति सिद्धसाधनम्। **अन्ये तु**—अभावान्तराभावेऽपि न जानामीति प्रतीतिर्दुर्निवारा। तद्विषयश्चभाव एव ज्ञानविरोधी वर्तत इति सिद्धान्तिसम्मते सिद्धसाधनमित्याहुः। **ये ह्यद्वैतिन इति**। तथाच व्याप्यत्वासिद्धिरिति भावः। **स्वानभ्युपगतस्येति**। अपसिद्धान्तदूषणं न स्यादिति भावः। अत्र किं देवदत्तादिशब्देन जीवचैतन्यं विवक्षितं, उतान्तः करणं, देवदत्तप्रमेत्यत्र समासान्तर्गतषष्ठ्यर्थः किमाधाराधेयभावसम्बन्धः, उत यः कश्चिद्वैज्ञानिक इति, तथा प्रमाशब्देनापि चैतन्यमेव उत वृत्तिज्ञानमिति विकल्पमभिप्रेत्याद्ये दोषमाह—**न हि स्वरूपेति**।

चैतन्यं हि परमते त्रिधा भिद्यते। शुद्धचैतन्यं ब्रह्म, अन्तःकरणवृत्त्युपहितचैतन्यं साक्षि, अन्तःकरणाद्युपाधिविशिष्टचैतन्यं जीव इति इदं चेतन्यरूपप्रमाणाश्रयमित्यर्थः। प्रमेत्यत्र विकल्पे द्वितीयमपाकरोति—**वृत्तिरूपेति**। सम्बन्धे द्वितीयमाशङ्कते—**कृपाणेति**। सम्बन्धाभावेऽपि प्रातीतिकसम्बन्धेन साधयति चेत् सर्वं सर्वत्र साधयेदिति सर्वं केवलान्वयि स्यादित्याह—**नेति**। द्वितीयमाशङ्कते—**अन्तः करणेति**। **तस्य परसम्मत्यभावेनेति**। तथाचाश्रयासिद्धिरिति भावः। किञ्च किं प्रमात्वमात्रं हेतुः, उत विशेषितमिति विकल्पमभिप्रेत्याद्य आह—**किं च देवदत्त इति**। द्वितीय आह—**तद्वचवच्छेदेति**। तत्र किं यत्किंचित्प्रमाभावातिरिक्तत्वं विवक्षितं, उत तत्स्थप्रमाभावत्वावच्छिन्नातिरिक्तत्वरूपसामान्याभाव इति विकल्प्याद्य आह—**देवदत्तप्रमान्तरेति**। द्वितीयं शङ्कते—**देवदत्तेति**। **स्वजन्येति**। तत्रैव निवर्तकत्वस्य मुख्यत्वादिति

भावः। कृत्तद्धितसन्देहादाह—**किं चानादेरिति**। अनभ्युपगमे हेतुमाह—**न चेति**। नन्वन्यस्य सम्बन्धस्यासम्भवात् परिशेषान्निवर्त्यनिवर्तकभावसिद्धिरित्यत्राह—**अस्ति हीति**। **दृष्टान्ते चेति**। यज्ञदत्तप्रमाया अपि पक्षतुल्यत्वान्निवृत्तिरूपत्वे निवर्तकत्वासिद्धेरिति भावः। ननु कथं दृष्टान्तासिद्धिः; प्रागभावनिवर्तकत्वं प्रतियोगिनोऽस्त्वित्यत्राह—**प्रागभावस्येति**। निवर्तकत्वं हि निवृत्तिजनकत्वं। तच्च तत्पूर्वक्षण सत्त्वं तत्प्रागभावनिवृत्तिश्च प्रतियोगी वा तदन्यो वा; नाद्यः—स्वस्य स्वजनकत्वायोगात्। न द्वितीयः - निवर्त्यनिवर्तकयोस्समानकालत्वस्य वक्तव्यत्वात् प्रागभावप्रतियोगिनोर्नैतदुभयमिति भावः। **अपि चेति**। निवर्तनीयस्य स्वप्रागभावातिरिक्तत्वसिद्धावप्यभावान्तरं भवतु कथमिव वार्यमिति भावः। पारिशेष्यं दूषयति—**अभावान्तरेति**। **हन्त तर्हीति**। ननु देवदत्तस्थाभावातिरिक्तत्वेन विशेषणे नैष दोष इति चेत्, मैवं; घटादिजनकस्योपादानज्ञानस्य तत्प्रागभावनिवर्तकत्वात् वेद्यगताभिव्यक्तिप्रागभावनिवर्तकत्वाच्च न स्वाभिमतसिद्धिरिति भावः ॥३८॥

---

**अक्षरार्थ०**—भावरूपाज्ञानस्यैव साधकतया परोक्तं प्रयोगान्तरमनूद्य दूषयति—**यच्चोक्तमिति**।

"देवदत्तप्रमातत्स्थप्रमाभावातिरेकिणः।
अनादेर्ध्वंसिनीमात्वाद्यज्ञदत्तप्रमायथा ॥"

इत्युक्तमिति भावः। तत्र देवदत्तोमितिरिति पक्षस्य निर्देशः। इतरमितिरिति दृष्टान्तस्य, तन्मित्यभावाधिकमनादि हन्तीति साध्यस्य, मात्वादिहेतोरिति बोध्यम्। अत्र दृष्टान्ते यज्ञदत्तप्रमाप्रागभावमादाय साध्यसंप्रतिपत्त्युपपादनेऽपि पक्षे देवदत्तप्रमाभावस्य, तदन्यत्वरूपसाध्यघटकविशेषणानन्वयेन ग्रहणायोगात् तदन्यदज्ञानमादायेव साध्यवत्वमुपपादनीयमिति मन्यन्त इव तदिदं महाविद्यानुमानगोष्ठीनिष्ठमप्रयोजकमित्याह—**तदपीति** अपिना पूर्वानुमानसमुच्चयः। कुत इत्यत्राह—**अबाधमिति** विपक्षे बाधकतर्को नास्तीत्यर्थः। तदभावे व्याप्त्यसिद्धिरिति भावः। भावान्तराभाववादे अभावातिरिक्तेति साध्यविशेषणं व्यर्थमित्याह—**नाभाव इति**। तत्यागे च प्रमाप्रागभावमादाय सिद्धसाधनमिति भावः। जीवाद्वैतेऽनुमानाङ्गभूतः पक्ष-दृष्टान्त भेदोऽपि नास्तीत्याह—**न चेति**। देवदत्तयज्ञदत्तयोरैक्यस्यैव कल्पनीयत्वादिति भावः। दृष्टान्ते साध्यवैकल्यमाह—**दृष्टान्त इति** ध्वंसकत्वं—ध्वंसहेतुत्वम्। न च विदितं—न हि संप्रतिपन्नमित्यर्थः। भिन्नकालीनयोर्वध्यघातकभावायोगात् न कार्यस्य तत्प्रागभावघातकत्वं, अतो यज्ञदत्तप्रमायाः न तत्प्रागभावध्वंसं प्रति हेतुत्वं, भावान्तराभावनयेन प्रमाया एव तत्प्रागभावध्वंसरूपत्वसिद्ध्या स्वं प्रति स्वस्य हेतुत्वायोगाच्च। एतदभिप्रायेणेवोच्यते **ध्वंसतामात्रसिद्धेरिति**। ध्वंसकत्वोपगमेऽपि पक्षे प्रमाजन्यसंस्कारप्रागभावध्वंसकत्वेनार्थान्तिरापादनात् नानादि भावसिद्धिरिति ध्येयम् ॥३८॥

**॥ इति चित्सुखोक्तभावरूपाज्ञानानुसानभङ्गः ॥**

अस्पृष्टावद्यतोक्तेर्न खलु विषयतामभ्युपेयादविद्या
न क्षेत्रज्ञोऽपि तापत्रयपरितपनान्नापि तद्ब्रह्म मौग्ध्यात्।
मिथ्यात्वाद्दोषभावो न भवति यदि किं तन्निरासप्रयासै-
रुच्छेत्तव्यापुमर्थान्वयत इह परः कोऽभिलप्येत दोषः ॥३९॥

अथ ब्रह्माज्ञानकल्पनां श्रुतिविरोधेन निर्मूलयति—अस्पृष्टेति ॥ न तावन्निरवद्यत्वश्रुतिरनादर्तव्या; सर्वश्रुत्यनादरप्रसङ्गेन निष्कञ्चुकबाह्यत्वापातात्। न चासौ स्तोभवन्निरर्थिका; स्वबाधितेऽर्थे स्वतःप्रामाण्यात्। अतस्सविषयत्वे केवलमविद्यैव वा तद्विषयः, तत्कल्पितो जीवो वा, तदवरुद्धं ब्रह्म वेति विकल्पं विभाव्य प्रथमं प्रतिक्षिपति—न खल्विति। निरवद्यमिति श्रुतिर्ब्रह्मैव विशिनष्टि, न त्वविद्याम्; त्वत्पक्षे ह्यविद्यान्तराभावात् निरवद्यत्वश्रुतिस्तद्विषया स्यादित्युपालम्भकाकूक्तिरियम्। अतो नात्राभागिप्रतिषेधः। द्वितीयं दूषयति—न क्षेत्रज्ञ इति। न हि त्वन्मते प्रतिबिम्बप्रायस्य जीवस्यावस्थान्तरेणापि निर्दोषत्वमिति भावः। तथैव तृतीयमपि निरस्यति—नापीति। तच्छब्देन सर्वाध्यासाधिष्ठानत्वादिसूचनम्। मौग्ध्यात्—अविद्यातिरोहितस्वप्रकाशत्वादित्याशयः।

ननु कल्पिते जीवे कल्पनाधिष्ठाने ब्रह्मणि वा निरवद्यत्वादिश्रुतिस्संबोभवीति, अविद्यातत्कार्याणामसत्यतया दोषत्वाभावादिति शङ्कते—मिथ्यात्वादिति। परिहरति—किमिति। यद्यविद्यादीनां स्वकालसत्त्वं दोषत्वं च न स्यात् तर्हि किं तन्निरासार्थ-साधनचतुष्टयसंपत्तिपूर्वकश्रवणमनननिदिध्यासनप्रयासैः? अविद्यानिरासकदर्शनार्थमेव हि तद्विधिमातिष्ठध्वे। नन्वसत्यस्य दोषत्वमप्यसत्यं, तादृशदोषवत्त्वेऽपि तात्त्विक-दोषात्यन्ताभावान्निर्दोषत्वश्रुतिरर्थवती स्यादित्यत्राह—उच्छेत्तव्ये। असत्योऽपि दोषः उच्छेत्तव्यो न वा? पूर्वत्र तादृशापुरुषार्थान्वयादतिरिक्तः को नाम दोषशब्दार्थः? उत्तरत्र तन्निरासप्रयासनैरर्थक्यमेवेति भावः।

अनिर्वचनीयस्य नित्यनिवृत्तस्वरूपस्य किं निवर्तनेन? अत्यन्ताभावस्यासंपाद्यत्वात्तत्प्रतिभासोऽप्यनिर्वचनीय एवेति? सोऽपि नित्यनिवृत्तित्वान्न संपाद्यनिवृत्तिः। किं च तात्त्विकदोषः श्रुत्या निरस्यत इति वदता स दोषः किं ब्रह्मस्वरूपमेवेत्यभिमतम्? अन्यद्वा किञ्चित्? पूर्वत्र किं तदधीनसत्ताकयाऽविद्यया? तेन च सर्वोपपत्तेः दोषभूतस्वाधीनप्रकाशतया ब्रह्मापि मिथ्या स्यात्। उत्तरत्र द्वैतापत्तिः, यत्र क्वचिद्विद्य-मानत्वाभावे तात्त्विकत्वविरोधात्। भावाद्वैतिनो ब्रह्मस्वरूपातिरिक्ततात्त्विकाभावरूप-दोषसंभवात् तन्निषेधिका श्रुतिरियमिति चेन्न; अभावनिषेधे तत्प्रतियोगिभावसंबन्धा-पातात्, ततश्चाद्वैतवादो निरुध्येत। दोषस्य परमार्थत्वं नास्तीति निरवद्यत्वश्रुत्यर्थ इति चेन्न; दोषस्वरूपनिषेधके तदनुज्ञया तत्सत्यत्वनिषेधकशब्दाभावात्, तत्परत्वक्लृप्तेश्च गुरुत्वात्। अतो भावमभावं वा सत्यमसत्यं वा ब्रह्मणि निरसनीयं किञ्चिदिच्छता निर्विषयैव निरवद्यत्वश्रुतिरापादितैवेति ॥३९॥

आनन्द०—निरवद्यत्वश्रुतिबाधितान्यनुमानानीति पूर्वसङ्गत्याऽऽह—अथेति। अनुमानेनाविद्या यतः ब्रह्मणो जीवस्य वा साध्या उभयथाऽपि ब्रह्मणस्सावद्यत्वप्रसङ्ग इति भावः। सर्वश्रुतीति। अविशेषादिति भावः। न चेति। सामभागपूरणार्थाह्लादिशब्दरूपस्तोभवन्निरर्थकत्वाभावादिति भावः। अभागिप्रतिषेधः—अप्रसक्तप्रतिषेधः। अविद्याविषयत्वे अविद्यान्तराभावेनाप्रसक्तप्रतिषेधो वक्तव्यो भवतीति भावः। ननु मौग्ध्यमप्यविद्याश्रयत्वमेव, न च तन्मात्रदोषः, तथात्वे सिद्धान्तेऽपि ज्ञानविरोधिकर्माश्रयत्वेन ब्रह्मणो दोषापत्तेरित्यत्राह—अविद्यातिरोहितेति। नन्वितरं प्रति तिरोधायिकर्माश्रयत्वं ब्रह्मणोऽस्त्विति चेत् न, स्वस्यैवेतरत्वेनाभिमतजीवानन्यत्वात् कल्पिताधिष्ठानत्वविशिष्टं कल्पिताधिष्ठानमिति शुद्धं ब्रह्म, यद्वा कल्पिताधिष्ठानत्वविशिष्टं जगत्कारणं ब्रह्मशब्दवाच्यमिति वा बोध्यम्। मोक्षार्थं श्रवणादिप्रयास इत्यत्राह—अविद्यानिरासकेति। तन्निवृत्तेरेव मोक्षत्वादिति भावः। पूर्वत्रेति। उच्छेत्तव्यस्य दोषत्वादिति भावः। उत्तरत्रेति। नन्वनुच्छेद्यत्वपक्षे कथं तदर्थप्रवृत्तिनैरर्थक्यमापाद्यते तत्प्रयत्नस्यैवानङ्गीकारादिति चेत्। तथा सति तत्र प्रवर्तकश्रोतव्यादिविधिवैयर्थ्यमिति भावः। इदं दूषणमुच्छेत्तव्यपक्षेऽपि सममित्याह—अनिर्वचनीयस्येति। पूर्वत्रेति। तात्त्विकब्रह्मरूपदोषादेव प्रपञ्चभ्रमोपपत्तेरिति भावः। ननु प्रपञ्चस्य मिथ्याभूतोपादानकत्वेन मिथ्यात्वसिद्ध्यर्थमविद्येति चेदत्राह—दोषभूतेति। कैमुत्यन्यायेन प्रपञ्चमिथ्यात्वं सिध्यतीति न तदर्थमविद्येति भावः।

ननु दोषरूपत्वेऽपि प्रकाशस्य दोषजन्यत्वाभावान्न तत्प्रकाशस्य मिथ्यात्वं वस्तुतः प्रकाशकर्मत्वरूपप्रकाश्यत्वं च नास्तीति चेत्; अत्र वदन्ति—ब्रह्मणो दोषत्वं तदधीनप्रकाशस्य मिथ्यात्वं विना नापपद्यते, अन्यथा परिभाषापत्तेः। तथा च तद्व्यतिरिक्ताविद्यया प्रपञ्चभ्रममिथ्यात्वयोरुपपत्तौ स्वस्यैव ब्रह्मस्वरूपदोषाधीनप्रकाशत्वादिकं वक्तव्यमिति दोषतादवस्थ्यमिति। ननु क्वचित् तत्स्वरूपसत्त्वे अद्वैतविरोधः। तदेव नास्तीत्यत्राह - यत्र क्वचिदिति। शशशृङ्गवदिति भावः। नन्वन्यत्र सत्त्वेऽपि नाद्वैतविरोध इति शङ्कते—भावाद्वैतिन इति। ततश्चेति। ननु प्रतियोगिनो मिथ्यात्वान्न दोष इति चेन्न। अभावस्य निषेधोऽप्यभावसमसत्ताको वाच्योऽन्यथा दोषभूताभावसत्तया श्रुतिविरोधतादवस्थ्यादिति भावः। दोषस्वरूपेति। निरवद्यमिति श्रुतावनवद्यं तत्त्वं च भासते। तत्र च विशिष्टनिषेधे विशेष्ये बाध इति स्वर्गिध्वंसवद्दोषस्वनिषेधो वाक्यार्थो वाच्यो न तु श्रुतपरित्यागेनाश्रुतपारमार्थिकत्वनिषेध इति भावः। ननु गुरुत्वेऽप्यन्यथानुपपत्त्याऽङ्गीकर्तव्येत्यत्राह—अत इति। तथा सति दोषे सत्यतानिषेध उक्तो न तु ब्रह्मणीति ब्रह्मणि दोषनिषेधश्रुतेरर्थशून्यता स्यादिति भावः ॥३९॥

अक्षरा०—अत्र ब्रह्माज्ञानकल्पने श्रुतिविरोधमाह—अस्पष्टेति । निरवद्यमिति हि श्रूयते तस्या विषयो वक्तव्यः, निर्विषयत्वे श्रुतेरप्रामाण्यप्रसङ्गात्, तदुपगमे तन्यायेन सर्वश्रुतीनामप्यप्रामाण्यप्रसङ्गे वेदबाह्यत्वमेव प्रकटीकृतं स्यात्। अतस्तस्या विशिष्य विषये वक्तव्ये प्रथमं तावदविद्याया विषयतां निरस्यति—न खल्विति । कथमत्र प्रसक्तिः ? परमते मिथ्यात्वेनाभ्युपगताया अविद्यायाः प्रतिभाससमानकालीनायाः तिरोधायकाविद्यान्तरानभ्युपगमेन निरवद्यत्वप्रसक्तेः। तर्हि कथं निषेधः ? स्वयमवद्यात्मकत्वेन निरवद्यत्वानुपपत्तेः नहि दोषः निर्दोषस्यात् । ब्रह्मण एव विशेषणतया तच्छ्रवणात् अवद्यान्तर्गतत्वेन अवद्यावन्निष्क्रान्तत्वं तद्बहिर्गतत्वं न वक्तुं शक्यमित्याशयात्। परानुमतस्यैव परिशेषार्थमनुवादः उपालम्भकाकूक्तिरिति सिद्धिः। परैरपि नानुमन्तुं शक्यमिति भावः। तर्हि क्षेत्रज्ञो विषयस्स्यादित्यत्राह—न क्षेत्रज्ञोऽपीति । कुत इत्यत्राह तापेति। आध्यात्मिकाधिदैविकाधिभौतिक दुःखत्रयाभिघातादित्यर्थः। न हि दुःखिनो निरवद्यत्वं स्यादिति भावः। तर्हि ब्रह्मैव विषयोऽस्त्वित्यत्राह नापीति मौग्ध्यादिति—अविद्यातिरोहितत्वात् अत एवानन्तभ्रमवत्वाच्चेत्यर्थः। अविद्याया मिथ्यात्वेन दोषत्वं नास्तीत्यत्राह—किमिति दोषत्वाभावे निरसनीयत्वाभावेन तन्निरसनार्थं श्रवणमननादि प्रयासो व्यर्थः स्यादिति भावः। तस्या मिथ्यात्वेऽपि तदधीन भ्रमभयादि निरसनार्थं प्रयास इति चेत् तत्राह—उच्छेत्तव्येति । निरसनीयापुरुषार्थान्वयित्वस्यैव दोषपदार्थतया अविद्यायां तदभ्युपगमे दोषत्वमप्यभ्युपगतं स्यादिति भावः ॥३९॥ इति ब्रह्माज्ञानानुमानानां निर्दोषश्रुतिबाध्यत्वम् ।

---

शुद्धे ब्रह्मण्यविद्या न यदि न घटते तस्य जीवैक्यवाद-
स्तस्मान्निर्दोषतोक्तिर्निरुपधिदशया निर्वहेदित्ययुक्तम् ।
प्रत्यक्षादिप्रमाणानुगुणबहुविधश्रुत्यबाधेन नेतुं
शक्येऽप्यैक्यादिवाक्ये बहुगुणनिधये ब्रह्मणेऽसूयसि त्वम् ॥४०॥

यदि निरवद्यत्वश्रुतिविषये ब्रह्मणि अविद्या कदाचिदपि न स्यादित्युच्येत, तर्हि तस्य जीवैक्योपदेशो न घटेत; तस्मान्निर्दोषत्वश्रुतिस्त्वदभिमतजीववन्निवृत्ताविद्यास्वरूपपरतया निरुह्यतेति शङ्कते-शुद्ध इति ॥ अत्र ( स एष देवः कृतभूतभावनः स्वयं विशुद्धो विरजाः प्रकाशत ) इत्यादिभिर्बद्धमुक्तावस्थाद्वयभागिनः कर्मवश्यादन्यत्वेन प्रमितस्य ब्रह्मणस्सदोषनिर्दोषावस्थाद्वयक्लृप्तिस्साहसमित्यभिप्रायेणाह-इत्ययुक्तमिति। तत्त्वमसि अयमात्मा ब्रह्मेत्युपदेशो भेदनिषेधश्च कथमित्यत्राह—प्रत्यक्षादीति। अयं भावः—यद्यपि जीवपरभेदश्रुति [मात्रमवस्थाद्वयविषयमिति] मात्रादवस्थाद्वयमिति शङ्कितुं शक्येत, तथाऽप्येकैकस्यामेवावस्थायां जीवादन्यः परः प्रतिपाद्यते। जागरे तावत् (तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती)ति। तथा च सूत्रं 'स्थित्यदनाभ्यां' चेति।

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ इति चोच्यते।

स्वप्ने च 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण' इति। तत्र च स्वतन्त्रपरतन्त्रविभागव्यञ्जकं सूत्रं—पराभिध्यानात्तु तिरोहितं, ततो ह्यस्य बन्धविपर्ययाविति। सुषुप्तिप्रायणयोश्च 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति 'प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जन् याती'ति च। तत्रापि सूत्रं "सुषुप्त्युत्क्रान्त्योर्भेदेनेति"।

मुक्तावस्थायामपि 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति। अत्र यदि भोक्तृसाहित्यमभिप्रेतं तदा सुव्यक्त एव भेदः, यदा तु प्रस्तुतब्राह्मणपदविवरणक्रमेण भोग्यसाहित्ये तात्पर्यं तदाऽपि भोक्तुर्भोग्यस्य च स्वारसिकी भेदधीर्न बाधमर्हति, ब्राह्मणस्यपरशब्दानुग्रहाच्च। एवं 'परात्परं पुरुषमुपैति दिव्य'मित्यादि। एतदपि सूत्रितं 'मुक्तोपसृप्यव्यपदेशाच्चे'ति। 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिवाक्यं तु 'निरञ्जनः परमं साम्यमुपैती'ति मुक्तविषयतयैव प्राकरणिकेन वाक्येन परमसाम्यतत्परतया स्थापितार्थम्; परमसाम्यं च भोगमात्रसाम्यलिङ्गाच्चेति सूत्रेण नियमितम्; श्रुत्यन्तरे च तादृगेव भवतीति निर्दशितम्; विष्णुरेव भूत्वेत्यादिन्यायाच्च। मोक्षधर्मे च परेण परधर्मी च भवत्येष समेत्य वै' इत्यादिभिः परमसाम्यमेव प्रदर्शितम्। अनेन साम्यं यास्यामीति च मुमुक्षोरभिसन्धिरप्यभिधीयते। स्वयं चागीयत 'मम साधर्म्यमागता' इति।

'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति'रिति जीवब्रह्मतादात्म्योक्त्याऽनिष्टप्रसङ्गमाशङ्क्य अधिकं तु भेदनिर्देशादिति च प्रत्युक्तम्। स्रष्टुस्सृज्यस्य भेदः श्रुत्यैव हि निर्दिश्यते 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध' इति। एवं प्रस्पष्टार्थसूत्रप्रतिष्ठापितस्वरसार्थानां भेदश्रुतीनां न त्वदभीष्टवत् प्रत्यक्षादिविरोधः, प्रत्युतानुगुण्यमेव। तस्मादेवंविधनिर्बाधानन्यपरबहुविधश्रुत्यनुसारेण जीवपरसामानाधिकरण्यस्य भेदनिषेधस्य च निर्वाहे संभवति, निर्दोषकल्याणगुणाकरे ब्रह्मण्यविद्यादिदोषमाविष्कुर्वन्नात्मीयामसूयामेवाविष्करोषि; तन्निर्णीतं च **मोक्षधर्मान्ते** परस्य बन्धप्रसङ्गरहितत्वम्; इतरस्य बन्धमोक्षभागित्वं च—

तत्र यः परमात्मा तु स नित्यो निर्गुणो मतः।
स तु नारायणो ज्ञेयस्सर्वात्मा पुरुषो हि सः॥
न लिप्यते कर्मफलैः पद्मपत्रमिवाम्भसा।
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैस्स युज्यते॥ इति ॥४०॥

**आनन्द०**—ननु निरवद्यत्वश्रुतिः कथंचिन्नेतव्या; तथा च न श्रुतिबाधोऽनुमानस्येत्याक्षेपसङ्गत्याऽऽह—यदीति । **जीवैक्योपदेश इति।** अविद्याश्रयत्वाभावे भेदस्याविद्यकत्वाभावेन स्वाभाविकत्वे ऐक्यस्यासम्भवादिति भावः। ननु भेदश्रुतीनामेव कथंचिन्नयनं कुतो न स्यादित्यत्राह—**अयं भाव इति।** तदेव दर्शयति - जागरइति। एकशरीरसम्बन्धे सति एकस्यैव तस्मिन्नेव तत्कालावच्छेदेन भेदः, कर्मफलभोक्तृत्वं तदभावश्चेति विप्रतिषिद्धमिति भावः। स्थितिः अनश्नत्तया कर्मफलानि दीप्यमानस्यावस्थितिः। अदनं पिप्पलं स्वाद्वत्तीति कर्मफलानुभवः। उक्तश्रुतिसमानार्थं श्रुत्यन्तरमाह—**समान इति।** विस्तरस्तु भेदधिक्कारन्यक्कारे द्रष्टव्यः। एकस्मिन्काले स्वापजागरणे विरुद्धे ऐक्ये नोपपद्येते इत्यत्राह—**स्वप्ने चेति ।** पराभिध्यानं परस्य सङ्कल्पः । अनादिकर्मापराधात् परः स्वसंकल्पेन स्वस्यापहतपाप्मत्वादिकल्याणरूपं तिरोधापयति । तत एव हि परमपुरुषजीवसङ्कल्पादेवास्य जीवस्य बन्धविपर्ययौ संसारमोक्षावित्यर्थः। **सुषुप्तीति।** तद्दशायामेव ज्ञानतदभावरूपविरुद्धधर्मप्रतिपत्तेस्स्वाभाविको भेदो वक्तव्य इत्यर्थः। सुषुप्त्युत्क्रान्त्योः सुषुप्तिकाले उत्क्रान्तिकाले च लुप्तसकलज्ञानात् प्रत्यगात्मनस्तदानीमेव सर्वज्ञतया भेदेन व्यपदेशात् प्रत्यगात्मनोऽर्थान्तरं परमात्मेत्यर्थः। अत्र प्राज्ञेन सम्परिष्वक्तः प्राज्ञेनान्वारूढ इति कर्मकर्तृव्यपदेशश्च भेदक इति ध्येयम्।

**प्रस्तुतब्राह्मणेति** । ब्रह्मविदाप्नोति परम्' इति ब्राह्मणं; तत्र ब्रह्मपदविवरणं 'सत्यं ज्ञानमनन्तं 'ब्रह्म' इति, वित्पदविवरणं 'यो वेद निहितं गुहायाम्' इति, परशब्दविवरणं 'सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इत्येतद्वाक्यमित्यर्थः। **ब्राह्मणस्थपरशब्देति।** परशब्दस्य भेदार्थकत्वात् ब्राह्मणवाक्य एव भेदोऽवगम्यते । स च भेदो न कल्पितः, मुक्तिसाधनीभूतज्ञानविधायकस्यातत्त्वज्ञानोपदेशकत्वायोगात्, न चास्याभेदोपदेशकत्वमिति भावः। **एवमिति।** शरीरेन्द्रियादिभ्यः परो भिन्नो जीवः, तस्मात्परं भिन्नं ब्रह्म प्राप्नोतीत्यर्थः। कर्मकर्तृरूपभेदो मुक्तिकालीनो हि सत्य एवेत्यभिप्रायेणाह—**एतदपीति।** 'ब्रह्म वेद' इत्यत्र तस्यैवकारस्य 'इववद्वेववार्थकाः' इति निघण्टुबलादिवार्थकत्वेऽपि तस्यैव ग्रहणमित्यत्र नियामकमाह—**निरञ्जन इति ।** 'सन्दिग्धे तु वाक्यशेषात्' इति न्यायेन 'छागो वा मन्त्रवर्णात्' इत्यत्राप्राकरणिकमन्त्रविशेषप्रतिपन्नविशेषपरत्वे कैमुतिकन्यायेन च प्राकारणिकवाक्यशेषोपस्थापितविशेषपरत्वं सिद्धमिति भावः। ननु परमसाम्यमेवाभेद इति चेत्, तत्राह—**परमसाम्यं चेति। भोगमात्रेति।** साधारणधर्मोक्तेर्भेदस्य सिद्धत्वात् स्वपरन्यायसूत्रादिविरुद्धमभेदपरत्वमिति भावः। **श्रुत्यन्तरे चेति।** 'यथाशुद्धमुदकं शुद्ध उदक आसिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा' इत्यादावित्यर्थः। इवार्थे एवकारस्य प्रयोगं च दर्शयति—**विष्णुरेवेति।** 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति' इत्यनेन समत्वादित्यर्थः। परेण समेत्य परस्य यो धर्मः साम्यं तद्वानासीदित्यर्थः। **अनेन साम्यमिति।** मुमुक्षोः कामनाविषयस्य विद्यासाध्यत्वात्तस्यैव मुक्तप्राप्यत्वादिति

भावः। किंच जीवब्रह्मैक्यं सूत्रविद्विष्टं चेत्याह—इतरेति। ब्रह्मणः 'तत्त्वमसि' इत्यादिभिर्जीवतया व्यपदेशाज्जीवस्य च दुःखित्वाद्धितरूपजगदकरणमित्यादिदोषप्रसक्त्या ब्रह्मणो जगत्कारणत्वं न संभवतीत्याशङ्क्य 'करणाधिपाधिपः 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'पृथगात्मनं प्रेरितारं च मत्वा' इत्यादिभिः परमात्मनो जीवादन्यस्यैव निर्देशान्न दोष इत्युक्तमित्यर्थः। साक्षाद्भेदप्रतिपादकशब्दोऽपीत्याह—स्रष्टुरित्यादिना। अन्यः मायिन ईश्वरादन्यः। नन्वभेदश्रुतीनामपि सत्त्वेनान्यतरस्यान्यतरानुसारित्वे विनिगमकाभाव इत्यत्राह—एवमिति। किंच वेदाचार्यो हि वेदार्थान्मोक्षधर्मे विशदमाविश्चकार, तदनुसारतस्सूत्रं चेत्याह—निर्णीतं चेति। निर्गुणः सत्वरजस्तमोगुणरहितः; तस्यैव वैदिकप्रसिद्धेः। मोक्षबन्धः संसारमोक्षाभ्यामित्यर्थः। केचित्तु व्यक्त्यभिप्रायं बहुवचनमित्याहुः ॥४०॥

---

**अक्षरार्थ०**—अथ श्रुतार्थापत्त्या ब्रह्मण्यविद्यासिद्धौ तस्य निरवद्यत्वं दशाभेदेन निर्वहेदित्याशंकामनुवदति—**शुद्ध** इति। निखिलहेयप्रत्यनीक इत्यर्थः **न यदीति** नाभ्युपगम्यते चेदित्यर्थः। तदा श्रुतानुपपत्तिमाह—**न घटत** इति। तस्य ब्रह्मणः। **जीवैक्यवादः**—तत्त्वमसीति श्रुतिः। शुद्धस्य ब्रह्मणो जीवेनैक्यासंभवादिति भावः। तस्मात् ब्रह्मण एव अविद्यया जीवभावस्योपगमेन जीवैक्यवादस्योपपादनीयत्वादित्यर्थः। निरवद्यतोक्तिः मुक्तिदशायां निर्वहतीत्याह—**निर्दोषतोक्तिरिति**। इमामाशंकां निरस्यति **इत्ययुक्तमिति**। अयुक्तिमेव विवृणोति **प्रत्यक्षादीति**। आदिना अनुमानादिगृह्यते। प्रपञ्चप्रत्यक्षजीवभेदानुमानादिसंवादिनीनां येनाश्रुतं श्रुतं भवति "यस्मिन् विज्ञाते सर्वमिदं विज्ञातं" तदैक्षत बहु स्यां 'तदनुप्रविश्य' सच्च त्यच्चाभवत्' 'द्वा सुपर्णा' 'जुष्टं यदा पश्यत्यन्यमीशं' नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां' 'यस्सर्वज्ञः' 'स्वाभाविकी ज्ञानबलक्रिया च' आदित्यवर्णं तमसः परस्तात्' सदा पश्यन्ति सूरयः' इत्याद्यपरिमितश्रुतीनां प्रपञ्चसत्यत्व, जीवेश्वरभेद, नित्यत्व, आत्मनानात्व-ब्रह्मगुणविग्रहविभूति, प्रकृतिपारमार्थ्यप्रतिपादनतत्पराणामबाधेन जीवैक्यवादे शरीरशरीरिभावेन विनाऽनुपपत्तिं नेतुं शक्येऽपि विस्मयनीयं ब्रह्मणो गुणविभूतियोगमसहमान एव भवान् तत्त्वमसीत्यादेः, एवं प्रत्यक्षादिसकलप्रमाण, पूर्वप्रकरणादिविरुद्धार्थकल्पनां कृत्वा ब्रह्मविषये स्वासूयामाविष्करोति ॥४०॥

इत्यविद्याकल्पकश्रुतार्थापत्तिभङ्गः॥

---

**मायाविद्यादिशब्दैः प्रकृतिरभिम [हि] ता ज्ञानकर्मादयो वे-**
**त्येतत्तत्तत्प्रदेशे स्फुटविदितमतो न त्वदिष्टाऽस्त्यविद्या।**
**किंचाविद्यादिशून्यः पर इति विविधाम्नायकण्ठोक्तमर्थं**
**क्षप्तुं मायादिशब्दः क्षम इति वदतः स्यादविद्या तवैव ॥४१॥**

**सर्वार्थ०**—आस्तां श्रुतार्थापत्तिः, श्रुतिभिरेव भावरूपाज्ञानं सिध्यतीत्यत्राह—**मायेति** ॥ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमित्यत्र न प्रकृतेर्मिथ्यात्वं प्रतिपाद्यते, यथाक्रममुद्देश्योपादेयस्थापनोपपत्तेः। अत्र हि पूर्ववाक्यस्थमायामायिशब्दार्थबुभुत्सायां प्रसिद्धार्थप्रकृतिमहेश्वरशब्दाभ्यां संशयादिरपाचिकीर्ष्यत; अन्यथा उद्देश्योपादेयक्रमविपर्यासः तथा चाहुः—यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमिति ।

न च मायाशब्दो मिथ्यावाची; लोकवेदनिघण्टुपाठाभावात् । क्वचित्प्रयोगस्तु भाक्तः स्यात्; अन्यथा देवमायेव निर्मिता, स्वमायया सांप्रतमागतं वा, ऋते मायां विशालाक्षी तव पूर्वपरिग्रहाम्, तेन मायासहस्रं तदित्यादिभिर्विरुध्येत। नीतिशास्त्रेषु च मुख्यामुख्यसंकलनेन सप्तविधोपायपरिगणने मायेन्द्रजालयोरन्यथाकरणान्यथाप्रतिभासनसामर्थ्यरूपतया विभागस्सिद्धः। मन्त्रौषधादिविशेषवति च मायावीति प्रयोगः, न तु क्वचिदपि मिथ्यार्थसंबन्धिनि । तिमिरादिभासितरज्जुसर्पादौ च मायाशब्दो न दृष्टचरः। स्वमतव्यामोहितानां प्रयोगस्त्वनादेयः। मायां न सेवे भद्रं ते न वृथा धर्ममाचरे, मायाविनं मायया वर्तमानमित्यत्र च व्यामोहनमात्रं विवक्षितम् । 'तेन वञ्चयते लोकान्मायायोगेन केशवः' इत्येतदप्यसुरवञ्चनाशक्तियोगपरम् ।

इन्द्रो मायाभिः पुरुरूप ईयते इत्येतच्च शक्तिविशेषैः प्रभूतरूपप्रकाशनपरम्, अन्यथाऽनन्वयात् । नचेदमिन्द्रभ्रान्तिपरं वाक्यं, प्रशंसार्थप्रकरणविरोधात् । कथमन्यथा युक्ता ह्यस्य हरयश्शतादश भूरि त्वष्टेह राजतीत्यादिकं घटते ? संभवाम्यात्ममाययेत्येतदप्यौचित्यात् स्वच्छन्दावतारहेतुभूतबुद्धिविशेषविषयम्, माया वयुनं ज्ञानमिति च नैघण्टुकाः। एवं सति इच्छागृहीताभिमतोरुदेहः समस्तशक्तिरूपाणि तत्करोति जनेश्वरः। देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया, इत्यादिभिरैकार्थ्यं स्यात् । मम माया दुरत्ययेत्यादिषु गुणमयीति विशेषणात् त्रिगुणद्रव्यविषयत्वमेव कण्ठोक्तम् । तथा च तन्नामपाठः । एतेन भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेत्यपि गतार्थम् । भूयश्चान्ते विश्वमायानिवृत्तिरित्येतदपि प्रस्तुतयोगबलान्निश्शेषमायातरणमेव निर्दिशति । एवं विष्णुमायामहावर्तम्, विष्णोर्विचित्राः प्रभवन्ति माया इत्यादिकमपि सत्यविषयमेव संमन्तव्यम् । मायामात्रं त्विति सौत्रं पदमपि स्वतन्त्रसंकल्पमूलस्वाप्नसर्गस्याश्चर्यतमत्वपरम् । जीवकर्तृकसृष्टिव्यवच्छेद एव ह्यधिकरणे युज्येत । प्रागेव हि स्थापितप्रपञ्चमिथ्यात्वानामिह पुनस्सुप्रसिद्धे स्वप्नविषये विशेषतश्शङ्का नाङ्कुरति । योगे वा जागरप्रपञ्चसत्यत्वमभ्यनुज्ञायेव चिन्ता न स्यात् ।

अविद्याशब्दोऽपि न क्वचिदप्यनिर्वचनीयजगदुपादानविषयः । तथा हि क्षरं त्वविद्या ह्यमृतं तु विद्येत्यादौ क्षरं प्रधानमित्यादिप्राकरणिकवाक्यैकार्थ्यात् प्रधानविषयत्वमेव युक्तम् । अत्र च विद्याशब्दोक्तात् पुरुषादन्यतामात्रेण प्रकृतावविद्याशब्दः । न च सा मिथ्या, गौरनाद्यन्तवती सा जनित्री भूतभावनी, त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्, अचेतना परार्था च नित्या सततविक्रियेत्यादिभिस्तन्नित्यत्वसिद्धेः । कथं तर्हि मृत्युर्वै परे

देव एकीभवति, तमः परे देव एकीभवतीति वाक्ययोर्निर्वाहः ? इत्थम् --सर्वाधारभूते परस्मिन्देवे विभक्तावस्थात्यागेनैकत्वदशावस्थानमात्रं ह्यत्राभिप्रेतम् ।

एतेन प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ इत्येतदपि व्याख्यातम् । अविद्यया मृत्युं तीर्त्वेत्यत्राविद्याशब्दस्तत्त्वज्ञानविरोधिनिवर्तकसत्कर्मविषयतया भाष्ये व्याख्यातः । अनुवाके प्रकृतयोर्विद्याकर्मणोरेव विद्यां चाविद्यां च यस्तद्वेदोभयं सहेति परामर्शात्, पर्युदासवृत्तेर्नञश्चासन्नविषयत्वोपपत्तेः । अविद्यया मृत्युं प्राप्य स्थित इति निर्वाहस्य चातिक्लिष्टत्वात् ; बाधाभावे च स्वरसपरित्यागायोगात्; ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्ययेत्युपबृंहणानुगुण्याच्च । अविद्या कर्मसंज्ञाऽन्येत्यत्र बन्धकर्मविषयत्वं वाक्यशेषसिद्धम् । 'अविद्यायामन्तरे वर्तमानाः' 'सोऽविद्याग्रन्थिं विकिरतीह सौम्य, अविद्यासञ्चितं कर्म, अविद्यातरुसंभूति बीजमेतद् द्विधा स्थितमित्यादौ प्रकरणानुगुणतत्तदर्थविषयत्वं ग्राह्यम् ।

आदिशब्देन 'अनृतेन हि प्रत्यूढ़ा त इमे सत्याः कामाः अनृतापिधानाः' तेषां सत्यानां सतामनृतमपिधानमित्याम्नातोऽनृतशब्दश्च संगृहीतः । सत्कर्मणि ऋतशब्ददर्शनात्तदितरवृत्त्या दुष्कर्मविषयोऽत्रानृतशब्दः,दुष्कृतस्य च ज्ञानपिधायित्वं श्रुतिस्मृतिसिद्धम्, त्वयाऽपि दुस्त्यजं च । एवमसदव्याकृतशब्दैरपि न मिथ्यार्थग्रहः, अवस्थाविशेषवैशिष्ट्यपरत्वात् । तदत्र फलितमाह–अत इति त्वदिष्टानिर्वचनीयत्वादिविशिष्टेत्यर्थः । अनन्यथासिद्धबहुश्रुतिप्रतिहतेश्च मायादिशब्दैर्न ब्रह्माज्ञानक्लृप्तिरित्याह— किंचेति । निरवद्य इति सामान्योक्त्याऽप्यज्ञानरूपमवद्यं निरस्यते । अस्ति चाकर्मवश्यत्वस्वतस्सर्वज्ञत्वश्रुतिः, सकला न यत्र क्लेशादयस्सन्ति परावरेशे इत्याद्युपबृंहणशतं च । मोक्षप्रदत्वश्रुत्या च स्वयं न मायासंबद्धः; तत्प्रसादाधीनं ह्येषां मायातरणं गीयते । ननु त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति कर्मवश्यस्य योगसिद्धस्य गुरोरविद्यातारकत्वमाम्नातमिति चेत्; अस्तु तत्रार्थस्वभावात् परम्परया तारकत्वं, ब्रह्मण एव साक्षान्मोक्षप्रदत्वेन प्रतिपादनात् । एवमविद्याप्रसङ्गरहिते ब्रह्मणि असाधकतमैः शब्दविशेषैरविद्यां वदतस्तवैवाप्रतिपत्तिविप्रतिपत्तिभ्यां निग्रहः स्यादित्यभिप्रायेणोक्तम् - स्यादविद्या तवैवेति ॥ ४१ ॥

---

आनन्द०—प्रसङ्गसङ्गतिमाह—आस्तामिति । अत्र किं मिथ्यारूपाविद्यासाधको मायाशब्द उताविद्याशब्द आहोस्विदनृतशब्दो यद्वाऽसच्छब्दोऽथवाऽव्याकृतशब्द उताहो तमश्शब्द इति विकल्पमभिप्रेत्याद्यं दूषयितुमुपक्रमते—श्रुतिभिरेवेत्यादिना । ननु प्रकृत्युद्देशेन मायात्वविधाने मिथ्याभूतजगदुपादानसिद्धिरित्यत्राह —प्रकृतेरिति । 'अस्मान्मायी सृजते विश्वमेतत्' इति पूर्ववाक्यविवरणत्वमस्येत्याह—अत्र हीति । आहुरिति । मीमांसका इति शेषः । ननु 'पादपांसुना यूपमनक्ति' दध्ना 'जुहोति' 'पयसा जुहोति' 'खादिरो यूपो भवति' 'यस्य पर्णमयी जुहूर्भवति' इत्यादौ वैपरीत्यं दृष्टमिति चेत् श्रुत्यादिसंस्कार्यताबोधकाभावे तन्नियमाङ्गीकारादिति भावः ।

किं चोद्देश्यविधेयभाववैपरीत्येऽपि नाविद्यासिद्धिरित्याह—**न चेति**। **लोकनिघण्टु**रमरादिः। **वेदनिघण्टुः पारतन्त्र्यादिः**। केचित्तु—लोकवेदशब्दाभ्यां लोकवेदप्रयोगोऽभिमतः। नन्वैन्द्रजालिकपदार्थे इदं सर्वं मायेति लोकप्रयोगदर्शनात् तत्सिद्धिरित्यत्राह—**क्वचिदिति**। **अन्यथा**—तस्य मुख्यार्थत्वे। **देवमाया** देवोरूपा माया आश्चर्यरूपा। **मायां विशालाक्षीं** विचित्रसृष्टिहेतुभूतां प्रकृतिमित्यर्थः। **मायासहस्रं** वञ्चनया प्रयुक्तप्रहरणादिकमित्यर्थः। ननु देवमायेत्यादिप्रयोगानामेव भाक्तत्वमस्तु, विनिगमकाभावादित्यत आह—**नीतिशास्त्रेष्विति**। अन्यथाकरणसामर्थ्यं माया, अन्यथाप्रतिभासजननसामर्थ्यमिन्द्रजालमिति द्रष्टव्यम्। शक्तिग्राहकं प्रयोगमप्याह—**मन्त्रौषधेति**। अन्यथाकरणसामर्थ्यरूपमिति भावः। मिथ्यार्थवाचकत्वे भ्रान्ते पुरुषादौ अध्यासाधिष्ठानभूतरज्ज्वादौ वा मायावीति प्रयोगं आरोप्ये सर्पादौ च मायाशब्दप्रयोगं चानिष्टमापादयति। **न तु क्वचिदिति**।

ननु पूर्वं क्वचित्प्रयोगो भाक्त इत्युक्तेर्मिथ्यावस्तुनि मायाशब्दप्रयोगसिद्धेस्तद्वति मायाविशब्दप्रयोगोऽनुक्तसिद्ध इति चेत्, न। ऐन्द्रजालिके प्रयोगस्य सिद्धत्वेऽपि तद्व्यतिरिक्तभ्रान्तिस्थले प्रयोगाभावात्; ऐन्द्रजालिके च विचित्रकार्यकरत्वेनान्यथासिद्धः प्रयोगः, न च तत्र भाक्तत्वोक्तिविरोधः। इन्द्रजालस्यैव मायात्वेन तज्जन्यस्य कार्यतया भाक्तत्वौचित्यादिति भावः। ननु **वाचस्पत्यादौ** प्रयोगो दृश्यत इति चेत्तत्राह—**स्वमतेति**। **व्यामोहनं** वञ्चनाशक्तिः। स्तुतिप्रकरणतामेव दर्शयति—**कथमन्यथेति**। अस्य इन्द्रस्य हरयो दशशता सहस्रं युक्ता प्राप्ताः। तस्मात्त्वष्टा इन्द्रः भूरि राजति पुरुषरूपत्वेन प्रकाशत इत्यर्थः। **औचित्यादिति**। विचित्रकार्यकरशक्तिवाचिनोऽपि बुद्धिरूपविशेषशक्तिपरत्वं युक्तमित्यर्थः। वस्तुतस्सामान्यशब्दस्य पुरुषशब्दवत् विशेषेऽपि शक्तिरित्याह—**माया वयुनमिति**। ननु 'मम माया' इत्यत्रापि सङ्कल्पग्रहणसंभवे प्रकृतिपरत्वसिद्धान्तो न स्यादित्यत्राह—**मम मायेत्यादिना**। एषा गुणमयीति विशेषणादित्यर्थः। **तथा चेति**। त्रिगुणं प्रधानमिति प्रसिद्धरित्यर्थः। **एतेनेति**। मायया सङ्कल्पेन यन्त्रारूढानि प्रकृतिरूपयन्त्रारूढानीत्यर्थः। ननु 'विश्वमायानिवृत्तिः' इत्यत्र निवृत्तिप्रतियोगिन्याः पराभिमताविद्यापरत्वं वक्तव्यं, सिद्धान्त्यभिमतरीत्याऽपि प्रकृतेर्नित्यत्वादित्यत्राह—**विश्वमायानिवृत्तिरित्येतदपीति**। मायाया निवृत्तिरसम्बन्ध इत्यर्थः। **सत्यविषयमेवेति**। सत्यभूतत्रिगुणसङ्कल्पशक्त्यादिवैषम्यविषयमेवेत्यर्थः। तथा '**मायामात्रमिदं सर्वमनभिव्यक्तस्वरूपत्वात्**' इति सूत्रमपि। इदं सर्वं स्वाप्नप्रपञ्चं सर्वं मायामात्रं विचित्रं जाग्रत्प्रपञ्चविलक्षणं, कुतः, अनभिव्यक्तस्वरूपत्वात् अभिव्यक्तं यत् लोकसिद्धं तादृशकारणसिद्धत्वाभावादित्यर्थकत्वात्तदपि पराभिमतसाधकं न भवतीत्याह—**मायामात्रमिति**। तत्सूत्रस्य पराभिमतार्थं पराकरोति—**प्रागेवेति**। आरम्भणाधिकरणादिष्वित्यर्थः। **योगे वेति** शङ्काया इति शेषः। जागरप्रपञ्चसत्यत्वाभ्यनुज्ञाभावे स्वाप्ने विशिष्य शङ्कानुदयात्तन्मात्रमिथ्यात्वसाधनवैयर्थ्यादिति भावः। द्वितीयं दूषयति—**अविद्याशब्द इति**। नन्वस्तु प्रधानविषयत्वं

तस्यैव मिथ्यात्वोक्ताविष्टसिद्धेरित्यत आह—**अत्र चेति**। नाविद्याशब्दो मिथ्यावचनः इति भावः। विरोधाच्च न मिथ्यार्थत्वमित्याह—**न चेति**। अनन्तत्वस्य मिथ्यात्वविरोधित्वात् तथा नित्यत्वस्यापीति भावः। नन्वेकीभावस्य निवृत्तिरूपतया नित्यताविरोधित्वात् कथं नित्यत्वमिति शङ्कते · **कथं तर्हीति**। मृत्युतमश्शब्दाभ्यां प्रकृतिरुच्यते। ननु यत्र लयशब्दोऽस्ति तत्र कथमित्यत्राह—**एतेन प्रकृतिरिति**। पुरुषस्य नित्यतया निवृत्त्यसम्भवात् लोङ् श्लेषण इत्यत्रात्यन्तसम्बन्धस्यैवोक्तेरिति भावः।

ननु 'अविद्यया मृत्युं तीर्त्वा' इत्यत्राविद्यायास्संसारप्राप्तिहेतुत्वप्रतिपादनेन मिथ्यात्वपरत्वं स्यादित्यत्राह—**अविद्ययेति**। प्रोक्षणीन्यायेनावयवशक्त्यैवोपपत्तेः-लाघवादिति भावः। तरतिः निवृत्तिपरः। **पर्युदासेति**। समस्तत्वादिति भावः। परोक्त-मर्थं दूषयति—**अविद्ययेति**। तरणस्य प्राप्त्यर्थत्वाभावात् स्थित इत्यध्याहारदोष-प्रसङ्गाच्च। ननु 'एतं सेतुं तीर्त्वा' इत्यत्र प्राप्त्यर्थत्वमङ्गीकृतमिति चेन्न। तत्र मुख्यार्थासंभवात्प्राप्तिपरत्वमङ्गीकृतम। तद्वदत्राङ्गीकारे न मानमिति भावः। **ब्रह्मविद्येति**। उक्तार्थपरत्वाभावे उदाहृतवचनविरोध इति भावः। **प्रकरणानुगुणेति**। प्रकृतिदुष्कर्मभ्रान्त्याद्यर्थपरत्वं ग्राह्यमित्यर्थः। तृतीयं दूषयति—**आदिशब्देनेत्यादि**। **सत्कर्मणीति**। अवयवशक्त्यैव प्रयोगोपपत्तेरिति भावः। ज्ञानपिधानलिङ्गाच्च दुष्कर्मपरत्वमित्याह—**दुष्कृतस्य चेति**। चतुर्थादि दूषयति **एवमिति**। 'असदेवेदमग्र आसीत्' 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादावित्यर्थः। **अवस्था**—सूक्ष्मावस्था। **मायादिशब्दैरिति**। पूर्वोक्तमायादिशब्दैरित्यर्थः। ब्रह्माज्ञानपक्षे निरवद्यत्वश्रुतिविरोध-श्चेत्याह - **निरवद्यमितीति**। अविद्याश्रयत्वे हि अकर्मवश्यत्वं सर्वज्ञत्वं च न स्याता-मित्याह—**अकर्मवश्येति**। **अप्रतिपत्तिः**—अज्ञानम्। **विप्रतिपत्तिः**—विपरीतज्ञानम्। ॥ ४१ ॥

---

**अक्षरार्थ०**—इह श्रुतिभिरेव मिथ्याभूतभावरूपाज्ञानं सिद्ध्यतीत्यत्राह **मायेति**। आदिना अनृत-मृत्यु-तमश्शब्दादि गृह्यते। प्रकृतिर्मूलप्रकृतिः। अभिमता—अभिप्रेता। मायां तु प्रकृतिं विद्यादित्यादौ। नात्र प्रकृतेर्मिथ्यात्वं प्रतिपाद्यते, किं तु मायया संनिरुद्ध इति पूर्ववाक्यस्थमायाशब्दस्य प्रसिद्धार्थकप्रकृतिशब्देन, महेश्वरशब्देन मायि-शब्दस्येव विवरणं क्रियते इति स्फुटमवगम्यते।

अपि च मायाशब्दस्य मिथ्यार्थकत्वे प्रमाणमपि न दृश्यते। **ज्ञानकर्मादयो वेति** 'संभवाम्यात्ममाययेत्यत्र संकल्पात्मकं ज्ञानं, माया वयुनं ज्ञानमिति निघण्टुः। 'तेन वाचयते लोकान् मायायोगेन' इत्यादौ कर्म। आदिना आश्चर्यतमत्वं' देवमायेव निर्मिता, 'मायामात्रं तु' इत्यादौ। इत्यादिकं तत्तत्प्रकरणपरामर्शे स्फुटमित्याह—

इत्येतदिति अविद्याशब्दः—क्षरात्वविद्या इत्यत्र प्रकृतिपरः। अविद्यासंचितं कर्म इत्यादौ देहात्मभ्रमपरः। 'अविद्यया मृत्युं तीर्त्वा' इत्यादौ विहितकर्मपर इत्यादिकं तत्र तत्र स्फुटमेव। त्वदिष्टा मिथ्याभूता अविद्या तु कुत्रापि नेत्याह नेति। निरवद्य—इत्यादिसामान्योक्त्या 'सकला न यत्र क्लेशादयस्सन्ति परावरेशे' इत्यादिविशेषोक्त्या चाखिलहेय रहितत्वेन श्रुतिस्मृतिशतस्फुटप्रतिपन्ने परस्मिन् ब्रह्मणि तद्विरुद्धमवद्यान्वयं मायाऽविद्यादिशब्दो न वक्तुं क्षम इत्याह—किं चेति। एवं निर्दोषे ब्रह्मणि अर्थान्तर-परैरेव शब्दैर्दोषमारोपयतस्तव तन्निग्रहात् सर्वत्र यथावस्थितार्थनवबोधस्यादित्यभि-प्रायेणाह—स्यादविद्या तवैवेति ॥४१॥

नायकसरेऽक्षरार्थव्याख्यानमेतावदेवोपलब्धम्

इति मायादिशब्दानां ब्रह्मदोषप्रतिपादकत्वानुपपत्तिः ॥

---

निर्दोषश्रुत्यबाधप्रणयिभिरुदितो ब्रह्मजीवानुबन्धी
मायाविद्याविभागोऽप्यफल इह परोन्मोहनार्था हि माया।
मिथ्यार्थान् दर्शयित्वा विहरणमपि तैस्तादृशं भावयन्ती
मायैव स्यादविद्या न कथमितरथा स्यादनुच्छेदनीया ॥ ४२ ॥

**सर्वार्थ०**—अत्र केचिन्निर्दोषश्रुत्यविरोधमाकाङ्क्षन्त. एवं व्यभाङ्क्षुः-अविद्या किल स्वकल्पितानां क्षेत्रज्ञानां सत्यं तिरोधायासत्यं सत्यत्वेन प्रकाशयति; दुःखादिकं च दोग्धि; माया तु ब्रह्मणः सत्यमसत्यं च सम्यगेव दर्शयन्ती, दुःखादिकं चानुत्पादयन्ती विश्वव्यापारलीलारसं प्रसूत इति। इमं विभागमनुभाष्य दूषयति--**निर्दोषेति** ॥ अफल-त्वं विवृणोति--परेति। अयं भावः--ये नाम केचिन्मायया क्रीडन्ति न तेऽनया मोमु-ह्यन्ते; परानेव व्यामोहयन्ति। अत्र तु न वस्तुतस्सन्ति भवतां परे मोहनीयाः। कल्पि-तांस्तु क्षेत्रिणः कल्पितानि च मोहकरणोपकरणानि स्वयं सर्ववित्परमेश्वरो मायावी यदि कल्पितत्वेन पश्येत्, कथं तान् मुमोहयिषेत्? कथं च तैश्चिक्रीडिषेत्? अत ईदृशोपाधि-विभागेन जीवेश्वरयोस्सदोषनिर्दोषत्वविभागो दुस्साध इति।

अथ पराविद्याकल्पितानि जीवाद्युपकरणानि ब्रह्मापि स्वमायया परमार्थवत्पश्य-तीति मन्वीत; तत्राह--**मिथ्यार्थानिति**। दर्शयित्वा--सत्यत्वेनेति शेषः, तादृशं--मिथ्याभूतमित्यर्थः। इयं स्वयमसत्येव माया स्वसिद्धान्यविद्यासिद्धानि वा मिथ्याभूतानि विहारोपकरणानि तत्साध्यं विहरणं च यदि सत्यत्वेन दर्शयन्ती अर्भकादीनामिव प्रति-बिम्बकल्पैर्जीवैस्संव्यवहारमारभेत, सैव कथमविद्या न स्यात्? सुखजनकत्वादिति चेन्न; अविद्यायामपि तस्याभ्युपगमात्। दुःखाजनकत्वे सतीति चेत्तत्राह—**इतरथेति**। इतरथा—दुःखासंभिन्नसुखजनकत्वेनाविद्यात्मकत्वाभावे सतीत्यर्थः। नन्वनादित्ववन्मायायाः अनुच्छेद्यत्वमप्यस्तु, का नो हानिरिति चेत्; प्रथमं तावदसत्यस्य सर्वस्यानित्यत्वाभ्युपगम-विरोधः। अथ च ब्रह्मस्वरूपवन्निर्बाधस्य नित्यस्य भावरूपस्यासत्यस्य क्लृप्तिविरोधः। अथवा विश्वमायानिवृत्तिरिति स्वाभीष्टपरतया व्याख्यातश्रुतिविरोधः, नित्यानित्यवस्तु-विवेकवैतथ्यं चेति ॥ ४२ ॥

आनन्द०—ननु निर्दोषत्ववचनविरोधो नास्ति, मायाया दोषत्वाभावात्। तथा च मायासिद्धौ न विरोध इत्याक्षेपसंगतिमाह—**अत्र केचिदिति**। ननु विभागस्य वैयर्थ्यं ब्रह्मणो निदर्षोत्वस्थापनस्यैव प्रयोजनत्वादित्यत आह—**अयं भाव इति**। **यदि कल्पितत्वेन पश्येदिति**। ननु यथा रामरावणादिसालभञ्जिकाजालं वस्तुतो निर्जीवत्वेन जानन्त एव सालभञ्जिका एव परस्परं मारीचादिरूपेण मोहनव्यापारे युद्धादिषु च प्रवर्तयन्तो दृश्यन्त इति चेत्सत्यम्। तत्तत्कथाभिनयेन सत्यकथाज्ञानस्य ज्ञायमानतया तदवगतिहेतुत्वेन सार्थकत्वात्। अत्र तु सर्वज्ञस्य वेदितव्याभावात्। यद्यपि ज्ञातार्थाभिनयेऽपि प्रवर्त्तमाना दृश्यन्ते। तथाऽपि तज्ज्ञानेन तात्कालिकरसाभिव्यक्तेः। न चात्रापि तथाविधमायाशब्दार्थानुपपत्तिरिति भावः। **अविद्यात्मकत्वाभावे सतीति**। ज्ञानविरोधित्वाभावादिति भावः। **नित्यानित्येति**। चकारस्त्वद्वैतसिद्धान्तविरोधादिकं समुच्चिनोति। ननु नित्यानित्यज्ञानस्यानित्यनिवृत्त्यर्थत्वात् कथं वैयर्थ्यमिति चेन्न। ब्रह्मव्यतिरिक्तनिवृत्त्यर्थत्वात्तस्येति भावः। **मायैव स्यादविद्येति** मूलस्य मायाऽविद्यैव स्यादित्यर्थः॥ ४२॥

**इति मायाविद्याविभागभङ्गः॥**

---

**मिथ्याभूतस्य सत्यं निरुपधि भजते न ह्युपादानभावं**
**तस्योपाधिश्च मिथ्यात्मक इति निरधिष्ठानता नास्य युक्ता।**
**तस्मात्सत्यानृते द्वे मिथुनमिति न सद्विश्वसत्ता ह्यबाध्या**
**सद्विद्यायां च कार्यं ननु कथमसतस्सद्भवेदित्युपात्तम्॥ ४३॥**

**सर्वार्थ०**—यत्तु मिथ्याभूतस्य प्रपञ्चस्य तादृशमेवोपादानं भवितुमर्हतीत्याहुः, तदनुभाषते—**मिथ्येति**। अयं भावः—यद्यपि ब्रह्मोपादानकमशेषं कार्यमाम्नातम्; तथाऽपि तस्य न स्वरूपतस्तदुपादानत्वं युक्तम्, निर्विकारत्वात् विरूपत्वाच्च। अत उपाध्यपेक्षायां ब्रह्मण उपादानत्वघटकतया प्राप्त उपाधिः स्वकार्यवन्मिथ्याभूत एष्टव्यः। स च स्वरूपसत्यत्वाभावान्निरधिष्ठानो न सिध्येत्। अतो ब्रह्मण उपादानत्वार्थमुपाधेः स्वरूपसिद्ध्यर्थं मिथः-करम्बितसत्यानृतमिथुनसंभवः सर्गः स्वीकार्य इति। अत्र लोकसिद्धोपादानप्रक्रिया-विरोधमभिप्रेत्याह—**इति न सदिति**। सत्ययोरेव हि प्रकृतिविकृतित्वं दृष्टम्; न च कल्पितरजताद्युपहितस्य तत्तदर्थक्रियाकारित्वम्। अतो मिथ्योपसृष्टतयाऽपि ब्रह्मण उपादानत्वं मृग्यमिति भावः। उपादानमिथ्यात्वकल्पकासिद्धिमाह—**विश्वेति**। प्रपञ्च-सत्यत्वं तावद्व्यावहारिकव्यपदेशेन त्वयाऽपि संगृह्यते; बाधश्च परिहरिष्यत इति भावः। श्रुतिविरुद्धं च कार्यमिथ्यात्वमित्याह—**सद्विद्यायामिति**।

तद्धैक आहुः असदेवेदमग्र आसीदिति परमतमनूद्य स्वमतेन तत्प्रतिक्षेपे 'कुतस्तु खलु सोम्यैवं स्यात् कथमसतः सज्जायेत' इति कार्यसत्यत्वं संप्रतिपन्नत्वेनोपात्तम्। अतः प्रथमप्रतीतानुसारेण 'वाचारम्भणं विकारो नामधेयम्' अपागादग्नेरग्नित्व-मित्यादिकमसत्कार्यवादनिरासार्थतया नेतव्यमिति भावः। एवं मृत्तिकेत्येव

'सत्यम्' त्रीणि रूपाणीत्येव सत्यमित्यादौ च श्रुत्युपात्तमृत्तिकादिसत्यत्वानुरोधेनोपादानोपादेयद्रव्यतादात्म्यपरत्वसंग्रह एव साधीयान् । अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमित्यत्र च प्रकृत्यवगतप्राणसत्यत्वाबाधेन संबन्धविभक्तेरुचितविशेषसंभवे विपरीतविवक्षाकल्पनमन्याय्यम् । यदि च प्राणेषु व्यावहारिकं सत्यत्वमिहानूद्येत तदा मिथ्याभूतानाम् एष सत्यमिति किं नाम त्वदिष्टं निर्दिष्टं स्यात् ? प्रत्युत समभिव्याहारसामर्थ्यात् ब्रह्मणोऽपि सत्यत्वमविशिष्टोपात्ततया व्यावहारिकमित्येव सिध्येत् । स्वरूपेऽधिकसत्यत्वविधौ च तस्य नीलादिवन्निष्प्रतियोगिकत्वान्न षष्ठी समन्वीयेत । अतो यथाभाष्यमिहार्थः ॥ ४३ ॥

---

आनन्द०—ननु मिथ्याभूतप्रपञ्चं प्रति ब्रह्मण उपादानत्वश्रुत्यन्यथानुपपत्तिबलादविद्यासिद्धिरित्याक्षेपसंगतिमाह - यत्त्विति । ननु सत्यस्य मिथ्याभूतं प्रत्युपादानत्वं शुक्त्यादौ भवद्भिरेवोच्यत इत्यत्राह—अयं भाव इति । निर्विकारत्वादिति । शुक्त्यादेरपि न साक्षादुपादानत्वं यद्यपि तथाऽप्यत्र विशेष इति भावः । चिद्रूपत्वादिति । चितो जडात्मकत्वविरोधादिति भावः । ब्रह्मण उपादानत्वघटकतयेति । यत्तादात्म्यापादकं कार्यं तदुपादानमिति तत्तादात्म्यापादकस्य परिणामिनो ब्रह्मनिष्ठस्यावश्यकत्वादिति भावः । ननु तर्हि ब्रह्मणः किमर्थमुपादानत्वं स्वीकार्यमित्यत्राह—स चेति । सत्ययोरेव हीति । नन्वविद्योपहितस्य शुक्त्यादे रजतोपादानत्वं दृष्टमिति चेन्न । तस्यासंप्रतिपन्नत्वादिति भावः । अर्थक्रियाकारित्वं कटकाद्युपादानत्वमित्यर्थः । मृग्यं—नास्तीत्यर्थः । ननु विश्वस्य सत्त्वमेव नास्ति, कुतस्तस्याबाध्यत्वमित्यत्राह—प्रपञ्चस्येति । कार्यसत्यत्वमिति ।

ननु 'कथमसतस्सज्जायेत' इत्यस्यायमर्थः—असतः सदुत्पत्त्यसंभवात् मिथ्यैवोत्पद्यत इति प्रपञ्चस्योत्पद्यमानस्य मिथ्यात्वमिति चेन्न, तथा सति कारणस्यासत्त्वप्रसङ्गेन ब्रह्मणः सत्यत्वाभावप्रसङ्गात् । न च ब्रह्मभिन्नाविद्याया एव परिणामितयोपादानत्वं ब्रह्मणस्तु नास्त्युपादानत्वमिति वाच्यम् । तथा सति सदेवेत्युपक्रमविरोधात् । न ह्यसच्छब्दार्थस्योपादानत्वबलेन कार्यसत्त्वप्रतिपादनं तदुपपादकमिति भावः । ननु 'वाचारम्भणं विकारो नामधेयम्' इत्यत्र वाचाया आलम्बनं विकारो घटपटादिः, नामधेयं नाममात्रं, न वस्तुतस्सत्यमिति प्रतीतेः विकारोपादानतया मिथ्या सिध्यतीत्यत्राह—अत इति । अयं भावः—न चात्र तत्प्रतिपादकश्शब्दोऽस्ति । न च वाचारम्भणादिशब्दस्त्वदुक्तार्थबोधकः । वाक्संबन्धप्रतिपादनपरत्वात् । नापि विकारो नामधेय मिति शब्दादभेदोपदेशेन तत्सिद्धिः; उपक्रमभूतैकविज्ञानप्रतिज्ञाविरोधात् कार्यकारणयोर्भेदात्कथं प्रतिज्ञेति शङ्काया अभेदोपन्यासेन निवर्तनीयायास्तदभावबोधनेन निवर्तनासंभवात् । प्रत्युत सर्वशब्दार्थाभावप्रतिपादनेन पुनर्मुखान्तरेण प्रतिज्ञानुपपत्तिशङ्कोद्बोधकत्वात् । कस्तर्हि विकारो नामधेयमिति वाक्यस्यार्थ इति चेत् । नामशब्दः

प्रसिद्धिपरः, मृत्पिण्डाधेयापृथक्सिद्धा येयं विकारो घटाद्यवस्था वाचारम्भणं नामव्यवहारविषय इति लोकप्रसिद्धः अतः शब्दभेदान्न कार्यमुपादानतो भिद्यत इत्यर्थं इति, तदाह—**प्रथमप्रतीतेति** ।

**अपागादग्नेरग्नित्वमिति** । अग्नित्वेन प्रतिपन्नस्याग्नेरग्नित्वमपागात्—बाधितमित्यर्थः । तथा च मिथ्यात्वमिति भावः । किं च मृत्तिकेत्येवेतीतिशब्देन मृत्तिकाप्रकारप्रतिपत्तेर्मृत्तिकात्वेन सत्यमिति प्रमाणसिद्धमित्यर्थतया विकाराणां तदन्यत्वस्यैव स्वरसप्रतीतेर्न पूर्वपक्ष्यवकाश इत्याह—**एवमिति** । ननु 'अथ नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यं' इत्यादिषु सत्यस्य जगतः प्राणशब्दोपलक्षितस्य जगतश्च सत्तावैलक्षण्यावगमान्न ब्रह्मवत् पारमार्थिकत्वं प्रपञ्चस्येति चेत्तत्राह—**सत्यस्य सत्यमित्यादि** । सत्यं वैलक्षण्यमेव गम्यत इति, तथाऽपि न प्रपञ्चस्य मिथ्यात्वसिद्धिः । कालत्रयनिरूपितत्वानन्याधीनत्वविशेषणविशिष्टं ब्रह्मसत्त्वं किंचित्कालनिरूपितमन्याधीनं प्रपञ्चसत्त्वमिति वैलक्षण्यसंभवात् । किंचात्र षष्ठी न निर्धारणार्थे । तथा सति प्राणानां सत्यत्वकथनेन तदन्यधर्मेण निर्धारणं स्यात् । न च सत्यत्वेन निर्धारणं, समुदायिसाधारणधर्मेण पृथक्करणायोगात् । तदाह—**प्रकृत्यवगतेति** । तथा च प्रतियोगित्वे षष्ठी । सत्यशब्दश्च नियन्तृपरः । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यं तान्येतानि त्रीण्यक्षराणि सत्तियमिति तद्यत् सत् तदमृतं अथ यद्यत्तन्मर्त्यं अथ यद्यं तेनोभे नियच्छति' इति चिदचिन्नियन्तृत्वस्य बृहदारण्यकनिरुक्तिबलात् तत्सिद्धेः प्राणादीनां किञ्चिन्नियन्तॄणामपि नियन्तृत्वमस्य लभ्यते; 'पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्' इतिवत् ।

ननु सत्यशब्दस्य रूढ्यर्थ एव गृह्यत इति चेन्न । 'आज्यैः स्तुवते' इत्यत्र 'तदाज्यानामाज्यत्वम्' इति श्रौतयोगार्थत्वं रूढ्यर्थापेक्षया बलीयस्त्वेन स्वीकारवत् श्रौत योगस्य ग्राह्यत्वात् । उक्तं च वार्तिके—

> गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् ।
> वेदो यमाश्रयेदर्थं को नु तं प्रतिकूलयेत् ॥

इति । तथा च सर्वनियन्तेति वाक्यर्थ इति न मिथ्यात्वसिद्धिः । किं च यदि व्यावहारिकसत्यानां प्राणानां मध्येऽतिशयेन सत्यमित्युच्येत तदा मुख्यं व्यावहारिकत्वमुक्तं स्यादिति ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गः, तदाह—**यदि चेति** । **यथाभाष्यमिति** । नियन्तृत्वं भाष्ये प्रतिपादितमित्यर्थः । 'ननु सत्यं ज्ञानं' 'तत्सत्यं स आत्मा' 'त्रीणि रूपाणीत्येव सत्यं' 'मृत्तिकेत्येव सत्यम्' इत्येवमादावपि तथा प्रसङ्ग इति चेत् । 'सत्यं ज्ञानं' 'तत्सत्यम्' इत्यादाविष्टापत्तेः । 'मृत्तिका' इत्यादौ तु योगार्थो बाधकबलात् परित्यज्यते यथा क्वचिन्मुख्यार्थत्याग इति ॥ ४३ ॥

**इति अविद्याकल्पककार्यमिथ्यात्वान्यथानुपपत्तिभङ्गः**

**कार्याणां यत्सरूपं किमपि गुणमयं कारणं कापिलोक्तं**
**तत्क्षिप्तं माक्षिकादेः क्रिमिमुखजनिना सूत्रकारैर्द्वितीये ।**
**तस्मान्मिथ्यात्मकस्य स्वयमनुपधिकं सत्यमेवास्तु सूतिः**
**सत्योपादानवादे जगदपि न मृषा स्यादितीष्टं त्विदं नः ॥ ४४ ॥**

**सर्वार्थ०**—अत्र यदुपजीवनेन मिथ्याभूतस्य मिथ्याभूतमेवोपादानमिति कल्प्यते तमेव प्रकृतिविकृत्यैकरूप्यनियमं निरस्यति—**कार्याणामिति**। न विलक्षणत्वाधिकरणे हि सत्त्वरजस्तमोमयस्य जगतस्तादृशमेवोपादानं युक्तम् न तु निर्गुणं ब्रह्मेति वदतः-**सांख्यस्य द्वितीयेऽध्याये सूत्रकारैरुत्तरं दत्तं** 'दृश्यते त्विति । कथंचित्सारूप्यं ब्रह्मणोऽपि सिद्धम्; सर्वथा सारूप्यं न ते प्रकृतेरपि स्यात्; भेदाभेदाङ्गीकारेऽपि समविषमदशाभेद-व्यवस्थानात् । अतः कार्यान्तरकारणव्यावर्तकाकारेण सारूप्यमपेक्षितमिति वक्तव्यम् तत्र माक्षिकगोमयादिभ्यः क्रिमिवृश्चिकाद्युत्पत्तिदर्शनाद्व्यभिचारः । एष्वपि पार्थिवत्वा-कारेण सारूप्यमस्तीति चेत्, किमतः ? तेनाकारेण तेषां तत्कारणत्वे पार्थिवान्तरेभ्यः अपि तज्जातीयोत्पत्तिप्रसङ्गात् । यदि चासजातीयोत्पादकव्यावर्तकाकारेण सारूप्यमि-ष्येत कथमिदं प्रकृतौ संभाव्येत ? सर्वस्याप्यन्ततः प्रकृतिकार्यत्वाभ्युपगमाद्व्यतिरिक्तोपा-दानानङ्गीकाराच्च ।

एवं कार्यस्य विजातीयकार्यव्यावर्तकाकारेण सरूपमुपादानमित्यपि नियमो दूष्यः; सारूप्यविकल्पदोःस्थ्यस्य दुर्वारत्वात्, शरावादिजातीयव्यावर्तकघटत्वादिना मृदस्सा-रूप्यायोगात् । अतस्सारूप्येण वा वैरूप्येण वा अन्वयव्यतिरेकवता धर्मिग्राहकसिद्धेन वा केनचिदाकारेण निमित्तवदुपादान [त्व]मपीति नियमः । एवं स्थिते सत्यकारणत्वं कार्याणामसत्यत्वं च स्थापयतस्ते निरुपाधिकात् सतो जगदुत्पत्तौ न विरोध इत्याह—**तस्मादिति**। निर्विकारश्रुतिविरोधात् उपहितग्रह इति चेन्न; विकारमिथ्यात्वेन युष्मा-भिस्तत्समाधानात् । **सूतिः**—अध्यासाधिष्ठानतया उपादानमित्यर्थः । अत्र प्रसङ्गान्तर-माशङ्क्य परिहरति—**सत्येति**। तुशब्देन न केवलमिष्टप्रसङ्गता; व्याप्तिसापेक्षे प्रसङ्गे पूर्ववत्सारूप्यनियमभङ्गोऽप्यस्तीति द्योत्यते ॥ ४४ ॥

---

**आनन्द०**—पूर्वसङ्गतिरेवास्य सङ्गतिरित्याह—**अत्रेति**। **भेदाभेदेति**। साङ्ख्यैः कार्योपादानयोस्तादात्म्याङ्गीकारादिति भावः । **अत इति**। कारणतावच्छेदक-रूपेण सालक्षण्यं विवक्षितमित्यर्थः । **तत्रेति** । गोमयत्वादेर्वृश्चिकादावभावादिति भावः। **असजातीयेति** । कारणतावच्छेदकभिन्नमप्यसजातीयाद्व्यावर्तकं भवति पार्थिवे गन्धवत्त्ववदिति पूर्वस्मात् भेदः । **अन्तत इति**। तथा च तत्र सालक्षण्यं बाधितं स्यादिति भावः । दूषणप्रकारमेवाह—**सारूप्येति**। उक्तनियमभङ्गस्य प्रकृताद्युपयोग-माह—**एवं स्थित इति**। कार्यस्य सत्यतान्यथानुपपत्त्या नाविद्याकल्पनमनुपपत्त्य-भावादिति भावः ॥ ४४ ॥

**इति उपादानोपादेयसालक्षण्यनियमभङ्गः**

दृश्यत्वाद्विश्वमिथ्यावचसि विहतयोऽसिद्धयश्चात्र बह्व्यः
पक्षादेस्सिद्ध्यसिद्ध्योर्न हि गतिरितरा नापि वादाङ्गमीदृक् ।
मर्यादां लोकसिद्धां विजहत इह ते नापरा सा प्रसिध्ये-
न्निर्मर्यादोक्तिमात्राज्जगदपलपतः किं न सत्यं ततस्तत् ॥ ४५ ॥

सर्वार्थ०—अथ कार्यमिथ्यात्वासिद्धिरेवासिद्धा, अनुमानतस्तत्सिद्धेरित्यत्राह—दृश्यत्वादिति ॥ मिथ्याशब्दोऽत्र द्व्येकयोरितिवद् भावप्रधानः; विगीतं मिथ्या दृश्यत्वात् यद् दृश्यं तन्मिथ्या यथा शुक्तिरूप्यमित्यत्र सर्वे दोषास्समाह्रियन्ते। विहतयस्तावत्—विगीतपदं किञ्चिन्निष्ठं विगीतत्वमुपस्थापयति, तस्यापि पक्षीकरणात् तन्निष्ठात्यन्ताभावो मिथ्यापदेनोपस्थाप्यत इति प्रतिज्ञापदयोर्व्याघातः। द्वयोरपि पदयोस्तत्त्वतः स्वार्थसमर्पकत्वाभावान्न व्याघात इति चेत्; एवं सति त्वन्मते क्वचिदपि प्रतिज्ञाविरोधो न स्यादिति विश्रृङ्खलविरुद्धभाषितेन भवता भवितव्यम् । ईदृशतत्त्ववेदिना च त्वया प्रतिवादिनोऽपि विरुद्धं वदन्तो न निग्राह्याः । परबुद्धिसिद्धविरोधात्तन्निग्रह इति; न, परबुद्धिसिद्धेऽपि त्वया तत्त्वशून्यत्वावधारणात् ।

किंच विगीतत्वं यदि मिथ्या स्यात्, तदा सत्यत्वेन वा मिथ्यात्वेन वा संप्रतिपत्तिः स्यात् ? तत्राद्ये मिथ्यात्वसाधनव्याघातः; द्वितीये साध्यत्वव्याघातः । मिथ्यापदं च सत्यमसत्यमनिर्धारितविशेषद्वयं वा मिथ्यात्वमु [पस्थापयति] पाददीत ? प्रथमे तस्य मिथ्यावृत्तित्वव्याघातः । न हि सत्यं रूप्यत्वं शुक्तिरूप्ये वर्त्स्यति। सिद्धान्तव्याघातश्च, ब्रह्मस्वरूपस्य सत्यस्य निराधारस्यासत्यवृत्तित्वे व्याघातः; तदतिरिक्तस्वीकारे सत्याद्वैतव्याघातः। हेतुपदेन च पक्षधर्मतयोपस्थाप्यमानं लिङ्गं साध्यपदेनापह्नियत इति प्रतिज्ञाहेतुविरोधः। शुक्तिरूप्यगतयोश्च साध्यसाधनयोस्सत्यत्वेन ग्रहणे प्राग्वद्विरोधः। असत्यत्वेन ग्रहणे तूदाहरणवाक्येन व्याप्तिप्रदर्शनविरोधः। दृष्टान्ते च मिथ्यात्वेन प्रदर्शितस्य साध्यस्य पक्षे सत्यत्वेनोपसंहारे प्रतिज्ञोदाहरणविरोधः। असत्यत्वेनोपसंहारे च विधायकमेव निषेधकमिति व्याघातः ।

एवमसिद्धयश्च । तथाहि—यद्यपि तर्कस्यारोपितलिङ्गधीरङ्गं तथाऽपि साधने तु न तथा, तथैवोभयव्यवस्थादृष्टिः अन्यथा स्वबुद्धिकल्पितधेनुपर्वतादिषु कल्पितैरेव कैश्चिल्लिङ्गैः पयःपावकादीननुमाय तदर्थिनां तत्र प्रवृत्तिप्रसङ्गात् । व्यावहारिकसदेव साधनाङ्गं न प्रातिभासिकमिति चेन्न; शुक्तिरूप्यस्य त्वया दृष्टान्ततयोपादानात् । अत एव प्रमितत्वेन लोकबुद्ध्यारूढमाश्रयादि भवतीत्यपि निरस्तम् । प्रतिवादिसंमतत्वमात्रेण पक्षीकारादिः स्यादिति चेन्न; स्वार्थानुमाने तदयोगात्, तत्पूर्वकत्वात् परार्थप्रयोगस्य, अन्यतरासिद्ध [ त्व ] लोपप्रसङ्गाच्च । तदिह पक्षादीनां प्रमाणतस्सिद्धौ तन्मिथ्यात्वसाधनव्याघातः । असिद्धौ चाश्रयाद्यसिद्धयो बह्व्यस्संभन्तव्याः विरुद्धद्वयसमुच्चयनिषेधौ तु सुदुर्वचावित्यभिप्रायेणाह—पक्षादेरिति । यदि ह्यसिद्ध्यादिदोषदुष्टमपि साधकमङ्गीक्रियते, तदा कैव कथा कथायास्तत्फलव्यवस्थायाश्चेत्यभिप्रायेणाह—नापीति ।

दुष्टमपि जल्पवितण्डयोरङ्गमिति चेन्न; तयोर्निग्रहस्थाननिवृत्तिप्रसङ्गात् । न हि कथाङ्गस्वीकर्तुः कश्चिदपराधः स्यात् । अतः प्रतिभाक्षये परव्यामोहनेन पाक्षिकावष्टम्भ विजयावहतया तयोस्तदनुज्ञानं न त्वङ्गतया, अवश्यप्रयोक्तव्यत्वप्रसङ्गाच्च । न च दुष्टानां कथाङ्गत्वं कैश्चिदनुशिष्टम् । अतिक्रान्तमर्यादानामभिमतिरुन्मदिष्णूनामिवोपेक्षणीया । माध्यमिकादयोऽप्येतादृग्घेतुभिस्त्वदनिष्टं तत्तत्साध्यं साधयन्तस्त्वया न निगृह्येरन् । विमतमसाधकं दृश्यत्वात् संमतवदिति त्वदुक्तोपालम्भे च किं वक्ष्यसि ? केन चान्यदपि किञ्चित्स्वयंप्रकाशत्वादिकं साधयिष्यसि ? स्वव्याघातदुष्टतया माध्यमिकादिप्रयोगोऽनास्थेय इति चेत्, स्वोक्तमपि तथाऽवधारय । स्वपरनिर्वाहकत्वसमाधिरस्म [ त्प्रयोगे ] त्पक्षे त्विष्ट इति चेत्; अन्येषामपि तथा किं न स्यात्, अविशेषात् ? नन्वाभिमानिकसिद्धिभिः प्रमाणैस्सर्वे सिद्धान्ताः स्थाप्यन्ते; अत ईदृशमपि कथायामङ्गं भवतीति मर्यादान्तरं मया कल्प्यत इत्यत्र सेयं कल्पना प्रमाणतर्कसिद्धेत्यभिमता उत स्ववाङ्मात्रसिद्धेति विकल्पे पूर्वस्य निर्मूलतयाऽनुदयमाह–**मर्यादामिति** । स्वाभीष्टमर्यादायाः प्रमाणादिसिद्धत्वं हि लोकमर्यादानुरोधेन वक्तव्यम्; अन्यथा तत्साधकासिद्धेः । अतः स्वमर्यादासिद्ध्यर्थं लोकमर्यादा अनतिक्रमणीयेति भावः । उत्तरत्र विपरीतप्रसक्तिमाह–**निर्मर्यादेति** । स्वोक्तिमात्रसिद्धमर्यादया जगन्मिथ्यात्वाभिधाने मदुक्तिमात्रसिद्धमर्यादया सत्यत्वसाधकप्रमाणाभावेऽपि जगत्सत्यमिति प्रत्युक्तिमात्रेण सिद्धौ बाधितविषयं त्वदनुमानं स्यादिति भावः ॥ ४५ ॥

---

आनन्द०—अवसरसङ्गतिं दर्शयति–**अथेति** । **प्रतिज्ञापदयोरिति** । विगीतत्ववान् विगीतत्वाभाववानिति ह्यवसानादिति भावः । **एवं सतीति** । तत्वतः स्वार्थ-समर्पकयोरेव विरोधे ब्रह्मेतरप्रतिपादकस्थले क्वचिदपि व्याघातो न स्यादिति भावः । **परबुद्धिसिद्धेऽपीति** । शुक्तिरजतभ्रान्तस्येव भ्रान्तिज्ञस्य प्रवृत्त्यभावादिति भावः । **किं च विगीतत्वमिति** । अन्यतरन्निर्णयरहितमनिर्धारितमेवास्त्विति चेन्मैवम्; तथा सति विगीतस्य सत्त्वासत्त्वसन्देहे आश्रयासिद्धिप्रसङ्गादिति भावः । क्वचित् 'किं च विगीतं यदि मिथ्या स्यात्' इति पाठः, तदा विगीतं मिथ्या स्यादिति साध्यते तद साधनदशायामित्यर्थः । **न हीति** । ननु मिथ्यात्वं क्वचिद्वर्तते न वा, "आद्ये मिथ्यात्वं सत्यमसत्यं वा, नाद्यः तदाश्रयस्य सत्यत्वनियमेन मिथ्यात्वाश्रयत्वायोगान्मिथ्याशब्दवाच्यत्वाभावप्रसङ्गात् । न द्वितीयः–तस्यापि सत्यत्वरूपमिथ्यात्वाश्रयत्वाभावेन तस्य मिथ्यात्वाश्रयत्वानुपपत्तेः । न द्वितीयः निरधिष्ठानत्वायोगादिति चेन्न । मिथ्यात्वं हि किञ्चिन्निष्ठाभावप्रतियोगित्वं तच्चान्यत्र सत एवेति न दोषः, न च त्वया वक्तुं शक्यमित्याह –**सिद्धान्तव्याघातश्चेति** । किं च मिथ्यात्वं सत्यमपि ब्रह्मस्वरूपं तदतिरिक्तं वेति विकल्पाभिप्रायेणाह—**ब्रह्मेति** । ननु तस्यासत्यवृत्तित्वं माऽस्त्विति चेन्न । प्रपञ्चस्य सत्यत्वप्रसङ्गात् ।

ननु सत्यत्वमपि ब्रह्मेति चेत्, ब्रह्मणस्तस्य सत्यत्वप्रसङ्गादेतादृशसत्यत्वाभावस्य पराभिमतत्वेन बाधकत्वाभावाच्चेति भावः। असत्यमनिर्धारितविकल्पद्वयमपि द्वितीये साध्यत्वव्याघात इति विगीतपदार्थदूषणेनैव दूषितप्रायमिति न पृथक् दूषितम्। तत्प्रकारश्च मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चसत्यत्वापातः, यद्यनिर्धारणं तदाऽपि तस्यान्यतरत्वेन पूर्वविकल्पदोष इति। **केचित् अत्र ग्रन्थपातमाहुः॥ साध्यपदेनापह्नियत इति।** प्रतीयमानाधिकरणनिष्ठाभावप्रतिपादनादिति भावः। **प्राग्वद्विरोध इति।** दृश्यत्वमिथ्यात्वयोस्सत्यत्वे आश्रयस्य शुक्तिरूप्यस्यासत्यतया सत्याश्रयत्वं न स्यादिति भावः। **असत्यत्वेनेति।** तन्निष्ठाभावप्रतियोगित्वेनावगतस्य तन्निष्ठतया प्रतिपादनायोगादिति भावः। किं च मिथ्यात्वेन प्रदर्शितं साध्यं पक्षे सत्यत्वेनोपसंह्रियते, उतासत्यत्वेनेति विकल्पमभिप्रेत्य आद्य आह—**दृष्टान्त इत्यादिना।** द्वितीय आह—**असत्यत्वेनेति। विधायकमेवेति।** पक्षे पक्षनिष्ठात्यन्ताभावप्रतियोगिसाध्यमस्तीति व्याघात इत्यर्थः। **साधने त्विति।** अनुमान इत्यर्थः। एवं व्यवस्थायां नियामकमाह—**अन्यथेति। शुक्तिरूप्यस्येति।** न च शुक्तिरूप्यस्य प्रातिभासिकत्वेऽपि तद्गतद्रव्यत्वादेर्व्यावहारिकत्वमस्त्विति वाच्यम्। प्रातिभासिकस्य व्यावहारिकधर्मानाधारत्वादिति भावः। **अत एवेति।** शुक्तिरूप्यादेः प्रमितत्वेन मोकबुद्धया रूढ्यभावादिति भावः। **अन्यतरेति।** वादिप्रतिवादिनोरन्यतरस्य तत्सिसिद्धिनियमादिति भावः। ननु हेतोः स्वरूपासिद्धिरस्तु, कथमसिद्धय इति बहुवचनमित्यत्राह—**असिद्धौ चेति। विरुद्धसमुच्चयः**—पक्षतावच्छेदकसाध्यहेत्वादिसमुच्चयः। **तन्निषेधः**—मिथ्यात्वतदभावयोर्निषेधः। **दुष्टमपीति।** असिद्ध्यादिदुष्टं साधनमित्यर्थः फलं—जयादि। **तयोरिति।** तथा च नाङ्गमित्यर्थः। **हेतुमाह—न हीति।** ननु तर्हि जल्पादौ कथं प्रयोगाभ्यनुज्ञानमित्यत्राह—**अत इति। अवश्येति।** तथा सति निग्रहानुद्भावनप्रसङ्गादित्यर्थः। ननु मतभेदेन सर्वमुपपन्नमिति चेत्तत्राह—**न च दुष्टानामिति।** त्वदन्योऽनुमाता नास्तीत्यर्थः। **केन वेति।** एवं च स्वयंप्रकाशत्वसाधकानामपि दृश्यत्वेन साधकत्वे तदपि ते न स्यादित्यर्थः। **स्वव्याघातादीति।** विमतं शून्यं परार्थत्वादित्यादेः स्वव्याघातकत्वादित्यर्थः। **स्वोक्तमिति।** साधकत्वस्यमिथ्यात्वाभावेन तत्रैव व्यभिचारात्, मिथ्यात्वे चासाधकत्वादिति भावः। **स्वपरेति।** तथा च स्वयमन्यस्य मिथ्यात्वं साधयन् स्वस्यापि साधयतीति भावः। **अन्येषामिति।** शून्यत्वसाधकानुमानानामित्यर्थः। असाधकत्वानुमानवादिनामिति केचित्। **नन्विति। चार्वाकव्यतिरिक्तानां** परोक्षमपि प्रमाणम्, **कणादजिनव्यतिरिक्तानां** शब्दादिकं, **साङ्ख्यवेदान्तिव्यतिरिक्तानामुपमानादिकं, गौतमव्यतिरिक्तानामर्थापत्त्यनुपलब्ध्यादिकं, तद्व्यतिरिक्तानां** संभवादीत्याभिमानिकप्रमाणक्लृप्तिरित्यर्थः। **लोकमर्यादेति।** लोके पक्षदृष्टान्तसाध्यसाधनादीनां पारमार्थिकानामेव प्रमाणाङ्गत्वादिति भावः। सत्यत्वसाधकप्रमाणाभावेऽपीत्यभ्युपेत्यवादः। वस्तुतः प्रत्यक्षादिकमस्तीति भावः॥ ४५॥

**साध्ये सत्येतरत्वे कथित इह भवेत् स्वस्य हि स्वान्यभावो**
**नान्यत्सत्यं तु दृष्टं तदवधिकभिदासाधने चेष्टसिद्धिः ।**
**सत्यत्वं चेन्निषेध्यं प्रसजति दहनेऽप्युष्णताया निषेध-**
**स्साध्यं त्वक्षाद्यबाध्यं यदि किमपि परं तेन न व्याप्तिसिद्धिः ॥४६॥**

**सर्वार्थ०**—मिथ्याशब्दविवक्षितं च विकल्पासहत्वेन दूषयति—**साध्य इति** ॥ अयं भावः—किं यतःकुतश्चिदन्यत्वं सिषाधयिषितम् ? उत सर्वस्मात् ? आद्ये सत्यानां पृथिव्यादीनां परस्परान्यत्वेन सिद्धसाधनता; द्वितीये सर्वेषां प्रत्येकं सत्यशब्दवाच्यतया स्वस्मादप्यन्यत्वं सर्वेषां प्रतिज्ञातं स्यात्; तथा च व्याघातः, तत्त्वातत्त्वयोरेकस्मिन्नसंभवात्; अन्यथा कथमनेकान्तवादनिस्तार इति । ननु विगीतानां व्यावहारिकसत्यत्वनिबन्धनं मिथस्सत्येतरत्वं न साधयामः । किंत्वस्ति किञ्चिदशेषकल्पनारहितं परमार्थसत्यं, ततोऽन्यत्वं त्विहातिष्ठामहे; तत्राह—**नान्यदिति** । अशेषविशेषोज्झितं किञ्चित्परमार्थसत्यं न प्रत्यक्षादिषु कुतश्चित्प्रमाणात् सिद्धम् । न च तथा स्वयं प्रकाशते, तवापि हृदयविसंवादादिति भावः । ननु त्वयाऽपि परमार्थसद्ब्रह्माङ्गीकृतम्; अतस्तदन्यत्वसाधनमनुपालम्भनीयमित्येतदपि दूषयति—**तदवधिकेति** । न हि वयं जगतो जैनगन्धिवत् ब्रह्मानन्यत्वमङ्गीकुर्म इति भावः ।

अथ मिथ्याशब्दस्य सत्यत्वशून्यत्वमर्थ इति शङ्कते—**सत्यत्वमिति** । अत्र कालातीतत्वं निदर्शने प्रसक्त्या निर्धारयति—**प्रसजतीति** । अयं भावः— इह हि प्रातीतिकं व्यावहारिकं पारमार्थिकं वा सत्यत्वं निषिध्येत ? तत्राद्यः परानिष्टोपालम्भ इत्यन्यौ शिष्येते; तयोश्च व्यावहारिकसत्यत्वनिषेधे यत्रैव यस्य प्रसिद्धं मन्यसे तत्रैव तन्निषेधसीति न कथं कालातीतेन चापसिद्धान्तेन च निगृह्येथाः ? व्यावहारिकं च मिथ्येति त्वद्दृष्टिः; मिथ्याभूतसत्यत्वनिषेधेऽपि परेष्टमेव त्वया प्रतिष्ठापितं स्यादिति । सत्यत्वान्तरनिषेधमनुवक्ति—**साध्यमिति** । तुः परेष्टविशेषनिषेधद्योतकः । परम्—अन्यत् । परमार्थसत्यत्वं हि लोकदृष्टादन्यत् । ब्रह्मनिष्ठे तद्वैधुर्यं चात्र बाधयोग्यादन्यदेव । अतः कथं बाधादिप्रसङ्ग इति भावः । तद्दूषयति—**तेनेति** ।

परमार्थसत्यत्वं हि व्यावहारिकादेव प्रमाणात्सिध्येत् ? पारमार्थिकाद्वा ? नाद्यः ; प्रपञ्चस्यापि तत एव तत्सिद्धौ बाधस्य दु [र्वं च] वारत्वात्, क्वचित्तस्य तत्साधकत्वं क्वचिन्नेति नियामकाभावात् । द्वितीये त्वपसिद्धान्तः ; व्यावहारिकप्रमाणागोचरसत्यत्वनिरूपिताभावेन सह व्यावहारिकप्रमाणेन कथं व्याप्तिः गृह्येत ? तत्रापि पारमार्थिकप्रमाणाद्ग्रहणे सिद्धान्तादिविरोधदोषस्तदवस्थः । शुक्तिरूप्यशब्देन च किं रूप्यत्वाश्रयतया रूप्यतादात्म्येन वा प्रतीतं भास्वरं द्रव्यं निर्दिश्यते ? एतन्निष्ठतया प्रतीतं रूप्यत्वं वा ? इदंत्वेन भातरूप्यं वा ? रूप्यत्वसंसर्गो वा ? रूप्यतादात्म्यं वा ? विकल्पभेदारूढमतद्व्यावृत्तिरूपमलीकं वा ? रजतसरूपबुद्ध्याकारविशेषो वा ? शुक्त्यवच्छिन्नाविद्याकृतचैतन्य-

विवर्तो वा ? शुक्तिरजतव्यवहारगोचरमात्रं वा किञ्चित् ? आद्येषु चतुर्ष्वन्यथाख्याति-स्वीकारप्रसङ्गः। तत्र च निरुपाधिकमिथ्यात्वं न दृष्टम्। सोपाधिकमिथ्यात्वसाधने सर्वस्यापि प्रपञ्चस्य परस्परारोपयोग्यस्य देशकालान्तराद्युपधानेन मिथ्यात्वसाधनात् सिद्धसाधनता। न पञ्चमषष्ठौ; तयोरपि स्वस्थाने सम्यक्त्वात् शुक्तिस्थयोस्तयोरस्मद्-नभ्युपगतयोस्त्वयोदाहर्तुमशक्यत्वात्। अत एव न सप्तमः, व्यावहारिकसत्यानामपि तथात्वाभ्युपगमप्रसङ्गाच्च। नाप्यष्टमः, न हि सत्याया बुद्धेराकारो मिथ्या स्यात्, अन्य तया अनन्यतया वा प्रमितस्य तदयोगात्। अप्रमितस्य चानुदाहर्तव्यत्वात्, अन्यथाऽतिप्रसङ्गात्। भ्रान्तिज्ञाने बुद्धितदाकारावसत्याविति तदाकारनिदर्शनोपपत्तिरिति चेन्न; बाधाभावात्; परानभ्युपगतेश्च। नवमोऽप्यत्यन्ताप्रसिद्धेरपास्तः। अपाकरिष्यते चानि-र्वचनीयोत्पत्त्यादिः। नापि दशमः, सत्येषु शुक्त्यादिषु अन्यतमस्यैव कयाचिद्विवक्षया शुक्तिरजतव्यवहारविषयत्वात्; अन्यथा वर्णक्रमनिर्देशवन्निरर्थकत्वापातात्; तथा चाश्रय हीनमुदाहरणमिति न कथञ्चिदपि व्याप्तिसिद्धिरिति ॥ ४६ ॥

---

आनन्द०—पूर्वसङ्गतिरेवात्रापीत्याह— **मिथ्याशब्देति** । सत्येतरत्वं साध्यं चेत्कथं स्वभिन्नत्वं पर्यवस्यतीति स्वस्यासत्यत्वेनैव सिद्धेः। अन्यथा इतरभेदे पृथिव्यादावपि तद्भेदप्रसङ्गेन तत्रापि व्याघातप्रसङ्गादित्यत्राह— **अयं भाव इति। सर्वेषां प्रत्येकमिति**। ननु सत्यत्वावच्छिन्नप्रतियोगिकभेदस्साध्यश्चेत्, पक्षधर्मताबलात् पक्षस्य सत्यशब्दवाच्यत्वं न सिध्येदिति कथं व्याघात इति चेत्, उच्यते-सत्यत्वं हि सत्यशब्द-प्रवृत्तिनिमित्तं, तच्च पक्षेऽप्यस्त्येव, तत्र तद्व्यवहारात्तथा च तद्भेदस्तत्रापि स्यादिति व्याघात इति भावः। **तत्त्वातत्त्वयोः** भेदाभेदयोः। **व्यावहारिकसत्यत्वनिबन्धनं सत्येतरत्वमिति**। इदमुपलक्षणं, मिथ्येतरत्वं वेत्यर्थः। **न प्रत्यक्षादिषु कुतश्चित् प्रमाणादिति**। प्रत्यक्षादिषु मध्ये केनचित् प्रमाणेनेत्यर्थः। **जैनगन्धिवदिति। यादवमतवदित्यर्थः। निदर्शने प्रसक्तया**— दृष्टान्ते वह्न्यनुष्णत्वानुमानेऽतिप्रसक्त्येत्यर्थः एवं च तत्र कालातीतत्ववदत्रापि कालातीतत्वं निर्धारयतीत्यर्थः। ननु सत्यत्व-निषेधस्य दहनेऽनुष्णत्वसाधकत्वाभावात् तदापादनं पृष्ठताडनन्यायमनुकरोतीत्यत्राह— **अयं भाव इति। परानिष्टोपालम्भः** परस्य यदनिष्टं प्रातिभासिकत्वं तस्योपालम्भो निषेध इत्यर्थः। तथा च सिद्धसाधनमिति भावः **केचित्तु** परानिष्टस्य परासम्मतस्यानुक्तस्येति यावत्। तथा चानुक्तोपालम्भ इत्यर्थ इत्याहुः।

**व्यावहारिकसत्यत्वनिषेध इति**। अन्यत्र तदसिद्धेः सिद्धौ वा ब्रह्मणि सिद्धि-रिति ब्रह्मणो व्यावहारिकत्वापातादिति भावः। **परेष्टमिति**। सिद्धान्तिसंमतं पारमार्थिकं सत्यत्वमित्यर्थः। **नियामकाभावादिति**। ननु प्रत्यक्षादिभिः सत्त्वमात्रं गृह्यते, न तु पारमार्थिकत्वादि। ब्रह्मणि तु श्रुतिः सत्यादिपदवती बोधयति। तथा च तद्बोधनसामर्थ्यतदभावयोस्सत्त्वात् कथं तदभाव इति चेत्, उच्यते-प्रपञ्चेऽपि 'प्राणा वै सत्यम्' इत्यादेस्सत्त्वेन वैषम्याभावात्। किं च मिथ्यात्वं हि कालत्रयासत्त्वं,

तच्चैककालसत्त्वेनापि विरुद्धमिति तद्ग्राहिभिः कथं न बाध इति। अपसिद्धान्त इति। ब्रह्मान्यदसत्यमिति परसिद्धान्तादिति भावः। व्यावहारिकेति। प्रतियोग्यग्राहकस्याभावाग्राहकत्वादिति भावः। ननु भाव एव मिथ्यात्वं तथा च न दोष इति चेत्, निषेधरूपत्वोक्तिविरोधादिति भावः। विकल्पभेदेति। विकल्पो ज्ञानविशेषः, तदधिरूढः तद्विषयः। अतद्व्यावृत्तिरन्यापोहरूपमलीकं किञ्चिदित्यर्थः। बुद्ध्याकारविशेषः— बुद्धिस्वरूपविशेषः। शुक्त्यवच्छिन्नाविद्यांशकृतचैतन्यविवर्तः— शुक्त्याधारकाविद्यापरिणामविशेषोऽनिर्वचनीयं रजतम्। व्यावहारिकसत्यानामिति। अलीकत्वाभ्युपगमप्रसङ्गादित्यर्थः। शून्यत्वं न त्वदिष्टमिति भावः। भ्रान्तिज्ञाने भ्रान्तिरूपज्ञाने। अनिर्वचनीयोत्पत्त्यादिरित्यादिशब्देन प्रतीत्यादिर्विवक्षितः। कयाचिद्विवक्षया परस्परात्मना प्रतीत्येत्यर्थः। अन्यथेति। विवक्षाविशेषेण सविषयत्वाभावे गकार-घकार मकारयकारेत्यादिप्रत्ययरहितवर्णनिर्देशवदर्थशून्यं स्यादित्यर्थ॥ ४६॥

---

स्वात्यन्ताभावदेशे विदितमिति यदि स्थाप्यमिष्टं क्वचित्त-
त्त्रैवेति त्वशक्यं क्वचिदपि न तथा ह्यस्ति सिद्धान्तसिद्धिः।
बाधश्चास्मिन्नुपाधिस्समधिगतदशादेशकालाद्युपाधौ
नासौ साध्योऽत्र मानं निखिलमपि यतस्तद्विधानैकतानम्॥ ४७॥

पुनस्साध्यविकल्पे कोट्यन्तरमनुवक्ति–स्वात्यन्तेति॥ स्थाप्यं—साध्यम् तत्र सिद्धसाधनतामाह–इष्टमिति। क्वचित्–योग्यस्थले। सर्वेऽपि हि पदार्थास्सामग्रीविशेषैः स्वात्यन्ताभाववत्स्वध्वंस्यन्ते। तत एव हि सर्वत्र पूर्वपक्षोदयः; आहार्यलिङ्गजा च तर्कधीस्सार्वत्रिकी निरनिष्टेऽनिष्टमुल्लेढि। अत एव हि विपर्यये पर्यवस्यति। ननु स्वात्यन्ताभावदेश एव विदितमिति साध्यं स्यात्; तथा च न सिद्धसाध्यतेत्यत्राह–तत्रैवेतीति। अत्र ह्यवधारणं स्वदेशव्यवच्छेदार्थम्; तदिदं स्वदेशसदसद्भावयोरशक्यमेव। स्वदेश एव स्वात्यन्ताभावदेश इति प्रस्तुतप्रतिज्ञाभिप्राय इति। अत्र व्याप्तिग्रहणाभावमाह–क्वचिदपीति। यत्र क्वचिद्देशे काले वा जागरस्वप्नावस्थयोर्व्यावहारिकप्रातिभासिकयोर्वेत्यर्थः। शुक्तिरूप्योदाहरणं स्वसिद्धिप्रदर्शनेन प्रत्युक्तम्। एतेन स्वात्यन्ताभावप्रदेशवर्तित्वं साध्यमित्यपि निरस्तम्। सिद्धसाध्यत्वपरिहारेऽपि व्याघातादेरपरिहार्यत्वात्।

नहि वस्तु विकल्प्येत न विरुद्धसमुच्चयः।
न चोभयपरित्यागो विहर्ति जहतः क्वचित्॥

न हि तदेव तत्रैव तदानीमेव विद्यते न विद्यतेवेति विरुद्धानियतरूपता, ईदृशस्यानियमस्य जैनैरप्यनङ्गीकारात्। नच तदङ्गीकृतविरुद्धसमुच्चयः, स्वपरपक्षसमुच्चये सर्वकथोच्छेदापत्तेः। अत एव नोभयमिथ्यात्वेनोभयत्यागः, विरुद्धान्यतरविधिनिषेधयोरितरनिषेधविधिनान्तरीयकत्वात्, स्वात्यन्ताभावसामानाधिकरण्यसाधनायोगाच्च।

अस्तु वा कश्चिन्मिथ्याशब्दार्थः, तत्र दृश्यत्वस्याप्रयोजकत्वमाह—बाधश्चेति । मिथ्याशब्दवाच्यत्वेऽपि प्रतिपन्नोपाधौ बाधितत्वं प्रयोजकम् । अत एव न तदेव तदित्यनुपाधित्वम् ।

ननु बाध एवात्र साध्यस्स्यात्, तत्र च नोपधिश्शक्यो वक्तुम्; तत्राह—नासाविति ।

अयं भावः—किमत्र यस्य कस्यचित् पुरुषस्य यत्रकुत्रचिद्देशे काले वा बाधोऽस्तीत्येतावन्मात्रं साध्यम् । उतानेन प्रमाणेनास्य बाधो दृश्यत इति । न प्रथमः, एतावन्मात्रसाधनस्य ब्रह्मण्यपि सुवचत्वात् । शक्यं हि साहसिकस्य भासमानत्वमात्रेण सर्वमिथ्यात्वं साधयितुम् । किं च ब्रह्मव्यतिरिक्तकृत्स्नपक्षीकारेण बाधं साधयतस्तद्बहिर्भूतपुरुषदेशकालानामभावात् कस्यचित्पुरुषस्येत्यादिनिर्देशो निर्विषयः । तदन्तर्गतपुरुषदेशकालविवक्षया प्रयोगे तु विद्यमानेऽप्यविद्यमानभ्रमवतः कस्यचित् क्वचित् कदाचित्तत्र तन्नास्तीति धीसंभवात् सिद्धसाध्यता । मन्यते च माध्यमिकः सांवृतेन मानेन सर्वमिथ्यात्वम्; तथा तस्य विश्वबाधकज्ञानं जातमिति च वयमपि विद्मः । अप्रमाणमूलत्वादपारमार्थिकस्तदुक्तो बाध इति चेत्, त्वदुक्तोऽप्येवमेव । व्यावहारिकप्रमाणतो मदुक्तसिद्धिरिति चेत्, तदुक्तसिद्धिरपि तथैव । संवृतादिसमाख्यावैषम्यं चाकिंचित्करम् । नापि द्वितीयः प्रत्यक्षेण तावदस्तीत्येव प्रपञ्चः प्रतीयते । यदा च कुत्रचिन्नास्तीति मनुषे, तदाऽपि तत्रैव तदभावस्य सत्यत्वम्, अन्यत्र च तत्सत्यत्वमध्यक्षयामः । आह च न्यायभाष्यकारः—सत्सदिति गृह्यमाणं तथाभूतमविपरीतं च तत्त्वमिति, असच्चासदिति गृह्यमाणं तथाभूतं विपरीतं च तत्त्वमिति । अनुमानं त्वद्याप्यलब्धजीवितम् । आगमिकस्तु निषेधो विध्यनुरोधेन नेतव्यः; अन्यथाऽतिप्रसङ्गात् । वाचारम्भणादिशब्दाश्च द्रव्यान्तरनिरासपरा दर्शिताः ।

नन्वनन्तपदेनासंकोचाद्वस्तुपरिच्छेदराहित्यमपि गृह्यते; सति वस्त्वन्तरे तत्परिच्छेदाभावो दुर्वच इति चेन्न; यथा देशकालसद्भावो न कस्यचिद्देशकालपरिच्छेदः, किंतु परिमितदेशकालवर्तित्वम्; तथा न वस्त्वन्तरसद्भावो वस्तुपरिच्छेदः, अपि तर्हि परिमितवस्त्वन्तरप्रकारित्वम्; यथा गौः शुक्लो गच्छतीत्यादौ । न तथाऽत्र सर्वं खल्विदं ब्रह्म, पुरुष एवेदं सर्वमिति विश्वरूपतया व्यपदेशात् । ततश्चायं सर्वाविरुद्धस्संग्रहः—

अविधेयमनाधेयमशेषमधिकं समम् ।
नेति वस्तुपरिच्छेदाभावः स्याद्विश्वदेहिनः ॥

यस्तु वस्त्वन्तराभावमपरिच्छित्तिमिच्छति ।
कथितोऽसौ कथाऽनर्हः क्षीबोन्मत्तेडमूकवत् ॥

किञ्च संख्यापरिच्छेदराहित्यं किं न दृश्यते ।
मानबाधाद्यदिसमं निर्बाधेऽर्थे स्थितिः स्थिता ॥

पराभिमतैरुपमानार्थापत्त्यादिभिरपि न जगद्बाधः; तेषामन्तर्भावबहिर्भावयोरुक्तानतिरिक्तशक्तित्वादिति। तदेतत्सर्वमभिप्रयन्नाह—**मानमिति**। निखिलं स्वपराभ्युपेतं सर्वं तद्विधानैकतानं ब्रह्मण इव तद्विभूतिप्रपञ्चस्याप्यस्तीति बोधने नियमेन प्रवृत्तत्वान्न तद्बाधकमित्यर्थः॥ ४७॥

---

**आनन्द०**—पूर्वसङ्गत्याऽऽह—**पुनरिति**। **तत एव हीति**। उभयोः पूर्वपक्षसिद्धान्तयोः तात्त्विकत्वासंभवादिति भावः। **आहार्येति**। स्वात्यन्ताभावदेश आरोपस्य संप्रतिपन्नत्वादिति भावः। **निरनिष्ट इति**। अनिष्टं धूमाभावः तच्छून्ये धूमाभावाद्यनिष्टं प्रसञ्जयतीत्यर्थः। **नन्विति**। नन्वाकाशादेरवृत्तिपदार्थस्य तथात्वं संप्रतिपन्नमित्यंशतः सिद्धसाधनमिति **चेन्न**। वेदान्तिमतानुसारेण साधनान्नांशतः सिद्धसाधनमिति भावः। **स्वदेशसदसद्भावयोरिति**। स्वदेशसत्त्वे तत्रात्यन्ताभावस्य विरोधात् तत्र प्रतीयमानस्य तत्र सत्त्वात् बाधः। तदबाधे व्यवच्छेद्याप्रसिद्ध्या व्यवच्छेदविशिष्टसाध्यव्याप्तिग्रहो न स्यादित्यर्थः। **स्वदेश एवेति**। स्वदेशमात्रवृत्तिस्वात्यन्ताभाववत्त्वं विवक्षितमिति वक्ष्यमाणात् भेदः। **असिद्धिप्रदर्शनेनेति**। दृश्यत्वहेतोरिति शेषः। यद्यपि संयोगादौ सम्बन्धान्तरेण वह्न्यादौ वा सिद्धसाधनमपि, तथाप्येतद्व्यावर्तनाय विशेषणान्तरदानेन परिहारस्संभवतीति भावः। **वस्तुविकल्पः**—भावस्यैव कदाचिदभावत्वम्; समुच्चयो हि भावाभावयोरेकदा साहित्यम्। **विहतिं व्याघातं परित्यजतस्तव** भावस्यैवाभावत्वं भावाभावयोस्साहित्यं उभयराहित्यं वा **क्वचिदुपलब्धमित्यर्थः**। कुतो न दृष्टमित्यत्राह—**न हीति**। इदमुपलक्षणम्—एकस्यैव प्रतियोगितदभावरूपत्वमिति न हीत्यर्थः। **ईदृशस्येति**। जैनैः सत्त्वासत्त्वाङ्गीकारेऽपि भावाभावयोरेकाश्रयत्वं नाङ्गीकृतमित्यर्थः। ननु सत्त्वासत्त्वाङ्गीकारे इदमप्यङ्गीकृतप्रायमेव। असत्त्वस्य सत्त्वाभावत्वादिति चेत्, न, तस्य स्वरूपत्वेन भावाभावरूपत्वानभ्युपगमात्। यदि विरुद्धसमुच्चयाङ्गीकारात्तन्नयाय उच्येत, तत्राह—**न चेति**। **विरुद्धेति**। भावाभावान्यतरनिषेधस्यान्यतरत्त्वनियमादिति भावः।

ननु भावाभावयोः समानसत्ताकयोरेव विरोधो न भिन्नसत्ताकयोः, शुक्तिरूप्यादौ तथा दर्शनात्। तथा च स्वान्यूनसत्ताकस्वात्यन्ताभावसामानाधिकरण्यसाधनेन बाध इति चेन्न। तथा सति ब्रह्मस्वरूपज्ञानं अविद्यानिवर्तकं न स्याद्विरोधिविषयकत्वाभावात्। तथा हि—न तावत् स्वरूपज्ञानं निवर्तकं, सर्वदा सत्त्वात्। नापि प्रपञ्चाभावविषयकं, भिन्नसत्ताकाभावस्य विरोधित्वाभावे तज्ज्ञानस्य विरोधिविषयकत्वाभावेन निवर्तकत्वाभावात्। न चाभावत्वप्रकारकत्वेन निवर्तकत्वं, घटाभावज्ञानस्यापि निवर्तकत्वप्रसङ्गात्। न च निवर्त्यप्रतियोगिकत्वे ज्ञानं निवर्तकं, प्रातिभासिकघटाभावज्ञानात् घटस्य निवृत्तिप्रसङ्गात्। न चान्यूनसत्ताकाभावज्ञानं निवर्तकं, तथा सति तादृशाभावस्य विरोधित्वे तत्सामानाधिकरण्यं न स्यात्, अविरोधित्वे घटतदभावयोः सामानाधिकरण्यप्रसङ्गः। प्रातिभासिकसर्पज्ञानेन प्रातिभासिकरज्जुनिवृत्त्यभावा-

पाताच्च। तस्मान्नवीनमतमप्यपास्तमित्यभिप्रायेण साधनायोगाच्चेति चशब्दप्रयोग इति भावः। ननु नासौ साध्य इत्ययुक्तम्, उपाध्यभावादित्यत्राह—**अयं भाव इति**। ननु बाधो नाभावबुद्धिमात्रं, अपि तु प्रत्येतव्यस्येत्यत्राह—**किं चेति**। किमत्र पक्षबहिर्भूतः पुरुषादिर्विवक्षितः, उत तदन्तर्भूतस्तत्राद्य आह—**तद्बहिर्भूतेति** तथा च बाध इति भावः। केचित्तु साध्याप्रसिद्धिमाहुः। द्वितीय आह—**तदन्तर्भूतेति**। तथा च मिथ्याभूतदेशकालादौ मिथ्याभूतपुरुषकर्तृकस्य बाधस्य प्रमात्वं न संभवतीति भ्रान्तिरूपो वाच्यः, तादृशस्य सिद्धत्वात् सिद्धसाधनमिति भावः। तदेव सिद्धसाधनमुपपादयति—**मन्यते चेति**। **सांवृतादीति**।

ननु व्यावहारिकं सत्यत्वं प्रातिभासिकं सत्यत्वमिति मायिभिरभ्युपगतम्; माध्यमिकैस्तु सांवृतिकमेकमेव सत्यत्वमभ्युपगतमिति कथं समाख्याभेदमात्रमर्थभेदसत्त्वादिति शङ्कां निवारयत्यादिशब्दः। अयं भावः—'सर्वव्यवहारावैषम्यं समानत्वात्' इति सूत्रभाष्यटीकायां शून्यता वस्तुतोविशिष्टा तथापि शुक्तिकादौ प्रातीतिकमन्यत्र सांवृतिकमिति तदपि किंचित् सांवृतिकमर्थक्रियाकारीति वैषम्याङ्गीकारदर्शनात् तुल्यतेति। **यथेति**। ब्रह्मणस्त्रिविधापरिच्छेदमध्ये कालापरिच्छेदो नाम कालेन परिमितत्वाभाव एव, न तु कालाभावः, एवं देशापरिच्छेदोऽपि। तथा वस्त्वपरिच्छेदोऽपि सर्ववस्तुविसदृशत्वं सर्ववस्तुविशेषणकत्वं वा, न तु वस्त्वन्तराभावोऽन्यथावैरूप्यप्रसङ्गात्। वस्त्वन्तरस्याभावे वस्तुपरिच्छेदस्यैवासिद्ध्या निषेध्याप्रसिद्धेस्त्रैविध्याभावप्रसङ्गाच्च। न च स्वसमानवस्त्वन्तराभाव एव वस्त्वपरिच्छेदो ब्रह्मण इति वाच्यम्। तथा सति ब्रह्मान्तराभावमादायाप्युपपन्नतया मिथ्यात्वासिद्धेः। न च पारमार्थिकवस्त्वन्तराभावस्स इति वाच्यम्, तथात्वे मानाभावात्। पारमार्थिकत्वेन प्रपञ्चग्राहिप्रमाणैर्बाधाच्चाबाधितगतिसंभवे तथा निर्बन्धायोगाच्चेति भावः। **सर्वं खल्विदमिति**। तथा च सर्ववस्तुविशेषणकत्वं ब्रह्मण इति भावः। ननु सर्ववस्तुविशेषणकत्वं यथाकथंचित् कालादेरपीति चेत्तत्राह—**ततश्चायमिति**। **वस्तुपरिच्छेदाभाव इति**। न स्वरूपेण वस्त्वन्तराभावः परेणापि वक्तुं शक्यः, किं तु पारमार्थिकाकारेण। तथा च सर्वप्रमाणाविरोधेन सर्वप्रमाणानुगुण्येन चाविधेयत्वादिना वस्त्वन्तराभावो वाच्य इति भावः। तत्र हेतुः—**विश्वदेहिन इति**। विश्वस्य तच्छरीरत्वादेवं तद्विधेयमाधेयं शेषं न्यूनं सर्वमित्यर्थः।

ननु लाघवाद्वस्त्वन्तराभावमात्रमेवापरिच्छिन्नत्वमित्यत्राह—**यस्त्विति**। सर्वस्याभावे प्रमाणस्याप्यभावेन ब्रह्मणो मेयस्याप्यभावात् प्रमातुः सर्वस्याप्यभावादिति भावः। किं चासंख्यातत्वं संख्यापरिच्छेदाभावः क्षणलवादिनाऽप्युच्यते; न तत्र संख्यान्तराभावः एकत्वादीनां सत्त्वात्। तत्र चेदन्यथावर्णनं तदा तथा प्रकृतेऽप्यस्तीत्याह—**किंचेति**। एकत्वादिग्राहकमानसत्त्वेन तदभावो न संख्यापरिच्छेदाभाव इत्यन्यथा-

नयनमिति शङ्कते—मानेति । तुल्यत्वेन परिहरति—**सममिति** । स्वारसिकबाधशून्यार्थगोचरमानस्य प्रपञ्चेऽपि सत्त्वात् तेन बाधस्य तुल्यत्वात् न वस्त्वभावमात्रं परिच्छेद इति भावः । **निर्बाधेऽर्थे स्थितिः स्थितेति** । प्रमाणान्तराविरुद्धार्थविषयकतया श्रुतेरवस्थापनं स्वीकर्तुं युक्तमित्यर्थः । स्थिता—सिद्धेत्यर्थः । **अन्तर्भावबहिर्भावयोरिति** । उक्तेष्वेवान्तर्भूतत्वेऽपि पृथक्प्रमाणत्वेऽपि प्रत्यक्षादितुल्यत्वादित्यर्थः ॥ ४७ ॥

---

**तुच्छत्वं ते न ह्योष्टं सदसदितरता व्याहतत्वादिदुःस्था**
**ऽसिद्धा चासौ परेषां भवदभिमतोऽनात्मना वेद्यतादिः ।**
**विश्वं ह्योदं मृषा नस्तदितरवपुषा त्वन्मतारोपितैश्च**
**स्यादेवं दूरतस्ते ध्रुवमपसरतोऽप्युक्तदोषानुषङ्गः ॥ ४८ ॥**

**सर्वार्थ०**—पुनरप्यसंभवतोऽपि तत्तद्वाद्यभिमानात् संभवत इव साध्यविकल्पभेदाननूद्य दूषयति—**तुच्छत्वमिति** श्लोकेन ॥ तुच्छत्वं—खपुष्पादिवदसत्त्वम् ते—माध्यमिकसमाख्यामनिच्छत इति भावः । नहीष्टं—एतत्साधनेऽपसिद्धान्त इति भावः । अस्तु मिथ्यात्वं सदसत्कोटिबहिर्भूतत्वमित्यत्राह **सदसदितरतेति** । आदिशब्देनार्थान्तरत्वादिसंग्रहः । अयं भावः—सदसद्विलक्षणत्वं नाम सत्त्वासत्त्वात्यन्ताभावसमुदायवत्त्वं वा, सतोऽसतश्च कुतश्चिद्व्यावृत्तत्वं वा, सदसच्छब्दगोचरसर्वान्यत्वं वा, ब्रह्मतुच्छव्यावृत्तत्वं वा, ब्रह्मत्वतुच्छत्वसमुदायशून्यत्वं वा, तदुभयात्यन्ताभावसमुदायो वा, अन्यद्वा किंचित् । आद्ये व्याहतता, परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायात् न ह्यत्रानुष्णाशीतवद्गतिः, कोट्यन्तरस्यात्यन्तानुपलम्भात् न च तत्राप्युष्णानुष्णविकल्पे कोट्यन्तरं समस्ति । द्वितीये सिद्धसाध्यता, सतामेव परस्परमसद्रूपस्य च व्यावृत्तत्वात् । तृतीयेऽपि स एव दोषः । अस्ति हि सत एवैकस्य तत्' एकस्य सर्वसदसद्रूपत्वाभावात् । अत एव न चतुर्थः ; न हि वयं ब्रह्मस्वरूपं वा निरुपाधिकतुच्छं वा विश्वं ब्रूमः; विरुद्धर्थान्तरता च, खरशृङ्गे खपुष्पाद्यन्यस्मिंस्तद्भावात् । एवं पञ्चमेऽपि खरशृङ्गादौ ब्रह्मणि ब्रह्मत्वतुच्छत्वयोरसमुच्चितत्वात् । षष्ठेऽपि सिद्धसाध्यता । न तु विगीतं ब्रह्मस्वरूपं न च तुच्छम्; अन्यदपि केनचिद्विशेषशब्देनावस्थापयितुं शक्यं न वा । शक्यं चेदस्माभिरपि विशेषतो दूषितुं शक्यम् । अशक्यं चेत् अव्यपदेश्ययत्किञ्चिद्धर्मवत्त्वं साध्यं स्यादिति कस्तत्र विमन्यते ? अतो यत्किञ्चिदेवैतदिति ।

किंच विगीतप्रयोगेषु सर्वेषु यत्र कुत्रचित् पूर्वसिद्धमेव पक्षे साध्यम्; इह तु ब्रह्मणि तुच्छे वा न साध्यग्रहः, तयोर्विपक्षत्वात्; नच विगीते, तस्य संदिग्धसाध्यत्वात् । सपक्षस्तु शुक्तिरजतशब्देन प्रदर्शयितुं न शक्य इत्युक्तम् । नच परासिद्धस्साध्यावस्थो दृष्टान्तः स्यात्, तत्साधनं च दूषयिष्यते । तदसौ त्वदभिमता सदसद्विलक्षणता परेषां सर्वत्रासिद्धतया पक्षे दुस्साधेत्यभिप्रयन्नाह—**असिद्धा चेति** ।

ननु घटादौ तावदसद्विलक्षणत्वं संप्रतिपन्नम्, सद्विलक्षणत्वमपि पटादिवैलक्षण्यात् ब्रह्मवैलक्षण्याद्वा। अतो भेदव्यवहारव्यवस्थापकलक्षणरूपकेवलव्यतिरेकिन्यायेन साध्यस्य पक्षैकदेशसिद्धस्यैवाभिव्याप्त्या साधनान्न साध्यप्रसिद्धिरिति। अत्र तु **सिद्धा चासाविति** नञ्प्रहाणेनोत्तरम्; पक्षे सर्वत्र सिद्धेवेत्युक्तम्; तथाऽपि मिथ्याशब्दनिमित्तं किञ्चित्त्वयाऽङ्गीक्रियते, तदेव साधयाम इत्यत्राह–**भवदनभिमत** इति।

परे हि रजतादेश्शुक्त्याद्यात्मना वेद्यत्वं वा रजतादेरतत्संसृष्टस्य तत्संसृष्टतया भातत्वं वा बाध्यव्यवहारहेतुधीविषयत्वं वा मिथ्याशब्दनिमित्तं सिद्धान्तयन्ति। न चैतत् त्वया साध्यम्; अन्यथाख्यातेरख्यातेर्वा स्वीकारप्रसङ्गात्; तथा चापसिद्धान्तः। स्वदेशादौ च विश्वं सत्यं स्यादिति विवक्षितविपरीतसाधनापत्तिः; अतस्सिद्धसाध्यत्वं चाह–**विश्वमिति**। हिशब्द आगोपालपण्डितं दुरपह्नवां प्रसिद्धिं द्योतयति। तदितरवपुषा–स्वेतरस्वरूपतयेत्यर्थः। नहि स्वप्रतियोगिकान्योन्याभाववत्त्वं वा स्वेतरतादात्म्यं वा कस्यचिदनुबोभूयामहे शोश्रूयामहे वा। परसिद्धान्तकल्पिताकारवत्तया च मिथ्यात्वं सिद्ध मित्याह **स्वन्मतारोपितैश्चे**ति। ब्रह्माविद्याविवर्तत्वानिर्वचनीयत्वबाध्यत्वैरिति शेषः। चकारादसंसृष्टसंसृष्टतयेत्यपि गृह्यते। एवमनिर्वाच्यत्वादिविकल्पकोट्यन्तरेष्वपि तत्तद्विकल्पावतारेण बाधापसिद्धान्तसिद्धसाधनत्वादिदोषाणामनतिक्रमणीयत्वं प्रच्छन्न-बौद्धोपालम्भव्याजेन छात्रान्प्रतिबोधयति–**स्यादिति**। ध्रुवं–निश्चतम्, प्रसञ्जकानामङ्गपञ्चकसंपत्तेरिति भावः ॥ ४८ ॥

---

आनन्द०—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह– **पुनरपीति**। सदसद्रूपत्वादेरिव सदसद्भिन्नत्वादेरप्यसंभवादिति भावः। सिद्धसाध्यतादिराद्यर्थः। नन्वर्थान्तरत्वं कथम्; प्रकृतस्यैव सिद्धेरित्यत्राह –**अयं भाव इति**। **व्याहतत्वमिति**। सत्त्वाभाववतोऽसत्त्वनियमादसत्त्वाभाववतः सत्त्वनियमात्तदुभयाभावद्वयमेकत्र व्याहतमिति भावः। **कोटयन्तरस्येति**। अनुष्णाशीतस्य पृथिव्यादेः संभवादिति भावः। ननु तद्वदुष्णानुष्णविकल्पेऽपि विरोधो न स्यादित्यत्राह—**न चेति**। **सतामेवेति**। सतः पटात् घटः, सतो घटाच्च पट इति परस्परमित्यर्थः। तदेवोपपादयति—**एकस्येति**। व्यासज्यवृत्त्यत्यन्ताभाववदन्योन्याभावस्यापि तादृशस्संभवादिति भावः। **विरुद्धार्थान्तरता चेति**। तुच्छत्वेऽपि जगतः शशशृङ्गान्यत्वे सति ब्रह्मान्यत्वस्य सत्त्वात्तुच्छत्वं सिद्धान्तविरुद्धं सिध्येदित्यर्थः। **एवमिति**। विरुद्धार्थान्तरतेत्यर्थः। **षष्ठेऽपीति**। ब्रह्मत्वाभावतुच्छत्वाभावयोः प्रपञ्चे समुच्चितत्वादित्यर्थः। विगीतं विवादाध्यासितं पक्ष इत्यर्थः। **विगीतप्रयोगेषु** अन्वयिप्रयोगेषु। **न च विगीत इति**। संदिग्धसाध्ये पक्षे इत्यर्थः। **सपक्षस्त्विति**। शुक्तिरजतत्वस्यासिद्धेरित्यर्थः। ननु प्रसाध्याङ्गको दृष्टान्तो भवत्वित्यत्राह—**साधनं चेति**। ननु घट एव साध्यस्य प्रसिद्धत्वे व्यतिरेकित्वं न स्यादित्यत्राह—**अतो भेदव्यवहारेति**। यथा घटादावितरभेदे सिद्धेऽपि 'पृथिवी इतरभिन्ना' इत्यत्र पक्षभिन्नदृष्टान्ताभावाद्व्यतिरेकित्वं तथेत्यर्थः।

अभिव्याप्त्या पक्षतावच्छेदकावच्छेदेन। नञ्प्रहाणेनेति। पूर्वमसिद्धा चेति पदच्छेदः, इदानीं सिद्धा चेतीति भावः। अन्यथाख्यातेरिति। अन्यस्य चान्यथाऽन्यात्मना च भानेऽन्यथाख्यातित्वम्, असंसर्गाग्रहे चाख्यातित्वमिति भावः। स्वदेशादौ चेति। अत्र सत्त्वस्य बाधकाभावादिति भावः। परसिद्धान्तकल्पिताकारमेवाह—ब्रह्माविद्याविवर्तेत्यादिना। नन्वनिर्वाच्यत्वमेव मिथ्यात्वमस्त्विति यदि ब्रूयात्तत्राह—एवमिति। तत्तद्विकल्पः—सदसत्त्वेनानिर्वाच्यत्वं ब्रह्मशून्यान्यत्वेन वा निर्वक्तुमशक्यत्वं अन्यस्यान्यात्मना निर्वक्तुमशक्यत्वं वेति विकल्पे सत्त्वेन निर्वाच्यत्वात् बाधः। ब्रह्मशून्योभयभिन्नत्वेन निर्वाच्यत्वात् स्वमतेऽपसिद्धान्तः, अन्त्ये सिद्धसाधनमिति भावः। त इति संबोध्याभिधानादाह—छात्रानिति ॥ ४८ ॥

---

साध्यं मिथ्या न वा ते द्वितयमनुचितं निष्फलत्वादिदोषा-
दाद्यं ह्यिष्टं ममापि प्रसजति भवतस्सत्यभेदः परस्मिन्।
पक्षीकारेऽस्य बाधादिकमतिचरणं तद्बहिष्कारपक्षे
तच्चेद् ब्रह्मस्वरूपं भुवनमभिहितं हन्त सब्रह्मकं स्यात् ॥ ४९ ॥

सर्वार्थ०—स्वरूपविकल्पेन दूषितं मिथ्यात्वं धर्मतोऽपि विकल्पासहमित्याह—साध्यमिति। ते ब्रह्मव्यतिरिक्तविश्वमिथ्यात्ववादिनः। द्वितयं–मिथ्यात्वस्य मिथ्यात्वं तत्प्रतिभटं सत्यत्वं च। अनयोरनौचित्ये क्रमात् कारणमाह–निष्फलत्वादिदोषादिति। आदिपदमपसिद्धान्तार्थम्। नैष्फल्यं सिद्धसाधनतया विवृणेति–आद्यमिति। अपसिद्धान्तमुद्घाटयति–प्रसजतीति। पुनरपि साध्यमेतन्मिथ्यात्वं पक्षीकृतं न वेति विकल्पे पूर्वं दूषयति–पक्षीकार इति। अत्र हि प्रामाणिकमिथ्यात्वं पक्षीकृत्य तस्य मिथ्यात्वसाधने बाधः; अन्यस्य तु सिद्धसाध्यता; विधेयस्य निषेधात् व्याघातश्चेत्यर्थः। न ह्यत्र स्वपरिनिर्वाहकनीतिः; यतः—

मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत्।
सत्यत्वस्य तु सत्यत्वे सत्यत्वं स्थापितं भवेत् ॥

उत्तरत्रोत्तरमाह–अतिचरणमिति। पक्षबहिर्भावो हि सपक्षतया विपक्षतया वा स्यात्। आद्ये जगन्मिथ्यात्वस्य हि मिथ्यात्वे संप्रतिपन्ने कथं तद्विरुद्धं साध्येत। द्वितीये मिथ्यात्वस्य सत्यत्वसंप्रतिपत्त्या तत्र च हेतुवृत्तेरतिचरणम्; यदिदं न दृश्यं तदा साध्यमपि न स्यात्; साधनाधीनदृग्विषयत्वायोगात् अपि च ब्रह्मवदिह विपक्षभूतं मिथ्यात्वं ब्रह्मणस्सद्वितीयत्वमापादयेत्। अभावरूपं जगन्मिथ्या [त्वं]त्वमसत्यमप्येकदेशिभिरङ्गीक्रियत इति चेत्, तथाऽपि तत्र हेतुवृत्तेरतिचरणं दुस्तरमेव। सत्यमेव जगन्मिथ्यात्वम्; तच्च ब्रह्मस्वरूपमेवेति नापसिद्धान्तादिदोष इति पराभिप्रेतं कृत्वाऽनुब्रूते—तच्चेदिति। तत्रापि सिद्धसाधनत्वमाह–भुवनमिति। मिथ्यात्वयोगि मिथ्या तच्च मिथ्यात्वं यदि ब्रह्म तदा विगीतं ब्रह्मवदिति साध्यार्थः स्यात् तत्र न वयं प्रत्याख्यातारः इति भावः ॥ ४९ ॥

आनन्द०—पौनरुक्त्यशङ्कां परिहरन् पूर्वसङ्गत्याऽऽह—स्वरूपेति । मिथ्यात्वं हि सत्यं मिथ्या वेति सत्यत्वमिथ्यात्वरूपमिथ्यात्वनिष्ठधर्ममुखेनापीत्यर्थः। ननु सत्यत्वं सत्यं न वेति विकल्पपक्षोभे यः परिहारः सोऽत्रापीत्यत्राह—सत्यत्वस्येति। कथं तद्विरुद्धमिति। जगन्मिथ्यात्वस्य मिथ्यात्वं नाम जगति तदभावः। तदवधारणे बाधितं कथं साध्येतेति भावः। अतिचरणं—व्यभिचारः। हेतोरगमनान्न व्यभिचार इति शङ्कते—यद्यीति। दृश्यत्वाभावेऽनुमितिविषयत्वमपि न स्यादिति परिहरति—तर्हीति। अपसिद्धान्तमप्याह—अपि चेति। ननु भावाद्वैतपक्षे नापसिद्धान्त इति शङ्कते—अभावेति। मिथ्यात्वस्य भावत्वेऽपि नाद्वैतविरोध इति शङ्कते—सत्यमेवेति ॥ ४९ ॥

---

इष्टं ब्रह्मापि दृश्यं तव च कथयतस्तस्य जिज्ञास्यतादीन्
मिथ्या चेद् दृश्यताऽस्मिन्ननुविमतिपदेऽप्येवमेषा त्वयेष्टा।
लिङ्गं जाड्यादिकं चेत्तदपि मम मते ह्यंशतः स्यादसिद्धं
मिथ्यालिङ्गैश्च सिध्येत् किमपि यदि भवेद् बाष्पधूमोऽग्निलिङ्गम् ॥५०॥

सर्वार्थ—एवं व्यापकवद्व्याप्यस्यापि विकल्पासहत्वं चतुष्पद्या दर्शयति—इष्टमिति ॥ यदेतन्मिथ्यात्वसाधकतयोक्तं दृश्यत्वं, तद् ब्रह्मणि विद्यते न वेति विचारे नेति पक्षस्तावद् दूष्यते। अथातो ब्रह्मजिज्ञासा, तद्विजिज्ञासस्व तद् ब्रह्म, आत्मा वा अरे द्रष्टव्यः, आत्मन्येवात्मानं पश्येदित्येवमादीनि परश्शतं वाक्यानि पुरस्कृत्य श्रोतव्य-मन्तव्यत्वादिविशेषान् साधयतस्ते ब्रह्मणि दृश्यत्वनिषेधो न युक्तः। विद्यत इति पक्षे हेतोरतिचार इति भावः। ब्रह्मणि दृश्यत्वं तन्मिथ्याभूतम्; अतो न तत्रातिचार इति शङ्कते—मिथ्या चेदिति। एतदुपालभते नन्विति। मिथ्याभूतेनैव हि दृश्यत्वेन ब्रह्मव्यतिरिक्तेऽपि मिथ्यात्वं त्वया साध्यते। नहि दृश्यं मिथ्या, तद्धर्मस्तु दृश्यत्वं सत्यमिति सम्भवति; तथाऽङ्गीकारे तत्रैवातिचारः, सत्यद्वित्वप्रसङ्गश्चेति भावः।

ननु दृश्यत्वे दृश्यत्वं त्वयाऽपि वक्तुं न शक्यम्, आत्माश्रयादिप्रसङ्गात्। अतस्सत्येऽपि तस्मिन् हेतुवृत्त्यभावान्नातिचारः स्यात्। मैवम्; दृश्यत्वं नाम लिङ्गं दृश्यत्वादिति हेतुपदेन बोध्यं न वा! आद्येऽतिचारस्त्वयैवेष्टः। द्वितीये साध्यव्याप्य-मनुपस्थापयतो हेतुपदस्य प्रयोगाङ्गतायोगः। न चैवमात्माश्रयादिदोषः, स्वपरनिर्वाहक-समाधिना दृश्यत्वधर्मस्य तदाश्रयाणां च दृश्यपदेन संग्रहणस्य त्वया स्वीकार्यत्वात्; अन्यथा दृश्यत्वं न दृश्यमिति स्वोक्तिविषयत्वव्याघातात्। यदि च हेतुपदजन्यधी-विषयताभावेऽपि हेतुपदं तत्र प्रयुज्येत एवमनैकान्तिकादिपदमपि तज्जन्यधीविषयत्वा-भावेऽपि तत्र लब्धप्रसरमिति सर्वदोषसंपातः स्यात्। दोषाभावे कथं दुष्टशब्दस्सार्थः इति चेत्, दृश्यत्वाभावे कथं दृश्यशब्दस्सार्थ इति सममेतत्।

किंच दृश्यत्वरहितं दृश्यत्वं निष्प्रकाशं स्वप्रकाशं वा! नाद्यः; स्वोक्तिव्याघाता-देव, न द्वितीयः, अब्रह्मत्वात्। अतः कथं दृशिविषयत्वं नासादयेत्! अथ स्यात्,

दृश्यत्वशब्देन स्वगोचरदृशि निरपेक्षप्रकाशात्यन्ताभावो वा दृशिजन्यफलाश्रयत्वं वा विवक्षितम् ! तदुभयं स्वयंज्योतिषि ब्रह्मणि नास्तीति कथं तत्रातिचार इत्यपसर्पण-वाक्यमनुभाषते —लिङ्गमिति। तदुभयं दूषयति—तदपीति। अस्मन्मते हि ब्रह्मव्यतिरिक्ता जीवा धर्मभूतज्ञानं च स्वयंप्रकाशतया स्वगोचरदृशिनिरपेक्षप्रकाशानि। अतो हेतोर्भागासिद्धिः। दृशिजन्यफलं च त्वदनुविधेयाभिमतं प्राकट्यं वा! त्वदभिमतं वेद्यगतवित्तिस्फुरणं वा ! द्वयोरपि विगीते क्वचिदपि अस्माभिरनङ्गीकारात् सार्वत्रिकी स्वरूपासिद्धिः। तवापि स्फुरणस्य वाच्यं व्याहाराख्यं फलं विगीतस्यापीति चेत्, तर्हि तद्ब्रह्मापि व्याप्नोति। अन्यथा तत्र मौनैकशरणः कथं तद्व्याचिख्यासया प्रवर्तेथाः ! भवन्तु चात्र यानिकानिचिल्लिङ्गानि, तानि सत्यान्यसत्यानि वेति विकल्पे पूर्वत्रापसिद्धान्तादि स्फुटमिति कृत्वा पश्चिममनुवक्ति—मिथ्यालिङ्गैरिति। तत्रानिष्टमाह—भवेदिति। बाष्पधूमः–बाष्पारोपितधूमः। भ्रान्तिसिद्धस्य धूमस्य व्यभिचार-दृष्ट्या वह्निगमकत्वाभावः, न तु मिथ्यात्वादिति चेत्, तत एव यन्मिथ्या न तद्गमकमिति व्याप्तिसिद्धेस्त्वदभिमतान्यपि न साध्यं साधयेयुः। साधने वा ब्रह्मण्यपि तानि कथञ्चित्कल्पितानि तदप्यपरमार्थयेयुः।

एतेन परोक्तं बाधकमपि प्रतितर्कप्रत्यूढं दर्शितं भवति। अपि च सत्यत्वपक्षे याऽसौ दृग्दृश्यसम्बन्धानुपपत्तिर्बाधिकेति संभाव्यते। असत्यत्वेऽपि सा अस्ति वा? आद्ये तर्काङ्गपञ्चकान्यतमहानेरतर्कत्वम्; तदा वाऽसत्यत्वे साध्ये कथं दृश्यत्वं हेतुरुपादीयेत ? द्वितीये सत्यादन्यस्मिन् खपुष्पेऽपि दृश्यत्वानुपपत्तिर्न स्यात्। माभूदिति चेन्न; ख्यातिबाधान्यथानुपपत्तितर्कानुदयप्रसङ्गात्। अथ शब्दज्ञानानुपपत्तिवस्तुशून्य-विकल्पगोचरतामात्रेण तस्य दृश्यत्वं, सत्येतरत्वसाध्यापेक्षया च सपक्षत्वमिष्येत, तदा तद्वदेव तुच्छत्वेऽपि सम्भवति अभिमतानिर्वचनीयत्वं न नियम्येत। शब्दज्ञाननिरपेक्षश्च खपुष्पाद्यध्यासः प्रागपि दर्शितः। भवतु तत्राप्यनिर्वचनीयत्वं शब्दमात्रानुपातिविकल्प-विषये तुच्छत्वम्। तत्र विवक्षितदृश्यत्वानुपपत्तिस्सिद्धेति चेत्; तदपि न, शब्दमात्र-प्रतीतबाह्यागमविकल्पविषयाणामन्येषामपि पूर्वपक्षवाक्यार्थानामनिर्वचनीयत्वाभ्यु-पगमात्। अस्तु तत्रापि तुच्छत्वम्; किं नश्छिन्नमिति चेन्न; प्रत्यक्षाद्याभासप्रतिपन्नेऽ-प्याभासप्रतिपन्नत्वाविशेषेण तुच्छबहिर्भावक्लृप्तिभङ्गप्रसङ्गात्।

ननु सत्ये दृक्संबन्धोऽनुपपन्नः; अस्वयंप्रकाशस्य स्वतस्सिद्धिविरहेण सत्यत्वा-योगात्। तुच्छेऽपि तथा, स्वरूपाभावे सम्बन्धाभावात्; अनिर्वचनीये त्वविद्यामाहात्म्या-दाध्यासिकस्सम्बन्धस्सिध्यन् दुरपह्नव इति, तन्न; पराधीनसिद्धेरपि निर्बाधस्य सत्यत्वाविरोधात्; सत्येऽपि ब्रह्मणि आध्यासिकदृक्सम्बन्धाभ्युपगमाच्च।

दृक्सम्बन्धश्च दृश्यानामसत्यत्वे विवक्षितः।
सत्यत्वादिविकल्पेन सीदत्यनुपपत्तिमान् ॥

सत्यत्वे त्वनुपपद्यमानो हि दृक्सम्बन्धः सत्योऽसत्य उभयरूपोऽनुभयरूपो वा ? नाद्यः, सत्यत्वे प्रपञ्चस्य दृक्सम्बन्धस्सत्यो न स्यात्; असत्यश्चासाविति विपर्ययविश्रमायोगात्। विषयसत्यत्वे हि धिया सम्बन्धः स्वीकार्यः। न चासो घटते विकल्पदोःस्थ्यादिति प्रसङ्गतद्विपर्ययाविति चेन्न; इष्टप्रसङ्गत्वात्। दृशस्सत्यत्वेऽपि दृश्यसम्बन्धासत्यत्ववद् दृश्यस्य सत्यत्वेऽपि दृशिसम्बन्धमात्रासत्यत्वमनुपपत्त्या कल्प्यम्। दृक्सम्बन्धासत्त्वे तदधीनसिद्धेः कथं सत्यत्वमिति चेन्न; असत्यात्सत्यसिद्धेस्त्वया त्वद्विषैश्च जोघुष्यमाणत्वात्; अस्माकं तु सम्बन्धविकल्पदोःस्थ्यानङ्गीकारादेव समीहितसिद्धिः।

सम्बन्धफलसिद्धौ च स्वरूपे दुरपह्नवे।
अन्तर्भावबहिर्भावविवादस्त्विह निष्फलः॥

ये च दृग्दृश्यसम्बन्धे संयोगादिविकल्पतः।
दोषाः प्रलपितास्तेऽत्र दृश्यासत्यत्वभीरवः॥

सम्बन्धमात्रदौर्घट्यात्तद्विशेषोऽपि दुर्घटः।
इति चान्धस्य जात्यन्धयष्टिदानोपमं विदुः॥

न द्वितीयः, विषयस्य सत्यतायामसत्यसम्बन्धो न स्यादिति ह्यत्र प्रसङ्गः स्यात्। अयं ब्रह्मण्यतिचरितः इष्टप्रसङ्गश्च; विपर्यये विश्रान्तिश्चाद्याप्यसिद्धा। अत एव न तृतीयचतुर्थौ, व्याघाताच्च। तथाऽपि कोऽसौ दृग्दृश्ययोस्सम्बन्ध इति निर्मत्सराः पृच्छाम इति चेत्, वयमपि निर्मत्सराः पृच्छन्तं पृच्छामः। तत्र किंनामेति वा, किंस्वरूप इति वा, संयोगादिषु कतम इति वा, तेष्वन्तर्भूतो बहिर्भूतो वेति वा, सत्योऽसत्यो वेत्यादिप्रकारकोटिभेदेन वा प्रश्नार्थः स्यात् ? नाद्यः, अप्रज्ञातविशेषनाम्नामानन्त्यात्; सामान्यतस्तु प्रश्नवाक्येऽपि प्रख्यातेः। न द्वितीयः, सर्वत्र स्वरूपमात्रे प्रश्नोत्तरविचारादेरनवतारात्। न तृतीयः, संयोगादिराश्यन्तर्भावनिर्बन्धाभावात्, अन्यथा सर्वत्र तज्जातीयराशिविशेषप्रश्नप्रसङ्गात्। नापि चतुर्थः, उभयथाऽपि स्वरूपलाभे विशेषनिर्धारणवैफल्यात्, अनिर्धारितेऽप्यन्यतरकोटेरनपायात्। न पञ्चमः, परस्परविरुद्धे सर्वत्रानुपपत्तिरहितान्यतरकोटेर्यथार्हमवशेषणीयत्वात्। दूषिता च सम्बन्धपक्षानुपपत्ति; दर्शितश्चासम्बन्धपक्षे दोषः। यदि चैतादृशस्तर्कोऽनुग्राहकः, स तर्हि यत् प्रकाशते तन्मिथ्या यथा ग्राह्यग्राहकौ तथा संविदित्यादिसंविन्मिथ्यात्वसाधकानुमानेष्वपि सुलभः, सत्यत्वस्वप्रकाशत्वादिधर्मसंबन्धानुपपत्तेस्त्वत्प्रलावप्रस्थित्यैवाकुण्ठितप्रसरत्वात्।

मिथ्यात्वेन च दृश्यत्वं स्वतःसम्बन्धि साधयन्।
अप्रामाण्यस्वतस्सिद्धिमुद्गिरत्यनया गिरा ॥ ५० ॥

**आनन्द०**—आनन्तर्यसङ्गतिं दर्शयति—**एवमिति** । चतुर्णां पदानां समाहारः चतुष्पदी, चतुर्भिः पदैरित्यर्थः । केचित्तु पदशब्दः पद्यपरः । चत्वारि पद्यानि चतुष्पदीत्यर्थ इत्याहुः । **विद्यत इति** । ब्रह्मणस्सत्यत्वादिति भावः । **तथाऽङ्गीकार इति** । सत्यत्वाङ्गीकारे दृश्यत्वे व्यभिचारोऽद्वैतहानिश्चेत्यर्थः । **आद्य इति** । बोध्यत्वस्यैव दृश्यत्वादिति भावः । **द्वितीय इति** । तथा सत्यपार्थकत्वादिनिग्रह इत्यर्थः । **परस्परनिर्वाहकेति** । एतादृशधर्मेषु नात्माश्रयदोष इति भावः । **व्याघातादिति** । एतद्वाक्यजन्यदृशिविषयत्वादित्यर्थः । व्याघातं परिहरति—**यदिति** । दूषयति—**एवमिति** । अर्थासंस्पर्शिपदप्रयोगस्य साधकत्ववद्दूषकत्वस्यापि संभवादनैकान्त्याद्युद्भावनेन सर्वत्र विजयः स्यादित्यर्थः । नन्वर्थशून्यशब्दप्रयोगस्य निग्रहहेतुत्वात् कथं विजय इति शङ्कते—**दोषाभाव इति** । अनुमानप्रयोक्तुरपि तुल्यमित्याह—**दृश्यत्वाभाव इति** । निष्प्रकाशं—प्रकाशरहितम् । **स्वोक्तिव्याघातादिति** । स्वोक्तिजन्यप्रकाशवत्त्वादिति भावः । **अब्रह्मत्वादिति** । तव ब्रह्मव्यतिरिक्तस्य जडत्वादित्यर्थः । **दृशिविषयत्वमिति** । दृशेर्विषयस्तत्त्वमित्यर्थः । शब्दपरेण दृशिशब्देनार्थो लक्ष्यते । यद्वा 'इक्कृष्यादिभ्यः' इतीक् प्रत्ययः । **तदुभयमिति** । यद्यपि प्राकट्यादिकं ब्रह्मण्यपि वक्तुं शक्यम्, तथाऽपि स्फुरणलक्षणस्य प्राकट्यस्य ब्रह्मरूपत्वात्तत्र न सम्भवत्यात्माश्रयत्वादिति भावः । **स्वगोचरदृशिनिरपेक्षप्रकाशानीति** । निरपेक्षप्रकाशाश्च निरपेक्षप्रकाश्यं च निरपेक्षप्रकाशानि । 'नपुंसकमनपुंसकेन' इति नपुंसकस्य शेषः । **त्वदनुविधेयो** भट्टाचार्यः; व्यवहारे भट्टनय इत्यङ्गीकारात् । **वित्तिस्फुरणं**—वित्तिरूपस्फुरणम् । यद्वा वित्तेर्ज्ञानस्य वेद्यगतत्वेन प्रकाश इति वाऽर्थः । **विगीते**—पक्षे । **तत एवेति** । मिथ्याभूतस्य वह्निगमकत्वाभावादित्यर्थः । **एतेनेति** । कल्पितहेतुभिर्ब्रह्मणो मिथ्यात्वापादनेनेत्यर्थः । प्रपञ्चमिथ्यात्वाभावे दृक्सम्बन्धो न स्यात्, व्यावर्तमानत्वं न स्यादित्यादिबाधकतर्काः । तत्र प्रतितर्कास्तु आरोपितसाधनेन प्रपञ्चस्य मिथ्यात्वे तथाभूतेन दृश्यत्वेन सत्यत्वस्वप्रकाशत्वादिकं ब्रह्मणो न स्यात् अविशेषादित्यादय इति भावः । **अभ्यतमहानेरिति** । विपर्यये पर्यवसानाद्यसम्भवादिति भावः । **तदा चेति** । विरुद्धत्वादिति भावः । **ख्यातिबाधेति** । असत्त्वे भानं न स्यादित्यसद्वैलक्षण्यायोगादिति भावः ।

**अथेति** । शब्दविषयकज्ञानानन्तरभावि यच्छून्यविषयकं ज्ञानं तादृशसविकल्पकगोचरत्वं शून्यस्याप्यस्त्वित्यर्थः । ननु शब्दज्ञानजन्यज्ञानविषयत्वेनानिर्वचनीयत्वं साध्यते; तदेवात्र दृश्यत्वमभिमतमित्यत्राह—**शब्दज्ञाननिरपेक्ष इति** । **प्रागपीति** । माध्यमिकमतभङ्ग इत्यर्थः । सर्वस्याप्यनिर्वचनीयत्वे ख्यातिबाधाभ्यां सदसद्वैलक्षण्यं न स्यादित्यत्राह—**शब्दमात्रेति** । यस्य शब्दनिरपेक्षाध्यासो न तस्माद्व्यावृत्तिः साध्येति भावः । **तदपीति** । शब्दनिरपेक्षाध्यासाभावादिति भावः । ननु मायिपक्षेऽपि शब्दज्ञानमात्रजन्यविकल्पविषयाणां सत्त्वात् किमर्थं बाह्यागमादिपर्यन्तधावनं कृतमिति चेन्न । तेषामीश्वराध्यासविषयत्वेन वैषम्यादिति भावः । मायिपक्षेऽपि दूषयितुमन्यथानुपपत्ति-

स्वरूपमाह--नन्वित्यादिना । ननु सत्यत्वे सम्बन्धानुपपत्तिरेव बाध इति चेत्तत्राह--सत्यत्वेऽपीति । ननु वृत्तिविषयत्वमेव ब्रह्मणो न चैतन्यसम्बन्ध इति चेत्तर्हि प्रपञ्चेऽपि वृत्तिविषयत्वमेव न चैतन्यविषयत्वमिति वक्तुं शक्यत्वात् । दृक्सम्बन्धेति । दृश्यानां सत्यत्वेऽनुपपद्यमानो दृक्सम्बन्धः सत्योऽसत्यो वेति विकल्पासहत्वेनानुपपन्न इत्यर्थः । उभयरूपः—सत्यासत्यस्वरूपः । अनुभयरूपः—सत्यासत्यभिन्नः । सत्यत्वे प्रपञ्चस्येति । त्वया ह्येवं तर्कः प्रयोज्यः, प्रपञ्चस्य सत्यत्वे दृग्दृश्यसम्बन्धः सत्यो न स्यादिति, तत्र सत्यश्च सम्बन्धः; तस्मादसत्यश्चासो प्रपञ्च इति विपर्यये पर्यवसाने वाच्ये दृग्दृश्यसम्बन्धस्यापि पक्षान्तर्भावात् बाधेन पर्यवसानं न स्यादित्यर्थः। विकल्पदौःस्थ्यादिति । संयोगसमवायादिविकल्पदौःस्थ्यादित्यर्थः । असत्यात् सत्यसिद्धिः—रज्जुसर्पादिभिर्भयसिद्धिः । त्वद्विधाः—योगाचारादयः । तैरिन्द्रियैस्तथा विधैर्ज्ञानसिद्धिरङ्गीकृता । अनङ्गीकारे हेतुमाह—सम्बन्धफलेति । अन्तर्भावेति । प्रमाणसिद्धस्यान्यतरत्वसम्भवादिति भावः। अत्र दृश्याः सत्यत्वभीरव इति। अत्र काल्पनिकसम्बन्धपक्षे सत्यत्वात् भीरवो विरोधिनस्ते दोषा दृश्याः द्रष्टव्या इत्यर्थः। भीरुभिरिति पाठः क्वचित् । इति चान्धस्येति । सम्बन्धस्य दीर्घत्वाभावात् तद्विशेषस्य सुतरां दीर्घत्वं नास्तीति भावः। अयमिति । ब्रह्मणो वेदान्तजन्यवित्तिविषयत्वादित्यर्थः । इष्टेति । असत्यत्वाभावस्येष्टत्वादित्यर्थः । विपर्ययविश्रान्तिरिति । असत्यश्चायं सम्बन्ध इति वाच्यम्; न च प्रपञ्चमिथ्यात्वसिद्धेः प्राक् दृग्दृश्यसम्बन्धो मिथ्यात्वेन सिद्ध इति भावः । अत एवेति । इष्टप्रसङ्गाद्विपर्ययविश्रान्त्यसिद्धेश्चेत्यर्थः । अज्ञातेति । इक्षुक्षीरादिमाधुर्याणामित्यर्थः । सामान्यत इति । प्रश्नवाक्ये केनचिच्छब्देनाभिधानादित्यर्थः । सर्वत्रेति । सिद्धस्वरूपधर्मिविशेषविषयत्वात् प्रश्नस्येति भावः। अन्यथेति । ब्रह्मणाऽपि यत्किंचिज्जातीयत्वप्रश्नप्रसङ्गेन तत्राप्युत्तरं वक्तव्यं स्यादिति भावः। दूषितेति । सत्यत्वेऽपि सम्बन्धानुपपत्तिः परिहृतेत्यर्थः । दर्शितश्चेति । हेतुपदजन्यधीविषयत्वाभावेऽपोत्यादिनेत्यर्थः । तर्कस्याभाससाम्यमाह – यदि चेत्यादिना । तथा च माध्यमिकमतावतार इति भावः । सत्यत्वेति । व्यावहारिकसत्त्वं प्रातिभासिकसत्त्वं चादायान्यथासिद्धिवत् सांवृतिकसत्त्वस्वप्रकाशादिकमादायान्यथासिद्धिसम्भवादित्यर्थः। प्रस्थितिः--मार्गः। मिथ्यात्वेनेति । मिथ्याभूतं दृश्यत्वं स्वतः स्वरूपाभावेऽपोति चेत् स्वयं स्वसम्बन्धिसाध्यं प्रपञ्चस्य साधयतोति वचनं स्वस्याप्रामाण्यमेव प्रतिपादयतीत्यर्थः। अप्रामाण्यस्य स्वतः सिद्धिः स्वेन वचनेनैव सिद्धिः, स्वयमप्रमाणमिति यावत् ॥ ५० ॥ दृश्यत्वानुमानभङ्गः

---

व्यावृत्तं शुक्तिरूप्यं विदितमिह मृषा विश्वमेवं न किं स्यात्
मैवं हेतोरयुक्तेस्स खलु भिदुरता बाध्यता नाशिता वा।
आद्येऽनैकान्त्यमन्त्ये स्वसमयविहतिर्मध्यमे स्यादसिद्धि-
र्ध्वंविच्छेदादिकल्पान्तरमपि कथितैश्चूर्णितं दोषबृन्दैः ॥ ५१ ॥

**सर्वार्थ०**—उक्तदोषदुष्टमप्यनुमानान्तरमधिकदोषशिक्षार्थं व्याचष्टे—**व्यावृत्त-मिति** ॥ इह—यत्र भाति तत्रेत्यर्थः। अन्यत्र तु प्रसङ्ग एव नास्ति; यद्वा सर्वस्मिन्निह जगतीत्यर्थः। विमतम् मिथ्या व्यावर्तमानत्वात्, यदुक्तसाधनं तदुक्तसाध्यम् यथा शुक्तिरूप्यम्; तत्खलु स्वतादात्म्येन भाते शुक्तिद्रव्येऽनुवर्तमाने स्वयं व्यावर्तते, अतो मिथ्या। एवं रज्ज्वादेस्सर्पभूदलनाम्बुधारादेश्च सत्यत्वमिथ्यात्वे व्यवतिष्ठेते इति। अत्रापि प्रागुक्तदूषणाणि न प्रस्मर्तव्यानीत्यभिप्रायेण प्रतिवक्ति-मैवमिति। तत्र हेतुदौःस्थ्यं हेतुमाह—**हेतोरिति**। अयुक्तिं प्रथयितुं विकल्पयति—**स खल्विति**। योऽयं व्यावर्तमानत्वहेतुः, कुतश्चित् भिन्नत्वं वा ? बाध्यत्वं वा, नश्वरत्वं वा ? प्रथमं दूषयति—**आद्य इति**। भिन्नत्वं ह्यत्र स्वप्रतियोगिकं वा ? स्वेतरप्रति-यागिकं वा ? स्वतोऽन्यतो वेति विशेषानादरेण यत्किंचित्प्रतियोगिकं वा ? आदिम-स्त्वसंभवग्रस्तः; भेदाभेदकुसृष्टिश्च त्वया नाङ्गीक्रियते। अनन्तरस्त्वनैकान्त्यहतः। सत्ये ब्रह्मण्यतव्द्यावृत्तिं वर्णयता त्वयैव स्वेतरान्यत्वस्य स्वीकारात्। तत एव सामा-न्योक्तिरपि निर्धूता। अत्र क्रमस्य दूषणानुपयोगित्वादपसिद्धान्तोद्घाटनत्वरया च तृतीयं दूषयति—**अन्त्य इति**। यदि ह्यत्र स्वकालसत्त्वमभ्युपेत्य उत्तरकालासत्त्वं हेतुरुद्गृह्यते, तदा मिथ्यात्वेन सिषाधयिषितस्य स्वकालसत्त्वाभ्यनुज्ञानेऽपसिद्धान्तः, हेतुसाध्यपद-व्याघातश्च। अनभ्युपगतस्वकालसत्त्वे तु नश्वरत्वहेतुरसिद्धः। न खलु नित्यासतां खपुष्पादीनां नश्वरत्वं पामरः परीक्षको वा कश्चित् प्रत्येति।

तत्रापि नश्वरत्वेन नित्यसत्त्वं निरुध्यताम्।
स्वकालेतरकाले च तेन मिथ्यात्वमिष्यताम् ॥

बाध्यत्वहेतुं बाधते—**मध्यम इति**। प्रपञ्चस्य बाध्यत्वं हि स्वदेशादौ वा ? स्वारोपदेशादौ वा ? आद्ये त्वसिद्धिरवस्थापिता। द्वितीये बाधस्थलेष्वेव मिथ्यात्वसाधने सिद्धसाध्यता। अन्यत्र साधने स्वविषयवृत्तित्वम्, अन्यथाऽतिप्रसङ्गः; प्रपञ्चविषयबाधेन ब्रह्मबाधस्यापि सुवचत्वात्। ब्रह्म मिथ्या, सप्रपञ्चात्मना बाधितत्वात्, यत्कथं-चिद्बाध्यते तत्सर्वथा बाध्यत इति त्वयैवाश्रितत्वादिति। ननु यत्सत्यं तन्नित्यं प्रकाशते, स्वतश्च, यथा ब्रह्म, विगीतं तु न तथा; सुषुप्त्यादौ प्रपञ्चभानाभावात्, जागरादौ चान्यत एव भानात्। किंच सत्यस्य सर्वस्मिन् प्रकाशमाने प्रकाशो दृश्यते यथा संवित्स्वरूपस्य; न तथा प्रपञ्चस्य, अप्रकाशमाने घटादौ पटादिप्रकाशदर्शनात्। सत्यं च ब्रह्म देशपरिच्छेदरहितम्; न तथा विगीतमिति मिथ्या स्यात्; अतः कोट्य-न्तरसम्भवात् विकल्पन्यूनः प्रस्तुत उपन्यास इति शङ्कापनुत्त्यै कोट्यन्तरेष्वप्युक्त-दोषानतिदिशति—**धीविच्छेदेति**।

यदत्र कदाचिदप्रकाशमानत्वान्मिथ्येति, तत्र किमस्मदाद्यपेक्षया कदाचिद-प्रकाशमानत्वं हेतुः ? उत सर्वापेक्षया ? नाद्यः; सामग्र्यनुदयप्रयुक्तस्य प्रकाशाभावस्य प्रकाश्यमिथ्यात्वसाधकत्वायोगात्। न च पशुभिर्नृपशुभिश्चाविदितेष्वदृष्टेश्वरादिषु प्रामाणिकैरसत्यत्वमध्यवसीयते; वयं तु तत्राप्यध्यवस्याम इति चेन्न; ब्रह्मण्यपि

प्रसङ्गात्; विदितमेवास्माभिरप्यात्मतया ब्रह्मेति चेत्, किमर्थं तर्हि तद्विविदिषया यज्ञदानाद्युपादानम् ? शारीरकारम्भश्च ? अविदिताकारबोधार्थमिति चेन्न, तस्यैवाकारस्य मिथ्यात्वप्रसङ्गात् । तत्त्वावेदकवाक्यवेद्यस्य च मिथ्यात्वं व्याहतम् । निराकारे च कथं विदिताविदिताकारभेदः ? तत्कल्पनयेति चेत्तर्हि कल्पिताकारविविदिषयेव शास्त्राद्यारम्भात् स्वेष्टोपप्लवः । न द्वितीयः, ईश्वरस्य नित्यसर्वज्ञतया तदसिद्धेः । प्रकाशप्रकाश्ययोश्च भिन्नायुष्कत्वं युष्माभिरपि दुरपह्नवम्; अनादिसाक्षिचैतन्यविषयभूतानामविद्याव्यतिरिक्तानामनादित्वानङ्गीकारात्, स्वतः—प्रकाशमानत्वाभावाच्च । सत्यस्वनिषेधः पूर्वहेतुविकल्पे दूषितः; परतः प्रकाशोऽपि कारणदोषबाधकप्रत्ययाभावात् प्रतिष्ठितप्रामाण्यः ।

यच्च सत्यं संवित्स्वरूपं सर्वस्मिन् प्रकाशमाने प्रकाशते, न तथा विगीतम्; अतो मिथ्येति; तदसत्, सर्वसंविदामैक्यस्यास्माभिरनभ्युपगमात्, त्वयाऽपि तस्य दुस्साधत्वाच्च । अन्यथा कथं न सर्वे सर्वज्ञाः ? स्वसंविदो गुरुसंविदा प्रतिवादिसंविदा चैक्यं पश्यन् किं तदनुगुणं नाचरसि ? भिदुरास्तु संविदः स्ववेद्येतरप्रकाशदशायां न प्रकाशन्त इति न तन्निदर्शनम् । एतेन सत्यं सत् सर्वत्र वेद्ये प्रकाशत इत्यपि दत्तोत्तरम् । प्रतिवित्तिवेद्यानां सतां परस्परव्यावृत्तत्वात् । सत्तारूपस्तु तेषां धर्मो न त्वया सत्यत्वेन स्वीक्रियते, शेषं तु स्वस्थाने भविष्यति । यत्तु देशपरिच्छेदवतां स्वदेशेऽपि निवृत्तिः सेत्स्यतीति, तदपि नश्वरत्वोक्तन्यायेन प्रत्युक्तम् । यदि हि यत्र क्वचिद्देशे व्यावृत्तिर्हेतुस्स तर्हि स्वदेशासत्त्वं न साधयेत्, तत्सत्त्वे विरोधाभावात् । सार्वत्रिकव्यावृत्तिस्तु साध्यगर्भेति न हेतुः स्यात् ।

यन्न क्वचिन्न क्वचित्तत्खरशृङ्गादिरीतितः ।
इति मध्यमशिक्षा च स्वविधिक्षेपखण्डिता ॥ ५१ ॥

---

**आनन्द०**—दूषितसजातीयानामप्युदाहरणभेदमात्रेण पृथग्दूषणेऽनवस्थाप्रसङ्गं परिहरन् पूर्वसङ्गत्याऽऽह—**उक्तेति** । व्यावर्तमानत्वं मिथ्या न वेत्यादिहेतुविषयविकल्पदूषणमप्यत्रास्तीत्यर्थः । **एवमिति** । रज्ज्वाद्यधिष्ठानस्यानुवर्तमानत्वात्सर्पादिव्यावर्तमानत्वात्सत्यमिथ्यात्वे दृष्टे इत्यर्थः । **प्रस्मरणं** विस्मरणं । **आदिमस्त्विति** । स्वप्रतियोगिकभेदस्य विरोधेन स्वस्मिन्नसम्भवादित्यर्थः । **तत एवेति** । ब्रह्मण्यनेकान्त्यादित्यर्थः । **अपसिद्धान्त इति** । सत्यमेव हि सत्यत्वं; तत्काले सत्त्वे तन्निषेधायोगादिति भावः । **हेतुसाध्यपदेति** । हेतुसत्त्वप्रतिपादकहेतुपदस्य तदभावप्रतिपादकसाध्यपदेन विरोध इत्यर्थः । पूर्वकालसत उत्तरकालसत्त्वं नश्वरत्वमित्यभिप्रायेणाह—**अनभ्युपगतेति** । ननूत्तरकालासत्त्वमेव नश्वरत्वमस्त्वित्यत्राह—**न खल्विति** । ननु नश्वरस्य सर्वदा निषेधाभावे सर्वदा सत्त्वं स्यादित्यत्राह—**तत्रेति** । यथा नश्वरत्वं किंचित्कालासत्त्वेन सर्वकालसत्त्वविरोधि तथा किंचित्कालसत्त्वात् सर्वकालासत्त्वात् सर्वकालसत्त्वविरोध्यपीति विरुद्धत्वमपीति भावः । पूर्वत्र हेतुसाध्यपदयोरनन्वितत्वं

दोषः; इदानीमर्थगतो दोष उक्त इति ध्येयम् । **द्वितीये** किमारोपस्थल एव मिथ्यात्वं साध्यते; उत सर्वावच्छेदेनेति विकल्पं मनसि निधाय आद्य आह—**बाधस्थलेष्विति**। द्वितीय आह- **अन्यत्रेति** । बाधदेशादन्यत्रापीत्यर्थः । **अविषयेति** । स्वस्याविषये व्यापकतारहिते वृत्तिर्व्यापारो दोषमूलः पराजयहेतुरिति यावत् । तदुक्तं वरदराजीये—'दृष्टत्वमूलं द्विविधम्' इत्यारभ्य 'असाधारणं तु त्रिविधं युक्ताङ्गहीनत्वमयुक्ताङ्गाधिकत्वमविषयवृत्तित्वं च, इत्यादिभिः । **अन्यथेति** । एवंविधस्यापि साधकत्व इत्यर्थः । **प्रपञ्चविषयबाधेन**—प्रपञ्चरूपविषयस्य बाधेन । यद्वा प्रपञ्चरूपे देशे ब्रह्मणो बाधेनेत्यर्थः । **ब्रह्मबाधः**—ब्रह्मणो मिथ्यात्वम् । **सप्रपञ्चतया**-प्रपञ्चविशिष्टाकारेण । ननु सप्रपञ्चत्वेन बाधे तेन रूपेण मिथ्यात्वमस्तु न स्वरूपेणेत्यत्राह—**यत्कथंचिदिति**। **स्वतश्चेति** । यत्सत्यं तत्स्वतः प्रकाशत इत्यर्थः । ततश्च व्यापकनिवृत्त्या सत्यत्वनिवृत्तिरित्यर्थः । **किं चेति** । सत्यं चेत् सर्वस्मिन्प्रकाशमानेऽपि प्रकाशेतेति भावः । **सत्यं च ब्रह्मेति** । प्रपञ्चस्य सत्यत्वे देशपरिच्छेदो न स्यादिति भावः । **उक्तदोषानिति** । ब्रह्मण्यतिप्रसङ्गादिदोषानित्यर्थः । असाधकत्वे हेतुमाह—**प्रामाणिकैरिति** । व्यभिचारादिति भावः । कदाचिदप्रकाशमानत्वं ब्रह्मण्यसिद्धमेवेति शङ्कते—**विदितमेवेति** । **किमर्थमिति** । वेदनस्य सर्वदा प्रकाशमानस्य यज्ञादिसाध्यत्वाभावेन तेषां वैयर्थ्यमिति भावः । इष्टापत्तिं परिहरति—**तत्त्वेति** । किं च स आकारो ब्रह्मस्वरूपं वा तदन्यो वा, नाद्य इत्याह—**निराकारे चेति** । द्वितीयं शङ्कते—**तत्कल्पनयेति** । **स्वेष्टस्य** तत्त्वावेदकस्य उपप्लवो भङ्गः ।

नन्वीश्वरज्ञानस्य नित्यस्य कथमनित्यगोचरत्वं नित्यज्ञानविषयस्य नित्यत्वनियमात्, तथा च नासिद्धिरित्यत्राह—**प्रकाशेति** । **भिन्नायुष्कत्वमिति** । न्यूनाधिककालवृत्तित्वं अविद्याप्रपञ्चसुखदुःखेच्छाद्वेषतत्प्रकाशब्रह्मसाक्षिज्ञानानामिति भाव । तदेवोपपादयति—**अनादीति** । **अविद्याव्यतिरिक्तानामिति** । यद्यपि विद्याया अपि भिन्नायुष्कत्वं, तथाऽपि किंचिद्वैषम्यमादायात्यन्तवैषम्यं सुखादीनां दर्शयितुं तथोक्तमिति भावः **पूर्वहेतुविकल्प इति** । पराधीनसिद्धेरपीत्यादिनेति शेषः । **सर्वसंविदामिति** । संविदोऽप्युक्तप्रकाशरहितत्वात् न व्यतिरेकव्याप्तिग्रह इत्यर्थः । **सर्वसंविदामैक्ये** परस्परविरुद्धाचरणं न स्यात्, अनुकूलबुद्धेः प्रतिकूलबुद्धेर्वा एकरूपायास्सर्वसाधारण्यादिति भावः । सर्वज्ञत्वाभ्युपगमे बाधकमाह—**स्वसंविद इति** । ननु संविन्नानात्वमस्तु को दोष इत्यत्राह—**भिदुरास्विति** । दृष्टान्तासिद्धया व्याप्यत्वासिद्धिरिति भावः। ननु तर्हि सत्स्वरूपं निदर्शनं स्यादित्यत्राह—**एतेनेति** । दत्तोत्तरत्वमेव दर्शयति—**प्रतीति** । ननु (भेदिभिः) स्वीकृत एव दृष्टान्तोऽस्त्वित्यत्राह—**शेषं त्विति** । अद्रव्यसर इत्यर्थः । तदेवोपपादयति—**यदि हीति** । देशपरिच्छेदो हि देशव्यावृत्तिरिति तद्विकल्पोपपत्तिः । सर्वत्र व्यावृत्तिर्हि तन्निष्ठात्यन्ताभावघटितेति तयैव तत्साधने साध्याविशेष इत्याह—**सार्वत्रिकेति** । **यन्न क्वचिदिति** । यत्क्वचिदसत् तत् क्वचिदपि

न सत् शशशृङ्गादिवदसदेवेत्यर्थः । **मध्यमशिक्षा**—शून्यवादिसकाशादभ्यासः । स्वविधेर्ब्रह्मणोऽपि क्षेपेण मिथ्यात्वापादकत्वेन निरस्तेत्यर्थ इति पूर्वोक्तार्थसङ्ग्रहः । ब्रह्म मिथ्या यथा कथञ्चित् व्यावृत्तत्वादिति वक्तुं शक्यत्वादिति भावः ॥ ५१ ॥

**व्यावर्तमानत्वानुमानभङ्गः**

---

**यत्स्यात्तत्सर्वदा स्याद्यदपि च न भवेत्तच्च न स्यात् कदाऽपि**
**क्वापि व्योमारविन्दादिवदिति यदि व्याहतेस्साध्यहेत्वोः ।**
**मध्ये सत्त्वं गृहीत्वा खलु तदुभयतोऽसत्त्वलिङ्गं गृहीतं**
**सामग्र्या चावधी द्वौ स्फुटतरविदितौ साऽपि तत्तत्प्रवाहात् ॥५२॥**

**सर्वार्थ०**—नश्वरत्वहेतावुक्तदोषमनिर्धारयतः कालपरिच्छेदसामान्यमुखेन मिथ्यात्वशङ्कामङ्कुरन्तीमुज्जिहीर्षुरुद्घाटयति—**यत् स्यादिति** । विवक्षितस्य हेतोरनादरप्रतिरोधाय प्रथममिहानुग्राहकोक्तिः । यत्क्वचित्काले स्यात् तत्कालान्तरेऽपि स्यात्; सत्स्वभावत्वे ब्रह्मण इव सामग्रीसहस्रेणाप्यसत्त्वापादनायोगात् । असत्स्वभावत्वे खपुष्पस्येव कालविशेषे सत्त्वापादनासंभवात् । तदिहानुग्राह्याभिप्रायेणाह—**यदपीति** ।

अयमत्र प्रयोगः—यत्प्रागूर्ध्वं चासत् तन्मध्येऽप्यसत्; यथा संप्रतिपन्नम्; विमतं च तथात्वान्मिथ्येति । अनयोस्तर्कानुमानयोराभासतामभिप्रेत्याह **नेति** । तर्के तावत्कालविशेषोपश्लिष्टं सत्त्वं प्रसञ्जनीयम्? उताविवक्षितकालविशेषं सत्त्वमात्रं वा? नाद्यः, स्वस्वरूपस्यैवाभावे स्वकालाभावात् तदवधिककालान्तरासिद्धेः तदुपश्लिष्टप्रसञ्जनीयबोधासंभवेन तत्प्रसङ्गायोगात् । न द्वितीयः, इष्टप्रसङ्गत्वात्, प्रसञ्जकैकदेशस्य प्रसञ्जनीयत्वायोगाच्च । अथ विशिष्टाङ्गीकारे विशेष्याङ्गीकारप्रसङ्गः, तच्च नास्ति बाधादित्याकूतम्; तदपि न; अन्यतो बाधादृष्टेः । एतेन तर्केण बाधमुज्जीव्येतत्सिद्धेरशक्यसंपादनत्वात् कुतश्चिदसत्त्वस्यासिद्धौ सत्त्वस्य प्रसञ्जनीयत्वायोगाच्चेति भावः । अनुग्राह्याभासत्वे विरोधं हेतूकरोति—**साध्यहेत्वोरिति** । एतत् लक्षणहेत्वोरितिवत् । अत्र हेतुसाध्ययोर्व्याहतिं विवृणोति—**मध्य इति** ।

**अयमाशयः**—कालविशेषासत्त्वं ह्यसिद्धं तावन्न लिङ्गं स्यात्, त्वयाऽपि तथाऽनभ्युपगमात् । तत्सिद्धिस्तु स्वकालेऽप्यसत्त्वं क्रोडीकृत्य वा? बहिष्कृत्य वा? पूर्वत्रासिद्धिरंशतस्साध्याविशेषश्च; स्वदेशकालासत्त्वात्मनो मिथ्यात्वस्य प्रचिख्यापयिषितत्वात् । उत्तरत्र स्वकालसत्त्वानुमतिलब्धजीवितेन हेतुना कथं सा प्रतिक्षिप्येत? तत्कालवर्तित्वबुद्ध्यपेक्षया प्रागुत्तरकालपरिक्लृप्तिरिति चेत्, न; नित्ययाऽपि धिया तत्कालवर्तित्वग्रहणोपपत्तेः । अनित्यबुद्ध्यपेक्षया प्रागूर्ध्वसमयसिद्धिरिति चेत्; बुद्धेस्तर्हि स्वकालसत्त्वमेष्टव्यम्, अन्यथा तदवधिकपूर्वोत्तरासिद्धेः । बुद्धिरपि बुद्ध्यधीनसिद्धिः, न तु वस्तुतस्सतीति चेन्न; अनित्यबुद्धिवन्नित्यबुद्धिरपि तथेति प्रसङ्गे निवारकाभावात् ।

किं चासौ स्वाधीनसिद्धिर्वा स्वेतरबुद्धयधीनसिद्धिर्वा? नाद्यः, अनित्यबुद्धेस्त्वया स्वयंप्रकाशतानभ्युपगमात्; अभ्युपगमे वा नित्यसत्यत्वप्रसक्तेः। न द्वितीयः; अन्यबुद्धया तत्स्वरूपसिद्धावनित्यबुद्धेर्नित्यभानंप्रसङ्गात्, ईश्वरबुद्धिवत् स्वकालवर्तिस्वप्रतिभासे स्वत एव सत्याया अनित्यबुद्धेः कालोपाधित्वप्रसङ्गात्। तत एव तदपेक्षः पूर्वोत्तरकालासत्त्वलिङ्गेन स्वोपजीव्यमध्यकालसत्त्वप्रतिषेधः प्रासादनिगरणप्रयासप्राय इति। अत्र सतोऽसत्त्वमसतस्सत्त्वं च दुस्साधमिति दुरभिमानमुन्मूलयति–सामग्र्येति। अपरोक्षप्रमितिसामग्र्येत्यर्थः। यद्वा जनिध्वंससामग्र्योपलक्षितौ पूर्वापरावधी प्रत्येकं समुदायतो वा यथावस्तु प्रत्यक्षसिद्धाविति वाक्यार्थः। तरपा पण्डितपृथुकतिर्यक्पर्यन्तदुरपह्नवत्वं सूच्यते। ततश्च निर्बाधस्फुटदृष्टापह्नवे वैभाषिकादिपरिभाषया ब्रह्मणोऽपि कालपरिच्छेदरहितत्वादेव खपुष्पकल्पत्वं प्रसज्यत इति भावः। ननु कालपरिच्छिन्नोत्पत्तिज्ञप्तिसामग्रीसिद्धावेवं वाच्यम्, सैव कुतस्त्येत्यत्राह साऽपीति। सामग्रीस्वरूपप्रवाहस्तत्बोधकप्रवाहश्चानादिरपर्यनुयोज्य इति भावः।

किंचानित्यत्वसत्यत्वे नानित्यं सत्यतां त्यजेत्।
तदसत्यत्वपक्षे तु नित्यत्वात्सत्यता भवेत्॥ ५२॥

---

आनन्द०—पूर्वसङ्गत्याऽऽह—नश्वरत्वेति। कालपरिच्छेदसामान्यमुखेनेति। कालविशेषे सत्त्वमात्रेणेत्यर्थः। क्वचित्काले स्यात् कालविशेषे यदि सदित्यर्थः। ननु प्रयोगस्य प्रतिज्ञापूर्वकत्वादत्र तदभावात् कथं प्रयोग इत्यत्राह—अयमत्रेति। यद्वोदाहरणादिकानिति मीमांसकाभिमतस्य पूर्वपक्ष्यभिमतत्वात् तथा प्रयोग उपपन्न इति भावः। कालविशेषोपश्लिष्टं स्वकालान्यकालसत्त्वमित्यर्थः। नाद्य इति। ननु स्वकालान्यकालसत्त्वं नापाद्यमपि तु भूतादिकालसत्त्वमिति न दोष इति चेन्न। भूतकालाद्युपाधेस्तत्काल एव सत्त्वाभावे स्वकालस्यापि भूतकालतया सिद्धसाधनम्। तत्काल एव सत्त्वे तत्रैव व्यभिचारः। एतेन सर्वकालसत्त्वमापाद्यमिति निरस्तम्। सर्वकालत्वं हि सर्वोपाध्युपहितकालत्वं, तेषामुपाधीनां प्रतिनियतत्वे तैरेव व्यभिचारः। प्रतिनियतत्वाभावे स्वकालस्यापि सर्वोपाध्यवच्छिन्नत्वात् सिद्धसाधनमिति भावः। प्रसञ्जकेति। प्रसञ्जकस्य यत्किञ्चित्कालसत्त्वस्य सत्त्वघटितत्वादिति भावः। प्रसञ्जकैकदेशत्वदोषपरिहारं शङ्कते—अथेति। कालविशेषसत्त्वाङ्गीकारे सत्त्वमप्यङ्गीकार्यम्, तच्च शक्यम्, सत्त्वस्य बाधितत्वादिति भावः। अन्यतः–तदनुग्राह्यादन्यतः। अनिष्टत्वरूपाशङ्काहानेराभासत्वमित्याह—कुतश्चिदिति। विशेष्यसत्त्वापादनमिष्टमिति भावः।

ननु साध्यहेत्वोरिति मूले निर्देशोऽनुपपन्नः, 'द्वन्द्वे घि' इति हेतुपदस्य पूर्वनिपातनियमादित्याशङ्कां मनसि निधाय 'लक्षणहेत्वोः क्रियायाः' इति सौत्रनिर्देशव्यभिचारचिह्नेन पूर्वनिपातशास्त्रस्यानित्यत्वावगमान्न दोष इत्याह—साध्यहेत्वोरित्येतदिति। ननु मध्ये सत्त्वग्रहणपूर्वकमेवासत्त्वं गृह्यताम्, कथं व्याहृतिरित्यत्राह—अयमत्राशयः

इति । ननु मिथ्याभूतमेवास्माभिर्लिङ्गत्वेनाभ्युपगम्यत इति कुतोऽसिद्धिर्दोषः स्यादित्यत्राह—त्वयाऽपीति । कालविशेषासत्त्वस्यासिद्धिस्सत्त्वमेव । तस्य त्वयाऽप्यभ्युपगमादित्यर्थः । स्वरूपासिद्धेर्दोषत्वाभ्युपगमेन साधकत्वानभ्युपगमादिति केचित् । स्वकालेऽप्यसत्त्वमिति । स्वकालासत्त्वे सति तदुत्तरकालासत्त्वं हेतुरित्यर्थः । अंशत इति । हेत्वेकदेशस्य स्वकालासत्त्वस्यासिद्धया विशिष्टस्यासिद्धिरित्यर्थः । अंशत इत्येतदुत्तरत्राप्यन्वेतीत्यप्याहुः । उत्तरत्रेति । स्वरूपेणासत्त्वस्य सिद्धतयोत्तरकालाद्यसत्त्वं वक्तव्यम् । कालस्योत्तरकालाद्यसत्त्वं वक्तव्यम् । कालस्योत्तरत्वं च तत्सत्ताकालापेक्षयेति तदुपजीविसत्ताको हेतुरित्यर्थः । ननूपजीव्यत्वं नास्ति सत्तायाः, किं तु तद्बुद्धेरेवेति शङ्कते—तत्कालेति । किं तद्बुद्धिर्नित्या विवक्षिता, यद्वाऽनित्येति विकल्पाभिप्रायेणाद्य आह—न नित्ययेति । तदवच्छिन्नत्वात् कालमात्रस्य तत्पूर्वोत्तरकालासिद्धिरित्यर्थः । द्वितीयं शङ्कते—अनित्येति । अंशतो बाधं व्यभिचारं चाभिप्रेत्याह—बुद्धेरिति । बुद्धिरपीति । तथा च न बाध इति भावः । तस्य नित्यबुद्धिर्दुष्टा, तेन बुद्धित्वादिहेतुना ब्रह्मरूपनित्यबुद्धेरपि स्वतः सत्त्वाभावेन साऽपि सती न स्यादित्याह—अनित्येति । बुद्धिरपि बुद्धयधीनसिद्धिरित्येतद्विकल्पयति—किं चेति ।

स्वयंप्रकाशतानभ्युपगमादित्यत्र प्रकाशताया अभ्युपगम इति षष्ठीसमासो न सम्भवति 'उभयप्राप्तौ' इति विहितषष्ठ्याः 'कर्मणि च' इति निषेधादिति चेत्, न । शेषषष्ठ्यास्समाससंभवात् । यदा कर्मविवक्षा तदोभयप्राप्ताविति नियमात्तदविवक्षायां शेषत्वविवक्षासम्भवात् । ननु शेषत्वविक्षा न संभवति 'अधीगर्थदयेशां कर्मणि' इत्यादिभिर्नियमादिति चेन्न । महाभाष्य एव माषाणामश्नीयादित्यादिप्रयोगनिर्वाहात् । न च 'अधीगर्थ' इत्यादिवैयर्थ्यम्, समासनिषेधार्थत्वात् । यद्वा करणत्वविवक्षायां तृतीयेति नानुपपत्तिः । अभ्युपगमे चेति । स्वयंप्रकाशत्वस्य सत्यताव्याप्तिस्त्वयाऽप्यभ्युपगतेति भावः । नित्यभानप्रसङ्गादिति । बुद्धेः सार्वकालिकत्वात्तदवधिकत्वं वक्तुं न शक्यमित्यर्थः । ननु तद्बुद्धेर्नित्यत्वेऽपि यत्कालवर्तित्वं प्रतिभासाविषयस्तदवधिकस्स्यादित्याशङ्क्य परिहरति । स्वकालेति । तत्काले सत्त्वस्य बाधकाभावेन साधकसत्त्वादिति भावः । उपसंहरति—तत एवेति । बाधित इति भावः ।

नन्वपरोक्षसामग्रीपरत्वे व्यवहितान्वयः स्फुटतरः वेदनस्योपादानं चानपेक्षितमिति तत्सामग्रीपरत्वमयुक्तमित्यभिप्रायेणाह—यद्वेति । प्रत्येकं जनिसामग्र्युपलक्षितपूर्वावधिः ध्वंससामग्र्युपलक्षितपरावधिश्च ज्ञायेते मिलितौ वेत्यर्थः । कालपरिच्छेदरहितं तुच्छमिति वैभाषिका ऊचुरित्याह—वैभाषिकेति । किं च नित्यत्वस्यापि पक्षान्तर्भावोऽस्ति न वा, न चेत् तस्य सत्यत्वात् तत्र हेतोर्व्यभिचारः । तदाश्रयस्यापि सत्यत्वनियमेन बाध इत्याह—किं चेति । आद्य आह—तदसत्यत्व इति । अनित्यत्वं हि नित्यत्वाभावः तस्यासत्यत्वं नित्यत्वं, तथा च मिथ्यात्वसाधनव्यापारेण विनायकसृष्टौ व्यापृतस्य मर्कटसृष्टिपर्यवसानवत् सर्वनित्यत्वपर्यवसानात् साधु समर्थितमद्वैतमिति भावः ॥ ५२ ॥ अनित्यमिथ्यात्वक्लृप्तिपरिहारः ।

आम्नायस्यापि शक्तिर्न खलु गमयितुं स्वोपजीव्यप्रतीपं
यूपादित्यैक्यवाक्यप्रभृतिरितरथा नोपचारं भजेत।
अक्षाम्नायः स्वपूर्वापरविहतिभयान्नेति नेत्यादिवाक्यं
वैलक्षण्यादिमात्रं प्रथयति भुवनाद्ब्रह्मणो विश्वमूर्तेः ॥ ५३ ॥

**सर्वार्थ०**—माभूदनुमानम्; नित्यनिर्दोषनिगमवाक्यगणैरेव निर्विशेषस्वप्रकाशसच्चिदानन्दब्रह्मव्यतिरिक्तसर्वमिथ्यात्वसिद्धिः स्यादित्यत्राह—आम्नायस्येति। अयं भावः—प्रत्यक्षमुपजीव्यानुमानस्य, ते उभे उपजीव्य शास्त्रस्य च प्रवृत्तिः, तच्चेते बाधेत, अनुमानेऽपि कालात्ययापदिष्टकथैव न स्यात्; तथा च बाधाभावे कथं दूष्यदूषणव्यवस्थेति कथात्रयोच्छेदः। ननु पदपदार्थादिस्वरूपमात्रं शास्त्रस्य प्रत्यक्षादुपजीव्यम्, अनुपजीव्यं तु तत्सत्यत्वं प्रमाणाभासभासितं शास्त्रेण बाध्येत; मैवम्; न हि जगत्सत्यत्वग्राहिणः प्रमाणाभासत्वमितः पूर्वं सिद्धम्। ततश्च तदाभासत्वसिद्ध्या शास्त्रेण तद्बाधः, तेन च सेति मिथस्संश्रयः स्यात्। अस्त्वाम्नायत्वमेव प्राबल्यकारणमित्यत्रातिप्रसङ्गमाह—यूपादित्येति।

ननु आदित्यो यूप इत्यादेराम्नायस्य कर्मविधिशेषतयाऽन्यपरत्वाद् दुर्बलतया प्रत्यक्षानुविधानेन वृत्त्यन्तरस्वीकारः, इह तु तत्त्वावेदकवाक्यस्यातत्परत्वासंभवात् प्रत्यक्षादिबाधकत्वं युज्यते। हन्त, किं क्रियाशेषत्वमेव मन्त्रार्थवादानां स्वार्थप्रहाणकारणम्? तथा सत्यतिप्रसङ्गात्। तावता त्वन्यार्थं स्वार्थबोधनं सिध्येत्। क्वचिच्च स्वार्थप्रहाणं बाधादेव; न त्वन्यशेषत्वात्। तथैव हि लोके वेदे च स्तुत्यादेर्दृष्टिः, अनन्यपरेष्वपि ब्रह्म वनं ब्रह्म स वृक्ष आसीदित्यादिष्वर्थासंभवे भाक्तो निर्देशः। ननु जगद्ब्रह्मसामानाधिकरण्येऽपि स्वरूपैक्यविरोधात् बाधार्थतयोपचारः स्यात्, तन्न; श्रुतिस्मृतिशताबाधेन संभवन्त्यां गतौ विपरीतलक्षणाङ्गीकारायोगात्। व्याप्तिविशेषापेक्षया च सामानाधिकरण्यं व्यज्यते; स भूमिं विश्वतो वृत्त्वा, अत्यतिष्ठद्दशाङ्गुलम्, पुरुष एवेदं सर्वम्, सर्वं समाप्नोषि ततोऽसि सर्वः, सर्वगत्वादनन्तस्य स एवाहमवस्थितः इत्यादिषु। अत एव ब्रह्मैवेदं सर्वम् आत्मैवेदं सर्वम् यत्र त्वस्य सर्वमात्मैवाभूदित्याद्याः सावधारणनिर्देशाश्चाब्रह्मात्मकत्वनिषेधाभिप्रायाः। तथा च नेह नानाऽस्ति किञ्चनेत्यादिकमपि गतार्थम्। इदं च वाक्यं यदि ब्रह्मणि नानात्वं प्रतिषेधेत्; तदा ब्रह्मैकत्वसिद्धौ का कथा तद्गुणविभूतिनिषेधस्य? अथ भावप्राधान्यानाञ्जस्यं किञ्चनेति पदवैयर्थ्यं च मत्वा नानाभूतं किञ्चन वस्तु ब्रह्मणि नास्तीति युज्येत, तथाऽपि न जगन्निषेधः; ब्रह्मण्यविद्यमानानामपक्षयविनाशरूपवर्णादीनामिव स्वाधारेषु निराधारतया वा वृत्त्युपपत्तेः। बहुव्यापिनि सर्वाधारतया चाधिगते ब्रह्मणि नास्ति किञ्चनेति निषेधात् तन्मिथ्यात्वे तात्पर्यं गम्यत इति चेत्, तथा सति नेदं किञ्चनास्तीत्येतावद्वक्तव्यम्। अधिकरणोक्तिस्त्वजागलस्तनायेत।

अथ प्रपञ्चे नानात्वं नास्ति नानाभूतं नास्तीति वा प्रतिपाद्येत, तथाऽपि न प्रपञ्चस्वरूपबाधः, तन्नानात्वनिषेधे वाक्यप्रवृत्तेः। तत्र दृष्टश्रुतविरोधपरिहृत्यै विश्वस्य

ब्रह्मात्मकत्वादिसाधर्म्यविधौ वा जडपण्डितशत्रुमित्रादिवैधर्म्यदृष्टिनिषेधे वा तात्पर्यं स्थापनीयम्। इयं च गतिः एकधैवानुद्रष्टव्यः विद्याविनयसम्पन्ने, सुहृन्मित्रार्युदासीनेत्यादिभिरनुगृह्यते। अत ईदृशेषु सर्वेषु वाक्येष्वेवं सर्वाविरुद्धः कश्चिदर्थस्समर्थनीय इत्यभिप्रायेण अथात आदेशो नेति नेति' 'न ह्येतस्मा'दिति 'नेत्यन्यत्परमस्ती'ति वाक्यं तावदविरुद्धार्थविषयं साधयति—अक्षेति। प्रत्यक्षग्रहणमनुमानस्याप्युपलक्षणम्। आम्नायशब्दः इह श्रुत्यन्तरपरः। अत्र 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव चे'त्यादि पूर्ववाक्यम्। अथ नामधेयं सत्यस्य सत्यमित्यादि पश्चिमम्; तदिह प्रत्यक्षानुमानश्रुत्यन्तरपूर्वापरविरोधभीत्या मध्यमं नेति नेतीत्यादिवाक्यं ब्रह्मगुणविभूतिविग्रहाद्यबाधेन ब्रह्मण्येवानुक्तातिशयान्तरपरं नेतव्यम्। ततश्च लोकदृष्टप्रकारवैलक्षण्यार्थमिह केचिदाहुः। अन्ये तु इति नेति व्यवहारेणेतोऽधिकं किञ्चिदस्तीति निर्देष्टव्यं नास्तीति। प्रकृतैतावत्त्वसूत्रभाष्योक्तमिहादिशब्दसंगृहीतं ब्रूमः। पूर्वप्रदर्शितप्रकारमात्रयोगाद् ब्रह्मणः प्रकृतमेतावत्त्वं नेति नेतीत्यादिवाक्यं प्रतिषेधतीति। ब्रह्मणो विश्वमूर्तेरिति पदाभ्यां धर्मिग्राहकप्रसिद्धगुणविभूत्यादिप्रकर्षः प्रख्याप्यते ॥ ५३ ॥

---

आनन्द०—आक्षेपसङ्गत्याऽऽह—मा भूदिति। ननु प्रसक्तिसापेक्षस्यापि निषेधस्य प्रसक्तिबाधकत्वमदृष्टमिति कथं न गमकत्वमागमस्येत्यत्राह—अयं भाव इति। ते प्रत्यक्षानुमाने। वह्निरनुष्णः पदार्थत्वादित्यनुमानेन प्रत्यक्षस्य बाधप्रसङ्गेन बाधहेत्वाभासो न स्यादित्याह—अनुमानेऽपीति। तथा च बाधाभाव इति। अनुमाने बाधस्य दोषत्वाभावे तुल्यन्यायेन तदधीनव्यभिचारादीनामपि दोषत्वाभावात् सर्वमदुष्टमेवेति वादजल्पवितण्डात्मककथात्रयस्यापि दूष्यदूषणव्यवस्थाधीनस्य उच्छेदस्स्यादित्यर्थः। ननु सत्वग्रहप्रत्यक्षस्य न श्रुत्युपजीव्यत्वमिति शङ्कते—नन्विति। यद्यप्यसत्त्वेन ज्ञानस्य बोधकत्वमयुक्तम्, लिङ्गादौ तदभावात्। तथाऽप्यभ्युपेत्य समाधत्ते—मैवमिति। तुल्यत्वादिति भावः। ननु तात्पर्यवती श्रुतिः प्रत्यक्षाद्यपेक्षया प्रबलेति न यूपादित्यवाक्यसाम्यमिति शङ्कते—नन्विति। अन्यशेषत्वेऽपि तदनुगुणतया स्वार्थेऽपि तात्पर्यमस्त्येव। 'व्रीहीन्प्रोक्षति' इत्यादेरिष्टिविधिशेषत्वेऽपि स्वार्थपरत्वदर्शनात्। देवताविग्रहादिवाक्यै रर्थवादैर्विग्रहादिस्वीकारात् 'यन्न दुःखेन' इत्यादिभिश्च फलस्वीकाराच्चान्यशेषत्वं न स्वार्थत्यागकारणमित्याह—हन्तेति। लोके गङ्गायां घोष इत्यादौ। वेदे 'ग्रावाणः प्लवन्ते' इत्यादौ। आदिशब्देनैन्द्रमन्त्रः कृष्णलं श्रपयेत् इति विधिवाक्यं च सङ्गृह्यते। अनन्यपरेष्वपीति। तत्र भवन्मते बाधार्थपरत्वमभ्युपगम्यते; तदङ्गीकारे जडाजडयोरैक्यबाध एव बीजम्। तथा 'तत्त्वमसि' इत्यत्र स्वरूपलक्षणायां च। तथा च तात्पर्यवत्त्वेऽपि प्रत्यक्षविरोधे दौर्बल्यमित्यर्थः। ननु तर्हि त्वन्मतेऽपि 'सर्वं खलु' इत्यादिस्थले सर्वत्रान्यपरत्वस्यावश्यकत्वे बाधार्थसमानाधिकरण्यमेवाभ्युपगम्यतामित्याशङ्कते—नन्विति। बाधभिया स्वार्थं परित्यज्यान्यथार्थस्वीकारो यत्र तत्र स एव बाधः कथं स्वीकर्तुं शक्य इत्यत्राह—तन्नेति।

अन्यथा गङ्गायां घोष इत्यादौ घोषाद्यभावपरत्वं स्यादिति भावः। रक्तं वस्त्रं नीलं वस्त्रमितिवदपृथक्सिद्धसम्बन्धेन सामानाधिकरण्यं मुख्यमेवेति न मुख्यार्थत्यागोऽपीत्यभिप्रायेणाह - व्याप्ति विशेषेति।

**तथा चेति।** नानाशब्दस्यासाहित्यवाचकत्वात् जगति ब्रह्मासहभूतं वस्तु नास्ति, सर्वस्य तदात्मकत्वादित्यर्थः। किं चानेन वचनेन किं नानात्वं निषिध्यते, उत नानाभूतं वस्त्विति विकल्पमभिप्रेत्याद्य आह—**इदं चेति।** द्वितीयं शङ्कते—**अथेति।** अधिकरणेति। इहेत्युक्तिरित्यर्थः। **तत्रेति।** प्रत्यक्षादिभिर्भेदस्य प्रतिपन्नत्वात्तदविरुद्धपरत्वस्य वक्तव्यत्वादिति भावः। निषेधस्वारस्यादाह—**जडेति।** अनन्तरोक्तार्थे उपष्टम्भकमाह—**इयं चेति।** एवकारेण वैषम्यबुद्धिनिषेधः। 'विद्याविनय'इति 'पण्डिताःसमदर्शिनः' इति वैषम्यदर्शननिषेधे तात्पर्यादिति भावः। श्रुत्यन्तरं 'नित्यो नित्यानां' 'पृथगात्मानं' इत्याद्यम्। पूर्वापरस्थवाक्येनापि 'नेति नेति'इति वाक्यस्य न मिथ्यापरत्वमित्याह—**पूर्वापरेति।** **ततश्चेति।** नेति नेतीति लौकिकप्रमाणगम्याद्विलक्षणमित्यर्थः। **केचित्त्विति।** एतस्मात्परं वस्तु नास्तीति वाक्यार्थः। स्वाभिमतार्थमाह—**प्रकृतैताव-दिति।** सूत्रार्थमाह—**पूर्वप्रदर्शितेति** ॥५३॥

### निषेधश्रुतीनां प्रत्यक्षादिविरुद्धप्रतिपादकत्वानुपपत्तिः

**प्रत्यक्षेणैव पुंसां भवति दृढतरो देह एवात्ममोहो**
**ज्वालैक्यप्रत्यभिज्ञाद्युभयमपि च तद्बाध्यते ह्यागमाद्यैः।**
**तस्मादक्षादिसिद्धं श्रुतिभिरपि जगद्बाध्यतामित्ययुक्तं**
**सन्देहार्हेषु शक्तं यदिह न खलु तद्दोषदूरेष्वपि स्यात् ॥ ५४ ॥**

**सर्वार्थ०**—ननु प्रत्यक्षस्य प्रत्यक्षान्तरेणेव परोक्षेणापि बाधस्तत्रतत्र संमतः, तद्वदिहापि स्यादिति शङ्कते—**प्रत्यक्षेणेति** ॥ अस्ति हि मनुष्यत्वस्थूलत्वादिविशिष्टे पिण्डे तिरश्चामिव विपश्चितामप्यात्मत्वाभिमानः; तत्र चामोक्षादसमाहितदशायां जाग्रतः स्वपतो वा दर्पणतलदत्तदृष्टेरिव सामग्रीसामर्थ्यादनिच्छतोऽपि देहविभ्रमे बाधितानुवृत्तिरित्यभिप्रायेण दृढतरशब्दः। अस्य ज्वालैक्यप्रत्यभिज्ञायां विपरिणतानुषक्तिः; अपिः प्रत्यक्षस्य बाध्यत्वसंभावनार्थः; चकारश्चन्द्रसूर्यपरिमाणाल्पत्वादिभ्रमाकारसंग्रहार्थः। आगमाद्यैरित्यनेनानुमानवत्परेष्टमर्थापत्त्यादिकमपि गृह्यते। अत्र देहात्मबोधस्यानुमानागमाभ्यां ज्वालैक्यग्रहस्य चानुमानेन बाधः। एवं निदर्शितमर्थं प्रकृते निवेशयति—**तस्मादिति।** विषमो दृष्टान्त इत्यभिप्रायेणाह—**इत्ययुक्तमिति।** **सन्देहार्हेष्विति।**

अयं भावः—क्षेत्रभूषणादिनयात् मम देह इति व्यतिरेकप्रत्ययस्तावद् दुरपह्नवः। ममात्मेत्येतत्तु घटस्यात्मेतिवत् स्वरूपपरमिति सर्वसंमतम्। वीतरागजन्मादर्शनादिभिश्च देहात्मभेदस्संभाव्यते। अतस्तप्तायःपिण्डादिन्यायात् भ्रमहेतु-

संसर्गविशेषवति द्रव्यद्वये स्थौल्यचैतन्यादिगुणव्यतिहारधीः स्यादिति शङ्काकलङ्कितस्तत्तद्देहात्मबोधस्सर्वेषां सर्वदा संभवन्नपि नित्यनिर्दोषनिगमजन्यधिया न्यक्कारमर्हति। ज्वालैक्यधोरप्यदृष्टनिर्वापणस्य पुनरारोपितदीपेऽपि संभवात् सादृश्यसादेश्यभेदाग्रहादिप्रसूतेति लैङ्गिक्या धिया नियम्येत। चन्द्रसूर्यपरिमाणाल्पत्वादिबोधेष्वपि दूरत्वादिदोषसंप्रतिपत्त्याऽनन्यथासिद्धानुमानागमसिद्धया बुद्धया बाधः साधीयान्। इह तु तत्तत्प्रमाणदोषत्वेन संभावितानां सर्वेषामसिद्धेर्न शास्त्रबाध्यत्वं संभाव्यमिति ॥ ५४ ॥

---

**आनन्द०**—पूर्वाक्षेपेण सङ्गतिमाह—**नन्विति**। **असमाहितदशा**—असमाधिदशा। **स्वपतः**—स्वप्नावस्थस्य। ननु विरोधिज्ञाने जाग्रति विपश्चितां कथं भ्रम इत्यत्राह—**दर्पणतलेति**। औपाधिकस्य विशेषदर्शनानिवर्त्यत्वादिति भावः। **अस्येति**। दृढतरशब्दस्य दृढतरेति स्त्रीलिङ्गतया विपरिणतस्यानुषक्तिरित्यर्थः। **अर्थापत्तिः**—दृग्दृश्यसम्बन्धानुपपत्तिः। **आदिशब्देन** मिथ्यात्वसाधकतर्कसङ्ग्रहः। ननु सन्देहार्हत्वमेव न संभवति, निश्चयस्य सत्त्वात्। यदि निश्चयेऽपि तद्योग्यता स्यात्तर्हि प्रत्यक्षस्यापि सत्यग्राहिणस्सत्त्वेऽपि तथा स्यादिति बाधस्स्यादित्यत्राह—**अयं भाव इति**।

ननु मम देह इति बुद्धिरयुक्तैव स्थूलोऽहमित्यभेदधियः सत्त्वात्। न चाप्रामाण्यशङ्का, तथासत्यन्यतोऽप्रामाण्यसन्देहेऽनया शङ्काकलङ्कितत्वकथनासङ्गतेः। किं चाप्रामाण्यशङ्काकलङ्कितत्वेऽपि न विपरीतप्रत्यक्षसंभवः, विपरीतप्रत्यक्षे विद्यमाने तदयोगात्। अन्यथाशीतप्रत्यक्षकाल एव शैत्यप्रत्यक्षमपि स्यात्। किं च तथाभूतप्रत्यक्षेणेव बाधितत्वात् किं शास्त्रबाधनेनेति चेत्। अत्राहुः—प्रत्यक्षस्य न तावत् साक्षाद्विरोधः, स्थौल्यावच्छेदेनाभेदप्रतीतिः, भेदबुद्धिस्तु देहत्वावच्छेदेन। तथा चावच्छेदकभेदान्न विरोधः। यथेदंत्वावच्छेदेन रजताभेदग्रहेऽपि शुक्तौ रजतं नेति, यथा वा रजतत्वेन पुरोवर्त्यभेदग्रहेऽप्यापणस्थरजतत्वेन तद्भेदग्रहः। ननु तथाऽपि स्थौल्यनिषेधः कथं स्यात्प्रत्यक्षप्राबल्यस्य भवद्भिरुक्तेरिति चेत्। अत एव देहेन संसृष्टत्वादात्मनोऽयःपिण्ड इव वह्निगतलौहित्यं देहगतस्थौल्यमात्मनि भासते स्वगतं वेति सन्देह उपन्यस्त इति शास्त्रेण तस्य बाध इति। केचित्तु—अहंत्वाश्रये स्थौल्याध्यासात्तदवच्छिन्नभेदो मा ग्राहि देहत्वावच्छिन्नभेदो गृह्यत एव, प्रतियोगितावच्छेदकरूपभेदाभावग्रहादिति वदन्ति। **ममात्मेति**। वस्तुतोऽत्र ममशब्दार्थात् आत्मशब्दार्थस्य भेदोऽस्त्येव। ममशब्दः शरीरविशिष्टपरः तदेकदेशत्वादात्मनः, यथा वनस्य वृक्ष इति ध्येयम्।

**वीतरागेति**। जातस्सर्वोऽपि स्तन्यप्रवृत्त्या सराग एव; रागश्च जन्मान्तरसंस्कारोद्बोधात्। जन्मान्तरयोगश्च देहातिरिक्तस्यैवेति भावः। "यो मे हस्तादि" इत्युक्त **आदिशब्दार्थः**। नन्वात्मनि स्थौल्याध्यासे देहभेदग्रहोऽस्तु; देहे अहंत्वाध्यासे कथमित्यत्राह—**अतस्तप्ताय इति**। **चैतन्यं** आत्मत्वम्। **न्यक्कारः**—प्रामाण्यनिश्चयः। परोक्षज्ञानबाध्यापरोक्षान्तराणामपि न दृष्टान्ततेत्याह—**ज्वालैक्यधीरिति**। तत्र संभावितदोषत्वेनाप्रामाण्यशङ्काकलङ्कितत्वात्परोक्षेण बाधो युक्त इति भावः। दार्ष्टान्तिके वैषम्यमाह—**इह त्विति** ॥ ५४ ॥ **परोक्षबाध्यत्वयोग्यायोग्यप्रत्यक्षविभागः**

प्रत्यक्षं दोषमूलं श्रुतिरिह न तथा पौरुषेयत्वहाने-
स्तस्मात्सा बाधिकाऽस्येत्यसदखिलधियामन्ततो दोषसाम्यात् ।
शास्त्रस्यापि ह्यविद्याप्रभृतिभिरुदयस्संमतस्त्वन्मतस्थै-
स्तस्यानाविद्यभावे न हि निखिलभिदापह्नवश्शक्यशङ्कः ॥५५॥

**सर्वार्थं०**—पुनः प्रत्यक्षादेर्निर्दोषत्वमसिद्धमिति शङ्कते—प्रत्यक्षमिति ॥ अयं भावः—विगीतं प्रत्यक्षं दोषमूलं प्रत्यक्षत्वात् द्विचन्द्रादिप्रत्यक्षवत् । अत एव तन्मूलस्यानुमानस्यापि दोषमूलत्वं सिद्धम् । श्रुतिस्तु न तथा; सर्वेषु कल्पेषु एकरूपतयैव श्रूयमाणतया पौरुषेयत्वासंभवे वक्तृदोषप्रसङ्गाभावात्, इह च तद्वेद्ये ब्रह्मणि भेदनिषेधे वाऽनन्यगोचरत्वेन तात्पर्यस्थापनात् । अतस्सा श्रुतिरस्य प्रत्यक्षस्य बाधिकेति । तदेतत् प्रत्याचष्टे-इत्यसदिति । स्वव्याघातादिदोषादिति भावः । अभिप्रेतं विवृणोति—अखिलधियामिति ।

अयं समाधिः—प्रत्यक्षत्वादिति स्वप्रकाशप्रत्यक्षेऽपि वृत्तेरनैकान्तिकम् । अथानित्यप्रत्यक्षत्वादिति विशेष्येत, तथाऽपि स्वाभीष्टध्यानजन्ये शब्दजन्ये वा परब्रह्मप्रत्यक्षे तद्वृत्तिस्सिद्धा । तत्रापि दोषमूलत्वाभ्युपगमे कथं तत्त्वसाक्षात्कारसिद्धिः ? दोषमूलादपि तत्सिद्धावतिप्रसङ्गः । दुष्टप्रत्यक्षमूलतया चानुमानस्यापि बाध्यत्वं दुर्वचं स्यात् । यदि च प्रत्यक्षत्वमात्रेण पृथिव्यादिस्वरूपप्रत्यक्षस्य दोषमूलत्वम्, बोधकत्वादेव ब्रह्माद्वैतवाक्यानामपि किं नैतत्स्यात् ? वाक्यदोषत्वेन सम्प्रतिपन्नं किञ्चित्तत्र न दृश्यत इति चेत्; समानमेतद्विमतेऽपि प्रत्यक्षे; अतिरिक्तदोषानुमानस्य तु वाक्येऽपि कः प्रत्यूहः ? भेदवासनाख्यो दोषः प्रत्यक्षे प्रसिद्ध इति चेन्न । शब्देऽपि तस्यास्तद्वत् प्रसिद्धत्वात् । न ह्यत्र प्रकृतिप्रत्ययपदवाक्यपदार्थवाक्यार्थादिविकल्पान् वासनानपेक्षानभिमन्यध्वे । न च द्विचन्द्रादिवासनानां वासनात्वादेव दोषत्वम्; किन्तु भ्रान्तिमूलत्वात् । अतोऽभिन्नेष्वेव भेदवासना दोषः, अयथार्थस्मृतिहेतुत्वात् । अन्यथा ह्यद्वैतवासनाया अपि दोषत्वप्रसक्तिः । प्रत्यक्षे तु वासना भ्रान्तिप्रसूतैवेति चेत्; न, वासनाया दोषत्वसिद्धौ तद्धेतोरनुभवस्य भ्रान्तित्वसिद्धिः; ततश्च तत्सिद्धिरिति मिथस्संश्रयात् ।

एतेन भेदधीजनकत्वाद्वासनाया दोषत्वमित्यपि प्रत्युक्तम्; पृथिव्यादिभेदधियां भ्रान्तित्वसिद्धौ तज्जनकवासनाया दोषत्वम्, ततश्च तदिति । तत्त्वावेदकवाक्यबाधितत्वात् भेदधियां भ्रान्तित्वे सिद्धे ततस्तद्धेतोर्दोषत्वक्लृप्तौ नान्योन्याश्रय इति चेन्न; प्रत्यक्षस्य वासनाख्यदोषमूलत्वे सिद्धे वाक्यस्य तद्विरुद्धतत्त्वावेदकत्वम्; ततश्च भेदधियां भ्रान्तित्वम्, तत एव तद्धेतुवासनाया दोषत्वम्; ततः प्रत्यक्षस्य दोषमूलत्वमिति चक्रकापत्तेः, पर्वसंकोचेन मिथस्संश्रयो वा । प्रत्यक्षं सर्वं भेदवासनामूलमित्यपि निर्विकल्पके दुर्वचम्, तस्य त्वयापि संस्कारजन्यत्वानभ्युपगमात् । अस्ति च शब्दानुगमवादिनामप्यवासनाधीनं प्रथमाक्षसन्निपातजं प्रत्यक्षम्, तत्कल्पितयोश्शब्दविवर्तपरिणत्योस्संस्कारापेक्षप्रकाशत्वात् ।

अस्तु सर्वजननी मायैव निर्विकल्पके दोष इति चेन्न, वाक्यतज्जन्यज्ञानयोरपि तदपत्यभेदत्वादिति । तदिदमाह—शास्त्रस्यापीति । प्रभृतिशब्देन भेदवासनां तन्मूलभेदभ्रमं च गृह्णाति ।

अतः प्रत्यक्षमात्रस्य दोषमूलत्वकल्पना ।
निर्दोषज्ञप्तिसद्भावं न सहेतेति निश्चिनु ।

अथ शास्त्रस्य ब्रह्मवदविद्यावच्चानादित्वादविद्यामूलत्वं नास्तीति मुग्धाद्वैतिमतमनूद्य दूषयति—तस्येति । तत्र शास्त्रस्यादोषकल्पितानादिभावत्वात् ब्रह्मवदविद्यातद्विवर्तान्यतया च सत्यत्वप्रसक्तौ स्वाभिमतमद्वैतं भज्येतेति भावः ॥५५॥

---

आनन्द०—आक्षेपसङ्गत्याऽऽह—पुनरिति । ननु प्रत्यक्षं दोषमूलमित्ययुक्तं हेत्वभावात्, अविद्यामूलत्वं त्वसिद्धं, सिद्धौ वा श्रुतिसाधारण्यमित्यत्राह—अयं भाव इति । ननु निर्दोषत्वेन बाधकत्वे यूपादित्यवाक्यादपि प्रत्यक्षबाधः स्यादित्यत्राह—इह चेति । तात्पर्यवती श्रुतिर्बलवती । यूपादित्यवाक्यस्य त्वर्थवादत्वान्न तात्पर्यवत्त्वमिति भावः । नन्वखिलधियां कथं दोषसाम्यं श्रुतीनां तदभावादित्यत्राह—अयं समाधिरिति । ध्यानजन्ये शब्दजन्य इति । मतभेदेन कैश्चिद्ध्यानजन्यब्रह्मगोचरमानसप्रत्यक्षस्य स्वीकारात् कैश्चिच्छाब्दापरोक्षस्य स्वीकारात् । दोषमूलादपीति । दोषरूपकारणादित्यर्थः । दोषजन्यस्यापि तत्त्वगोचरत्वे भेदप्रत्यक्षस्यापि तथेति बाधो न स्यादिति भावः दोषेति । दुष्टप्रत्यक्षत्वमेव दोषः तन्मूलतया ह्यनुमानस्य बाध्यत्वं ब्रूषे तन्न स्यादित्यर्थः । आभाससाम्यमाह—यदि चेति । ननु संप्रतिपन्नातिरिक्तमनुमास्यत इत्यत्राह—प्रत्यक्ष इति । न ह्यत्रेति । सर्वेषामपि भेदगोचरत्वादिति भावः । ननु वासनात्वेनादोषत्वाद्वाक्यादिमूलानां वासनात्वेऽप्यदोषत्वमिति शङ्कते—भ्रममूलत्वादिति । भ्रमजन्यत्वात् भ्रमजनकत्वाच्चेत्यर्थः । अयथार्थस्मृतिहेतुत्वात् प्रत्यक्षे तु वासना भ्रान्तिप्रसूतेवेति चोक्तेः । तद्धेतोरनुभवस्य भ्रान्तित्वसिद्धिरित्युपलक्षणम्, तज्जन्यस्मृतेरपि भ्रान्तित्वसिद्धिरिति द्रष्टव्यम् । भेदधीजनकवासनाया दोषत्वमित्यत्र अतत्त्वमेव दोषत्वप्रयोजकं, उत भेदधियोऽपि भ्रान्तित्वात्तज्जनकत्वमिति विकल्पे प्रथमे भेदधीजनकवासनाया एव तत्त्वेन जनकत्वं किमिति नोच्यत इत्यत्र नियामकाभावेन निरस्ते द्वितीयं दूषयति—पृथिव्यादिभेदधियामिति । शङ्कते—तत्त्वेति । पर्वसंकोचेनेति । भेदधियां भ्रान्तित्वे सिद्धे वाक्यस्य तत्त्वावेदकत्वं, तत्त्वावेदकत्वे भ्रान्तित्वमित्यादिक्रमेणेत्यर्थः । जन्यत्वविशेषणेऽपि व्यभिचारमाह—प्रत्यक्षमिति । तस्य वासना जन्यत्वे निर्विकल्पकत्वं न स्यात्, स्मृतिवदिति भावः । ननु—

"न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ॥"

इति ये वदन्ति, तन्मतानुसारेणेदमनुभानं स्यादित्यत्राह—अस्ति चेति । शाब्दास्त्वेवमाहुः—

"वस्तुस्फोटः स एकोऽस्मिन् प्रपञ्चः प्रतिभासते ।"

इति। तत्र सर्वप्रपञ्चोऽध्यस्तो भासत इत्येकः पक्षः। तस्यैव परिणाम इत्यपरः। उभयत्रापि स्फोटे ध्वनिगोचरसाक्षात्कारस्य वासनानिरपेक्षत्वात् व्यभिचार इत्यर्थः। 'न सोऽस्ति' इत्यादिनियमेऽपि श्रौत्रे प्रत्यक्षे वासनानपेक्षत्वादिति भावः। तत्कल्पितयोरिति। वासनाया विवर्ते परिणामे च सहकारितया प्रकाशहेतुत्वादिति भावः। तदपत्यभेदत्वादिति। अविद्याजन्यत्वाद्वेदान्तानां तत्त्वावेदकत्वं भज्येतेति भावः। उक्तमर्थं कारिकया संगृह्णाति—अतः प्रत्यक्षेति। अनाविद्यभाव इति मूलम्—आविद्यं अविद्याधीनं तन्न भवतीत्यर्थः॥ ५५॥

### शास्त्रप्रत्यक्षयोर्दोषसाम्यापादनम्

---

दोषोत्थत्वाविशेषे न हि भवति परं पूर्वबाधप्रगल्भं
दोषज्ञानं तु माभूदविदुषि पुरुषे वस्तुतस्त्वन्यथा तत्।
निर्दोषत्वाभिमन्तृस्वसमयिमतिभिः किं न मिथ्याकृतान्ताः
प्रा[बल्यं]गल्भ्यं चेन्निषेधः पर इति मुखरं तुर्यबौद्धस्य तूर्यम्॥५६॥

सर्वार्थ०—अत्र कैश्चिदनाकलिततर्कतन्त्रगतिभिः प्रपञ्चलुण्टाकैरेवं प्रत्यवस्थितम्—दोषमूलत्वाविशेषेऽपि परत्वादद्वैतवाक्यजन्यं ज्ञानं प्रत्यक्षस्य बाधकम्; पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यतीति न्यायात्; न चाविशेषः परस्य बाधकत्वं प्रतिरुन्ध्यात्, प्रमाणत्वाविशेषेऽप्युद्गातृप्रतिहर्त्रपच्छेदयोर्युगपदुभयसंभवे परस्य नैमित्तिकशास्त्रस्य बाधकत्वस्थापनात्; अपैति च रज्जुसर्पभीतिः कस्यचिदनाप्तवाक्येनापि; अतश्शास्त्रतः प्रत्यक्षबाधश्शक्य इति, तत्प्रतिक्षिपति—दोषोत्थत्वेति॥ अयं भावः—न हि सर्पभूदलनभ्रमयोरुपरितनस्य बलीयस्त्वमुत्पादयितुं शक्यम्। अनाप्तवाक्यबाधिते रज्जुसर्पे तदनाप्तत्वपरामर्शिनस्तद्भयं पुनरनुषज्यते। इह त्वादावेव दोषमूलत्वाविशेषशिक्षितः प्रतिसंहितश्चेति न परबलीयस्त्वभावनावकाश इति। दोषपरामर्शाभावमन्वारुह्यापि दूषयति—दोषज्ञानमिति। तुः वैपरीत्यद्योतकः। वस्तुतस्त्विति। अत्र तुः विदुषि तद्धीसम्भवद्योतनार्थः। दोष एव ह्ययथार्थधीहेतुः; तज्ज्ञानं तु तद्वि[स्रम्भ]भ्रमनिवर्तकम्। दुष्टस्यापि बोधस्य दोषपरामर्शाभावमात्रात् वस्तुस्थितिवैपरीत्यव्यवस्थापकत्वेऽतिप्रसङ्गमाह—निर्दोषत्वेति।

सर्वे हि वादिनः स्वसिद्धान्तस्थापकं निर्दोषमभिमन्यन्ते। न च तत्तथ्यम्; नच तथातथा भिद्येत वस्तुगतिः व्याघातात्। तदिह स्वपक्षस्थापकदोषानाकलनमात्रेण बाह्यसिद्धान्ता विपश्चिद्भिरुदितदोषाः किं न मिथ्या भवन्ति? तद्वदिहापि बाधकदोषस्य सतः परामर्शे अन्यथाऽपि वा बाध्यबाधकभावो दुर्धर्षण इति भावः। अनन्यगतिकापच्छेदन्यायदर्शनमात्रेण तुल्यस्यापि परस्य प्राबल्ये सर्वबाधकमाध्यमिकविजयतूर्यं जोघुष्येतेत्याह—प्राबल्यमिति। निषेधः पर इत्येतावता तस्य प्राबल्यं चेदित्यन्वयः॥ ५६॥

आनन्द०—पूर्वसङ्गतिमनुसृत्याह—अत्रेति । अविशेषत्वेऽप्युद्गातृप्रतिहर्त्रपच्छेदनिमित्तयोः शास्त्रयोः पौर्वापर्येणैव बाध्यबाधकभावः स्थापित इत्याह—प्रमाणसिद्धेति। ननु दोषमूलत्वे बाधकत्वं नोपपद्यत इत्युक्तौ नेदमुत्तरम्, शास्त्रयोर्दोषमूलकत्वानभ्युपगमादित्यत्राह—अपैति चेति । नन्वनाप्तवाक्यस्य दोषोत्थस्याप्यपरत्वमात्रेण रज्जुसर्पधीबाधकत्वं दृष्टमिति चेत्त्राह—अयं भाव इति । यत्र चानाप्तवाक्येन बाधः, तत्रापि दोषमूलत्वज्ञानाभावेन प्रामाण्यभ्रमात् तज्ज्ञाने तु न बाधकत्वमित्याह अनाप्तवाक्येति । नन्वत्रापि दोषमूलत्वादज्ञानमस्त्वित्यत्राह—इह त्विति । शिक्षितः उपदिष्टः । प्रतिसंहितः प्रकर्षेण युक्त्या निश्चितः । दोष एवेति । बाधो नाम विषयापहारः भ्रान्तित्वाज्ञानमात्रेण भ्रान्त्या विषयापहारो न भवतीति न बाधकत्वमित्यर्थः। तद्विस्रम्भेति । दोषमूलत्वज्ञाने नाप्रामाण्यबुद्ध्या प्रामाण्यबुद्धिर्निवर्तत इत्यर्थः। व्याघातादिति । जीवस्याणुत्वमहत्त्वादिविरुद्धाकारप्रसङ्गेन प्रपञ्चस्य सत्यत्वमिथ्यात्वशून्यत्वादिप्रसङ्गेन च व्याघात इत्यर्थः। अन्यथाऽपि परामर्शाभावेऽपि । अनन्यगतिकेति । दोषमूलत्वेऽपि परस्य बाधकत्वे सर्वनिषेध्यसापेक्षस्य माध्यमिकवाक्यस्याद्वैतवाक्यादपि परत्वेन ब्रह्मापि बाध्येतेति भावः। "निर्दोषत्वाभिमन्तृस्वसमयिमतिभिः" इति मूलस्य निर्दोषत्वेनाभिमन्तारो ये स्वसमयिनः तेषां स्वसिद्धान्ते निर्दोषत्वाभिमानिनां मतिभिरित्यर्थः ॥ ५६ ॥

## दोषसाम्ये परस्य बाधकत्वानुपपत्तिः

निर्दोषं यच्च शास्त्रं तदपि बहुविधं बोधयत्येव भेदं
वाक्ये तत्त्वोपदेशप्रकरणपठिते नान्यपर्यं प्रतीमः ।
नात्रापच्छेदनीतिर्नियतिमति सदोषक्रमन्यायसिद्धेः
स्वप्रख्याप्यापलापे श्रुतिरपि वृषलोद्वाहमन्त्रायते वः ॥ ५७ ॥

सर्वार्थ०—असंभावितदोषादौपनिषदवाक्यादद्वैतज्ञानं सिध्यतीति परोक्ते प्रतिबन्दिं प्रस्तुवान इव स्वपक्षमपि स्थापयति—निर्दोषमिति ॥ बहुविधं भेदम्—आधाराधेयभावादिभिरीशेशितव्यभेदम्, भोक्तृभोग्यनियन्तृभावैस्तत्त्वत्रयभेदम्, अणुत्वविभुत्वादिभिर्जीवेश्वरभेदम्, बद्धमुक्तनित्यतदवान्तरविभागैर्जीवभेदम्, एतेषु च कालभेदेन तत्तदवस्थाभेदं चेत्यर्थः। प्रतिषेधगन्धिना त्वयाऽपि प्रतिषेध्यधीर्दुरपलपेत्येवकाराभिप्रायः। प्रस्तुतभेदवाक्यान्यन्यपरत्वान्न भेदं विदधतीत्यत्राह—वाक्य इति। नहि सद्विद्यादिषु कर्मविधयः उपासनविधयो वा संनिदधतीति त्वयाऽपि संप्रधार्यते। सन्ति च तत्रापि अहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादीनि तत्तद्द्रव्यस्वरूपव्यापारादिविविधभेदविषयाणि वाक्यानि। अतोऽनन्यपरनिर्दोषवाक्यसिद्धत्वाद‌द्वैतवद्द्वैतमपि दुर्निषेधमित्यभिप्रायः। ननु प्रतिषेधस्य प्रसक्तिसापेक्षत्वात् भेदप्रसञ्जकवाक्यं पूर्वं तन्निषेधकं तु परत्वेनापच्छेदनयात्तद्बाधकं स्यादित्यत्राह—नात्रेति । अत्रेत्यनेनाभिप्रेतं हेतुमाह—नियतिमतीति ।

अयं भावः—अनियतपौर्वापर्ये ह्यपच्छेदनयः, नियमे तूपक्रमनयात् परानुत्पत्तिरेवेति नीतिविदः। इह च त्वयैव प्रसञ्जकप्रतिषेधकयोः पौर्वापर्यनियमः; स्थापितः; अतः परस्यैव दौर्बल्यं प्रत्येतव्यमिति। अनुष्ठाने त्वस्य न्यायस्यानन्यथाभावमभिप्रेत्य सदाशब्दः। ननु लोकसिद्धान् भेदांस्तावत्प्रसिद्धत्वादनुवदति, अलौकिकानपि प्रतिषेधार्थमेवोपदिश्य प्रतिषेधतीति परप्राबल्यं दुर्वारम्, तत्राह—स्वप्रख्याप्येति। अप्रख्यातस्य प्रख्यापनाद्वरं तत्र तूष्णींभावः। न हि भ्रमनिवर्तनाय प्रवृत्तं शास्त्रं भ्रमान्तरमुत्पादयतीति त्वदन्यः प्रतिपद्येत। तदिह श्रुतिः प्रत्यक्षाद्यनवगतान् भेदान् स्वयं विधत्ते प्रतिषेधति चेति वृषलविवाहमन्त्रवद्व्याघात एव परिशिष्यते इति भावः। एतेन सगुणनिर्गुणश्रुत्योरपि परप्राबल्यवर्णनं निरस्तम् ॥ ५७ ॥

---

आनन्द०—पूर्वसङ्गत्याऽऽह—असम्भावितेति। प्रतिबन्द्या अनुत्तरत्वाभिप्रायेणाह- स्वपक्षमपीति। अन्यपरत्वादिति। निषेध्यसमर्पकत्वेन निषेधविधिशेषतया निषेध्ये तात्पर्याभावादित्यर्थः। ननु 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यधिकरणे पौर्वापर्यमेव बाध्यबाधकभावे तन्त्रमिति निर्णीतं, तच्च नियतत्वेऽपि न हीनमिति कथमप्रवृत्तिरित्यत्राह—अयं भाव इति। ज्योतिष्टोमे बहिष्पवमानस्तोत्रे 'पञ्चर्त्विजः समन्वारब्धाः प्रसर्पन्ति अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्ता प्रतिहर्तारं ब्रह्मा ब्रह्माणं यजमानः' इत्यन्वारम्भणं विधाय दैवात्तस्य विच्छेदे प्रायश्चित्तं च विहितं 'यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः संस्थाप्यः तेन पुनर्यजेत। तत्र तद्दद्यात् यत्पूर्वस्मिन् दास्यन् स्यात्। अथ प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात्'इति। तत्र यद्येकस्मिन् प्रयोगे पौर्वापर्येणापच्छेदे तन्निमित्तशास्त्रद्वयमपि तत्क्रमेण प्रसक्तम्। तत्र विरोधात्समुच्चयासंभवेऽन्यतरबाधे पूर्वस्यैव बाधस्समर्थितः। तत्रानियतत्वात् पौर्वापर्यस्य प्रयोगान्तरे सावकाशं शास्त्रमिति युक्तं तत्र कस्यचिद्बाधः। इह तु नियते सावकाशत्वाभावात् न बाधो युक्तः। अन्यथाऽतिरात्रे षोडशिग्रहणाग्रहणशास्त्रयोरपि परेण पूर्वस्य बाधः स्यात्। तथा च विकल्पसिद्धान्तो निर्मूलः स्यात्। ननु तत्र ग्रहणाग्रहणवद्विकल्पः किमर्थं नाश्रित इति चेन्न। विकल्पस्याष्टदोषदुष्टत्वेन गत्यभावविषयत्वादिति भावः।

नन्वेकवाक्य एवोपक्रमनयो वेदोपक्रमाधिकरणे दर्शितः, कथमत्रेत्यत्राह—इह चेति। प्रसञ्जकप्रतिषेधयोरेकवाक्यत्वेना नन्वयादिति भावः। उपक्रमत्वं च पूर्वभावित्वमिति बोध्यम्। ननु नियतिमतीत्यनेनैवोक्तार्थाभिधाने पौनरुक्त्यमित्यत्राह—अनुष्ठाने त्विति। शास्त्रनैयत्यं नियतिपदेनोच्यते। अनुष्ठाननैयत्यं सदाशब्देन। तथा च वाक्यस्य नियतपौर्वापर्ये अनुष्ठानस्यैकरूप्ये चोपक्रमन्याय इत्यर्थः। न चैवं ग्रहणाग्रहणवाक्येऽप्युपक्रमन्यायस्स्यादिति वाच्यम्। तत्रानुष्ठाननैयत्याभावात्। न चात्राप्यनुष्ठानाभावात् तदेकरूप्यं नास्तीति वाच्यम्। तद्बोधस्यैवानुष्ठानशब्देन विवक्षितत्वात् तदुपासनानुष्ठानस्य वा संभवाच्चेति भावः। तथा चास्य न्यायस्य प्रवृत्तिहेतुभूतमनुष्ठानेऽनन्यथाभावमभिप्रेत्येति वाक्यार्थः।

केचित्तु—अनुष्ठानेऽस्य न्यायस्यान्यथाभावमभिप्रेत्येति पठन्ति। तदाऽयमर्थः—अस्यापच्छेदन्यायस्यानुष्ठानविषयताऽन्यथासिद्धतया प्रमाणविषयत्वाभावादित्यर्थः ननूपक्रमोपसंहारयोस्तुल्यत्वेऽयं न्यायो भवेत् निषेधे तु निषेध्यानुवादस्य निषेधार्थत्वान्न तुल्यत्वम्। अन्यथा घटो नास्तीत्यत्राप्यस्ति नेत्यनयोर्विरोधेन उपक्रमन्यायप्रसङ्गादिति शङ्कते नन्विति। नन्वलौकिकभेदे कथं निषेधार्थानुवादोऽप्राप्तत्वादित्यत्राह—अलौकिकेति। शङ्कते–सत्यकामादीनित्यर्थः। यथा 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात्' इत्यस्य 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति निषेधार्थानुवादत्वमिति भावः अप्रख्यातस्येति। जर्तिलादिवाक्येऽपि न निषेधार्थप्रसञ्जनं, तत्र निषेधविध्यभावात्। अनाहुतिवाक्यस्याजाक्षीरविध्यर्थवादत्वादिति भावः। अस्ति नास्ति, करोति न करोति, भुङ्क्ते न भुङ्क्ते, स्वपिति न स्वपितीत्यादिपरस्परविरुद्धार्थकं द्रविडभाषावाक्यं वृषलोद्वाहमन्त्रः॥ ५७॥

भेदतन्निषेधश्रुत्योरपच्छेदन्यायानर्हत्वम्

भेदः प्रत्यक्षसिद्धो न निगमविषयः स्यादिति त्वभंकोक्तिः
　　प्रख्यातादन्यमेनं प्रथयति यदसौ त्वन्मताद्वैतवन्नः।
सन्मात्रग्राहि चाक्षं नियमयसि ततो ब्रह्म दृश्यं मृषा स्यात्।
　　किं ते श्रुत्या तदानीं फलमपि लभतां क्वापशूद्राधिकारः॥ ५८॥

सर्वार्थ०—एवमपि मुग्धान् प्रति मुग्धैरुपादेशि। भेदस्तावद् भूतभौतिकादिष्वासंसारं प्रसिद्धः; अतीन्द्रियनिष्ठोऽप्यसौ सामान्यतः प्रत्यक्ष एव; अन्यथा कथं भेदसामान्यप्रयुक्तभेदशब्दवाच्यत्वा दिव्याप्तिग्रहणायोगात्। व्याप्तिग्रहणरूपं हि प्रत्यक्षदृष्टादृष्टसकलव्यक्तिगोचरमिति धूमानुमानादिष्वपि समर्थयन्ते। सावयवत्वानित्यत्वव्याप्तिग्रहणमतीन्द्रियसावयवपक्षीकारेण शिक्षयन्ति। तदिह भेदमात्रस्य प्रत्यक्षविषयत्वादप्राप्तप्रापकस्वभावशास्त्रगोचरत्वं न सम्भवतीति। एतदनुभाष्योपालभते—भेद इति॥ तु सर्वशास्त्रनिर्विषयत्वप्रसङ्गावहत्वं द्योतयति। प्रायेण हि तवापि यत्किंचिद्भेदविषयं सर्वं शास्त्रम्; अन्ततः परप्रतिपन्नादन्यदेव हि सर्वशास्त्रे प्रख्याप्यम्। तद्यदि यस्य कस्यचिद्भेदान्तरस्य प्रत्यक्षतया सामान्यतः सर्वभेदग्रहणात् शास्त्रस्य विषयलोपः स्यात्, लुप्येत तर्हि सकललौकिकवैदिकशास्त्रविषयः। व्याकरणादिव्युत्पत्तिलोपादद्वैतशास्त्रमप्यशक्यारम्भं स्यात्। अतो भेदस्य शास्त्रविषयत्वं निराचिकीर्षता सिषाधयिषितस्याभेदस्यापि तन्निराकृतमेवेति।

अथ सर्वशास्त्रे प्रतिपत्तॄणामन्यप्रतिपन्नादन्यद्विशेषतः प्रतिपित्साहँ प्रतिपाद्यमिति पश्यसि, तदा [अस] मन्मतेऽपि लोकप्रसिद्धगजतुरगनीलपीतादिभेदातिरिक्तः परावरादिभेद उपनिषद्घोषणीयः। तदिदमाह—प्रख्याताविति। असावित्यौचित्यान्निगमः परामृश्यते। त्वन्मताद्वैतवदिति प्रतिबन्दिपरम्। तथा हि–यदि भेदमात्रस्य

प्रसिद्धत्वादलौकिकभेदोऽपि शास्त्रविषयो न स्यात्, अभेदमात्रस्यापि प्रतिवस्तु सर्वलोकप्रसिद्धत्वात् त्वदभिमतमद्वैतमपि तदविषयः स्यात्। यदि प्रसिद्धविलक्षणमद्वैतं तत्प्रतिपाद्यं पर्य्यसि, भेदेऽपि तादृशो तथैव दीयतां दृष्टिरिति। प्रत्यक्षविषयत्वादेव शास्त्राविषयत्वे परस्य सिद्धान्तविरोधमपि सूचयति—सन्मात्रेति। भेदस्य भ्रान्तिविषयत्वं सन्मात्रस्य प्रत्यक्षविषयत्वं च त्वया स्थाप्यते। अतस्तस्यापि शास्त्रविषयत्वं त्वया दुस्साधमिति भावः।

अस्तु सन्मात्रमनागमविषयः, भेदनिषेधमात्रे त्रय्यन्ततात्पर्यात्; सन्मात्रं तु प्रत्यक्षत एव सिध्यतीति, तत्राह—तत इति। यदि प्रत्यक्षत एव ब्रह्मणस्सिद्धिः, तदा दृश्यत्वसामान्यसंगृहीत्या युष्मत्पदव्या मिथ्यात्वं दुस्तरं स्यादिति भावः। अन्यमपि सिद्धान्तविरोधमाह—किमिति। प्रत्यक्षत एव ब्रह्मस्वरूपसिद्धौ तद्विभूतिगुणादेश्च मिथ्यात्वादनुपदेष्टव्यत्वे भेदनिषेधस्य च माध्यमिकोपदिष्टैरेव तर्कैस्सिद्धौ शारीरकविचारार्थिनः श्रुतिसाध्यं न किंचित्स्यादित्यर्थः। ब्रह्मविद्यायां शूद्राधिकारप्रतिषेधोऽपि दुश्शक इत्याह—फलमिति। ब्रह्मणस्त्रय्यन्तवेद्यत्वे सिद्धे ह्यनधीतश्रुतीनां शूद्रादीनां ब्रह्मविद्यायामनधिकारस्सिध्येत्; प्रत्यक्षवेद्यत्वे तु त्रैवर्णिकाविशिष्टशूद्रोऽनधिकारी न स्यादिति भावः। ५८॥

---

आनन्द०—पूर्वसङ्गत्याऽऽह—एवमपीति। सामान्यत इति। सामान्यप्रत्यासत्त्येत्यर्थः। कथमन्यथेति। भेदत्वसामान्यप्रत्यासत्त्या तदुपस्थित्यभावे तस्यातीन्द्रियस्य भेदशब्दवाच्यत्वग्रहो न स्यात्। अनुमानस्यापि तन्मूलकव्याप्तिग्रहमूलतया तदभावे प्रवृत्त्ययोगादिति भावः। तत्र नैयायिकसम्मतिमाह व्याप्तीति। कक्षीकारः—अन्तर्भावः। प्रायेण हीति। ज्योतिष्टोमादिवाक्यमपि यागस्वर्गसाधनत्वादिभेदगोचरमित्यर्थः। परप्रतिपन्नावन्यत्—स्वातिरिक्तप्रमाणागम्यमित्यर्थः। शास्त्रस्य—भेदशास्त्रस्य। लुप्येतेति। सर्वस्याप्युक्तगत्या प्रत्यक्षादिविषयत्वादिति भावः। लौकिकं—स्मृत्युक्तं, वैदिकं वेदगम्यम्। किं चाद्वैतशास्त्रगतपदानि व्याकरणादिव्युत्पाद्यानि चेत्तद्ग्रहणसमये ज्ञातत्वान्निर्विषयं स्यात्। अव्युत्पाद्यत्वे व्युत्पत्तिरहितस्यार्थशून्यत्वात् ध्वन्यादिवन्निर्विषयं स्यात् इत्याह—व्याकरणादीति। आदिपदेन उपमानकोशादि। ननु व्याकरणादिना व्युत्पत्तिरस्तु। तथाऽपि न निर्विषयत्वं शास्त्रस्य, अद्वैतस्य वाक्यार्थत्वेन पदार्थत्वाभावादिति शङ्कां पदार्थस्य स्वरूपानतिरेकादभेदस्य नापूर्वत्वमिति न सविषयत्वमित्युपसंहरति—अत इति। सिद्धान्तेऽद्वैतस्य प्रतिपाद्यत्वानङ्गीकारात् परसिद्धान्तस्य दूष्यत्वात् कथं निदर्शनमित्यत्राह—प्रतिबन्दिपरमिति। सन्मात्रस्य च प्रत्यक्षत्वं प्रत्यक्षप्रमितिविषयत्वम्। भेदनिषेधस्येति। तस्याप्युक्तरीत्या शास्त्रविषयत्वायोगादिति भावः। मूलम्—फलं अभिलषतां मुमुक्षूणां ते तव मते श्रुत्या न किंचित्प्रयोजनं, तथा चापशूद्राणां त्रैवर्णिकानामेवाधिकारः क्व कुत्रापि न सिध्यतीत्यर्थः॥ ५८॥

**अलौकिकभेदस्य शास्त्रवेद्यत्वोपपत्तिः**

वेदा बुद्धागमाश्च स्वयमपि हि मृषा मानता चैवमेषां
बोद्धा बुद्धिः फलं च स्थिरतदितरताद्यन्तरालं च बुद्धेः ।
आतस्त्रैविद्यडिम्भान् ग्रसितुमुपनिषद्वारवाणोपगूढः
प्रायः प्रच्छादिता स्वापटुभिरसुरता पौण्ड्रकाद्वैतनिष्ठैः ॥ ५९ ॥

**सर्वार्थ०**—ये चेते प्रमाणप्रमेयादिभेदान् भ्रान्तिसिद्धान् साधयन्ति, तेषां योगाचारादिसमयमनास्थाय अत्यन्तवादाश्रयणं बालप्रलोभनार्थमित्यभिप्रायेणाह—वेदा इति ॥ स्वयं—स्वरूपतः । अपिना व्यापारानुग्राहकयोस्संग्रहः । मानता—प्रामाण्यम् । एवं मृषा । एषाम्—उभयेषाम् । स्थिराभावादेव सौगतानां बोद्धा मिथ्याभूतः; स्थिरसद्भावेऽप्यद्वैतिनामात्मनोऽनुभूतिमात्ररूपत्वेनाबोद्धृत्वात् तदाश्रयतया भातस्याहमर्थस्याविद्याविवर्तत्वाच्च बोद्धुर्मिथ्यात्वं सिद्धम् । बुद्धिरपि सर्वा माध्यमिकस्य मिथ्या; मायावादिनस्तु शास्त्रसाध्या; साध्यत्वादेव सत्यव्यतिरिक्ता । अपि च अनेनोक्तं बुद्धिस्थैर्यं निर्विशेषत्वविरोधात् काल्पनिकम्; योगाचारोक्तं क्षणिकत्वमपि तथैव क्षणिकधियां ग्राह्यग्राहकस्वगतविशेषस्य मिथ्यात्वाभ्युपगमात् । फलं—व्याहारो हानोपादानादि च । एवं सर्वतस्साम्ये कुदृष्टीनामन्यतरपरिग्रहनियतो निदानमुत्प्रेक्षमाण इवोपालभते—आत इति । शेषमतिरोहिततात्पर्यम् । एवमिह यादवप्रकाशीयस्संग्रहः—

बेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् ।
बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समायसंसदः ॥ इति ॥५९॥

---

**आनन्द०**—ये चेति । एषां—वेदबुद्धागमानाम् । ननु स्थिरत्वास्थिरत्ववैषम्यात् कथं साम्यमित्यत्राह—**स्थिरसद्भावेऽपीति** । **तदाश्रयतया**—अनुभूत्याश्रयतया । **योगाचारादिभिः** साधारण्यमुक्त्वा सर्वमिथ्यावादिमाध्यमिकसाम्यमप्याह—**बुद्धिरपीति** । ननु मायिभिः शास्त्रजन्यज्ञानस्य मिथ्यात्वेऽभ्युपगम्यानेऽपि तद्विषयभूतज्ञानस्य स्थैर्यस्याङ्गीकारात् कथं साम्यमित्यत्राह—**अपि चेति** ननु स्थिरत्वस्य कल्पितत्वेऽपि मायिभिस्स्वरूपमात्रमङ्गीकृतमिति कथं साम्यमिति चेन्न । स्वरूपे सत्यत्वस्याप्यभावादिति भावः । **अन्यतरपरिग्रहनियतिः**—बौद्धागमान्विहाय वेदपरिग्रहनियतिरित्यर्थः । आत इत्यतइत्यर्थेऽव्ययम् । **मूलं—स्थिरतदितरताद्यन्तरालं**—स्थिरत्वक्षणिकत्वादिवैषम्यमित्यर्थः । आदिशब्देन जन्यत्वादिर्गृह्यते । वारवाणं कवचम् । **स्वापटुभिरित्यादि** । पौण्ड्रकः कश्चित् काशिराज आत्मानं वासुदेवममनुत, तद्वत् सर्वात्माभेदनिष्ठाः स्वकीयेन सिद्धान्तेन हेतुना अपटवः । यद्वा स्वकीयः सिद्धान्तोऽपटुर्येषां त इति स्वापटवः वैदिकबहिष्कारभीरवः, तैरित्यर्थः । 'असत्यमप्रतिष्ठम्' इत्यादिगीतावचनादसुरता चैषामवगन्तव्या ॥५९॥

**प्रपञ्चमिथ्यात्ववादिनां सौगतसाम्यापादनम्**

**त्वन्निष्ठासिद्ध्यसिद्ध्योः परमतनियतिस्सिद्धिमेवाधिरूढा**
**वेदस्यामानतायां त्वदभिमतहतिर्मानतायां च तद्वत् ।**
**साध्याऽसाध्याऽपि मुक्तिस्त्वदुपगमहता तत्समं चान्यदित्थं**
**रक्षोभ्यः प्रेषितोऽयं रघुपतिविशिखो राहुमीमांसकेभ्यः ॥ ६० ॥**

**सर्वार्थ०**—अथास्मिन् पश्यतोहराणां पक्षे विकल्पदौःस्थ्यं विविधमुदाहरति—त्वन्निष्ठेति । नितिष्ठत्यस्मिन् परीक्षेति निर्णयोऽत्र निष्ठा; तद्विषय एव वा राद्धान्तः । याऽसौ त्वन्निष्ठा सा असिद्धा भ्रान्तिसिद्धा वा; तर्हि तद्विपरीता परेषां निष्ठैव प्रमितिसिद्धिमधिरोहेत् । अथ प्रमितिसिद्धा, प्रमितिरसौ चेद् व्यवहारिकी वा पारमार्थिकी वा ? न प्रथमः दत्तोत्तरत्वात् । तादृश्या तया परमतान्यपि किं न सिध्येयुः ? अस्मदुक्तबाधकैरिति चेत्, तदुक्तबाधकैस्त्वन्मतमपि न सिध्येत् । ते बाधकाभासा इति चेत्, तदुक्ता अपि तथैवेत्यन्ततस्त्वमेव ब्रूषे । स्वव्याघातादिदोषस्त्वधिकः । तदिदं संजगृहुः—

स्वशास्त्रनिर्णये सिद्धे सिद्धाः स्युर्लोकनिर्णयाः ।
स्वशास्त्रनिर्णयेऽसिद्धे सिद्धाः स्युर्लोकनिर्णयाः ॥

अपि च वेदाः प्रमाणमप्रमाणं वा ? अप्रमाणत्वे कथं ततस्तद्विषयसिद्धिः ? अन्यथा बाह्यागमैरपि तत्तद्विषयाः किं न सिध्येयुः ? कथं तर्ह्यप्रमाणात् भयविस्मयादिसिद्धिः ? इत्थम्—न हि वयमप्रमाणस्य स्वानुरूपार्थक्रियाकारित्वं नेति ब्रूमः; किंतु न ततस्तद्विषयसत्यत्वस्थापनं सिध्येदिति । प्रमाणत्वं तु तस्य सत्यमसत्यं वा ? ब्रह्मणः स्वरूपभूतमन्यद्वा ? नाद्यः, ब्रह्मणश्शब्दधर्मत्वायोगात् । न द्वितीयः, सदद्वैतव्याघातात् । असत्यत्वे तु वृत्तमेवोत्तरम् । मुक्तिश्च ब्रह्मण उपायसाध्या ? उत स्वरूपत्वादसाध्या वा ? आद्ये भावरूपा अभावरूपा वा ? पूर्वत्राद्वैतभङ्गः । उत्तरत्र सत्यमिथ्याप्रतियोगिकत्वविकल्पे प्राच्योऽपसिद्धान्तहतः; पश्चिमस्तु प्रध्वंसमिथ्यात्वमपि स्थापयेदेव । अलब्धस्वरूपस्य हि प्रध्वंसोऽपि स्वरूपं न लभेत । एवं स्वयंप्रकाशत्वादिषु स्वतस्सिद्धत्वान्यतस्सिद्धत्वादिविकल्पदौःस्थ्यं दुस्तरमित्याह—तत्समं चान्यदिति । उक्तानुक्ततर्काणां [अ]मोघत्वं व्यञ्जयन्निगमयति—इत्थमिति । रक्षोभ्य इत्यनेन स्वव्याघातकमायाप्रवर्तकत्वं व्यज्यते । रघुपतिविशिखः—तद्वत् सर्वत्राप्रतिहत इति तात्पर्यम् । राहुमीमांसकशब्देन सशिरस्कवेदनिर्णयप्रवृत्तमीमांसाशास्त्रशरीरेऽपि शकलितशिरोमात्रसंग्रहीतृत्वं सूच्यते ॥ ६० ॥

---

**आनन्द०**—प्रसङ्गादाह—अथेति । भ्रान्तिसिद्धा भ्रान्तिरूपेण सिद्धा, भ्रान्त्या सिद्धा वा । प्रमितिसिद्धेत्यत्राप्येवमर्थः । ननु प्रमितेर्व्यावहारिकत्वेऽपि विषयस्य सत्यत्वमस्त्वित्यत्राह—तादृश्येति । अविशेषादिति भावः । अन्ततस्त्वमेवेति । सर्वमिथ्यात्वं वदता बाधकानामपि मिथ्यात्वकथनादिति भावः । द्वितीयपक्षं दूषयति—स्वव्याघातादिदोषस्त्विति । तन्न्यायेन सर्वेषां पारमार्थिकत्वसिद्धेः पारमार्थिक्याश्च

प्रमितेः स्वमिथ्यात्वसाधनाच्च व्याघात इति भावः। केचित्त्वत्र ग्रन्थपातं ब्रुवते। असिद्धा भ्रान्तिसिद्धा वेत्युक्तेः पूर्वसम्मतिमाह—तदिदमिति। स्वशास्त्रनिर्णयः—स्वनिष्ठेत्यर्थः। एकत्रासिद्ध इति च्छेदः। कथं तर्हीति। रज्जुसर्पादिवाक्यात् भयादिदर्शनादित्यर्थः। आदिशब्देन पलायनादिः। स्वानुरूपा—स्वरूपानुबन्धिनी। आद्यं दूषयति—प्रमाणत्वं त्विति। प्रमाणत्वमपीत्यर्थः। प्राच्यः सत्यप्रतियोगिकः, सत्यत्वानभ्युपगमादिति भावः। अलब्धेति। अन्यथा शशशृङ्गादेरपि ध्वंसप्रसङ्गादिति भावः। स्वयंप्रकाशत्वादीत्यादिशब्देन नित्यत्वादयो विवक्षिताः। स्वतस्सिद्धत्वे स्वयं प्रमितिर्न वा, प्रामाण्यं च व्यावहारिकं न वेत्यादिविकल्पे सर्वस्यापि स्वतस्सिद्धिप्रसङ्गः। परतस्सिद्धत्वेऽप्येवं प्रसङ्ग इति दुस्तरमिति भावः। ब्रह्म सत्यमसत्यं वा सधर्मकं निर्धर्मकं वेत्यादि विकल्प्य सत्यत्वे निर्विशेषत्वं न स्यात्, असत्यत्वे शून्यवादप्रसङ्गः। एवं सत्यत्वमसत्यं सत्यं वेत्यादिक्रमेण प्रवर्तनीयास्तर्का अनुक्ता ज्ञेयाः। रक्षोभ्य इत्यादिमूलम्—राहुमीमांसका एव रक्षांसि, स्वयं, ग्रन्थकृद्रघुपतिः, तर्का एव विशिखा इति भावः॥ ६०॥

## विश्वमिथ्यात्ववादिनां बाधकविकल्पोदाहरणम्

---

शुद्धस्याशुद्धसृष्टिक्रम इति कथितश्शुद्धसत्त्वे तु तत्त्वे
स्थानं नित्यं श्रुतं तत्स्मृतमपि कलया तत्र देहाद्यवस्थाः।
सृष्टेः प्रागेकमेवेत्यपि निगमवचस्त्वत्क्ष्यमाणव्यपेक्षं
नो चेत्त्वाभीष्टमायोपधिमुखविलये स्वस्ति विश्वप्रसूत्यै॥ ६१॥

**सर्वार्थं**—एवं प्रसक्तानुप्रसक्तिं परिसमाप्य परमप्रकृतसृष्टिविशेषोक्तिं संगमयन् प्रकरणारम्भोद्दिष्टलक्षितनित्यविभूतिपरीक्षां परिमितनिरूप्यत्वादौचित्याच्च प्रधानप्राप्यप्रापकभूतपरतत्त्वनिरूपणानन्तरं निवेशयति—शुद्धस्येति॥ शुद्धस्येत्यनुकथनमशुद्धद्रव्यानुप्रवेशात् तत्सृष्ट्यादिभिश्च स्वतन्त्रस्याप्यशुद्धिशङ्कामपनयति। अशुद्धसृष्टिक्रमः कथित इत्यत्र शुद्धसृष्टिक्रमस्तु वक्तव्य इति शेषः। शुद्धसत्त्वे तु तत्त्व इत्यनुवादेन तद्ग्राहकप्रमाणमपि सूच्यते। तस्याप्राकृतत्वस्थापकमाह—स्थानमिति। श्रूयते हि 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति। तदिदं सदापश्यत्सूरिविशिष्टस्थानविधानार्थमिति वेदार्थसंग्रहे स्थापितम्। एवम् 'आदित्यवर्णं तमसः परस्तात्' 'क्षयन्तमस्य रजसः पराके' इत्यादि। शाट्यायनिनश्च एवमामनन्ति 'सहस्रस्थूणे विमते दृढ उग्रे यत्र देवानामधिदेव आस्ते इति। कौषीतकिनां पर्यङ्कविद्या चात्र पठितव्या। सर्वमेतत् संक्षिप्तं षडर्थसंक्षेपे व्यतिरेकाधिकरणनिवासशब्दैरिति। 'तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते, विष्णोर्यत्परमं पदमित्यादिप्रसिद्धिसूचनार्थस्तच्छब्दः। अस्यार्थस्योपबृंहणप्रतिष्ठितत्वमाह—स्मृतमपीति। यथोक्तमुत्तरश्रीरामायणे। तं चा[यद्वा]काशं सनातनमिति। महाभारते च दिव्यं स्थानमजरं चाप्रमेयमिति। भगवच्छास्त्रसंहितासु चः विस्तरस्सिद्धः।

ननु अक्षरे परमे व्योमन्नित्यव्यक्ततमसोरन्तरालेऽधीतस्त्रिगुणपरिणतिविशेषः ईश्वरस्य मुक्तानां च भोगस्थानतयाऽऽम्नायत इति यादवप्रकाशोक्तं युक्तम्, अक्षरशब्दप्रत्यभिज्ञानस्यात्र बाधकाभावात्, शुद्धसत्त्वव्यपदेशस्य रजस्तमसोरभिभूततयोपपत्तेः, अप्राकृतस्थानक्लृप्तौ च गौरवात्, तत्रापि पृथिव्यादिभेदाभ्युपगमेन प्राकृतत्वं प्रज्ञायत इति। अत्र ब्रूमः—अक्षरशब्दप्रत्यभिज्ञामात्रं त्वतिप्रसञ्जकम्। अस्ति चात्र परमे व्योमन्निति समभिव्याहारो बाधकः; न हि तमोऽनन्तरस्याक्षरस्य व्योमत्वम्; उपचारस्तु गत्यभावे। अस्मत्पक्षे त्वक्षरपरमविशेषणाभ्यां प्रसिद्धव्योमवैलक्षण्यं युक्तम्। नच स्थानान्तरादिस्वीकारे गौरवं, यथाश्रुतमात्रसंग्रहणात्। पृथिव्यादिभेदस्तु शब्दादिगुणतारतम्यसारूप्यात्; युष्मदिष्टाक्षरस्थाने च प्रकृत्यामिव पृथिव्यादीनामसन्निधानात्। न च तत्त्वसंख्याधिक्यप्रसङ्गो दोषः, कालवदेव पृथक्त्वोपपत्तेः; तं षडिंवशकमित्याहुः सप्तविंशमथापरे इत्यधिकसंख्याम्नानात्।

न चैवं षट्त्रिंशत्तत्त्ववादस्यापि स्वीकार्यत्वम्, अनाप्तागमप्रणीतस्यानादरणीयत्वात्; आप्तागमे त्वधिकगणनमनतिविप्रकृष्टावान्तरपरिणामख्यापनाभिप्रायं बोद्धव्यम्। 'लोकं वैकुण्ठनामानमिति प्रकृत्य अप्राकृतं सुरैर्वन्द्यमिति विशेष्यते। अत एवाण्डान्तर्वर्तिलोकविशेषत्वशङ्काऽपि निर्धूता। न तस्य प्राकृता मूर्तिरित्यनेनापि द्रव्यान्तरं सिध्यति। न चात्र बाधकमस्ति; अतश्शुद्धाशुद्धविभूतियुगलं व्यवस्थितमिति।

नन्वेवमपि नित्यानित्यविभूतिविभागोऽनुपपन्नः, अत्राप्यात्मस्वरूपादेर्नित्यत्वात्, तत्राप्यैच्छदेहादेरनित्यत्वात्, तत्राह—कलयेति। नित्यानित्यप्राचुर्यविवक्षया तथा विभाग इति भावः। न हि तत्रस्थानां पृथिव्यादीनामीश्वरदेहादीनां चात्रत्यवत् सृष्टिप्रलयौ। उक्तं हि महाभारते—

नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥

इति। भूतशब्दोऽत्र कार्यांशपरः। अत एव जीवलयोक्तिरौपचारिकी; वासुदेवशब्दोऽत्र परविग्रहविशिष्टपरः; स्वरूपनित्यत्वस्य जीवेष्वपि समत्वात्। विशिष्टलयस्य वासुदेवे विश्वविशिष्टेऽपि सिद्धत्वात् परविग्रहनित्यत्वोक्तिस्तदनुबन्ध्युपलक्षणार्था।

ननु कारणवाक्येष्वेकत्वावधारणादनन्तरं च बहुभवनसङ्कल्पोक्तेर्नित्यस्थानादिव्यपदेशस्त्रिदशामरत्वन्यायेन नेतव्य इति त्र्यन्तकुदृष्टीनां सर्वेषां व्यावघोषी, तत्राह—सृष्टेरिति। अयं भावः—सृष्टिकालापेक्षया स्रक्ष्यमाणस्य जगत उपदेशकालापेक्षयेदङ्कारगोचरस्य प्रलयदशायामविभक्तनामरूपतया एकत्वमवधार्यते। अत एव हि 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियतेति श्रुतिरेकत्वबहुत्वप्रकारमेतमेव व्यनक्ति। अथाऽपि यथाश्रुति जीवादिसमस्तैक्ये को दोष इत्यत्राह—नो चेदिति। अयं भावः—प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीत्यादिकमास्तां तावत्; चोदयितॄणां तु स्वसिद्धान्तविरोधः स्यात्। न हि मायाविलयः प्रलये मृषावादिभिरङ्गीक्रियते;

औपाधिकभेदवादिभिश्चोपाध्यंशप्रध्वंसः। मुखशब्दः स्वाभाविकभेदाभेदवाद्युक्तचिद-चिदीश्वरशक्तित्रयसंग्रहार्थः। यदि मायोपाधिशक्तीनामपि विलयस्तैरभ्युपगम्येत, तदुपहिताद् ब्रह्मणो विश्वप्रसूत्यभावात् अनुपहितस्य च तस्य तत्कारणत्वानभ्युपगमात् बहुभवनसङ्कल्पपूर्वकविश्वसृष्ट्याद्यभावात् कारणवाक्यं सर्वं कबन्धमीमांसककल्पित-मूषरत्वमेव भजेतेति। स्वस्तीत्युपालम्भकाकुगर्भम् ॥ ६१ ॥

---

**आनन्द०**—अवसरसङ्गतिं दर्शयति—**एवमिति**। 'ननु प्रत्यक्पराक्च' इति विभज्य पुनः 'नित्या भूतिर्मतिश्च' इति पृथगुद्देशादीश्वरपरिच्छेदेऽन्तर्भावः कथमित्य-त्राह—**परिमितनिरूप्यत्वादिति**। तथा च न पृथक् निरूपणमर्हतीत्यर्थः। अनुवादस्य प्रयोजनं दर्शयति—**अनुकथनमिति**। नन्वर्थवादत्वान्नोक्तार्थं साधयति। किं च विधित्वे साधकाभावो विशिष्टविधौ गौरवं चेत्यत्राह—**तदिदमिति**। विधिस्तु धारणे पूर्वत्वात्' इति न्यायेन विधित्वात् पदशब्दस्वारस्यात् सदापश्यत्त्वबलाच्च "यदाग्नेयोऽ-ष्टाकपालः" इतिवद्विशिष्टविधित्वमित्यर्थः। **क्षयं तमस्येत्यादि**। अस्य परब्रह्मणः क्षयं स्थानं तं ज्ञानात्मकं रजसः पराके तमसः परस्तादिति भास्करीयव्याख्या। रजश्शब्दः प्रकृतिपरः। आदिशब्देन "ते ह नाकं महिमानः सचन्ते" इत्यादिग्रहः। **सर्वमेतदिति**। पूर्वोक्तसर्वश्रुत्युक्तमित्यर्थः। व्यतिरेकः—तद्विष्णोः पदमिति भेदः, यत्र देवानामित्यत्र यत्रेत्यधिकरणशब्दः, पर्यङ्कविद्यायां निवासशब्दः।

**केचित्तु**—'दिव्यं स्थानमजरं चाप्रमेयम्' इत्युपबृंहणस्थस्थानशब्देनाधिकरण-शब्द उक्तः। क्षयशब्दो निवासशब्देनोक्त इत्याहुः। **तद्विप्रास इति**। तत्—तत्र। "सुपां सुलुक्" इति सप्तम्या लुक्। विप्रासः विप्राः। "आज्जसेरसुक्" नित्यसूरयः। विपन्यवः स्तुवानाः। जागृवांसः निद्रारूपाज्ञानविधुराः। समिन्धते। तत् विष्णोः परमं पद-मित्यर्थः। **केचित्तु**—यत्तच्छब्दयोर्यथास्थानमेवान्वयमाहुः। आदिशब्देन "यो अस्याध्यक्षः परमे व्योमन्" इत्यादिसङ्ग्रहः। ननु 'तदक्षरे परमे व्योमन्' इति श्रुत्याऽक्षराख्यं परमव्योमस्थानं भवति। अक्षरशब्दश्चावस्थाविशेषवतीं प्रकृतिमेवाह, "अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते" इति लयवाक्येऽव्यक्ततमसोरन्तरालावस्थाविशिष्टद्रव्य-स्याक्षरशब्दवाच्यतावगमात्। तथा च 'तमसः परस्तात्' इत्येतत्तमःपूर्ववाचीति शङ्कते—**नन्विति**। ननु तर्हि "शुद्धसत्त्वमयं स्थानं" इति व्यपदेशः कथम्? प्राकृत-त्वेन रजस्तमोमिश्रत्वादित्यत्राह—**शुद्धसत्त्वेति**। ननु गौणव्यपदेशो दोष इत्यत्राह—**अप्राकृतेति**। ननु प्रामाणिकत्वान्न दोष इत्यत्राह—**तत्रापीति**। प्राकृतत्व एव प्रमाण-मिति भावः। अत्र किमक्षरशब्दमात्रप्रत्यभिज्ञा विवक्षिता, उत बाधकाभावसहिता, यद्वा साधकान्तरसहिता, नाद्य इत्याह—**अक्षरेति**। अक्षरशब्दस्य वर्णादावपि प्रयुक्तेरै-कान्ततः प्रत्यभिज्ञा न भवतीति भावः। न द्वितीय इत्याह—**अस्ति चेति**। तदेवोप-पादयति—**न हीति**। **तमोनन्तरस्य** "अक्षरं तमसि" इति तमस्संनिहितस्येत्यर्थः। तस्य व्योमशब्दवाच्यत्वाभावादिति भावः। तृतीयं दूषयति—**अस्मत्पक्ष इति**। यथा

परशब्दादिविशेषणमहिम्ना प्रसिद्धजीवविलक्षणस्येश्वरस्यात्मत्वं, यथा वा प्रथमविशेषणमहिम्ना "वषट्कर्तुः प्रथमभक्षः" इत्यस्य भक्षान्तरत्वं तथाऽत्रापोति न तव साधकमिति भावः। यथाश्रुतेति। कल्पनायामेव गौरवस्य दोषत्वमिति भावः। प्राकृतत्वप्रत्यभिज्ञानं निराचष्टे—पृथिव्यादीति। तथा च मुख्यपृथिवीत्वाभावान्न प्राकृतत्वप्रत्यभिज्ञेति भावः। प्रत्यभिज्ञायाश्शङ्काऽपि नास्तीत्याह—युष्मदिष्टेति। "तदक्षरे" इत्यादिस्थले पृथिव्यादिशब्दाश्रवणात् तन्निबन्धना कथं प्रत्यभिज्ञेति भावः। केचित्तु अक्षरस्थाने अक्षरावस्थाविशिष्टे पृथिव्याद्यवस्थासम्बन्धाभावात्कथं प्रत्यभिज्ञेति वदन्ति।

ननु शुद्धसत्त्वस्य न तावत्त्रिगुणेऽन्तर्भावः। नापि कालात्मादौ। तथा चातिरेके संख्याविरोधः स्यादित्यत्राह—न चेति। संख्याविरोधं परिहरति—तमिति। अनाप्तागमप्रणीतस्येति। अनाप्तागमप्रतिपन्नस्येत्यर्थः। केचित्तु अनाप्तप्रणीतस्येति पाठस्साधुरिति वदन्ति। अनतिविप्रकृष्टेति। अत्यन्तभेदानर्हप्रकृत्यवस्थाभेदाभिप्रायमित्यर्थः। अनुमानादिभिः प्राकृतत्वं साध्यत इत्यत्राह—लोकमिति। नरशिरःकपालशुचित्वानुमानवदागमबाधितमिति भावः। माध्वपक्षं निराचष्टे—अण्डान्तर्वर्तीति। प्रकृतिबहिर्भावादिति भावः। मूर्तिविशेषे प्राकृतत्वनिषेधादप्यण्डान्तर्वर्ति न भवतीत्याह—न तस्येति। नन्वस्मदादिप्राकृतमूर्त्यपेक्षया वैलक्षण्यं बोध्यत इत्यत्राह—न चात्रेति। तथा सति प्राकृतशब्दस्य सामान्यस्य निष्कारणस्संकोचो दोषः स्यादिति भावः। ननु भूतशब्दस्य पृथिव्यादिपरत्वेऽहंकारादेरनित्यता न स्यात्, उपलक्षणत्वे वस्तुमात्रपरतया प्रकृत्यादेरप्यनित्यता स्यादित्राह भूतशब्द इति। ननु वासुदेवशब्दो वसत्यस्मिन्निति व्युत्पत्त्या सकलजगद्विशिष्टवाची कथं परविग्रहमात्रविशिष्टपर इत्यत्राह—विशिष्टलयस्येति। जीवन्यायेन प्राकृतविशिष्टस्य लयसंभवात् तदन्यविग्रहविशिष्टमात्रपरत्वमित्यर्थः। नन्वेतावता प्रकृतपृथिव्यादीनां नित्यत्वे किमायातमित्यत्राह—परविग्रहेति। परविग्रहस्य पृथिव्याद्यात्मकत्वात्तन्नित्यत्वे पृथिव्यादिनित्यत्वमपि सिद्धमिति भावः॥

अत्र मतद्वयं—पंचोपनिषदात्मकानि पृथिव्यादीनि पञ्चेश्वरनित्यमुक्तादिनित्यानित्यशरीररूपादिनाऽवस्थितानि अनित्यानि मुक्तशरीराणि ईश्वरनित्ययोर्नित्यानित्यरूपाणीत्येकं मतम्। अपरं तु प्राकृतवच्चतुर्विंशतितत्त्वात्मकानि महदादीनीन्द्रियादीनि च सन्तीति। इदं मतद्वयमपि न्यायसिद्धाञ्जने सम्यगाचार्यैरुपवर्णितमिति तत्र द्रष्टव्यम्। नन्विति। एकमेवाद्वितीयमिति द्वितीयनिषेधस्य प्राकृतत्वादिविशेषनिर्देशाभावात्, तथा बहुभवनसंकल्पेऽपि प्राकृतत्वादिविशेषाश्रवणादिति भावः। व्यावघोषी व्यत्ययेन घोषः। कर्मव्यतीहारे णचि रूपम्। ननु "सदेव सोम्य" इति वाक्ये, इदमिति वर्तमानस्य जगतो निर्देशात् कथं स्रक्ष्यमाणव्यपेक्षमिति भाविनिर्देश इत्यत्राह—अयं भाव इति। ननु मायोपाधिविलयोऽस्तु अनन्तरं चोत्पन्नमायोपाधिभ्यां विश्वसृष्टिरस्त्वित्यत्राह—

अयं भाव इति। न हीति। तस्या मायाया मिथ्याभूतत्वात् सता ब्रह्मणैक्यायोगादैक्ये वा ब्रह्मणोऽपि मिथ्यात्वापातात्। तथा च एकमित्यस्य विशिष्टैक्यपरत्वाभावे मायोपाध्योर्विलयः प्रलये आवश्यक इति प्रलयानन्तरं सृष्टिर्न स्यादिति भावः। स्वाभाविकभेदवादी—यादवः ॥ ६१ ॥ नित्यविभूतिसद्भावः

---

ज्ञानत्वं चेद्रहस्यागमविदितमिति स्वीकृतं नित्यभूतेः
षाड्गुण्यात्मत्वमेवं प्रसजति सह तत्पाठतोऽतो जडा सा।
तत्संबन्धात् कुतश्चित्तदुपचरणमित्याहुरेके परे तु
ज्ञानत्वाजाड्यकण्ठोक्त्यनुगुणमवदन्मुख्यतामात्मनीव ॥ ६२ ॥

सर्वार्थः—नित्यविभूतौ जडाजडविकल्पे प्रथमं दर्शयति—ज्ञानत्वमिति ॥ अयं भावः—प्रसिद्धशास्त्रेषु तावदजडत्वं शुद्धस्य सत्त्वस्य न पश्यामः। रहस्यागमवाक्यविशेषैस्तदिष्येत, एष्टव्यं तर्हि षाड्गुण्यमयत्वमपि; तस्यापि तस्मिन्नेव शास्त्रे सहपाठात्। इष्टप्रसङ्गोऽयमिति चेन्न; चेतनत्वप्रसङ्गात्। न च तदप्यस्त्विति वाच्यम्, जीवेश्वरविकल्पबाधात्। षाड्गुण्यमयत्वमौपचारिकमिति चेत्, ज्ञानमयत्वमपि तथैव स्यादविशेषात्। अतस्त्रिगुणविभूतिरिवाद्यापि सा विभूतिरन्याधीनसिद्धितया जडैवेति कुतस्तत्र ज्ञानत्वोक्तिरित्यत्राह—तत्सम्बन्धादिति। निश्शेषाविद्यानिवृत्तिहेतुतया, निरुपाधिकज्ञानविकासस्थानतया, अन्यतो वा कुतश्चित्संबन्धात् आयुर्घृतमितिवज्जडेऽपि ज्ञानत्वोपचार इत्यवोचन् केचित्। पक्षान्तरमुपक्षिपति—परेत्विति। किमात्मिकैवेषा भगवतो व्यक्तिरित्यनुयोगे यदात्मको भगवानिति प्रतिवचनात्, किमात्मको भगवानिति पुनरनुयोगे च ज्ञानात्मक इत्यादिप्रत्युक्तेः, शक्त्यात्मकत्वादिवन्मुख्यत्वविरोधाभावाच्च, स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणमित्युपबृंहणस्वारस्याच्च विषयाश्रयावच्छेदनिरपेक्षं स्वगोचरज्ञाननिरपेक्षप्रकाशनत्वनिमित्तेनात्मनीव ज्ञानत्वं मुख्यमिति ॥ ६२ ॥

---

आनन्द०—पूर्वसङ्गत्या निरूपयति—अथेति। ननु श्रौतेऽर्थे कथं विश्वासः? अन्यदपि तथाश्रौतं चेत्तदप्यस्तु, न तावता श्रुतपरित्याग इत्यत्राह—अयं भाव इति। षाड्गुण्यमयत्वमपीति।

तत्रानन्दमया भोगा लोकाश्चानन्दलक्षणाः।
आनन्दं नाम तल्लोकं परमानन्दलक्षणम्।
षाड्गुण्यप्रचुरा नित्यं स्वाच्छन्द्याद्देशतां गताः।

"पूर्णषाड्गुण्यविग्रहम्" इत्यादिभिः सिद्धमित्यर्थः। "अन्नमयो यज्ञः" "मल्लमयो ग्रामः" इतिवत्तदाश्रयत्वप्रतीतेस्तदङ्गीकारे चेतनत्वं स्यादित्याह—चेतनत्वेति। जीवेश्वरेति। जीवत्वेऽतिप्रसङ्गादीश्वरत्वे सान्तत्वविरोधादिति भावः। शक्त्यात्मकत्वादीति। विशेषणत्वाद्यथा शक्तिरूपत्वं तथा ज्ञानत्वमपि न विरुद्धमिति भावः।

उपबृंहणस्वारस्याच्चेति। स्वसत्तां भासयतीति प्रतीतेरिति भावः। ननु विषयाद्यवच्छेद्याभावे कथं ज्ञानत्वमित्यत्राह—विषयेति। स्वगोचरज्ञाननिरपेक्षत्वस्यैव ज्ञानशब्दप्रवृत्तिनिमित्तत्वादिति भावः। ज्ञानत्वाजाडयकण्ठोक्तीति मूलम्—ज्ञानस्वरूपं यदजाड्यं तस्य कण्ठोक्तिरित्यर्थः॥ ६२॥

## नित्यविभूतिजडत्वाजडत्वपक्षौ

निस्संकोचा समस्तं चुलकयति मतिर्नित्यमुक्तेश्वराणां
बद्धानां नित्यभूतिर्न विलसति ततः कस्य सा स्वप्रकाशा।
मैवं नित्येश्वरादेस्सति मतिविभवे साऽस्तु तेनानपेक्षा
वेद्यानुल्लासकाले मतिरिव न तु सा बन्धकाले विभाति॥६३॥

**सर्वार्थः**—नन्विह जडपक्ष एव साधीयान्, पक्षान्तरं तु न सम्भवमृच्छतीत्यभिप्रायेण चोदयति—निस्संङ्कोचेति॥ न हि कंचित्पुरुषमनपेक्ष्य किंचित्प्रकाशत इति सम्भवति। पुरुषास्तु नित्यमुक्तेश्वरास्सर्वज्ञा निष्प्रतिघया स्वधर्मभूतधिया सर्वं साक्षात्कुर्वते। बद्धानां तु नित्यविभूतिर्न प्रकाशत एव। अतः स्वप्रकाशत्वं न स्यादित्याक्षेपः। तत्र यथाश्रुतस्वारस्यसक्तस्समाधत्ते—मैवमिति। अभिप्रेतं विवृणोति—नित्येति। यथाऽऽत्मनां नित्यस्वप्रकाशानां धर्मभूतधीगृह्यमाणदशायामपि स्वप्रकाशत्वं नापैति, तथा सर्वज्ञैस्तत्तद्धिया साक्षात्क्रियमाणस्यापि शुद्धसत्त्वस्य स्वप्रकाशत्वमविरुद्धमिति। तर्हि सर्वसाधारण्याद् बद्धान् प्रत्यपि भासेतेत्यत्राह—वेद्येति। यथा धर्मभूतज्ञानस्य विषयग्रहणवेलायां स्वाश्रयायैव भातीत्यवस्थाभेदात् पुरुषभेदाच्च भाननियमः, तथा स्वसाक्षात्कर्तॄणामेव स्वयमपि प्रकाशत इति व्यवस्थायां न कश्चिद्बाधः। पुरुषाणां नैरपेक्ष्यं न वस्तुस्वभावं प्रतिरुणद्धीति भावः।

नन्वयं प्रकाशः स्वविषयबुद्धिधर्मो वा स्वधर्मो वा? पूर्वत्र स्वप्रकाशत्वहानिः। उत्तरत्रानादिरागन्तुको वा? आद्ये बद्धान् प्रत्यप्यनादिरिति भानप्रसङ्गो दुर्वारः। द्वितीये कारणानिरूपणादसम्भवः। मैवम्; न ह्यागन्तूनां सर्वेषां विशेषकारणमस्माभिर्विविच्यते। न चास्मदविवेचितमिति नास्ति; अतिप्रसङ्गात्। सामान्यकारणं तु विश्वकर्तुरिच्छादिकं श्रुतमेव। अत एव हि नित्यानां मुक्तानां च स्वच्छन्दचिकीर्षासन्ततिभेदसिद्धिरिति॥ ६३॥

---

**आनन्द०**—आक्षेपसङ्गत्याऽऽह—नन्विति। तत्र किं नित्यमुक्तेश्वरान् प्रति स प्रकाशो व्यवहारहेतुः, उत बद्धान् प्रतीति विकल्प्याद्य आह—पुरुषास्त्विति। तेन नित्यविभूतेस्तान् प्रति तदुक्तिर्युक्तेति भावः। द्वितीयं दूषयति—बद्धानां त्विति। स्वगोचरज्ञानं विनेति शेषः। तत्र यथाश्रुतेति। न हि प्रयोजनमपेक्ष्य श्रुत्यर्थकल्पना, किं तु श्रुतानुसारेण वस्तुसत्त्वमङ्गीकार्यमिति भावः। यथाऽऽत्मनामिति। ननु सुषुप्तिकाले स्वप्रकाशत्वं प्रयोजनवदेव, तदा धर्मभूतज्ञानाभावादिति चेन्न। तथाऽपि नित्येश्व-

राणां प्रयोजनाभावात् स्वप्रकाशत्वं न स्यात्। प्रयोजनाभावेऽपि प्रमाणबलात् स्वीकारे शुद्धसत्त्वेऽपि तुल्यमिति भावः। शङ्कते—तर्हीति। अवस्थाभेदात्—विषयग्रहणावस्थाभेदात्। पुरुषभेदात् तदाश्रयभेदात्, यथा धर्मभूतज्ञानं स्वप्रकाशत्वेऽपि न सर्वं प्रति प्रकाशत्वेन सर्वदा प्रकाशते, तथा स्वसाक्षात्कारकाले तत्तत्पुरुषान्प्रति प्रकाशावस्थावत्त्वादयं नियम इत्यर्थः। ननु तर्हि स्वसाक्षात्कारेणैव प्रकाशोपपत्तौ किमस्य प्रकाशताङ्गीकारेणेत्यत्राह—पुरुषाणामिति। प्रकाशः—प्रकाशत्वं। स्वविषयबुद्धिधर्मः—नित्यविभूतिगोचरधर्मः। स्वधर्मः—नित्यविभूतिधर्मः। अत्र किं विशेषकारणानिरूपणं विवक्षितं, यद्वा सामान्यकारणानिरूपणं, नाद्य इत्याह—न ह्यागन्तूनामिति। अतिप्रसङ्गादिति। विद्युदादेर्जन्यत्वाभावप्रसङ्गादिति भावः। द्वितीय आह—सामान्येति। वस्तुतोऽप्राकृतकार्ये भगवदिच्छैव विशेषकारणं तदतिरिक्तं तु नापेक्ष्यमित्याह—अत एव हीति। विश्वकर्तुरिच्छात इत्यर्थः। मूलं—चुलुकयति—विषयीकरोति। न विलसति—न प्रकाशते। मतिविभवः-मतिविभुत्वम्॥ ६३॥

## नित्यविभूतेरजडत्वपक्षोपपत्तिः

---

तत्त्वान्यप्राकृतानि त्रिगुण इव परीणामतश्चेद्भवेयुः
स्थानादि स्यादनित्यं न यदि न घटते भूततादीति चेन्न।
अन्वर्त्यक्ष्मादितत्त्वक्रमनियतगुणप्रक्रियाद्यैकरूप्या-
न्नित्येऽपि स्यान्निमित्तानुगतिनियमितस्तत्तदाख्याविशेषः॥६४॥

सर्वार्थं०—दिव्यस्थानादेर्नित्यत्वमाक्षिप्य प्रत्याह—तत्त्वानीत्यर्धेन॥ त्रिगुण इव-त्रिगुणद्रव्ये यथा परिणामतः पृथिव्यादिविभागस्तथेत्यर्थः। स्थानादि स्यादनित्यमिति। सङ्घातिनामनित्यत्वे कथं तत्सङ्घातनित्यत्वमिति भावः। अपरिणामपक्षं शङ्कते न यदीति। तत्र चोद्यमाह—न घटत इति। अप्राकृतपञ्चभूतादिव्यपदेशो न युज्यत इत्यर्थः। अनित्येष्वप्याकाशादिपञ्चभूतसमाख्यानिवेशस्यान्यथासिद्धिमाह—अन्वर्त्येति। त्रिगुणविकृतीनां हि तत्त्वानां परिणतिविशेषादेकद्वित्रादिगुणनियतिः। दिव्यतत्त्वानां तु नित्यसिद्धा। ततश्च यथा नित्ये चानित्ये च निमित्तविशेषात् परेषां पृथिव्यादिशब्दः, तथाऽत्रापि तत्तद्गुणतारतम्यनिमित्तस्तत्तच्छब्द इति नित्यत्वाविरोधः॥ ६४॥

---

आनन्द०—पूर्वसङ्गत्याऽऽह—दिव्यस्थानादेरिति। संघातिनामिति। पृथिव्यादीनामनित्यत्वे तत्संघातभूतस्थानादीनामनित्यत्वमिति भावः। आदिशब्देन विग्रहादेर्ग्रहः। अप्राकृतेति। आकाशादिक्रमेणोत्पत्तावेव ह्येकद्व्यादिगुणयोगनिमित्ताकाशादिव्यपदेश इति भावः। अन्यथासिद्धिः -प्रकारान्तरेण निर्वाहः। एकद्वित्र्यादिगुणनियतिरिति। नन्वत्र 'संख्ययाऽव्ययासन्न' इति बहुव्रीहिर्न संभवति, तत्र पदद्वयस्यैव समासोक्तेः। अनेकेषां समासेऽपि 'बहुव्रीहौ' इति समासान्तप्रसङ्गादिति चेत्, अत्राहुः—

द्वन्द्वो वा समासः। नच 'त्यदादीनि' इति समासबाधः। 'संख्याया अल्पीयस्याः' इति 'द्व्येकयोः' इति निर्देशेन च संख्याशब्देषु तदप्रवृत्तिज्ञापनात्। अत एव द्वौ वा द्वौ वेति विग्रहे एकशेषमात्रस्य अप्रवृत्त्या द्विशब्दे बहुवचनाभावात्सर्वत्र द्विवचनमेवेति शाब्दानां वचनमप्युपपद्यते। अत एव 'द्व्येकयोः' इति द्विवचनमिति वदद्भिश्शाब्दैर्द्विवचननिर्देश एव भावप्रधाननिर्देशे हेतूकृतो न त्वेकशेषप्रसङ्गः। सरूपद्वन्द्वाभावस्त्वनभिधानात्। यद्वा बहुव्रीहिरेव समासः। समासान्तशास्त्रस्यानित्यत्वाद्वा तदुपपत्तिरिति। एकद्वित्रेति पाठ इत्यन्ते। तथाऽत्रापीति। शब्दमात्रगुणकमाकाशशब्दवाच्यं, शब्दस्पर्शमात्रगुणकं वायुशब्दवाच्यं, शब्दस्पर्शरूपगुणकं तेजश्शब्दवाच्यं, तदेव रसविशिष्टं जलशब्दवाच्यं, तदेव गन्धसहितं पृथिवीशब्दवाच्यमिति नित्यानित्यसाधारण्यमिति भावः॥ ६४॥

## अप्राकृतस्थानादेरनित्यत्वादिपरिहारः

निर्दिष्टं पौष्करादौ स्वयमखिलकृता स्वं वपुर्नित्यसिद्धं
नित्याऽलिङ्गेति चैकायननिगमविदो वाक्यभाष्यादि चैवम्।
नित्यत्वं वासुदेवाह्वयवपुषि जगौ मोक्षधर्मे मुनीन्द्रो
नित्येच्छातस्तथा तत्तदिह विहतिमान् सांशजन्मादितर्कः॥६५॥

सर्वार्थ०—अथ परविग्रहनित्यतां प्रमाणतः स्थापयति—निर्दिष्टमिति। श्रीपौष्करे तावत् 'नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर' इति। श्रीसात्वते च 'नित्यं नित्याकृतिधर'मिति। भगवन्मूर्तिं प्रस्तुत्य नित्याऽलिङ्गा स्वभावसंसिद्धिरिति रहस्याम्नायोक्तमाह—नित्येति। अत्र ब्रह्मनन्द्यादिसंप्रदायमाह—वाक्येति। आप्ततमोपबृंहणमाह—नित्यत्वमिति। यथा—

नित्यं हि नास्ति जगति भूतं स्थावर जङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥

इति। श्रीवैष्णवे पुराणे—सदैकरूपरूपायेति। इच्छागृहीताभिमतोरुदेह इति स्मरणाद्विग्रहस्येच्छागृहीतत्वे कथं नित्यत्वम्, तस्मिन् वा कथं तदित्यत्राह—नित्येच्छात इति। अयं भावः—अवतारविग्रहेषु तावदिच्छागृहीतत्वमविरुद्धम्। नित्येऽप्यनिच्छायामनित्यत्वप्रसङ्गमभिसंन्धाय नित्येच्छाधीनस्थितित्वविवक्षयेच्छागृहीतत्ववाचोयुक्तिर्युक्तेति। अत्र तर्कबाधं परिहरति—तदिति। तथा—प्रमाणसिद्धत्वादित्यर्थः। सांशत्वेन जन्मादिसहितत्वं तद्विरहेण वा निरंशत्वं प्रसञ्जयितुं न शक्यमिति भावः। यत्तु कैश्चिदुच्यते—नित्यं निष्कलं निर्विकारं च परं ब्रह्म अशरीरश्रुत्या स्वरूपत एव विचित्रविग्रहाकारम्; तत एव विग्रह[ा]नित्यत्वम्; न चात्र स्वरूपविग्रहयोर्भेदः, नापि भेदाभेदप्रसङ्ग इति, न तद्भावनीयम्; अन्यथा विश्वाद्वैतस्यापि संग्राह्यत्वप्रसङ्गादिति॥ ६५॥

आनन्द०—अत्रापि पूर्वसङ्गतिरेवेत्यभिप्रायेणाह—अथेति। तदाकारः—तस्य विग्रहः। नित्या लिङ्गा—लिङ्गानि विग्रहाः। लिङ्गव्यत्ययश्छान्दसः। स्वभावतस्संसिद्धेरत्यर्थे कर्मणि क्तिन्। वाक्यकारेऽपि····इत्यभिप्रायेणाह—अत्रेति। आदिपदेन द्रमिडभाष्यकारादयः। आप्ततमेति। "भारतः पञ्चमो वेदः" इति प्रसिद्धिरिति

भावः। सदेकरूपं रूपं यस्येति विग्रहात् सदेकरूपत्वोक्तेरिति भावः। ननु "नित्येच्छातस्तदा तत्" इत्यनेन नित्येच्छासिद्धत्वमुक्तम्। न च नित्यजन्यत्वेन नित्यत्वम्, सर्वस्यापि नित्येश्वरजन्यत्वेन नित्यत्वप्रसङ्गादित्यत आह—अयं भाव इति। भगवतो विग्रहा द्विविधाः, नित्या अनित्याश्च। तत्रानित्यविषयमिच्छागृहीतवचनमिति भावः। साधारण्येऽपि न दोष इत्याह—नित्येऽपीति। इच्छाव्यतिरेके विग्रहव्यतिरेक इति व्याप्तिसंभवादित्यर्थः। सांशत्वेनेत्यादि। प्रमाणबाधितत्वादिति भावः। माध्वमतमनुवदति—यस्त्विति। तद्दूषयति—न तद्भावनीयमिति। 'निष्कलं—निर्विकारम्' इत्यादिश्रुत्या निरवयवत्वनिर्विकारत्वादिप्रतिपादनात्। यदि प्रमाणविरुद्धमपि सिध्येत्तदाऽऽह—अन्यथेति। विज्ञानघनत्वादिप्रतिपादनस्य जडतादात्म्येऽपि विरोधाभावप्रतिपादनप्रसङ्गादिति भावः। अत्र केचिद्भगवतो विग्रहा नित्या एवेति वदन्ति। तथा सति "विग्रहे च व्यूहविभवादयः, कालकर्माधीनपरिणाममात्रं हि तेषु निषेध्यं, न तु भगवत्संकल्पमात्रकृतमपि। तदेव शरीराण्यपि कानिचिन्नित्यानामीश्वरस्य वा अनित्येच्छापरिग्रहादनित्यानि" इत्यादिन्यायसिद्धाञ्जनग्रन्थविरोधः॥ ६५॥

परविग्रहनित्यत्वम्

---

अस्त्रैर्वा भूषणैर्वा किमिह भगवतोऽवाप्तकामस्य तस्मा-
द्देवो देहेऽपि वीतावरण इति जगुः केऽपि जैनोपजप्ताः।
किं वा देहेन विश्वात्मन इति वदतां किं प्रतिब्रूयुरेते
तच्चेत्तस्याश्रितार्थं तदधिकरणकं सर्वमप्येवमस्तु॥ ६६॥

**सर्वार्थ०**—केचिदाहुः - वीरशृङ्गारादिरसानुबन्धीनि अस्त्रभूषणा[दी]नि; तानि तदुचिताधिकारिणां यद्यपि तत्तद्विग्रहेष्वनुसंधेयानि, तथाऽप्यत्यन्तनिष्कामानां तादृशचिन्तनमयुक्तं प्रशान्तं साक्षसूत्रकमित्यादिविशेषणाच्च; न चावाप्तसमस्तकामस्य निर्दोषो निरनिष्ट इत्यादिप्रख्यातप्रकारस्य परमात्मनो भूषणादिसाध्यं किंचिदस्ति। अत इदमुच्यते—न ते रूपं न चाकारो नायुधानि न चास्पदमिति; तदिदमनुभाषते—अस्त्रैरिति॥ देहेऽपीत्यादिकमुपालम्भकाकुगर्भम्। अपिशब्देन स्वरूपे वीतावरणत्वं व्यज्यते; तेनातिरोहितस्वभावत्वमनुसन्धत्ते। अत्र प्रतिबन्दिमुखेन परिहारमाह—किं वेति। अयं भावः—विश्वशरीरिण ईश्वरस्य किं विशेषतः केनचिद्विग्रहेण परिगृहीतेनेति चोदयतां किमेते प्रत्युत्तरं ब्रूयुः? अथ योगविशेषसक्तानां चित्तालम्बनसिद्ध्यर्थमीश्वरस्य दिव्यगात्रपरिग्रह इति तथैवास्त्रभूषणादिपरिग्रहोऽपीति तुल्यप्रमाणसिद्धत्वादेष्टव्यम्। न च शान्त्यर्थभावानां विरोधः; यथोपदेशमस्त्राद्युपयोगस्य स्वीकार्यत्वात्, दामोदरं बन्धगत इतिवत्। तथा भगवज्जन्मादिवेदिनो जन्मादिनिवृत्तिश्च स्मर्यते। ऊहमात्रेण विरोधक्लृप्तिरत्यतिप्रसक्त्यै स्यात्॥ ६६॥

**आनन्द०**—अत्रापि पूर्ववत् सङ्गतिरित्यभिप्रायेणाह—**केचिदिति**। वीररसानुबन्धीनि शङ्खचक्रादीन्यस्त्राणि, शृङ्गाररसानुबन्धीनि कौस्तुभादिभूषणानि। **तदुचिताधिकारिणामिति**। परनिग्रहकामानां नृसिंहत्रिविक्रमादिध्याने—

चक्रं शङ्खं खड्गं शार्ङ्गं नन्दकमेव च।
शूलं परश्वथं शक्तिः,

इत्यादिभिः—

हारकेयूरकटककौस्तुभादिविराजितम्।
गोपिकामध्यगं वेणुं पूरयन्तं रविप्रभम्॥

इत्यादिभिश्च नृसिंहगोपालादिध्यानादावभिधानादिति भावः। **प्रशान्तमिति**। पुरुषोत्तममन्त्रोपासनध्याने निष्कामानां चिन्तोक्ता। तत्राक्षसूत्रादिकं नास्त्राभरणादिकमिति भावः। ननु तत्तदधिकारिणां तत्तदायुधभूषणादिकं ध्यानोपयोगि भवतु; निष्कामस्य माऽस्तु; तथाऽपि त्रिवर्गस्यैव तत्सद्भावे न किंचित् बाधकमित्यत्राह—**न चेति**। तथास्त्रभूषणादिभिः किंचित्साध्यं प्रयोजनं वक्तव्यं, प्रयोजनं चेष्टप्राप्तिरनिष्टनिरसनं च। तत्रावाप्तसमस्तकामत्वान्नेष्टमवाप्तव्यमस्ति; निर्दुःखत्वात्सर्वसमत्वेनानिष्टानामभावाच्च न निवर्तनीयं चेति प्रयोजनाभावान्न तत्सिद्धिरिति भावः। अत्र जितन्तास्तोत्रवचनमपि संवादयति—**अत इति**। ननु साध्याभावेऽपि तद्भ्रमायायुधादिकमस्त्वित्यत्राह—**अपिशब्देनेति**। ननु कथं देहवत्तामात्रेणास्त्रादेः प्रयोजनवत्त्वमित्यत्राह—**अयं भाव इति**।

"तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे।"

इत्युक्तरीत्या समाधानं वक्तुमाह—**अथेति**। **यथोपदेशमिति**। भक्तानिष्टनिरसनादेः प्रयोजनत्वादिति भावः। "ज्वरार्तो जलशायिनम्" इत्यादिशब्दार्थः। **स्मर्यत इति**।

जन्म कर्म च मे दिव्यं एवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥

इत्यादिरित्यर्थः। **ऊहमात्रेणेति**। आयुधादिमत्त्वाङ्गीकारेऽवाप्तसमस्तकामत्वविरोधो लोकवदित्यादितर्कैरित्यर्थः। तथा सति श्रौतमात्रे तर्केण बाधः शक्योत्प्रेक्ष इति भावः। **तदधिकरणकं सर्वमिति मूलं**-शरीराधिकरणकमस्त्रभूषणादिकमित्यर्थः॥६६॥

**परस्यास्त्रभूषणाद्यनुपपत्तिपरिहारः**

रूपस्थानायुधाख्याजनिलयविधूतिव्यापृतीच्छागुणादे-
विश्वाधारे निषेधो विधिरपि विषयद्वैतशाम्यद्विरोधौ।
इत्थंभूते निषेधः क्वचिदपि न विधिं बाधते सावकाशः
कल्याणैरस्य योगस्तदितरविरहोऽप्येकवाक्यश्रुतौ च ॥ ६७ ॥

सर्वार्थ० –ये तु मन्यन्ते—परस्य ब्रह्मणो विग्रहादिषु विधिनिषेधौ दृश्येते, तत्र निषेधप्राबल्याद्विधीनामन्यार्थत्वमिति, तान् प्रत्याह—रूपेति ॥ विषयद्वैतं —विषयभेदः। तेन विधिनिषेधौ शाम्यद्विरोधौ। ततः किमित्यत्राह—इत्थमिति। इत्थंभूते—आलम्भादिवद्विशेषविधिसिद्धावित्यर्थः। एवमनभ्युपगमेऽतिप्रसङ्ग इति भावः। विधिनिषेधयोरत्र विषयभेदं विवृण्वन् तस्यैकश्रुतिपठितत्वेन न्यायनिरपेक्षप्रसिद्धिमप्याह—कल्याणैरिति। एतेनापच्छेदन्यायस्यात्र दूरनिरस्तत्वं सूच्यते ॥ ६७ ॥

---

आनन्द०—आक्षेपसङ्गतिमाह—ये तु मन्यन्त इति। विषयद्वैतमिति। द्वयोर्भावो द्विता, द्वितैव द्वैतं, स्वार्थे प्रज्ञादित्वादण्। केचित्तु द्वितायास्सम्बन्धभेदो द्वैतमित्याहुः। एकश्रुतिपठितत्वेनेति।

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।'
"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"

इत्यादिश्रुतयः। एतेनेति। पदाहवनीयन्यायविषयत्वादिति भावः। रूपमित्यादिमूलं-रूपं—विग्रहः। स्थानं वैकुण्ठादि। आयुधं चक्रादि। आख्या वासुदेवादिसमाख्या। जनिः उत्पत्तिः। लयः अतिसूक्ष्मावस्था। विधूतिः जगद्धारणम्। व्यापृतिः सृष्टिव्यापारः ॥ ६७ ॥

## विग्रहादिविधिनिषेधविरोधप्रशमनम्

---

देहादिर्देवतानां हविरनुभवनं सन्निधेर्यौगपद्यं
प्रीतिर्दानं फलस्याप्यसदिति कथयन्त्यर्धलोकायतस्थाः।
तन्नाध्यक्षादिदूरस्वमहिमसदृशाशेषवैशिष्ट्यमासां
तत्तद्विध्यर्थवादप्रभृतिभिरविदुस्तत्परैरेव शिष्टाः ॥ ६८ ॥

सर्वार्थ० —अत्र प्रसङ्गात् सर्वदेवतानां विग्रहादिपञ्चकनिरासं परिहर्तुं तमनुभाषते—देहादिरिति ॥ आदिशब्देन इन्द्रियभोग्यभोगोपकरणादिसंग्रहः। अर्धलोकायतमतम् —कर्माराध्यापह्नवमतम्। एतत्प्रतिक्षिपति—तत्रेति। तस्मिन् पक्षे प्रतिक्षेप्ये सतीत्यर्थः। अध्यक्षादिदूरत्वोक्तिः यूपादित्यैक्यादिवन्नात्र बाधप्रसङ्ग इति ज्ञापनार्थम्। स्वमहिमसदृशत्वोक्त्या स्वपरोपयोगिसाधनानुगुण्यसूचनम्। अशेषशब्देन तत्तदाराध्यप्रतिनियतविग्रहतदनुबन्ध्यस्त्रादिसर्वसंग्रहः। प्रभृतिशब्देन मन्त्राणां स्मृतीतिहासपुराणानां च संग्रहः। अप्रधानेऽप्युपयुक्ते तात्पर्यमस्त्येवेत्यभिप्रायेण तत्परैरेवेत्युक्तम्।

**देवताधिकरणे च** विग्रहादिनिरासो न सूत्रोक्तः प्रयोजकाप्रयोजकविभागमात्रं तु न विग्रहादिसदसत्त्वापेक्षम्। हविर्देवतासामान्ये हविर्बलीयस्त्वं प्रमाणप्रसक्तिवैषम्यात्। विशेषणतः पर्यायतश्च देवताभेदोक्तिस्तथातयोद्देशार्था। विस्तरस्त्वन्यत्र। शिष्टाः—बोधायनटङ्कद्रमिडादयः ।। ६८ ।।

---

आनन्द० –सङ्गतिः स्पष्टेत्याह—**अत्रेति**। आदिशब्देन भोगस्थानादेर्ग्रहः। **कर्माराध्येति**। मीमांसकमतमित्यर्थः। **स्वपरोपयोगेति**। देवतानामतिमहिमतया तद्विग्रहादीनां स्वपरोपयोगहेतुत्वमस्तीति भावः। तदनुबन्धीनि इन्द्रियाणि। आदिशब्देन देशादेर्ग्रहः। **प्रभृतिशब्देनेति**। तेषु विग्रहादिमत्त्वश्रवणादिति भावः। ननु मन्त्रार्थवादादीनामन्यशेषत्वात् कथं विग्रहादिपरत्वमित्यत्राह—**अप्रधानेऽपीति**। 'यन्न दुःखेन' इत्यादेरर्थवादस्य विध्यनुगुणस्वार्थे तात्पर्याङ्गीकारादिति भावः। ननु 'देवता वा प्रयोजयेदतिथिवत्' इति विग्रहादिमत्त्वे देवताया एव यागप्रयोजकत्वं स्यात्, यथाऽतिथेरातिथ्यप्रयोजकत्वम्। तथा च देवताधिकरणविरोध इत्यत्राह—**देवताधिकरणे चेति**। 'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात्' इति सूत्रेण देवताया आर्थप्राधान्येऽपि विधिवाक्येन स्वर्गसाधनतया कर्म कर्तव्यतया चोदितं पुरुषं प्रवर्त्तयतीति प्रयोजकत्वतदभावचिन्ता तत्र क्रियते; न तत्र विग्रहसत्त्वासत्त्वविचार इति भावः।

ननु विशेषातिदेशलक्षणे 'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' इत्यधिकरणे द्रव्यदेवतयोस्साम्ये द्रव्यबलीयस्त्वसमर्थनं देवतासत्त्वे न स्यादित्यत्राह—**हविर्देवतेति**। अत्र हि देवताया अभावान्न द्रव्यसाम्यस्य प्राबल्यमपि तु द्रव्यस्य प्रत्यक्षत्वेन शीघ्रोपस्थितिकत्वाद्देवताया अतीन्द्रियत्वेन तत्साम्यस्य विलम्बितप्रतीतिकत्वादिति भावः। 'इन्द्राय राज्ञ एकादशकपालं निर्वपेत्' इत्यारभ्य विहितत्रिपुरोडाशिन्यां 'अभिगमनेनावद्यति' इति सहावदानप्रयुक्तसहप्रदानप्राप्तौ 'नाना वा देवतापृथक्त्वात्' इति देवतापृथक्त्वात् पृथक्प्रदानं समर्थितं, तन्न स्यात्, पृथक्त्वायोगात्। एकस्यैवेन्द्रस्य राजत्वाधिराजत्वादिविशेषणयोगेन भेदाभावात्। तथा च नातिरिक्ता देवता। सोर्यंपौष्णचर्वोर्देवताभेदाभावादूहे कर्तव्ये 'सूर्याय जुष्टं निर्वपामि सूर्यायेदं पूष्ण इदम्' इत्याद्युद्देशत्यागे चानियमस्स्यादित्यत्राह—**विशेषणेति**। तत्तद्विशेषणवता तत्तच्छब्देनैवोद्देशत्यागः कर्तव्य इति नियमार्थं शास्त्रे नामविशेषणभेदादौपचारिको भेद उक्तः। यथा प्रवर्तनालाघवाद्विधे रन्यतस्सिद्धाग्निविद्याद्यपेक्षिणो न स्वतस्तत्र प्रयोजकत्वं, तथा विधिगतशब्दस्योपस्थिततया न शब्दान्तरा·····हादिना ···ह। किं च यथा 'न हिंस्यात्' इति रागप्राप्तहिंसादेरेव शीघ्रोपस्थितिकतया निषेध्यत्वं तथा विधिगतशब्दस्यैव शीघ्रोपस्थितिकतयोहादौ ग्रहो न तत्परित्यागो मानाभावात्। केचित्तु विशेष्यभेदाभावेऽपि विशेषणप्रयोगादुद्देशे ऊहे च नियम उपपद्यते। प्रदानभेदश्च विशेषणप्रयुक्तभेदमादायैव, अन्यथा विशेषणवैयर्थ्यादिति वदन्ति। तस्मान्न तद्वशेन देवताद्यभिलाप इति भावः। **अन्यत्रेति**। 'तदुपर्यपि बादरायणः सम्भवात्' इत्यधिकरणभाष्यादावित्यर्थः। आदि-

शब्देन गुहादयो विवक्षिताः। मूलं—हविरनुभवनं—हविर्ग्रहणं तद्भक्षणम्। यौगपद्यं सन्निधेः—युगपन्नानादेशेषु सन्निधानम्। प्रीतिः—देवतायाः कर्मजन्या प्रीतिः। फलस्य दानं—फलप्रदानमित्यर्थः॥ ६८॥

## विग्रहादिनिराकरणपरिहारः

साधुत्राणादिहेतोस्तदुचितसमये विग्रहांशैः स्वकीयैः
स्वेच्छातस्सत्यरूपो विभुरवतरति स्वान् गुणौघाननुज्झन्।
व्यूहे सकर्षणादौ गुणनियतिरभिव्यक्तिवैषम्यमात्रा-
द्वृद्धिह्रासाद्यभावात् स हि भवति सदा पूर्णषाड्गुण्यशाली॥६९॥

सर्वार्थ०—यद्यपि भगवतो गुणविग्रहादियोगस्सत्यः, तथाऽपि षाड्गुण्यस्य व्यापित्वमयुक्तम्; विभवेषु विपरीतदृष्टेः, व्यूहेषु संकर्षणादिषु ज्ञानबलादिगुणद्वन्द्वनियमोक्तेरित्यत्राह—साधुत्राणेति॥ अजोऽपि सन्नव्ययात्मेत्यादिप्रसिद्धमिह प्रतिसन्धेयम्। प्रतिनियतगुणद्वन्द्वोक्तेरन्यथासिद्धिमाह—व्यूह इति। अयं भावः—

निगूहनं चतुष्काणां द्वन्द्वानां च प्रकाशनम्।
षड्गुणस्य तथाभूतसमाधिस्थोपयोगतः॥

मोहनशक्त्या मनुष्यादिसजातीयशङ्कास्पदेषु विभवेष्वपि हि सिद्धं षाड्गुण्यम्। व्यूहेषु कैमुत्यसिद्धम्। सर्वेष्वपि हि भगवत्त्वं पूर्णत्वं च प्रख्याप्यते। संकर्षणादौ व्यवस्थया गुणद्वन्द्वाभिव्यक्तेः गुणचतुष्कान्तराणामनभिव्यक्तेश्च विशेषनिर्देशोपपत्तिरिति। न कर्मणा वर्द्धते नो कनीयान्, स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान्, अन्यूनश्चाप्यवृद्धश्चेत्यादिश्रुतिस्मृतिबलेन वृद्धिह्रासाद्यभावाद् व्यूहादिषु गुणकार्त्स्न्यमाह—वृद्धीति॥ ६९॥

---

आनन्द०—प्रसङ्गादाह—यद्यपीति। हेतुमाह—विभवेष्विति। सार्वत्रिकत्वे रामकृष्णादिष्वज्ञानाशक्त्यादिदर्शनस्यादिनिरुद्धादिविभवेषु व्यवस्थायाश्चानुपपत्तेरिति भावः। 'अजोऽपि सन्' इति गीतायां स्पष्टमुक्तेरित्यर्थः। ननु षाड्गुण्यं क्वचिदभिव्यक्तं चेत् सर्वदा सर्वत्राभिव्यक्तिः स्यात्। न चेत्कदाचिदपि कुत्रापि न स्यात्। न च जीवापहतपाप्मत्वादितुल्यता, जीवेऽभिभावककर्मसत्त्वेन तदुपपत्तेः। तद्वद्भगवतः कर्मवश्यत्वाभावादित्याह—अयं भाव इति। तथाचानभिव्यक्तेरन्यकारणत्वान्न भगवतः कर्मवश्यत्वमिति भावः। निगूहनं चेति। षड्गुणस्य षण्णां गुणानां मध्ये, पात्रादित्वात् साधुः। चतुष्काणां चतुर्णां निगूहनम्। स्वार्थिकः कः। द्वंद्वानां—क्रमेण द्वयोरित्यर्थः। समाधिस्थोपयोगतः—तथाभूतसमाधिनिष्ठपुरुषानुग्रहायेत्यर्थः। भगवत्त्वं षाड्गुण्यम्। सर्वत्र पूर्णत्वे प्रमाणमाह—न कर्मणा वर्धत इति। व्यूहादिष्विति। अवतारस्य सत्यत्वमजहत्स्वस्वभावतेत्यादिकमनुसंधेयम्।

मूलं—तदुचितसमये 'यदा यदा हि धर्मस्य' इत्यादिनोक्तसमये, विग्रहांशैः स 'उज्जहारात्मनः केशौ सितकृष्णौ' इत्यादिकमनुसन्धेयम्। स्वेच्छात इत्यादि। 'स्वेच्छामात्रनिदानता' इत्यादिकमिहानुसंधेयम्। ॥ ६९ ॥

## परव्यूहादिपञ्चरूपस्यापि पूर्णषाड्गुण्यवत्त्वम्

शास्त्रादीनां प्रवृत्तिः प्रतितनुनियता स्याद्धि संकर्षणादौ
जीवादौ या विभज्याभिमतिरिह लयोत्पत्तिरक्षाविधिश्च।
तत्तद्विद्याविशेषप्रतिनियतगुणन्यायतस्तौ तु नेयौ
सर्वस्यैकोऽभिमन्ता स हि सकलजगद्व्यापृतिष्वेककर्ता ॥ ७० ॥

सर्वार्थ०—उक्तेषु व्यूहेषु क्रमाच्छास्त्रप्रवर्तनधर्मनयनतत्त्वगमनरूपमुपकारत्रयं जीवमनोहङ्कारेष्वभिमानत्रयं संहारसृष्टिरक्षारूपलीलात्रयं च व्यपदिश्यते; तत्र प्रथमत्रिके व्यवस्थानुपपत्तिचोद्यं सुपरिहरमित्यभिप्रायेणाह शास्त्रादीनामिति ॥ द्वितीयतृतीयत्रिके विरोधं परिजिहीर्षुरनुभाषते—जीवादाविति। अत्रेदमाभिप्रायिकं चोद्यम्—यदि सङ्कर्षणादयोऽपि वासुदेव एव स्युस्तदा अभिमानत्रयस्य संजिहीर्षादित्रयस्य चैकाश्रयत्वाद्व्यवस्था न स्यात्; अतस्ते परस्मादन्ये केचित् पुरुषा इति। परिहरति—तत्तदिति। यथैक एव परमात्मा तत्तद्विद्याविशेषव्यवस्थितगुणविशेषवत्तयोपास्य इति गुणोपसंहारपादे निरणायि, तथाऽत्रापि मिथस्संघटितविग्रहाभिमानव्यापारविशेषवत्तया व्यूहनिष्ठैर्विभज्यानुसन्धेय इति भावः। चेतनभेदक्लृप्तौ बाधमाह—सर्वस्येति। न हि विश्वमूर्तेरभिमानः कश्चित्संकुचति, न च संहारादौ क्वचिदुदास्ते, न च हिरण्यगर्भादिवद्विग्रहणभूतचेतनान्तराण्यत्र वचनान्तरप्राप्तानि; प्रत्युतैक्यमेव प्रतिपादितमित्याशयः ॥ ७० ॥

---

आनन्द०—प्रसंगस्संगतिः। शास्त्रप्रवर्तनं—तदुपदेशः धर्मनयनं धर्माचारः। तत्त्वगमनं—तत्त्वप्रेरणम्। तत्रेति। शरीरव्यापारत्वेन व्यवस्थोपपत्तेरिति भावः। ननूत्तरत्रिकद्वये कथं व्यवस्थानुपपत्तिः तत्रापि शरीरभेदमादाय परिहारसंभवादित्यत्राह—अत्रेदमिति। एकाश्रयत्वादिति। शास्त्रप्रवर्तनादिवच्छरीरद्वारकत्वाभावादिति भावः। संकुचति—प्रादेशिक इत्यर्थः। न च संहारादौ क्वचिदुदास्ते—संहारादिव्यापारे कर्तव्ये क्वचित् प्रदेशविशेषउदासीनो भवति, परमात्मन एकदेशे संजिहीर्षाभाव इत्यर्थः। तदन्यपुरुषाङ्गीकारे तु प्रदेशभेदेन प्रलयादिकं स्यात्, त्रयाणां तुल्यतया प्रतिवन्धप्रसङ्ग इति भावः। मूलं—प्रतितनु - शरीरभेदेन, अभिमतिः अभिमानं, लयः-संहारः, रक्षा रक्षणं, तेषां, द्वन्द्वान्ते श्रूयमाणो विधिशब्दः प्रत्येकं संबध्यते, तौ—अभिमतो रक्षाविधिश्च। 'पुमांस्त्रिया' इति पुंसः शेषः ॥ ७० ॥

## व्यूहेषु विशेषाभिमानादिविरोधपरिहारः

त्रिव्यूहः क्वापि देवः क्वचिदपि हि चतुर्व्यूह उक्तस्तथैवं
व्याघातेऽन्योन्यबाधादुभयमिदमसत्कल्पनामात्रमस्तु ।
तन्नाद्ये व्यूहभेदे त्रियुगगुणतया चिन्तनीये परस्मा-
द्युक्ता भेदाविवक्षा तदनुपगमने तत्त्वसंख्यादिबाधः ॥ ७१ ॥

**सर्वार्थ०**—मानमेयमलिम्लुचास्त्वाहुः—त्रिव्यूहचतुर्व्यूहवाक्ययोर्विरोधात् सर्व-मेतदुपासनार्थंकल्पनामात्रसिद्धमिति । तदनूद्यते—त्रिव्यूह इति ॥ प्रतिवदति-तन्नेति । विरोधं शमयति—आद्य इति । वस्तुतश्चतुर्व्यूहत्वेऽप्याद्यव्यूहस्य षड्गुणतयाऽनुसन्धेय-त्वात् परस्मादभेदं विवक्षित्वा त्रिव्यूहत्वोक्तिः प्रवृत्तेति न मिथो बाधश्शङ्कनीय इति हृदयम् । उक्तप्रकारानभ्युपगमेऽतिप्रसङ्गमाह —तदनुपगमन इति । एवमिह प्रसङ्गः—यदि न्यूनाधिकनिर्देशमात्राद्विरोधः, तदा क्वचिदप्यनुक्तमन्यतो ग्राह्यं न स्यात्; ततश्च विद्यैक्ये गुणोपसंहारस्त्यज्येत; तथाचच्छान्दोग्ये भूतत्रयं तैत्तिरीयके भूतपञ्चकम् अन्यत्र च तथा तथा न्यूनमधिकं च तत्त्वजातमधीतमिति तत्त्वसंख्याव्यवस्थापनं च विलीये-तेति । आतिवाहिकगणनादिसंग्रहार्थः आदिशब्दः । एवं च पञ्चमूर्त्यादिपरिगणनाऽपि परित्रातेति वेदितव्यम् ॥ ७१ ॥

---

**आनन्द०**—आक्षेपसङ्गतिं दर्शयति – मानमेयेति । उपासनार्थमिति । तथा-सति नार्थविरोधोऽर्थस्यैकरूप्यादिति भावः । विद्यैक्य इत्युपलक्षणम् । कर्मकाण्डेऽपि शाखाभेदेनाम्नातानामुपसंहारो न स्यादिति द्रष्टव्यम् । छान्दोग्ये भूतत्रयमिति । 'हन्ताहमिमास्तिस्रो देवताः' इति पृथिव्यप्तेजसामेवाध्ययनात् । तैत्तिरीयक इति । 'आत्मन आकाशस्संभूतः । आकाशाद्वायुः' इत्यादिभिरित्यर्थः । एवं च पञ्चमूर्त्या-दीति । परव्यूहविभवान्तर्याम्यर्चावताररूपेण । मूलं—त्रियुगगुणतया चिन्तनीये—त्रियुगः ज्ञानादिषड्गुणवान्, तस्य गुणतया ध्यातव्ये । केचित्तु—त्रियुगं युगत्रयं तद्गुणकत्वेनेत्यर्थं इत्याहुः । (अ) भेदाविवक्षा-अभेदेन पृथग्विवक्षा नास्तीत्यर्थः ॥७१॥

## व्यूहगणनावैषम्यनिर्वाहः

---

मूर्तीनां मूलमूलिप्रभृतिषु बहुधा वैपरीत्यप्रतीते-
र्वर्णादौ बीजतादिव्यवहृतिवदियं वर्णना भावनार्था ।
मैवं कालादिभेदात् प्रशमितविहतौ कल्पितत्वं न कल्प्यं
नो चेद् ब्रह्माद्युदन्तेष्वपि विषमकथाभेदवैयाकुली स्यात् ॥ ७२ ॥

**सर्वार्थ०**--पुनरपि मुखान्तरेण मूर्तिकल्पनामनुभाषते--मूर्तीनामिति ॥ अस्ति हि तत्तत्संहितास्वभिन्ननाम्नो मूर्तेर्भिन्नकारणकत्वं वर्णभुजादिवैषम्यं च । अतो मन्त्रा-क्षरेषु बीजतत्कार्यव्यपदेशवत् सितरक्तादिव्यपदेशवच्च भावनार्थं दृष्ट्युपदेशमात्रमेत-दिति भावः । एतन्निषेधति–मैवमिति । काल्पनिकत्वशङ्कामूलं विरोधं परिहरति--कालादिभेदादिति । उक्तानभ्युपगमेऽतिप्रसङ्गमाह--नो चेदिति । सन्ति हि चतुर्मु-

खस्य सप्त जन्मानि; रुद्रस्य ब्रह्मपुत्रत्वं ब्रह्मानुजत्वं च। इन्द्रादीनामपि कारणभेदाः कथ्यन्ते। न चैतेषु कल्पादिभेदप्रशमितविरोधेषु काल्पनिकत्वशङ्कावकाशः, तथाऽत्रापि स्यात्; अन्यथा तत्रापि विपरीतापत्तिरिति ॥ ७२ ॥

---

आनन्द०—पूर्वसङ्गतिमेव दर्शयति- पुनरपीति। अस्ति हीति ' एकस्य भिन्नकारणकत्वं विरुद्धमिति भावः। वर्णं रक्तादि, आदिशब्देन मूर्धादयः। अत इति। वर्णानां परस्परोपादानोपादेयभावशुक्लगुणाद्यभावेऽपि अं बीजं शुक्लो वर्णं इत्यादि मन्त्रशास्त्रे व्यपदिश्यत इति भावः। काल्पनिकत्वेऽपि यथा वह्नेर्व्यक्तिभेदेन नानाकारणकत्वम्, तथा कालभेदेन भिन्नानां मन्त्रमूर्तीनां सर्वमुपपन्नमिति भावः। न केवलं पञ्चरात्राद्युक्त एव एवं परिहारः, किं तु श्रुतिस्मृत्याद्युक्तोऽपीत्याह—सन्ति हीति। चन्द्रादीनामिति। अत्रिनेत्रसमुद्रमधुरिपुमानसादिप्रभवत्वमित्यर्थः। आदिशब्देन वसिष्ठादय उक्ताः। उदन्तः—वृत्तान्तः। विषमकथाभेदः—नानाविधसृष्टिवादविशेषः ॥ ७२ ॥

## प्रादुर्भावादिप्रक्रियान्तरोपपत्तिः

---

ईशस्य व्यष्टिभेदानभिदधति मनोवाङ्मयादीन् यदन्ये
तत्र त्रेधा यदीष्टा विकृतिरविषया निर्विकारागमाः स्युः।
नित्यत्रित्वे तु नैकेश्वरनियमगतिर्भ्रान्तिसिद्धे विभागे
मायादायादपक्षः श्रुतिरपि नियतैरस्त्वधिष्ठानभेदैः ॥ ७३ ॥

सर्वार्थं०—इह केचिदीश्वरस्वरूपेऽपि भोक्तृभोग्यन्यायेन समष्टिव्यष्टिभेदं वर्णयन्ति, वदन्ति च मनोमयप्राणमयवाङ्मयाख्यं व्यूहत्रयम्; तदनुभाषते—ईशस्येति। ईदृशोऽयं भेदः किं भोग्यवत्परिणामतः, उत भोक्तृवत्स्वभावतः, अथ प्रतिबिम्बितचन्द्रादेरिव भ्रान्तित इति विकल्पं मन्वानः प्रथमे निर्विकारश्रुतिविरोधमाह—तत्रेति। त्रेधेत्यनन्तव्यष्ट्यन्तराणामुपलक्षणम्। सर्वात्मनो ब्रह्मणस्सविकारत्वादीश्वरांशे हि तैर्निर्विकारत्वश्रुतिर्निवेशिता; तत्राप्यनवकाशत्वं तस्याः प्रसक्तम्। द्वितीयं दूषयति- नित्यत्रित्व इति। एको देवः सर्वभूतेषु गूढः, एकश्शास्ता न द्वितीयोऽस्ति शास्ता इत्यादिभिर्विरोधस्स्यादिति भावः। तृतीयेऽनिष्टमाह- भ्रान्तीति। मायादायादपक्षः—मायार्जितभ्रान्तिविभागोपजीविपक्षः; स ते स्यादिति शेषः। सत्यमीश्वरमनभ्युपगच्छतामीश्वरत्रित्वश्रुतिर्तर्हि निरधिष्ठानभ्रमविषया स्यादित्यत्राह—श्रुतिरपीति। अयं भावः—ईश्वरस्तावन्मायोपहिते ब्रह्मणि कल्प्यताम्; त्रित्वं च तस्य द्विचन्द्रादिन्यायाद् मायाविलासविप्लुतब्रह्माधिष्ठानतया स्वीक्रियतामिति। यद्वा मनोमयादिविभागवादिनी श्रुतिः कथं निर्वोढव्येत्यत्राह—श्रुतिरपीति। अपिशब्द इह एतादृशश्रुत्यसम्भवाभिप्रायः। सम्भवेऽप्युच्यते परोपकारकमनःप्रभृत्यधिष्ठानभेदादीश्वरस्य मनोमयत्वादिविभागो निरुह्यतामिति ॥ ७३ ॥

**आनन्द०**—प्रसङ्गसङ्गत्या ब्रह्मदत्तमतं दूषयति—**इहेति** । स एवमाह— सर्वशक्तिस्वयंप्रकाशसन्मात्रं ब्रह्म यदा सर्वतत्त्वसमष्टीभूतं भवति तदेश्वरो जीवः प्रकृतिरिति त्रेधा नित्यविभागवद्भवति । तत्रानुवृत्तं सन्मात्रं ततो विलक्षणं फेनतरङ्गबुद्बुदापेक्षया निस्तरङ्गसमुद्रवत्, तत्रेश्वरः सदा ज्ञानानन्दैश्वर्याविर्भावहेतु-ब्रह्मशक्तिसंपन्नस्तदंशत्वात्, एवमीश्वरोऽपि मनोमयः वाङ्मय प्राणमय इति विभागवान्, एवं भिन्न ईश्वर आदित्याग्निचन्द्ररूपेण मनोवाक्प्राणानधितिष्ठतीति । **भोग्यवदिति** । अचेतनप्रकृतेर्महदादिपरिणामवदित्यर्थः । **भोक्तृवदिति** । चेतनानामिव स्वत एव भेदः । **त्रेधेत्यनन्तव्यष्टयन्तराणामिति** । विश्वतैजसप्राज्ञादिभेदाना-मित्यर्थः । नन्वीश्वरविषयत्वाभावेऽपि श्रुतेर्ब्रह्मविषयतया सविषयत्वं स्यादित्याऽऽह— **सर्वात्मन इति** । चिदचिदाद्यभिन्नस्य तद्विकारैर्विकारित्वादित्यर्थः । एकश्शास्तेति द्वितीयनिषेधाच्चेति भावः । **मायार्जितेति** । तथा सति ब्रह्मण्येवेश्वरादिविभागस्स्वाभा-विको न स्यात्, मायाकल्पितविभागेनैव सर्वोपपत्तेः । तथा च भोक्तृभोग्येश्वरभेदेन विभागो नित्यसिद्ध इत्यभ्युपगमो व्यर्थ इति भावः । **सत्यमिति** । ईश्वराधिकरणककर्तृक-त्वप्रतिपादकत्वान्मनोमयादिश्रुतेरिति भावः । नन्वधिष्ठानभूतब्रह्मण एकत्वात्तत्र भेदा-भावात्तद्विषयतया सविषयत्वं कथमित्याह—**अयं भाव इति** । ईश्वरत्वं तद्भेदश्च मायया ब्रह्मणि कल्प्यतामित्यर्थः । ननु मनोमयत्वादिभिरीश्वरस्य व्यष्टिरुक्ता, नत्वीश्वरस्य त्रित्वं, तथा च तद्विषयश्रुतिः कथं निर्वाह्येति तत्रैवाकाङ्क्षा तत्रैवाधिष्ठा-नशब्दश्चास्वरस इत्यभिप्रायेणाह—**यद्वेति** । **मूलं**— **विकृतिः** परिणामः । **निर्विकारा-गमाः**—निर्विकारश्रुतयः ॥ ७३ ॥

### ईश्वरस्वरूपविषयसमष्टिव्यष्ट्यादिविवादनिरासः

**युक्तिः प्रश्नोत्तरादेर्न हि पुरुषभिदां बुद्धिभेदं च मुक्त्वा**
**तस्माद्व्यूहादिभेदे कतिचन पुरुषाः स्युः परेणानुबद्धाः ।**
**तत्र स्वच्छन्दलीलः स्वयमभिनयति स्वान्यतां सर्ववेदी**
**तद्वच्छिष्यादिवृत्तिप्रसृतिमिह सतां शिक्षयन् सानुकम्पः ॥ ७४ ॥**

**सर्वार्थ०**—पुनरपि परव्यूहादिषु पुरुषभेदमाशङ्कते—**युक्तिरिति** ॥ आदि-शब्देन कृष्णबलभद्रादिषु मिथो विषादकोपादि संगृह्यते । अस्ति तावत्सात्वतादिषु गुरुशिष्यन्याये वासुदेवसंकर्षणादीनां प्रश्नप्रतिवचनक्रमेण विद्याधिगमः । तत्र न तावत् स्वात्मानं स्वयं पृच्छति प्रतिवदति वा; हेतुप्रयोजनयोरसम्भवात् । अतः प्रष्टृप्रतिवक्तृचेतनभेदः कल्प्य इति । ननु भेदकानिश्चये कथं भेदक्लृप्तिरित्यत्राह— **बुद्धिभेदं च मुक्त्वेति** । न्यूनबुद्धिः [परि] पृच्छेदधिकबुद्धिरनुशास्तीति लोकवेदप्रसिद्ध-मिति भावः । एतदन्यथासिद्धमित्यभिप्रायेण प्रति [क्षिपति] वक्ति - **तन्नेति** । चेतन-भेदाभावेऽपि प्रश्नोत्तराद्युपपत्तिमाह —**स्वच्छन्दलील इति** । स्वयमित्यनेन स्वस्यैवेति गम्यते । अभिनयप्रयोजनमाह—**तद्वदिति** । शिष्याचार्यादिभिरेवं वर्तितव्यमिति धार्मिकशिक्षणं देवस्य दयान्वितलीलाप्रसूतमिति भावः ॥७४॥

आनन्द०—पूर्वाक्षेपेण सङ्गतिरित्याह—**पुनरपीति**। आदिशब्देन नरनारायणादिग्रहः। हेतुः अज्ञानं, प्रयोजनं—ज्ञानम्। **न्यूनबुद्धिरिति**। न्यूनाधिकबुद्ध्योरेककालीनयोराश्रयभेदकत्वादिति भावः। **चेतनभेदाभावेऽपीति**। इच्छेव हेतुरिति भावः। फलाभावशङ्कापि नेत्याह—**अभिनयप्रयोजनमिति**। मूलं—**अनुबद्धाः**-परस्य व्यष्टिभूता इत्यर्थः॥ ७४॥

**ईश्वरस्य स्वात्मनि शिष्याचार्यत्वाद्यभिनयफलम्**

---

**विश्वान्तर्वर्तिबालोदरगतमखिलं कस्य विश्वासभूमि-**
**स्तस्मादौपेन्द्रमीदृग् भवतु रसवशादिन्द्रजालं प्रवृत्तम्।**
**मा भूदाश्चर्यशक्तेरवितथमिदमित्येव सर्वाप्तसिद्धे-**
**र्व्याघातस्योपशान्तिस्तदनुगुणदशाभेदयोगादिभिः स्यात्॥ ७५॥**

अत्र मायामतानुयायी चोदयति—**विश्वेति**॥ विश्वशब्देन त्रैलोक्यादि गृह्यते। कस्यचिदन्तरे किंचिद्वर्तते, तदेव तदानीमेव तस्माद्बहिरेव; क एतच्छ्रद्दधीतेति भावः। विश्वापह्नवाभिलाषी स्वोक्तफलितमाह—**तस्मादिति**। रसवशात्—इच्छावशादीप्सितक्रीडारसवशाद्वा। तादृशाद्भुतविवक्षया प्रतिषेधति—**मा भूदिति**। तत्तत्प्रकरणपरामर्शेन मिथ्यात्वपरिहारे सिद्धे विरुद्धवत्प्रतिपन्नं सर्वमविरुद्धावस्थाविशेषादिविवक्षया निर्वोढुं शक्यम्। तत्र भगवद्विग्रहविभूत्यादीनां सङ्कोचशक्तिर्विकासशक्तिस्तत्तदभिमानविषयसजातीयोत्पादनशक्तिस्सूक्ष्मस्थूलावस्थाभेदः परिमितविग्रहव्यङ्ग्यापरिमितस्वरूपलक्षणमित्यादिकं यथार्हमवधारणीयम्। एवम् अणोरणीयान् महतो महीयानित्यादीनि ब्रह्मस्वरूपविषयवाक्यान्यपि तत्तदविरुद्धार्थविवक्षया नेतव्यानि। वस्त्वन्तरादृष्टवैचित्र्यमात्रेण विरोधशङ्कायां सर्वत्रातिप्रसङ्गः स्यादिति॥ ७५॥

---

आनन्द०—भगवल्लीलाव्यापारस्य मिथ्यात्वे तन्न्यायेन सर्वमिथ्यात्वं सेत्स्यतीत्याक्षेपसङ्गत्याऽऽह - **अत्रेति**। अवस्थाविशेषमाह—**तत्रेति**। सङ्कोचशक्तिवशात् परिमिततया प्रतिपन्ननन्दनन्दनविग्रहस्य यदा जगद्बहिःष्ठमिव लक्ष्यते तदा संकोचः, विकासशक्तिमत्त्वात् यदोदरगतं दृश्यते तदा विकासः। कालभेदस्य सौक्ष्म्यात् पत्रशतवेधन्यायेन यौगपद्याभिमानः। तत्तदात्मत्वेन भेदाग्रहविषयपदार्थान्तरसृष्ट्या बाह्यान्तरवस्तुनो भेदाग्रहः। भगवत एव स्थूलसूक्ष्मविग्रहभेदे स्थूलापेक्षयाऽन्तःस्थत्वं सूक्ष्मापेक्षया बाह्यता स्थौल्याग्रहाद्वा विग्रहैक्याभिमानः। यद्वा—जालरन्ध्रेण सूर्यो गृह्यमाणो जालमध्यगत इव भासते, तद्वत् सूक्ष्मशरीरद्वारेण सर्वस्यापि व्यङ्ग्यतया तन्मध्यगतत्वेन भानमिति भावः। **परिमितेति**। विग्रहकाले अपरिमितं विग्रहान्तरं गृह्यते, तेन तदपेक्षयाऽन्तर्वर्तित्वं परिमितापेक्षया बहिष्ठत्वमित्यादिकमादिशब्दार्थः। नन्वणुत्वमहत्त्वे अपि स्वरूपस्य स्यातामित्यत्राह—**एवमिति**। अणुत्वमहत्त्वयोरेकदा विरुद्धत्वात्

विग्रहभेदेन वा स्वरूपे महत्त्वं विग्रहेऽणुत्वमिति वा एकस्मिन्नेव विग्रहे कालभेदेनैव वा निर्वाह्यमित्यर्थः। एतादृशसामर्थ्यस्यान्यत्रादर्शनान्मिथ्यात्वमिति शङ्काया मननादीनामितरवस्तुवैजात्यं ? व्यवहितग्रहणहेतुत्वादिकं च न स्यादित्याह—वस्त्वन्तरेति। मूलं, विश्वान्त वर्तीति—विश्वान्तर्वर्त्तिनो बालस्योदरे विश्वमन्तर्वर्तीति विरुद्धमित्यर्थः ॥ ७५॥

आश्चर्यवृत्तान्तविशेषसत्यत्वम्

यद्भावित्वेन बुद्धं भवति तदथ चातीतरूपं तदस्मि-
न्नुल्लेखो भिद्यते चेदकरणजमतरैकरूप्यं प्रकुप्येत्।
प्राचीनोल्लेख एव स्थितवति तु गते भाविबुद्धिर्भ्रमः स्यात्
मैवं पूर्वापरादिक्रमनियतसदोल्लेखसत्यत्वसिद्धेः ॥ ७६ ॥

सर्वार्थ०—अथ निखिलजगत्कारणतयाऽवधृतस्येश्वरस्य सर्वसृष्ट्यनुगुणेषु ज्ञानशक्त्यादिष्वनुपपत्तिः परिह्रियते। तत्र ज्ञाने तावदयुक्तिरेवं शङ्क्यते—नित्यसर्वज्ञः ईश्वरः भविष्यद्वस्तु भविष्यत्त्वेन पश्यति न वा ? पूर्वत्र तस्यैव वस्तुनो भवदवस्थायां भूतावस्थायां च किं स एवोल्लेखस्तदन्यो वा ? आद्ये भवतो भूतस्य च भविष्यत्त्वेनोल्लेखाद्भ्रान्तिरेत्र स्यात्; द्वितीये पश्यत्यचक्षुरित्यादिना करणनिरपेक्षज्ञानवत्त्वेन कथितस्य कार्यज्ञानासंभवात् प्रतिक्षणं भिदुरानन्तोल्लेखसन्ततिपरिग्रहो निर्मूलः स्यात्। भविष्यतां भविष्यत्त्वेनादर्शनं तु तेषामदर्शनत एव वा, स्वस्वरूपमात्रदर्शनेन वा, वर्तमानत्वभूतत्वदर्शनेन वा स्यात् ? आद्ये किंचिज्ज्ञत्वप्रसङ्गः। द्वितीयेऽपि प्रकारतस्स एव। तृतीये भ्रान्तत्वं दुस्तरम्। एवं वर्तमानेऽतीते च वर्तमानत्वादिबुद्धिरस्ति वा न वा ? सा च निवृत्तिमती नित्या वा ? इत्यादिविकल्पेन प्रसक्ता दोषाः प्रतिसन्धेया इति। तदभिप्रेत्याह—यद्भावित्वेनेति ॥ भवति तत्—वर्तमानत्वावस्थां प्राप्नोति।

अथ चातीतरूपम्—वर्तमानत्वावस्थानन्तरमतीतावस्थं स्यादित्यर्थः। तत्—तस्मात्। अस्मिन्—अवस्थात्रयवति वस्तुनि। नित्यसर्वज्ञबुद्धेरागामित्वाद्युल्लेखो भिद्यते चेत्करणनिरपेक्षबुद्धेरीश्वरस्य नित्यैकरूपसर्वदर्शनानुपपत्तिः स्यात्। प्राचीनोल्लेखे नित्यानुवृत्ते तु, वर्तमाने गते च भविष्यत्त्वबुद्धिर्भ्रान्तिः स्यादिति परचोदनानुवादः। अत्रोल्लेखभेदे तदभावे चादोष इत्यभिप्रायेण प्रतिषेधति—मैवमिति। उल्लेखभेदपक्षे तावदेवं निस्तारः। नह्यत्र करणनिरपेक्षज्ञानवत्त्वविरोधः, चक्षुरादिनिरपेक्षत्वेऽपि हेतुतस्साध्यप्रकाशोपपत्तेः। हेतुश्चोल्लेखसन्ततावुत्तरोत्तरस्य पूर्वपूर्वः। तत्प्रवाहानादित्वाच्च न कदाचिन्निर्मूलत्वम्। नचेदृशाऽनवस्था दोष इति। एकरूपोल्लेखपक्षे त्वाह—पूर्वापरेति। अयं भावः - सर्वं कार्यं स्वकाले न हि नित्यासत्; तच्च किंचिदपेक्ष्य पूर्वं किंचिदपेक्ष्योत्तरम्। तत एवं त्रिप्रकारं कार्यं सर्वदैकबुद्धिसमारूढम्। न कदाचिदपि स्वकालवर्तिनः कालान्तरवर्तित्वेनोल्लेखः। भविष्यत्वादिकं चापेक्षिकम्। किंचिदपेक्ष्योत्तरत्वमेव कस्यचित्तत्समकालप्रागभाववतस्तदपेक्षया भविष्यत्त्वम्। एवं

किंचिदपेक्षया पूर्वत्वमेव तत्समकालप्रध्वंसवतोऽतीतत्वम् । तच्च किंचित्कादाचित्कम् । न हि नित्यापेक्षया किंचिद्भविष्यद्भूतं वा । एवं सर्वप्रकारं वस्तु सर्वज्ञबुद्ध्या यथावस्थितरूपेण सर्वदैवोल्लिख्यत इति करणनैरपेक्ष्यं विपर्यासविरहश्च सिध्यतीति ।

य एव स्यादसर्वज्ञस्सर्वज्ञं न स बुध्यते ।
इति तद्बोधबाधार्थी तन्निषेधेऽपि न क्षमः ॥७६॥

आनन्द०—अथ ज्ञानादीनामनुपपत्त्या मिथ्यात्वे 'यः सर्वज्ञः' इत्यादेरुपासनार्थतया नेतव्यत्वे तन्न्यायेन विग्रहादेरपि तादर्थ्यं स्यादिति पूर्वाक्षेपेण संगतिरित्याह—**अथेति** । प्रसङ्ग एव संगतिरित्यन्ये । **भवदवस्थायां**—वर्तमानावस्थायाम् । **स एवोल्लेखः**—भविष्यत्त्वेनोल्लेखः । **भवतः**—वर्तमानस्य । **कथितस्येत्यनन्तरमीश्वरस्येति** शेषः । **प्रतिक्षणमिति** । मूलभूतस्य कारणस्याभावे कार्यायोगात्तादृशसंततिरेव स्यात्तथाऽपि तदङ्गीकारे निर्हेतुकवादस्स्यादिति भावः । **द्वितीयेऽपीति** । भविष्यत्त्वरूपधर्मज्ञानविरहात् किंचिज्ज्ञत्वप्रसङ्ग इति भावः । **सा च**—बुद्धिरपीत्यर्थः । **निवृत्तिमती**—अनित्या । आदिशब्देन अनित्याऽपि कारणजन्या न वेत्यादिविकल्पोऽभिप्रेतः । अतीतवस्तुन्यतीतत्वेन बुद्धौ तस्य भविष्यत्तादशायामप्युल्लेखस्स्यात् । तथात्वे वस्तुनो द्वैरूप्यं स्यात् । यदि वस्तु न तथा तर्हि भ्रान्तिता स्यात् । यदि च बुद्धिरेव न तादृशी तस्य भविष्यत्त्वदशायां विद्यमानस्य भविष्यत्त्वस्य ज्ञाने सर्वज्ञताभङ्गोऽनित्यज्ञानं च कारणानिरूपणान्नेत्यादिदोषाः प्रतिसन्धेया इत्यर्थः । **नित्यैकरूपेति** । वर्तमानतादशायामतीततदशायां च भविष्यत्त्वबुद्ध्यभावात् भविष्यत्त्वदशायां वर्तमानताबुद्ध्यभावात् सर्वज्ञता कदाऽपि न स्यात् । क्रमबुद्ध्या तु न सर्वज्ञता । अतिप्रसङ्गादिति भावः । **हेतुत इति** । अत एव निर्हेतुकवादनिरास इति भावः । **हेतुश्चेति** ।

ननु भविष्यत्त्वरूपोल्लेखसन्ततेः कथं वर्तमानत्वोल्लेखसन्ततिः स्यात्, तथा सति घटसन्तत्या पटत्वोल्लेखिसन्ततिप्रसङ्गात्, सजातीयसन्तत्यभावे चादिमसन्तत्ययोगाच्चेति चेत् न, पूर्वपूर्वावस्थैव तत्तद्विषयोपरक्तोत्तरतत्संततेर्हेतुः, तत्तद्विषयोपरागस्य नियामकत्वात् । अत एव न निर्मूलत्वम् । न चातीतादौ कथमिति वाच्यम् । तत्रापि तत्संबन्धिनिवृत्तेस्संनिहितत्वेन वर्तमानध्वंमप्रतियोगित्वादेरुल्लेखसम्भवात् । तत्काले यथावस्थितसर्ववस्तुविषयकज्ञानवत्त्वमेव हि सर्वज्ञत्वं, अन्यथा भ्रान्तत्वप्रसङ्गात् । न च वर्तमानकाले भविष्यत्त्वस्याज्ञानान्न्यूनता; तदाऽप्यतीतत्वेन भविष्यत्त्वस्य पूर्वं भविष्यदासीदित्यनुभवेन दोषाभावादिति भावः । तथा च तत्तद्वस्त्वपेक्षया पूर्वत्वसमकालत्वोत्तरत्वात्मकानां सर्वदा तत्तदपेक्ष्यैकरूप्यात् बुद्धिरप्येकरूपेति न कदाचिदनुपपत्तिरिति भावः । किं चेश्वरस्य सार्वज्ञ्यनिषेधं जानाति न वा । पूर्वत्र प्रतियोगिज्ञानाभावात् निषेधो नोपपद्यते, उत्तरत्र तस्य प्रमाणतो बाधे बाधासंभव इत्यभिप्रायेणाह—**य एवेति** । निषेद्धा असर्वज्ञःप्रमाणवृत्तान्ताद्यनभिज्ञः, सर्वज्ञं किं न बुध्यते, उत नेति विकल्पे सति तत्सार्वज्ञ्यनिषेधार्थनिषेधे क्षमोऽपि नेत्यर्थः ॥ ७६ ॥ **सार्वज्ञ्यानुपपत्तिनिरासः**

नीलं किंचित्तदानीमरुणमिति न खल्विन्द्रजालादृतेऽद्धा
नो चेदेवं विरोधः क्वचिदपि न भवेत् कश्च जैनेऽपराधः।
तस्मादीशो विरुद्धद्वितयमघटयन् सर्वशक्तिः कथं स्या-
न्मैवं व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः॥ ७७॥

**सर्वार्थं०**—ईश्वरस्य सर्वशक्तित्ववादमपह्नोतुमिच्छन् कश्चिद्विरुद्धोदाहरणं ताव-द्व्यवस्थापयति—**नीलमिति**॥ अद्धा-सत्यम्। इत्यद्धेत्यन्वयः। इन्द्रजालतिरोहितस्त्वेवम-द्धेत्यभिमन्येतेति भावः। उक्तानभ्युपगमेऽतिप्रसङ्गमाह—**नो चेदिति**। क्वचिदपि—दूष्यदूषणपूर्वपक्षसिद्धान्तादावपीत्यर्थः। अतिप्रसङ्गान्तरमाह-**कश्चेति**। विरुद्धसप्त-भङ्गीपरिग्रहो हि जैनस्यापराधः, विरोधोच्छेदे सोऽपि न निगृह्येतेति भावः। विरोधसिद्धिमुपजीव्य चोदयति—**तस्मादिति**। शक्तिर्हि शक्यविषया; विरुद्धं तु घटयितुं न शक्यम्। अतोऽशक्यसद्भावात् कथं सर्वशक्तिस्स्यादित्याक्षेपः। अविवक्षितदूषणमिद-मित्यभिप्रायेण प्रत्याह—**मैवमिति**। अभिप्रेतं विवृणोति—**व्याघातेति**। नहि व्याहत-मीश्वरो घटयतीति तस्य सर्वशक्तित्वं ब्रूमः; किंतु यत् कार्यं तत्सर्वं करोति, ततश्चान्ये-रप्यशक्यं करोतीति सिध्येत्। ईदृशमस्य सर्वशक्तित्वमागमाभिप्रेतम्। तच्च विरोधाभावाद्युज्यत एवेति॥ ७७॥

---

**आनन्द०**—ननु सर्वशक्तित्ववादस्योपासनार्थत्वे तन्न्यायेन सर्वस्याप्युपासनार्थत्व-मिति चोद्यसंगतिमभिप्रेत्याह—**ईश्वरस्येति**। प्रासङ्गिकी सङ्गतिरित्यन्ये। नन्विन्द्र-जालत्वेऽपि वस्तुनो विरोधः कथं परिहर्तुं शक्य इत्यत्राह—**इन्द्रजालतिरोहितेति**। प्रतीतिमात्रमेव न वस्तुनस्तथात्वमिति भावः। वस्तुत इन्द्रजालतिरोहितदृष्टेरपि न युगपत् प्रतीतिरपि तु क्रमेणेति ध्येयम्। सिद्धान्तादावपीत्यादिशब्देना ज्ञात्वादिकं ग्राह्यम्। स्यादस्ति, स्यान्नास्ति, स्यादस्तिनास्ति च, स्यादवक्तव्यं स्यादस्ति चावक्तव्यं, स्यान्नास्तिचावक्तव्यं स्यादस्ति च नास्ति चावक्तव्यमित्युक्ता सप्तभङ्गी। **विरुद्धं त्विति**। नीलिमारुणिम्नोर्युगपदेकावच्छेदेन सामानाधिकरण्यमशक्यमित्यर्थः **अविवक्षितेति**॥ ७७॥ **सर्वशक्तित्वस्थापनम्**

---

संगृह्य ज्ञानयत्नौ कतिचन निखिलस्रष्टुरिच्छां तु नैच्छन्
तस्यां द्वेषः क एषामनुमितिशरणानीकनासीरभाजाम्।
श्रुत्या तद्बोधयत्नावभिदधति यदि क्षम्यतामेवमिच्छा
निर्वाह्यं स्वाप्तकामप्रभृतिवचनमप्यान्यपर्योपरुद्धम्॥ ७८॥

**सर्वार्थं०**—एवमस्तु सर्वज्ञस्सर्वशक्तिरीश्वरः; तथाऽपि चिकीर्षा नाङ्गीकार्या। नहि कर्तुः कार्योत्पादकत्वमिच्छाप्रयुक्तम्; यत्नाभावे क्वचिदपि ततस्तदसिद्धेः। इच्छा-भावेऽपि प्रयत्नतः कार्यसिद्धिर्जीवनपूर्वकप्रयत्नकार्यनिश्वासादिनिष्पत्त्या संगृहीता।

अतः कार्यलिङ्गेन उपदेशलिङ्गेन वा कर्तुर्ज्ञानयत्नवत्त्वमात्रमेवानुमेयम्; किमजागलस्तन-कल्पया चिकीर्षयेति **काश्यपीयाः** केचिदाचक्षते । तदिदमन्वाचष्टे—**संगृह्येति** ॥ तुशब्दः प्रदर्शितमनपेक्षितत्वं द्योतयति । अत्र प्रतिबन्दिमभिप्रेत्य प्रतिब्रूते—**तस्यामिति** । अनुमानादागमाच्चेश्वरसिद्धिं **नैयायिका** निर्धारयन्ति, **वैशेषिका**स्त्वागममप्यनुमानीकृत्य तदेकवेद्यमीश्वरं तन्त्रयन्ति । अनुमानं च ज्ञानयत्नवच्चिकीर्षामपि समर्थयितुं शक्नोति । तत्र यदि जीवनपूर्वकप्रयत्नन्यायेन चिकीर्षानैरपेक्ष्यं संगृह्येत तद्वदेव ज्ञाननैरपेक्ष्यं किं न स्यात् ? न हि ज्ञानमपि प्रयत्नमनपेक्ष्य क्वचित् कार्यं जनयति; प्रयत्नस्तु ज्ञानमनपेक्ष्या-पीति दृष्टमेव । अत एव चिकीर्षा प्रयत्नोत्पत्त्यर्थमन्यत्रापेक्ष्यते, इह तु नित्यप्रयत्ने किं तयेत्यपि मन्दम् । चिकीर्षोत्पत्त्यर्थमन्यत्र ज्ञानमपेक्ष्यते, इह तु प्रयत्नस्य नित्यत्वेन चिकीर्षानैरपेक्ष्यात् किं ज्ञानेनेत्यपि सुवचत्वात् । प्रयत्नस्य स्वतो विषयनियमाभावात् ज्ञानविषयेण सविषयत्वं वक्तव्यमिति चेन्न, उक्तोत्तरत्वात् । न हि जीवनपूर्वकप्रयत्नस्य स्वाधारज्ञाननियतविषयत्वम्; न च सर्वकार्यविषयस्य ईश्वरप्रयत्नस्य विषयनियामका-पेक्षा; सत्यां च तस्यां सहकारिशक्तिभूतजीवादृष्टविशेषत एव प्रयत्नस्य नियतविषयत्वे संभवति सर्वविषयज्ञानेन प्रयत्नस्य विषयनियमकल्पनं बालिशकृत्यम् । विषयत्वमात्रं चात्र न यावद्धीविषयत्वम्, नित्यानामपि निष्पाद्यत्वप्रसङ्गात्; अशक्यविषयप्रयत्नवत्तया वा डिम्भादिकल्प ईश्वरस्स्यात् ।

अथ स्वासाधारणधीविषयेणैव विषयवत्त्वं प्रयत्नस्येति मन्येत, तदपि न; धिय इव प्रयत्नस्यापि नियामकनिरपेक्षविषयत्वोपपत्तेः, अन्यथा कल्पनागौरवात् । स्वतस्स-विषयत्वे ज्ञानत्वप्रसङ्ग इति चेन्न; धियोऽपि तन्नियामकत्वाभावात् । नच स्वाधारधी-विषयस्य सर्वस्य प्रयत्नविषयत्वमिति मन्यसे; सारूप्येऽप्यवान्तरलक्षणेन भेदोपपत्तेः; अन्यथाऽतिप्रसङ्गात् । किंच सामग्रीनियतविषये निरीश्वरज्ञाने व्याप्तिर्दुर्ग्रहा; ईश्वरज्ञानं त्वद्याप्यसिद्धम् । यदि च यथादृष्टप्रकारानादरेण बुद्धियत्नयोर्हेतुनिरपेक्षत्वं कल्प्यते, तथा यत्नस्य बुद्धिनिरपेक्षविषयत्वमदृष्टमभिमन्यताम्, अविशेषाल्लाघवाच्च । एवं बुद्धि-मात्रमवलम्ब्य प्रयत्नपरित्यागप्रतिबन्दिरपि प्रयोक्तव्या । ईश्वर इच्छात्यन्ताभाववान् कर्मवश्यव्यतिरिक्तत्वात् घटादिवत्, इत्यादिषु च तादृशप्रयोगः प्रतिप्रयोक्तव्यः । धर्मिसिद्ध्यसिद्ध्यादिविकल्पेन दूषणजातं च दुस्तरमिति यथाश्रुतिबलादीश्वरज्ञानप्रयत्न-स्थापनं शङ्कते—**श्रुत्येति** ।

तथा सोऽकामयतेत्यादिश्रुतिबलात्तदिच्छाऽपि स्वीक्रियतामित्याह—**क्षम्यता-मिति** । नन्ववाप्तकामत्वपूर्णत्वादिश्रुतिस्मृतिशतैरिच्छाराहित्यमीश्वरस्य सिध्येदित्यत्राह—**निर्वाह्यमिति** । तुश्शङ्कानिवृत्त्यर्थः । अयं भावः—आप्तकामशब्दस्तावदीशितुरेष्टव्या-भावमिच्छाराहित्यं वा न ब्रूते । अत्र कामशब्दस्य काम्यपरत्वे कामनापरत्वे वा तत्प्राप्तिवचनतस्तन्निषेधायोगात् । अत ,इष्टं सर्वमस्य प्राप्तमेव भवतीति तात्पर्यं ग्राह्यम् । अनित्यानां वा भोग्यानां प्राप्तत्वं प्रत्येतव्यम् । अत एव पूर्णशब्दोऽपि गुणादि-

पौष्कल्यमाह, न तु श्रौतीं कामनां निरुन्ध्यात् । विधिनिषेधविरोधशमनं च प्रागेव स्थापितम् । तदिह सर्वकार्यविषयाप्रतिहतानन्याधीनेच्छावानीश्वरः; जीवस्तु न तथा। ईप्सितालाभजनितदुःखं च क्षेत्रज्ञस्यैव, नित्यमुक्तेश्वराणां तदलाभ एव नास्तीति नियमः ॥ ७८ ॥

---

आनन्द०- भगवतो यादृशमात्रेण सिद्धेर्नैव चिकीर्षणम् ।
विषयित्वनिदानं च तज्ज्ञानं चापि ते विभोः ॥

इति ज्ञानयत्नवत्त्वमेवेश्वरस्य, न तु चिकीर्षेति वैशेषिकैकदेशी, तं दूषयितुमाह—**स एवमस्त्विति**। प्रसङ्गस्सङ्गतिरिति भावः। **इच्छाभावेऽपीति**। यद्यपि भगवद्ज्ञानयत्नयोर्नित्यत्वादेव न चिकीर्षापेक्षा, तथाऽपि जन्येऽपि तन्नियमो नास्तीति, जन्यत्वेऽपि न चिकीर्षाक्षेप इति भावः। काश्यपीयाः गौतमीयाः, वैशेषिका इत्यन्ये। **वैशेषिकास्त्विति**। प्रमाणद्वयवादित्वादिति भावः। एतानि पदानि स्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वादित्यादिरूपेणानुमानकारणं बोध्यम्। तन्त्रयन्ति—साधयन्ति। ननु विनिगमनाविरहादुभयसिद्धिरन्यथा प्रयत्नस्यैवासिद्धिरस्त्वित्यत्राह – **न हि ज्ञानमपीति**। अत एवेत्येतद्विवृणोति—**चिकीर्षेति**। पुनर्ज्ञानसिद्धि शङ्कते—**प्रयत्नस्येति**। ज्ञानस्यैव स्वतो विषयित्वं तदधीनमिच्छाप्रयत्नयोर्विषयित्वमिति ज्ञानाभावे प्रयत्नस्य विषयित्वं न स्यादिति भावः **स्वाधारेति**। स्वस्य प्रयत्नस्याधारे विद्यमानं यज्ज्ञानं तेन नियतविषयमित्यर्थः **सत्यां च तस्यामिति**। अपेक्षायां सत्यामपि ज्ञानं नापेक्षितमिति भावः। किंचिदर्थमभ्युपगतमपि ज्ञानं तन्नियामकत्वाभावाद्व्यर्थं स्यादित्याह—**सर्वविषयेति**।

ननु प्रयत्नस्य यत्किंचिद्विषयत्वं प्रति ज्ञानस्य सर्वविषयस्य नियामकत्वं मास्तु, विषयत्वमात्रे तदस्त्वित्यत्राह—**विषयत्वमात्रमिति**। [नियत]एकविषयस्वासम्भवात्; मात्रचः कार्त्स्न्यपरत्वमिति, नित्यानामपि निष्पाद्यत्वरूपं कार्यत्वं स्यादित्यर्थः। **यावद्धीविषयमिति**। विस्वयमनतिक्रमणे व्यावधिभावः ? धीविषयव्यापनं विषयत्वमात्रमित्यर्थः। **अन्यथेति**। ज्ञानकल्पनं गुर्विति भावः। तदेवोपपादयति—**न चेति**। ज्ञानस्य सर्वविषयत्वं प्रयत्नस्य कार्यमात्रविषयत्वमित्यभ्युपगमादिति भावः। स्वतस्सविषयत्वेऽपि ज्ञानवैलक्षण्यमाह **सारूप्येऽपीति** **अन्यथेति**। यदि सविषयत्वेऽप्यवान्तरवैलक्षण्यमादाय भेदो न स्यात्तदा ज्ञानाधीनसविषयत्वविशेषाच्चिकीर्षाप्रयत्नयोर्वैलक्षण्यं न स्यादिति भावः। किं च ज्ञानस्य स्वतोविषयत्वं किं जीवज्ञाने ग्राह्यमुतेश्वरज्ञान इति विकल्पे आद्यं दूषयति—**किं च सामग्रीति**। सामग्र्यधीनत्वान्नियतविषयत्वस्येत्यर्थः। द्वितीयं दूषयति—**ईश्वरज्ञानं त्विति**। हेतुनिरपेक्षत्वं नित्यत्वमित्यर्थः। **एवमिति**। पूर्वं यत्नमात्रस्य सिद्धिरुक्ता इदानीं ज्ञानमात्रमेवास्तु, प्रयत्नस्तु न कल्प्यो लाघवादिति प्रतिबन्दिरिति भावः। ननु कार्यं प्रति यत्नस्य साक्षाद्धेतुत्वात्तत्सिद्धिरस्तु, ज्ञानस्य यत्नद्वारकत्वात् कथमेवं प्रति-

बन्दिरिति चेत्। न युक्ता द्वारद्वारिभावे, स एव तु नास्ति, उभयोर्नित्यत्वात्, नापि कार्यत्वमपि कृतिजन्यत्वमिति कृतिसापेक्षम्, अन्योन्याश्रयेण कार्यत्वहेतोरसाधकत्वप्रसङ्गादिति युक्ता प्रतिबन्दिरिति ध्येयम्।

इच्छात्यन्ताभाववानिति। समवायसम्बन्धेनेच्छात्वावच्छिन्नप्रतियोगिकात्यन्ताभाववानित्यर्थः। प्रादेशिकत्वे नियामकाभावात् पक्षतावच्छेदकावच्छेदेन सिद्धिरिति भावः तादृश इति। ईश्वरो ज्ञानप्रयत्नात्यन्ताभाववान् कर्मवश्यान्यत्वात् घटवदित्यपि प्रयोग इत्यर्थः। किं च ईश्वरं सिद्धं पक्षीकृत्य साध्यते उतासिद्धं, सिद्धं चेत्, चिकीर्षावत्त्वेनापि सिद्धम्। असिद्धं चेत्, आश्रयासिद्धिरिति दूषयति धर्मिसिद्धीति। आदिशब्देन व्याप्त्यादिसिद्धिर्विवक्षिता। केचित्तु धर्मिसिद्ध्यसिद्धिग्रन्थमवतारिकाशेषं व्याचक्षते। नन्वन्यतरस्य निर्वाह्यत्वे 'सोऽकामयत' इत्याद्येवान्यपरतया निर्वाह्यं किं न स्यादित्यत्राह—अयं भाव इति। प्रतिज्ञातार्थमुपपादयति—अत्रेति। आप्तशब्दस्याप्लृव्याप्तौ इत्यस्माद्व्युत्पत्तेरिति भावः। प्राप्तमेव भवतीति। यदाऽपेक्षते तदैव प्राप्तं भवति, न तु विलम्बत इत्यर्थः। ननु प्राप्तशब्दस्य प्राप्ततुल्यतायां पर्यवसानादमुख्यत्वं दोष इत्यत्राह—नित्यानां वेति। नित्यानि योग्यानि अपहतपाप्मत्वकल्याणगुणादीनि। 'सदा पूर्णः' पूर्णस्य पूर्णः' इत्यादिनिर्वाहमाह—अत एवेति। ननु निर्गुणवाक्यविरोधात् कामवाक्यं कामनां न प्रतिपादयतीत्यत्राह—विधिनिषेधेति। एवं चाप्तकामादिवाक्यार्थमाह—तदिहेति। अप्रतिहतेत्यनेन व्यावर्त्यं दर्शयति—ईप्सितेति। अनन्याधीनेत्यनेन व्यावर्त्यं दर्शयति—नित्यमुक्तेति। ईश्वरग्रहणं तु तावन्मात्रेण साधारण्यप्रदर्शनेन भेदप्रदर्शनार्थम्। मूलं—अनुमितिशरणानां, अनुमानैकनिष्ठानां वैशेषिकादीनां, अनीका सेना, तदग्रगानामित्यर्थः॥ ७८॥ ईश्वरस्येच्छावत्त्वम्।

---

**स्वीकृत्येशानतत्त्वं कतिचन जहतस्तत्प्रसादादिसाध्यं**
**गङ्गाम्भःपञ्चगव्यप्रभृतिवदवदन् पावनत्वादि तस्य।**
**तच्छ्रुत्यादिप्रतीपं यदपि च फलदं दर्शितं निष्प्रसादं**
**तच्चतस्य प्रसादादिति हि निजगदुर्धर्ममर्मज्ञचित्ताः। ७९।**

**सर्वार्थ०**—अथ प्रस्तुतानुबन्धं पण्डितंमन्यप्रलपितं प्रदर्शयति—**स्वीकृत्येति**॥ अयमत्राभिसन्धिः—यद्यपि राजादिवत्कर्मवश्या देवताः कुप्यन्ति च; तथाऽपि न तथा परः पुरुषः; निरपेक्षत्वात् सर्वभूतसुहृत्त्वाच्च। अतस्तस्मिन् प्रसादकोपव्यपदेशौ भाक्तौ; तदुपचारापचारशक्तित एवानुकूलप्रतिकूलसंपत्तिः। पावनत्वं मोक्षप्रदत्वं च तस्य 'यस्य देवे परा भक्ति'रित्यादिस्वारस्यादगङ्गोदकादेरिव स्वविहितविषयानुष्ठानसामर्थ्यात्स्यादिति। इमं पक्षं पण्डितरूपपदव्या प्रतिक्षिपति—**तदिति**। 'धातुः प्रसादात्, मत्प्रसादादित्यादिश्रुतिरिह प्रख्यापिता। अत्र च मुख्ये संभवति न गौणत्वकल्पना न्याय्या। प्रशस्तवस्तुविषयतत्तत्कर्मशक्त्यैव फलसिद्धिरित्युक्तं प्रतिवक्ति—**यदपीति**। निष्प्रसादम्-

आराध्यप्रसादनिरपेक्षमित्यर्थः। यद्वा क्रियादिस्वरूपं स्वयमचेतनत्वात् प्रसादयन्निष्प्रसादं फलप्रदमिति। उपलक्षणमेतत्, निष्कोपमित्यपि ग्राह्यम्। एतस्य-सर्वकर्तुस्सर्वसुहृदः इति भावः। **धर्ममर्मज्ञचित्ता** इत्यत्र धर्माणां कारणभूतं कार्यभूतं च भगवत्कटाक्षणं स्वपीडायां धर्मपीडनात् धर्ममर्मत्वेनोपचरितम्। धर्मस्य यथा परप्रसादः कारणम्, एवमधर्मस्यापि तत्कोपः कारणम्। श्रूयते हि तस्य साध्वसाधुकर्मकारयितृत्वम्; स्मर्यते च बहुशः ॥७९॥

---

**आनन्द०**—अवसरसंगतिमाह—**अथ प्रस्तुतानुबद्धमिति**। हेत्वनुक्तेराह—**अयमत्रेति**। **यद्यपीति**। कर्माधीनत्वात् प्रीतिकोपयोरिति भावः। किं च सापेक्षस्य ह्युपचारापचाराभ्यां प्रीतिकोपौ, न चैवं परा देवतेत्याह—**निरपेक्षत्वादिति**। निरपेक्षस्यापि चेत् प्रीत्याद्यभ्युपगमः, तदा च प्रीतिरेव **स्वस्यात्** न कर्मत इति कर्मवैयर्थ्यमित्याह—**सर्वभूतेति**। कर्मशक्तिरेव फलदेत्याह—**अत इति**। अनुकूलफलमैश्वर्यादि। पावनत्वं सर्वकर्मनिवर्तकत्वम्। **यस्य देवेत्यादि**। यथा गुरुभक्तेः शास्त्रज्ञानहेतुत्वं न दृष्टमुखेन ज्ञानकारणं, तथा देवताभक्तिरपीत्यर्थः **पण्डितरूपः**—पाण्डित्यपूर्तिरहितः। ईषदसमाप्तौ रूपप्प्रत्ययः। सर्वप्रसिद्धो मार्ग इत्यर्थः। आराध्यप्रसादमङ्गीकृत्य तदपेक्षत्वमुच्यत इवेति ? भाति। तद्व्यावृत्त्यर्थमाह—**यद्वेति**। कटाक्षणं कटाक्षः, प्रीतिरिति यावत्। **श्रूयते हीति**। 'एष ह्येव' इत्यादिनेति शेषः ॥ ७९ ॥

**ईश्वरस्य साध्यप्रसादादिमत्त्वम्।**

---

**अत्यन्तोदन्तचिन्तासहचरणसहैरेभिरस्मिन् परस्मिन्**
**भक्तिश्रद्धास्तिकत्वप्रभृतिगुणसिरावेदिभिस्तर्कशस्त्रैः।**
**स्वार्थत्वस्वाश्रयत्वस्ववशयतनताद्यूहवर्गोपसर्ग-**
**शिछ्द्येताच्छेद्यपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् ॥ ८० ॥**

**सर्वार्थ०**—एवं सकलफलप्रदस्य सत्त्वस्थानां स्वयंफलभूतस्य च परस्य प्रतिपादनेन श्रोतॄणामनुनिष्पन्नं फलविशेषमाह—**अत्यन्तेति** ॥ पूर्वोत्तरयोस्सरयुगलयोः समर्थितानां चेतनाचेतनतत्त्वस्थितीनां यथासंभवं स्वशेषत्वं स्वाधारत्वं स्वाधीनव्यापारत्वं चेतनान्तरशेषत्वादिकं च विवेकशून्या मन्यन्ते। सोऽयमुपद्रवस्सर्वशेषिणस्सर्वाधारस्य सर्वनियन्तुरीश्वरस्य प्रतिष्ठापकैः प्रमाणानुग्राहकैः प्रतिक्षिप्येतेति ॥ ८० ॥

**इति ईश्वरनिरूपणप्रयोजनविशेषः ॥**

**॥ इति श्रीसर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे नायकसरः तृतीयः ॥ ३ ॥**

त० मु०—२३

आनन्द०—अस्य सरस्य प्रयोजनं कथयन्निगमयतीत्याह—एवमित्यादिना। मूलं—सहचरणसहैः सहायभूतैः। प्रभृतिशब्देन त्वरादि गृह्यते। उपवर्गः—उपद्रवः। क्वचिदुपसर्ग इति पाठः। उत्पत्तिरित्यर्थः। पूर्वोक्तरसरयुगले स्यूतेषु प्रतिपाद्येषु तत्त्वेषु अच्छेद्या दृढा स्थितिर्निश्चयो येषामित्यर्थः ॥ ८० ॥

इत्थं त्रयीमकुटदेशिकवर्यसूक्ति-
सर्वार्थसिद्धिजगदीशसरस्य टीकाम्।
व्यातानिषं गुरुमुखादवगम्य भावं
सन्तः सहध्वमिह मामकसाहसिक्यम् ॥

इति श्रीकुशिककुलजलनिधिसुधाकरनिगमशिखरपरविद्याकुमुदिनीसम्मोदकरस्य
वेदान्ताचार्यस्य भागिनेयेन वत्सकुलजलधिकौस्तुभनृसिंहगुरुसुतेन
नृसिंहदेवेन विरचितायामानन्ददायिन्यां सर्वार्थसिद्धिटीकायां
तृतीयो नायकसरः



# बुद्धिसरः चतुर्थः

धीत्वाद्वेद्मीति सिद्धा स्वयमितरमतिर्बुद्धिलक्ष्मादिधीवत्
यद्वा सर्वज्ञधीवन्न स मतियुगवान्नापि, चैकोनवेदी।
नो चेद्धारामतौ सा प्रथममपि सती नावबुद्धेति धीः स्यात्
स्वस्यां वृत्तेर्विरोधोऽप्युपशमनमियादुक्तदृष्टान्तनीत्या॥१॥

सर्वार्थं०—आत्मतत्त्वं परमपरं च निरूपितम्। अथ यथोद्देशलक्षणं तद्धर्मभूता बुद्धिश्चिन्त्यते। तत्र प्रथमं तत्स्वरूपस्य स्वतस्सिद्धिमाह—धीत्वादिति॥ इतरमतिः—विप्रतिपन्ना बुद्धिः। स्वयं सिद्धा—स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुणेत्यर्थः। वेद्मीत्युपलम्भानुगुण्यप्रदर्शनम्। अस्ति तावत्सर्वसिद्धान्तिनामिदमहं वेद्मीति कर्मकर्तृघटितक्रियाविशेषावभासः। सोऽयं पूर्वज्ञानगोचरेण मानसप्रत्यक्षेण प्राकट्यलिङ्गजनितेनानुमितिज्ञानेन वेति न केनचिद्दृष्टम्। तत्कल्पने तु गौरवम्। बुद्धिसामग्र्येवात्र बोद्धृविशेषणत्वेन भातीति चेत्, तदेतदनुमेयवादिनं प्रत्युत्तरं स्यात्, नतु प्रत्यक्षरूपां बुद्धिसिद्धिमिच्छन्तं प्रति। प्रत्यक्षाप्रत्यक्षसमुदायरूपा च सामग्री न प्रत्यक्षा स्यात्। नच प्रत्यक्षं किंचिदन्यद्वेद्मीत्यत्र बोद्धृविशेषणतया भाति। अतो यदत्रैवं प्रत्यक्षं तदेव ज्ञानमिति धर्मिसिद्धिः। तथाऽप्यदृष्टचरं स्वयंप्रकाशत्वं न ज्ञाने कल्पयितुं शक्यम्। तत्रैव तत्सिद्धौ न कल्प्यत्वम्; अन्यत्र तत्सिद्धिरसिद्धा। एवं तर्हि युष्मदिष्टमपि तत्र चान्यत्र चासिद्धं न तत्र कल्प्यमिति पश्य। प्राकट्यानुमेयत्वस्यान्यत्रासिद्धावपि मानसप्रत्यक्षत्वं सुखादिषु स्वात्मनि च सिद्धमिति चेन्न; सुखादीनि स्वात्मा च स्वयं भासन्ते, मानसप्रत्यक्षतो वेति को विविङ्क्ते? अस्तु वा तत्र तत्सिद्धिः; अस्मदिष्टमपि क्वचित्त्वयैष्टव्यमित्यभिप्रायेणाह—बुद्धिलक्ष्मादिधीवदिति। बुद्धिलक्षणधीर्हि लक्ष्यभूतकृत्स्नबुद्ध्यभिव्याप्ता साधारणधर्मविषया तद्योगेन स्वात्मानमपि विषयीकरोति। बुद्धिरस्तीति च बुद्धिः स्वात्मना विषयिणी; बुद्धित्वसामान्योपष्टब्धसर्वव्यक्तिभासनात्। न च तदाऽनुव्यवसायाद्यवकाशः, शब्दशब्दादिवत् सामान्यतस्स्वात्मप्रकाशने तन्नैरपेक्ष्यात्। बुद्धिव्यतिरिक्तत्वादिबुद्ध्योऽप्येवं ग्राह्याः। दृष्टान्तान्तरमाह—यद्वा सर्वज्ञधीवदिति। सामान्यतो विशेषतो वा सार्वज्ञ्यमिच्छतां तद्बुद्धिः स्वात्मानमपि सर्वानुप्रविष्टं युगपदेव प्रकाशयति; अन्यथाऽनवच्छिन्नसर्वशब्दप्रयोगादिकमपि न स्यादिति भावः। यत्तु कैश्चिदुक्तं—सर्वज्ञबुद्ध्यादीनां स्वसंवेद्यत्वमस्ति; न तु स्वयंप्रकाशत्वमिति, तत्तेभ्य एव रोचेत। न ह्यत्र स्वात्मानं प्रति कर्मकारकत्वं स्वबोद्धृत्वं वा विधातुं युक्तम्। न च स्वगोचरधीनिरपेक्षव्यवहारानुगुण्यं निषेद्धुं शक्यम्।

अथ केचिदूचुः—स्वेतराशेषगोचरज्ञानद्वयवत्तया सर्वज्ञत्वमीश्वरस्येति। तद् दूषयति—न स मतियुगवानिति। अयं भावः—ईदृशज्ञानद्वयवानीश्वर इत्यत्र न किंचित्प्रमाणं पश्यामः, सर्वज्ञत्वान्यथानुपपत्त्या तत्कल्पनं चायुक्तम्, स्वपरनिर्वाहक-समाधिनाऽपि तदुपपत्तेः। यच्च स्वयंप्रकाशत्वमसहमानैरेकोनसर्वज्ञत्वमीश्वरस्योक्तम्, तत्प्रतिक्षिपति—नापि चेति। यदि स्वज्ञानमीश्वरो न जानाति, तदा अन्येषां हेतूनां तद्बुद्धिविषयभूतानामेव हेतुत्वम्; तद्बुद्धेस्तु तदविषयभूताया इति विभागस्स्यात्। तथाऽन्येषां स्वगोचरधीविषयतयैव प्रकाशमानत्वम्, तस्यास्तु तन्निरपेक्षमिति किं न विभज्येत? अपि च स्वज्ञानमजानता सर्वज्ञेन स्वस्य तदाधारत्वमन्येषां तदनाधारत्वं तद्विषयत्वतदन्यत्वादीनि स्वज्ञानविशेषणानि सर्वाणि दुर्ग्रहाणि स्युः। ततश्चानन्तज्ञानवत्त्वमिवानन्ताज्ञानवत्त्वमपि तस्य स्यात्। तथा च जीव-प्रायत्वे तैरेवालम्। आयोजनहेतुश्च भग्नव्याप्तिकः; अचेतनाऽपि हि तद्बुद्धिर्न चेतनायोजिता प्रवर्तते। ततश्चादृष्टादेरपि तथात्वं लाघवादेष्टव्यम्। अस्मिंश्च पक्षे सर्वज्ञत्वश्रुतिर्बाध्येत; भवतां च सर्वज्ञपूर्वकत्वं साधयन्नवीतहेतुरलब्धविषयस्स्यादिति भावः। स्वयंप्रकाशत्वानभ्युपगमे अनिष्टप्रसङ्गमाह—नो चेदिति। क्वचित्क्वचिद्विषये कदाचिद्धारावाहिकबुद्धिस्सर्वसम्मता; सा च पश्चादियन्तं कालमिममर्थमद्राक्षमिति परामृश्यते। न चान्यतः पूर्वं तद्ग्रहसंभवः; धाराविच्छेदप्रसङ्गात् अतो धारावाहिकधीः पूर्वं मनवबुद्धेति भानाभावादवबुद्धेति परामर्शाच्चात्मनैव भातेति भाव्यते। ननु नाङ्गुल्यग्रं स्वात्मानं स्पृशति, न कुठारः स्वात्मानं छिनत्ति, न वह्निः स्वात्मानं दहति, तद्वद्बुद्धेः स्वात्मनि वृत्तिविरोधात् न स्वयंप्रकाशत्वमित्यत्राह—स्वस्यामिति। उक्तदृष्टान्तनीत्या—स्वपर निर्वाहकवर्गन्यायेनेति भावः। यथा चात्मा ग्राह्यश्च ग्राहकश्च, यथा प्रत्यक्षविषयः स्वयं बोध्यः स्वगोचरबोधजनकश्च, एवं यथादृष्टि सर्वमिति ॥ १ ॥

---

## आनन्ददायिनी

करे कलितपुस्तिका दररथांगचिन्मुद्रिका-
सितांबुजकृतासना विजितसर्वधीवासना
अनन्तगुणशेवधिर्हयमुखी परा देवता
निरन्तरमसौ भवेन्मनसि वासमासेदुषी ॥

वृत्तवर्तिष्यमाणयोस्संगतिमाह—आत्मतत्त्वमित्यादिना। ननु धीत्वाद्यनुमानं बाधितं मानसप्रत्यक्ष—प्राकट्यलिङ्गकानुमानान्यतरेणैव वेद्यत्वादित्यत आह—सोऽयमिति। बाधः किं प्रत्यक्षेण उतानुमानेन, नाद्य इत्याह—केनचिदिति। तथा—प्रत्यक्षत्वाभावादिति भावः। द्वितीय आह—तदिति।

ननु ज्ञानसिद्धौ स्वप्रकाशत्वसाधनं तदेव नेत्याश्रयासिद्धिमाशङ्कते-बुद्धीति। व्यवहारेणेति चेत् ज्ञानं सिद्ध्येत तदा तद्धेतोरिति न्यायावतार इत्यभिप्रायेण प्रतिवक्ति-तदेतदिति। ननु सामग्र्येव प्रत्यक्षविषयोऽस्त्वित्यत्राह—प्रत्यक्षेति।

ननु सामग्रीशब्देन कारणमात्रं विविक्षितं नतु प्रत्यक्षाप्रत्यक्षसमुदाय इत्यत्राह–**न चेति**। तत्र किं कारणमात्रं विवक्षितं ? आगन्तुकं वा ? नाद्यः। आत्मादेस्सर्वदा सत्त्वेन सदा घटं वेद्मीति प्रतिभासप्रसङ्गात्। न द्वितीयः। आत्मनः कस्यचिदन्यस्य प्रत्यक्षयोग्यस्याभावादिति भावः। ननु यत्किञ्चिदागन्तुकोऽस्त्यित्राह–**अतो यदत्रेति**। **नामान्तरेणेति**–तदेवाभ्युपेतमिति भावः।

ननु साध्याप्रसिद्धे व्याप्यत्वासिद्धिरिति शङ्कते—**तथापीति**। **एवन्तर्हीति** मानस-प्रत्यक्षविषयत्वं प्राकट्यानुमेयत्वञ्चासिद्धमिति तवापि तुल्यमित्यर्थः। मदीयमपि साध्यं तत्रैव प्रसिद्धमस्त्वित्यत्राह–**सुखादीनीति**। **बुद्धित्वसामान्येति**—बुद्धित्वावच्छिन्नस्य बुद्धिशब्दार्थत्वेन तत्पदघटित वाक्यजन्याया बुद्धेस्तदवच्छिन्नतया वाच्यत्वेन स्वगोचरत्व नियमादिति भावः। **नच तदेति**—युगपत् ज्ञानद्वयासंभवादिति भावः। ननु तत्प्रकाशा-न्यथानुपपत्त्या ज्ञानद्वयवत्त्वमपि युगपदभ्युपगम्यत इत्यत आह—**शब्दशब्दादीति**–स्वेनैव स्वस्य भानादिति भावः। आदिशब्देन सर्वशब्दादयो ग्राह्याः। बुद्धिव्यतिरिक्त-त्वादीत्यादिशब्देन बुद्धिसादृश्यादिकं ग्राह्यम्। **सामान्यतो विशेषतो वेति**–त्रिमूर्त्यन्तर्गतः कश्चित्सर्वज्ञ इति सामान्यतः। नारायणस्सर्वज्ञ इति विशेषत इत्यर्थः। भासर्वज्ञादिभि-रुक्तं शङ्कते—**यत्त्विति**—ज्ञानकर्मत्वादेव प्रकाशो नतु स्वरूपेणेति भावः। **नह्यत्रेति**। यथा स्वस्य स्वतन्त्रत्वं बाधितं—प्रभावाभावात् तथा कर्मकारकत्वमपीत्यर्थः। **नचेति**—स्वातिरिक्तधीनिरपेक्षस्य व्यवहारानुगुण्यमेव स्वप्रकाशत्वमिति भावः। सर्वं जानातीति सर्वविषयकज्ञानवत्वमेव सर्वज्ञत्वं सर्वविषयकैकज्ञानवत्वमित्यभिप्रायेण पक्षान्तरं 'वक्ति—**अथ केचिदूचुरिति**।

ननु सर्वज्ञत्वादिश्रुतिबलादेवं वक्तुं शक्यत्वात् कथं तन्निरास इत्यत्राह—**अयं भाव इति**। **तदाऽन्येषामिति**—लोके कार्यं प्रति कारणानामीश्वरबुद्धिविषयतया तत्प्रेर्यतया च कार्यजनकत्वम्। ईश्वरबुद्धेस्तु तदविषयतयेत्यर्थः। **तथाऽन्येषामिति**—असङ्कोचेन निर्वाहसम्भवादिति भावः।

किञ्चेश्वरज्ञानस्य स्वगोचरत्वाङ्गीकारे एकोनसर्वज्ञत्वमपि न स्यादित्याह—**अपि चेति**। ईश्वरसिद्धिरेव न स्यादित्याह—**ततश्चेति**।

ननु क्षित्यादिकारणीभूतं परमाण्वादिकं केनचित्प्रेर्यं सत् कार्यञ्जनयति कारण-त्वाद्वास्यादिवदिति—न्यायाचार्योक्तानुमानेन ईश्वरसिद्धिरित्यत्राह—**आयोजनहेतुश्चेति**। व्याप्तिभङ्गाय व्यभिचारन्दर्शयति—**अचेतनापि हीति**—ततोऽतिरिक्तज्ञानाभावाच्चेत-नायोजितत्वं नास्ति चेतनशब्दस्य ज्ञानविशिष्टवाचित्वात् तद्गोचरज्ञानाभावे तन्नि-योजनरूप व्यापाराभावादिति भावः।

**अस्मिन्श्च पक्ष इति**—एको न सर्वज्ञपरत्वे सङ्कोचरूपो बाधस्स्यादित्यर्थः।

ननु क्षित्यादिकं सर्वज्ञकर्तृकं महाकार्यत्वात् यन्नैवं तन्नैवं यथा संप्रतिपन्नमिति व्यतिरेकेणेश्वरस्सिद्ध्येदित्यत आह—भवताञ्चेति। अवीतहेतुः—व्यतिरेकी हेतुः। अलब्धविषयः—बाधितविषयस्स्यादित्यर्थः।

ननु प्रत्य (प्रतिविज्ञान) भिज्ञानमनुव्यवसायस्स्यादित्यत्राह—धारेति–विजातीय-प्रत्ययाव्यवहितज्ञानसन्ततेरेव धारात्वादिति भावः।

ननु सजातीय प्रत्ययानाधारकालाव्यवहितज्ञानसन्ततिरेव धाराऽस्तु। प्रथमं घटज्ञानं तदनु तदनुव्यवसायः पुनश्च घटज्ञानमित्यादिक्रमेण धारासंभवादिति चेदत्राहुः। आन्तरज्ञानसामग्र्यपेक्षया बाह्यज्ञानसामग्र्याः बलवत्वात्। अन्यथा बाह्यज्ञानानवकाशात्। नच युगपदुभयसंभवः विरोधात्। नच समूहालम्बनचाक्षुषत्वादिभिस्सांकर्यात्। नच चक्षुषस्सहकारिमनस्सन्निकर्षः मनस इव सहकारित्वे विरोधाभावात्।

नच मानसत्वप्रयोजकसन्निकृष्टमनोजन्यत्वसत्वेन मानसत्वावश्यम्भावात्साङ्कर्यम्। सन्निकृष्टमनोजन्यत्वस्य मनस्सन्निकर्षजन्यत्वस्य वा न मानसप्रयोजकत्वम्, आत्मपरोक्षज्ञाने व्यभिचारात्। अपि तु स्वपरापरभावानापन्नजात्यन्तर प्रयोजकज्ञानकारणासहकृतमनोजन्यत्व, तथा च तादृशत्वाभावान्न साङ्कर्यम्। नापि धाराविच्छेदः। यद्वा ज्ञानद्वयम् सामग्रीभेदात्कार्यभेदावश्यम्भावात्। नच क्षणिकात्मविशेषगुणानां यौगपद्यासम्भवः अप्रयोजकत्वात्। अस्तुवैकज्ञानं। नच सांकर्यं दोषः—अप्रयोजकत्वादिति चेन्नैवम्। एवं कल्पनापेक्षया ज्ञानसामग्र्या एव स्वगोचर–ज्ञान जनकत्वस्यैव लाघवेन कल्प्यत्वात्। नच तत्सन्निकर्षाद्यभावे तद्विषयकज्ञानजनकत्वासम्भवः, समावायादिसंसर्गं इव तदुपपत्तेः। नच रूपी घट इत्यादौ रूपसमवायसन्निकर्षः कारणं विशेषणविशेष्यभावाऽभावेन सन्निकर्षाभावात्।

किञ्च बाह्येन्द्रियसहकारित्वमप्युक्तविधयाऽऽन्तरस्य वक्तुं न शक्यते। तथासति पटज्ञानानन्तरं घटज्ञानधाराकाले पटज्ञानादिगोचरधाराप्रसङ्गेन [पूर्वज्ञातसकलपदार्थादिगोचरधाराप्रसङ्गेन] पूर्वज्ञातसकलपदार्थज्ञानादिगोचरसमूहालम्बनमनुभवविरुद्धमभ्युपगम्येतेति न किञ्चिदेतत् अत एवानन्तरपक्षद्वयमप्यपास्तम्।

किञ्च समूहालम्बनोच्छेदः ज्ञानद्वयस्यैव सर्वत्र सम्भवादिति। स्वात्मनि वृत्तिविरोधादिति—एकस्मिन् कर्मकर्तृभावस्य स्वनिरूपितस्य विरोधादिति भावः। स्वपरनिर्वाहकवर्गान्तरञ्च दर्शयति–यथेति।

नच बोध्यत्वं बोधरूपत्वञ्च न दृष्टमिति वाच्यम्, तस्यापि बुद्धिबुद्ध्यादावुदाहृतत्वादिति ॥१॥

**अक्षरार्थः**

अथ परावरात्मतत्त्वनिरूपणानन्तरं तद्धर्मभूता बुद्धिश्चिन्त्यते। तत्र बुद्धिसत्त्वे प्रत्यक्षं, तस्याः स्वयंप्रकाशत्वे अनुमानं च दर्शयति—**धीत्वादिति** हेतुरयं। **वेद्मीति सिद्धा स्वयमिति**—इदमहं वेद्मीति बोद्धृविशेषणतया स्वयमेव प्रत्यक्षसिद्धेत्यर्थः। अनेन धीः स्वयंप्रकाशा धीत्वादिति प्रकृतानुमाने आश्रयासिद्धिशंका परिहृता भवति। स्वयंप्रकाशत्वं स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुण्यरूपं इह साध्यमित्यभिप्रेतम्। इतरमतिरिति पक्षनिर्देशः। बुद्धिलक्ष्मादिधीवदिति दृष्टान्ततया दर्शितसंप्रतिपन्न-मत्यपेक्षया भिन्ना विप्रतिपन्ना मतिरिह इतरमतिरित्यनेन विवक्षिता। तथा च विप्रति-पन्ना मतिः स्वयंसिद्धा इति प्रतिज्ञानिर्देशः सिद्धः। बुद्धिलक्ष्मादिधीवदिति दृष्टान्तः। बुद्धिलक्ष्म-बुद्धेर्लक्षणं, तस्य धीः बुद्धिलक्षणधीर्हि लक्ष्यभूतकृत्स्नबुद्धिव्यापकासाधारण-धर्मविषया, तद्योगेन स्वात्मानमपि विषयीकरोति। अत्र आदिशब्देन बुद्धिरस्ति, बुद्धि-व्यतिरिक्त इत्यादिबुद्धयो ग्राह्याः। बुद्धित्वसामान्याक्रान्तसर्वव्यक्तीनां तत्र भानेन स्वात्मकबुद्धेरपि तत्र भानावश्यंभावात् स्वविषयकत्वं तत्र तत्र सिद्धमिति भावः। अनेनार्थात् साध्याप्रसिद्धिशंकाऽपि परिहृता भवति। दृष्टान्तान्तरमाह - **यद्वेति**।

सर्वज्ञत्वेन संप्रतिपन्नस्येश्वरादेः धीर्यथा सर्वान्तर्गतस्वात्मविषयिणी तथा इत्यर्थः।

ननु सर्वज्ञस्य द्वे बुद्धी विद्येते। तत्रैका स्वव्यतिरिक्त सर्वविषयिणी। अपराऽपि स्वेतरसर्वविषयिणी स्यातामित्यभ्युपगम्य स्वविषयकबुद्ध्यनभ्युपगमेनापि सर्वज्ञत्वोपपादनं शक्यमित्यत्राह—**न स इति**। स-सर्वज्ञः, न मतियुगवान्—न बुद्धिद्वयवान्। तथा भवताऽ-प्यनभ्युपगमादित्यर्थः। अथ सर्वशब्दस्यानेकार्थपरतया सर्वज्ञः—अनेकज्ञः इत्यर्थस्य स्वबुद्धिमात्रावेदिनि ईश्वरेऽप्युपपत्तेः न तज्ज्ञानस्य स्वविषयत्वसिद्धिरित्यत्राह— **नापि चेति** एकोनवेदी—ईश्वरबुद्धिव्यतिरिक्तसर्ववेदी इत्यर्थः। तथासति ईश्वरस्य स्वबुद्धे र्वेदनानभ्युपगमे स्वस्मिन् तदाधारत्वस्य, अन्यस्मिन् तदनाधारत्वस्य च, स्वज्ञाने तदितरसर्वविषयकत्वस्य च वेदनासंभवेनानेकावेदनावश्यंभावेन जीवसाधारण्यापत्त्या तदतिरिक्तेश्वरसिद्धिर्न स्यादिति भावः।

अस्यानुमानस्य विपक्षे बाधकमाह - **नो चेदिति**। धारामतौ—धारावाहिज्ञाने। सा-धारावाहिबुद्धिः प्रथममपि सती, पश्चादुत्पत्स्यमानात् 'इयन्तं कालमिममर्थमद्राक्ष मिति परामर्शात् पूर्वं सत्यपीत्यर्थः। नावबुद्धेति धीः स्यात्—नाद्राक्षमिति बुद्धिः स्यादित्यर्थः। प्रत्यवमर्शस्य पूर्वानुभवसापेक्षत्वात् धारावाहिज्ञानस्य स्वेनान्येन वा पूर्वं भानाभावे अद्राक्षमिति प्रत्यवमर्शो न जायेत, नाद्राक्षमिति मतिरेव भवितुमर्हतीति भावः। अङ्गुल्यग्रस्य स्वात्मस्पर्शवत्, बुद्धेः स्वविषयकत्वविरोधात् न स्वयंप्रकाशत्व-मित्यत्राह—**स्वस्यामिति**। वृत्तेर्विरोधः—विषयतया वृत्तेर्विरोधः। उपशमनमियात्—परिहारं प्राप्नुयादित्यर्थः। कथमित्यत्राह—**उक्तदृष्टान्तनीत्येति** बुद्धिलक्षणधीदृष्टान्तोप-पादितेन स्वपरनिर्वाहकन्यायेनेत्यर्थः। यथादर्शनं सर्वमुपपन्नमिति भावः ॥१॥

इति ज्ञानसत्तास्वयंप्रकाशत्वे।

स्मृत्या शब्दानुमानप्रभृतिभिरपि धीर्वेद्यते स्वप्रकाशा
धीत्वादेस्तामवेद्यामनुपधि वदतः स्वोक्तिबाधादयः स्युः।
वेद्यत्वे सा जडा स्यादिति च विहतिमद्व्याप्तिभङ्गश्च नो चे-
च्छिष्याचार्यादिसर्वव्यवहृतिविरहाज्जातमौनं जगत्स्यात् ॥ २ ॥

सर्वार्थ०—अपरे तु बुद्धेः स्वयंप्रकाशत्वं त्रातुकामा वेद्यत्वमपह्नुवते; तान् प्रत्याह—स्मृत्येति ॥ अत्र स्वप्रकाशेति संमतांशानुवादो वेद्यत्वविरोधाभावज्ञापनार्थः; स्मृतिस्तावदिह देवदत्तमद्राक्षमित्यादिषु दृष्टा। शब्दश्च बुद्धिपर्यायस्सर्वो बुद्धिं बोधयति; परबुद्धयश्च प्रवृत्त्यादिभिरनुमीयन्ते; स्वबुद्धिं च भविष्यन्तीमनुमाय शृणोति। प्रभृतिशब्देन योगिप्रत्यक्षादिग्रहणं, पराभिमतप्रमान्तरानुधावनं वा। अत्र परोक्तमवीतहेतुमपाकरोति—धीत्वादेरिति। आदिशब्देन स्वयंप्रकाशत्वधीशब्दवाच्यत्वादीनि गृह्यन्ते। पुरुषभेदेन कालभेदेन च बुद्धेरवेद्यत्वमस्ति; नतु सर्वैः सर्वदेत्यभिप्रायेणानुपधीत्युक्तम्। आदिशब्देन स्वबुद्धिबाधः स्वसिद्धान्तबाधश्च गृह्यते। तत्र स्वोक्तिविरोधस्तावत्—अनुभूतिः स्वयंप्रकाशा अनुभूतित्वादित्यादिभिर्धर्मिसाध्यहेत्वादिशब्दैरनुभूतिर्बोध्यते न वा? आद्ये कथं न तद्बाधः? द्वितीये कथमयं प्रयोगस्त्वदिष्टं साधयेत्? भ्रान्त्या बोध्यते न तु वस्तुत इति चेत्तर्हि भ्रान्तिसिद्धं बोध्यत्वमनुमतत्वान्न प्रतिषेध्यम्। वस्तुतस्तु बोध्यत्वं न क्वचित्सिद्धमिति तथाऽपि न प्रतिषेध्यम्। अपि च तादृशस्य वेद्यत्वस्याभावस्सर्वत्र वस्सिद्ध इति सपक्षे सति पक्षमात्रवर्ती हेतुरयं कथं [अ]नाभासः? एवं परबुद्धिमहं जानामीति स्वबुद्धिबाधः ज्ञानरूपब्रह्मबोधनार्थं शास्त्रमिति स्वसिद्धान्तबाधश्च। अत्रानुग्राहकमपि परप्रयुक्तं दूषयति वेद्यत्वे इति। वेद्यत्वे जडत्वप्रसङ्ग इति वदता प्रसञ्जकप्रसञ्जनीयधर्मान्वितत्वेन शब्दवेद्यत्वं स्वीकृतं न वा पूर्वत्र व्याघातः, उत्तरत्र वैयर्थ्यम्। किंचात्र प्रसज्यमानं जडत्वं वेद्यत्वमात्रं वा, स्वगोचरवेदनेनैव सिद्धत्वं वा, स्वयंप्रकाशत्वाभावो वा, अविदितावस्थायोगो वा, अन्यद्वा किंचित्? न प्रथमः; इष्टप्रसङ्गरूपत्वात्, प्रसञ्जकप्रसञ्जनीययोरविशेषाच्च। न द्वितीयः, अवधारणव्यवच्छेद्यस्य स्वगोचरवेदननिरपेक्षसिद्धत्वस्यानुमानादिना समर्थ्यमानस्य स्वाश्रयवेद्यत्वसहदृष्ट्या प्रसङ्गस्य भग्नव्याप्तिकत्वात्। अत एव न तृतीयः; नामभेदमात्रत्वात्। नापि चतुर्थः, इष्टप्रसङ्गत्वात्; न हि बुद्धिर्विद्यमानावस्थायां स्वबुद्ध्यन्तरविदिता। अप्रकाशमानावस्थाप्रसङ्गे तात्पर्यमिति चेन्न; सर्वेषां सर्वदा अप्रकाशमानत्वावस्थायास्त्वय्यन्तवादिनां घटादिष्वप्यसंमतत्वात्, कदाचित्कस्यचिदप्रकाशमानत्वस्य बुद्धावप्यस्माभिरभ्युपगमात्। नापि पञ्चमः; बुद्धौ दृष्टस्य कस्यचिद्विरुद्धधर्मे प्रसज्यमाने पूर्ववद्व्याप्तिभङ्गादेव। अतथाभूतस्य तु यथासंभवमिष्टप्रसङ्गत्वाद्व्याप्तिरहितत्वाद्वेति। एवं परोक्तं प्रसङ्गं प्रतिक्षिप्य प्रतिप्रसङ्गमाह—नो चेदिति। न तावच्छिष्याचार्यौ परस्परबुद्ध्यनभिज्ञौ; प्रश्नप्रतिवचनाद्यसंभवप्रसङ्गात्। एवं वादिप्रतिवादिप्रभृतयोऽपि मिथो बुद्धिमबुद्ध्यमाना न विवादादिकं कुर्युः; तथा पामराणामपि

संलापो न स्यादिति भावः। नन्वन्तः करणवृत्तय एव परस्परं बुद्ध्यन्ताम्, तत एव च सर्वो व्यवहारः स्यात्; न स्यात्; बाह्यकरणव्यापाराणामिवान्तः करणव्यापारस्यापि ज्ञानशब्दवाच्यत्वाभावात् । भावे वा तदतिरिक्तचैतन्यस्वीकारायोगात् । एतेन वृत्त्यवच्छिन्नचैतन्यं मिथो वेद्यम्, न तु शुद्धमित्यादिकमपि दुराशामात्रम् ॥ २ ॥

---

आनन्द०—प्रसङ्गसङ्गत्याऽऽह—अपरे त्विति । बुद्धिपर्याय इति—बुद्धित्वप्रवृत्तिनिमित्तकशब्द इत्यर्थः । परबुद्धयश्चेति—परस्य घटादिप्रवृत्तिन्दृष्ट्वा प्रवृत्तित्वेन लिङ्गेन बुद्ध्यत इत्यर्थः । आदिशब्देन शब्दादिग्रहणम् । अवीतहेतः—व्यतिरेकिहेतुः । धीशब्दवाच्यत्वादीत्यादिशब्देन बोधव्यवहारविषयत्वादि गृह्यते । भ्रान्त्या बोध्यत इति—बोध्यत्वं साध्यादिपदैर्न पारमार्थ्यम्, अपि तु वृत्तिकल्पितमिति । वस्तुतस्तु बोध्यत्वमिति पारमार्थिकबोध्यत्वमित्यर्थः । ज्ञानरूपेति—प्रपञ्चमिथ्यात्वज्ञानार्थं शास्त्रमित्येतत्पराकृतमिति भावः । स्वगोचरवेदननिरपेक्षसिद्धित्वस्येति—स्वगोचरवेदनसिद्धत्वं हि स्वेन सिद्धत्वेऽप्यविरुद्धमिति हि विशेषितमिति तत्र व्यभिचार इति भावः । अत एवेति—तस्याप्यनुमानेन पक्षे साधने तादृशानुमितिविषयत्वाद्व्याप्तेर्भङ्ग इति भावः । नामभेदमात्रत्वादिति—एवकारार्थस्यैव स्वयंप्रकाशत्वाभावत्वादिति भावः । अप्रकाशमानावस्थात्वं किं ? यत्किञ्चित् बुद्ध्यन्तरेणाप्रकाशः ? उत प्रकाशसामान्याभाव इति विकल्पमभिप्रेत्याद्य आह—इष्टप्रसङ्गत्वादिति । द्वितीयमाशङ्कते—अप्रकाशमानेति । । कदाचित्कस्यचिदिति ।

ननु कदाचित्सर्वेषामप्रकाशमानत्वं विवक्षितं घटादावपीदमस्त्येवेति चेन्न । बुद्धिबुद्ध्यादौ व्यभिचारात्, स्वातिरिक्तज्ञानवेद्यत्वाभावस्य तत्रापि सत्वात् । बुद्धौ दृष्टस्येत्यादि—बुद्धिदृष्टधर्मेण केनचिद्विरुद्धस्य आपाद्यते चेत्तस्य धर्मस्यापाद्येन व्याप्त्यभावादिति भावः । प्रतिप्रसङ्गमेव दर्शयति—न तावदित्यादिना । परिहरति—न स्यादिति ।एतेनेति । अवच्छेदकवृत्त्यैव सर्वव्यवहारसिद्धौ अवच्छेद्यकल्पने मानाभावादिति भावः । शुद्धम्—देशकालकर्तृविशेषरूपोपाधिरहितं । जातमौनं—व्यवहारशून्यम् ॥ २ ॥

---

अक्षरार्थः—बुद्धेः स्वयंप्रकाशत्वं साधितम् । अथ तस्याः परोक्तं ज्ञानान्तराविषयत्वं निरस्यति—स्मृत्येति । इदमहमपश्यमिति स्मृत्या पूर्वतनं दर्शनं हि विषयीक्रियत इति भावः । तथा तत्र प्रमाणान्तराण्यप्याह—शब्दानुमानप्रभृतिभिरिति । शब्द इत्यनेन बुद्धिपर्यायः ज्ञानं, धीः मतिरित्यादिस्सर्वोऽपि विवक्षितः । स च बुद्धिं बोधयति । परबुद्धयश्च प्रवृत्त्यादिभिरनुमीयन्ते । प्रभृतिशब्देन योगिप्रत्यक्षादिग्रहणम् । एवमुक्तशब्दादिप्रमाणजन्यबुद्धिविषयत्वात् तस्या अवेद्यत्वं दुर्वचमिति भावः ।

अथ परोक्तमनुमानं दूषयति—धीत्वादेरिति। आदिशब्देन स्वयंप्रकाशत्वादिपरिग्रहः। तां—बुद्धिम्। अनुपधि—देशकालादिविशेषमन्तरेण। अवेद्यां—वेद्यत्वाभाववतीं वदतः स्वोक्तिबाधादयस्स्युः। अनुभूतिः स्वप्रकाशा अनुभूतित्वादित्यादिशब्दोक्त्या अनुभूत्यादिज्ञाने जाते सति अनुभूतेरवेद्यत्वासंभवात् तस्या अवेद्यत्वोक्तिबाधः। अनुभूत्यादिशब्देन ज्ञानाजनने तत्प्रयोगस्य त्वदिष्टासाधकत्वात् वैयर्थ्यात् तत्प्रयोगानुपपत्तिः। आदिशब्देन स्वबुद्धि—स्वसिद्धान्तबाधादयोऽपि विवक्षिता इति भावः।

अथ परोक्तमनुमानानुग्राहकप्रसङ्गं दूषयति-वेद्यत्वे सा जडा स्यादिति। बुद्धेर्वेद्यत्वाङ्गीकारे (ज्ञानान्तरविषयत्वाङ्गीकारे) जडत्वप्रसङ्ग इति भावः। चस्त्वर्थः। तत्र दोषमाह—विहतिमदिति। व्याघातवदित्यर्थः। कथमिति चेत् प्रसञ्जकप्रसञ्जनीय धर्मवत्वेन शब्दवेद्यत्वाभ्युपगमावश्यंभावात्, अन्यथा प्रसङ्गस्यैव वैयर्थ्यापातादिति भावः। दोषान्तरमाह—व्याप्तिभङ्गश्चेति। ज्ञानान्तरविषयत्व-स्वयं प्रकाशत्वरूपाजडत्वयोः परानुमेये स्वस्मिन् वर्तमाने ज्ञाने साहचर्यदर्शनेन वेद्यत्वजडत्वयोः व्याप्तिज्ञानासंभवादिति भावः। प्रतितर्कमाह—नो चेदिति बुद्धेः ज्ञानान्तरविषयत्वं नास्तीति चेदित्यर्थः। शिष्याचार्यादिसर्वव्यवहृतिविरहादिति शिष्याचार्यप्रश्नोत्तरव्यवहारयोः निष्प्रयोजनत्वेन विरहापत्त्या जगदेव जातमौनं मूकप्रायं स्यादिति भावः। आदिशब्देन लौकिकपुरुषव्यवहारोऽपि गृह्यते ॥ २॥

इति बुद्धेरवेद्यत्वभङ्गः।

---

**बुद्धेरर्थप्रकाशावनुमितिरिति चेत्तन्न साध्याविशेषात्**
**साध्याद्भेदेऽपि बुद्धिर्यत उदयति ते स्यात्ततोऽर्थप्रकाशः।**
**मध्ये बुद्धिः किमर्था ननु सममुभयोरप्यसाधारणत्वं**
**तत्सा नित्यानुमेया यदि फलति तदा बुद्धितत्त्वापलापः ॥३॥**

**सर्वार्थ०**—कौमारिलास्तु कथयन्ति—न स्वयंप्रकाशा, नापि मानसप्रत्यक्षा बुद्धिः, स्वफलेन तु विषयप्रकाशेनानुमीयत इति। तदनुभाषते-**बुद्धेरिति** ॥ बुद्धिलक्ष्मादिधीवदित्यादिना पूर्वोदाहृतं स्वप्रकाशत्वं दुस्त्यजमित्यभिप्रायेण प्रतिक्षिपति-**तन्नेति**। अर्थप्रकाशो बुद्धिरिति हि बुद्धिं लक्षयन्ति। अतः कथं तेनैव लिङ्गेन तस्यैवानुमानमिति व्यञ्जयन्नाह—**साध्याविशेषादिति**। नन्वर्थगतः प्रकाशो लिङ्गम्, पुरुषगतः प्रकाशोऽनुमेय इत्यत्राह—**साध्यादिति**। अयं भावः—पुरुषगतप्रकाशकल्पनेऽपि यद्यर्थगतप्रकाशमन्तरेण व्यवहारो न जायेत तदा बुद्धिजनकत्वेनाभिमतैव सामग्री लाघवादर्थगतप्रकाशस्याव्यवहितहेतुरिति कल्प्यतामिति। फलितमाह—**मध्य इति**। किमर्था-न तावदर्थः व्यवहारार्था, नाप्यर्थप्रकाशार्था; द्वयोरन्यथासिद्धेरिति भावः। प्रतिपुरुषनियतविशेष-

मन्तरेण कथमर्थप्रकाशः प्रतिपुरुषनियतो भवेदित्यत्राह—ननु सममिति। बुद्धेरिव बुद्धिसामग्र्या अपि तत्तत्पुरुषासाधारणत्वं त्वयाऽपि स्वीकृतम्। अन्यथा कथमेकपुरुषमात्रनिष्ठबुद्धिजनकत्वमिति भावः। उक्तं निगमनेन व्यनक्ति-तदिति ॥ ३ ॥

---

आनन्द०—आक्षेपसङ्गतिं दर्शयति—कौमारिलास्त्विति। अर्थप्रकाशः—विषयगतप्रकाशः प्राकट्याख्यो धर्मविशेषः। नन्वत्र अर्थप्रकाशो बुद्धिरित्यत्र प्रकाशयतीति प्रकाशः अर्थगतप्रकाशहेतुरिति तल्लक्षणमित्यभिप्रायेणाऽऽह—नन्विति।

ननु बुद्धिहेतुभिरस्त्वर्थप्रकाश इति तद्धेत्वपेक्षया तस्या एव लाघवेन हेतुत्वादित्यत आह—अयं भाव इति। बुद्धिमङ्गीकृत्य तत्सामग्रीजन्यत्वोक्तौ गौरवं सैव नाभ्युपगम्यतां लाघवादिति भावः। प्रतिपुरुषमिति—अर्थस्य साधारणत्वात् तज्जनकबुद्ध्यसाधारण्येन प्रकाशासाधारण्यं वाच्यमिति भावः।

---

अक्षरार्थः—अथ बुद्धेर्भाट्टोक्तं नित्यानुमेयत्वं प्रतिक्षेप्तुं तन्मतमनुवदति—बुद्धेरित्यादिना। अर्थप्रकाशादनुमितिरिति अर्थः-ज्ञातः प्रकाशमानत्वात् इत्यनुमानेन ज्ञानानुमितिरिति भाट्टा वदन्ति। तद्दूषयति—तन्नेति। कुत इत्यत्राह साध्याविशेषादिति। अर्थप्रकाशो बुद्धिरिति हि बुद्धिं लक्षयन्ति। अतः कथं तेनैव लिङ्गेन तस्यैवानुमानमिति भावः। अर्थगतः प्रकाशोलिङ्गं, तेन च पुरुषगतः प्रकाशोऽनुमीयत इति न साध्याविशिष्टत्वमित्यत्राह साध्याद्भेदेऽपीति। तत्र दोषमाह बुद्धिरिति। बुद्धिः पुरुषगतप्रकाशः। यतः—यस्याः सामग्र्याः। उदयति उत्पद्यते। इति ते भवतः, मतिः, ततः-तस्याः सामग्र्या एव अर्थप्रकाशः स्यात्, मध्ये बुद्धिः किमर्था? निरर्थिकेत्यर्थः। अर्थगतप्रकाशस्य बुद्धिजनकतया अभिमत सामग्र्यैव उत्पत्तिसंभवे तदुत्पादकतया अतीन्द्रियतया अभिमतस्य पुरुषगतप्रकाशस्य कल्पनमेव मा भूदिति भावः। तर्ह्यर्थप्रकाशस्य पुरुषविशेषनियतबुद्धिजन्यत्वानुपगमे सर्वेषामपि पुरुषाणामन्येषामप्यर्थप्रकाशः स्यादित्यत्राह—ननु सममिति। उभयोरपि—बुद्धितत्सामग्र्योरुभयोरपि इत्यर्थः। असाधारणत्वं—पुरुषविशेषनियतत्वं। समं तुल्यामित्यर्थः। यथा बुद्धेः पुरुषविशेषनियततया अर्थप्रकाशः पुरुषविशेषनियतस्तथा बुद्धिसामग्र्या अपि पुरुषविशेषनियतत्वात् तज्जन्यार्थ प्रकाशस्य पुरुषविशेषनियम उत्पन्न एवेति भावः। उक्तमर्थं निगमयति—तदिति तम्-तस्मात्। अतीन्द्रियबुद्धि कल्पनस्य निरर्थकत्वात्। नित्यानुमेया यदि—प्रत्यक्षानवगता यदीत्यर्थः। फलति तदा बुद्धितत्त्वापलापः—बुद्धितत्त्वमेव नास्तीति सिद्धान्तः फलिष्यतीति भावः ॥ ३ ॥

इति बुद्धेर्नित्यानुमेयत्वभङ्गः ॥

ज्ञातुर्ज्ञप्तेरलोपं कथयति निगमः स्मर्यते चैवमेषा
तस्मादेकत्वसिद्धौ प्रसरणभिदया तद्भिदैकत्र पुंसि ।
योग्यादृष्टेरभावान्न च भवति सुषुप्त्याद्यवस्थासु बाध-
स्तत्तद्वस्तुप्रकाशक्षणविरहवती न प्रकाशेत बुद्धिः ॥ ४ ॥

**सर्वार्थ०**—वैशेषिकादयो वदन्ति—अनीश्वराणामात्मनामक्षजन्यमेव ज्ञानं न तु स्वाभाविकमिति । तन्निरासार्थमाह–ज्ञातुरिति ।। श्रूयते हि न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इत्यादि । नेयं श्रुतिरीश्वरधीविषया, प्रकरणवैघट्यात् । न धीप्रवाहाविच्छेदपरा, सुषुप्त्यादौ तद्विच्छेदस्य युष्माभिरेवोक्तेः । न ज्ञानशक्तिनित्यत्वार्था, मुख्ये सत्युपचारायोगात् । नात्मस्वरूपनित्यत्वार्था, व्यतिरेकोक्तेः । न चात्र सामानाधिकरण्यम्, आत्मस्वरूपनित्यत्वस्थापने विशेषणनैरपेक्ष्यात् । अत्र स्वाभीष्टार्थस्य उपबृंहणसिद्धत्वमाह—**स्मर्यत** इति । एवं–विपरिलोपरहितत्वेनेत्यर्थः । तदाह भगवान् **शौनकः**–

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः ।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिमसतस्संभवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥ इति ।

एवं तर्हि स्मृत्यनुभवरूपेण, प्रत्यक्षपरोक्षभेदेन, दर्शनश्रवणादिभेदेन, पूर्वापरादिभेदेन च सर्वलोकविदितो धीभेदः कथं निर्वाह्य इत्यत्राह—**तस्मा**दिति । अत्र प्रज्ञा च तस्मात् प्रसृता पुराणी, तेनास्य क्षरति प्रज्ञा, आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा इत्यादिकमप्यभग्नस्वारस्यमिति भावः । पुरुषभे[द]देन नियतधीभेदस्य प्रसरणभेदो पाधिकत्वाभावादेकत्र पुंसीति नियमितम् । ननु सुषुप्त्यादिषु स्वतोऽन्यतो वा बुद्धेरुपलम्भासंभवान्नित्यत्वश्रुतिः आदित्यो यूप इत्यादिवदपहृतविषया; तत्राह—**योग्यादृष्टे**रिति । योग्यानुपलब्धेरभावादनुपलब्धिमात्रस्याबाधकत्वाच्च न तदानीं तद्बाधः; यूपद्रव्यस्य तच्छक्तेर्वा तपनतादात्म्यं विरुद्धधर्मसहिततत्तद्धर्मिग्राहकेण विद्रावितमिति भावः । कथमत्र योग्यादृष्टेरभाव इत्यत्राह—**तत्त**दिति । प्रकाशयोग्यदशायामप्रका[शे]शो हि योग्यानुपलब्धिः स्यात् । विषयप्रकाशरहितावस्थायां न बुद्धिरनन्याधीनप्रकाशा । अतः सुषुप्त्यादौ तस्याः स्वतः प्रकाशयोग्यत्वाभावान्न योग्यानुपलब्धिरिति ॥ ४ ॥

आनन्द०—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—वैशेषिकादय इति। प्रकरणवैघट्यादिति—जीवज्ञानप्रकरणमिति भावः। मुख्ये सतीति।

ननु भवत्सिद्धान्तेऽप्यवस्थाविशिष्ट एव ज्ञानादिशब्दव्युत्पत्तिप्रयोगयोर्दर्शनात् विषयीकरणाद्यवस्थाराहित्यस्य ज्ञानशब्दमुख्यार्थत्वं न स्यादेव, नहि घटशब्दमुख्यार्थत्वं मृदवस्थामात्रवत इति चेदत्र केचित्। मृदोऽपि घटशब्दमुख्यार्थत्वमस्त्येव घटत्वावस्थाविशिष्टद्रव्यवाचित्वात् तथा विषयप्रकारावस्थाविशिष्टस्य ज्ञानद्रव्यस्य ज्ञानशब्दवाच्यत्वं मुख्यमेव।

नचैवं शक्तेरपि तथात्वं तदवस्थाविशिष्टत्वाभावात्। शक्तेरेव तद्वैशिष्ट्ये तस्या एव द्रव्यत्वेन नाममात्रभेदात्। ज्ञाननित्यत्वञ्च ज्ञानत्वाश्रयनित्यत्वमेव।

ननु ज्ञानावस्थाया अपि नित्यत्वं। नच विकारमात्रमेवात्मसमवेतमस्तु तन्मात्रेणैव सकलव्यवहारोपपत्तेः नतु तदाश्रयद्रव्यान्तरं गौरवादिति वाच्यम्। अवस्थामात्रस्य सङ्कोच विकासायागादनित्यस्वाच्च तदन्यथासिद्धिरित्याहुः।

ननु नित्यत्वश्रुतिरात्मनो ज्ञानावस्थावतो नित्यत्वं वदतीत्यत्राऽऽह—नात्मस्वरूपेत्यादिना। विशेषणनैरपेक्ष्यादिति—विज्ञातुर्लोपो न विद्यत इति मात्रेणापि नित्यत्वसिद्धौ विज्ञातेर्विज्ञानात्मन इति विशेषणवैयर्थ्यादिति भावः।

व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहा दलक्षणमिति महाभाष्योक्तन्यायेनाह अत्रेति। असतस्सम्भवः कुत इति। जलाम्बरमिति—द्वन्द्वैकवद्भावः। जलाम्बरयोरसतोस्सम्भव इति न किञ्चित्प्रमाणमित्यर्थः। अभग्नस्वारस्यमिति प्रसरणादेरुत्पत्त्यादिपरत्वे स्वारस्य भङ्गादिति भावः। पुरुषभेदनियतधीभेदस्येति।

ननु पुरुषभेदेऽपि लाघवाद्धिय ऐक्यमस्तु, तद्भेदव्यवहारः प्रसरणभेदप्रयुक्तो भवति, पुरुषैक्यमेव वेति चेदुच्यते। यदि धिय ऐक्यं तदा देवदत्तस्य घटापरोक्ष्ये यज्ञदत्तस्याप्यापरोक्ष्यं स्यात् देवदत्तस्य प्रकाशार्थदीपन्यायेन साधारण्यात्।

नच तत्तत्प्रसरणसामग्र्यसाधारण्यात्तन्नियमः। तदसाधारण्यस्य दीपोत्पादनसामग्रीसाधारण्यवदप्रयोजकत्वात् अन्यथा आत्मैक्यमेव किमिति नाङ्गीक्रियते व्यवस्थानुपपत्तेस्तुल्यत्वादिति।

केचित्तु ईश्वरज्ञानस्य जीवज्ञानस्य च भेदो वक्तव्यः। सर्वविषयकत्वस्य व्यापकत्वेन युगपद्व्यापकत्व-सङ्कुचितत्वयोर्विरोधात्। तथा च तन्न्यायेन धर्मिभेदे ज्ञानभेदः स्वीकार्य इत्याहुः।

**तच्छक्तेर्वे** ति–यूपशब्दस्य तक्षणादिजन्यातीन्द्रियाधेयशक्तिविशिष्टवाचित्वाद्यूपस्याहवनीयादिवदलौकिकत्वादिति भावः। **विरुद्धधर्मसहितेति** तक्षणाद्यनन्तरजन्यत्व तत्प्राक् (ग) सत्वादि विरुद्धधर्मविशिष्टताग्राहकेणेत्यर्थः। **प्रकाशयोग्यवशा** विषय प्रकाशदशा। ननु तद्दशायामन्याधीनप्रकाशो घटादिवदस्त्वित्यत्राह—**अत इति**—सामग्र्याः अप्यभावादिति भावः।

---

**अक्षरार्थः**—अथ धर्मभूतज्ञानस्यानित्यत्वं वदतो वैशेषिकादीन्निरस्यति—**ज्ञातुरिति**। ज्ञातृसंबन्धिन्या इत्यर्थः। ज्ञप्तेः-मतेः। अलोपं–नाशाभावं। कथयति–प्रथयति। निगमः 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत' इत्यादिको वेद इत्यर्थः। अत्रोपबृंहणानुगुण्यमप्याह—**स्मर्यते चेति**। एवमेषा–मतिः एवं–उत्पत्तिनाशरहितत्वेन।

'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा॥'

इत्यादिशौनकादिस्मृत्या प्रतिपाद्यत इति भावः। तस्मात् बुद्धेर्नित्यत्वादेकत्वसिद्धौ, एकदाऽनेकबुद्ध्यनुपलम्भनेन एकत्वसिद्धौ। कालभेदेन स्मृत्यनुभवादिभेदः कथमेकस्मिन् पुरुषे उपपद्यत इति चेत् अत्राह—**प्रसरणभिदयेति**। तद्भिदा–स्मृत्यनुभवादि भेदः इत्यर्थः। पुरुषभेदेन बुद्धिस्वरूपभेदेऽपि एकस्मिन् पुरुषे कालभेदेनैकस्या एव बुद्धेः प्रसरणभेदात् स्मृत्यनुभवादिभेदः उपपन्न इति भावः।

'प्रज्ञा च तस्मात् प्रसृता पुराणी' इत्यादिप्रमाणबलात् बुद्धेः प्रसरणसंकोचादिकमुपपन्नमेव।

अथ सुषुप्त्यवस्थायां बुद्धेरनुपलम्भात् नित्यत्वबाध इत्याह—**योग्यादृष्टेरभावादिति**। योग्यानुपलब्धेरभावादित्यर्थः। कथमत्र योग्यानुपलब्ध्यभाव इत्याह—**तत्तदिति** प्रकाशयोग्यदशायामप्रकाशो हि योग्यानुपलब्धिः। विषयप्रकाशरहितावस्थायां न बुद्धिरनन्याधीनप्रकाशा। अतस्सुषुप्तिदशायां विषयप्रकाशाभावात् स्वतःप्रकाशयोग्यत्वाभावाद् न योग्यानुपलब्धिः। विषयप्रकाशलक्षणरूपसहकारिविरहादेव विद्यमाना अपि न प्रकाशते बुद्धिरिति भावः॥ ४॥

**इति क्षेत्रज्ञबुद्धेरपि स्वरूपनित्यत्वम्।**

उत्पत्त्यादेरभावान्न यदि दृशि भिदा नो दशाभेददृष्टेः
दृष्टादृष्टव्यवस्था क्वचिदिह पुरुषे बुद्ध्यवस्थाभिरेव ।
अज्ञानाद्यैरनैकान्तिकमपि न च धीरात्मभेदेऽप्यभिन्ना
ज्ञत्वाज्ञत्वादिभेदः कथमिव घटते सर्वथैका मतिश्चेत् ॥ ५ ॥

**सवार्थ०**—यदाहुः—संविन्न नाना उत्पत्तिरहितत्वान्नाशरहितत्वाद्वा, न यदेवं न तदेवं यथा घट इति, तदनुभाषते—**उत्पत्त्यादे**रिति ॥ अत्र परमार्थभेदो वा अपरमार्थभेदो वा प्रतिक्षिप्यते ? नाद्यः, व्यतिरेकस्थाने घटादौ परमार्थभेदाभ्युपगमप्रसङ्गात् । न द्वितीयः; पक्षे परमार्थभेदाभ्युपगमप्रसङ्गात् । तथा च किं नश्छिन्नं, कल्पितभेदास्वीकारात् ? तन्निषेधे स्वमतविरोधश्च । अत एव भेदमात्रप्रतिषेधप्रतिज्ञाऽपि दुश्शकेत्यभिप्रायेण प्रतिवक्ति—**नो** इति । वाधितत्वमाह—**दशाभेददृष्टे**रिति । उत्पत्तिनाशाद्यवस्थास्संविद-स्सर्वलौकिकपरीक्षकसंदृष्टाः; तत्प्रतिषेधस्तैरेव प्रतिषिध्येतेति भावः । हेत्वसिद्धिमपि दर्शयन् दशाभेदं दर्शयति—**दृष्टादृष्टे**ति । यदि त्वेकैव बुद्धिस्सर्वदा सर्वविषया, किंचिन्मया दृश्यते नान्यत्, दृष्टं च तत् तदिदानीं न दृश्यत इत्यादिप्रतीताप्रतीत-व्यवहाराः प्रलुप्येरन्; चिन्ताबुभुत्साप्रश्नोत्तरादयश्च न भवेयुरित्याशयः । पुरुषभेदनियत-बुद्धिभेदस्यावस्थाभेदप्रयुक्तत्वाभावात् **क्वचिदिह पुरुष** इति विशेषितम् । किं चोत्पत्ति-रहितः प्रागभावः, त्वदिष्टं देवदत्तादिभेदप्रतिनियतप्रमानिवर्त्यानादिभावरूपं घटाद्यज्ञानं च त्वयैव भेदवत्तयाऽङ्गीक्रियते; नाशरहितश्च घटपटादिप्रध्वंसो नानाभूतः । अतस्तैस्त्व-दुक्तमनुमानमनेकान्तिकमित्याह—**अज्ञानाद्यै**रिति । उत्पत्तिनाशाभावद्वयसमुदायात्मा युगलहेतुर्नानैकान्तिक इति चेत्; तदपि न, अत्यन्ताभावैरुभयान्तरहितैः प्रतियोगिभेदेन नानाभूतैरनैकान्त्यस्य दुस्तरत्वात्, तेषां चोत्पत्त्यादिमत्त्वे प्रागूर्ध्वं च तदाश्रये प्रतियोगि-प्रसङ्गेनात्यन्ताभावरूपताव्याघातात् । न चैक एवात्यन्ताभावस्सर्वप्रतियोगिकः, एक-शून्यस्य सर्वशून्यत्वप्रसङ्गादिति भावः । प्रकारान्तरेणापि बाधं दर्शयति—**न चे**ति । अयं भावः—अस्माभिस्तावन्नित्यस्सत्यश्चात्मभेदः स्वीकृतः, युष्माभिरपि काल्पनिकः; पक्षद्वयेऽपि जडपण्डितगुरुशिष्यादिव्यवस्था संविद्भेदमन्तरेण न संपद्येत । ततश्च पुरुष-भेदनियतबुद्धिभेदापह्नवस्सहृदयविसंवादीति हृदयम् । उक्तं विवृणोति—**ज्ञत्वे**ति । यत्तु मायाकृतविच्छेदप्रत्ययाच्चिच्छक्तिचित्रभित्तौ विचित्रप्रतिभास इति बाह्याद्वैतिभि-रुक्तम्, तत्र यदि वैचित्र्यं सत्यम्, ऐक्यव्याघातोऽपि दुर्वारः । अथ काल्पनिकम्, अत्यन्ता-द्वैतमतवदेव सर्वोपप्लवप्रसङ्ग इति । **सर्वथा**—विषयाश्रयस्वगतभेदविधूननेनेत्यर्थः ॥५॥

---

**आनन्द०**—ननु यद्युत्पत्तिराहित्यं तर्हि नानात्वमपि न स्यादित्याक्षेपसङ्गतिं दर्शयति—**यदाहु**रिति—अत्र किं संविच्छब्देन घटादिप्रकाशदशा विवक्षिता ? उत धर्मिद्रव्यस्वरूपमिति विकल्पमभिप्रेत्य आद्ये दूषणमाह—**बाधितत्वमाहे**ति । **उत्पत्ती**ति—नानात्वेन सन्दृष्टा इत्यर्थः । **तत्प्रतिषेध इति**—अवस्थाभेदनिषेधस्तु तद्दर्शनैरेव

बाधित इत्यर्थः । **यदि ह्येकैवेति**—कादाचित्कत्वेनोत्पत्तिविनाशसिद्धेर्हेत्वसिद्धिरिति भावः । द्वितीयन्दूषयतीत्याह **किञ्चेति** । अत्र किमुत्पत्त्यभावो हेतुनाशाभावो वा आहो उभयमिति विकल्पाभिप्रायेणाद्य आह—**उत्पत्तीति** । द्वितीय आह—**नाशरहित-श्चेति** । तृतीयं शङ्कते—**उत्पत्तिविनाशेति** । **तेषांचोत्पत्त्यादिमत्त्व इति** ।

नन्वत्यन्ता भावस्य विनाशोऽस्तु, नच तदाश्रये प्रतियोगिप्रसङ्गः घटध्वंसदशायां घटप्रागभावाभाववत्तद्विनाशस्यैव तद्विरोधित्वात् । किञ्चाभावाभावे तत्प्रतियोगिना भवितव्यं न भावरूपेण तथा नियमाभावादिति चेन्न । तर्हि—अत्यन्ताभाववत्त्वन्न स्यात् । नित्याभावत्वं ह्यत्यन्ताभावत्वं अन्यथा प्रागभाववैलक्षण्यायोगात् । नच भावरूपशून्यत्व मेव ध्वंसप्रागभाववैलक्षण्यमिति शङ्क्यम् तस्य घटादिप्रतियोगिकत्वे [1]तत्त्वस्याप्य-भावात् ।

किञ्च घटकाले सोऽभावोऽस्ति ? नवा ? नाद्यः । प्रतियोगिसमानकालीनत्व-विरोधात् । न द्वितीयः । तदधिकरणे घटो नास्तीति प्रतीत्यभावप्रसङ्गात् । नच सोऽप्य-भावो घटविरोधि घटाभावश्चेति वाच्यम् । तथा सति गौरवं स्यात् । लाघवादेकेनैव सर्वव्यवहारोपपत्तेरिति ।

ननु साध्यसत्वान्न व्यभिचार इति शङ्कामपाकरोति—**नचेति** । ननु घटवतोऽपि पटशून्यस्य घटवत्त्वात्तच्छून्यत्वेन न व्यवहार इति चेन्न । यस्मिन्सत्यपि न तच्छून्यता व्यवहारः तदाऽभावस्ततो भिन्न इति स एवाऽभावः नतु सर्वसाधारणः प्रमेयत्वादिवदवि-रुद्धत्वादित्यन्यत्रास्माभिर्विस्तरेण प्रपञ्चितः । ननु तन्मते आत्मभेदाभावात्कथमात्म भेदेत्युक्तिरित्यत्राह—**अयं भाव इति** । **युष्माभिरिति** अनेक जीववादमभ्युपगच्छद्भि-र्वाचस्पतिप्रभृतिभिरित्यर्थः ।

अथ "अविभक्तोऽपि बुध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्य ग्राहकसंवित्ति भेदवानिव लक्ष्यते ॥
मत्पक्षे यद्यपि स्वच्छो ज्ञानात्मा परमार्थतः ।
तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥
चित्राभिश्चित्रहेतुत्वात् वासनाभीरुपप्लवात् ।
स्वानुरूप्येण नीलादि ग्राह्यग्राहकरूषितम् ॥
प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते ।
परिच्छेदान्तराद्योऽयं भागो बहिरिव स्थितः ॥

ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः" इत्यादिनोक्तं योगाचारपक्षमनु-वदति—**यत्त्विति** । मायादोषेणानादितया कृतविच्छेदप्रत्ययो भेदवासना तस्मात् ।

१. भो—इति लालपत्रेऽस्ति

**चिच्छक्ति चित्रभित्तौ**--ज्ञानरूपे वस्तुनि विचित्ररूपो नानाविधो ज्ञातृज्ञेयादिप्रतिभासः। तथा च ज्ञानमेव नानाकारं भासत इति। अत्र मते ज्ञानसन्तानभेदः पुरुषभेदेन नास्तीति द्रष्टव्यम्।

केचित्तु एकस्मिन्नपि पुरुषे घटज्ञानपटज्ञानयोस्सन्तानभेदो नास्त्येव। एकस्मिन्नेव वैचित्र्यप्रतिभास इति योगाचारदर्शनमित्याहुः। **अत्यन्ताद्वैतेति**—एकस्य घटज्ञाने सत्यपरस्यापि तत्प्रसङ्गेन शिष्याचार्यादिसर्वव्यवहारोच्छेदप्रसङ्ग इति घटस्य ज्ञानं पटस्याज्ञानञ्चविषयभेदं विना नोपपद्यते। आश्रयभेदं विना शिष्याचार्यादिनियमः ज्ञानभेदं विना घटस्य प्रत्यक्षत्वपरोक्षत्वे चेत्यर्थः।

केचित्तु विषयापेक्षया बुद्धेर्भेदाभावे आश्रयापेक्षया भेदाभावे स्वगतावान्तर भेदाभाव इत्यर्थ इत्याहुः।

**इति संविद्भेदः**

---

**अक्षरार्थः**—अथ संविदो निर्भेदत्वपक्षं निरस्यति--**उत्पत्त्यादेरिति**। आदिना नाशपरिग्रहः उत्पत्त्यभावात् नाशाभावाद्वा। दृशि-संविदि। भिदा-भेदः। न-नास्तीति यदि वदेयुरित्यर्थः। अत्र संवित् भेदाभाववती उत्पत्त्यभावात् नाशाभावाद्वेति प्रयोगो विवक्षितः। बाधितोऽयमित्यभिप्रायेण तन्निरस्यति **नो इति**। कुत इत्यत्राह--**दशाभेददृष्टेरिति**। उत्पत्ति-विनाश-सत्त्वासत्त्वादीनामवस्थाभेदानां दृष्टेः-सर्वलौकिक-परीक्षक प्रत्यक्षात्। तेन भेदाभावरूपसाध्यस्य बाध इत्यर्थः। बुद्धयवस्थाभेदे प्रत्यक्षवत् अनुमानमर्थापत्तिर्वा प्रमाणं स्यादित्याह—**दृष्टादृष्टेति**। किंचिन्मया दृष्टं नान्यत् इत्यादिदृष्टादृष्टव्यवस्थाया बुद्धयवस्थाभिरेवैकस्या एव बुद्धेस्सर्वविषयकत्वे-सर्वविषयीकरणयोग्यत्वे उपपत्तिर्वाच्या। अतोऽवस्थाभेदस्य प्रत्यक्ष-तदितरप्रमाणसिद्धत्वात् भेदाभावानुमानं बाधितमेवेत्यर्थः। पुरुषभेदे बुद्धिभेदस्य अवस्थाभेदप्रयुक्तत्वाभावादाह **क्वचिदिह पुरुषे इति**। एकस्मिन् पुरुषे बुद्धयवस्थाभेदादेव दृष्टादृष्टव्यवस्था, पुरुषभेदे तु बुद्धिस्वरूपभेदादेवेति भावः। एवं परोक्तानुमाने बाधितत्वं स्वरूपासिद्धिं च प्रदर्श्य अनैकान्तिकत्वमप्यावेदयति--**अज्ञानाद्यैरिति**। अनादित्वेनोत्पत्तिशून्यतया पराभिमतेऽज्ञाने तत्तत्पुरुषीयज्ञाननिवर्त्यत्वानुरोधेन पुरुषभेदेन भिन्ने भेदरहितत्वरूपसाध्याभावेन हेतोः सत्त्वात् व्यभिचार इत्यर्थः। आदिशब्देन घटपटादिध्वंसो ग्राह्यः। प्रतियोगिभेदेन भिन्ने घटपटादिध्वंसे नाशरहितत्वस्य विद्यमानत्वादनैकान्तिकमिति भावः। प्रकारान्तरेणापि बाधमाह **न चेति**। आत्मभेदेन बुद्धेर्भिन्नत्वात् भेदाभावो बाधित इत्यर्थः। आत्मभेदेन बुद्धिभेदानभ्युपगमेऽनिष्टप्रसङ्गमाह—**ज्ञत्वाज्ञत्वादिभेदः कथमिव घटत इति** जड-पण्डितभेद एव लोके न स्यादिति भावः। **सर्वथैका मतिश्चेत्**—सर्वथा-विषयत आश्रयतश्च मति-बुद्धिः, एका चेत् भेदरहिता चेदित्यर्थः॥ ५॥

**इति पारमार्थिकसंविद्भेदः।**

**भेदाविदृश्यभावान्न दृशि दृशितया दृश्यधर्मा न दृक् चेत्**
**पूर्वस्मिन्नित्यताद्यैरनियतिविहती वाग्विरोधादि शेषे।**
**बाधश्चात्र द्वयोस्स्यात् स्वमत इह च यैस्साध्यते ये च साध्या**
**नैते मिथ्या विरोधान्न दृशिरविमतेः स्यादभावोऽपि धर्मः ॥६॥**

**सर्वार्थ०**—अन्यदपि संविदो निर्भेदत्वे निर्धर्मकत्वे च परोक्तं वीतमवीतं चानुमानमनुभाषते **भेदादिरिति** ॥ आदिशब्देन जन्मादयः स्मृतित्वानुभूतित्वादयश्च गृह्यन्ते। विगीता धर्मा न संविदि वर्तन्ते, दृश्यत्वात् रूपादिवदित्येकः। अनुभूतिर्धर्मरहिता, अनुभूतित्वादित्यपरः। तत्राद्यं दूषयति—**पूर्वस्मिन्निति**। अयं भावः—अत्र नित्यत्वस्वयंप्रकाशत्वादयो धर्माः पक्षीक्रियन्ते न वा? न चेत्, तेषां दृश्यत्वेऽपि संविद्वर्तित्वेन तैरनैकान्त्यम्; पक्षीकारे तु सौगतादीन् प्रति त्वयैव साध्यन्ते बाध्यन्ते चेति सिद्धान्तव्याघात इति। द्वितीयमपि दूषयति—**वाग्विरोधादीति**। आदिशब्देनासिद्धिबाधसिद्धान्तविरोधसंग्रहः। अत्रापि विकल्पतः प्रत्युक्तिः। संविदि निर्धर्मकत्वं साधयता प्रयुज्यमानौ हेतुसाध्यधर्मौ तत्रान्वीयेते न वा? पूर्वत्र स्ववाग्विरोधः, उत्तरत्र हेत्वनन्वयात् स्वरूपासिद्धिः, साध्यानन्वयाद् बाधः, स्वसिद्धान्तसिद्धयोरुभयोरपि प्रतिषेधादपसिद्धान्त इति। किं च—

सत्यधर्मनिषेधे स्याद्घटादेस्सत्यधर्मता।
सत्येतरनिषेधे तु दुस्तरं सिद्धसाधनम् ॥

**बाधश्चेति**। प्रत्यक्षानुमानागमैरिति शेषः। पुनरपि द्वयोस्साधारणं दूषणं वक्तुं विकल्पालम्बनमनुवदति—**स्वमत इति**। युष्मत्सिद्धान्ते साधकत्वेन साध्यत्वेन च ये धर्मास्संगृहीताः ते दृशिस्वरूपादतिरिक्ताः, अनतिरिक्ता वा? अतिरिक्तत्वपक्षे सत्या मिथ्या वा? सत्यत्वे च तत्पक्षीकारबहिष्कारयोरुक्तमेव दूषणम्। मिथ्यात्वं निषेधति—**नैत इति**। मिथ्यात्वे तद्विपरीतानित्यत्वजडत्वादिप्रसङ्गं सिद्धान्तविरोधं चाभिप्रेत्याह—**विरोधादिति**। अनतिरेकपक्षं प्रतिक्षिपति—**न दृशिरिति**। विरुद्धधर्माध्यासेन व्यतिरेकमभिप्रयन्नाह—**अविमतेरिति**। न ह्युभयाविगीतमनुभूतिस्वरूपम्; विगीतं च नित्यत्वादिकं न मिथोऽतिरिच्येतेति भावः। नन्वस्मिन् सिद्धान्ते साधकास्साध्याश्च सर्वे धर्मास्तत्तद्विरोध्यभावमात्ररूपाः; अतो हेत्वादिसिद्धिर्निर्धर्मकत्वाविरोधश्चेति; तत्राह—**स्यादिति**। अयं भावः—अभावरूपा अपि हेतुसाध्यविशेषाः पक्षीकारबहिष्कारसत्यत्वमिथ्यात्वधर्म्यन्वयानन्वयविकल्पैर्यथोचितदूषणग्रस्तैः प्रत्युक्ता एवेति ॥ ६ ॥

**आनन्द०**—पूर्वसङ्गत्याऽऽह –**अन्यदपीति** । **अवीतं** अन्वयावीतं, व्यतिरेकि । जन्मादय इत्यादिशब्देन प्रध्वंसादयो ग्राह्याः । स्मृतित्वानुभूतित्वादयश्चेत्यादिशब्देन प्रत्यक्षत्वानुमितित्वादयो ग्राह्याः । वीतमुदाहरति **विगीता** इति । अवीतमुदाहरति **अनुभूतिरिति** । प्रतिज्ञामात्रस्याप्रयोजकत्वादाह - **अयं भाव इति** आदिशब्देन अजन्यत्वादयो गृह्यन्ते । **पक्षीकारे त्विति** ।

ननु क्षणिकत्वाद्यभावस्साध्यो नित्यत्वपदेन विवक्षित इति चेत्तस्यापि धर्मत्वे उक्तदोषात् । स्वरूपमात्रपक्षस्याग्रे दूष्यत्वादिति भावः । ननु पक्षे निर्धर्मकत्वे साध्यमाने निर्धर्मकत्व रूपधर्मसाधनाद्विरोधोऽस्तु कथमसिद्धिबाधादय इत्यत्राह–**अत्रापीति** । **उभयोरपि**–अनुभूतित्वनिर्धर्मकत्वयोरपीत्यर्थः ।

ननु सत्यधर्मेत्यादिकारिकया अनुभूतौ निषेधे कथं घटादौ सत्य धर्मसिद्धिः प्रतिपाद्यते । नहि क्वचिद्घटनिषेधेऽन्यत्र घटसिद्धिर्निषेद्धुश्च तद्बाधकत्वाभावात् । नाप्यार्थिकी सिद्धिः व्याप्त्यभावादिति चेत् । अत्रोक्तमाचार्यैः । घटादौ सत्य धर्मनिषेधीऽस्ति ? नवा ? आद्ये असाधारण्यप्रसङ्गः । द्वितीये तु निषेधाभावस्य सत्यधर्मरूपधर्मत्वस्य सिद्धिरिति भाव इति । **प्रत्यक्षेति**—साक्षात्करोमीत्यादि प्रत्यक्षेण अनुभूतिस्सधर्मा वस्तुत्वात् सविषयत्वादिच्छादिवदित्यनुमानेन "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्याद्यागमेन चेत्यर्थः । **विकल्पालम्बनं**—विकल्पविषयः । साधकत्वेनेत्यादिना वीतहेतुमभिप्रेत्याद्यद्वितीयं शिरो दूषयतीत्याह—**मिथ्यात्वमिति** । जडत्वादीत्यादिशब्देन जनयत्वादयो गृह्यन्ते । **न हीति** –स्व स्वरूपस्य विगीतत्वमविगीतत्वञ्च युगपद्विरुद्धमिति विरुद्धधर्माध्यासो भेदक इति भावः । नित्यत्वादिकमित्यत्र तद्गुणसंविज्ञानेन निर्धर्मकत्वादया विवक्षिता इत्याहुः । अवीतहेत्वभिप्रायेण शङ्कते—**नन्विति** । तत्तद्विरोधिनो जडत्वादयः । अनुभूतित्वादित्यत्र जडत्वाभावादित्यर्थः । तथा निर्धर्मकेत्यत्र धर्माभावो विवक्षित इति भावः । आदिशब्देन साध्यादिग्रहणम् ।

नन्वभावस्यास्तु धर्मत्वं तावताऽपि व्याघातादिपरिहारस्य विरोधाभावात्कथं दूषणमित्यत्राह—**अयं भाव इति** । पक्षीकारेत्यादि वीताभिप्रायेण । पक्षीकारे बाधो बहिर्भावे व्यभिचारश्चाभावत्वेऽपि स्यातामेव । नच भावत्वविशेषणं अप्रयोजकत्वादिति भावः । अवीताभिप्रायेणाह **सत्यत्वमिथ्यात्वेत्यादि** । अनुभूतिर्नाऽभावधर्मेति भावत्वविशेषणं प्रमाणसिद्धाभावधर्माणां निषेधायोगादिति । तथा प्रत्यक्त्वादीनां भावधर्माणामपि प्रमाणसिद्धत्वात्तन्निषेधे कालातीतादिति भावः ।

अक्षरार्थं०—अन्यदपि परोक्तं संविदो निर्भेदत्वे निर्धर्मकत्वे च अन्वयिनं व्यतिरेकिणं चानुमानं अनुवदति—भेदादिरिति। आदिशब्देन उत्पत्ति–स्मृत्यनुभूतित्वादयश्च गृह्यन्ते। तत्र विमताः धर्माः, संविदि न वर्तन्ते दृश्यत्वात् इत्येकः। अनुभूतिः धर्मरहिता अनुभूतित्वादित्यपरः। दृश्यभावात्—दृश्यस्य भावो दृश्यत्वं, तस्मादित्यर्थः। दृशि–संविदि। दृशितया-दृशेर्भावो दृशिता तया। दृश्यधर्मा दृश्यः धर्मो यस्यास्सा दृश्यधर्मा। न तद्भिन्ना इत्यर्थः। दृश्यधर्मरहितेति यावत्। तत्राद्यं दूषयति–पूर्वस्मिन्निति नित्यताद्यैः—नित्यत्व स्वयंप्रकाशत्वाद्यैरित्यर्थः। अनियति-विहती–अनेकान्त्य–विरोधावित्यर्थः। नित्यत्वादेः पक्षबहिर्भावे संविद्वृत्तितयाऽभिमते तत्र दृश्यत्वरूपहेतोर्विद्यमानतया व्यभिचार इत्यर्थः। तत्पक्षीकारे तु सौगतान् प्रति भवतैव संविद्वृत्तित्वसाधनात् तद्विरोध इत्यर्थः। द्वितीयं दूषयति—वाग्विरोधादीति शेषे-अनुमानान्तरे ( द्वितीयानुमाने ) हेतु साध्यरूप धर्मयोः संविद्रूप पक्षवृत्तित्वे धर्म रहितेति स्वोक्तिविरोधः। पक्षवृत्तित्वाभावे हेतोरभावात् स्वरूपासिद्धिः, साध्यस्याभावात् बाधः, स्वसिद्धान्तविरोधादपसिद्धान्तश्चेति भावः। किं च—

"सत्यधर्मनिषेधे स्यात् घटादेस्सत्यधर्मता।
सत्येतरनिषेधे तु दुस्तरं सिद्धसाधनम्॥"

इत्यादिदूषणं सर्वमत्रादिशब्देन विवक्षितम्। द्वयोरनुमानयोः साधारणं दूषणमाह—बाधश्चेति प्रत्यक्षादि प्रमाणैरनुभवत्वनित्यत्व स्मृतित्वादि धर्माणां संविद्वृत्तित्वस्य-संविदस्तादृशधर्मवत्त्वस्य च ग्रहणादिति भावः। स्वमते–अद्वैतिमते इह संविदि यैस्साध्यते, ये च साध्याः—हेतुसाध्यरूपा इत्यर्थः। एते सत्यत्व–नित्यत्व-स्वयंप्रकाशत्व–अनुभूतित्वादय उक्तधर्मा न मिथ्याभवितुमर्हन्ति। एषां मिथ्यात्वे तद्विपरीतानित्यत्व–जडत्वाननुभूतित्वादिप्रसङ्गेन स्वसिद्धान्तविरोध इत्याह विरोधादिति। एषां सत्यत्वे पक्षीकार-बहिर्भावयोः पूर्वोक्तदूषणमनुसन्धेयमिति भावः। दृशिस्वरूपत्वे नोक्त दोष इत्यत्राह—न दृशिरिति। दृशिस्वरूपस्योभयसंप्रतिपन्नतया तदात्मकत्वं विप्रतिपन्न-स्वयं प्रकाशत्वादि धर्माणां न घटत इत्यभिप्रायेणाह—अविमतेरिति। दृशिस्वरूपे विवादाभावादित्यर्थः।

ननु अद्वैतिसिद्धान्ते साध्यसाधकधर्माणां तत्तद्विरोध्यभावरूपतया साध्यहेत्वादिसिद्धिः, निर्धर्मकत्वाविरोधश्चेत्यत्राह—स्यादिति। अभावरूपा अपि हेतुसाध्यविशेषाः पक्षीकार-बहिष्कार-सत्यत्व-मिथ्यात्व-धर्म्यन्वयानन्वयविकल्पैर्यथासंभवं प्रत्युक्ता एवेति भावः॥ ६॥

इति संवित्सधर्मकत्वम्

बुद्धिर्द्रव्यं विकारान्वयत इतरवद्बोद्धृवच्चाजडत्वात्
संकोचादिप्रयोगा बहव इह तथा न ह्यमुख्या भवेयुः ।
एवं नास्या गुणत्वं गलति न खलु तत्तन्त्रसङ्केतसिद्धं
लोके धर्मस्वभावो गुण इति विदितं साऽपि सिद्धा प्रभावत् ॥७॥

**सर्वार्थ०**—प्रागुक्तं बुद्धेर्द्रव्यत्वं प्राप्तावसरे प्रतिष्ठापयति—बुद्धिर्द्रव्यमिति। समवायिकारणं द्रव्यमिति वदद्भिः परैरपि विकाराश्रयो द्रव्यमित्यङ्गीकृतम्। अतो विकारान्वयत इति द्रव्यलक्षणयोगकथनम्। इतरवत्—संप्रतिपन्नद्रव्यवदित्यर्थः। यान्यन्यानि द्रव्याणि तानि सर्वाणि यत्किंचिद्विकारवन्ति। अतो द्रव्याभिव्याप्तलक्षण-योगात् द्रव्यत्वं युक्तमिति। न चात्र साध्याविशेषः; द्रव्यशब्दवाच्यत्वसाधने तदभावात्। व्यवहारव्यवस्थापकत्वं च लक्षणस्य परैर[प्य]ङ्गीकृतम्। अनुमानान्तरमाह—बोद्धृव-दिति। पुरुषस्य स्वयंप्रकाशत्वं प्रागेव श्रुतिभिः प्रदर्शितम्; बुद्धेरप्येतत्सरादौ स्थापितम्; तदयं प्रयोगः—बुद्धिर्द्रव्यम् स्वयंप्रकाशत्वात् आत्मवदिति। प्रथमस्यासिद्धिपरिहारं द्वितीयस्यानुग्राहकं चाभिप्रेत्याह—सङ्कोचादीति। सङ्कोचप्रयोगस्तावत् आवृतं ज्ञान-मित्यादिना दर्शितः। आदिशब्देन प्रसरणक्षरणसंग्रहः। तत्प्रयोगश्च दर्शित एव। द्रव्यत्वे ह्येतेषामबाधान्मुख्यत्वम्; अन्यथा श्रुतिस्मृतिसिद्धबहुप्रयोगमुख्यत्वभङ्गः स्यादिति भावः। ननु बुद्धेरात्मगुणत्वं बोद्धृसद्भावागमेषु सर्वेषु प्रसिद्धम्; गुणस्य चाद्रव्यत्वं रूपादिषु दृष्टम्; तदत्र धर्मिग्राहकबाधितमनुमानमित्यत्राह—एवमिति। द्रव्यत्वे सत्यपीत्यर्थः। कथं तर्हि कणचरणादिभिरद्रव्येष्वेव गुणत्वमवस्थापितमित्यत्राह—न खल्विति। अर्थशास्त्रेषु सन्धिविग्रहादयो गुणत्वेन गृह्यन्ते; तद्वत्परोक्तमद्रव्यनियतं गुणत्वमिह न ब्रूम इत्यभिप्रायः। किंनिमित्तस्तर्हि बुद्धौ गुणशब्दप्रयोग इत्यत्राह—लोक इति। दासादयो हि गुणभूता उच्यन्ते, दध्यादिद्रव्यविधानं च गुणविधिरिति व्यव-ह्रियते। ननु न बुद्धिर्बोद्धृधर्मः; बोद्धा तु तदभिव्यक्तिस्थानम्; तत एव तद्व्यङ्ग्यद्रव्य-त्वाद्धर्मत्वारोपः। वस्तुतस्तु सा न द्रव्यं, न च गुण इति परोक्तं बाधितुमाह—साऽपीति। प्रभावतो यथा प्रभा धर्मत्वेन प्रख्याता तथा बुद्धिरपि बोद्धृधर्मत्वेन प्रत्यक्षादिभिः प्रसिद्धा; न चात्र प्रतिबिम्बादिवद्बाध इति भावः ॥ ७ ॥

---

**आनन्द०**—अवसरसङ्गतिमाह—प्रागुक्तमिति। अतो द्रव्याभिव्याप्तेति—अभिव्याप्तं समव्याप्तम् सर्वेषु द्रव्येषु वर्तमानमन्यत्रावर्तमानं लक्षणमित्यर्थः। प्रसरणं—विकासः क्षरणं—विच्छेदेन निस्सरणं। प्रयोगश्चेति—सङ्कोचप्रसरणादिशब्दप्रयोगश्च ज्ञाने "आवृतं ज्ञानमेतेन" "येनास्य क्षरति प्रज्ञा" "प्रज्ञा च तस्मात्प्रसृता पुराणी" त्यादिभिर्नित्यत्वसमर्थनसमय इत्यर्थः। एतेषां—प्रयोगाणाम्—अद्रव्यत्वमिति—

द्रव्यव्यवहारविषयत्वाभाव इत्यर्थः। **धर्मिग्राहकेति**—गुणत्वेन ज्ञानग्राहकत्वात्तेन बाध-इत्यर्थः। ( [1]गुणत्वेन ज्ञानग्राहकमानस्य द्रव्यव्यवहाराभावविषयग्राहकत्वात्तेन बाध इत्यर्थः )

केचित्तु असिद्धिं शङ्कते—**नन्विति**। गुणस्यचाद्रव्यत्वं विकाररहितत्वं तदत्र धर्मिग्राहकमानबाधितमिति। गुणत्वेन ज्ञानग्राहकमानेन बाधो हेत्वभावग्रहः। "द्रव्यत्वेह्यतेषामबाधान्मुख्यत्वमित्यादि पूर्वमतानुसारादित्याहुः। **गुणत्वं**—गुणव्यवहारः। **अर्थशास्त्रेऽपिति** गुणशब्दः पराधीने मुख्यः। अन्यत्र क्वचिन्नियततया सङ्केतो व्यवहारसिद्धं गुणशब्दशक्यत्वं न विहन्तीत्यर्थः। माथिमतमाह—**नन्विति**। बोद्धा—अन्तःकरणं। दर्पणे सवित्रादेरिव बुद्धिरप्यन्तःकरणे व्यज्यते। अत एव तद्विकारस्तच्छून्ये मालिन्यमिव प्रतिबिम्बेनारोप्यत इति न विकारवत्त्वाभावादद्रव्यत्वं गुणत्वञ्चेत्यर्थः। मूलं **"एवं नास्या गुणत्वं गलतीति"**—बुद्धेर्द्रव्यत्वे सत्यपि गुणत्वमस्तीत्यर्थः। तत्र रूपादिचतुर्विंशतिगुणेषु वैशेषिकसङ्केतसिद्धं (तद्गुणत्वम्) गुणत्वम्—न खलु भ्रम इत्यर्थः।

---

**अक्षरार्थ**—अथ बुद्धेर्द्रव्यत्वं साधयति—**बुद्धिर्द्रव्यमिति**। कुत इत्यत्राह—**विकारान्वयत इति** - अवस्थाश्रयत्वात्। बुद्धिर्द्रव्यपदवाच्या अवस्थाश्रयत्वादिति प्रयोगो विवक्षितः। अवस्थाश्रयत्वमेव द्रव्यलक्षणमिति भावः। दृष्टान्तमाह—**इतरवदिति**। इतरवत् संप्रतिपन्नघटत्वावस्थाविशिष्टघटादिद्रव्यवत्। अनुमानान्तरमप्याह—**बोद्धृवदिति**। बोद्धुः पुरुषस्य स्वयं प्रकाशत्वं प्रागेव सप्रमाणं निरूपितमिति भावः। **अजडत्वात्**—स्वयं-प्रकाशत्वात् इत्यर्थः। बुद्धिः द्रव्यं स्वयंप्रकाशत्वात् पुरुषवदिति प्रयोगो विवक्षितः। प्रथमानुमानेऽसिद्धिपरिहारं, द्वितीयस्यानुग्राहकं चाभिप्रेत्याह—**संकोचादीति**। संकोच प्रयोग 'आवृतं ज्ञान मित्यादिना दर्शितः। आदिशब्देन प्रसरण क्षरण संग्रहः। तत्प्रयोगश्च 'प्रज्ञा च तस्मात्प्रसृता पुराणी' 'तेनास्य क्षरति प्रज्ञा' इत्यादिः पूर्वमेव दर्शितः। संकोचाद्यवस्थावत्त्वप्रदर्शनात् पूर्वानुमानेऽसिद्धिपरिहारः। द्वितीयानुमाने द्रव्यत्वानभ्युपगमे संकोचादिप्रयोगानुपपत्तिस्स्यादिति अनुग्राहको दर्शित इत्यवधेयम्। द्रव्यत्वे सत्येव हि प्रयोगाणामेषामबाधात् मुख्यता स्यात्, अन्यथाऽमुख्यतैवाश्रयणीया स्यादिति भावः।

**बह्वयः**—श्रुति स्मृतिदृष्टाः। **इह**—बुद्धौ। **तथा**-द्रव्यत्वे अमुख्या न भवेयुरित्यर्थः। अथ धर्मिणः-ज्ञानस्य तद्गुण सारत्वादित्यादिषु प्रमाणेषु गुणत्वेन श्रवणात्, उक्तानुमानस्य धर्मिग्राहकप्रमाणबाध इत्यत्राह—**एवमिति**। एवं द्रव्यत्वाभ्युपगमे **अस्याः**—बुद्धेः। **गुणत्वं न लगति**—नापैतीत्यर्थः।

अथ वैशेषिकादिभिरद्रव्येष्वेव खलु गुणः परिगणितः, तत्कथं द्रव्यस्य गुणत्वमित्यत्राह—न खल्विति तन्त्रसंकेतसिद्धं—वैशेषिकादिशास्त्रसिद्धम्। तत्-अद्रव्यमात्रासाधारणं, तत्-गुणत्वं न खल्वभिमतमिति भावः। कुत इत्यत्राह—लोक इति। लोके दासादयोऽपि हि द्रव्यत्वेऽपि गुणभूता इत्युच्यन्ते। परीक्षकैश्च दध्यादिद्रव्यविधानं च गुणविधिरित्युच्यते। तद्वत् बोद्धारं प्रति धर्मत्वमेव स्वभावः अस्या बुद्धेरिति गुण इत्युच्यते। धर्मत्वं-अप्रधानत्वं पराधीनत्वं वा। इति विदितं-इति प्रसिद्धम्। साऽपि-बुद्धिरपि। प्रभावत्—प्रभावतः प्रभा यथा द्रव्यत्वेऽपि धर्मत्वेन गुणभूता एवं बुद्धिः द्रव्यरूपाऽपि बोद्धुः धर्मत्वेन गुणभूतेत्यर्थः॥ ८॥

**इति ज्ञानस्य द्रव्यत्वम्**

---

**नित्या धीर्हेतुतोऽस्या भवति विषयितेत्येवमिच्छन्त एव**
**द्रव्यत्वं नास्ति बुद्धेरिति गुणगणने तामपि स्थापयन्ति।**
**अद्रव्यत्वं कथं स्याद्विकृतिमति विकृत्युज्झने पूर्ववत् स्या-**
**दित्थंभूताद्विकारान्न भवति यदि नातिप्रसङ्गप्रसङ्गात्॥ ८॥**

**सर्वार्थ०**—उक्तार्थे सयूथ्यविमतिं तदुक्तप्रकारं तावदाह—नित्येति॥ एवकारः स्वोक्तिविरोधसूचनार्थः। गुणगणने—द्रव्यत्वरहितगुणगणनायामित्यर्थः। एवकारद्योतितं विकल्पमुखेन व्यनक्ति—अद्रव्यत्वमिति। विकृतिमतीति सामान्याभिप्रायेण नपुंसकलिङ्गनिर्देशः। यदि नित्यायां बुद्धौ तत्तत्सामग्रीभिस्तत्तद्विषयित्वावस्थास्संभवन्ति तदा कथमसौ द्रव्यं न स्यात्? न हि विकृतिमति क्वचिदद्रव्यत्वमन्यत्र संमतम्। विकृत्यसंभवपक्षे दोषमाह—विकृत्युज्झन इति। पूर्ववत् स्यात्—सामग्रीसंपातेऽपि प्रागिव न किंचिद्विषयीकुर्यादित्यर्थः। विषयित्वलक्षणविकारेण द्रव्यत्वं न स्यादिति शङ्कते—इत्थंभूतादिति। सामान्यलक्षणयोगे सत्यवान्तरवैषम्यात् कथमतज्जातीयत्वमित्यभिप्रायेण प्रत्याह—नेति। अन्यथा बाधकमाह—अतिप्रसङ्गप्रसङ्गादिति। द्रव्यत्वेन संमतेष्वपि तत्तदवान्तरविशेषोपादानेन द्रव्येतरत्वसाधनं प्रसज्येतेत्यर्थः। तदिह सयूथ्यवाक्यस्य भाष्यानुगुणमान्यपर्यमवसेयम्॥ ८॥

---

**आनन्द०**—पूर्वसङ्गतिमभिप्रेत्याह—**उक्तार्थ इति**। **सयूथ्याः**—वरदनारायणभट्टारकादयः। ज्ञानमद्रव्यम् (अपितु गुण) इति तैरेवोक्तेः। **द्रव्यत्वरहितेति**—रूपादिषु मध्य इत्यर्थः। बुद्धेर्विशेष्यतया कथं नपुंसकमित्यत आह—**सामान्येति**—बुद्धिर्न विशेष्यमिति भावः।

ननु वैशेषिकादयो ज्ञानस्य विषयित्वमभ्युपगच्छन्त एव द्रव्यत्वन्न मन्यन्ते कथं तान्प्रति द्रव्यत्वसाधनं। नच तन्मते विषयित्वस्य स्वरूपत्वान्न विकारित्वमिति वाच्यम्। तर्हि तद्वदेवात्राप्यस्तु।

नच नित्यस्य विषयित्वं स्वरूपञ्चेत् घटादीनां सर्वदा प्रकाशप्रसङ्गः। अत्यन्ताभावस्य भूतलादाविव कदाचिदेव संबद्धत्वादिति चेन्न। तैरपि संबद्धत्वं भूतलनिष्ठमागन्तुमङ्गीक्रियत एव। अन्यथातिप्रसङ्गात्। नचात्रापि विषयगतस्याङ्गीकारः अतीतादिष्वसम्भवात् ज्ञानगतस्यैव लाघवादभ्युपेयत्वात्। सामग्र्यनन्तरमेव घटमहं जानामीत्यनुभवेनैतस्यैव तज्जन्यत्वात्सैषाऽवस्येति तदाश्रयस्य द्रव्यत्वं।

नचात्मैव तदाश्रयो द्रव्यञ्चास्त्विति वाच्यम्। "अस्य प्रज्ञा क्षरती" त्यात्मनो ज्ञानस्य तद्विकारस्य च व्यतिरेकनिर्देशादिति भावः। **भाष्यानुगुणत्वान्यपर्यंस्थिति**—प्रभाद्रव्यस्य दीपगुणभूतस्यैव ज्ञानस्याप्यात्मगुणभूतस्य द्रव्यत्वसमर्थनभाष्यानुगुण पारतन्त्र्यपरतया—

"स्वाश्रयश्लिष्ट. एवार्थे स्पर्शाद्याः कार्यकारिणः।
गुणवैरूप्यमेवास्य द्रव्यशब्देन लक्ष्यते॥"
"भावान्तरमथाप्राप्तं शक्तिवज्ज्ञानमप्यतः।
द्रव्यत्वपक्षे ज्ञानस्य परिणामानिरूपणात्॥"
"अतीतानागतार्थान् न प्रभा यान्ति जातुचित्।
तेन ज्ञानेन भान्त्या यो न साम्यं सर्वथामतम्॥"

इति प्रज्ञापरित्राणादिगताप्तवाक्यं नेतव्यमित्यर्थः। मूले द्वितीयप्रसङ्गशब्दः प्राप्तिपरः।

---

**अक्षरार्थ०**—बुद्धेर्द्रव्यत्वे सयूथ्यविवादं वारयितुं तदुक्तमनुवदति—**नित्येति** धीर्नित्यैव-हेतुतः कारणतः अस्या बुद्धेर्विषयिता भवति इत्येवं अभ्युपगच्छन्त एव। एवकारेण स्वोक्तिविरोधस्सूच्यते। विषयितारूपागन्तुकावस्थान्वयं वदन्त एव द्रव्यत्वं नास्तीति हि वदन्ति। इति गुणगणने तामपि स्थापयन्ति—बुद्धिमपि गुणगणपरिगणनमध्ये वदन्तीत्यर्थः। कथमत्र विरोध इत्यत्राह—**अद्रव्यत्वमिति**। विकृतिमतो वस्तुनः कथमद्रव्यत्वं? विकारान्वयायोग्यत्वं वक्तुं युक्तं स्यादिति भावः। विकारवत्त्वमेव नाभ्युपेयत इत्यत्राह – **विकृत्युज्झन इति**। अवस्थाविशेषरूपविकारापह्नव इत्यर्थः। **पूर्ववत्स्यादिति** सामग्रीसंभवेऽपि प्रागिव निर्विषयिकैव स्यादिति भावः। अवस्थाविशेषादेव द्रव्यत्वं स्यात् न तु तत्सामान्यादित्याह – **इत्थं भूतादिति**। इत्थं भूतात् विकारात्–विषयितारूपविकारात्। न भवति यदि—द्रव्यत्वं न भवतीति चेदित्यर्थः। सामान्यलक्षणयोगे सति अवान्तरवैषम्यात् कथमतज्जातीयत्वमित्यभिप्रायेण निराकरोति **नेति**। अन्यथा बाधकमाह - **अतिप्रसङ्गप्रसङ्गादिति**। द्रव्यत्वेन संप्रतिपन्नेषु घटपटादिषु संस्थानविशेषरूपावान्तरविशेषमादाय द्रव्येतरत्वप्रसङ्गादिति भावः॥ ८॥

**इति अद्रव्यज्ञाननित्यताभङ्गः**

सर्वं ज्ञानं न मानं परमतविजयान्नाप्रमाणं स्वबाधा-
न्मानामानव्यवस्था तदियमनुमता लौकिकैर्यौक्तिकैश्च ।
तत्रामाने त्ववर्ज्यं स्वरसमिति वदन्त्यन्यथाभानमेके
तत्सामग्र्यैव तादृग्व्यवहृतिमपरे लाघवादाश्रयन्ति ॥ ९ ॥

सर्वार्थ—अथ पूर्वापरसरस्यूतसर्वप्रमेयप्रतिष्ठापकं प्रमाणं शोधयितुं सामान्यतः प्रमाणाप्रमाणविभागं तावदाह—सर्वमिति ॥ अयमर्थः—न तावत्सर्वं ज्ञानं प्रमितिः, प्रतिपक्षविजयाभ्युपगमप्रसङ्गात् । यत्र ख्यातिरेव नास्ति तत्र कथं विजयप्रसङ्ग इति चेन्न; स्वहृदयविसंवादात् । परोक्तीनां स्वोक्तिविरुद्धबुद्धिजनकत्वाभावे विवादविलय-प्रसङ्गः । अन्यथा स्वोक्तानुभाषणवर्णक्रमपाठादावपि विवादः प्रसज्येत । अत एव प्रतिपक्षतो जाताऽपि ख्यातिः प्रमितिरिति न वक्तव्यम् । स्वोक्तमात्रविषयत्वेऽनुक्तमात्र-विषयत्वे स्वोक्तानुक्तमात्रविषयत्वे च विवादायोगात्; विरुद्धविषयत्वे त्वन्यतरबुद्धेर-प्रमात्वमपरिहार्यमिति । सर्वबुद्धीनामप्रमात्वमपि प्रतिषेधति—नाप्रमाणमिति । स्ववचनस्वसिद्धान्तसर्वलोकधीविरोधमभिप्रेत्याह—स्वबाधादिति । स्वोक्तं लौकिक-परीक्षकसर्वसंमतमित्याह—मानामानेति । एवमन्यथाख्यातिपक्षाभिप्रायेण दर्शिते विभागे भाष्योक्तं पक्षान्तरमपि प्रतुष्टूषुरुक्तस्य प्रतीतिस्वारस्यरसिकैरेकदेशिभिस्संगृहीत-त्वमाह—तत्रेति । अमाने—संशयविपर्ययात्मकबुद्धावित्यर्थः । अवर्ज्यं—ख्यात्यन्तर-वादिभिरपि दूरापसर्पणेऽपि दुरत्ययम् । स्वत एव रसो यस्य तत्स्वरसम् । अस्ति हि शुक्तिशकलमेव मया रजततया गृहीतमित्यादिप्रतीतिस्वारस्यम्;

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
अयथावत् प्रजानाति बुद्धिस्सा पार्थ राजसी ॥
अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।

इत्याद्याप्तवाक्यस्वारस्यं च । अतो भ्रान्तावन्यथाभानं प्रथममुपन्यस्तं भाष्यकारा-भिप्रेतमित्येके वदन्ति । केषांचित्पक्षान्तरपरिग्रहं सहेतुकमाह—तत्सामग्र्येति । व्यवहारविशेषान्यथानुपपत्त्या ह्यन्यथाभानमवस्थाप्यते; तत्रान्यथाख्यातिसाध्य-तयाऽभिमता व्यवहृतिस्तज्जनकतयाऽभिमतसामग्र्यैव संपाद्यताम्, अदृष्टचरान्यथा-ख्यातिसग्रह[स्तु]स्तन्मध्ये मुधेत्यपरे समाश्रयन्ति । पक्षद्वयोपन्यासप्रपञ्चस्तु न्यायकुलिशे निपुणमवधारणीयः ॥ ९ ॥

आनन्द०—अवसरसङ्गतिं दर्शयति—अथेति । उपजीव्योपजीवकभावसङ्गतिरिति केचित् ।

ननु परमतगोचरज्ञानाभावात्कथं विजय इत्यत्राह—अयमर्थं इति । परोक्तीनां-स्वोक्तिविरुद्धबोधे सत्येव तत्त्वसंशयाद्विवाद इति भावः । अन्यथेति—विरुद्धार्थ-बोधाभावेऽपि विवादश्चेदित्यर्थः । विरुद्धार्थबोधाभावो द्वेधा अविरुद्धार्थबोध-जनकत्वेन बोधजनकत्वाभावेन वा । आद्ये दूषणं स्वोक्तेति । द्वितीये वर्णक्रमेति—गकार नकारैकारेत्यादिवर्णक्रमपाठेन बोधानुप पत्तेरिति भावः । आदिशब्देन ध्वन्यादि-ग्रहः । विरुद्धविषयत्व इति—विवादान्यथानुपपत्त्या विरुद्धविषयत्वावश्यम्भावादिति भावः । स्ववचनेति—सर्वधियामप्रामाण्यमिति वाक्यजन्यधियः प्रमाणत्वे सर्वाप्रामाण्या-भावाद्व्याघातः । एतस्याप्रामाण्ये एतदन्यसर्वप्रामाण्यात् व्याघात इति स्ववचन-विरोधः । अत एव सर्वशून्यसिद्धान्तविरोधश्च । सर्वशून्यमिति धियः प्रमाणत्वा-प्रामाण्ययोर्व्याघातात् । इदं ज्ञानं प्रमाणमिति यस्सर्वलोकसिद्धोऽनुभवः तद्विरोध-श्चेत्यर्थः । एवमन्यथाख्यातीति प्रमाप्रमाविभागस्यान्यथाख्याति पक्ष एव स्वारस्यादिति भावः । उक्तस्यान्यथाख्यातिपक्षस्य-रसः—आदरः । वाक्यस्वारस्यञ्चेति—प्रतिपत्ति ज्ञानबुद्धयादिशब्दानां व्यवहारपरतन्त्रस्य व्युत्पत्तिविरुद्धत्वादिति भावः ।

भाष्यकाराभिप्रेतम्—भाष्यकाराभिप्रेतञ्चेत्यर्थः । सर्वधियां याथार्थ्यस्य "यथार्थं सर्वविज्ञानं इति वेदविदां मत" मिति पक्षान्तरत्वेनोक्तेरिति भावः । प्रत्यक्षगम्ये कथं काल्पनिकविषयो लाघवावतार इति वाच्यम् । तर्ह्यत्रापि शुक्तिं रजततया जानामीति प्रतीतिसिद्धौ कथं लाघवावतार इति तुल्यमिति चेन्नैवम् । अन्यस्यान्यथाभान-मामग्र्यभावात्सामग्र्यन्तरकल्पनस्य च गुरुत्वात् ।

न च व्यवहारेऽप्येष दोषः यदि व्यवहारं प्रति साक्षी कल्प्यतां ज्ञानं प्रति वेति सन्देहे तुल्यत्वं वक्तुं शक्यं, न च तथा । ज्ञानएव ग्रहणस्मरणात्मकज्ञानसामग्र्यैव-सम्पाद्यतामिति । ननु तर्हि ज्ञानमेव न स्यात् सामग्र्यैव व्यवहारोपपत्तेः । न च घटज्ञानमिति किं ज्ञानद्वयमेकज्ञानमिति सन्देहात् ज्ञानैक्यमपि कल्प्यं तत्र सामग्री चेति—गौरवम् । अत्र तुल्यव्यवहारं प्रति ग्रहणस्मरणाग्रहणानां सिद्धानां हेतुत्वमात्रं कल्प्यमिति लाघवादिति भावः ॥९॥

अक्षरार्थ०—अथ तत्र प्रमाणाप्रमाणव्यवस्थामाह—सर्वं ज्ञानमिति । न मानं—ज्ञानसामान्यमपि प्रमाणमिति नाभ्युपगन्तुं युक्तमिति भावः । कुत इत्यत्राह—परमतविजयादिति परमतसाधकज्ञानस्यापि प्रमाणत्वे तन्मतस्याप्रतिक्षेप्यत्वेन विजयप्रसङ्गादित्यर्थः । तथा सर्वं ज्ञानं अप्रमाणमित्यपि न वक्तुं युक्तमित्याह—नाप्रमाणमिति । कुत इत्यत्राह—स्वबाधादिति । स्ववचन-स्वसिद्धान्तबाधप्रसङ्गादित्यर्थः । अतः कानिचित् ज्ञानानि प्रमाणानि कानिचिन्नेति व्यवस्था कर्तव्येति भावः । तत्—तस्मात् । इयं व्यवस्था लौकिकैः परीक्षकैश्चानुमतेत्याह—तदियमिति । अतः प्रतीतिस्वारस्यरसिकैः एकदेशिभिः तत्र अमाने—अप्रमाणज्ञाने । अन्यथा भानं स्वरसतयाऽवर्जनीयमित्यभ्युपगतमित्याह—तत्रामान इति । अख्यातिवादमाह—तत्सामग्र्यैवेति । अन्यथाख्यातिवादिनां तत्सामग्रीत्वेनाभिमतया रजतस्मृत्यादिसामग्र्यैव तादृग्व्यवहृति—रजतव्यहारं । अपरे—अख्यातिनः लाघवबलात् आश्रयन्ति इत्यर्थः । व्यवहारविशेषान्यथानुपपत्त्या हि अन्यथाभानं कल्प्यते । अन्यथाभानसामग्र्यैव तद्व्यवहारोपपत्तौ किमन्तरन्यथाभानकल्पनेनेति भावः ॥ ९ ॥

इति प्रमाणाप्रमाणव्यवस्था ।

---

नार्थैरुक्ता यथार्था विमतमतिरपि न्यायतत्त्वे तदेत-
द्भाष्येऽनूक्तं तदत्र व्यवहृतिरुभयी बाधिताबाधिताख्या ।
शुक्तौ रूप्यं प्रभाम्भः श्रुतिनयवशतः स्वाप्नमप्यस्तु सत्यं
योग्यायोग्यादिभेदाग्रह इह चरमां गाहते संप्रतिष्ठाम् ॥ १० ॥

सर्वार्थः—उक्तपक्षद्वये द्वितीयस्य सांप्रदायिकत्वमाह—नाथैरिति । विमतमतिः-शुक्तिरजतादिबुद्धिः । सा न्यायतत्त्वे भ्रान्त्यधिकरणसिद्धान्ते षष्ठी चेयं ख्यातिर्यथार्थख्यातिरित्यादिना निरधार्यत । अयं च पक्षः (अथवा, यथार्थं सर्वविज्ञानमिति वेदविदां मतमिति) भाष्यकारैरन्वभाषि । कथमस्मिन् पक्षे प्रमाणाप्रमाणव्यवस्थादिकमित्यत्राह-व्यवहृतिरिति । बाध्यव्यवहारहेतुर्ज्ञानमप्रमाणं भ्रान्तिरित्युच्यते । तत्र मणिप्रभादिदर्शने मण्याद्यर्थप्रवृत्तौ तत्संवादोऽन्यायत्तः । अबाध्यव्यवहारहेतुर्ज्ञानं प्रमाणमभ्रान्तिरिति व्यवह्रियते । तत्र कदाचित्पक्षिबुद्बुदादौ प्रवृत्तिविसंवादो विषयापक्रमादेरिति भावः । यत्तु शुक्तौ सादृश्यात् रजतसद्भावः, मरीचिकायां पञ्चीकरणानुरोधेन तोयसद्भावः, स्वप्ने च रथादेस्सृष्टिविशेषतया सत्यत्वं भाषितम्; तत्र विषयसत्यत्वेऽप्यप्रमाणव्यवहारनिदानमाचिख्यासुर्यथाभाषितमनुभाषते—शुक्ताविति । प्रभाम्भः—सूर्यप्रभायां दृश्यमानं तोयमित्यर्थः । स्वाप्नं—स्वप्नसिद्धं रथादि । यद्यप्यत्रातस्मिन् तद्बुद्धिर्नास्ति, अतज्जातीयभेदाग्रहश्च न प्रवर्तकः; तथाऽपि तज्जातीये स्वाभीष्टयोग्यायोग्यादिभेदाग्रहात् प्रवृत्ता व्यवहृतिर्विसंवदेतेत्यप्रमाणव्यवहारोऽस्यर्थं घटेतेत्यभि-

प्रायेणाह--योग्येति। शुक्तिलीनं रजतं मरीचिकास्थं जलं चाङ्गुलीयकसेकाद्यनर्हम्। अतस्तदनर्हे तदर्हभेदाग्रहात् प्रवृत्तिर्वितथा भवति। एवं स्वाप्नेष्वपि धनपित्रादिषु जागरदृष्टसरूपेषु तत्तद्भेदाग्रहात् प्रवृत्ता दुराशा मोघा भवति। आदिशब्देन नष्टानष्टादि-संग्रहः। चरमां संप्रतिष्ठां- व्यवहारविसंवादनिदानतामित्यर्थः॥ १०॥

---

आनन्द०—प्रसङ्गस्सङ्गतिरित्याह—उक्तेति। तत्र मणिप्रभादि दर्शन इति—व्यवहारः किं क्रिया उतान्यः। नाद्यः। तस्यास्सविषयत्वाभावेन विषयबाधस्य वक्तुमशक्यत्वात्। नापि स्वरूपेण तस्यास्सर्वत्राबाध्यत्वात्। न द्वितीयः। तदन्यस्य कस्यचिदनङ्गीकारे तस्यैव नामान्तरेणान्यथाख्यातित्वादेवाबाध्यत्वमिति वाच्यम्। तत्फलञ्च मणिप्रभास्थलेऽप्यस्तीति कथं तस्यान्यायत्तत्वमिति चेदत्राहुः। यद्यपि ज्ञानमेव प्रवर्तकं अन्यथाऽख्यातिप्रसङ्गात्—तथापि असंसर्गाग्रहविशेषितं स्वविषये—(प्रवर्तयति) इदमिति गृह्यमाणे प्रभाद्रव्ये प्रवर्तयतीति—तदुपलम्भ एव तज्जन्यप्रवृत्तेः फलमिति। मण्युपलम्भस्य तु तदनन्तरभाविमणिगोचरबुद्धिजन्यप्रवृत्तिफलत्वेन तत्प्रवृत्तिभेदाग्रहेण फलेऽपि तत्फलाभेदाग्रह इत्यन्यायत्तत्वमिति। प्रवृत्तेरपि सर्वविषयत्वमस्त्येव। (सविषयकत्वमस्त्येव) सा क्रिया वा (अन्यावा) तथा च तद्बाधस्सुलभः। मणिप्रभायां मणिबुद्धया प्रवृत्तस्य तु प्रथमं प्रवृत्तिर्बाधिता। अनन्तरं मणिदर्शनजा प्रवृत्तिरबाधितेति तद्विवेकाभावादबाधितत्वभ्रम इत्यप्याहुः। विषयापक्रमादेरिति। उपलक्षणम्। विषयावगमा-प्रवृत्तिसंवादोऽपि द्रष्टव्यः। विषयापक्रमाद्यभावे विसंवादिप्रवृत्तिजनकं विज्ञानं यथार्थं। विषयागमाद्यभावे संवादिप्रवृत्तिजनकत्वं प्रमात्वमिति विभागः।

नन्वपेक्षाबुद्धयनुरोधादुक्तप्रवृत्तिजननयोग्यत्वं वाच्यम्। तच्च योग्यतावच्छेदकमन्तरेण नेति—ज्ञानगतमन्यद्वाच्यमिति चेत्। तच्चासंसर्गाग्रहविशेषविशेषितत्वम्। अत एवाख्याति संवलितयथार्थख्यातिरेव भ्रमः। एवञ्च विषयापक्रमानपगमस्थलीय प्रमाप्रमासंग्रहश्चेति वदन्ति।

ननु महासिद्धान्तभाष्ये विषयसत्यत्वप्रतिपादनाद्विषयसंवादासम्भवेन तथाविधप्रवृत्तिजनकत्वाभावात्कथमप्रामाण्यव्यवहार इति शङ्कामपाकर्तुं भाष्यमनुभाषते—यत्विति। अतस्तदनर्हे इति—तदर्हरजतविसंवादिप्रवृत्तिजनकत्वमस्तीति भ्रमव्यवहार इत्यर्थः। आदिशब्देन गृहीतागृहीतसङ्ग्रहः। निदानं-कारणं। मूलं-उभयीति-अयजस्य स्थानिवद्भावेन तया पित्वात्तदन्तात् डिड्ढाणेति ङीप्॥१०॥

**अक्षरार्थ**—उक्तपक्षद्वये द्वितीयस्य सांप्रदायिकत्वमाह-**नाथैरुक्तेति**। नाथमुनिभिरुक्तेत्यर्थः। **यथार्था विमतमतिरपीति** शुक्तिरजतादिबुद्धिरपि यथार्था प्रमेत्यर्थः। कुत्रैवमुक्तमित्यत्राह **न्यायतत्त्व इति** षष्ठीचेयं ख्यातिः यथार्थख्यातिरित्यादिनेति भावः।

अयं च पक्षः श्रीभाष्यकृताऽपि 'अथवा यथार्थं सर्वविज्ञान' मित्यादिना अन्वभाषि इत्याह—**भाष्येऽनूक्तमिति**। कथमस्मिन् पक्षे प्रमाणाप्रमाणव्यवस्थेत्यत्राह—**तदत्रेति**। बाधित व्यवहारः, अबाधितव्यवहारश्च यैः तयोरुभयोर्हेतुर्ज्ञानं प्रमाणमप्रमाणं इति च व्यवस्थाप्यते। बाध्यव्यवहारहेतुज्ञानं अप्रमा, अबाध्यव्यवहारहेतुज्ञानं प्रमेति निर्धार्यत इति यावत्। अत्र ज्ञाने सर्वस्यापि यथार्थत्वेन बाध एव नास्ति, तदधीनव्यवहारयोरेव बाधितत्वाबाधितत्वे संवादित्व, विसंवादित्वरूपे भवत इति भावः। शुक्तिरूप्यादिज्ञानानां विषयसत्यत्वमन्तरा कथं यथार्थत्वमित्याशङ्कायां यथाभाष्यं परिहारमाह—**शुक्तौ रूप्यमिति**। सादृश्यात् शुक्तौ रजतमस्त्येवेत्यर्थः। **प्रभाम्भ इति** प्रभायां मरीचिकायां अंभः—जलं पञ्चीकरणात् सत्यमेवास्तीति भावः। स्वप्ने "अथ रथान् रथयोगान् सृजते" इति सृष्टिश्रवणात् तत्रत्यरथादीनामपि सत्यत्वमेवेत्याह—**श्रुतिनयवशत इति** विषयसत्यत्वे कथं व्यवहारबाध इत्यत्राह **योग्यायोग्येति** शुक्तिरजतं मरीचिकाजलं च अङ्गुलीयकसेकाद्यनर्हमपि तदनर्हत्वरूपभेदाग्रहात् च प्रवृत्तिर्वितथा भवतीति भावः। आदिशब्देन नष्टानष्टादिसंग्रहः। चरमां संप्रतिष्ठां—व्यवहारबाधनिदानतां गाहते—प्राप्नोतीत्यर्थः॥ १०॥

---

**भेदाज्ञानात् प्रवृत्तौ न कथमुपरतिः स्यादभेदाप्रतीत्या**
**रूप्यारूप्यभ्रमादाविव यदि न यतोऽनिष्टभेदाग्रहात् सा।**
**आधारे भेदवर्जं स्फुरति सदृशवस्त्वन्तरे चोपपन्ना**
**तत्तद्वस्तूचितैव व्यवहृतिनियतिस्त्वन्मते बुद्धिवन्नः॥ ११॥**

**सर्वार्थ**—नन्वन्वयव्यतिरेकाभ्यां कारणविशेषस्सर्वत्र व्यवस्थाप्यः। तत्र चेतनप्रवृत्तिरिच्छातः; सा चानुकूलताज्ञानात्। न चात्र ज्ञानेच्छाप्रवृत्तीनां भिन्नविषयत्वं युक्तम्। यद्यपि शुष्के पतिष्यामीति कर्दमे पतति; तथाऽप्यवशागतप्रवृत्तिन्याय इह नास्थेयः, इदं रजतमित्यत्रेदमर्थभूतभास्वरद्रव्यजिघृक्षयैव प्रवृत्तेः; न च रजतभेदाग्रहादरजते प्रवृत्तिः, अग्रहस्य क्वचिदपि प्रवृत्तिहेतुत्वादृष्टेः; इति मत्वा भेदाग्रहात् प्रवृत्तावतिप्रसङ्गमाह—**भेदाज्ञानादिति**॥ यदि निवृत्तिकारणभूतभेदग्रहाभावात् प्रवर्तते, तथा प्रवृत्तिकारणभूताभेदग्रहाभावात् किं न निवर्तेत? यथा भेदग्रहस्य निवृत्तिकारणत्वं नेदं रजतमित्यत्र दृश्यते, एवमभेदग्रहस्य प्रवृत्तिकारणत्वम् इदं रजतमित्यभ्रान्तबुद्धौ दृष्टमेव। ततश्चाभेदग्रहरूपप्रवृत्तिकारणाभावात् प्रवृत्तिप्रतिपक्षभूता निवृत्तिः कथं न

स्यादिति भावः । अथ रजते प्रवृत्तिरपि रजतभेदाग्रहादेवेति दृष्टम्, स चात्रापि समान इति मन्यसे; तर्हि रजतार्थिनः कदाचिदरजतान्निवृत्तिरपि रजताभेदाग्रहादिति दृश्यते; अतो निवृत्तिकारणभूतरजताभेदाग्रहसद्भावात् निवृत्तिरनिवार्यत्यभिप्रायेणोदाहरति—रूप्यारूप्यभ्रमादाविवेति ।· तत्र निवृत्तिरन्यकारणिकेत्यभिप्रायेणाह—नेति । हार्दं विवृणोति—यत इति । सा—निवृत्तिः । अयं भावः – न ह्यसौ रजतार्थिनस्ततो निवृत्तिरिष्टरजताभेदाग्रहात्, किन्तु अनिष्टारजतभेदाग्रहात् । अरजताद्भेदो रजतत्वम्; तदग्रहादेव हि तवापि तदर्थिनो निवृत्तिः । कथं प्रवृत्तिर्निवृत्तिश्च भेदाग्रहतस्स्यातामिति चेत्; इत्थम्–प्रतियोगिविषयभेदेन सामग्रीभेदात् इष्टभेदाग्रहात् प्रवृत्तिः, अनिष्टभेदाग्रहान्निवृत्तिरिति । किंचापादानवद्धानमपि प्रवृत्तिविशेषः; तत्र भेदाग्रहः प्रवृत्तिसामान्यप्रयोजकः तद्विशेषस्य तु तद्विशेष इति किं नो बाध्यते ? नन्वधिकरणप्रतियोगिनोरुभयोरन्यतरस्य वा ग्रहणाभावेऽपि तद्भेदाग्रहनिद्धिः । किं तत्रापि प्रवृत्तिः स्यात् ? नेत्याह–आधार इति । भेदाधारे भेदमन्तरेण भासमाने सतीत्यर्थः । स्फुरतीत्यत्र ग्रहणतः स्मरणतो वेति यथासंभवं ग्राह्यम् । सदृशवस्त्वन्तरे–अभिमतेऽनभिमते वाऽन्यस्मिन्वस्तुनि । तत्तदिति इष्टानिष्टविभागाभिप्रायम् । एवमनभ्युपगमेऽन्यथाख्यातिपक्षेऽप्यतिप्रसङ्गो दुर्वार इत्यभिप्रायेणाह–त्वन्मत इति । भ्रान्तेर्हि विशेषाग्रहसहकृतसाग्र्या सिद्धिः त्वयोच्यते । तत्र न ह्यधिकरणादिग्रहणरहितभेदाग्रहस्य–सहकारित्वं मन्यसे । संशयविपर्ययरूपविशेषोत्पत्तौ च विशेषकारणापेक्षां ब्रूषे; तद्वदिहाप्यतिप्रसङ्गपरिहारः । ननु यदा शुक्तौ रजतभेदाग्रहस्तदा तत्र शुक्तिभेदाग्रहोपि विद्यते । अतोऽनिष्टशुक्तिभेदाग्रहात्ततो निवृत्तिः किं न स्यात् ? तव शुक्ति[भेद]भ्रमात्पूर्वक्षणेऽन्यत्र भ्रमकारणतयाऽभिमतशुक्तिभेदाग्रहात् शुक्तिभ्रमः किं न स्यात् ? शुक्तौ शुक्तिभ्रमो न घटत इति चेत्, शुक्तौ रजतधीरप्यघटितैव त्वयाऽङ्गीक्रियते । न हि रजतोल्लेखिनी धीररजतविषयेति घटते; अदृष्टचरत्वात् । अदृष्टमपि भेदाग्रहविशेषो घटयतीति चेत्, तद्वदिहापि शुक्तौ शुक्तिभ्रममघटितं घटयतु । दर्शनादर्शनाभ्यां विशेष इति चेत् , एवं निवृत्तिहेतुत्वेऽपि निध्यातव्यमिति । एतदपि प्रतिबन्द्येव प्रज्ञापितम् । अग्रहणस्य प्रवृत्तिकारणत्वं न दृष्टमित्यस्याप्येषैव प्रतिबन्दिः । न ह्यग्रहस्य बुद्धिकारणत्वमप्यन्यत्र दृष्टं भवति । अगत्या कल्पनं त्वन्यत्रापि समानम्; त्वन्मते गौरवमधिकम् ॥ ११ ॥

---

आनन्द०—आक्षेपिकी सङ्गतिरित्याह—नन्विति । नन्वस्त्वनुकूलताज्ञानं कारणं तथापि रजतस्मरणमस्त्येवेति चेत्तत्राह—नच ज्ञानेछेति अन्यथा सत्यरजतज्ञानादरजतेऽपि इच्छाप्रवृत्त्योः प्रसङ्ग इति भावः । यद्यपीति ।

ननु कर्दमस्यैव शुष्कताज्ञानात्तत्र प्रवृत्तिरिति न भिन्नविषयत्वं तथापि यत्र कर्दमः तत्र कर्दमत्वेन जानत एव कस्मिन्नुचित्-पतनं तत्र व्यभिचार इत्यर्थः । एवं मृगं विध्यतो देवान्मनुष्यबाध इत्यादिबहूनि द्रष्टव्यानि । अवशेति—ज्ञानाभावे

बाधादि प्रवृत्तेरपीति बोध्यम् । शरात्पतनादिलक्षणप्रवृत्तिरित्यर्थः । इदमुपलक्षणम् । अशिक्षितत्वादिति बोध्यम् । समानविषयतामुपपादयति—इदं रजतमितीति । अग्रहस्येति-भ्रमस्थले विवादात्सत्यस्थले विशिष्टज्ञानस्यैव प्रवृत्तिहेतुत्वादिति भावः ।

नन्वभेदग्रहस्य प्रवृत्तिकारणत्वे सिद्धे तदभावान्निवृत्तिरापादयितुं शक्यते तदेव नास्तीत्यत्राह—यथा भेदग्रहस्येति । तर्हीति । ननु तत्र रूप्यभेदग्रहान्निवृत्तिरिति चेत् अन्यथाख्यात्यापत्त्या तदभावादिति भावः ।

ननु शुक्ताविदं रजतमित्यत्रापि अनिष्ट भेदाग्रहसत्वान्निवृत्त्यापत्तिः । नच तत्र तद्भेदग्रहः अन्यथाख्यात्यापत्तेरित्यत्राह – अयं भाव इति—पुरोवृत्त्यगृहीतासंसर्ग ( को ) यो रजतभेदस्तदग्रहो नास्त्येव । अगृहीतासंसर्गभेदरूपरजतत्वग्रहादित्यर्थः ।

ननु रजत एव नेदं रजतमित्यत्र प्रवृत्त्यापत्तिः । अरजतभेदस्य रजतत्वस्याग्रहात् । नचेष्टभेदस्यापि ग्रहान्निवृत्तिः । तस्य निवृत्तावप्रयोजकत्वात् पुरोवर्तिनि तद्ग्रहेऽन्यथाख्यात्यापत्तेः । इदं रजतं शुक्तिरिति ज्ञानात्प्रवृत्त्यभावापत्तेश्चेति चेदत्राहुः । पुरोवृत्त्यगृहीतासंसर्गभेदप्रतियोगित्वसंसर्गग्रहः तदप्रतियोगित्वग्रहो वा हेतुरस्तु । नच नेदं रजतमित्यत्र रजते प्रवृत्तिः, इदं रजतमित्यत्र—शुक्तौ वा निवृत्तिप्रसङ्गः । तत्र तदुभयाभावात् । ननु यदा शुक्तौ रजतमित्येव ज्ञानं न तु शुक्तिरिति— तदा पुरोवृत्त्यगृहीतासंसर्गभेदप्रतियोगित्वासंसर्गाग्रहसत्वात् ।

नच पुरोवृत्त्यगृहीतासंसर्गभेदाप्रतियोगित्वासंसर्गाग्रहसामान्याभाव इष्टो विवक्षितस्तु न । नास्त्येव ज्ञानं नतु शुक्तिरिति पुरोवर्त्यगृहीतासंसर्ग रजतभेदप्रतियोगिकासंसर्गाग्रहसत्वादिति । तथा सति शुक्तौ रजतभ्रमा-प्रवृत्तिर्न स्यात्–तादृश रजतभेदप्रतियोगित्वासंसर्गाग्रहसत्त्वेन तादृश सामान्याभावाभावादिति चेन्मैवं शुक्त्युपस्थित्यभावादेवोपस्थिते इष्टेऽनिष्टे वा तस्य पुरोवर्त्तिप्रवृत्तिनिवृत्यापादकत्वम् ।

नचात्र शुक्त्युपस्थितिः । तथात्वे नेदं शुक्तिरिति ज्ञानसम्भवेन तादृशशुक्तिभेदप्रतियोगित्वासंसर्गाग्रहसत्त्वेन तदभावाभावात् । न च सामान्याभावविवक्षायामुक्तदोषः । भेदेऽप्युपस्थितत्वविवक्षया तन्निरासात् । इदं रजतमित्यत्र रजतभेदस्य दोषेणानुपस्थितत्वात् ।

यद्वा इष्टे पुरोवृत्तिनिष्ठतयोपस्थितभेदनिरूपितत्वासंसर्गाग्रहवत्-प्रतियोगित्वासंसर्गाग्रहः—प्रवर्तकः तथाऽनिष्टे पुरोवृत्तिनिष्ठतयोपस्थितभेदनिरूपितत्वासंसर्गाग्रह-

अप्रतियोगित्वासंसर्गाग्रहो निवर्तक इति विवक्षितम् । इदं रजतमिति भ्रमे रजतभेदस्य दोषेण पुरोवृत्तिनिष्ठतयाऽनुपस्थितत्वात् उपस्थितघटादिभेदनिरूपितत्वासंसर्गाग्रहवत् प्रतियोगित्वासंसर्गाग्रहसम्भवात् रजत एव नेदं रजतमित्यत्रापि पुरोवृत्तिनिष्ठतयोपस्थित शुक्त्यादिभेदनिरूपितत्वासंसर्गाग्रहवत्-प्रतियोगित्वासंसर्गाग्रहसत्त्वान्निवृत्तिरेव ।

यद्वा पुरोवृत्त्यगृहीतासंसर्गज्ञायमानभेदाप्रतियोगित्वज्ञानमिष्टानिष्टयोः प्रवृत्ति-निवृत्ती प्रयोजयतीति ।

नचेदं रजतं भेदप्रतीतियोगीति ज्ञानात्-प्रवृत्तिर्न स्यादिति वाच्यम् । शुक्तीरजतं न भवतीति ज्ञानस्यान्यथाख्यातिमतेऽपि संभवेन कथं प्रवृत्तिः । नचेदन्त्वावच्छेदेन ज्ञानाभावान्न दोष इति वाच्यम् । तर्हीदन्त्वावच्छेदेनागृहीतासंसर्गसंसर्गत्वस्य विवक्षितत्वेन दोषाभावात् ।

वस्तुतस्तु पुरोवर्तिनिष्ठेष्टानिष्टसंशयविरोध्यसंसर्गाग्रहः प्रवृत्तिनिवृत्ति-कारणं। नेदं रजतमित्यत्र—न रजतत्वासंसर्गाग्रहः संशयविरोधीति न निवृत्तिरित्यादि मणिसारधिक्कारे द्रष्टव्यम् । अनिष्टारजतभेदाग्रहादिति—

यद्यपि इदं रजतमित्यत्र रजतत्वग्रहो न पुरोवर्तीति—कथं ततो न निवृत्तिरिति शङ्का तथापि पुरोवर्तिनि संशयविरोध्यसंसर्गाग्रहस्तदर्थं इति न दोषः ।

नन्वेकस्य विरुद्धोभयहेतुत्वं न संभवति—अग्नेरिव दाहतदभावहेतुत्वमित्या-शङ्क्ते—कथमिवेति—एकस्योभयहेतुत्वन्नोच्यत इति परिहरति—इत्थमिति—इष्टा-निष्टरूपप्रतियोगिभेदात् ।

वस्तुतः इच्छाद्वेषरूपभेदेनापि भेदोऽस्त्येव एकस्मिन् चूतपल्लवे कोकिल क्रमेलकयोः । एवं कालभेदेन तरुण्यां युववृद्धयोरिति द्रष्टव्यम् ।

ननु व्यक्तिभेदोऽप्रयोजकः तथात्वे वह्नीनां—भिन्नत्वात्पाक सेक प्रयोजकत्व-प्रसङ्गात् । तथा च—यदेककारणतावच्छेदकावच्छिन्नं प्रयोजकं तद-वच्छिन्नं तद्विरुद्धधर्मावच्छिन्नाप्रयोजकमिति कथं प्रवृत्तित्वावच्छिन्नप्रयोजकं तद्विरुद्धनिवृत्तिप्रयोजक मित्यत्राह—किञ्चेति । हानत्व तदभावो प्रवृत्त्यां विशेषौ । हानत्वावच्छिन्नप्रवृत्तिम्प्रत्यनिष्ट भेदाग्रहस्तदभावावच्छिन्नं—प्रति इष्टभेदाग्रहः प्रयोजक इति प्रवृत्तिसामान्ये भेदाग्रहत्वेन प्रयोजकत्वमिति न दोषः । सामान्यशब्दस्यैव प्रवृत्ति-विशेषाभिप्रायेणाऽपि हविरादिशब्दवत्प्रयोगसम्भवादिति भावः । ग्रहणत-इदमिति स्मरणतः तद्रजतमित्यत्र । संशयेति—

ननु पुयोवर्त्यगृहीतासंसर्गसंसर्गे भेदे पुरोवृत्ति निष्ठतयोपस्थिते वा इष्टानिष्ट-प्रतियोगिकत्वज्ञानस्य—तदसंसर्गग्रहस्याभावात्कथं प्रवृत्ति निवृत्ती इति चेन्न । अन्यथा-

ख्यातितो वा कथं प्रवृत्तिः । निष्कम्पप्रवृत्तिर्नास्तीति चेत्तुल्यं। एतेन संशयानुरोधा-द्‍न्यथाख्यातिरिति परास्तम् । तत्र प्रवृत्त्यभावेन भावाभावासंसर्गाग्रहाङ्गीकारेण तदुपपत्तेः। एवञ्च स्वतन्त्रोपस्थितेष्टज्ञानं प्रवर्तकमित्यपि साधु । प्रतियोग्यनुयोगिनो-रन्यूनोपस्थितत्वस्य विवक्षितत्वादिति । तवेति—तथा च शुक्तिग्रहेऽनुभूतस्यासंसर्गाग्रहस्य तत्राभावान्न निवृत्तिरिति भावः । अदृष्टचरत्वादिति संविद्विरोधादिति भावः । एवमिति । अयमभिसन्धिः । तत्र शुक्तिसन्निकर्षसत्वात्—तद्भेदग्रहात्पूर्वं तज्ज्ञानं कुतो न भवति यदि दोषस्य प्रतिबन्धकत्वं तदा अनिष्टज्ञानस्य प्रतिबन्धकसहितेष्टभेदा-ग्रहः प्रवृत्तौ कारणं तथेष्टज्ञानप्रतिबन्धकसमवहितानिष्टभेदाग्रहो निवृत्तौ । प्रतिबन्धकश्च क्वचिद्दोषघटितसन्निकर्षः, क्वचिद् दोष इति । एतच्छब्दार्थमाह—नह्यग्रहस्येति । अगत्येति रजते नेदं रजतमिति ज्ञाने रजतज्ञानाभावात्तस्य ग्राह्याभावज्ञानत्वेन हेतुत्वं कल्प्यं तथाऽत्रापीति भावः ।

त्वन्मत इति—विशिष्टज्ञानं प्रति कारणत्वकल्पनस्य समानत्वादधिक-विशिष्टज्ञानकल्पनं विषयसंयोगादेककार्यतावच्छेदकान्तरमित्यादिगौरवमित्यर्थः ॥ ११ ॥

---

अक्षरार्थ—लोके तद्विषयकप्रवृत्तौ तद्विषयकेष्टत्वज्ञानस्यैवान्वयव्यतिरेकाभ्यां साधनतावगमात् इदं रजतमित्यत्र इदमर्थविषयकप्रवृत्त्यनुरोधेन ततः पूर्वं इदमर्थ-विषयकरजतत्वग्रहेणैव भवितव्यं, रजतभेदाग्रहस्य क्वचिदपि प्रवृत्तिहेतुत्वादर्शनात् इत्यभिप्रायेण भेदाग्रहस्य प्रवृत्तिहेतुत्वेऽतिप्रसङ्गमाह—भेदाज्ञानादिति । न कथमुप-रतिस्स्यादित्यतिप्रसङ्गप्रकारः । उपरतिः—निवृत्तिः । अभेदाप्रतीत्या—अभेदज्ञानाभावा-दित्यर्थः । यथा निवृत्तिकारणभूतं नेदं रजतमित्याकारकभेदग्रहाभावात् प्रवृत्तिस्स्यात् तथा प्रवृत्तिकारणभूत इदं रजतमित्याकारकाभेदग्रहाभावात् निवृत्तिरपि कुतो न स्यादित्याशयः ।

अथ सत्यरजतस्थले रजतभेदाग्रहात् प्रवृत्तिरस्तीति दृष्टं, तथा क्वचिदपि अभेदाग्रहात् निवृत्तिर्न दृश्यत इत्याशङ्कायामाह—रूप्यारूप्यभ्रमादाविवेति । रजते अरजतत्वभ्रमदशायामिवेत्यर्थः । वस्तुतः रजतं दृष्ट्वा इदमरजतं, नेदं रजतमिति वा यदा बुद्धिर्भवति तदा ततो निवृत्तिर्भवति, तत्र निवृत्तिं प्रति कारणं रजताभेदाग्रह एव स्यादिति भावः । अत्र निवृत्तिरन्यकारणिकैव स्यादित्याशयेनाह—नेति । आशयं विवृणोति यत इति । अनिष्टारजतभेदाग्रहात् सा निवृत्तिरिति भावः ।

न चैकस्यैव भेदाग्रहस्य प्रवृत्तिनिवृत्त्युभयकारणत्वं व्याहतमिति वाच्यम् । प्रतियोगिविषयभेदेन सामग्रीभेदादविरोधः । इष्टभेदाग्रहात् प्रवृत्तिः । अनिष्टभेदाग्रहान्नि-वृत्तिरिति व्यवस्थाया अव्याहतत्वात् । प्रवृत्तिनिवृत्त्युभयोरपि प्रवृत्तिविशेषत्वात् प्रवृत्ति-सामान्ये भेदाग्रहहेतुकत्वोक्तेः, तद्विशेषे तद्विशेषस्य हेतुतामादायाबाधितत्वात् ।

ननु यत्राधिकरणप्रतियोगिनोरग्रहणेऽपि भेदाग्रहः, भेदग्रहाभावस्संभवति तत्रापि प्रवृत्तिस्स्यादित्यत्राह—आधारेति । अधिकरण इत्यर्थः । भेदवर्जं—शुक्तित्वादि भेदं विना । स्फुरति—ज्ञायमाने सति । सदृशवस्त्वन्तरे च—इष्टेऽनिष्टेचान्यस्मिन् वस्तुनि । ज्ञायमाने इष्टत्वेन चानिष्टत्वेन च ज्ञायमाने सतीत्यर्थः । प्रवृत्तिनिवृत्तिरूपा व्यवहृतिनियतिः—व्यवहारनियमः । तत्तद्वस्तूचितैव—इष्टानिष्टवस्तूचितैव नः—अस्माकं, त्वन्मते बुद्धिवत् उपपन्नेत्यर्थः । अयं भावः—भेदाग्रहसहकृतसामग्रया भ्रान्तिर्जायत इति त्वयोच्यते, तत्र न ह्यधिकरणादिग्रहरहितभेदाग्रहस्य सहकारित्वं मन्यसे, तद्वदस्मन्मतेऽपि निर्विशेषाधिकरण सविशेष सदृशवस्त्वन्तरोभयग्रहणकालीनभेदाग्रह एव इष्टानिष्टवस्तूचितप्रवृत्तिनिवृत्तिनिदानं भवितुमर्हतीति ॥ ११ ॥

॥ इति अख्यातिसंवलितयथार्थख्यातिपक्षः ॥

---

अन्यस्मिन्नन्यबुद्धिर्न यदि न घटते तत्प्रवृत्तिस्तदिच्छो-
रिष्टं तत्साधनं वा यदभिमतमतोऽन्यत्र सा नेति चेन्न ।
रत्नांशौ रत्नबुद्धया विदुरनवगते रत्न एव प्रवृत्तिं
ज्ञातस्वेष्टानुषङ्गादविदितमपि खल्वाददीतात्र चैवम् ॥ १२ ॥

**सर्वार्थ०**—अत्र प्रसङ्गमुखेनान्यथाख्यातिसाधनमनुभाषते—अन्यस्मिन्निति ॥ विवादपदं शुक्तिशकलं रजतज्ञानविषयः रजतोपायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वात् सम्यग्रजतवत् । यदि पुरोवर्तिनो रजतबुद्धिविषयत्वं न स्यात् किं तत्र पुरुषः प्रवर्तते ? सुखे दुःखनिवृत्तौ तदुभयसाधने वा बुद्धयारूढे पुरुषस्येच्छा भवति, इष्टे च प्रवर्तते । तदिह शुक्तौ यद्युपादित्साप्रसाधिका रजतधीर्न स्यात्; तर्हि न स्यादेव तत्र प्रवृत्तिरिति । अतोऽन्यत्र सा न—सुखदुःखनिवृत्तितत्साधनबुद्धिविषयादन्यत्र पुंसां प्रवृत्तिर्न दृष्टेत्यर्थः । प्रवृत्तेः स्वविषयबुद्धिपूर्वकत्वनियमो नास्तीत्यभिप्रायेण प्रत्याह—नेति । व्यभिचारमुदाहरति—रत्नांशाविति । त्वत्पक्षे हि रत्नांशुविषयेण रत्नभ्रमेण प्रसारितहस्तस्तत्रस्थमनवगतं रत्नमुपादत्ते । तत्र रत्नार्थिप्रवृत्तिविषयभूतं रत्नं न प्रवृत्तिहेतुरत्नधीविषयः, प्रभाया एव तत्र धीविषयत्वात् । अस्मत्पक्षेऽपि सामान्यतो रत्नजातीयस्मृत्या प्रवृत्तिः, न तु तदानीं गृह्यमाणरत्नविशेषविषयस्मृत्या; तस्याननुभूतचरत्वात् । सामान्यतो विदितत्वादप्यविदितत्वं नास्तीति चेन्न; एतावता विदितत्वेन प्रवृत्तिविषयत्वेऽतिप्रसङ्गात् । एवं व्यभिचारस्थलान्तरमाह—ज्ञातेति । किंचिदिष्टं क्षीरादिकं कश्चिदुपादत्ते; तत्र सामान्यतोऽप्यज्ञाततोयतृणादिकमप्युपात्तं भवति । पुरुषप्रवृत्तिविषयत्वं तत्र नास्तीति चेन्न; ज्ञातानामज्ञातानां च तत्प्रवृत्तिजन्यफलाधारत्वाविशेषात् । तदेवमविदितस्यापि प्रवृत्तिविषयत्वे पुरोवर्तिन इदंत्वेन विदितस्य रजतत्वेनाविदितस्यापि प्रवृत्तिविषयत्वं कैमुत्यसिद्धमित्यभिप्रायेणाह—अत्र चैवमिति । चकारात् दूषणान्तरमपि

समुच्चिनोति । तत्र रजतोल्लेखस्य शुक्त्युल्लेखरूपत्वमसंभवीति पूर्वमेवोक्तम् । सम्भवद्विषयत्वे त्वनुमानस्य सिद्धसाधनता, शुक्तिरजते इत्युभयग्राहिण एकज्ञानस्य सर्वसंमतत्वात् । रजतत्वविशिष्टज्ञानविषय इत्युक्तेऽपि स एव दोषः । यज्ज्ञानं रजतत्वाश्रयतया स्वविषयं गृह्णाति तस्य विषय इत्युक्तेऽपि रजतव्यक्ति रजतत्वाश्रयतया विषयीकुर्वतो ज्ञानस्य शुक्तिरपि विषय इति स्यात् । अथैतन्निष्ठरजतत्वाश्रयतया ज्ञानस्य विषय इति साध्यते, तत्र दृष्टान्तासिद्धिः, साध्यस्वरूपासंभवश्च, एतन्निष्ठरजतत्वाद्यभावात् । स्वविषयरजतताज्ञानविषय इत्युक्तेऽपि न निस्तारः; रजतगतरजतत्वोल्लेखिज्ञानस्यैवेतद्विषयत्वसंभवात् । अथ स्वोपादित्साहेतुभूतरजतज्ञानविषय इति ब्रूषे, तथाऽपि सहकारिविशेषात्तद्धेतुभूतरजतस्मृतेस्सन्निहितासन्निहितानुभवजनितसंस्काराभ्यामुत्पत्तिसंभवात् तद्विषयतयाऽर्थान्तरतैव । रजतानुभवविषय इति विशेषितेऽपि स्मृतिमूलप्रवृत्तिविषये रजते व्यभिचार इति ॥ १२ ॥

---

आनन्द०—पूर्वाक्षेपसङ्गत्याऽऽह —अत्रेति । रजतज्ञानविषयः—रजतत्वप्रकारतानिरूपितविशेष्यताश्रय इत्यर्थः । रजतसाधने व्यभिचारवारणार्थं रजतोपायेति । पठे व्यभिचारवारणाय रजतार्थीति । रजतत्वप्रकारकेच्छाजन्य प्रवृत्तिविषयत्वादित्यर्थः । तेन द्रव्यत्वप्रकारकरजतार्थिप्रवृत्तिविषयीभूते रजते न व्यभिचारः किन्तत्रेति—पुरुषो न प्रवर्तेतेत्यर्थः । अप्रवृत्तिमुपपादयति—सुख इति । अतोऽन्यत्र सा नेति प्रतीकोपादानम् । प्रवृत्तेरिति—प्रवृत्तिविशेषेऽप्यप्रयोजकत्वान्न व्याप्तिरित्यर्थः । व्यभिचारमिति—सामान्यव्याप्ताविति शेषः ।

ननु मणिप्रभायां मणिबुद्ध्या प्रवृत्तस्य रक्तमणिदर्शनात्प्रवृत्तिरिति न तत्र व्यभिचार इति चेत्तत्राह—तत्रेति—तत्र प्रवृत्तिद्वयाभावात्प्राथमिकप्रवृत्तेः—प्रभाविषयत्वं अनन्तरज्ञानजन्यायाः मणिविषयत्वमिति विकल्पानोचित्यात् । अन्यथा हस्तादे—रपि व्यापाररूपवृत्त्यादिविषयताव्यभिचारः । तस्य रजतज्ञानविषयत्वाभावादिति भावः ।

ननु त्वत्पक्षे रजतस्मरणस्यैव प्रवर्तकतया तद्विषयत्वान्न व्यभिचार इत्यत्राह—अस्मदिति ।

ननु तन्मात्रमेव विवक्षितमिति न व्यभिचार इति—शङ्कते—सामान्यत इति । एतावता विदितत्वेनेति प्रवृत्तिप्रतिबन्धकत्वे प्रतिबन्धकाभावत्वेन । विषयत्वे—ज्ञानविषयत्वे वा कारणाभावे कार्यायोगेनतद्गोचरप्रवृत्तिस्तज्ज्ञानाऽसम्भवे न सम्भवतीतिवक्तव्यम् यत् ज्ञानं कारणं तत् विशेषज्ञानमिति न सामान्यात्प्रवृत्तिरिति न तदादाय—साध्यसिद्धिरिति भावः । एवमिति—सामान्यव्याप्तावेवेति शेषः । प्रवृत्तिजन्यं फलं भक्षणादि । तान्येव दूषणान्याह—तत्रेत्यादिना । तत्र किं रजतमात्रोल्लेखि ज्ञानं पक्षः ।

उत रजतोल्लेखिज्ञानमात्रम्। आद्य आह—रजतेति—तथा च बाध इति भावः। न द्वितीय—इत्याह—संभवतीति—रजतत्वप्रकारक इत्यर्थः। रजतत्वविशिष्टेति। स एवेति–समूहालम्बनमादाय—न सिद्धसाधनं बाधो वा स्यादिति भावः। एतन्निष्ठेति–प्रवृत्तिविषयनिष्ठेत्यर्थः। तदेति।

ननु प्रकृतपरत्वेन स्वविषयनिष्ठ रजतत्वाश्रयतया ज्ञानविषय इत्यस्य सत्यस्थले सत्वान्न दृष्टान्तासिद्धिरिति चेत्। तथा सति समहालम्बनमादाय न सिद्धसाधनं बाधो वा स्यादिति भावः। शुक्तिपरत्वे दूषणमाह—साध्येति। स्वविषयेति—स्वविषयस्य रजतेत्यर्थः। तथापीति—शुक्ति—रजतादि संस्काराणामर्थसमाजाद्रजतारजतस्मरण संभवादिति भावः।

ननु तथापि ज्ञानप्रकारीभूत रजतत्वनिरूपितविशेष्यताकत्वविवक्षायामन्यथा-ख्यातिसिद्धिरितिचेत्। अन्याकार ज्ञानस्यान्यविशेष्यकत्वायोगात्। अन्यथा घटज्ञानस्य पटविशेष्यकत्वविरोधाभावेन सर्वत्र व्यतिकरप्रसङ्गेन प्रमाप्रमाविभागो न स्यात्। बाधाबाधाभ्यां व्यवस्थितिरिति चेत्—बाधस्यापि तथात्वसम्भवेन वस्तुनिर्णायकत्वा-योगात्।

नच प्रवृत्ति संवादात्तन्निश्चय इति वाच्यम्। संवादस्य ज्ञानरूपत्वे उक्तदोषात्। अर्थक्रियाकारित्वेऽप्यव्यवस्था स्यात्। वह्नित्वप्रकारकज्ञानविशेष्यस्य गुञ्जापुञ्जत्व-प्रकारकज्ञानविशेष्यस्य च—कदाचिद्दाहजनकत्वदर्शनात्कदाचित्तदभावाच्च वह्नेरवह्ने-र्वाऽर्थकारित्वमिति सन्देहप्रसङ्गात्—यत यत्संवद्ध धर्मप्रकारकज्ञानविशेष्यं तत्—तत्प्रकाराश्रय इतीत्येव वक्तव्यमिति ॥ १२ ॥

---

अक्षरार्थ०—अथ प्रसङ्गमुखेनान्यथाख्यातिसाधनमनुभाषते–अन्यस्मिन्निति। अन्यस्मिन्–शुक्त्यादौ अन्यबुद्धिः रजतादिबुद्धिः शुक्ति विशेष्यकरजतप्रकारकबुद्धिरि-त्यर्थः। न यदि–नास्ति चेदित्यर्थः। इदमापादकं। आपाद्यमाह—न घटत इति न स्यादिति भावः। कुत इत्यत्राह इष्टमिति यत् इष्टं इष्टसाधनं वाऽभिमतं, अतः—तस्मात् अन्यत्र सा प्रवृत्तिः नेति चेत्—नास्तीति चेदित्यर्थः। पुरोवर्तिनो रजतबुद्धि विषयत्वाभावे तत्र पुरुषो नैव प्रवर्तेत। सुखे, दुःखनिवृत्तौ तदुभयसाधने वा बुद्ध्यमान एव पुरुषस्येच्छया प्रवृत्तिदर्शनात्। अतो विमतं शुक्तिशकलं–रजतज्ञानविषयः रजतो-पायान्यत्वे सति रजतार्थिप्रवृत्तिविषयत्वादित्यनुमानेन अन्यथाख्यातिसिद्धिरिति भावः। प्रवृत्तेस्समानविषयबुद्धिपूर्वकत्वनियमो नास्तीत्यभिप्रायेणाह—नेति। तत्प्रवृत्तौ तद्बुद्धेर्हेतुत्वे व्यभिचारमाह—रत्नांशाविति। रत्नांशुविषयेण रत्नभ्रमेण प्रसारित-हस्तस्य तत्रत्यानधिगतरत्नोपादाने व्यभिचार इत्यर्थः। रत्ने प्रवृत्तिः, ज्ञानं च रत्न-प्रभायामिति तयोर्भिन्नविषयत्वं तत्रेति भावः। व्यभिचारस्थलान्तरमाह—ज्ञातेति।

किंचिदिष्टं क्षीरादिकं कश्चिदुपादत्ते तत्र सामान्यतोऽप्यज्ञाततोयतृणादिकमपि—अनुषङ्गात्—तत्क्षीरसंबन्धात् उपात्तं भवतीति प्रसिद्धम्। तत्र तोयादीनामपि तत्प्रवृत्तिजन्य फलाधारत्वाविशेषात् प्रवृत्तिविषयत्वं दुरपन्हवम्। अतो ज्ञानविषयत्वाभावेऽपि प्रवृत्तिविषयत्वदर्शनात् व्यभिचार इत्यर्थः। तदेवमत्यन्ताविदितस्यापि प्रवृत्तिविषयत्वसंभवे पुरोर्वातिन इदन्त्वेन सामान्यरूपेण विदितस्य रजतत्वेनाविदितस्यापि प्रवृत्तिविषयत्वं कैमुत्यसिद्धमित्यभिप्रायेणाह—अत्र चैवमिति अत्र चकारेण परोक्तानुमाने साध्यनिर्देशस्य 'शुक्तिरजते' इत्याकारक शुक्तिरजतोभयग्राहि ज्ञानमादायापि निर्वाहसंभवात् सिद्धसाधनादिदूषणानां समुच्चयः ॥ १२ ॥

---

शुक्तित्वारूप्यतादेर्न तु रजततया भाति शुक्तिर्विगीता
यद्वा धीत्वाद्यथार्था विमतमतिरतो बुद्धिबाधोक्त्ययोगः।
वैशिष्ट्यासिद्धिमात्रप्रथनमिह परं बाधकस्यापि कृत्यं
किंचासत्ख्यातिरंशे प्रसजति भवतामन्यथाख्यातिवेद्ये ॥ १३ ॥

सर्वार्थ०—अन्यथाख्यातिवादमनुमानतोऽपि प्रत्याचष्टे; तत्र बोध्यपक्षीकारेण तावदाह—शुक्तित्वेति ॥ विगीता शुक्तिर्न रजततया भाति शुक्तित्वात् अरूप्यत्वाद्वा; आदिशब्देन रजतविरुद्धार्थक्रियाकारित्वसंग्रहः। अन्यथाख्यातिसमर्थनहेतोस्सविशेषणत्वात् निर्विशेषणशुक्तित्वादिहेतुः प्रबल इति द्योतनार्थस्तुशब्दः। किंच मदुक्तस्य विपक्षे गौरवप्रसङ्गो बाधकस्संभवति, न तु त्वदुक्तस्य। प्रवृत्तिविशेषो हि भेदाग्रहादप्युपपन्नो दर्शितः। अथ बुद्धिपक्षीकारेणाप्याह—यद्वेति। विगीता बुद्धिर्यथार्था बुद्धित्वात्संप्रतिपन्नवत्। नन्वन्यथाख्यातिपक्षीकृतावाश्रयासिद्धिर्धर्मिग्राहकविरोधो वा। अथ विषयांशभेदेन तद्याथात्म्यमभिप्रेतं तदा सिद्धसाधनम्, धर्मिणस्समानधर्मस्य चानारोपितत्वात्; बुद्ध्यन्तरपक्षीकारेऽप्ययमेव दोष इति। मैवम्; अत्र हि पुरोवर्त्यर्थं व्यवहर्तुरुपादित्सां प्रत्यव्यवहितहेतुभूता काचिद् बुद्धिरस्तीति सामान्यत उभयाभ्युपेतम्। यद्यपि सिद्धस्य वाऽसिद्धस्य वा धर्मिणस्सत्त्वासत्त्वे विधिनिषेधानर्हे। तथाऽपि गृह्यमाणयत्किंचिदाकारेण सत्ये पर्वतादौ अवयविसङ्घातप्राकृतपरिणामादिविवादानादरेण पक्षीकरणं सर्वसंमतम्। तद्वदिहापि शुक्तिविषयत्वतदविषयत्वादिविवादे सत्यप्युभयानुमतोपादित्साकरणत्वविशिष्टज्ञानपक्षीकारेणात्र प्रयोगोपपत्तिः। यथा च प्रमितिरूपत्वभ्रान्तिरूपत्वविशेषानादरेण शुक्तिशकलस्य रजतज्ञानविषयत्वमात्रं सामान्यतस्साध्यते, तत्र च प्रमितिरूपत्वे विरोधः भ्रान्तिरूपत्वे त्वप्रसिद्धविशेषणत्वमिति पर्यनुयोगं न क्षमसे; एवमिहापि सामान्यतः पक्षसिद्धिरिति मध्यस्थदृष्टिमनुसंधत्स्व। तथाऽप्यत्र साध्यं यथार्थत्वम्? अनारोपितविषयत्वम्? आरोपितविषयरहितत्वं वा? आद्ये धर्म्यंशादेरनारोपितत्वात् तद्विषयत्वेन सिद्धसाधनत्वम्। आरोपितविषयत्वात्यन्तासिद्धौ चानारोपितविषयत्वमपि दुर्वचम्। अत एव न तृतीयः, निष्प्रतियोगिकनिषेधायोगादित्यत्राह—तत इति।

यथार्थत्वप्रतिज्ञानवशाद्व्यवच्छेद्यत्वेन क्वचित् बुद्धिबाधः स्यादित्युक्तेरयोग इत्यर्थः। अयं भावः—योगाचारादयो हि स्वप्नादिनिदर्शनेन सर्वप्रत्ययानां प्रत्ययत्वेनायथार्थत्वं साधयन्ति; सर्वत्रासिद्धं च यथार्थत्वं प्रतिषेध्यं प्रतिपद्यन्ते; तानुद्दिश्यायं प्रयोगः स्यात्; पिशाचानां पिशाचभाषयैव ह्युत्तरं देयम्। तदिह यद्वेत्यनेन पक्षान्तरान्वारोहः प्रख्याप्यते। कस्तर्हि तान् प्रति दृष्टान्तो वाच्यः? यस्तेषां स्वपक्षसाधकबोधः। न हि तस्यायथार्थत्वं तैर्वक्तुं युक्तम्, स्वपक्षासिद्धिप्रसङ्गादिति।

ननु बुद्धिबाधः कश्चित्सिद्धो न वा? आद्ये कथं तन्निषेधः? द्वितीये कथंतरामिति चेत्; उच्यते, नहि वयं बुद्धिबाधशब्दस्य कंचिदर्थमनुमत्य प्रतिषेधामः, किन्तु बुद्धिबाधोक्तिरयोग्यपदसमभिव्याहाररूपा न विशिष्टमर्थं बोधयतीति तत्प्रयोगास्यायुक्ततामात्रं ब्रूम इति भावः। एतेनान्यथाख्यातिः क्वचिदस्ति न वेत्यादिकमपि प्रत्युक्तम्। अस्ति तावत् परस्परविरुद्धाकारभानरूपान्यथाख्यातिस्सर्वेषु वस्तुषु। सेयं शुक्तिविरुद्धाकारवत्तया अन्यत्र सिद्धा। अन्यथाख्यातिश्शुक्त्यालम्बना न भवतीत्युक्तौ क्वचित् सिद्धस्यैवान्यत्र निषेधः। यत्तु शुक्तेरेव बाधदशायां रजतादन्यथात्वेन भानम्, न तन्निषेध्यम्; स्वाकारविरुद्धाकारवत्तया भानमिति त्वयोग्यपदसमभिव्याहारमात्रमिति। ननु पूर्वधीबाधाभावे परस्य कथं बाधकत्वमित्यत्राह—वैशिष्ट्येति। बाधकज्ञानं हि पुरोवर्तिनि रूप्यत्ववैशिष्ट्यं नास्तीति बोधयति; तच्च रूप्ये सिद्धं प्रतियोगि भवति। अत एव भेदग्रहसिद्धो भेदाग्रहप्रभवप्रवृत्तिरूपसाध्यापहारात् पूर्वोत्तरधियोर्बाध्यबाधकत्ववाचोयुक्तिरिति भावः। असत्ख्यातिदूषणेनान्यथाख्यातिं साधयतामनिष्टप्रसङ्गमाह—किंचेति। यद्यप्यधिष्ठानं सत्यं भाति; यद्यपि रजतस्य रजतत्वस्य चान्यत्र सिद्धस्तदारोपे नात्यन्तासत्ख्यातिः; तथापि शुक्तिशकले रजततादात्म्यस्य रजतत्वसंसर्गस्य वा तत्र चान्यत्र चासिद्धस्य ख्यातिविषयत्वादत्यन्तासत्ख्यातिरनिवार्या। एतावदसत्ख्यातिरङ्गीक्रियत इति चेदिदमपि गौरवान्तरम्। तथा चासत्ख्यातिदूषणाद्विरन्तव्यम्; अन्यथाख्यातिसाधनाद्वेति ॥ १३ ॥

---

आनन्द०—प्रसङ्गसङ्गतिरेवात्रापीत्याह अन्यथेति। रजतविरुद्धार्थक्रियाकारित्वं—कटकमकुटाद्यनानुगुण्यम्। अन्यथाख्यातिसमर्थनहेतोरित्यादि—रजतार्थिताजन्यप्रवृत्तिविषयत्वस्य विशेषणविशिष्टतया यत्र रजतज्ञानविषयत्वाभावस्तत्र रजतार्थिताजन्यप्रवृत्तिविषयत्वाभाव इति व्यतिरेकव्याप्तौ ज्ञानविषयत्वाभावमात्रस्यैव व्याप्यतया सकर्तृकत्वानुमानप्रतिरोधे शरीरजन्यत्वाभावे शरीरविशेषणस्येव रजत विशेषणस्यापि व्यर्थत्वेन व्याप्तिरूपबलाभावादन्यथाख्यात्यनुमानस्येति भावः।

केचित्तु सविशेषणस्य विलम्बोपस्थितिकत्वात्—तद्रहितस्य शीघ्रप्रवृत्तिकत्वात् लाघवरूपमधिकं बलमस्तीत्याहुः।

किञ्च विपक्षे बाधकतर्कत्वं बाधकं बलमित्याह—किञ्चेति । अथेति—सकर्तृकत्वानुमाने कर्ता शरीरेणैवेत्यादिव्याप्त्या क्षित्यादिजनकः कर्ता शरीरसापेक्षः, तज्जनकं ज्ञानं, जन्यं कर्तृत्वात्, ज्ञानत्वादित्यादिवत् विपक्षे साध्यसिद्धिप्रतिबन्धकत्वाद्भिन्नपक्षकोऽपि प्रतिपक्षस्सम्भवतीति भावः । अत्र विगीतत्वनिर्णयायाह—नन्विति । अत्र किमन्यथाख्यातिः पक्षः उत यथार्थख्यातिरिति विकल्प्य आद्ये अन्यथाख्यातिरभ्युपगम्यते नवा ? नाद्य इत्याह—आश्रयासिद्धिरिति । द्वितीय आह—धर्मीति । तदविरोधं शङ्कते—अथेति । अस्तु विषयांशभेदेनेति क्वचित्पाठः । सिद्धसाधनमुपपादयति—धर्मिण इति । द्वितीये दोषमाह—बुद्ध्यन्तरेति । यथार्थज्ञानस्य—पक्षत्वेऽपि सिद्धसाधनमेव दोषः इत्यर्थः । रजतार्थिनः शुक्तिप्रविवर्त्तिषाजनकज्ञानत्वेन पक्षत्वमित्यभिप्रायेण परिहरति—मैवमिति ।

पुरोवर्त्यर्थं पुरोवर्ती चासावर्थश्चेत्यर्थः । यदि यथा कथञ्चित्सिद्धासिद्धविकल्पेनानुमानदूषणन्तर्ह्यनुमानमात्रोच्छेद इति बाधकमाह—यद्यपीति । वस्तुगत्या सिद्धासिद्धान्यतरत्वनियमात् सति सत्वनिषेधोऽसत्वविधिः, असति सत्वविधिः असत्वनिषेधश्च स्वरूपेणायुक्तः । तथापि प्रकृतिपरिणतस्य पक्षत्वमुत ? परमाणुजन्यस्येति—विकल्प्य उभयोरन्यतरासिद्ध्याऽनुमानमात्रोच्छेदप्रसङ्ग इति तदनादरेण पर्वतत्वेनोभयसिद्धाकारेण पक्षत्वमिति भावः ।

उभयसिद्धाकारेण सिद्धितिरस्कारेऽन्यथाख्यात्यनुमानेऽपि दोषः स्यादिति जात्युत्तरत्वमाह—यथाचेति ।

ननु चाद्यानुमानमेवान्यथाख्यातिसाधकमिति शङ्कामवतारयति—तथापीति । आरोपितेति—ज्ञानस्यारोपितविषयत्वमेवान्यथाख्यातित्वमिति भावः । यथार्थत्वप्रतिज्ञानवशात् यथार्थप्रतिज्ञाने सति अयथार्थत्वस्य निषेध्यत्वात् प्रतियोगितया अन्यथाख्याति सिद्धरिति न वाचोयुक्तिरित्यर्थः ।

ननु निषेध्यस्य प्रसिद्ध्यभावे निषेधायोगात् सङ्ग्रामभावो निरूप्यत इति तान्त्रिकसमयादित्याह—अयं भाव इति ।

ननु सर्वा धीर्न यथार्था स्यात् तथा स्वप्नमतिर्यथेति वदतो योगाचारादन्यान्प्रति कथं प्रयोग इत्यत्राह—तदिहेति—पूर्वप्रयोगस्तान्प्रतीति भावः ।

ननु ज्ञानमात्रस्यायथार्थतासन्देहाद्व्याप्तिग्रहासम्भवः । न च व्यतिरेकि—ज्ञानभिन्नस्याप्यभावेन तस्याप्यभावादित्याशङ्कते—कस्तर्हीति । परिहरति—य इति । ननु सर्वबुद्ध्ययाथार्थ्यात्कथं तस्य दृष्टान्तत्वमित्यत्राह—नहीति । स्वपक्षेति क्षणिकत्वविषयबुद्धेः, ज्ञानातिरिक्त ज्ञेयाभावादिबुद्धेर्वा यथार्थत्वाभावो हि ज्ञानस्य क्षणिकत्वाभावो वा ज्ञेयस्यातिरिक्तत्वमेव वा स्यादिति स्वसिद्धान्तासिद्धिरित्यर्थः ।

केचित्तु—स्वपक्षसाधकबोधस्य स्वाप्नज्ञानदृष्टान्तेन मिथ्यात्वसाधकधीत्वा-दित्यादि बोधस्याप्ययाथार्थ्ये हेतोराभासत्वेन सर्वधीमिथ्यात्वन्न सिद्ध्यतीत्याहुः।

योगाचारादन्यमतानुसारेण शङ्कते—नन्विति। किन्त्विति—तथाचापार्थकाख्य निग्रहोद्भावनमित्यर्थः। एतेनेति—विमता बुद्धिर्नान्यथाख्यातिर्धीत्वादित्यनुमानेऽपि न दोष इति भावः। अस्तीति-विरुद्धाविरुद्धाकारप्रतीतिरन्यथाख्यातिरित्यर्थः। सेयमिति-शुक्तिविरुद्धरजताकारज्ञाने शुक्तिगोचरत्वनिषेधेऽधिकरणप्रतियोगिनोरप्रसिद्धिदोषो नास्तीत्यर्थः। यत्तु—अन्यथाभानमित्यन्वयः।

ननु शुक्तौ स्वाकारविरुद्धाकारवत्तया भाननिषेधपक्षे दोषस्स्यादित्यत्राह—स्वाकारेति। पूर्वरीत्या तत्रापार्थकोद्भावनमेव नतु तन्निषेधः। यद्यपि शुक्त्याकार-विरुद्ध रजतत्वाकारवत्तया भानं रजते प्रसिद्धं शुक्तौ निषेद्धुं शक्यं तथापि दूषणान्तर-मस्तीतिसूचनमिति भावः। अत एवेति—पूर्वज्ञानस्योत्तरज्ञानेन बाधो न विषयापहारः किन्तु तत्साध्य प्रवृत्त्यपहार-इत्यर्थः। किञ्च अन्यथाख्याति सिषाधयिषतस्ते-विनायकं चिकीर्षोर्मर्कटसिद्धिवदसत् व्यातिस्सिद्ध्येदित्याह—असत् व्यातीति। तथापीति—अन्यथाख्यातिवादी प्रष्टव्यः-इदं रजतमित्यत्र तदुभयसम्बन्धविषयत्वमुच्यते न वा? नान्त्यः। विशिष्टज्ञानत्वायोगात्। न प्रथमः। वैशिष्ट्यस्य तादात्म्यस्य वा असत्त्वेन-तद्विषयतयाऽसत्ख्यातिरिति भावः।

नन्विदं पदार्थे रजत तादात्म्य रजतत्वसंसर्गयोरन्यत्र प्रसिद्धयोर्विषयत्वमिति-चेन्न। इदम्पदार्थं इत्यधिकरणसप्तम्या तदधिकरणत्वप्रतीतेः। यदि सप्तम्यर्थाविवक्षा तर्हीदम्पदार्थे रजततादात्म्य रजतत्व संसर्गगोचरज्ञानमन्यथाख्यातिरिति रङ्गरजत-गोचरसमूहालम्बनस्याप्यन्यथाख्यातिप्रसङ्गः। नच तदन्यानिरूपितत्वं तादात्म्य-संसर्गयोर्विवक्षितं समूहालम्बने शुक्त्यन्य रजतनिरूपितत्वादिति वाच्यम्। तदन्या-निरूपितत्वं स्वरूपसद्विशेषणं ज्ञायमानं वा ? नान्त्यः। संसर्गधर्मान्तरस्याप्रकार-त्वात्। प्रकारान्तरेणापि न भानं संसर्गमर्यादाविरोधप्रसङ्गात् इमे रजत इति समूहा-लम्बने एकांशान्यथाख्यात्यसम्भवप्रसङ्गाच्च। तत्र रङ्गान्य रजतनिरूपितत्वात्। अत एव न प्रथमकल्पोऽपि।

किञ्च नेदमित्यत्रापि रजतत्व विशिष्टज्ञानत्वप्रसङ्गः रजत रजतत्वसंसर्ग (क) पुरोवृत्ति विषयत्वात्।

ननु पुरोवर्तिनि रजतत्वसंसर्गोऽन्यत्र गृह्यत—इति चेन्न। पुरोवर्तिनि कोऽर्थः ? व तावत् पुरोवृत्तिनिष्ठत्वं। असत्ख्यात्यापत्तेः। नापि तन्निष्ठतया ग्रहः संसर्गे धर्मान्तराभानात्। नापि रजतत्वस्य पुरोवृत्तिनिष्ठतया ग्रहः—रजतत्वस्येति षष्ठ्या नाधारत्वं भ्रमस्थले-असत्ख्यात्यापत्तेः। नापि तन्निष्ठत्वग्रहः

पुरोवृत्तिनिष्ठत्वस्यापि रजतत्वनिष्ठत्वग्रहे प्रकारतापत्तेस्तत्रापि षष्ठ्यर्थस्यानिरूपणात् । नापि स्वरूपं, नेदं रजतमित्यत्रापि रजतत्वविशिष्टज्ञानत्वापत्तेः। नच पुरोवर्तिनि तदभावग्रहः सप्तम्याद्यर्थः । तथासति अगृहीतासंसर्गक धर्म धर्मिगोचर ज्ञानत्वं विशिष्ट-ज्ञानत्वमिति भेदाग्रह आदर्तव्यस्स्यात् । तथाचासंसार्गाग्रहस्यावश्यकत्वे (च) किमनेक-दोषग्रस्तान्यथाख्यातिपक्षस्वीकारेणेति ।

एतेन रङ्गरजतयोरिमे रजतरङ्ग इति विपरीतभ्रमे भेदाग्रहचतुष्टयात् युगपत्प्रवृत्तिनिवृत्यापादनं भेदाग्रहपक्षे निरस्तम् । विशिष्टज्ञानपक्षेऽपि समानत्वात् ।

एतावदिति—संसर्गमर्यादया असत्ख्यात्यङ्गीकारेऽपि प्रकारान्तरेणापि भाना-भावान्नासतोभानमस्तीति सिद्धान्ताविरोध इति भावः । इदमपीत्यपि शब्देन संसर्ग-मर्यादया भातस्य प्रकारान्तरेणापि भानसम्भवात्सिद्धान्तविरोधोऽपि समुच्चीयते ।। १३ ।।

---

अक्षरार्थ०—अथान्यथाख्यातिवादमनुमानतो निरस्यति—शुक्तित्वेति विगीता शुक्तिः—न रजततया भाति शुक्तित्वात् अरूप्यत्वाद्वेति एकः प्रयोगः । अपरमाह—यद्वेति विमता मतिः इदं रजतमित्याकारिका यथार्था धीत्वात् इत्यपरः । अत्रान्यथाख्याति-साधकतया पूर्वोक्तानुमानापेक्षया प्राबल्यद्योतनाय तुशब्दः । सविशेषणतया विलम्बोप-स्थितिकहेत्वपेक्षया निर्विशेषणतया शीघ्रोपस्थितिकयोरुक्तहेत्वोः प्राबल्यमिति भावः । अपि चास्मदनुमानस्य विपक्षे बाधकः गौरवप्रसङ्गस्समस्ति । धर्मिज्ञानाद्यपेक्षयाऽति-रिक्तस्य विशिष्टज्ञानस्य कल्पनीयत्वात् । न तु तदुक्तानुमानस्य एवं विपक्षे बाधक इति विशेषोऽप्यूह्यः । द्वितीयप्रयोगे उभयानुमत पुरोवर्त्युपादित्साव्यवहित कारणज्ञानत्वेन पक्षीकारात् नाश्रयासिद्धिर्न वा सिद्धसाधनम् । साध्यं च अयथार्यत्वात्यन्ताभावः । तेन धर्म्यंशे यथार्थत्वमादाय न सिद्धसाधनाशङ्कावकाशः ।

ननु सिद्धान्तिमते अयथार्थत्वासिद्धया साध्याप्रसिद्धिः । अयथार्थत्वसिद्धौ क्वचिद्बुद्धिबाधः आवश्यक इत्यत्राह – अत इति । यथार्थत्वप्रतिज्ञानवशात् व्यवच्छेद्य-त्वेन क्वचिदबुद्धिबाधस्स्यात् इत्युक्तेरयोग इत्यर्थः । स्वाप्नादिनिदर्शनेन सर्वप्रत्ययानां प्रत्ययत्वेन अयथार्थत्वं साधयन्तः सर्वत्रासिद्धं यथार्थत्वं प्रतिषेध्यं यथा प्रतिपद्यन्ते तथा तानुद्दिश्य प्रवृत्तेऽस्मिन् प्रयोगे व्यवच्छेद्यसिद्धेरवश्यंभावाभावात् क्वचिदप्ययथार्थ-त्वानभ्युपगमेन बुद्धिबाधस्याप्रसक्तेरिति भावः ।

न च बुद्धिबाधसिद्ध्यसिद्धिभ्यां व्याघातः, बुद्धिबाधानभ्युपगमेऽपि अयोग्य-पदसमभिव्याहाररूपा बुद्धिबाधोक्तिर्न विशिष्टमर्थं बोधयतीति तदयुक्ततामात्रवचनात् । पूर्वं ध'बाधाभावे परस्य कथं बाधकत्वमित्यत्राह वैशिष्ट्येति । बाधकज्ञानं पुरोवर्तिनि आपणस्थरजते प्रसिद्धं रजतत्ववैशिष्ट्यं नास्तीति बोधयति, तेन भेदग्रहसिद्धौ भेदाग्रह-

जन्यप्रवृत्तिवाधात् पूर्वोत्तरधियोर्बाध्यबाधकभाववाचो युक्तिरिति भावः। असत्ख्याति दूषणेन अन्यथाख्यातिं साधयतामनिष्टमपि प्रसञ्जयति-किं चेति। असत्ख्यातिरिति शुक्तौ रजततादात्म्यस्य रजतत्वसंसर्गस्य वा तत्र चान्यत्र चासिद्धस्य इदं रजतमित्यन्यथाख्यातौ विषयत्वाङ्गीकारादसत्ख्यातिरनिवार्येति भावः ॥ १३ ॥

---

**योऽसौ बोधोऽन्यथाधीजनक इति जगे भ्रान्तिरित्युच्यतेऽसौ**
**नेत्थं बोधापलापः क्वचिदपि वदतां बोधमध्यक्षसिद्धम् ।**
**यत्र प्रत्यक्षसिद्धादधिकमपि परे निष्फलं कल्पयेयुः**
**सिद्धैरेवात्र तत्तद्व्यहृतिरिति हि स्थापितं भाष्यकारैः ॥ १४ ॥**

**सर्वार्थ०**—नन्वन्यथाख्यातिमपह्नुवानानां सर्वस्या बुद्धेर्याथार्थ्याविशेषाद् भ्रान्तिशब्दः क्वचिदपि न स्यात्। न ह्यसावसाधुः; न च साधुरपि निर्विषयः स्यात्। स्पष्टदृष्टबोधापलापे त्र सर्वबोधापलापप्रसक्त्या विश्वविलोपस्स्यादित्यत्राह—योऽसाविति ॥ अयं भावः अस्ति ह्यधिष्ठानादिगोचरं भेदाग्रहविशेषसहकृतं भ्रान्तिजनकत्वेन युष्मदभिमतं किंचित् ज्ञानं, तदेव भ्रान्तिरित्युच्यते। न चात्र बोधापलापः, ईदृशबोधोपलम्भस्याभ्युपगमात्, तदतिरिक्तबोधोपलम्भस्याभावाच्चेति। नन्वनादेशिकमेतत् भाष्यादिष्वनुक्तेरित्यत्राह—यत्रेति। यत्र संप्रतिपन्नैः कैश्चिद्व्यवहारस्संभवति तत्र मध्ये न किंचित् कल्पनीयमित्यभावजात्यवयविभेदादिनिरासे भाष्यकारैर्निरणायि, प्रस्तुतार्थश्च भ्रान्तिचिन्तायां प्रदर्शितप्राय इति। ननु चाख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेनेति भाष्ये कथं चोदितम्? किमिति वा तच्चाप्रदिष्टोत्तरम्? सत्यं, तदुच्यते—सर्पभूदलनाम्बुधारादिभ्रमेष्वयं सर्पं इदं भूदलनमियमम्बुधारेति सर्पादिविशेष्यलिङ्गभाञ्जि विशेषणानि भवन्ति; इदं च समानाधिकरणत्वाभिमानात्। अतोऽन्यथाख्यातिरवर्जनीयेति चोद्याभिप्रायः। परिहारानुक्तिस्तु तत्तद्भेदाग्रहनिबन्धनवाचकव्यवहारविशेषमात्रमिति स्वयमूहक्षमशिष्यशिक्षार्थेति।

तर्कतत्फलसामर्थ्यादन्यथाधीप्रसञ्जनम् ।
दत्तोत्तरमिति ग्राह्यं दृष्टगौरवलाघवैः ॥

यदेतदाहार्यव्याप्यजनितमारोपितव्यापकविषयं ज्ञानं तर्क इति ब्रूषे, तज्जनकतयाऽभिमतज्ञानस्यैव तर्कशब्दवाच्यत्वं, तस्यैव च मानानुग्राहकत्वमिति ॥ १४ ॥

---

**आनन्द०**—आक्षेपसङ्गतिमाह—नन्विति। इष्टापत्तिरित्यत्राह—नहीति। क्वचिदपि। प्रयोगाभावोऽसाधुतया वा विषयाभावाद्वा स्यात् तिन्नन्ततया व्याकरणपरिग्रहाद्विषयस्यानुभवाच्च उभयथापि-प्रयोगाभावोऽसिद्ध इत्यर्थः।

नन्वेवमपीदं रजतमिति भ्रान्तिज्ञानस्यानुभवसिद्धस्यापलापस्तद्धेतोरिति न्यायेनोक्त इति विश्वापलापप्रसङ्गो न परिहृत इत्यत आह—**अयं भाव इति। तदतिरिक्तेति।**

नन्विदं रजततया जानामीत्यनुभवः। सच न ज्ञानद्वयं इदंज्ञाने रजतत्वस्य रजतस्मरणे च इदंपदार्थस्य प्रकारत्वविशेष्यत्वयोरभावादिति चेन्न। तस्यापि ज्ञानद्वयासंसर्गाग्रहात्, इदं पदार्थे रजततया ज्ञातासंसर्गाग्रहाद्वोपपत्तेर्नातिरिक्तं—ज्ञानमनुभवसिद्धमिति भावः। **अनादेशिकं**—असांप्रदायिकं स्वकपोलकल्पितमिति यावत्। **भ्रान्तिचिन्तायामिति**—भ्रान्तिव्यवहारस्य सिद्धेरेवोपपत्तिचिन्तायामित्यर्थः। **कथं चोदितमिति**—ख्यात्यन्तरवादिनाञ्च सुदूरमपि गत्वा अन्यथाख्यातिरवश्याश्रयणीयेति पूर्वं प्रक्रम्योक्ता चोदनेत्यर्थः। **सर्पं भूदलनाम्बुधारेति।**

नन्विदमयुक्तं ख्यात्यन्तरवादिनामप्यन्यथाऽवभासोऽवर्जनीय इत्युपक्रम्य अत्राऽप्यवर्जनीयत्वमन्यथाभानस्योक्तमिति भाति।

नचोक्तगत्या निर्वाहः। भान विषयकशङ्कायाश्शाब्दत्वोक्तौ प्रक्रमविरोध इति चेत्। सत्यमभ्युपम्यायं वादः प्रवृत्तः अनिर्वचनीयनिरासार्थः वस्तुतस्तु न तात्पर्यमित्यवधेयम्।

केचित्तु सर्पभूदलनेत्यादिनिर्वाहः सर्वधीयाथार्थ्यावलम्बनेन कृतः। "इति वेदविदां मत" मितिपक्षान्तरत्वोक्तेः। भाष्यकारस्य तु अन्यथाख्यातिरभिमतेत्याहुः। **भेदाग्रहनिबन्धनः**—तत्तद्विशेषणभेदाग्रहनिबन्धन इत्यर्थः। **तर्क इति। तत्फलस्य**—विशिष्टज्ञानफलभूत प्रवृत्तिसामर्थ्याच्छुक्तौ रजतत्वप्रकारकज्ञानाभावे रजतार्थिताजन्य प्रवृत्तिर्न स्यादित्यन्यथाख्यात्यापादनं यत्-तत् दृष्टान्तमात्रेणापपत्तेः, विशिष्टज्ञानकल्पने गौरवात् कल्पनायामपि तद्धेतोरेव प्रवृत्तिकल्पने लाघवाच्च दत्तोत्तरमित्यर्थः। **आहार्यत्वं**—आरोपितत्वं। आरोपश्चान्यथाख्यातिरिति भावः। **तज्जनकतयेति**—तद्धेतोरेवेति न्यायादिति भावः॥ १४॥

---

**अक्षरार्थः**—अन्यथाख्यातिमपह्नुवानानां भ्रान्तिशब्देनाधिष्ठानादिगोचरं भेदाग्रहसहकृतं भ्रान्तिजनकत्वेन पराभिमतं किंचित् ज्ञानमेव व्यपदिश्यत इत्याह—**योऽसाविति।** बोधः अन्यथाधीजनक इति योऽसौ जगे उच्यते स एव अस्माभिः भ्रान्तिशब्देनोच्यते। एवं सति बोधापलापः क्वचिदपि न भवेदित्याह —**नेत्थमिति।** ज्ञानं प्रत्यक्षसिद्धं स्वयं प्रकाशं चेति वदतामस्माकं क्वचिदपि बोधापलापः कर्तुं शक्य इति भावः। स च बोध अधिकरणादिगोचर एवेति निरूपितः। तर्हि भवदीयभाष्यकारैः कुत एवं न स्फुटमभिधीयते, प्रत्युत अख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन इति परिचोद्य

समाधानमनभिधायैव खलु गम्यत इत्यत्राह—यत्रेति । यत्र प्रत्यक्षसिद्धात् संस्थानादेरेव अधिकं - अतिरिक्तमपि जात्यादिकं निष्फलं–निष्प्रयोजनं कल्पयेयुः। तत्र सिद्धैरेव संप्रतिपन्नैरेव । अवयवसंस्थानविशेषादिभिरेव तत्तद्व्यवहृतिरिति हि स्थापितं भाष्यकारैरित्यर्थः। अयमेवार्थो भ्रान्तिचिन्तायां प्रदर्शितप्राय इति भावः। अन्यविशेषणमन्यविशेषणत्वेनेति परिचोदनस्य तु अयं सर्पः, इदं भूदलं, इयमम्बुधारा इति विशेष्यलिङ्गभाजां विशेषणानां उल्लेखात् सामानाधिकरण्याभिमानेन अन्यथाख्यातिरवर्जनीयेति अभिप्रायः । परिहारानुक्तिस्तु—तत्तद्भेदाग्रहनिबन्धनवाचकव्यवहार विशेषमात्रमिति स्वयमूहक्षमशिष्यशिक्षार्थेति ॥ १४ ॥

॥ इति अन्यथाख्यातिभङ्गप्रकारः ॥

---

एकाधारे विरुद्धाकृतियुगयुगपत्ख्यातिरन्योन्यबाध्या
डोलाविक्षेपकल्पा तदनियतिरियं धीक्रमे साक्षिणी नः।
तस्मात्तत्तद्विशेषस्मृतिसमसमयं छन्नतत्तद्विरोधः
ख्यातस्साधारणोऽर्थः परमिह विशये येन बुद्धचन्तरं वः ॥ १५ ॥

सर्वार्थ—अथ स्यात्–विरुद्धानियतकोटिद्वयगोचरं संशयात्मकं ज्ञानं सर्वेषां प्रसिद्धम्; तच्च वस्तुनि विकल्पस्य विरुद्धानियताकारत्वस्य चायोगात् अन्यथाख्यातिरूपमेव । तदनभ्युपगमे सन्दिग्धे न्यायप्रवृत्तिः विषयस्संशयश्चैवेत्यादिकमुच्छिद्येतेत्यत्राह—एकाधार इति ॥ अयं भावः—यदि स्थाणुत्वविशिष्टतया पुरोवर्ति भायात्, पुरुषत्वविशिष्टतया न भायादेव; तथाऽन्यत्र सर्वत्र दृष्टेः। तदयं प्रयोगः—विप्रतिपन्नं स्थाणुपुरुषभानं भिन्नाधा[र]रे स्थाणुत्वपुरुषत्वे बाधयति स्थाणुपुरुषभानत्वात् स्थाणुपुरुषाविति भानवत् । ततश्च पुरोवर्तिभानं स्थाणुपुरुषभानं च मिथो भिन्नमिति सिद्धम् । तस्मादूर्ध्वद्रव्यभानमनुभवः; स्थाणुपुरुषभानं तु स्मरणम् । न चैकस्मिन् पुरुषे स्मृत्यनुभवयोरेकदा संभवं मन्यसे; स्मर्यमाणाधारसंशये धर्मिस्फुरणस्य कोटिद्वयस्फुरणस्य च स्मृतित्वाविशेषेऽपि धर्मिस्फुरणस्य कोटिद्वयस्मृतिहेतुसंस्कारोद्बोधकतया पूर्वत्वमनिवार्यमिति । प्रकारान्तरेणापि धीक्रमं साधयति—डोलेति । संशयडोलाधिरूढो डोलायमानमानस इति रूपकोपमानाभ्यां क्रमेण विरुद्धयोगिसारूप्यं व्यज्यते । अनियतत्व व्यञ्जकश्च वाकारप्रयोगोऽन्यतरस्फुरणमितरोल्लेखवर्जितं स्वरसतो दर्शयति । न ह्यसाविह समुच्चयार्थः, तथा सत्यनियमानुल्लेखेन संशयरूपत्वाभावप्रसङ्गात्; वाकारश्चाविशेषात् प्रयुज्येत । नाप्युपमानार्थः, धर्मिगस्तत्तदन्यत्वानिश्चयेन तत्तदुपनेयत्वायोगात् । न च मिथः; अयमिति पुरोवर्तिनिर्देशेनाघटितत्वात्, अध्याहारवाक्यभेदयोरवर्जनीयत्वाच्च । अतोऽत्र विकल्पतः प्रवृत्तमिदमव्ययम्; तत्त्वे अतदयोगात् । ऊर्ध्वः

पदार्थः कश्चित् स्थाणुर्भवति, कश्चित्पुरुषो भवतीत्यूर्ध्वत्वस्य स्थाणुत्वपुरुषत्वाभ्यां द्वे विभज्य साहचर्यं व्यनक्ति। तदिहायमिति पुरोवर्तिमात्रमगृहीतविशेषमनुभूयते, स्थाणुपुरुषौ तु स्मर्येते इति विभागः। एतदेव निगमनव्याजेन स्पष्टयति –तस्मादिति। समसमयमित्यगृहीतक्रमयोरनुभवस्मृत्योर्निरन्तरभानाभिप्रायम्। अथवा पुरोवर्त्यनुभवजनितसंस्कारेण कोटिद्वयस्मृतिहेतुसंस्काराभ्यां च संभूय तैर्युगपदेकस्मृतिसंभवात्तदुल्लिख्यमानविषयत्रययुगपत्प्रकाशख्यापनार्थमेतत्। छन्नतत्तद्विरोध इति। एतद्भेदकधर्मानुल्लेखपरम्। साधारणः—साधारणाकारविशिष्ट इत्यर्थः। परं-पश्चात्, केवलमिति वा। एतावतैव संशयव्यवहार इति भावः। ईदृशस्य ज्ञानस्य संशयव्यवहारजनकत्वं न क्वचिद् दृष्टमित्यत्र लाधवं प्रतिबन्दि चाभिप्रेत्याह—येनेति। साधारणख्यातिपरामर्शोऽयम्। ईदृशबोधेन संशयरूपज्ञानोत्पत्तिरप्यन्यत्र न दृष्टा; व्यवहारविशेषस्तु त्वदिष्टतत्कारणेनैव सिध्येदिति भावः।

ऊहानध्यवसायौ च परोक्तौ संशयात्मकौ।
तदन्यत्वेऽपि निर्वाहस्समानन्यायतः स्थितः ॥ १५ ॥

---

आनन्द०—पुनरप्याक्षेपसङ्गतिमाह -अथेति। वस्तुनि विकल्पस्य कदाचित् स्थाणुः कदाचित्पुरुष इति विकल्पस्य। विरुद्धानियताकारवत्वस्य—युगपत् स्थाणुत्वपुरुषत्ववत्वस्य। तान्त्रिकव्यवहारविरोधमप्याह—तदनभ्युपगम इति सन्दिग्ध इति न्याय व्यवहारः। विषय इत्यादि मोमांसकव्यवहारः।

नन्वेकस्मिन्विरुद्धाकृति भानस्यान्योन्यबाध्यत्वं संशयत्वानुगुणमेव। नच तावता-अन्यथाख्यातिस्वाभाव इत्यत्राह –अयं भाव इति। यदोति–विरोधाभावप्रसङ्गादिति भावः।

ननु विरोधिज्ञानं न प्रतिबन्धकं, अपि तु विरोधिनिश्चयः। अन्यथा संशयानन्तरमनुमितिर्न स्यादिति चेत्। अत्राहुः। विरोधिप्रत्यक्षत्वेनैव प्रतिबन्धकत्वं ननु-निश्चयत्वेनापीति। गौरवात्।

नचानुमित्यभावापत्तिः। अख्यातिपक्षे तस्याः—पर्वते वह्न्यभावविषयकत्वाभावात्। परस्परसामग्रीत्वेन परस्पर प्रतिबन्धकत्वाच्च।

नच तर्ह्यनुमितेरप्युनुत्पादः विरोधिसामग्रीसत्वादिति वाच्यम्। परामर्शस्य विशेषदर्शनरूपत्वेनाधिकत्वात् विशेषादर्शनसहिततत्सामग्र्या वा प्रतिबन्धकत्वादिति।

अन्ये तु 'विरुद्धद्वयमेकत्र न भायादेव। तथात्वे संशयत्वमपि न स्यादिति" वक्ष्यमाणे तात्पर्यमित्याहुः। क्रमेण स्थाणुत्वपुरुषत्वगोचरभाने बाधवारणाय—विप्रतिपन्नमिति। स्थाणु पुरुष भानवदिति—स्थाणुपुरुषाविति समूहालम्बनवदित्यर्थः।

ततश्चेति—इदञ्च प्रायिकाभिप्रायेण। अगृहीतासंसर्गपुरोवर्ति स्थाणुत्वपुरुषत्वविषयकत्वस्यैकज्ञानत्वेऽपि विरोधाभावात्।

ननु धर्मिस्फुरणं कोटिस्मरणञ्चेति युगपदेव तत्र कथं भानद्वयमित्यत्राह—नचेति। स्मर्यमाणेति। तथाच–कालभेदान्न विरोध इति भावः। अनियतत्वशब्दार्थमाह—अन्यतरस्फुरणमिति। प्रकारान्तरेणापीति—पक्षान्तरमाश्रित्यापीत्यर्थः। "डोलावेगवदत्र स्फुरणक्रम इत्येक" इति न्यायपरिशुद्धिदर्शनात्क्रमेण विरुद्धार्थविषयकत्वे लोकोक्ति प्रमाणयति-संशयेत्यादिना। अनियतत्वं व्याप्यव्यापकभावरहिततया परस्परवियुक्ततया साधारणधर्मसाहचर्यमित्यर्थः। तेन विधिगतार्थमाह -अन्यतरेति-परस्परविरुद्धयोर्युगपज्ज्ञानायोगात्परस्परवर्जं परस्परं भासत इति युक्तं। अत एवैकस्मिन् युगपदन्योन्यप्रतिक्षेपस्य धीविरुद्धत्वादिति न्यायपरिशुद्धिः। अनियमानुल्लेखेन–समुच्चयोल्लेखेन। यद्वा विरोधानुल्लेखेनेत्यर्थः। धर्मिण इति-स्थाणुर्वेत्यस्य इदम्पदसार्थस्य स्थाण्वन्यत्वस्यानिश्चयेन भेदसापेक्षा। अन्यथा प्रमेयत्वायोगादित्यर्थः। न चेति—स्थाणुपुरुषयोर्निर्णीत भेदत्वादिति भावः। अयमितीति–अयं स्थाणुर्वा पुरुषो-वेत्यत्र स्थाणुरिवपुरुषः पुरुष इव स्थाणुरिति पर्यवसन्नत्वेनायमित्यस्यानन्वयादित्यर्थः। विकल्पतः।

अनियतत्वेनानियतव्यञ्जकत्वमुपसंहरति —तत्त्वे अतद्योगादिति—नियमतस्साहचर्याभावे स्थाणुर्वा भवितुमर्हति पुरुषो वेत्यनियतधीर्भवतीति भावः। आद्यं पक्षमुपसंहरति—तदिहेति। समसमयशब्दस्वारस्यमनुरुध्याह—अथवेति। पूर्वं धर्मिज्ञानं कोटिस्मरणमिति ज्ञानद्वयमुक्तं अधुनात्वेकज्ञानमिति। तथा च पूर्वापरविरोध इति न शङ्क्यं अस्यापि प्रकारान्तरत्वात्। अत एव प्रागुक्तं प्रायिकमित्युक्तम्। भेदक धर्मानुल्लेखेति—धर्मिणि संशयकोटिस्थाणुत्वादिविरुद्धं धर्माभानेऽस्तीत्यर्थः। ईदृशेति—ईदृशस्यैव संशयव्यवहारविषयतया तदतिरिक्तस्य तज्जन्यस्य बोधस्यादर्शनादित्यर्थः। व्यवहारेति–तस्य ज्ञानसाध्यतया स्वजनकज्ञानापेक्षायामीदृशस्यैव लाघवात्तज्जनकत्वं कल्प्यत इत्यर्थः। ऊहश्चानध्यवसायश्च ज्ञानान्तरं न संशय इति केचिन्मन्यन्ते। तान्निराकरोति–ऊहेति–ऊहश्च द्विविधः। तर्करूपस्तदन्य श्चेति। तदन्योऽपि द्विविधः। देवदत्त इव भातीति सम्भावनात्मकः। देवदत्त एव नूनमित्येवंरूपश्च। अनध्यवसायस्तु अयं वृक्षः किं नामक इत्यूहानध्यवसायौ संशयान्यत्वेन परोक्तावित्यर्थः। संशयात्मकाविति—तर्को देवदत्त एव नूनमित्यूहश्च संशयान्यौ निश्चयरूपत्वात्। सम्भावनात्मकस्तु उत्कटकोटिकस्संशय एव। अनध्यवसायोऽपि वाच्यतासंशयपर्यवसन्न इति संशय एवेत्यर्थः। अस्तु वा–संशयान्यत्वं न तावताऽन्यथाख्यातिसिद्धिः। इदं रजतमित्यादाविव भेदाग्रहादेव निर्वाहसम्भवादितिनान्यथाख्यातिसिद्धिरिति भावः।

मूलं—इह—संशये साधारणोऽर्थः ख्यातः विषयीकृतः। संशयलक्षणन्तु अनियत-व्यवहारजनकज्ञानजनकज्ञानत्वं, वाशब्दोपबन्धव्यवहारजनकज्ञानत्वं, एकस्मिन् धर्मिणि धर्मे वा विरुद्धनानाव्यवहारजनकज्ञानत्वं तद्योग्यज्ञानत्वमित्यादि प्रकारेण बोध्यम्। विस्तरस्तु ग्रन्थान्तरे द्रष्टव्यः ॥ १५ ॥

---

अक्षरार्थ०—अथ 'संदिग्धे न्यायः प्रवर्तते' 'विषयः संशयश्चैव' इत्यादिशास्त्रज्ञ व्यवहारानुरोधेन संशयात्मकस्यैकधर्मिविशेष्यकविरुद्धकोटिद्वयगोचरस्य ज्ञानस्याभ्युपगमावश्यंभावेनैकत्र विरुद्धकोटिद्वयस्यायोगादन्यथाख्यातिरवर्जनीयैवेत्यत्राह—एकाधार इति । एकस्मिन् धर्मिणीत्यर्थः। विरुद्धाकृतियुगयुगपत्ख्यातिः विरुद्धधर्म-द्वयविषयकैककालीनज्ञानं अन्योन्यबाध्यतया न भवतीत्यर्थः। तद्वत्ताज्ञानस्य तदभाव-वत्ताज्ञानस्य च परस्परं बाधकत्वादेककाले तदुभयविषयकं ज्ञानं न संभवतीति भावः। अतः क्रमिकज्ञानद्वयस्यैव तत्राश्रयणीयत्वात् नान्यथाख्यातिसिद्धिः। प्रकारान्तरेणापि धीक्रमं साधयति—डोलेति संशय डोलामधिरूढः डोलायमानमानस इत्यादि डोला-सारूप्यं संशयस्याभिव्यज्यते। सारूप्यं च क्रमेण विरुद्धयोगात्मकम्। डोलातावत् विक्षेपेण प्राच्यदेशेन प्रतीच्यदेशेन च क्रमेणैव युज्यते न तु युगपत्, तद्वत् अत्रापि क्रमेणैव विरुद्धविषयावगाहनमिति गम्यते। स्थाणुर्वा पुरुषो वेति वाकारेण कोटयो-रनियतत्वव्यञ्जनात् अन्यतरस्फुरणमितरोल्लेखवर्जितं स्वरसतोऽधिगम्यते इयमनियतिः धीक्रमे स्थाणुत्व पुरुषत्वधियोः क्रमेणोत्पत्तौ अस्माकं साक्षिणी भवती-त्यर्थः। अतोऽत्र विकल्पतः प्रवृत्तमिदमव्ययं स्थाणुत्वे पुरुषत्वायोगात् ऊर्ध्वः कश्चित् स्थाणुर्भवति कश्चित् पुरुषो भवतीति ऊर्ध्वत्वस्य स्थाणुत्व पुरुषत्वाभ्यां विभज्य साहचर्यं व्यनक्ति। तदिहायमिति पुरुवोंतिमात्रमगृहीतविशेषणमनुभूयते। स्थाणुपुरुषौ च स्मृतिविषयाविति विभागः। एतदेव निगमनव्याजेन स्पष्टयति—तस्मादिति। तस्मात् -धर्मिज्ञान-विरुद्धकोटिद्वयस्मृतीनां क्रमिकत्वेन भिन्नत्वादित्यर्थः। तत्तद्विशेष-स्मृति समसमयं —स्थाणुत्व, पुरुषत्व, कोटि विशेषस्मृतिसमकालम्। समसमयमिति अगृहीत क्रमयोरनुभवस्मृत्योर्निरन्तरभानाभिप्रायम्। धन्नतत्तद्विरोधः अगृहीतभेदक-धर्मः। ख्यातः—साधारणोऽर्थः। ऊर्ध्वत्वादि साधारणाकारविशिष्टतया ख्यातः परं भात एव पुरोवर्त्त्येव इह विषये-संशये। अर्थः—विषयः। ईदृशार्थविषयकज्ञानेनेव संशयव्यवहार इति भावः। ईदृशस्य ज्ञानस्य संशयव्यवहारजनकत्वं न क्वचित् दृष्ट-मित्यत्र लाघवमभिप्रेत्याह येनेति साधारणज्ञानेनेत्यर्थः। ईदृशज्ञानेन ज्ञानान्तरोत्पत्तिर-न्यत्र दृष्टा। व्यवहारविशेषस्तु त्वदिष्टसंशयकारणेनेव भवितुमर्हतीति भावः ॥ १५ ॥

॥ इति संशययाथार्थ्यप्रकारः ॥

**दुस्साधा बाधधीभ्यां सदसदितरता कुत्रचिद् व्याहतत्वात्**
**सत्त्वासत्त्वं च ताभ्यां कथमिव न भवेद्व्याहतेश्चेत् समं तत् ।**
**दृष्टत्वाद्वा विशेषः क्वचिदपि न हि नस्सर्वरूपेण सत्त्वं**
**नासत्ता चानुपाधिर्न च विमतिरिह ब्रह्मतुच्छातिरेके ॥ १६ ॥**

**सर्वार्थ०**—सयूथ्यमतभेदौ द्वौ भ्रमे किंचित्प्रदर्शितौ ।
अथ प्रतिमतस्थानां प्रलापः प्रतिरुध्यते ॥

तत्र तावत् कचोल्लुञ्छनमतोञ्छितामनिर्वचनीयख्यातिमधिक्षिपामः । तत्र यदाहुः - सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने । सदसद्भ्यामनिर्वाच्येत्यादि । अनिर्वाच्यत्वं नाम किं वाच्यादन्यत्वम्, वाच्यत्वराहित्यम्, निरुपाख्यत्वम्, सदसदन्यत्वम्, सत्त्वासत्त्वरहितत्वम्, ब्रह्मतुच्छविलक्षणत्वम्, अन्यद्वा किञ्चित् ? नाद्यः; सर्वलौकिकवैदिकव्यवहारविरोधात् स्ववचनादिविरोधाच्च । वाच्यानामेव मिथोऽन्यत्वेन तत्साधने सिद्धसाधनात् । सर्ववाच्यान्यत्वमप्येकैकस्मिन्विद्यत एव; न ह्येकैकस्यापि वाच्यस्य सर्ववाच्यत्वम् । सर्वेषां वाच्यान्योन्याभावानामाश्रयत्वमित्यप्ययुक्तम्; अनिर्वाच्यादिशब्दवाच्यस्य स्वान्योन्याभावाधारत्वायोगात् । अत एव न द्वितीयः; ब्रह्मणि तुच्छे च वाच्यत्वानभ्युपगमात्; तयोरपि प्रपञ्चतुल्यत्वस्वीकारप्रसक्तिश्च । न तृतीयः, निरुपाख्यशब्दस्य यौगिकत्वे दत्तोत्तरत्वात्, निरुपाख्योपाख्यया च त्वयैव विगीतस्योपादानात्, रूढिमात्रस्य परिभाषाप्रायत्वेन विगीतसत्यत्वानुपरोधित्वात्, खरशृङ्गाद्यविशेषसाधने दृष्टविरोधादपसिद्धान्ताच्च । एवं स्थिते चतुर्थादीन् दूषयति—**दुस्साधेति** ॥ बाधधीभ्यामित्युपलक्षणम् । नाशधीभ्यामित्यपि भाव्यम् । अयं भावः—सदसदन्यत्वं तावत्सतामेव सदन्तरव्यावृत्त्या तुच्छव्यावृत्त्या च संभवति । सर्वेभ्यस्सद्भ्योऽन्यत्वं च त्वया दुर्वचम्; अनेकसदनभ्युपगमात् । यद्यपि पारमार्थिकं सदेकमेव; तथाऽपि प्रातिभासिकानि व्यावहारिकाणि च बहूनि सन्तीति चेत्, किमतः ? अनिर्वचनीयत्वाभिमतस्य व्यावहारिकसतः स्वस्मादन्यत्वायोगेन सर्वसदन्योन्याभावकात्स्न्र्यासिद्धेः; व्यावहारिकराशिबहिर्भावाभ्युपगमे च पारमार्थिकप्रातिभासिकतुच्छकोटिप्रवेशप्रसङ्गेन स्वमतादिव्याघातात् । अत एव सत्त्वासत्त्वरहितत्वमपि निरस्तम्; व्यावहारिकसत्त्वराहित्यस्य सत्त्वमात्रराहित्यस्य वा साधने व्याघातात् । पारमार्थिकसत्त्वराहित्यविवक्षायां तु ब्रह्मतुच्छयोरपि तद्राहित्यात्तदविशेषप्रसङ्गः; नहि ब्रह्मण्यपि पारमार्थिकंसत्त्वं नाम धर्मस्त्वयेष्यते । तदपि तत्र प्रपञ्चवत् कल्पितमिति चेत्, अन्यत्रापि तस्य कल्पितत्वादविशेष एव । ब्रह्मणि च तस्य कल्पितत्वे कथं ब्रह्म परमार्थसत् ? तथात्वे वा विगीतमपि कथं न तथा ? एवं ब्रह्मतुच्छान्यत्वमपि दुस्साधम्; सत्यस्य तस्य असत्यवृत्तित्वव्याघातात् । तदसत्यत्वे तु सत्यासत्ययोस्तुच्छातुच्छयोश्च तादात्म्यापत्त्या व्याघातादेव । ब्रह्मणि तुच्छे च ब्रह्मतुच्छान्यत्वमसत्यं विद्यत इत्यविशेषश्च । यदप्यन्यत्किंचित् तदपि विगीते सत्यत्वं

सहेत न वा ? पूर्वत्र न विवादः; उत्तरत्र स्वयं सत्यमसत्यं वा ? आद्ये ब्रह्मान्यत्वानन्यत्वोभयसमुच्चयोभयप्रतिषेधविकल्पेनापसिद्धान्तसिद्धसाधनत्वव्याघातादयः। द्वितीये स्वसाध्यमसत्यं वदतस्ते न किंचिदन्यैर्दूषणं देयम्; तत्प्रदानफलस्य त्वदुक्त्यैव सिद्धत्वादिति। अथ प्रतिबन्द्यभिप्रायेण विपरिवर्तं प्रसञ्जयति—सत्त्वासत्त्वमिति। समाहारद्वन्द्वोऽयम्। चकारो जैनानुधावनप्रसक्तिं सूचयति। ख्यात्यन्यथानुपपत्त्या सत्त्वं बाधान्यथानुपपत्त्या-असत्त्वं किं न कल्प्यत इति भावः। प्रतिक्षेपार्थं कथंशब्दं प्रश्नार्थं मन्यमानस्य प्रत्युक्तिं शङ्कते—व्याहतेश्चेदिति। सत्त्वासत्त्वयोस्सितासितत्वन्यायेन मिथो विरोधान्नैकत्रैकदा तयोस्संभव इति भावः। हार्दमुद्गिरति—समं तदिति। तत् व्याहतिप्रयुक्तमभवनं त्वदुक्तेऽपि समानमित्यर्थः। अयं भावः—यदि सत्त्वमसत्त्वं च मिथो विरुद्धं मन्यसे तदा तदभावयोरपि तथात्वं नान्तरीयकम्। यद्यपि परस्पराभावव्याप्यमात्ररूपाणां शीतोष्णनीलपीतादीनां मिथो विरोधेऽप्युभयाभावः क्वचिन्न विरुध्यते, दृष्टस्य दुरपह्नवत्वात्; तथाऽप्युष्णत्वानुष्णत्वनीलत्वादीनामिव परस्पराभावात्मनोस्सत्त्वासत्त्वयोरेकत्रोभयसमुच्चयवदुभयव्यतिरेकोऽपि व्याहत एव; यत्र सत्त्वं तत्र नासत्त्वं यथा ब्रह्मणि, यत्रासत्त्वं तत्र न सत्त्वं यथा कूर्मरोमणीतिवत्। यत्र सत्त्वाभावस्तत्र नासत्त्वाभावः, यथा खपुष्पे; यत्र नासत्त्वाभावः तत्र न सत्त्वाभावः, यथा ब्रह्मण्येवेति नियमस्य निर्व्याघातत्वादिति। यदि समत्वं तर्हि त्वत्पक्षाय कुतस्तुष्यसि मत्पक्षाय किमिति कुप्यसीत्यशिक्षितप्रतिबन्दिशक्तेरनुयोगे सत्त्वासत्त्वसमुच्चयपक्षस्य प्रत्यक्षाद्यानुगुण्यमाह—दृष्टत्वादिति। अनयोस्सहभावः क्व दृष्ट इत्यत्र सर्वत्रेत्यभिप्रायेणाह—क्वचिदपीति। सर्वरूपेण सर्वप्रकारेण। कालतो देशतस्स्वभावतश्च तत्र-तत्र नियतं हि सत्त्वम्; अन्यथा सर्वनित्यत्वसर्वविभुत्वसर्वाद्वैतवादानां प्रसङ्गात्। असत्त्वमपि तथैव; अन्यथा सर्वशून्यत्वप्रसङ्गात्। एतावत् सदसत्त्वमविरोधादङ्गीकुर्मः; नान्यद्विरुद्धमिति चेत्, सदसद्व्यतिरेकमप्येवं यथादर्शनमविरुद्धमेवाङ्गीकुरुष्व; नतु विरुद्धम्। सदसद्व्यतिरेकवादः शास्त्रेषु दृश्यत इति चेत्, तथा सदसत्त्ववादोऽपि तत्रतत्र दृश्यत एव। अन्यविषयोऽयमन्यपरश्चेति चेत्, त्वत्प्रदर्शितोऽपि तथैवेति। सदसद्विलक्षणशब्देन ब्रह्मतुच्छान्यत्वविवक्षायां दूषणान्तरमाह—न चेति। इह—प्रपञ्चे। ब्रह्मतुच्छान्यत्वस्यास्मदभिमतत्वात्तत्साधने सिद्धसाध्यत्वप्रसक्तिरिति भावः। एतेन

सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधने।
सदसद्भ्यामनिर्वाच्याविद्याविद्येस्सह भ्रमः ॥

इति डिम्भजृम्भितं प्रत्यूढम्। यदपि तत्तन्निर्वचनखण्डनया सर्वमनिर्वाच्यमिति; तदप्यनिर्वचनीयनिर्वचनखण्डनया सर्वं निर्वचनीयं भवेदिति प्रतिवक्तव्यम्। निर्वचनीयत्वानिर्वचनीयत्वखण्डनयाऽपि प्रपञ्चस्यानिर्वचनीयत्वं सिध्येदिति चेत्; ब्रह्मतुच्छयोरपि तत्खण्डनया किं तन्न सिध्येत्? सिध्यतु, न ततः प्रस्तुतबाध इति चेन्न; तृतीयसौगतसीमातिलङ्घनेन तुर्यसौगतगङ्गाप्रवेशप्रसङ्गात्।

किंच निर्वचनीयत्वखण्डनोक्त्यनिरुक्तितः ।
विश्वनिर्वचनीयत्वमखण्डितमपेक्ष्यताम् ॥

एवं त्वदभिमतानिर्वचनीयासम्भवात् न तत्ख्यातिसाधने यतितव्यम् ॥ १६ ॥

---

आनन्द०-अवसरसङ्गतिरित्यभिप्रायेणाह—सयूथ्येति । मतभेदौ-अख्यातिसंवलित यथार्थख्यातिरित्येकं मतं अन्यथाख्यातिरित्यपरं । कचोल्लुञ्छनः—जैनः । उञ्छिताः-भिक्षिताः । सच्चेन्न बाध्येत असच्चेन्न प्रतीयेतेति ख्यातिबाधान्यथानुपपत्त्या अनिर्वचनीयसिद्धिमनुवदति-यदत्रेति—शुक्तिरूप्यस्य सत्त्वे ब्रह्मणीव तत्र भ्रान्तिः बाधश्च न स्यातामित्यर्थः । अविद्याचाविद्याश्चाविद्या तद्विकारास्ते भ्रम इत्यर्थः । निरुपाख्यत्वमाख्यारहितत्वं प्रतीत्यनर्हत्वं निस्वरूपत्वं वेति केचित् । सर्वेति—शुक्तौ रजतमितिव्यवहारस्य सर्वलोकसिद्धत्वादिति भावः । स्ववचनेति-वाच्यादन्यदिति व्यवहाराद्व्याघात इत्यर्थः ।

किञ्च वाच्यादन्यदित्यत्र यत्किञ्चिद्वाच्यादन्यत्वं विवक्षितं । उत सर्ववाच्यादन्यत्वं ? यद्वा सर्वेषां वाच्यान्योन्याभावानामाश्रयत्वमिति विकल्प्य प्रथमं दूषयति—वाच्यानामेवेति । द्वितीयं दूषयति-सर्वेति-स्वतादात्म्यसत्त्वेऽपि एकत्र सर्वतादात्म्याभावादिति भावः । तृतीयमनुवदति-सर्वेषामिति । बाधमाह-अनिर्वाच्येति । अत एवेति-बाधितत्वादेवेत्यर्थः । ब्रह्मणीति-ब्रह्मणो निर्धर्मकत्वात्तुच्छस्य निस्वरूपत्वाच्च न वाच्यस्य धर्मत्वमिति भावः । एवञ्च प्रपञ्चस्य सत्यत्वं तुच्छत्वं वा स्यादिति ध्येयम् । दत्तोत्तरत्वादिति-बाधितत्वादित्यर्थः । तदेवाह—निरुपाख्येति । परिभाषा-संज्ञा । तथा च सत्यस्यैव प्रपञ्चस्य निरुपाख्य इति संज्ञामात्रमित्यर्थः । अपसिद्धान्ताच्चेति । अनिर्वचनीयत्वेऽपीति —स्वरूपत्वानङ्गीकारादिति भावः नाशधीभ्यामिति-अप्रतीयमानत्वप्रतीयमानत्वाभ्यामित्यर्थः । ध्वंसपरत्वे तन्मात्रेणैवोपपत्तेः प्रतीयमानत्वस्य व्यर्थत्वात् ।

ननु ख्यातिबाधयोरुभयव्यावृत्ततया-प्रत्येकं तदन्यत्वसाधने कथं दुस्साधत्वं । व्यापकनिवृत्या व्याप्यनिवृत्यावश्यकत्वादित्यत आह-अयं भाव इति पारमार्थिकेति । एतेन पारमार्थिकसत्वावच्छिन्नान्योन्याभावस्साध्य इत्यपि निरस्तम् ब्रह्मणोऽपि तत्प्रसङ्गादिति । ब्रह्म ब्रह्मणिचेति-पारमार्थिकसत्वाश्रयस्यैव परमार्थसत्वादिति भावः । अपरमार्थसत्वाश्रयस्यापि पारमार्थिकत्वे प्रपञ्चस्यापि पारमार्थिकत्वंस्यादित्याह—तथात्वे वेति । अन्यत्वं किं सत्यमसत्यं वा । आद्य आह—सत्यस्येति । द्वितीय आह—तदसत्यत्व इति ब्रह्मान्यत्वासत्यत्वे ब्रह्मप्रपञ्चतादात्म्यं । तुच्छादन्यत्वस्यासत्यत्वे तुच्छत्वं स्यादित्यर्थः । चरमं दूषयति—यदपीति । पूर्वत्रेति—सत्यत्वाविरोधिनो रूपादेर्धर्मस्याङ्गीकारादिति भावः । सत्यस्य ब्रह्मान्यत्वे अद्वैतभङ्गेनापसिद्धान्तः ।

अनन्यत्वे प्रपञ्चे तत्संबन्धसाधने ब्रह्मसम्बन्धस्याङ्गीकारात् सिद्धसाधनम्। उभयसमुच्चये ब्रह्मणा भेदाभेदाङ्गीकारे भेदाभेदः भावाभावाङ्गीकारे च व्याघात इत्यर्थः। आदिशब्देन जैनपक्षस्वीकारप्रसङ्गेन प्रपञ्चस्यापि सत्यासत्यात्मकत्वादिप्रसङ्ग इत्यादिसङ्ग्रहः। तत्प्रदानफलस्य—परपक्षासिद्धेरिति भावः। चकार इति—विरुद्धसमुच्चयाङ्गीकारादिति भावः। ख्यात्यन्यथेति—व्याप्तेस्तुल्यत्वादिति भावः। प्रतिक्षेपार्थमिति कथं न भवेत् विरुद्धयोस्समावेशस्यायुक्तत्वात्। तदन्यत्वमिव सदसद्भिन्नत्वमप्युक्तंप्रतिक्षेपार्थत्वमिति भावः।

ननूक्तिमात्रेण कथं साम्यं। सत्वासत्वयोर्भावाभावरूपतया विरोधोऽस्ति तदुभयाभावस्यातथात्वात्कथं विरोध इत्यत्राह—अयं भाव इति। तथापीति—तथा च परस्पराभावात्मकयोरप्यभावस्य परस्पररूपतया विरोधो दुष्परिहर इति भावः। सद्भिन्नत्वमसत्वं असद्भिन्नत्वंसत्वमित्यङ्गीकारेऽपि सदसद्भिन्नत्वं विरुद्धमेवेत्याह—यत्र सत्वमिति। सद्भेदस्य सद्भिन्ने स्वावच्छेदकेनासत्वेन विरोधादित्यर्थः। अशिक्षितेति—प्रतिबन्द्याः—प्रतिवादिपक्षप्रतिक्षेपकत्वाभावादिति भावः। अन्यथेति—ब्रह्मणस्सर्वप्रकारेण सत्वाङ्गीकारेण घटाद्यात्मनापि सत्वेन सर्वाद्वैतं घटादेस्सर्वदेशव्यापित्वं सर्वकालवृत्तित्वेन नित्यत्वञ्च स्यादित्यर्थः। असत्वमपीति। तथैवेति—देशकालादिपरिमित्यर्थः अन्यथेति—ब्रह्मणोऽपि अजडात्मना सत्वात्सर्वप्रकारेणाप्यसत्वाङ्गीकारे स्वरूपेणाप्यसत्वप्रसङ्गेन सर्वशून्यता स्यादित्यर्थः। शङ्कते—एतावदिति सदसद्व्यतिरेकमपीति—देशकालादिपरिमित्यर्थः।

सदसद्व्यतिरेकवाद इति—"नासदासीन्नो सदासीत्" "न सन्नचासन् न सत्तन्नासदुच्यत" इत्यादि शास्त्रमित्यर्थः। तथेति—नित्यं सदसदात्मकमित्यादीत्यर्थः। व्याघातादीनां साध्यवाक्यान्तर्गतत्वे न तदा दूषणत्वं तदनन्तर्गतत्वात्सिद्धसाधनादेराह—दूषणान्तरमिति। खण्डनयाऽपि प्रपञ्चस्यानिर्वचनीयत्वं सिद्ध्येदिति—

प्रपञ्चानिर्वचनीयत्वस्याप्रत्यूहत्वादित्यर्थः। तृतीयसौगतः—योगाचारः। तुरीयबौद्धस्तु सर्वशून्यवादो माध्यमिकः। निर्वचनीयत्वविरोधाभावान्निर्वचनीयत्वं सिद्ध्यतीत्याह—किञ्चेति। अनिर्वचनीयत्वखण्डनस्य प्रकृते सङ्गतिमाह—एवमिति—अनिर्वनीयत्वविषयिणो ख्यातिरनिर्वचनीयख्यातिरिति तस्यैवाभावे तदसिद्धिरितिभावः।

"नासत्ताचानुपाधिरिति" मूलं—असत्वमपि निरुपाधिकमनवच्छिन्नं न सम्भवतीत्यर्थः।

ननु पूर्वसरे प्रपञ्चमिथ्यात्वखण्डनस्य कृतत्वान्मिथ्यात्वस्यैवानिर्वचनोयत्वात्तेनैवानिर्वचनीयख्यातिभङ्गस्य सिद्धत्वादिह तत्खण्डनं किमर्थमिति चेत्। सत्यं। पूर्वं दृश्यत्वादिहेतुनिरासमुखेन निरासः कृतः। अत्र तु ख्यातिबाधान्यथानुपपत्तिमुखेन निरास इति न दोषः।

पूर्वोक्तस्मरणपूर्वकमनिर्वचनीयख्यातिनिरसनमित्यन्ये ॥१६॥

---

**अक्षरार्थ०** -अथ भ्रमस्थलेऽनिर्वचनीयख्यातिवादिनां मतं निरस्यति—**दुस्साधेति** तत्रानिर्वचनीयत्वं सदसदन्यत्वं। बाधदर्शनेन सदन्यत्वं ख्यातिदर्शनेनासदन्यत्वं च वदन्ति। तादृशं सदसदन्यत्वं कुत्रचित् साधयितुमशक्यमित्यर्थः। कुत इत्यत्राह **व्याहतवादिति**। सदसदन्यत्वमित्यत्र यत्किंचित्सदसदन्यत्ववचने तादृशब्रह्मतुच्छान्यत्वेन प्रपञ्चे सिद्धसाधनप्रसङ्गात्। सत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाव असत्त्वरूप सामान्यधर्मावच्छिन्न प्रतियोगिताकान्योन्याभावोभयविवक्षायां सद्भिन्नेऽसद्भिन्नत्वासंभवात् व्याघातादित्यर्थः। अथ प्रतिबन्द्यभिप्रायेण विपरिवर्तं प्रसञ्जयति—**सत्त्वासत्त्वं चेति**। समाहारद्वन्द्वोऽयम्। चकारेण जैनानुधावनं सूच्यते। **ताभ्यामिति** बाधधोभ्यामित्यर्थः। ख्यात्यन्यथाऽनुपपत्त्या सत्त्वं, बाधान्यथानुपपत्त्या चासत्वं च किं न भवेदिति भावः। उक्तप्रसङ्गस्य परिहारं शङ्कते **व्याहतेश्चेदिति** सत्त्वासत्त्वयोरुष्णत्वानुष्णत्वयोरिव मिथो विराधात् नैकत्रैकदासंभव इति भावः। **समं तदिति**। व्याहृतिप्रयुक्तमभवनं सदसद्भिन्नेऽपि समानमित्यर्थः। सत्त्वमसत्त्वं च यथा मिथो विरुद्धं, तथा तदभावावपि मिथो विरुद्धौ। परस्पराभावात्मनो रेकत्रोभयसमुच्चयवत् उभयव्यतिरेकोऽपि व्याहत एवेति भावः। व्याघातस्य समानत्वे अस्मत्पक्षात् युष्मत्पक्षस्य को विशेषः इत्यत्राह—**दृष्टत्वादिति** सत्त्वासत्त्सयोस्सहभावः सर्वत्र दृश्यते न तु भवदुक्तसदसदितरत्वयोस्सहभावः क्वचिदपि दृश्यत इति भवत्पक्षापेक्षया अस्मत्पक्षे विशेषोऽप्यस्तोति भावः। सत्त्वासत्त्वयोः सहभावः कुत्र दृष्ट इत्यत्राह—**क्वचिदपीति**। कुत्रापोत्यर्थः। **हि** शब्दो हेतौ। **नः**—अस्माकं। **सर्वरूपेण**—सर्वप्रकारेण—कस्यापि सत्त्वं नास्तोत्यर्थः। **हि**—यतः कालतो देशतः स्वभावतश्चनियतमेव हि सतः सत्त्वं अभ्युपगम्यते। अन्यथा सर्वनित्यत्व—सर्वविभुत्वादिप्रसङ्गात् असत्वमपि तथैवेत्याह—**नासत्ता चेति**। अन्यथा सर्वशून्यत्व प्रसङ्गात् ईदृशं सदसत्त्व मविरोधादङ्गीकुर्मः। **नान्यद्विरुद्धमिति**। अस्मत्पक्षे व्याहृतिर्नास्तीत्यपि वक्तुं शक्यमिति भावः। ब्रह्मतुच्छान्यत्वमेव अनिर्वचनीयत्वमित्युक्तौ दूषणान्तरमाह **न चेति**। **इह** प्रपञ्चे। **विमतिः**—विवादः। प्रपञ्चस्य ब्रह्मतुच्छान्यत्वेन विवादाभावात् तत्साधने सिद्धसाधनमेवेति भावः ॥ १६ ॥ **इत्यनिर्वचनीयख्यातिभङ्गः** ॥

रूप्यं जातं तदा चेन्न रजतमिति धीरप्रमा स्यादमुष्मिन्
कार्यासामर्थ्यमात्रान्न तदिति कथनं कल्पतेऽतिप्रसक्त्यै ।
शुक्तौ चैतत्तदात्वे कथमिव जनयेद् दुर्घटाऽनाद्यविद्या
नाक्षादिस्त्वर्थहेतुर्न च रजतमतिस्सा हि तेनैव जन्या ॥ १७ ॥

सर्वार्थः—यद्यपि शुक्तिप्रदेशनियताविद्याशकलशबलितादुब्रह्मणः किमप्यनिर्वचनीयं रजतं तदानीमुत्पन्नम् इदं रजतमिति भातीति भावयन्ति, तद्दूषयति—रूप्यमिति ॥ यदि सामग्रीविशेषात्तत्रोत्पन्नं रजतजातीयं रजतमिति गृह्येत तदाऽऽपणस्थरजतधीवद-मुष्मिन्नपि रजतधीरप्रमा न स्यात् । अपि चामुष्मिन् नेदं रजतमिति बाधकधीरप्रमा स्यात् । तथा च बाधायोगादबाधितस्य सत्यत्वसिद्धिः । रजते च रजतान्यत्वमुल्लिखन्ती बुद्धिरन्यथाख्यातिस्स्यात् । अथ नेदं रजतमिति बुद्धिश्शुक्तिविषयेत्युच्यते, तदा [अनया] पूर्वसिद्धस्य रजतस्य कथं बाधः? नहि रजतसंसृष्टस्यापणादेररजतत्वबुद्ध्या रजतं बाध्येत । अन्यथा तत्र रजते नेयं शुक्तिरिति बुद्ध्या शुक्तिरेव किं न बाध्येत ? ननु नेदं रजतमिति बुद्धिरध्यासाधिष्ठानं ब्रह्म रजतान्यत्वेन गृह्णती तत्र तत्र रजतात्मतां बाधतां, तर्हि र-जतस्याधिष्ठानस्य रजतात्मताबुद्धिरन्यथाख्यातिरेवेति मुधा तत्प्रद्वेषः । अधिष्ठानरजत-योर्भेदबुद्ध्या च न रजतबाधः, किन्तु तदुभयनिरूपितं तादात्म्यमेव बाध्येत । तथाऽ-प्यधिष्ठानस्य निषिध्यमानात्यन्ताभावाधिकरणत्वग्राहिणी निषेधबुद्धिस्तत्रत्यं रजत-त्वमेव बाधत इति चेद् बाध्यतामाधिष्ठाने तत्र रजतत्वम्; किमायातं तत्रोत्पन्नस्य तन्निष्ठरजतत्वस्य, निषेधाभावात् न हि रजतत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगित्व-ग्रहणेन सर्वत्र मिथ्या भवति । अपि चास्य रजतत्वस्य स्वाधिकरणतया प्रतिपन्ने निषेधाद्बाधः ? उत यत्किञ्चिन्निष्ठात्यन्ताभावबोधात् ? आद्येऽन्यथाख्यातिरनिवार्या, तदनधिकरणे तदधिकरणत्वबोधात् । द्वितीये विगीतस्य को विशेषः; सर्वस्य सर्वनिष्ठत्वाभावात् ?

जाते च सदसद्बाह्ये सदसद्धीः क्रमात्सती ।
स्वच्छायामिव दुर्लङ्घ्यामन्यथाख्यातिमावहेत् ॥

अन्यथाख्यातिरस्तीति परबुद्धिं निषेधता ।
इष्टा तदन्यथाख्यातिरन्यथा किं निषिध्यते ॥

अथ स्यात्—उत्पन्नमेव रजतं रजतकार्यानर्हतया नेदं रजतमिति निषिध्यते, अगोप्ता राजा न राजेति न्यायादिति; तत्राह—कार्येति । अयमाशयः—नहि किंचि-ज्जातीयं कुतश्चिद्वैगुण्यात्तज्जातीयकार्यानर्हत्वेनातज्जातीयमनृतं वा भवति, अति-प्रसङ्गात् । अतस्तज्जातीयेऽप्यत्रातज्जातीयत्वोपचारमात्रमिति न बाधसद्भावः । ननूपचारोऽपि बाधाविनाभूतः; सत्यम्; न तत्रोपचर्यमाणस्वभावबाधः, किं तूपचार-शब्दमुख्यार्थबाधमात्रम् । तथाऽप्यरजतशब्दमुख्यार्थबाधे रजतं प्राणित्येवेति । एवमप्यत्र

योज्यम्—कार्यासामर्थ्ये सत्यपि तदिति कथनं नातिप्रसक्त्यै कल्पत इति। ननु समर्थासमर्थस्वभावयोरैकजात्यासंभवादतज्जातीये कथं तदिति कथनम्? मैवम्; अवान्तरवैजात्यकल्पनेऽपि तज्जातीयत्वानपायात्। अन्यथा कथं तवात्र रजतव्यवहारः? तज्जातीयत्वव्यामोहादिति चेत्; आश्रितोऽसि तर्हि विपरीतख्यातिम्। सारूप्यादिति चेन्न; सरूपमिति बुद्धौ सारूप्यतिरस्कारेण किंचिदिति बुद्धौ चोपादित्साद्ययोगात्; सरूपे तद्बुद्धिद्वारा सारूप्यस्य प्रवर्तकत्वे दत्तोत्तरत्वात्। अतोऽवान्तरवैषम्येऽपि रजतजातीयमेवोत्पन्नं वक्तव्यम्। न च तस्य बाधस्सुवचः। अबाधे कथं पश्चान्नानुवर्तत इति चेत्, स्वाभ्युपगतात् प्रणाशादेवेति पश्य। नाशोऽपि बाध एवेति चेन्न; तस्य प्रतिपन्नोपाधौ निषेधरूपत्वाभावात्। बाधाभावे नाशोऽपि न स्यादिति चेन्न; जातस्य हि ध्रुवो मृत्युरिति न्यायेन जातत्वादेव नाशोपपत्तेः; त्वया चानिर्वचनीयं रजतं जातमित्येव समर्थनादिति। हेतुनिरूपणासंभवादप्यनिर्वचनीयरजतोत्पत्तिं दूषयति—शुक्ताविति। कथमिव—न कथचित्। अयं भावः—न तावदहेतुकमिदं रजतं जायेत, लोकायतमतप्रसङ्गात्। हेतुश्च न तत्स्वरूपम्, व्याघातात्। न च तत्प्रागभावमात्रम्; तस्यानादित्वेन प्रागपि तज्जनकत्वप्रसङ्गात्। अत एव न तत्सहकृतं तन्निरपेक्षं वा स्वरूपानाद्यविद्यामात्रम्। अविद्यासन्तानपक्षे च सन्तानिनः कस्यचिद्रजतकारणत्वं किं दृष्टत्वादङ्गीक्रियते? कुतश्चित् कल्प्यते वा? नाद्यः, असिद्धेः। न द्वितीयः, कारणसंभवात्कार्यक्लृप्तिस्तया च तत्क्लृप्तिरिति मिथस्संश्रयात्। न ह्यत्र रजतमुत्पन्नमिति दृष्टम्; तद्बुद्धेरन्यथासिद्धतया न तथाऽपि तदुत्पत्तिक्लृप्तिः। इदं सर्वमसृजतेति श्रुत्यसंकोचादिदङ्कारविषयस्य शुक्तिरजतस्यापि सृष्टिरवगम्यत इति चेन्न; प्रमाणसिद्धविषयत्वात्तत्र यदिदं किं चेत्यनुवादस्य। ननु सत्यं चानृतं चेत्यनन्तरमेवाप्रामाणिकमप्युपात्तमिति चेन्न; अनृतशब्दस्यात्र विकारिवस्त्वन्तरपरत्वात्। अन्यथा सत्यमभवदित्यादिना समन्वयवैघट्यादिति। दुर्घटेत्यनेन तत्स्वरूपाद्यसंभवं व्यञ्जयति। स्वयं दुर्घटाऽपि सती यदि दुर्निरूपं किञ्चित्कार्यं जनयेत्, अन्यथाख्यातिमपि तथाभूतां किं न जनयेत्? वरं च भ्रान्तितद्विषयजननादुभयसम्मताप्रमाणख्यातिमात्रजननमिति च गाव्यम्। अनाद्यविद्यायास्तदातनकार्यजनकत्वं सहकारिवशात्स्यादित्यत्र संभावितान् सहकारिणो दूषयति—नाक्षादिरिति। आदिशब्देन तद्दोषग्रहणम्। इन्द्रियाणि तावन्नार्थमुत्पादयन्ति; क्वचिदप्यदृष्टेः। तद्दोषाश्च तज्जन्यधीवैपरीत्यापादनेन चरितार्था नार्थविशेषजनकत्वेन कल्पनीया इति भावः। अस्तु रजतबुद्धेरेव सहकारित्वमित्यत्राह—नचेति। किमत्र पूर्वानुभूतरजतस्मृतिरेव रजतजनकतया शङ्क्यते, उत स्वविषयेण सहाध्यस्यमाना, आहोस्वित् आपणस्थरजतबुद्धिवद्विषयजन्येति विकल्पे प्रथमं दूषयति—न चेति। नहि धीः स्वविषयसजातीयमुत्पादयन्ती क्वचिद्दृष्टा। अन्वयव्यतिरेकमहिम्ना त्वन्यथाख्यातिजनकत्वमागोबालं प्रसिद्धमिति भावः। द्वितीयं दूषयति—सेति। अत्र तेनेति सहयुक्ते तृतीया। सविषयवृत्त्यध्यासवादिना त्वया

विषयेण सह जायमाना या बुद्धिरिष्यते सा चेद्विषयं जनयेत्, विपरिवर्तः किं न स्यादिति भावः। तृतीयदूषणेऽप्येतदेव वाक्यमावर्तनीयम्। अत्र तेनेति कर्तरि तृतीया। तज्जन्यायास्तदुत्पादकत्वे ह्यन्योन्याश्रयः प्रसज्येत। अथ स्यात्—अस्ति सर्वसाक्षिभूतं किमपि चैतन्यम्, तदेव रजतधीरूपेणापि विवर्तते, तत्सहकृताविद्यया कालविशेषनियतरजतोत्पत्तिरिति। अत्राप्येतदेव पठितव्यम्। तत्र ते न इति पदद्वयम्। या साक्षित्वेन तवाभिमता संवित् साऽनादित्वात् नैव जन्या, अतस्साऽपि तत्कालनियतरजतं जनयितुं नार्हति; सहकार्यन्तरस्य [च] अन्वयव्यतिरेकादिमतः कस्यचिददृष्टेरिति भावः॥ १७॥

---

आनन्द०—प्रसङ्गादाह—**यदपीति**। **तदानीमिति** विद्यमानरजतविषयकत्वाविशेषादिति भावः। **रजते चेति**—। यद्यप्यप्रामाण्यमेवान्यथाख्यातिः तथाऽप्यापाद्यभेदान्न पौनरुक्त्यं।

केचित्तु न स्यादिति पाठं प्रकल्प्य अन्यथेत्यध्याहृत्य रजतस्य सत्वेऽपि बाधस्य प्रमात्वे सत्यरजतस्थलेऽपि यथार्थता स्यादित्यर्थं इत्याहुः।

**अथेति** तथा च प्रमात्वस्य न विरोध इति भावः। तथा सति भिन्नविषयत्वाद् बाधो न स्यादित्याह—**तदेति**। **अन्यथेति**—भिन्नविषयत्वाविशेषादिति भावः। **रजतात्मता** रजतात्मताबुद्धिः। परिहरति **तर्हीति** तथासत्यनिर्वचनीयख्यातिर्न स्यादित्यर्थः।

नन्वधिष्ठाने रजततादात्म्ये निषेध्ये तदात्मतया प्रतिपन्नं रजतमेव निषिद्धं स्यादित्यत्राह—**अधिष्ठानेति**। तथापि पृथग्भूतस्य बाधाभावादिति भावः। **शङ्कते**—**अथापीति**—रजतत्वस्य बाधितत्वे रजतं बाधितमिति भावः। तत्र किमधिष्ठाने रजतत्वं बाध्यते ? उत रजत इति—विकल्प्याद्य आह **बाध्यतामधिष्ठान इति**—द्वितीय आह—**तन्निष्ठेति**। ननु रजतस्यैव बाधोऽस्त्वित्यत्राह—**अपि चेति**। **द्वितीय इति** ··शुक्तिरजतस्य आपणस्थरजतापेक्षया विशेषो न स्यादित्यर्थः।

किञ्चानिर्वचनीयवस्त्वङ्गीकारेऽपि तस्मिन् पूर्वमस्तीति सत्वबुद्धिः अनन्तरन्नास्तीत्यसत्व प्रकारिका बुद्धिरनुभवसिद्धा। साप्याधिकरण सत्वासत्वग्राहित्वादन्यथाख्यातिरित्याह—**जाते चेति** नहि तत्रानिर्वचनीयसत्वासत्वे उत्पद्येते तत्रापि तथात्वेऽनवस्थाप्रसङ्गादिति भावः।

किञ्चान्यथाख्यातिविषयिणी या बुद्धिरन्यथाख्यातिरस्तीति तस्याः अनन्यथाख्यातौ अन्यथाख्यातित्वविषयतयाऽन्यथाख्यातिस्वीकार इत्याह **अन्यथेति**—नच तत्राप्यनिर्वचनीयोत्पत्तिः। तथाऽपि तस्याः बुद्धेरुत्पन्नायाः अन्यथाख्यातित्वन्दुर्वारमिति भावः। **अन्यथा किं निषिद्ध्यत इति**—तादृशपरबुद्ध्यनभ्युपगमे निषेध्याप्रसिद्धिरिति भावः।

केचित्तु सिद्ध्यसिद्धिविरोधान्निषेधायोगादन्यथाख्यातिसिद्धिरित्यर्थ इत्याहुः ।

**अगोप्तेति**—अराजा सः यो न रक्षतीति प्रयोगदर्शनादिति भावः ।

ननु रजतकार्यजनकत्वाभावादेव घटादौ तन्निषेध इति नातिप्रसङ्ग इतिचेत् तत्राह—**अयं भाव इति** । **अतज्जातीयेति**—तथा सति तज्जातोयताबुद्धिः—पूर्वं जाताऽन्यथाख्यातिस्स्यादिति भावः । **अतिप्रसङ्गादिति**—मणिसमवधानकाले वह्नेरवह्नित्वमिथ्यात्वयोः प्रसङ्गादिति भावः । **प्राणित्येव**--जीवत्येवेत्यर्थः । नञः क्रियान्वयस्वारस्यादाह--**एवमप्यत्रेति** **नन्विति**—सामर्थ्यतदभावयोरेकावच्छेदेन विरोधात्तदभावावच्छेदकतया रजतत्वाभावस्सिद्ध्यतीति भावः ।

नन्ववान्तरवैजात्यस्यावश्यकत्वे सामान्यजातौ मानाभाव इत्यत्राह—**अन्यथेति** । ननु सारूप्यमेव तद्बुद्धिविषयः स तत्रास्त्येवेति शङ्कते--**सारूप्यादिति** । इष्टतावच्छेदक वैशिष्ट्यागोचरत्वात्सारूप्यबुद्ध्या प्रवृत्तिर्न स्यादित्याह—**नेति** । **स्वरूप इति**-सारूप्य ज्ञानाद्रजतस्मृतिः ततः स्वरूपे प्रवृत्तिरित्यर्थः । **दत्तोत्तरत्वादिति** ।

ननु तज्जन्यरजतस्मृतिः आपणस्थरजतगोचरा नान्यथाख्यातिरिति कथं दत्तोत्तरत्वमिति चेदत्राह । पुरोवृत्तिगोचरप्रवृत्तेः पुरोवृत्तिगोचर तादृशज्ञानसाध्यतया ततः प्रवृत्यभावादन्यथाख्यातिप्रसङ्ग एव । तदनभ्युपगमे स्वख्याति पक्ष एव स्यादित्यनिर्वचनीयख्यातिर्दत्तजलाञ्जलिस्स्यादिति । **बाधः**--अत्यन्ताभावः । **स्वाभ्युपगतादिति**—अनुपलब्ध्या ध्वंसरूपत्वाभ्युपगमादिति भावः । **तस्येति** ध्वंसरूपतयाऽत्यन्ताभावरूपत्वादिति भावः । अप्रयोजकत्वाभिप्रायेणाह--**न जातस्य हीति**--तदधिकरणे निषेधाभावेऽपि घटादेर्नाशदर्शनादिति भावः । जातत्वमेव नास्तीत्यत्राह—**त्वया हीति** साधकाऽभावात् बाधकसत्वाच्चानिर्वचनीयं नास्तीत्युक्तं इदानीं कारणासम्भवरूपञ्चाधिकमाह—**हेत्विति** । ननु कार्यान्यथाऽनुपपत्या हेतुसिद्धिरित्यत्राह—**अयं भाव इति**—न तत्स्वरूपं न हेतुरित्यर्थः । **व्याघातादिति**--स्वस्य स्वापेक्षया पौर्वापर्यस्य व्याहतत्वादित्यर्थः । **नच तत्प्रागभावमात्रमिति** कार्यप्रागभावमात्रं न कारणमित्यर्थः । **अत एव**—प्रागपि तज्जनकत्वप्रसङ्गादेव ।

नन्वविद्यासन्तानपक्षे कार्यस्य प्रागप्यापादनं-न सम्भवति तत्र कस्याश्चिदेवाविद्याया जनकत्वादित्यत्राह--**अविद्यासन्तानेति**-कार्यबलात्कारणकल्पनं । तत्र किं कार्यं रजतं यद्वा तद्बुद्धिरित्यत्र विकल्पे आद्य आह--**नह्यत्रेति** । द्वितीय आह—**तद्बुद्धेरिति** । ननु श्रुतिबलाद्रजतोत्पत्ति-शङ्कते-**इदमिति**--"यदिदं किञ्चे"ति वाक्योक्तस्यैव-"इदं सर्वमसृजते" त्यत्र इदं शब्देनाभिधानान्नात्र शुक्तिरजतसृष्टिरित्यत्राह—**न प्रमाणसिद्धेति** । **नन्विति**--यद्यपि इदं भिन्नवाक्यं, तथापि प्रामाणिकस्यैव श्रुत्याभिधानमिति भावः । **नहीति**-चिकीर्षादिद्वारा घटादिबुद्धेस्तज्जनकत्वेऽपि साक्षान्नदृष्टेरित्यर्थः ]

ननु रजतस्यैव तत्रोत्पत्तिर्न ज्ञानस्य प्रातिभासिकगोचरवृत्त्यासन्निकर्षाभावे तदनभ्युपगमादिति चेन्न। संस्कारजननार्थं तदाकारवृत्त्यावश्यकत्वात्। साक्षिज्ञानस्य सूक्ष्मावस्थारूपसंस्कारजनकत्वानङ्गीकारादिदंज्ञानस्य संस्कारजनकत्वेऽतिप्रसङ्गात्।

नच यद्वृत्त्यभिव्यक्तचैतन्यभास्यत्वं यस्य–तस्य तद्गोचरसंस्कारजनकत्वोक्तौ नातिप्रसङ्ग इति वाच्यम्। तथा सति सुख-दुःखाहङ्कारादिसंस्काराभावप्रसङ्गात्। तत्र–तदाकारवृत्त्यभ्युपगमेऽपि चैतन्यस्य तदभिव्यक्तत्वाभावादहमाकारानुवृत्त्यैव सर्वसंस्कारसम्भवे—सुखाद्याकारवृत्त्यङ्गीकारवैयर्थ्याच्च।

केचित्तु प्रातिभासिकरजतानन्तरं तदाकारवृत्तिसामग्रीसम्भवेन तदावश्यकत्वे तज्जनकत्वमेवाङ्गीक्रियतां नत्वर्थजनकत्वमपीत्याहुः।

अन्यथेति—मिथ्यावस्तुनस्सत्यतादात्म्यायोगादिति भावः। अन्यथाख्यातिमपीति—अविशेषादिति भावः। वरञ्चेति—उभयजननापेक्षयैव एकजननस्य लघुत्वादिति भावः। नार्थविशेषेति–गौरवादिति भावः।

ननु साक्षिचैतन्यस्यैव रजतधीरूपता कादाचित्की। ततस्तद्रूपसाक्षिणो रजतमुत्पद्यत इति शङ्कते—तदेवेति। या साक्षित्वेनेति—तस्य रजतधीविपरिवर्तनं रजतधीसंबन्ध एव नतु तदन्यत्। तथाच–रजतोत्पत्तेरसम्भवा दन्यथाऽन्योन्याश्रयापत्तेरिति भावः।

यदुक्तं पूर्वाज्ञातसर्पस्याप्यैन्द्रजालिकसर्पज्ञदर्शनादपूर्वसर्पोत्पत्तिः। तथा मण्डूकवसाक्तनेत्रस्याज्ञातसर्पस्यापि सर्पज्ञानं दृश्यत इति सर्पसृष्टिः [ सर्पदृष्टिः ] प्रागज्ञाततया स्मृतस्य संसर्गाद्यारोपायोगेनान्यथाख्यात्यसंभवात्। अत एव न स्मृतस्यासंसर्गाग्रहोऽपि।

किञ्च केनचिद्विप्रलम्भकेन शशशृङ्गमस्ति तत्पुरुषार्थसाधनं। तदेवंलक्षणकमरण्ये पतितमस्ति–तदन्वेषणेन लब्धुं योग्यमित्युक्तमनन्तरं–तच्छृण्वतोऽरण्यंगतस्य तल्लक्षणकं शृङ्गं दृष्ट्वा इदमेव शशशृङ्गमिति बुद्धिर्जायते। तत्रापि शशशृङ्गस्यासत्यस्याभावा न्नान्यथाख्यातिरसंसर्गाग्रहोवेति तत्रानिर्वचनीयस्य–शशशृङ्गस्योत्पत्तिरिति तदप्येतेन निरस्तम्। इन्द्रजालरूपदोषस्यैवान्यत्र विद्यमानरजतज्ञानकारणत्वात्।

नच पूर्वं रजतानुभवाभावात्कथमिति वाच्यम्। तवापि पूर्वं रजतानुभवजन्यसंस्काराभावाद्रजतोत्पत्तिः कथमिति तुल्यम्। यदीन्द्रजालमहिम्ना तादृशानुभवाऽभावेऽपि रजतोत्पत्तिः तर्हि तत एव रजतान्यथाख्यातिरस्तु।

एतेन वंशोरगभ्रमोऽपि व्याख्यातः। अतएव स्वप्ने एकस्मिन्पदार्थेऽनेकाकार-दर्शनमपि व्याख्यातं। असंसर्गाग्रहोऽपि नानुपपन्नः भ्रमहेतोरेव व्यवहारहेतुत्वोक्तौ विरोधाभावात्।

रजतं जानामीति ज्ञानानुभवस्तु दोषेण रजतानुभवेऽप्यनुपपन्नं। नचान्यथा॰ख्यातिः पुरोवृत्तिसंसर्गस्याज्ञानादिति।

यदपि केनचिदित्यादि तत्राप्यरण्यं गतस्य शृङ्गविशेषे शशशृङ्गशब्दस्य शक्ति भ्रममात्रं। नच तत्र भ्रमोऽनिर्वचनीयोत्पत्तिर्वेति ॥१७॥

---

अक्षरार्थ॰—शुक्ताविदं रजतमित्यत्रानिर्वचनीयरजतोत्पत्तिपक्षं दूषयति—रूप्यं जातमिति। तदा—इदं रजतमिति ज्ञानकाल इत्यर्थः। न रजतमिति धीः—नेदं रजतमिति बुद्धिरित्यर्थः। अमुष्मिन्-अनिर्वचवीयरजते अप्रमा स्यात्। रजते रजत-भेदाभावादिति भावः। अप्रमात्वे च बाधाभावात् अनिर्वचनीयस्य रजतस्य सत्यत्वा-पत्तिरपि स्यादिति हृदयम्। तत्र न रजतमिति न रजतजातीयं निषिध्यते, किं तु अङ्गुलीयादिकार्यक्षमं रजतजातीयमेव निषिद्धयत इत्यत्राह—कार्यासामर्थ्यमात्रादिति अङ्गुलीयकाद्यक्षमत्वमात्रात् न रजतमिति कथनं परमार्थरजतेऽल्यपरिमाणे कार्या॰क्षमत्वमात्रेण न रजतमिति बुद्धिप्रसङ्गरूपापत्तिप्रसक्त्यै कल्पत इत्यर्थः।

यद्वा कार्याक्षमत्वे सत्यपि इदं रजतमिति कथनं अतिप्रसक्त्यै—लोष्टादाविदं रजतमिति बुद्ध्यापत्त्यै न कल्पत इत्यर्थः। कार्यक्षमरजतजातिविशेषस्येव रजतजाति सामान्यस्यापि तत्राभावादिति भावः। शुक्तावनिर्वचनीयरजतोत्पादकसामाग्र्यपि नास्तीत्याह—शुक्ताविति। एतत्-अनिर्वचनीयरजतं। तदात्वे—इदं रजतमिति ज्ञानकाले कथमिव—न कथं चिदपि जनयेदित्यर्थः। कुत इत्यत्राह—दुर्घटेति। दुर्घटेत्य-नेन तत्स्वरूपाद्यसम्भवो व्यज्यते। अनादीति अविद्यायाः अनादित्वात् तस्या अनि-र्वचनीयजनकत्वे पूर्वमेव कुतो न जनयेत्? तत्काल एव (भ्रमकाल एव) जनकत्वस्वभावकल्पने तदानीमेवान्यथाख्यातिजनकत्वमेव कुतो न कल्पयेत्? तदानीं भ्रान्ति—तद्विषयजनकत्वकल्पनापेक्षया उभयसंमताप्रमाणज्ञानमात्रकल्पने लाघवादिति भावः। अनाद्यविद्यायाः तदातनसहकारिवशात् तदानीं कार्यजनक-त्वमित्यत्राह—नाक्षादिरिति। इन्द्रियादिरित्यर्थः। आदिशब्देन दोषादिर्गृह्यते। अर्थहेतुरिति। इन्द्रिय-तद्दोषादेर्ज्ञानहेतुत्वमेव दृष्टं नत्वर्थहेतुत्वमिति भावः। तदातनरजतज्ञानमेव सहकारि इत्यत्राह—न चेति। कुत इत्यत्राह—सा हीति। यतो रजतख्यातिः रजतरूपविषयेणैव जन्या ततस्सा न रजतरूपविषयं जनय-तीति भावः।

अतोऽनिर्वचनीयरजतोत्पत्तौ सामग्र्या दुर्निरूपत्वात् तदुत्पत्तिरसम्भवदुक्ति-कैवेति भावः॥ १७॥ इति अनिर्वचनीयरजतोत्पत्तिभङ्गः

सत्त्वासत्त्वद्वयाख्यद्वयविरहचतुष्कोटिमुक्तं च तत्त्वं
व्याघाताद्यैर्विधूतं न यदि तव कथं सप्तभङ्गीनिषेधः।
तुच्छालीकादिशब्दाः क्वचन सति परं क्वाप्यसत्त्वे प्रवृत्ता
वन्ध्यापुत्रादिशब्दैर्भजति च समतां विध्यलीकादिवादः ॥ १८॥

सर्वार्थ—संविद्व्यतिरिक्तं सर्वं सर्वत्राविद्यमानं सत्प्रतिभातीति पक्षः प्रतिक्षिप्तः। अथ संविदपि तथेति पक्षः प्रतिक्षिप्यते—सत्त्वासत्त्वेति ॥ यदाहुः—

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ इति।

अयमत्राभिसन्धिः—सच्चेत् किंचित् न तद् बाध्येत। सर्वदा सर्वत्र सर्वथा च स्यात्। नान्यथा, स्वभावपरित्यागायोगात्। असच्चेत् न [जा]ख्यायेत। [तन्न]नच कदाचित् कुत्रचित् कथंचिदपि स्यात्; तत एव। नापि क्वचित्सत्त्वासत्त्वसमुच्चयः; उक्तदूषणसमुच्चयात् व्याघाताच्च। उभयशून्यत्वं च तत्समुच्चयसमानदूषणम्। अतः सदादिरूपकोटिचतुष्टयविनिर्मुक्तं सर्वं निरधिष्ठानमेव संवृतिशक्त्या भाति। इदमेव तत्त्वम्। अयमेव सर्वज्ञोपदेशसारः। शुश्रूषुबुद्धितारतम्यात् क्रमेण तद्बुद्ध्यारोहाय भिक्षुपादप्रसरणन्यायेन क्षणभङ्गादिनिबन्धनमिति। एवं वदता स्वपक्षतत्प्रतीतिस्वागमतर्कतन्मूलतत्त्वनिर्णयजयादीनां सत्यत्वं प्रतिपाद्येत न वा? पूर्वत्र सर्वमसत्यमिति स्वागमव्याघातः; स्वोक्तिव्याघातश्च। उत्तरत्र किं तद्दूषणेन? अदूषितस्तर्ह्यस्मत्पक्षस्सिध्येदिति चेन्न, साधकाभावे दूषणानुक्तिमात्रेण सिद्ध्यसंभवात्। संवृतिसत्यं स्वपक्षादिक्रमङ्गीकुर्म इति चेत्; एवमपि तथाभूतपरपक्षादेरिव स्वपक्षादेरपि सिद्धिर्न स्यात्। सत्यपि केनचिदाकारेणाविशेषे सर्वबाधकतयैवास्मत्पक्षस्य विशेषस्सिध्यतीति चेत्; मिथो विरुद्धयोर्बलाबलवैषम्याभावे किं कस्य बाधकं बाध्यं वा? विधिनिषेधयोर्निषेधस्य प्रसक्तिसापेक्षत्वेन परत्वाद्बलीयस्त्वमिति चेन्न; संवृतिदोषमूलत्वाविशेषे परत्वस्याकिञ्चित्करत्वात्। अन्यथा चतुष्कोटिविनिर्मुक्तं तत्त्वं नास्तीत्यस्मदुक्तस्य निषेधस्य बलीयस्त्वेन त्वन्मतोन्मूलनप्रसङ्गात्। असंजातविरोधिकालोत्पन्नतया वा पूर्ववृत्तविधिप्राबल्यं किं न स्यात्? निषेधसिद्धान्तस्यानादित्वात् न तत्पूर्वं किंचिदिति चेत्, विधिसिद्धान्तस्याप्यनाद्यनन्ततया ततः परत्वं कस्यचिन्न स्यात्।

यत्तु सतस्सर्वप्रकारसत्त्वं स्यात्, अन्यथा स्वभावविरोधप्रसङ्गादिति; तदसत्; देशकालादिनियततयैव तत्तद्वस्तुस्वभावसिद्धेः, तस्य च स्वभावस्य कुतश्चिद्विरोधाभावात्। तथा अनभ्युपगमे स्वभावग्रहणस्यैवासंभवात् प्रसङ्गोऽपि निर्मूलः; एतेनासत्स्वभावस्य सर्वथैवासत्त्वं स्यादिति प्रसङ्गोऽपि प्रत्युक्तः। खरशृङ्गादौ तथा व्याप्तिर्दृष्टेति चेन्न; घटादिषु कालादिनियतासत्त्वदृष्ट्या व्याप्तेर्दुर्ग्रहत्वात्।

माभूदसत्त्वमात्रं साध्यव्याप्तं, खरशृङ्गादितुल्यं चासत्त्वं प्रसञ्जकमिति चेन्न; तस्य विगीतेष्वस्माभिरनभ्युपगमात् प्रसञ्जकप्रञ्जनीययोरविशेषप्रसङ्गाच्च। एतेन यदसत् तत्सर्वथैवासत् यथा खरशृङ्गम्; विगीतं च तथा; यत्पूर्वापरदेशकालयोरसत्तन्मध्येऽप्यसत्; यथा खपुष्पम्; इदं च तथेत्याद्यनुमानमपि निकृत्तमूलम्।

ननु ह्रस्वत्वदीर्घत्वाणुत्वमहत्त्वान्यत्वानन्यत्वाद्यापेक्षिकधर्माणां स्वभावत्वे निरपेक्षत्वप्रसङ्गः, परसापेक्षत्वे च किंचित्प्रति स्वभावत्वं न स्यात्। न हि खपुष्पादेश्शून्यत्वस्वभावः परसापेक्षः स्यात्। मैवम्; यथादृष्टि सर्ववस्तूनां सापेक्षनिरपेक्षस्वभावभेदस्य दुरपह्नवत्वात्। यच्च—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निःस्वभावाश्च [देशिताः]दर्शिताः॥ इति।

तदप्यसत्। तत्स्वभावानवधारणस्यापि स्वभावानवधारणाद् विपरीतापत्तेः। तदेवमुक्तमनुक्तं च दूषणजातमभिप्रेत्योक्तम्—व्याघाताद्यैर्विधूतमिति।

सर्वथाऽनुपपत्तेश्चेत्येवं सूत्रयता स्फुटम्।
सर्वदोषाकरत्वं च पक्षस्यास्य प्रदर्शितम्॥
अविद्यां विश्वजननीमर्धपञ्चमरूपिणीम्।
निवृत्तिपञ्चमाकारां कल्पयन्तोऽप्य[धःकृताः]तः क्षताः॥

ननु व्याघातादयोऽप्यसत्याः; सदसदादिविकल्पानुपपत्तिदुःस्थत्वात्। अतस्ते नास्मत्पक्षं दूषयिष्यन्तीत्यत आह—न यदीति। सप्तभङ्ग्युपादानं सर्वस्य पक्षान्तरस्योपलक्षणम्। व्याघातादिभिरेव हि सप्तभङ्ग्यादिकं त्वयाऽपि दूष्यते; ते चेत् त्वत्पक्षे न दोषाः, त्वत्प्रतिपक्षेऽपि न दोषा भवेयुः। अतः कथं त्वया तन्निषेधः कार्य इति भावः। अथ ब्रूषे—तुच्छादिशब्दाः क्वचिद् व्युत्पन्ना न वा? नेति तावन्नाङ्गीकरोषि; व्युत्पन्नाश्चेद्विगीते, अन्यत्र वा? विगीते चेदागतोऽसि मध्यमागमानां मार्गम्; अन्यत्र चेत्तद्दृष्टान्तेन विगीतेऽपि तुच्छत्वं साधयामः—यश्शब्दार्थस्स तुच्छः यथा त्वदिष्टोऽन्यः तथा च विगीतमिति, तत्राह—तुच्छेति। क्वचिदन्यत्र विद्यमाने हि पदार्थे केवलं किंचिन्निष्ठाभावप्रतियोगित्वापेक्षया तुच्छशब्दः अलीकमिथ्यानृतादिशब्दाश्च स्वाभावाधिकरणाध्यस्तोपाधिकाः, न तु निरुपाधिनिषेधमपेक्ष्य प्रवर्तन्ते, यतस्त्वत्पक्षावकाश इति भावः।

यदप्युच्यते—द्विविधमलीकं विधिपदं निषेधपदं चेति, आद्यं विगीतम्, द्वितीयं वन्ध्यासुतादीति, एतद्दूषयति—वन्ध्यापुत्रेति। अयं भावः—वन्ध्यासुतादेरपि न निषेधैकविषयत्वम्।

एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः।
मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः॥

इत्यादिषु तदभावात्, विगीतस्यापि न विध्येकविषयत्वम्। आकारभेदैरपि निषेधैस्सर्वत्र निषेधस्य प्रसिद्धत्वात्, त्वया च सर्वप्रकारतस्तन्निषेधात्। अतः ईदृशो विभागो नोपपद्यत इति। एवमविशेषापादनात् किं त्वया लब्धमिति चेत्, एवं विशेषवर्णनाच्च किं त्वया लब्धम्? व्यवहारविशेषव्यवस्थापनमिति चेत्, तन्निषेधो मयाऽपि लभ्यत इति पश्य।

एवं वाऽभिप्रायः—विध्यलीकशब्दो न कंचिदर्थं बोधयति, अयोग्यपदसमभिव्याहाररूपत्वात् [निषेधालीकपदवदिति]। किंचिदिति हि विधिशब्दो बोधयेत् न किंचिदिति चालीकशब्दः। कथं तयोस्सामानाधिकरण्यसंभवः! यद्यपि अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि, तथाऽपि वन्ध्यासुतशब्दार्थवत् विध्यलीकशब्दार्थस्याप्यसिद्धेर्विवक्षितासिद्धिरिति। आदिशब्देन संवृतिसत्यव्यावहारिकसत्यादिप्रलापसंग्रहः।

संवृतिसत्यमिति तावत् किमुच्यते! किं संवृतिरेव सत्यमुत संवृतिसंबन्धि किंचित् सत्यमिति! नाद्यः, संवृतिशब्दस्य मिथ्यार्थपरत्वे सत्यशब्दसामानाधिकरण्यायोगात्। तदाहुः—

संवृतेर्न तु सत्यत्वं सत्यभेदः कुतो न्वयम्।
सत्या चेत् संवृतिः केयं मृषा चेत् सत्यता कुतः॥ इति।

सत्यार्थपरत्वेऽपसिद्धान्तः प्रपञ्चमिथ्यात्वप्रयोजकत्वायोगश्च। न द्वितीयः; सत्यस्य सतः कुतश्चित् संवृतिसंबन्धात् असत्यत्वासिद्धेः। न हि किंचिज्जातीयं तद्विजातीयसंबन्धात्स्वयमतज्जातीयं दृष्टम्। अथ वस्तुतोऽसत्यमेवासत्यत्वसंवृत्या सत्यत्वेन भासमानं संवृतिसत्यमित्युच्यते, तथा सति विशेषाग्रहनिबन्धनेयमन्यथाख्यातिरेव कक्षीकृतेति न क्वचिदपि ख्यात्यन्तरकल्पनावकाशः। एतेन संवृत्तिर्नाम भ्रान्तिरेव; तया मिथ्याभूतमेव सत्यत्वेन भासितं संवृतिसत्यमित्यपि निरस्तम्।

अथ शुक्तिकारजतमितिवत् संवृतिरूपाधिष्ठानाध्यस्तं सत्यं संवृतिसत्यमित्यभिमतम्, तथा सति निरधिष्ठानभ्रमपरित्यागप्रसङ्गः। संवृतिमात्रे निरधिष्ठानं भ्रमं ब्रूम इति चेत्; तद्वदेव संभवे किं प्रपञ्चस्य सत्यासत्यादिविकल्पासहसंवृतिरूपाधिष्ठानकल्पनेन? न च संवृतिरधिष्ठानं भवितुमर्हति; शुक्तिवत् केनचिदाकारेण तद्भानादृष्टेः। अत एव संवृतिरपि संवृत्यन्तरेऽध्यस्तेति निरस्तम्; संवृतिसन्ततेरसन्ततानन्तसंवृतिवर्गस्य चानुपलम्भात्। सन्ततिपक्षे च पूर्वपूर्वसंवृतीनामुत्तरोत्तरसंवृतिकारणत्वमात्रं स्यात्; न त्वधिष्ठानत्वम्, असमानकालत्वात्। न हि नष्टे शुक्तिकादौ वर्तमानतया रजतमध्यस्यमानं दृष्टम्। असन्ततिपक्षे च सर्वसंवृतीनामनादित्वेन कल्पनासिद्धत्वायोगात् किमधिष्ठानेन? न ह्यकल्पितस्यापणस्थरजतादेरन्यदधिष्ठानमन्विष्यते।

एवं तैमिरिककेशस्तबकादिन्यायेन संवृत्याख्यदोषाध्यस्तं संवृतिसत्यमित्यप्यसारम् । अतिदूरत्वात्यासन्नत्वसादृश्यतिमिरकाचपटलादिवत् संवृतिसंज्ञस्य दोषस्य कुतश्चित्प्रमाणादसिद्धेः । अलीकप्रकाशान्यथानुपपत्त्या तत्क्लृप्तिरिति चेत्, किं संवृतिरलीकमप्रकाशमाना प्रकाशयति, प्रकाशमाना वा ? आद्ये अवगमाधीनसत्ताकत्वाभावात् स्वरूपसत्यत्वप्रसङ्गः । द्वितीये त्वसिद्धिः; सर्वलोकानुपलब्धिबाधितत्वात् । न हि त्वयाऽपि तादृशी संवृतिः काचिदुपलभ्यते । अलीकप्रकाशान्यथानुपपत्तिप्रकाशिताऽपि विश्वं प्रकाशयतीति चेन्न; अन्योन्याश्रयणात्—तत्प्रकाशादलीकप्रकाशस्तन्मूलकल्पनया च तत्प्रकाश इति । अपि चालीकप्रकाशस्य दोषोऽपेक्ष्यत इति कुत्रावगतम् ? संप्रतिपन्नभ्रमेष्विति चेत्; तत्र तद्वदधिष्ठानदृष्टसारूप्यदोषाश्रयादिकमपि कारणत्वेन दृष्टमिति तान्यपि किं न कल्प्यन्ते ? कल्प्यमानान्यपि तानि काल्पनिकान्येव सिध्येयुरिति चेत्; किमनया संवृत्यादिगणकल्पनया ? तद्वदेव प्रपञ्चो दोषादिनिरपेक्षः कल्पित इत्यङ्गीकुरुष्व । तथाङ्गीकारे च संवृतिसत्यमिति रिक्तं वचः ।

एवं व्यावहारिकसत्यशब्दोऽपि न क्वचिद्विवक्षितसाधकः; कुतश्चिदपि समासादुपलभ्यमानसत्यत्वप्रतिषेधासिद्धेः । न च व्यावहारिकशब्दो मिथ्यापर्यायः । तथात्वे सत्यपि सामानाधिकरण्ये सत्यशब्दान्वयवैघट्यम्, वैयधिकरण्ये त्वदिष्टस्यासिद्धिः । न हि मिथ्यारजतादिसंबन्धिशुक्त्यादिकं मिथ्या भवति । अथ शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति न्यायात् व्यवहारजन्यविकल्पकल्पितं व्यावहारिकसत्यमिति मन्वीथाः, तदपि न; प्रत्यक्षानुमानवेद्यस्य प्रपञ्चस्य शब्दकल्पितत्वाभावात् । यत्र तु शशशृङ्गादौ शब्दकल्पितत्वं कथंचिदभ्युपगम्येत, तत्रैव व्यावहारिकसत्यत्वं स्यात्; न तु प्रत्यक्षादिसिद्धेष्विति स्वेष्टविपरीतापत्तिः, असतः प्रातीतिकसत्यस्य च व्यावहारिकसत्यत्वानभ्युपगमात् । अपि चेदमपारमार्थिकं सत्यं पारमार्थिकसत्यतया भातीत्यङ्गीकार्यम्; अन्यथा प्रवृत्त्यनुपपत्तेः । तथा चान्यथाख्यात्यनपनयात् किं ख्यात्यन्तरेणेति ॥ १८ ॥

---

आनन्द०—साजात्यं सङ्गतिरित्याऽऽह—संविद्व्यतिरिक्तमिति—माध्यमिकपक्षे संविदोऽपि शून्यत्वादिति तत्पक्षः प्रतिक्षिप्यत इत्यर्थः । ननु—न सन्नित्यादिश्लोके हेत्वनुपन्यासात्प्रतिज्ञामात्रं न साधकमित्याह—अयमत्रेति ।

केचित्तु सत्वासत्वद्वयाख्येत्यत्रोपपादकापेक्षायामाह—अयमत्राभिसन्धिरित्याहुः । सर्वथेति निरुपाधिकत्वादिति भावः । अन्यथा कालादिविशेषविशेषितत्वेनेत्यर्थः । असच्चेत्यत्राप्येवमेव योज्यं । तथा च—घटादीनां पूर्वकाले न सत्त्वं देशविशेषे न सत्त्वं पटाद्यात्मनाचासत्वं उत्तरकाले सत्त्वं—अत्र देशे घटाद्यात्मना च सत्त्वमिति प्रतीतिरप्रतीतिश्चेति न स्वरूपेण सत्त्वासत्वे इति भावः । तत एवेत्युक्तमर्थमाह—

उभक्तेति—सत्त्वे सर्वदेशकालप्रकारेण सत्त्वासत्त्वप्रतीत्योः प्रसङ्गादेवेत्यर्थः। व्याघाताच्चेति—सत्त्वासत्त्वयोर्विरोधादित्यर्थः।

केचित्तु सर्वदेशकालप्रकारेण सत्त्वासत्त्वप्रतीत्यप्रतीत्योरिष्टापत्तिपक्षे दूषणं व्याघाताच्चेत्याहुः। उभयशून्यतया हि—असत्त्वस्यासत्त्वशून्यतया सत्त्वस्य च प्रतीत्यप्रतीत्योः प्रसङ्गस्य च समानत्वादित्यर्थः। इदमेव चतुष्कोटिविनिर्मुक्तमेव।

ननु बुद्धैः किमिति भावनाचतुष्टयमुपदिष्टमित्यत्राह—शुश्रूषुबुद्धितारतम्यादिति—तदुक्तं सायणीये—"भिक्षुपादप्रसरणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्व—अनुकूलवेदनीयत्व—अनुगतत्व—सर्वसत्यत्वभ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानं। अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटि विनिर्मुक्तं शून्यमेवेति"। आदिशब्देन दुःखत्व-स्वलक्षणत्व शून्यत्वानां ग्रहणम्। निबन्धनं—स्वागमः बुद्धप्रणीतं शास्त्रम्। आदिशब्देन परपक्षदूषणादयो गृह्यन्ते। पूर्वत्रेति—स्वपक्षादीनां सत्यतया-सर्वशून्यपक्षविरोधः। स्वोक्तिव्याघातः—स्ववचनविरोध इत्यर्थः। एवमपि। तथाभूत इति—संवृतिसत्यत्वेऽपि परपक्षसिद्धिवत्स्वपक्षसिद्धिरपि स्यादिति भावः। मिथो विरुद्धयोरिति—विरोधिविषयत्वस्याविशेषात्परपक्ष एव किमिति बाधको न स्यादिति भावः। मायिपक्षोपालम्भाभिप्रायेण शङ्कते—विधीति—परत्वमात्रस्य बाधकत्व-प्रयोजकत्व इत्यर्थः। अग्न्यनुष्णत्वानुमानोपजीव्यत्वस्य पूर्वस्य बाधकत्वदर्शनादत्रापि पूर्वस्यैव बाधकत्वं स्यादित्याह—असञ्जातेति। देशकालादिनियततयैवेति—यदा सत्त्वं-घटादेरवगम्यते अस्मिन्देशे इदानीं घटात्मनाऽस्तीत्यवगम्यते। इदञ्च देशान्तराद्य-सत्त्वविरोधि न भवति। यच्च निरुपाधिकं सत्त्वं तद्वस्तु न स्वभावतया प्रतिपन्नमिति न तत् तत्स्वभाव इति भावः। तथाऽनभ्युपगम इति—देशकालावच्छिन्नसत्त्वाप्रतीतौ सत्त्वव्याप्तिग्रहाभावाद्यदिदं कदाचित् तत्सर्वदा सदेवेत्याद्यापादनं न सम्भवति आपादकाभावादिति भावः। एतेनेति—देशकालावच्छिन्नसत्त्वस्यैववस्तुस्वभावत्वात्तस्य कुतश्चिद्विरोधाभावादित्यनेनेत्यर्थः।

नन्वस्तु देशकालाद्यवच्छिन्नमसत्वं तथाप्यसत्वसामान्येन खरशृङ्गादौ सर्वदेशकालाद्यसत्वव्याप्तिग्रहे सर्वदेशकालाद्यवच्छेदेन घटादेरसत्त्वं सिद्ध्यतीति चोदयति—खरशृङ्गादाविति। घटादिष्विति—तथा च तत्र व्यापकाभाववत्तया निर्णीतत्वाद्व्यभिचार इति भावः।

खरशृङ्गादितुल्यमिति—सर्वप्रकारासत्त्वमित्यर्थः। प्रसञ्जकेति—सर्वप्रकारासत्त्वं हि प्रसञ्जकं प्रसञ्जनीयञ्चेत्यर्थः। एतेनेति—पूर्वतर्को निरस्तः इदानीमनुग्राह्यं प्रमाणमिति भेदः। नन्विति—तथा च ह्रस्वत्वादिवत् किञ्चिन्निरूपितसत्त्वासत्त्वयोरपि स्वभावत्वाभावाद्वस्तुनश्शून्यत्वमिति भावः।

केचित्तु ह्रस्वत्वादिभिर्विरुद्धैराक्रमणाद्वस्तुनश्शून्यत्वमित्याशय इत्याहुः। यथा-दर्शनं—वस्त्वङ्गीकारे काऽनुपपत्तिरित्यभिप्रायेण परिहरति—मैवमिति यच्चेति—युक्त्या विचार्यमाणे वस्तुनि स्वभावो हि शून्यतैवेति भावः।

तदुक्तं "इदं वस्तुबलायातं यद्वदन्ति विपश्चितः।
यथा यथा हि चिन्त्यन्ते विशिष्यन्ते तथा तथा॥" इति।

तत्स्वभावेति—स्वभावानवधारणस्यापि सिद्धत्वात्सत्यं सिद्ध्यतीत्यर्थः। माध्यमिकपक्षदूषणं—वेदाचार्यसम्प्रदायागतं सर्वथेति। सर्वदोषाः—व्याघातादयः। प्रसङ्गान्मायिमतेऽप्यतिदिशति—अविद्यामिति। अर्धपञ्चमत्वं—अनिर्वचनीयत्वं सदसद्विलक्षणतया पञ्चमापेक्षयाऽन्यत्र सत्त्वात्।

केचित्तु अर्धपञ्चमस्य यदर्धं तस्य स्वरूपभूता भावस्य प्रतियोगि-समानसत्ताकत्वमिति नियममाश्रित्य ज्ञाननिवर्त्यत्वेन निर्वचनीयत्वेऽपि तद्वैलक्षण्य-मस्तीत्यानन्दबोधाद्युक्तनिवृत्तेः—पञ्चमप्रकारत्वञ्चायुक्तमित्याहुः। निवृत्तेरविद्या-याश्च सद्विलक्षणत्वे असत्वनियमादसद्विलक्षणत्वे सत्वनियमाद्व्याघात इति भावः। सर्वस्य पक्षान्तरस्येति—अनिर्वचनीयपक्षस्य सत्त्वासत्वपक्षस्याऽसत्त्वादिपक्षस्याऽपीत्यर्थः। पूर्वोक्तस्य सर्वदासत्वप्रसङ्ग इत्यादेर्दूषकत्वाभावादिति भावः। तन्निषेधः—पक्षान्तर-निषेधः।

ननु तुच्छादिशब्दानां चतुष्कोटिविनिर्मुक्तवस्तुवाचकत्वात्तद्बलान्मतसिद्धिरिति शङ्कामनुवदति—अथ ब्रूष इति। ननु तर्हीति। घटादीनां तुच्छतयाव्यवहारस्यादि-त्यत्राह—अलीकमिथ्येति—तथा च-घटाद्यभावाधिकरणे घटाद्यध्यासदशायामिष्टापत्ति-रिति भावः।

"अलीकन्तत् द्विधा प्रोक्तं विधिर्नञ् गोचरत्वतः।
आद्यं पृथिव्यादि तथा वन्ध्यापुत्रादिकं पर"॥

मिति तदीयविभागोऽपि न युक्त- इति वक्तुमनुवदति-यदपीति।

ननु वन्ध्यापुत्रो नास्तीति निषेध्यत्वप्रतीतिनियमात्कथं सत्यत्वमित्यत्राह—अयं भाव इति—अत्र किं निषेधैकविषयत्वान्निषेधपदत्वमुत तद्विषयत्वमात्रात्। आद्य आह—वन्ध्यासुतादेरपीति। द्वितीय आह—विगीतस्यापीति। पृच्छति—एवमिति—पञ्चमप्रकार दूषणानुपयोगादिति भावः। उत्तरयति—एवमिति—शब्द शब्दस्वारस्यादाह—एवं वेति। किञ्चिदिति होति—

ननु घटो नास्तीत्यत्र कथमन्वयः? घटोऽस्तीत्यनेन सत्वप्रतीतेर्नेत्यनेन विरोधा-दिति चेन्न। तत्र हि देशविशेषे सतो देशविशेषे नास्तित्वबोधने विरोधाभावात्।

अत्र तु निरुपाधिकस्य विरुद्धत्वमिति भावः । **विध्यलीकशब्दार्थस्यापीति**— विधिशब्दबोधेऽलीकशब्दार्थतादात्म्यस्येत्यर्थः । तथा च विध्यर्थस्य नालीकत्वमिति न द्वैविध्यमिति भावः । आदिशब्देन प्रातिभासिकादिग्रहणम् । संवृतिशब्दो मिथ्यापरः, सत्यपरो वेति विकल्प्य आद्य आह—**संवृतिशब्दस्येति**—अभेदस्य बाधितत्त्वादिति भावः । **संवृतेर्न तु सत्यत्वमिति**—संवृतिसत्यमित्यत्र कर्मधारये संवृतौ सत्यत्वं वा सत्ता तादात्म्यं वा वाच्यं । तदुभयञ्च न सम्भवति । संवृतेस्सत्यत्वमपि न, अयमभेदश्च सति कुत इत्यर्थः । **तत्र हेतुस्सत्या चेदिति**—संवृतिस्सत्या चेदियमेका सत्यैव भवतीति संवृतिसत्यमित्यसङ्गतं । असत्या चेत्सत्यासत्यरूपस्य भेदासम्भवात्संवृतिसत्यमित्यसङ्गतमित्यर्थः ।

द्वितीय आह—**सत्यार्थपरत्व इति । सत्यस्येति**—संवृतेस्सत्यत्वमसत्यत्वं वाऽस्तु तत्संबन्धमात्रासत्यस्य नासत्यत्वमित्यर्थः । **नहीति**—अरूपघटसंबन्धादरूपत्वमिति भावः । संवृतिशब्दस्य योगार्थमाश्रित्याह—**अथेति** । संवृतिः—तत्त्वविरोधित्वान्मिथ्याज्ञानमिहोच्यत इति पक्षमाह—**एतेनेति**–**नचेति** भातस्याधिष्ठानत्वादिति भावः । **असन्ततत्वं**—क्षणिकत्वं **सन्ततिपक्ष इति**—तथाचानवस्थाभयादधिष्ठानत्वसिद्धये कस्यचिदनादित्वाङ्गीकारे सर्वसंवृतिवर्गस्याप्यनादित्वमविशेषत्वादिति भावः । **तैमिरिकः**—तिमिराख्यदोषेणाध्यस्तः । **केशस्तबकः**—केशसमूहः । **संवृत्याख्यदोषेणाध्यस्तः** । आदिशब्देन पित्तादयो ग्राह्याः । **अलीकस्य** प्रकाशोऽलीकप्रकाशः । **अवगमाधीनसत्ताकत्वाऽभावात्**—भ्रान्तिसिद्धत्वाऽभावादित्यर्थः । असिद्धत्वमेवोपपादयति—**सर्वलोकेति** ।

नन्वलीकप्रकाशान्यथानुपपत्या तत्प्रकाशोऽपि–कल्प्यत इति चोदयति— **अलीकेति** । **अन्योन्याश्रयमुपपादयति**–**तत्प्रकाशादिति** । **तन्मूलेति**—अलीकप्रकाशे सिद्धे सति, तदन्यथानुपपत्या तत्प्रकाशो जन्यत इत्यर्थः । आश्रयादिकमित्यत्रादिशब्देनाऽवेरूप्यादिकं गृह्यते । **तद्वदेव** -अधिष्ठानादिवदेव । **तथेति** संवृतिसंबन्धाऽभावादिति भावः । **व्यावहारिकसत्यमित्यत्र** समासबलान्मिथ्यात्वं प्रतीयते **व्यावहारिकशब्दशक्तिबलाद्वेति** विकल्प्य प्रथमं दूषयति— **कुतश्चिदपीति**—व्यावहारिकञ्च तत् सत्यञ्चेति व्यावहारिकसत्यं । व्यावहारिकेण सत्यमित्यादि समासाङ्गीकारेऽपि सत्यत्वस्यैव बोधनादिति भावः । द्वितीयं दूषयति— **नचेत्यादिना**—पूर्ववदर्थः । **अथेति**–शब्दज्ञानेनाऽनन्तरं जातं–यच्छून्यभूतजात्यादिविषयकं सविकल्पकम् । **अप्रमाणमिति**–वैभाषिकमतन्यायेन शब्दोच्चारणजन्यज्ञानेन कल्पितं व्यावहारिकसत्यमित्युच्यत इत्यर्थः । **असतः**–शशशृङ्गादेः । **प्रातीतिकसत्यस्य**—

शुक्तिरजतादेः व्यवहारसम्बन्धाभावादिति भावः । अत्र व्यावहारिकसत्यशब्दस्यापि विकल्प्य दूषणकथनं मायिनां बौद्धसाम्यदर्शनार्थमिति ध्येयम् । मूलं "क्वाप्यसत्वे"— कस्मिंश्चिदधिकरणे सत्वाभावमात्रेण क्वचन सत्व एव प्रयुज्यन्त इत्यर्थः ॥ १८ ॥

---

**अक्षरार्थ०**—अथ माध्यमिकपक्षं प्रतिक्षिपति—सत्त्वासत्वेति । यदाहुः -

न सन्नासन्न सदसत् न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥

**अयमाशयः**—सच्चेत् किंचित् सर्वदा सर्वत्र न बाध्येत, बाधसत्त्वेन न सदिति वक्तुं शक्यते । असच्चेत् न ज्ञायेत ज्ञायमानत्वान्नाप्यसदिति वक्तुं शक्यम् । उक्तादेव दूषणात् समुच्चितात् सत्त्वासत्त्वसमुच्चयोऽपि न भवितुमर्हति । समुच्चये व्याघातोऽप्यधिकः । उभयशून्यत्वं च उभयसमुच्चयसमानदूषणम् । अत उक्त-चतुष्कोटिविनिर्मुक्तमेव तत्त्वमिति । तदेतदनुभाषते-सत्त्वासत्त्वद्वयाख्यद्वयविरह— चतुष्कोटिनिर्मुक्तं च तत्त्वमिति । तद्दूषयति व्याघाताद्यैरिति । व्याघातः— विरोधः । सत्त्वासत्वान्यतर कोट्यवश्यंभावेन चतुष्कोटिविनिर्मुक्तत्वस्यैकत्र विरुद्धत्वात् इति भावः । स्वपक्षादीनामपि चतुष्कोटिविनिर्मुक्तत्वेनासत्यत्वे स्वपक्षासिद्धिः । सत्यत्वे सर्वमसत्यमिति स्वागमव्याघात इत्याद्याद्यशब्देनाभिव्यज्यते । व्याघातादीनामसत्यत्वेन नास्मत्पक्षदूषकत्वमित्यत्राह—न यदीति व्याघातादीनां दूषकत्वाभाव इत्यर्थः । तव- माध्यमिकस्य ते । सप्तभङ्गीनिषेधः—जैनोक्तसप्तभङ्गीनिषेधः कथं ? न कथंचिदपि भवेदित्यर्थः । व्याघातदूषणेनैव तस्या दूषणीयत्वादिति भावः ।

अथ तुच्छालीकादिशब्दप्रतिपाद्यतया संप्रतिपन्नं दृष्टान्तीकृत्य प्रपञ्चेऽपि यश्शब्दार्थस्स तुच्छः, यथा त्वदिष्टोऽन्यः तथा च प्रपञ्च इति तुच्छत्वं साध्यत इति चेत्तत्राह—तुच्छेति । क्वचन-अन्यत्र क्वचित् । सति परं-विद्यमान एव वस्तुनि । क्वाप्यसत्त्वे-किञ्चिन्निष्ठाभावप्रतियोगित्वे । बोध्यतया विवक्षिते तुच्छादिशब्दाः प्रवृत्ताः, न तु निरुपाधिकनिषेधमपेक्ष्य प्रवृत्ताः, येन त्वत्पक्षावकाशस्स्यादिति भावः ।

यत्तु द्विविधमलीकं-विषिपदं निषेधपदं चेति । आद्यं विगीतं, द्वितीयं वन्ध्या-सुतादीति । तद्दूषयति—वन्ध्यापुत्रेति । वन्ध्यापुत्रादिशब्दैः निषेधपदालीकतया भवदभिमतैः । विध्यलीक, संवृतिसत्यादिशब्दः समतां—विशिष्टार्थबोधकत्वेन साम्यमेव भजतीत्यर्थः । एष वन्ध्यासुतो यातीत्यादौ वन्ध्यासुतशब्दस्यापि निषेध-विषयत्वाभावात् प्रपञ्चस्यापि विगीतस्याकारभेदैः कालदेशादिरूपैः निषेधस्य प्रसिद्धत्वेन त्वदुक्तालीकविभागस्य अनुपपन्नतया निषेधालीकपदवत् विध्यलीकशब्दस्य विशिष्टार्थाबोधकतयाऽयोग्यपदसमभिव्याहाररूपत्वात् इति भावः ॥ १८ ॥

व्याघातातिप्रसङ्गौ प्रमितिपरिभवे मानतोऽमानतो वा
मानान्मानस्य सिद्धौ स्वतदितरपरित्राणमेकप्रवृत्त्या ।
साधीयानेष पन्थास्समयिभिरखिलैरर्थ्यतां सार्थनीत्या
नोचेदुच्छिन्नलोकव्यवहृतिनियमाः कामचाराः कथास्स्युः ॥१९॥

सर्वार्थ—ननु प्रमेयसिद्धिः प्रमाणादेष्टव्या; प्रमाणं चासिद्धं न साधकं भवति। तत्सिद्धिश्च स्वतोऽन्यतो वा ? पूर्वत्रात्माश्रयः; उत्तरत्रानवस्था। अतः प्रमाणमात्रस्यैवासंभवान्न किंचिदपि प्रमेयं, न कश्चिदपि प्रमाता, न काचिदपि व्यवहृतिरिति; तत्राह—व्याघातेति ॥ अयं भावः—प्रमाणस्य प्रतिषेधः प्रमाणतो वा स्यादप्रमाणतो वा ? पूर्वत्र व्याघातः; प्रमाणस्य सर्वस्य प्रतिषेधात्, तदर्थं च कस्यचित् प्रमाणत्वेनोपादानात्। ननूपक्रमापच्छेदपदाहवनीयादिन्यायेषु प्रमाणत एव प्रमाणबाधस्त्वयेष्यते। सत्यम्; न प्रमाणमात्रं बाध्यते, येन व्याघातः स्यात्। किंतु स्वेतरत् किंचित्प्रमाणम्। तथाऽपि प्रमाणस्य सतः कस्यचित्कथं बाध इति चेन्न; तत्प्रामाण्यमात्रस्यानपहारात्। प्रबलविरुद्धविशेषे हि प्रामाण्याभावस्समर्थ्यते; इह पुनः कृत्स्नप्रमाणबाधशक्यत्वमुच्यते। उत्तरत्र व्याघातातिप्रसङ्गौ; यदि ह्यप्रमाणतः प्रमाणं प्रतिषिध्येत तत्प्रतिषेधोऽपि तत एव प्रतिषेध्यः स्यात्, त्वत्पक्षश्च सर्वस्सर्वैः प्रतिपक्षैः, रज्ज्वादिबुद्धिश्च सर्पादिभ्रमैः। कथं तर्हि भूदलनबुद्धया रज्जुसर्पनिवृत्तिः ? इत्थम्—उत्तरधियः पूर्वविपरीताकारावगाहित्वेन पूर्वभ्रमानुवृत्तिप्रतिरोधात्; न हि भूदलनबुद्धिबाधिततया तत्र सर्पस्य मिथ्यात्वव्यवस्थापनम्; तथा सति रज्जोरपि तत्प्रसङ्गात्; किंतु प्रमाणभूतेनाधिष्ठानयाथात्म्यज्ञानेन बाधितत्वात्। एवं प्रमाणस्याप्यप्रमाणबाधितत्वमात्रेण न मिथ्यात्वं स्यात्।

अप्रमाणतयाऽभीष्टान्न बाधस्तर्कतः क्वचित्।
अनुग्राह्यप्रमाणानामभावे परिगृह्यते ॥
प्रसञ्जनीयधर्मस्य मानसिद्धो विपर्ययः।
प्रमाणं भवति क्वापि प्रसञ्जकविपर्यये ॥

तदेवं प्रमाणतोऽप्रमाणतो वा प्रमितिपरिभवे व्याघातातिप्रसङ्गौ व्यवस्थिताविति। प्रमाणसिद्धिः स्वतोऽन्यतो वेति त्रिकल्पे तु यथादर्शनमुभयथाऽपीति ब्रूमः। स्वपरनिर्वाहकसमाधिना स्वात्माश्रयानवस्थयोरपसारणम्। तदेवाह—मानादिति। नहि वयमप्रमाणात्प्रमाणस्यान्यथा वा सिद्धिं ब्रूमः, किंतु प्रमाणतः। तत्र व्यक्तिभेदे तु प्रमाणन्तरात्प्रमाणसिद्धिः, यथा एतददृष्टम्, इदं द्रक्ष्यामीति। यदा त्वीदृशी प्रमेति प्रमितिमात्रं गृह्यते, ईदृशं वा प्रमितिकरणमिति प्रमाकरणमात्रम्, तदा पुनरेकहेलया स्वस्वेतरलक्ष्यसमुदायव्यवस्थापनान्नानवस्था, आत्माश्रयो वा, शब्दशब्दादिन्यायात्।

तर्ह्यप्रमाणादपि प्रमाणप्रतिक्षेपे स्वपरनिर्वाहकसमाधिना स्वात्माऽपि प्रतिक्षिप्यतामिति चेन्न; अविरुद्धविषयत्वात् स्वपरनिर्वाहस्य। यथा—

अहं सत्यं वदामीति स्वोक्तिः स्वपररक्षिणी।
न कदाचिद्वदामीति वादस्तु स्वोक्तिबाधितः॥
मानस्थापकमानस्य मानसंक्षोभकस्य च।
गतिरेवमिति प्रेक्ष्य गहनां कुहनां त्यज॥

सर्वैरपि सिद्धान्तिभिरियं गतिरनतिलङ्घनीयेत्यभिप्रायेणाह—साधीयानिति। समयिभिरखिलैः—प्रमाणस्थापकैरिव तद्दूषकैरपीति भावः। व्यावहारिकप्रमाणव्यवस्थाऽपि हि क्वचित्क्वचित्स्वपरनिर्वाहकसमाधिमनुरुध्यैव प्रवर्तेत। मिथ्यात्वादिसाधकेषु च त्वयाऽभ्युपगम्यते। तस्मात् अर्थ्यताम् इष्यतामित्यर्थः। सार्थनीत्या—यथा विपश्चित्प्रयुक्तस्सर्वश्शब्दस्सार्थ इति वाक्ये तदन्तर्गतपदानामपि सार्थकत्वमविशेषेण संप्रधार्यते। यद्वा त्वद्व्यापारस्सर्वोऽपि निरर्थकः सार्थको वा? आद्ये किं स्वपक्षस्थापनपरपक्षदूषणादिप्रयासेन? द्वितीये तत्सार्थत्वं कस्यचित्प्रमाणस्यार्थः स्यान्न वा? न चेत्, न तत्सिद्धिः। प्रमाणार्थश्चेत् तत्प्रमाणाभ्युपगमः। अथवा तीर्थयात्रादिप्रवृत्तस्सार्थः परस्परविरुद्धाभिप्रायवतां समवायेऽपि केनचिदाकारेणाभिप्रायसाम्यादन्योन्याविघातेन गन्तव्यं गच्छति; तथा मिथो विरुद्धावष्टम्भेऽपि सिद्धान्तिभिः प्रमाणात्प्रमेयसिद्धिरित्यादिकं लौकिकपरीक्षकसेतुमभिन्दानैः प्रस्थातव्यमिति। एवमनभ्युपगमे बाधकमाह—नो चेदिति। कथाः—वादजल्पवितण्डारूपाः उच्छिन्नलोकव्यवहारनियमतया कामचाराः स्युः—वक्तव्यावक्तव्यकर्तव्याकर्तव्यविभागरहिततया न तत्त्वनिर्णयादिफलपर्यन्ताः स्युरिति भावः। यद्वा कथाः—साधनदूषणाद्युक्तयः सदसद्भावानादरेण स्वच्छन्दतः स्युरिति। ननु सर्वक्षोभकस्य कथासंक्षोभप्रसङ्गेनापि किमनिष्टमापादितम्? एवं वदतस्ते किञ्चिदनिष्टमस्ति वा न वा? न चेत्, न सन्नासदित्यादिना परपक्षो न दूष्यः। अस्ति चेत्, त्वद्वाक्यमात्रेण त्वत्पक्षो दुष्ट इत्यनिष्टमापादितमेवेति॥ १९॥

---

आनन्द०—पूर्वसङ्गत्याऽऽह—नन्विति। आक्षेपिकी सङ्गतिरिति केचित्। असिद्धं न साधकमिति—सिद्धिः किमुत्पत्तिः? उत ज्ञानं? नाद्यः। उत्पन्नस्यैव साधकत्वोक्तेः। उत्पत्तिश्च घटादिवत्स्वकारणादिति नानवस्था। न द्वितीयः। प्रमाणशब्देन किं प्रमितिः? करणं वा उभयथाऽपि न दोषः। चक्षुरादेरज्ञातस्यैव प्रमितिजनकत्वात्। ज्ञानस्य च घटादिविषयत्वे स्वज्ञानानपेक्षणादिति चेदुच्यते। सिद्धिश्च ज्ञानमेव तद्गोचरज्ञानाभावे—शून्यतापत्या तन्मूलकानामपि शून्यत्वप्रसङ्गात्। नच तदज्ञानमपि शून्यमेवेति वक्तुं शक्यं शशशृङ्गादेरप्यशून्यताप्रसङ्गात्।

केचित्तु नचाज्ञातत्वमात्रात्स्वरूपाभावः—प्रतिपुरुषं स्वापाव्यवहितज्ञानस्याज्ञातत्वेऽपि शून्यताया अभावात् । नच शशशृङ्गादिसत्वप्रसङ्गः योग्यानुपलब्ध्या तदभावनिर्णयात् । नच योग्यानुपलब्ध्यसम्भवः शृङ्गत्वावच्छिन्नयोग्यतानुपलब्धेरेव तद्योग्यानुपलब्धित्वात् । तस्मादज्ञातस्यापि प्रमाणस्यार्थसाधकत्वमविरुद्धं । तथापि तान्त्रिकसङ्केतनिबन्धनमिदमित्याहुः । **उत्तरत्रेति**—ज्ञप्त्यनवस्थारूपत्वाददोष इति भावः । **अतः प्रमाणमात्रस्य**—शशशृङ्गमात्रस्यैव प्रतिषेधे कथं व्याघातः ? उपक्रमादिस्थले प्रमाणस्य प्रतिषेधदर्शनादित्याह—**अयं भाव इति** । व्याघातमुपपादयति—**प्रमाणस्येति**—कस्यचित्प्रमाणत्वे सर्वप्रमाणप्रतिषेधादिति भावः ।

ननु उच्चैर्ऋचा क्रियत इत्युपसंहारस्य वेदोपक्रमेण बाधः । तथा पूर्वापच्छेदशास्त्रेण बाधः । तथा "आहवनीये जुहोती" त्यस्य पदशास्त्रेण बाधः । तथा प्रणयनशास्त्रस्य गोदोहनशास्त्रेण बाध इति कथं प्रमाणबाधो नास्तीत्युच्यत इति चोदयति—**नन्विति** । **न प्रमाणमात्रमिति**—**व्याघातः**—विरोधः यत्किञ्चिद्बाधे यथा विरोधो न तथा यत्किञ्चित्प्रमाणबाधेऽपीत्यर्थः **तथाऽपीति**—तथा च सतः प्रमाणस्यासत्वं व्याहतमिति भावः ।

**तत्प्रामाण्यमात्रस्येति**—तथा च यत्र प्रामाण्यसत्वं न तत्र बाधोऽपि, इतरत्तदन्यत्रेत्यवच्छेदकभेदान्न विरोध इति भावः । व्याघातमुपपादयति—**यदीति**—प्रतिषेधस्य प्रतिषेधे प्रमाणसिद्धस्स्यादिति व्याघात इति भावः । अतिप्रसङ्गमाह—**त्वत्पक्षश्चेति**—प्रतिषेध्यस्स्यादित्यनुषङ्गः । **रज्वादिबुद्धिः**-बोधविषयरज्वादिरित्यर्थः । **उत्तरधिय इति**—न तत्र सर्पस्य भूदलनबुद्ध्या बाधः—अपि तु तद्बुद्ध्युत्तरस्य तद्बुद्ध्या उत्पत्तिप्रतिबन्ध इत्यर्थः ।

**ननु प्रमाणेनाऽपि बाधे भ्रमानुवृत्तिप्रतिबन्ध एव नतु विषयस्य नाशः । तथात्वे वा विषयस्य सत्यतापातात् । ननु तर्हि प्रमाणाप्रमाणयोस्तुल्यताप्रसङ्गो दोषः । न्यायप्राप्तार्थे किं कुर्मः ।**

नच तथासति मानमात्रविलयः । पूर्ववादिन इष्टत्वादिति चेत् । अत्राहुः । अप्रमाणे न विषयः नात्मलाभात् । प्रमाणेनात्मनो लाभात्तदभावो हि तत्स्थले । अप्रमाणस्वविषयं विरुद्धबाधनञ्च तत् । विरुद्धार्थसमावेशे—किं प्रमाणं किमत्र नेति चोद्यं परानिष्टं । उभयोरविशेषणे प्रमाणं यदि वा भ्रान्तिसाधनं[वा] तदाऽपि [तु] तद्ग्राहकप्रमाणस्य सिद्धेरिति च भावयेदिति ।

ननु प्रतिकूलतर्कपराहतत्वादधिकरणातिरिक्ताऽभावो बाधित इत्यादिभिस्तत्वस्य बाधकत्वव्यवहारस्सर्वसंमतः । तर्कश्चाप्रमाणमिति कथं तद्बाध इत्यत आह—**अप्रमाणतयेति**—तादृशतर्कानुग्राह्यप्रमाणानामेव बाधकत्वमभ्युपगम्यते नतु—

केवलतर्कस्य बाधकत्वमित्यर्थः । यदि तर्कस्यैव बाधकत्वमिति निर्बन्धः तथापि विपर्यये-पर्यवसानात्तत्वात् तस्य विपर्ययपर्यवसानरूपविपर्ययबुद्धेः—तस्माद्वह्निरस्तीत्यादि-रूपायाः यथार्थत्वात्तद्दर्शन प्रमाणेन बाध इति नाप्रमाणेन बाध इत्याह—प्रसङ्ग-नीयेति। यथेदं दृष्टमिति—पूर्वदर्शनस्य वर्तमानदर्शनविषयत्वादित्यर्थः । यदा त्विति – समानाधिकरणज्ञानं प्रमेति प्रमामात्रग्राहकस्य स्वग्राहकत्वात् । ईदृशं वेति—ईदृशं प्रमाकरणं वेति ज्ञानस्य एतद्ज्ञानकरणविषयत्वात्स्वयमेव स्वविषयज्ञानजनकमित्यर्थः। अविरुद्धविषयत्वादिति—शब्दशब्दस्य स्वगोचरत्वेन प्रमितिरिति प्रमितेश्च स्वगोचर-त्वेन स्वविरोधः। प्रमाणबाधकस्वात्मबाधे स्वात्मानमलब्ध्वा कथं परं बाधेतेति भावः। तदेवोदाहरति—यथेति—न कदाचिद्वदामीत्येतद्वाक्योक्ते स्वव्याघात इति भावः।

मानस्थापकमानस्य - स्वप्रकाशतया मानस्थापकस्य स्वगोचरत्वे एवं गति-विरोध । मानसंक्षोभकस्य—मानं नास्तीति मानस्य – एवं गतिः—स्वव्याघात इत्यर्थः। व्यावहारिकेति—स्वतोऽव्यवस्थानङ्गीकारेऽनवस्थापातादिति भावः मिथ्या-त्वेति—

ननु मिथ्यात्वसाधकस्य मिथ्यात्वमन्येन साध्यं । नचान्योन्याश्रयः उत्पत्ति ज्ञप्तिप्रतिबन्धाभावादिति चेत् । मैवं । अन्योन्याश्रयस्य दोषत्वाभावो विरोधाभावादिति यदि – तदाऽऽत्माश्रयोऽपि विरोधाभावाद्दोषो न स्यादिति मिथ्यार्थज्ञानान्तरापेक्षणं व्यर्थ-मिति भावः।

अध्याहारादिवैयर्थ्यादाह—अथवेति। उच्छिन्नेति – नियमस्य प्रमाणाधीन-त्वात्तदात्वे तदभावादिति भावः । इष्टापत्तिमभिप्रेत्याह—यद्वेति—तथाचात्माश्रयादिभिः परपक्षखण्डनं न सिध्येत् । दूषणस्य दूष्यनिरास जनकत्वे नियामकाभावेन तत्साधनस्य वा प्रसङ्गादिति भावः । परिहरति—एवं वदत इति ।

---

अक्षरार्थः—अथ प्रमाणखण्डनं निरसितुं तद्विकल्प्य दूषयति-व्याघातेति । प्रमितिपरिभवे—प्रमाणप्रतिषेधे प्रमाणेन कृते सति व्याघात इत्यर्थः। सर्वस्य प्रमाणस्य प्रतिषेधे प्रमाणेन प्रतिषेधायोगादिति भावः। अमानतः—अप्रमाणतः, प्रतिषेधे व्याघातोऽतिप्रसङ्गश्चेत्यर्थः । यदि हि अप्रमाणतः प्रमाणं प्रतिषिध्येत तत्प्रति-षेधोऽपि तत एव प्रतिषेध्यस्स्यात्, त्वत्पक्षश्च सर्वैः प्रतिपक्षैः प्रतिक्षिप्येतेत्यतिप्रसङ्गः स्वपक्षव्याघातश्च भवतीति भावः ।

ननु प्रमाणसिद्धिस्स्वत एवेत्युपगमे आत्माश्रयात् प्रमाणान्तरेणेति वक्तव्या, तथा सति तत्सिद्धिश्च तथेत्यनवस्थेत्यत्राह—मानादिति प्रमाणसिद्धिः स्वतोऽन्यतो वेति विकल्पे यथादर्शनं उभयथाऽपीति ब्रूमः। स्वपरनिर्वाहकसमाधिना आत्माश्रया-

नवस्थयोरपि नावकाश इत्यर्थः। मानात्-प्रमाणात्। मानस्य-प्रमाणस्य सिद्धौ स्वतदितरपरित्राण-स्व-स्वेतरनिर्वाहकत्वमेकप्रवृत्त्या ईदृशी-प्रमा ईदृशं प्रमितिकरणं इति प्रमिति-तत्करण लक्षणकरणेन एकहेलया स्वस्वेतरलक्ष्यसमुदायव्यवस्थापनान्नान-वस्थाऽऽत्माश्रयदोषप्रसक्तिरिति भावः। सर्वैरपि सिद्धान्तिभिः मार्गोऽयमनतिलङ्घनीय इत्याशयेनाह– **साधीयानिति**। समयिभिरखिलैः—सर्वसिद्धान्तिभिरित्यर्थः। व्याव-हारिक प्रमाणव्यवस्थाभिः क्वचित्क्वचित् स्वपरनिर्वाहकसमाधिनैव भवेदिति भावः। अर्थ्यतामिष्यतामित्यर्थः। सार्थनीत्या यथा विपश्चित्प्रयुक्तः सर्वः शब्दस्सार्थं इति वाक्ये तदन्तर्गतपदानामपि सार्थकत्वमविशेषेण संप्रधार्यते तद्वदित्यर्थः। एवमनभ्युपगमे बाधकमाह —**नो चेदिति** कथाः —वाद-जल्प-वितण्डरूपाः। उच्छिन्नलोकव्यवहृति-नियमाः अतिलङ्घितलोकव्यवहारनियमाः, प्रमाणसिद्धमेव व्यवहर्तव्यं, न त्वतथाभूतमिति नियमरहिता इत्यर्थः। कामचाराः स्युः बालोन्मत्तादिवाक्यवत् निरर्थकास्स्युरिति भावः॥ १९॥

॥ इति निरधिष्ठाननिरुपाधिकासत्ख्यातिभङ्गः॥

---

ज्ञानाकाराधिकं हि प्रथितमिदमिति श्वेतपीतादि बाह्यं
तादात्म्ये तस्य साध्ये सहमतिनियमाद्यन्यथैवात्र सिद्धम्।
ग्राह्यात्मत्वान्मृषा स्यान्मतिरपि यदि वा ग्राह्यमप्यस्तु तथ्यं
किंचान्योन्यं विरुद्धैर्युगपदवगतैर्धर्मैरभिन्ना कथं स्यात्॥ २०॥

**सर्वार्थ**—अथ नास्तिक्यमान्द्यात् संविदपलापे दुर्बलबुद्धीनां योगाचाराणा-मात्मख्यातिमपाकर्तुं प्रत्यक्षविरोधप्रतिपिपादयिषया बाह्यार्थसिद्धिं तावदाह —**ज्ञाना-कारेति**। ज्ञायत इदमिति वा जानामीदमिति वा बोधे क्रियारूपाया बुद्धेः कर्मरूपतया प्रसिद्धं श्वेतपीतादिवस्तुजातं बुद्धितत्त्वात् बाह्यमेव भवितुमर्हति; अन्यथा क्षणभेद-सन्ततिभेदयोरपि केनचिज्ज्ञानेन गृहीतावगृहीतौ च क्षणभेदाद्यसिद्धिप्रसङ्गेन दत्तोत्तर-त्वात्। ततश्च भेदमात्रापह्नवे त्र्यन्तकुदृष्टिवादस्य स्वीकारः। भिद्यमानापह्नवे तु माध्यमिकमतावतार इति भावः। एतेन—

अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥

इति प्रलपितं प्रत्युक्तम्। श्वेतपीतादि बाह्यमिति वदतश्चायं भावः— बुद्धिबोध्ययोरभेदं ब्रुवता विरुद्धधर्माध्यासेन भेदः कश्चिदङ्गीकृतो न वा? न चेद्दत्त-मेवोत्तरम्—क्षणभेदाद्यसिद्धिप्रसङ्ग इति। अङ्गीकृतश्चेत्, श्वेतपीताद्यनेकाकार-ग्राहिण्येकत्र ज्ञाने कथं मिथोविरुद्धश्वेतपीतादितादात्म्यसंभवः? मिथो विरुद्धयोरेक-बुद्धिविषयत्ववदेकबुद्ध्याकारत्वमप्यविरुद्धमिति चेन्न; दर्शनादर्शनाभ्यां विशेषात्।

एकत्वविरोधः एकदैकाश्रयत्वविरोधश्च श्वेतपीतादेर्दृष्टः; न त्वेकधीविषयत्वविरोधः; त्वया तु श्वेतपीतादेर्बुद्ध्याकारत्वं वदता बुद्ध्यैक्यं बुद्धिधर्मत्वं वोच्यते; द्वितयमपि व्याघातविघटितम्। अतो बुद्ध्यतिरिक्तार्थस्य बुद्धिवदबाधितोपलब्धिसिद्धत्वात् न तदभावस्साध्य इति। सूत्रितं चैतत् "नाभाव उपलब्धे"रिति। ननु भेदोपलम्भमात्रात् न भेदसिद्धिः; द्विचन्द्रादावपि प्रसङ्गात्। बाधात्तत्र तथेति चेन्न; अविशेषात्। कथमविशेषः? न हि प्रत्यक्षतो बोध्यबाधः; नेदमस्तीति सार्वत्रिकनिषेधाभावात्। अनुमानादिकं तु न स्वोपजीव्यप्रत्यक्षप्रतिषेधक्षममिति चेन्न; ज्वालैक्यादिप्रत्यक्षस्यानुमानादिना बाधाभ्युपगमात्। तत्र प्रत्यक्षस्याचिरनिर्वापितारोपितप्रदीपन्यायेनान्यथासिद्धिशङ्काग्रस्ततया दौर्बल्यमिति चेन्न; इहापि प्रतिबिम्बभेदोपलब्धिन्यायेनान्यथासिद्धिसंभवात्। ततश्च ग्राह्यग्राहकयोरनुमानादभेदसिद्धिरित्यत्राह—तादात्म्य इति। तस्य वेद्यतयैव सिद्धस्य पदार्थस्य वित्तितादात्म्ये सिषाधयिषितेऽस्मिन् सहोपलम्भनियमादिलिङ्गमन्यथैव सिद्धमित्यर्थः। यद्यपि स्वयंप्रकाशवादे वित्तिवेद्ययोस्सहोपलम्भ[नियम]स्सिद्धः, तथाऽपि न तावता तयोर्मिथस्तादात्म्यसिद्धिः; भिन्नस्यापि वेद्यस्य स्वयंप्रकाशसमकाले प्रकाशमानतया तेन सहोपलम्भोपपत्तेः। नियमस्तु स्थिरपक्षे दुर्वचः; कालान्तरे पुरुषान्तरे चासहोलम्भात्। अतः सहोलम्भनियमादभेदो नोलतद्धियोरिति स्वप्रयोजकादप्रयोज्यव्यपदेशः।

ननु यद्यतो भिद्यते न तत्तेन सहोपलभ्यते, यथा घटेन पट इति व्यतिरेकशुद्धया व्याप्तिसिद्धौ कथमप्रयोजकत्वम्? इत्थम्—व्यभिचारेण व्यतिरेकस्याशुद्धत्वात्। त्वत्पक्षे तावत्[स्व]सन्ततिपूर्वापरज्ञानानि सन्तत्यन्तरज्ञानानि च केनचिज्ज्ञानान्तरेणोपलभ्यन्ते। अन्यथा कथं तानि समर्थ्येरन्? ततश्च ग्राह्यग्राहकयोस्तत्र तादात्म्ये सर्वसंविदद्वैतप्रसङ्गः। भेदे तु व्यभिचारसिद्धिः। यदि मन्यसे, सर्वज्ञानानां स्वेस्वे काले स्वेनैव प्रकाशनात् स्वग्राहकज्ञानान्तरेण सहोपलम्भनियमो नास्तीति, एवं सति नीलपीतादेरपि स्वग्राहकेणैकेन ज्ञानेन सहोपलम्भनियमो नास्ति; स्थिरपक्षे कालादिभेदेन पुरुषभेदेन च नीलादेरनियतानेकोपलम्भविषयत्वसिद्धेः। न चैकस्य नीलस्यानेकस्वग्रहणतादात्म्यसंभवः; त्वयाऽपि नैतत् संमन्यते। प्रतिसंवेदनं नीलभेदान्नोपलम्भानियम इति चेन्न; ज्ञानज्ञेयैक्यसिद्धौ प्रतिज्ञानं नीलभेदः; तत्सिद्धौ च सहोपलम्भनियमात्तदैक्यसिद्धिरिति चक्रकापत्तेः। किं च सहभाव एव तावद् भेदसापेक्षः; तदुपलम्भनियमः[तु]अभेदगन्धं न सहते। अतस्तेन कथं तादात्म्यसाधनम्? ज्ञानेनार्थस्य नियतस्सहोपलम्भश्च अत्र किं ज्ञानार्थगोचरमेकं ज्ञानान्तरम्? उत स्वप्रकाशस्वगोचरज्ञानानतिरिक्तप्रकाशः? नाद्यः, ज्ञानोदयकाले ज्ञानार्थगोचरैकज्ञानान्तरादृष्टेः;अन्वयव्यतिरेकिविवक्षायां दृष्टान्ताभावाच्च। अस्ति द्विचन्द्रदृष्टान्त इति चेन्न; अकल्पितस्य चन्द्रस्य कल्पितेन सहोपलम्भनियमाभावात्। अन्यतरस्य सहोपलम्भनियमो विवक्षित इति चेत्; हन्त तर्हि तदुभयतादात्म्यं निदर्श-

यतस्ते कथमसौ नियमस्तस्यैवास्ति [च] नास्ति चेति घटेत ? केवलव्यतिरेकिविवक्षायां [तु] अन्यत्र साध्यसद्भावात् आभासत्वम्। सिद्धो हि स्वेन सहोलम्भाभावेऽपि सर्वबोधानां स्वस्मादभेदः। यद्यसौ न स्यात् सर्वे बोधाः स्वयमेव न स्युरिति माध्यमिकमतप्रसङ्गः।

ननु ग्राह्यस्य स्वग्रहणतादात्म्यमिह साध्यम्; तच्च नान्यत्र क्वचिदस्तीति केवलव्यतिरेकित्वोपपत्तिः स्यात्। मैवम्; सर्वज्ञानानां स्वग्रहणरूपत्वाभ्युपगमेन स्वग्रहणतादात्म्यस्यापि सिद्धत्वात्। व्यतिरेकश्चात्र दुर्वचः; यत् स्वग्रहणतादात्म्यरहितं तत्संहोपलम्भनियमरहितमित्युदाहरणीयाभावात्। मन्यसे हि ग्रहणानामपि स्वग्रहणतादात्म्यम्। आदिशब्देन संवेदनादिहेतुसंग्रहः। संवेदने तावत् यद्येन संवेद्यते तत्तदभिन्नमित्यन्वयव्याप्तिर्नास्ति, संविदन्तरसंवेदने व्यभिचारात्; तदनभ्युपगमेऽपि चानिष्टस्योक्तत्वात्। यद्यतो भिद्यते न तत्तेन संवेद्यते यथा च घटेन पटः, यथा वा घटमात्रज्ञानेन पटः; संवेद्यते च नीलज्ञानेन नीलमिति व्यतिरेकव्याप्तिरस्तीति चेत्; न, अन्वयतो व्यभिचारे व्यतिरेकाव्यभिचारस्याकिंचित्करत्वात्। व्यतिरेकश्चात्र त्वया दुर्वचः, घटपटोदाहरणस्याश्रयविकलत्वात्। संविदात्मना पटादिरूपाश्रयभेदसिद्धिरिति चेत्; अस्त्वेवम्, तथाऽपि पूर्ववद्व्यभिचारो दुर्वारः; संविदन्तरस्य संविदन्तरेण व्यवस्थाप्यत्वस्थापनात्। एतेन भिन्नस्य ग्राह्यत्वेऽतिप्रसङ्गात् संयोगसमवायैकार्थसमवायकारणत्वादीनामव्याप्त्यादिदुःस्थतया ग्राह्यलक्षणत्वायोगाच्च परिशेषात्तादात्म्यमेव ग्राह्यलक्षणमास्थेयमित्यपि निरस्तम्; ज्ञानान्तरेषु ज्ञानान्तरेण गृह्यमाणेषु स्वग्रहणतादात्म्यायोगादेव। किं च अतीतानागतग्राहिषु विज्ञानेषु यदि स्वग्राह्यतादात्म्यं, तदा विज्ञानमेव स्वयमतीतमनागतं वा स्यात्। किं तदानीं तद्ग्राह्यं स्यात् ? अथ नातीतोऽनागतो वा कश्चिद्विषयः; किं तु वर्तमानज्ञानेऽतीतत्वानागतत्वकल्पनामात्रमिति मन्यसे; तथा सत्यतीतानागतविज्ञानग्राहिणि विज्ञानान्तरेऽप्येवं स्यादित्येकक्षणपरिशेषो वा नित्यैकज्ञानपरिग्रहो वा स्यात्।

अपि च—

ग्राह्यग्रहणतादात्म्यं खरशृङ्गाद्यसद्ग्रहे।
अस्ति चेद्व्याहतिर्नो चेद्व्यभिचारस्सुदुस्तरः॥

तादात्म्यं च ग्राह्यलक्षणं व्यवस्थापयता लक्ष्यस्य लक्षणव्यापकत्वमभिसन्धाय किं यस्य येन तादात्म्यं तस्य तेन ग्राह्यत्वमिति नियमो विवक्षितः ? उत लक्ष्यस्य लक्षणव्याप्तत्वमभिसन्धाय यस्य येन ग्राह्यत्वं तस्य तेन तादात्म्यमिति ? न प्रथमः, स्वेनाभिन्नस्य घटस्य स्वेन ग्रहणाभावात्। स्वसंवित्तादात्म्यात्तत्र स्वेन ग्रहणमिति चेन्न; इतःपूर्वं संवित्संवेद्ययोस्तादात्म्यासिद्धेः। न द्वितीयः; संवेदनहेतुदूषणनयेन दत्तोत्तर-

त्वात्। किंच ग्राह्यस्य स्वग्रहणाभिन्नत्वनियमे खरशृङ्गशुक्तिरजतादेरपि तथात्वं प्रसज्येत। न चेतदनुमन्तव्यम्; सत्यासत्ययोस्तादात्म्यायोगात्। योगे वा जैनवादविजयापातादिति। तत्र व्याघातशमनमिच्छतामन्यतरस्वभावपरित्यागप्रसङ्गमाह—ग्राह्यात्मत्वादिति। मिथ्याभूतबोध्यतादात्म्यात् बुद्धेरपि मिथ्यात्वे माध्यमिकमनीषितसिद्धिः; सत्यभूतबुद्धितादात्म्यात् बोध्यस्यापि सत्यत्वे खरशृङ्गकम्बुकलधौतादेरपि सत्यत्वापात इति भावः। उक्तहेतुत्रयस्य साधारणं श्वेतपीतादीत्यनेन पूर्वं सूचितं दूषणान्तरमाह—किंचेति। अयं भावः—निर्विशेषवस्तुप्रकाशो नास्त्येवेति सिद्धे सर्वबुद्धीनां यत्किंचिदनेकग्राहित्वादनेकेषां च मिथस्तादात्म्यायोगादनेकैस्तैरेकस्या बुद्धेरपि तादात्म्यमुपलम्भविरुद्धं न कथञ्चिदपि स्यादिति। एकैकस्य क्रमेणावगतौ बुद्धिभेदात् परिहारः स्यात्, तन्निवृत्त्यै युगपदित्युक्तम्। अथ मन्यसे—बुद्धिबोध्यतादात्म्यमुपदिशतो बुद्धस्यायमभिप्रायः; बुद्धिव्यतिरिक्तस्य बोध्यस्य मिथ्यात्वात्तदव्यतिरेकोपचार इति। यद्येवं बाह्यार्थमिथ्यात्वमिहाभिसंहितं, तत्र सहोपलम्भनियमादयो न साधकाः। बुद्धोपदेशस्तु श्रद्दधानेष्वेव शोभते।

स्थूलास्थूलादिकोटीनां बाधकैर्बाह्यनिह्नवः।
सुन्दोपसुन्दन्यायेन बाधकानां हतैर्हतः॥

अपि च कृत्स्नबाह्यार्थापह्नवेऽनुमानानां स्वोपजीव्यप्रत्यक्षविरोधादनुत्थानमेव।

बोध्यापह्नवयुक्तीनां निस्तारमनुपश्यता।
बोद्ध्रपह्नवयुक्तिश्च सुतरां सुतरा भवेत्॥

न तावद् बुद्धिमात्रं ज्ञाताऽहमर्थः, तद्धर्मतयैव तत्प्रतीतेः।

तथा च सूत्रम्—'व्यतिरेको गन्धवत्तथा च दर्शयती'ति। न च बुद्धावहंत्वक्लृप्तिः; बुद्धिरहमित्यवभासप्रसङ्गात्। नापि बुद्धेराश्रयतयाऽहमर्थकल्पना; निरधिष्ठानकल्पनानङ्गीकारात्। अथ निराश्रयाऽपि बुद्धिः साश्रयतया कल्प्यत इति मन्यसे, तथा सत्यन्यथाख्यातिस्स्यात्। बाधे च सत्येवं वक्तव्यम्। नचाश्रयबाधकं किंचिदबाधितमस्ति; बुद्धयन्यत्वादिकुतर्कैस्तद्बाधे बुद्धिरपि भासमानत्वादिमाध्यमिककुतर्कैर्बाध्येत। तस्मात् ग्राह्यग्राहकापह्नवे गृहीतिरप्यपह्नोतव्या। तदग्रहे वा तयोरपि ग्रहणं स्यादेव। तदिदं "न भानोऽनुपलब्धेरिति" सूत्राभिप्रेतम्। एवं दृग्दृश्यसंबन्धानुपपत्त्या दृश्यमिथ्यात्वमिति कुदृष्टिकल्पनाऽप्युन्मूलनीया। अत्र ह्यनुपपद्यमानसंबन्धोपपादकतया वा दृश्यमिथ्यात्वं कल्प्यते? उत सिद्धस्य संबन्धाभावस्य व्यापकतया? नाद्यः, दृश्यमिथ्यात्वे सुतरां संबन्धायोगात्। न द्वितीयः, दृश्यस्येव दृशोऽपि मिथ्यात्वक्लृप्तिप्रसङ्गात्। न च मेरुमन्दरयोस्संबन्धो नास्तीत्यन्यतरमिथ्यात्वमुभयमिथ्यात्वं वा कल्प्यते। असंबद्धयोस्संबन्धित्वेन भानाद्विशेष इति चेत्, तथा सति तत्संबन्धस्यैव मिथ्यात्वं वाच्यम्, न तु तदुभयस्वरूपस्य। तदसंब[न्ध]द्धस्य तेन वास्तवप्रकाश्यत्वायोगात्तत्प्रकाश्यत्वस्य

काल्पनिकतया प्रकाश्यस्वरूपासिद्धिरिति चेत्, तर्हि काल्पनिकस्याप्यसंबद्धस्य कथं तत्प्रकाश्यत्वमिति चिन्तय। मायामाहात्म्यादिति चेत्, एवं सत्यस्यापि सामग्र्यादि-माहात्म्यादिति यथालोकमवलोकय। किंचासंबद्धस्य वास्तवप्रकाश्यत्वं न घटत इति वदता संबद्धस्यैव वास्तवप्रकाश इति नियमस्त्वया दृष्टः स्यात्; अन्यथा तद्व्यतिरेके तद्व्यतिरेकनियमनिर्देशायोगात्। यदि चासंबद्धस्य प्रकाशमानत्वमयुक्तं मन्यसे, तर्हि दुरपह्नवस्य प्रकाशमानत्वस्य सिद्धये संबन्ध एव कश्चित्कल्पयितुं युक्तः। स तु संप्रति-पन्नसंबन्धेष्वनन्तर्भूतश्चेत्, तदन्यः कश्चिदित्येवाङ्गीकार्यः। अथ तेन तस्य प्रकाशमान-त्वमेव नास्तीति पक्षः, तदा कस्यानिर्वचनीयत्वादि कल्प्येत ? अपि च दृग्दृश्ययोस्संबन्धं प्रतिक्षिपता किं संबन्ध एव नास्तीत्यभिसंहितम् ? उत क्वचित् सन्नप्यसौ प्रस्तुतयोर्ना-स्तीति ? नाद्यः, दूष्यदूषणादिसंबन्धविलोपे स्वव्याघातादिदोषगणोन्मेषात्। न द्वितीयः, यथा संबन्धान्तरमन्तरेण क्वचिदसौ कस्यचित्सिद्धः, तथा दृग्दृश्यभावरूपः संबन्धोऽ-पीति स्वीकर्तुमुचितः। यच्च सविषयवृत्त्यध्यासात् दृश्यवद् दृशोऽपि मिथ्यात्वमिष्यत एवेति, तदप्यसत्; साक्षिणोऽपि स्वदृश्यमिथ्यात्वेन मिथ्यात्वप्रसङ्गात्। अनादित्वात् तस्याकल्पिततया न मिथ्यात्वमिति चेन्न; अनादेर्भावरूपाज्ञानस्यापि तथात्वप्रसङ्गात्। अनादित्वं च तद्वदेव न कल्पितत्वविरोधि। यदि च साक्षिणो न कल्पितत्वं स्यात्, ब्रह्मस्वरूपवत्तस्यापि नित्यत्वप्रसङ्गः। न चैवं स्वीक्रियते, तद्विषयाविद्यास्वरूपस्यापि नित्यत्वप्रसङ्गेन तन्मूलजगद्विवर्तस्यापि नित्यानुवृत्तिप्रसङ्गादिति ॥ २० ॥

---

आनन्द०—अथ बौद्धसाम्यं शून्यवादिसाम्यञ्चेति सङ्गतिमभिप्रेत्याह—अथेति। आत्मख्यातिः चैतन्यमेवाऽऽत्मा तस्यार्थाकारेण ख्यातिरित्यर्थः। एषा हि तेषां परिभाषा स्वसंवेदनं–संवेदनं तावदङ्गीकार्यं। अन्यथा जगदान्ध्यप्रसङ्गात्।

यदाह—धर्मकीर्तिः—"अप्रत्यक्षोपलम्भस्यार्थदृष्टिः न प्रसिद्ध्यतीति"। स्व-प्रकाशसंविदोऽभावो जगत्प्रकाशो न स्यादित्यर्थः।

बाह्यञ्च ग्राह्यं नास्त्येव विकल्पासहत्वात्। उत्पन्न एव मिथ्याज्ञानग्राह्योऽनु-त्पन्नो वा ? नाद्यः। उत्पन्नस्य क्षणिकतया स्थित्यभावात्। अनुत्पन्नस्याऽसत्त्वात्।

नचातीत एव ज्ञानग्राह्यः वर्तमानतावभासताविरोधात्—संबन्धायोगाच्च। जन्यजनकभावस्संबन्धः। इन्द्रियस्यापि ज्ञानविषयत्वप्रसङ्गात्। तस्मात् स्वातिरिक्त ग्राह्यग्राहकविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका। तदुक्तं—

नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्यानुभवो परः॥
"ग्राह्यग्राहकवैधुर्यात् स्वयं सवं प्रकाशते"
अवेद्यवेदकाकारा यथाभ्रान्तैर्निरीक्ष्यते॥

"विभक्तलक्षणग्राह्या ग्राहकाकारविप्लवा"
तथाकृतव्यवस्थेयं केशादिज्ञानभेदवत्" ॥

"यदा तदाऽनु संचोद्या ग्राह्यग्राहकलक्षणा" इति ।

ग्राहको ज्ञाता। केशादिज्ञानं तिमिराद्युपहताक्षाणां केशोण्ड्रत्वादि भ्रम? भेदादेवेत्यर्थः। ग्रन्थान्तरेऽपि—

"उत्पत्त्या यद्यपि स्वेच्छा ज्ञानात्मा परमार्थतः"
तथाऽप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः" ॥

"चित्राभिश्चित्रहेतुत्वात् वासनाभिरुपप्लवात्"
स्वानुरूपेण नीलं च ग्राह्यग्राहकरूषितम्" ॥

प्रविभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते इत्यादि। तस्माद् बुद्धिरेवानादिवासनावशादनेकाकाराऽवभासते इति। बाह्यमेव—भिन्नमेवेत्यर्थः। दत्तोत्तरत्वादिति—क्षणसन्तत्यादेर्ग्राहकस्य ज्ञानस्य भिन्नत्वात्केनचिद्ग्रहणाऽभावे क्षणभङ्गाद्यसिद्धया प्रमाणबाधकस्य प्रामाण्याप्रामाण्योक्तदूषणन्यायस्य तुल्यत्वात् कृतप्रायत्वमितिभावः।

ननु क्षणभेदादयो गृह्यन्त एव परन्तु न ते—ग्राहकज्ञानाद् भिद्यन्त इत्यत्राह—ततश्चेति।

ननु त्रैय्यन्तकुदृष्टिभिरपि जडाजडयोर्भेदोऽभ्युपगम्यत एव तदैक्यानभ्युपगमात्।

नच भेदमिथ्यात्वानभ्युपगम इति वाच्यम्। अभेदशब्देन घटपटाद्यनुक्तौ तदपलापान्माध्यमिकपक्षपातापादनात्, को भेदः? भेदमात्रविवक्षात्वनुपपन्ना भेद्यसत्वानभ्युपगमादिति चेत्। अत्राहुः। भेदापह्नवो भिद्यमानस्य ज्ञानस्य घटपटाद्याकारापह्नवः। तथा च ज्ञानसत्यता। यदि भिद्यमानस्य ज्ञानस्यैवापह्नवः तदा सर्वशून्यतेति भेदः।

ननु तर्हि भेदस्यैवापह्नवोऽस्त्विति चेत् तर्हि तस्य ज्ञानरूपस्वाभावेनाऽऽत्मख्यातित्वाऽयोगादिति।

केचित्तु त्रैय्यन्तकुदृष्टिवादो यादववाद इत्याहुः। अनुक्तोपालम्भपरिहारार्थमाह—एतेनेति।

अविभागः—विभागरहितः। बुद्ध्यात्मा—बुद्धिस्वरूपं—इदं बाह्यं ज्ञानाकारादधिकमित्येतावताऽप्युपपत्तौ। श्वेतपीतादीति। दत्तमिति—दत्तमिवेत्यर्थः।

नन्वत्राप्येकज्ञानविषयत्वमेव तथोच्यत इत्यत्राह—त्वया त्विति।

ननु बुद्ध्यभेदस्य बाधितत्वे मिथ्यात्वमेव ग्राह्यस्यास्त्वित्यत्राह—अत इति। सूत्रितञ्चैतदिति—समन्वयपाद इति शेषः। नाभावः—विषयस्य न शून्यता।

"सहोपलम्भनियमादभेदो नीलतद्धियोः"
भेदस्तु भ्रान्तिविज्ञाने नं दृश्यते तदाविव द्वयोः

रित्युक्तरीत्या भेदवासनारूप दोषमूलोपलम्भमात्मन्यभेदसाधकमिति शङ्कते—नन्विति। कथमिति—किं प्रत्यक्षतो बाधः? उत अनुमानादिति विकल्प्याद्यं दूषयति—नहीति। द्वितीयं दूषयति—अनुमानादिकमिति। आदिशब्दार्थोऽर्थापत्यादिः। अन्यथासिद्धिशङ्काविधुरं प्रत्यक्षं बाधकमिति शङ्कते—तत्रेति। इहापीति-बिम्बप्रतिबिम्बयोर्भेदाभावादिति भावः। सहोपलम्भनियम इत्यादिशब्देन वेद्यत्वं विवक्षितम्।

केचित्तु एकताप्रत्ययादित्याहुः। अन्यथैव सिद्धमिति—तादात्म्याभावेऽप्युपपन्नमित्यर्थः। तदेवोपपादयति—यद्यपीत्यादिना। असिद्धमप्याह—नियमस्त्विति। उपपादयति—कालान्तर इति। व्यतिरेकशुद्धचेति अन्वयव्यतिरेकसहचारस्य ग्राहकस्य शुद्धिः व्यभिचारविरह इत्यर्थः। व्यभिचारमेव दर्शयति—त्वत्पक्ष इति।

ननु तत्रापि न भेदः। अतो न व्यभिचार इत्यत्राह—ततश्चेति—ततश्च क्षणभङ्गादि न सिद्धयतीति भावः। हेतोरभावान्न व्यभिचार इति शङ्कते—सर्वज्ञानानामिति नियमाभावमेवोपपादयति—स्थिरपक्ष इति। सर्वथा व्यभिचारान्न मुक्तिरित्याह—नचेति। त्वयापीति। देवदत्त यज्ञदत्तज्ञानानामेकनीलग्राहकाणामैक्यप्रसङ्गादिति। प्रतिसंवेदनमिति—ऐक्यव्याप्तचन्यथानुपपत्या प्रतिसंवेदनं नीलादिभिन्नाः कल्प्या इति भावः। किञ्च सहोपलम्भनियमो विरुद्धत्वान्न साधक इत्याह—किञ्चेति। असिद्धयादीनपि दूषयितुं हेतुं विकल्पयति—ज्ञानेनेति—स्वप्रकाशरूपं स्वगोचरं यद्ज्ञानं स्वयं तदेवेत्यर्थः। नाद्य इति—तद्दर्शने च तत्रैव व्यभिचार इति भावः। सहोपलम्भनियमश्चान्वयव्यतिरेकी यद्वा व्यतिरेकीति विकल्प्याद्य आह—अन्वयव्यतिरेकीति। द्विचन्द्रशब्दो द्विगुः द्वौ चन्द्रावित्यर्थः। असाधारण्यं परिहरति—नन्विति। सर्वभूतानां—स्वतादात्म्येऽपि स्वग्रहण तादात्म्यं नास्तीत्यर्थः। नैवमिति—स्वतादात्म्यमेव स्वग्रहणतादात्म्यमित्यर्थः। व्याप्यत्वासिद्धिमाह—व्यतिरेकञ्चेति। संवेदनादीत्यादिशब्देन ग्राह्यलक्षणत्वादिग्रहणं। यत् येन संवेद्यते तत् तदभिन्नं। संवेद्यते च नीलादीति प्रयोगस्सूचितः। अनिष्टस्योक्तत्वादिति—संवेदनसन्ततेस्तन्नानात्वस्य क्षणिकत्वस्य-चासिद्धिप्रसङ्गादित्युक्तमिति भावः। घटमात्रज्ञानेनेति—घटपटसमूहालम्बनव्युदासः। यद्यप्यन्वय व्यभिचारे व्यतिरेकव्याप्तिरपि नास्त्येव, संविदन्तरसंवेद्य एव व्यभिचारात्

तथापि तदभ्युपगम्याह—नान्वयतो व्यभिचारेऽपीति—व्यभिचारज्ञानमात्रविरहस्य व्याप्तिग्राहकतयाऽन्वयव्यभिचारज्ञाने सति तदभावाद्व्याप्तिग्रहो न स्यादिति भावः। घटपटेति—ज्ञानातिरिक्तस्य त्वयाऽनभ्युपगमादिति भावः।

ननु संविद्भिन्नतया परं घटपटादिकं नास्ति संविदात्मनाऽस्त्येवेत्याशङ्कते—संविदात्मनेति। पूर्ववदिति—संविदन्तरसंवेदने व्यभिचार इत्यर्थः। तदेवोपपादयति—संविदन्तरस्येति।

ननु बुद्धेर्बोध्यस्य च भेदबुद्ध्या केन सम्बन्धेन ग्रहः ? न तावत्संयोगेन। अतीतानागतद्रव्याद्रव्येष्वव्यापनात्। नापि समवायेन। तत्समवेतत्वाभावात्। नापि कार्यकारणभावरूपसंबन्धेन। इन्द्रियादावति प्रसङ्गात्। नापि ज्ञानजन्यातिशयाधारत्वरूपाधारत्वसन्बन्धेन अतीताद्यव्यापनात्। तादात्म्यमेव परिशेषाद्ग्राह्यलक्षणमितीमामाशङ्कामपाकर्तुमनुवदति—एतेनेति। अव्याप्त्या दूषयति—ज्ञानान्तरेष्विति। किञ्चेति।

ननु स्वपक्षेऽपि कथमतीतादीनां ग्रहः ? न तावत्संयोगादिः चिरातीतादिष्वसम्भवात्। नापि स्वरूपसंबन्धः, विषयस्वरूपस्यासत्वात्। ज्ञानस्वरूपस्य सर्वसाधारण्यात्। नापि यः कश्चित् उक्तदोषादिति चेत्। अत्राहुः। इदं रजतमिति रजतज्ञानं प्रति सामग्री न पटज्ञानं। तत्र रजतज्ञाने रजताकारत्वमवस्थाविशेषः स च तत्तत्कारणविशेषाधीनः स एव विषय विषयि भाव सम्बन्धस्त्वेकनिष्ठ एव।

नन्वेवं ज्ञाने अर्थाकारत्वस्वीकारे साकारवादः ज्ञानावस्थायास्तादृशत्वेऽपि विषयस्य ततो भिन्नत्वात्।

नच सौत्रान्तिकमतापातः। अनुमेयत्वानभ्युपगमात्।

नचैवं ज्ञानस्यापि तदाकारत्वे किमर्थेनेति वाच्यम्। ज्ञानस्य तदाकारत्वाऽभावेऽपि किं विषयेण। ज्ञानमात्रात्तद्विषयाद्व्यवहारोपपत्तेः न। प्रत्यक्षे विषयस्यावश्यकत्वात्परोक्षेऽपि तथैवेति। तथात्वेति—तत्वस्याप्यभावप्रसङ्गात्।

किञ्च प्रत्यक्षे विषयस्य सत्वेऽपि परोक्षे विषयस्याजनकत्वात्सविषयकत्वं न स्यात्। यदीदं रजतमिति विषयस्य प्रतीतिसिद्धत्वाद्विषयसिद्धिः तदा प्रकृतेऽपि ज्ञानस्य रजताकारत्वेऽपि-विषयस्य ततो भेदेन प्रतीतेस्तदतिरिक्तार्थसिद्धिरिति।

अन्ये तु सामग्रीविशेषणप्रभवज्ञानस्वरूपपक्षेऽप्यव्यवस्थयाऽर्थेन संबन्धः। सच अतीतादावप्यस्त्येव वर्तमानहेतुर्दैवात्संयोगादिरित्याहुः।

संयोगो न व्यासज्यवृत्तिभेदवान् तथा च पटे पटाऽसत्वेऽपि तन्निरूपित भेदवद्विषयस्याऽभावेऽपि ज्ञानेऽपि द्रव्यनिरूपितसंयोगः तदाश्रितद्रव्येषु स्वाश्रय-संयोगस्सम्भवत्येव। न च घटे ज्ञानसम्बन्धालाभ इति वाच्यम्। अर्थे ज्ञानसम्बन्ध-स्याऽसत्वेऽपि ज्ञाने तत्सम्भवेन व्यवहारोपपत्तेः।

नच तथा सति हिमवद्विन्ध्ययोरपि संयोगप्रसङ्गः। संयोगकारणाभावात्। अत्र तु ज्ञानसामग्र्या एव तद्धेतुत्वादिति वदन्ति। अथेति। अतीतादेर्वर्तमानत्वान्न तादात्म्यानुपपत्तिरिति भावः। तथासतीति। अतीतज्ञानलक्षणानामागामिनाञ्च सद्भावे प्रमाणाभावादिति भावः।

नन्वतीतानागतविषयज्ञानग्राहिणि तत्तदतीतज्ञानादीत्येवं तेषां स्वाभिन्नत्वे विरोधाभावादिति चेन्न। तानि ज्ञानानि स्वात्मानं वर्तमानतया गृह्णन्ति, उतान्यथा। आद्ये अतीतत्वग्राहकप्रमाणाभावान्नित्यता स्यात्, द्वितीयेत्वतीतत्वादिना स्वस्य ग्रहे ज्ञानमेव न सिद्ध्येत्। स्वरूपेण ग्रहे ज्ञानव्यक्तिभेदो न सिद्ध्येदिति–नित्यमेकमेव ज्ञानं स्यात् तदाह—नित्यैकेति। पूर्वमतीतादिग्रहे दोष उक्तः संप्रति तु तुच्छग्रहे दोषमाह - अपि चेति—आदिपदेन शुक्तिरजतादिग्रहः। व्याहतिरिति–सदसदात्मकत्वप्रसङ्गादिति भावः। लक्ष्यस्य—लक्ष्यतावच्छेदकस्य।

ननु घटो घटेनैव गृह्यते ज्ञानस्यैव घटत्वादिति शङ्कते—स्वसंविदिति। संवेदन-हेतुदूषणनयेनेति—संविदन्तरसंवेदने व्यभिचाराऽभावादित्यर्थः।

ननु संविदन्तरेऽपि न व्यभिचारः। तत्रापि साध्यमस्तु। न च सर्वसंविदामैक्यं क्षणिकत्वभङ्गप्रसङ्गेनापसिद्धान्तस्स्यादिति वाच्यम्। युक्तियुक्तत्वस्यैव सिद्धान्तत्वादि-त्यत्र पूर्वोक्तदूषणं स्मारयति—किञ्चेति। आदिशब्देनातीतादेर्ग्रहणम्। अन्यतर-परित्यागस्य विरोधिशमनार्थमावश्यकत्वे किं सत्यत्वस्य त्यागः, उत मिथ्यात्वस्येति विकल्प्याद्यं दूषयति—मिथ्याभूतेति। द्वितीय आह—सत्यभूतेति कम्बुकलधौतम्—शुक्तिरजतमित्यर्थः।

ननु नीलपीतादीनां स्वरूपेण भाने कथंविरोधः? किञ्च बोध्यस्य बुद्धितादात्म्यं नाम बोध्य व्यतिरेकेण शून्यत्वमेवेति कथं वा विरोध इत्यत्राह—अयं भाव इति - तत्र किं बाह्यार्थशून्यत्वे प्रमाणं वदति? उतोपदेशमात्रे? आद्य आह—तत्र सहोपलम्भ इति—विरुद्धत्वादिति भावः। द्वितीय आह—बुद्धोपदेशस्त्विति। स्थूलास्थूलेति एकं वस्तु-एकस्वभावं नत्वनेकस्वभावं। सर्वञ्च वस्तु स्थूलमस्थूलं ह्रस्वं दीर्घञ्च दृश्यते। नचान्यतरस्य—स्वभावत्वं नियामकाभावात्। तस्माद्दुर्वचतया–निस्वभावमित्यर्थः। सुन्दोपसुन्दन्यायेनेति—बाधकेन यदि बाह्यार्थो बाध्यते तद्दृष्टान्तेन बाधकमपि-बाध्यत इति भावः।

किञ्चानुमानप्रवृत्तौ हि सुन्दोपसुन्दन्याय उपासनीयः। तदेव न प्रवृत्तेर्बाधितत्वादित्याह - अपिचेति। बोध्यसाधनं सुकरमित्याह—**बोध्येति**। **तद्धर्मतयेति**—तथा च भेदप्रत्ययेन बाधितत्वाद्‌बुद्धेर्न ज्ञातृत्वमित्यर्थः। **व्यतिरेको गन्धवदिति** गन्धवती पृथिवीति—व्यतिरेकदर्शनवज्जानामीत्यहमर्थापेक्षया व्यतिरेकस्सिद्धः "जानात्येवायं पुरुष" इति श्रुतिश्चात्र प्रमाणमित्यर्थः। बुद्धेरहन्त्वे बाधकमाह—**नचेति**।

नन्वस्तु भेदप्रत्ययः तथाऽप्यहमर्थः कल्पितोऽस्त्वित्यत्राह— **नापीति**। **निरधिष्ठानेति**—तस्याधिष्ठानान्तरकल्पनायामनवस्थाप्रसङ्गात्। अनुभवाभावाच्चेति भावः।

ननु निरधिष्ठानाध्यासो नास्त्येव बुद्धिरूपाधिष्ठाने साश्रयत्वाध्यास इति शङ्कते—**अथेति**। **तथा सतीति**—निराश्रयस्य साश्रयत्वेन भानाङ्गीकारादिति भावः।

किञ्च तथा सति तदाश्रयस्यात्मत्वं स्यादबाधितत्वादित्याह—**बाधे चेति**। **बुद्ध्यन्यत्वादिति**–यत् बुद्ध्यन्यत् तन्मिथ्या—यथा शुक्तिरजतं। विगीतञ्च तथेति तर्केरित्यर्थः। **तदग्रहे वा**—बुद्ध्यङ्गीकारे वेत्यर्थः। "नाभावोऽनुपलब्धे"रिति सूत्रेण कुदृष्टिमतमपि दूषितमिति सूचयितुं साम्यं दर्शयति–**एवमिति**। **दृश्यस्यैवेति**—सम्बन्धाभावस्य मिथ्यात्वकल्पनस्य दृश्य इवं दृश्यपि सत्वादित्यर्थः। सम्बन्धाभावमात्रस्य कल्पकत्वं उत संबन्धिभिन्नत्वेन भासमानयोस्संबन्धाभावस्य ? नाद्य इत्याह—**नचेति**। द्वितीयं शङ्कते—**असंबद्धयोरिति**। ननु सम्बन्धमात्रस्य न मिथ्यात्वकल्पकत्वं करप्रकाशनिरोधकस्येति नातिप्रसङ्ग इति शङ्कते—**तदसंबद्धस्येति**—किमसंबद्धमात्रस्य प्रकाश्यत्वानुपपत्तिः, उत पारमार्थिकत्वस्याऽसंबद्धस्येति विकल्प्याऽऽद्य आह—**तर्हीति**। द्वितीय आह—**एवमिति**—किञ्चासंबद्धस्य किं वास्तवप्रकाश्यत्वं युक्त ? मुत प्रकाश्यत्वं मात्रं यद्वा प्रकाश्यत्वमात्रमेव नास्तीति–विकल्प्याऽऽद्य आह—**संबद्धस्येति**। द्वितीय आह–**यदि चेति**। अन्त्य आह—**अथेति**। **प्रस्तुतयोरिति**—दृक् दृशोरित्यर्थः। **विषयेति**–तथा च तद्विशिष्टदृशोऽपि मिथ्यात्वमित्यर्थः। **साक्षिणोऽपीति**—मिथ्याभूतार्थावच्छिन्नत्वमात्रान्मिथ्यात्वविषयस्य मिथ्यात्वात्तदवच्छिन्नत्वात्साक्षिण इति भावः। **नचैवं स्वीक्रियत इति**—नच तथा स्वीकर्तुं शक्यमित्यर्थः। **तन्मूलेति**—अविद्याप्रकाशस्य नित्यत्वे अविद्याया अपि नित्यत्वं। नहि प्रकाशेऽननुवर्तमाने तद्विषयनिवृत्तिः। शुक्तिरूप्यादावपि तत्त्वापातादिति भावः॥ २०॥

---

**अक्षरार्थः**—अथ संविन्मात्राभ्युपगमेन बाह्यार्थमपलपतां योगाचाराणां आत्मख्यातिनिराकरणाय बाह्यार्थसिद्धिमाह—**ज्ञानाकाराधिकमिति** इदं जानामीति बोधे क्रियारूपाया बुद्धेः कर्मरूपतयेदन्त्वेन भातं श्वेतपीतादिवस्तुजातं बुद्धितत्त्वात् बाह्यतया भिन्नमेव भवितुमर्हतीति अर्थः। ग्राह्यतया तदपन्हवे क्षणभेदसन्ततिभेदयोरपि केनचित् ज्ञानेन ग्रहणे अग्रहणे वा क्षणभेदाद्यसिद्धि प्रसङ्गः। अतः स्वपक्षविरुद्धः

प्रत्यक्षविरुद्धश्च बाह्यार्थाग्रह इति भावः। ज्वालैक्यप्रत्यक्षे सत्यपि ज्वालाभेदानुमानवत् अनुमानेन ग्राह्यतादात्म्यसिद्धिः स्यदित्यत्राह—तादात्म्य इति। ग्रहण-तादात्म्य इत्यर्थः। तस्य वेद्यतयेव सिद्धस्य पदार्थस्य। साध्ये—सिषाधयिषिते। सहमतिनियमादिः—सहोपलम्भनियमादिः। अत्र—स्वयंप्रकाशे वस्तुनि। अन्यथैव—विषयग्रहणकाले स्वयंप्रकाशमानतयैव सिद्धमित्यर्थः। लिङ्गप्रयोगोऽनर्थकमिति भावः। ग्राह्यग्रहणतादात्म्यसिद्धौ मिथ्याभूतार्थविषयकज्ञाने सति ज्ञानस्यापि मिथ्यात्वं, मिथ्याभूतार्थस्य वा सत्यत्वं स्यादित्येवं प्रसज्येत। अत एवोक्तं—

ग्राह्यग्रहणतादात्म्यं खरशृङ्गाद्यसंग्रहे।
अस्ति चेद्वयाहतिर्नोचेत् व्यभिचारस्सुदुस्तरः॥

इति। श्वेतपीतादीत्यनेन पूर्वमेव सूचितं दूषणान्तरमाह-किं चेति। अन्योन्यं परस्परं विरुद्धैर्युगपदवगतैः-युगपद्भासमानैः श्वेतपीतादिविषयैः। धीः-ज्ञानं कथमभिन्ना स्यात्? श्वेतपीतयोः परस्परं विरोधेनैक्यासंभवात् विभिन्नाभ्यां ताभ्यां कथं तदुभयविषयिण्या बुद्धेरैक्यं वक्तुं शक्यमिति भावः॥ २०॥

---

हन्त त्र्यणुकान्तपक्षे कणभुगभिमतो नावयव्यस्ति कश्चित्
संघातो नांशतोऽन्यस्तदणुषु न भवेद् दृश्यतेत्यन्धचोद्यम्।
संसर्गैर्विश्वमेतद् घटत इह यथादृष्टि दृश्याणुपक्षे
नादृष्टं कल्पयामः परिणतिभिरसौ दृश्यतादिः श्रुते स्यात्॥२१॥

सर्वार्थं—ननु बाह्यार्थ एव न संभवति, यत्प्रत्यक्षबलादात्मख्यातिभङ्गं मन्यसे; गुणानां तावद् द्रव्यासिद्धावसिद्धेः; द्रव्याणां च पृथिव्यादीनामवयविसंघातादिविकल्पासहत्वादैन्द्रियिकद्रव्याभावेऽतीन्द्रियस्य दूरनिरस्तत्वाच्चेत्यभिप्रायेण चोदयति—हन्तेति। हर्षार्थोऽयं हन्तशब्दः, वाक्यारम्भार्थो वा। अवयवी तावत्सौगतैरिव त्र्यणुकान्तवादिभिरपि नाङ्गीक्रियते; संघातस्तु [स्व]संघातिभ्यो नातिरिच्यते, तत्संबन्धश्च स्वरूपातिरिक्तो न संभवति। संभवेऽपि संघातिनामप्रत्यक्षत्वे तत्संघातस्य प्रत्यक्षत्वं न स्यात्; संघातिनां चान्ततः परमाणुपरिशेषात्, तेषां चाप्रत्यक्षत्वादिति भावः दूषयति—इत्यन्धचोद्यमिति। तत्त्वनिरीक्षणासामर्थ्यादन्धत्वोपचारः। परमतेन तावत्परिहारमाह—संसर्गैरिति। त्रसरेण्ववयवा एव परमाणव इति पक्षे तत्संसर्गविशेषैरेव ह्रस्वत्वदीर्घत्वत्र्यश्रचतुरश्रवृत्तवक्रकुटिलत्वादिविचित्रसन्निवेशं विश्वमेतद्यथादर्शनं दृश्यं स्यादित्यर्थः। वयं तु न त्रसरेणुव्यतिरिक्तं तदवयवादिकं कल्पयामः, येन तदप्रत्यक्षतया विश्वाप्रत्यक्षत्वशङ्का स्यादित्यभिप्रायेणाह—नादृष्टमिति।

ननु श्रुतेऽपि सूक्ष्मद्रव्ये प्रत्यक्षत्वादिकं न मन्यसे, अतस्तदात्मकस्य प्रपञ्चस्य कथं प्रत्यक्षत्वादिकमित्यत्राह—परिणतिभिरिति। असाविति दुरपह्नवत्वाभिप्रायम्। आदिशब्देन तत्तदिन्द्रियान्तरविषयलाभः तत्तत्कार्यविशेषहेतुत्वादिकं च संगृह्यते।

रूपस्पर्शादिजननाद् दृश्यत्वस्पृश्यतादयः।
तन्नाशात्तदभावश्च युज्येत श्रुतिचक्षुषाम् ॥

---

आनन्द०—आक्षेपसङ्गतिमाह—नन्विति। अवयवीति—व्यक्तिविकल्पादिभिरिति शेषः।

ननु संबन्ध एवातिरिक्तस्सम्भवतीत्यत्राह—तत्संबन्धश्चेति—परमाणूनां परस्परं क्रमेण सम्बन्धः? उत यौगपद्येन। आद्यस्य संघातत्वाभावात्। द्वितीयस्य वा स्वभेदाभावेनासम्भवात्। सर्वेषामेकदेशमात्र एव सम्बन्धे पृथुत्वायोगादप्रत्यक्षतापत्तेः। तदुक्तं—

"षटकोण युगपद्योगात् परमाणोष्षडंशता।
तेषामप्येकदेशत्वे पिण्डस्स्यादणुमात्रकः" ॥ इति।

सम्भवेऽपीति—सम्बन्धप्रत्यक्षस्य सम्बन्धि प्रत्यक्षाधीनत्वादित्यर्थः। यथादर्शनं दृश्यं स्यादिति—नहि—संहतादीनामदृश्यत्वे सङ्घातस्याप्यदृश्यत्वनियमः—दूरे केशानां प्रत्येकमदृश्यत्वेऽपि सङ्घातस्य दृश्यत्वदर्शनादिति भावः। श्रुतेऽपीति श्रुतिसिद्धसूक्ष्मद्रव्ये—प्रकृतिद्रव्य इत्यर्थः। तत्तदिन्द्रियान्तरेति—चक्षुरादिभिर्ग्राह्यत्वमित्यर्थः। आदिशब्देन प्रतिबन्धकत्वादिग्रहणम्।

ननु वाय्वाकाशादेरपि चक्षुर्ग्राह्यत्वं स्यादित्यत्राह—रूपेति—रूपवत्वेन चाक्षुषत्वं स्पर्शवत्वेन स्पार्शनत्वं। आदिशब्देन एकेन्द्रियग्राह्यत्वद्वीन्द्रियग्राह्यत्वादयो विवक्षिताः। तन्नाशात्—तन्नाशाद्रूपाद्यभावान्न दृश्यत्वादय इति श्रौतानुरोधात्सिद्धमित्यर्थः ॥ २१ ॥

---

अक्षरार्थ०—अथ प्रत्यक्षविरुद्धो बाह्यार्थापह्नव इति पूर्वमुक्तमयुक्तम्। वेदान्तिभिर्नैयायिकवत् अवयविनोऽनभ्युपगमेन परमाणुरूपाणां बाह्यार्थानां प्रत्यक्षस्यैवाप्रसक्तेरिति चोदयति—हन्तेति। हर्षार्थोऽयं हन्तशब्दः। त्रय्यन्तपक्षे-वेदान्तिपक्षे। कणभुगभिमतः-कणादाभिमतः। अवयवी-सङ्घातातिरिक्तः कश्चिन्नास्तीत्यर्थः। सङ्घातस्यैव प्रत्यक्षता भवतीत्यत्राह—सङ्घातेति। नांशतोऽन्यः अवयवेभ्योऽन्यो न भवति, अवयवाश्चाणव एवेत्याशयेनाह—तदिति। अणुषु—परमाणुषु। न भवेद्दृश्यता—प्रत्यक्षतेत्यर्थः। अवयव्यनभ्युपगमे परमाणूनामेव सङ्घाताभ्युपगमात् परमाणूनामदृश्यतया सङ्घातस्याप्यदृश्यतेति चोद्याशयः। तन्निरस्यति—अन्धचोद्यमिति।

तत्त्वनिरीक्षणासामर्थ्यादन्धत्वोपचारः। तत्र प्रथमतो नैयायिकमतेन समाधत्ते—संसर्गैरिति। प्रत्येकं परमाणूनामदृश्यत्वेऽपि परस्परसंसर्गविशेषैर्हि ह्रस्वत्व-दीर्घत्व-चतुरश्रत्वादि संनिवेशं विश्वमेतत् यथादर्शनं दृश्यं भवति इत्याह—घटत इह यथादृष्टीति। स्वमतेनाह-दृश्याणुपक्ष इति। त्रसरेणव एव अवयवः, न तु तदवयवः इति पक्षे इत्यर्थः नादृष्टं कल्पयाम इति अदृश्यं परमाणुं न कल्पयाम इत्यर्थः।

ननु श्रुतेऽपि सूक्ष्मद्रव्यप्रकृत्यादौ प्रत्यक्षत्वादिकं न मन्यसे कथं तदात्मकस्य प्रपञ्चस्य प्रत्यक्षत्वमित्यत्राह परिणतिभिरिति। परिणामविशेषेण प्रत्यक्षत्वं भवतीत्यर्थः। आदिशब्देन तत्तदिन्द्रियान्तर विषयत्वलाभः। तदुक्तं—

रूपस्पर्शादिजननात् दृश्यत्वस्पृश्यतादयः।
तन्नाशात् तदभावश्च युज्येत श्रुतिचक्षुषाम्॥

इति॥ २१॥

---

**आत्मख्यातौ मतीनां मिथ इतरतया संविदन्या न सिध्ये-**
**दन्योन्यार्थानभिज्ञा कथमिव च धियो वादजल्पादि कुर्युः।**
**मानाभासादिसीमा न कथमपि भवेद् ग्राह्यमिथ्यात्वसाम्यात्**
**सर्वं तत्संवृतेश्चेन्न खलु सदितरा साऽपि तत्तन्नियन्त्री॥ २२॥**

सर्वार्थ—एवं बाह्यख्यातेरसंभवं परिहृत्य स्वात्ममात्रख्यातेरनुपपत्तिमाह—आत्मख्याताविति। ग्राह्यस्य ग्राहकतादात्म्ये संविदन्तरासिद्धया मतान्तरप्रसङ्गः प्राक् प्रदर्शितः। तत्र स्वप्रवृत्तिविरोधं चाह—अन्योन्येति। वादिबुद्धिविषयादिकमनुल्लिखन्त्या प्रतिवादिबुद्धया कथं तत्प्रतिषेधव्यवहारः प्रवर्त्येतेति भावः। उपलक्षणमेतत् शिष्याचार्यादिसंव्यवहाराणाम्। प्रसङ्गान्तरमाह—मानाभासेति। आदिशब्देन तर्कतदाभाससद्वचनासद्वचनादिसंग्रहः। सर्वत्र समाधानं शङ्कते—सर्वमिति। विकल्पाभिप्रायेण प्रतिक्षिपति—न खल्विति। अयं भावः—संवृतिः संवित्स्वरूपादन्या वा, अनन्या वा? आद्ये कथं तदन्यस्यास्तेन ग्राह्यत्वम्? अगृह्यमाणायाश्च स्वरूपसत्यत्वाभावात् संविदधीनसिद्ध्यभावाच्च कथं मानतदाभासादिव्यवस्थापकत्वम्? न द्वितीयः, संविदनन्यया हि संवृत्या सिद्धं संविदैव सिद्धमित्युक्तं भवति। तथा च त्यज्यतां तन्मिथ्यात्वाभिसन्धिः; अन्यथा संवित्स्वरूपमेवापह्नुतं स्यात्; तस्यास्तदभिन्नत्वादिति॥ २२॥

आनन्द०—पूर्वशेषतया पूर्वसङ्गतिरित्याह—एवमिति। शिष्याचार्यादीत्यादिशब्देन सब्रह्मचार्यादिग्रहः।

ननु न खल्वित्यादिना तदभेदोक्तौ किन्दूषणमुक्तं स्यादित्यत आह—अयं भाव इति। ननु तद्भिन्नत्वमप्यस्तु तद्ग्राह्यत्वं नास्तीत्यत्राह—अगृह्यमाणाश्चेति—अगृह्यमाणत्वेऽपि सत्यत्वमस्त्वित्यत्राह—संविदधीनेति—विषयसत्तातदभावयोस्तत्प्रयोजकत्वाऽभावादज्ञानस्वरूपमात्रस्य सर्वसाधारण्याच्चेति भावः। मूलं धिय इति—निषेध व्यवहारस्य निषेध्यविषयत्वाज्जनकीभूतधियां तद्विषयाभावे न स्यादिति भावः।

धीमन्तः पुरुषा विवक्षिता इति केचित् ग्राह्यमिथ्यात्व पक्ष इति—अतिरिक्तं ग्राह्यन्न चेत् ज्ञानस्यैव ग्राह्यत्वपक्ष इत्यर्थः। ग्राह्यमिथ्यात्वसाम्यादिति क्वचित्पाठः॥ २२॥

---

अक्षरार्थ०—एवं बाह्यख्यातेरसंभवं परिहृत्यात्मख्यातौ दूषणान्तरमाह—आत्मख्याताविति। मतीनां बुद्धीनां, मिथः-अन्योन्यं, इतरतया भिन्नतया, अन्यासंवित् न सिद्ध्येत्-ग्राह्यग्राहकतादात्म्यादिति भावः। स्वप्रवृत्तिविरोधं चाह—अन्योन्येति। वादिबुद्धिविषयादिकमनुल्लिखन्त्या प्रतिवादिबुद्ध्या कथं तत्प्रतिषेधव्यवहारः प्रवर्ततेति भावः। शिष्याचार्यादिसंव्यवहाराणामनुपपत्तिरप्युपलक्षणम्। प्रसङ्गान्तरमप्याह-मानाभासेति। आदिशब्देन तर्कतदाभासादिसंग्रहः। कुत इत्यत्राह—ग्राह्येति। मानतदाभासयोरपि ग्राह्यमिथ्यात्वाविशेषादिति भावः। संवृतिमहिम्ना सर्वमुपपद्यत इत्याशंक्य—सर्वमिति। निरस्यति—न खल्विति मिथ्याभूतायास्संवृतेस्तत्तन्नियन्तृत्वं न संभवतीत्यर्थः। मिथ्याभूतायास्संवृतेस्सत्यभूतसंवित्तादात्म्यायोगेन तद्विषयत्वाभावात् तदधीनसिद्ध्यभावाच्च कथं मानतदाभासादिव्यवस्थापकत्वमिति भावः॥ २२॥

---

एकाकारप्रतीतिर्निजमतिविहता नैव दृष्टे गुरुत्वं
व्यर्थोऽस्मिन् संमतिस्ते बहिरपि नियतं वक्ष्यते ग्राह्यलक्ष्म।
व्याघातो लिङ्गसंख्यापरिमितिवचसां नास्त्युपाधिप्रभेदा-
देकं नानाकृति स्याद्भिजगुणभिदया बाधिते धीः स्वहेतोः॥२३॥

सर्वार्थं—अन्यानपि बौद्धोक्तान् बाह्यापह्नवप्रकारान् प्रत्याचष्टे-एकाकारेति॥ यत्त्वाहुः—इदं नीलमित्यादिबुद्धौ नीलादिरेक एवाकार उपलभ्यते; स चेत् स्वार्थस्य तर्हि निराकारा बुद्धिर्न प्रकाशेत; तदप्रकाशे च कुतोऽर्थप्रकाशः? अतः प्रकाशमान एक आकारः प्रकाशमानस्य ज्ञानस्यैव स्यादिति। अत्र ब्रूमः एकाकारप्रतीतिः स्वमतिव्याहता, ज्ञानार्थयोर्भिन्नाकारतयैव सर्वरुपलब्धेः। अर्थो हि नीलाद्याकारः; ज्ञानं तु

तत्प्रकाशाद्याकारमिति। न च 'अर्थेनैव विशेषो हि निराकारतया धिया'मिति नियमः; भेदकान्तराभावदशाविषयत्वादेवं व्यपदेशस्य; अस्ति ह्याधारत आधेयतः कारणतः कार्यतश्च ज्ञानस्य विशेषः; अतः परस्परभिन्नाकारतयैव ज्ञानार्थयोरुपलम्भ इति। तथाऽपि नीलादेर्ज्ञानाकारत्वकल्पनयैव सर्वव्यवहारसिद्धेः बाह्यार्थकल्पनायां गौरवप्रसङ्ग इत्यत्राह—नैवेति। यदि वयं सौत्रान्तिकवज्ज्ञानाकारवैचित्र्येणार्थस्वभावं कल्पयामः तदैवमनुयुज्येमहि। दृष्टत्वादेव हि बाह्यार्थमभ्युपगच्छाम इति भावः।

ननु विप्रतिपन्नो बाह्यार्थः, ज्ञानं तु संप्रतिपन्नम्। अतः प्रकाशमानो नीलादि-राकारस्संप्रतिपन्नस्यैव भवितुमर्हति; सिद्धसाध्ययोः सिद्धस्यैवावलम्बनोयत्वादिति; तत्राह—व्यर्थेति। यदि वादिविप्रतिपत्त्या वस्त्वतिवर्तेत, तदा हि तत्संमतिरन्वेषणीया। न चैवमस्ति; अन्यथा सर्ववादिनां परपक्षभङ्गस्यायत्नत्रलभ्यतया साधनदूषणादिप्रयोगो निरर्थकः स्यात्। न च मत्संमतिविरहात् त्वत्पक्षं सर्वमसिद्धं मन्यस इति भावः।

ननु बाह्यस्य नीलादेः प्रकाशमानत्वमौपाधिकमनौपाधिकं वा? नाद्यः; अप्रकाश-स्वभावस्योपाधिसहस्रेणापि प्रकाशापादनायोगात्। न द्वितीयः; अनौपाधिकप्रकाशस्य स्वयंप्रकाशत्वज्ञानत्वयोरवर्जनीयत्वात्। ततश्च वित्तिवेद्यभेदासिद्धेस्तादात्म्यमेव ग्राह्यलक्षणं स्यादित्याह—बहिरपीति। अयं भावः—न तावन्नीलादेरौपाधिकप्रकाशत्वे प्रकाशासिद्धिः; हेतुफलभावस्य त्वयाऽपि स्वीकारात्। अन्यथा कथमसत्स्वभावस्य हेतुसहस्रेणापि सत्त्वापादनमिति माध्यमिकपर्यनुयोगे किं प्रतिवक्ष्यसि? अतः प्रत्यक्षानु-पलम्भप्रतिष्ठापितहेतुविशेषाधीनं प्रकाशमानत्वं बाह्यत्वेऽपि नीलादेरप्रतिक्षेप्यमिति स्थिते, ग्राह्यता किं नियामकेन लक्षणान्तरेण? तदन्वेषणे च तस्यापि तथेत्यनवस्था-पातात्। न हि वयं वैभाषिकसौत्रान्तिकादिवदेकसामग्रीप्रसूतत्वं स्वाकारसमर्पणक्षण-हेतुत्वमन्यद्वा किंचिदनियतं ग्राह्यलक्षणं ब्रूमः, येनातिप्रसङ्गः स्यात्; किन्तु सामग्री-नियमितत्वात् सदसद्वा किंचित् केनचिदेव ग्राह्यम्। एवमनभ्युपगमे किंचित् प्रति वक्तव्यमिदं। तदन्यस्य कार्यतां कथं वक्ष्यसि? कारणादन्यस्य कार्यत्वेऽतिप्रसङ्गं च कथं वारयसि? तर्हि वैभाषिकाद्यनुसार्य सत्कार्यवादे स्थातुमिच्छसीति।

एवं च दूष्यवाच्यादेस्तादात्म्यं दूषणादिभिः।
कल्पनीयं त्वयेति स्यात् स्वव्याघातादिरक्षतः ॥

नन्वव्यवस्थितस्वभावं न किंचिदपि तत्त्वं भवति; अन्यथाऽतिप्रसङ्गात्। न च व्यवस्थितस्वभावं किंचिदत्राह्यम्। एकमेव हि भिन्नलिङ्गं व्यपदिश्यते, नक्षत्रं तारका तिष्य इति। एकत्र योषिति दारा इति बहुवचनम्। एकमेव हि परिमाणमणु-महद्दीर्घह्रस्वात्मना विकल्प्यते; अन्यदप्येवंप्रायम्। अतो न बाह्ये क्वचिदपि तत्त्व-व्यवस्थेत्यत्राह—व्याघात इति। उक्तेषु लिङ्गवचनाद्यव्यवस्थितिस्तावन्न वस्तुव्यवस्था-मन्यथयति, ततच्छब्दस्वभावप्रतिनियतत्वाद् व्यपदेशभेदस्य। न हि मनुष्यादौ दृष्टं

नपुंसकत्वादि नक्षत्रादौ निर्दिश्यते; न चैकां स्त्रियं दारा इति बह्वीमभिमन्यन्ते। परिमाणे व्यपदेशभेदस्तु प्रतियोग्युपाधिकः। तत्तदपेक्षया त्र तत्तद्रूपत्वं तस्य तात्त्विकमेव। तथाऽन्यदपि। एवमनभ्युपगमे त्वन्मतमपि निर्मूलं स्यात्। बुद्धिरपि हि न सर्वं प्रति बुद्धिः; सर्वस्याप्ययत्नतः सर्वज्ञत्वप्रसङ्गात्। सा च न सर्वं प्रति कार्यं कारणं वा; अनभ्युपगमात् अनुपपत्तेश्च। न च सर्वत्र सदा सती, विभुत्वनित्यत्वापातात्। न च सर्वं प्रतीष्टाऽनिष्टा वा; वेदनासाधारण्यप्रसङ्गात् रागद्वेषानुत्थानप्रसङ्गाच्च। नापि नीलैकाकारा बुद्धिः पीतादिभिराकारिणी; सर्वाद्वैतप्रसङ्गादिति भावः। अथ स्यात्—नीलमुत्पलं दीर्घः पट इत्यादिषु एकमनेकस्वभावं बाह्यार्थवादिभिरङ्गीक्रियते, तच्चायुक्तम्; नीलपीतादेरिवानेकस्य एकस्वभावत्वायोगादेकस्यानेकस्वभावत्वायोगाच्च। अतो निःस्वभावमेव सर्वं बाह्यमिति। तत्राह—एकमिति। न खल्वेकमेवानेकमिति वयं पश्यामः, प्रतिजानीमहे वा, येन विरोधः स्यात्; किंत्वेकमनेकसंम्बन्धीति। न चैवं विरोधगन्धः; तवापि विशेषमात्ररूपस्यैकस्य संवेदनस्य स्वेतरसर्वप्रतिसम्बन्धितयाऽपि विरोधप्रसङ्गात्। नीलोत्पलसंविदि च जातिगुणग्राहिण्यामाकारभेदस्यापरिहार्यत्वात्; नीलपीतग्राहिण्यां तु किं पुनः ?

किञ्च सर्वज्ञसंवित्तौ सर्वाकारानुबन्धनः।
सर्वस्वभावता वा स्यान्निःस्वभावत्वमेव वा॥

ननु च बाधितोऽपि द्वितीयचन्द्रादिः पुनरपि प्रकाशमानो दृश्यते; न चात्र बाह्यं किंचिदप्यधिष्ठानं कारणं वा पश्यामः; अतो ज्ञानस्यैवाधिष्ठानत्वं समनन्तरप्रत्ययस्य च कारणत्वं कल्पयितुं युक्तमित्यत्राह—बाधित इति। अयं भावः—अन्वयव्यतिरेकावधारितं प्रथमभ्रमाधिष्ठानमेव बाधितानुवृत्तिभ्रमेऽप्यधिष्ठानम्; तत्कारणमेव चानुवृत्तं कारणम्; अतो बहिरप्यधिष्ठानकारणयोस्संभवान्नान्तरत्वं कल्प्यमिति॥ २३॥

---

आनन्द०—प्रसङ्गसंगतिरित्याह—अन्यानपीति।

'आकारो भासते सचेत्संविदस्सतु सम्मतो भिन्नस्यानुपलम्भाच्च गौरवाद्बाधन'मिति हेमचन्द्रमतमनुवदति—यत्त्वत्राहुरिति। निराकारेति—निर्विशेषस्य प्रकाशायोगादिति भावः।

केचित्तु निराकारत्वे तुच्छतया शशशृङ्गवत्स्वप्रकाशसिद्धिर्न स्यात् संविदोऽसिद्धौ कुतो सिद्धिरित्याहुः। ज्ञानन्त्विति। तस्य—नीलाद्यर्थस्य प्रकाशरूपावस्थातद्वाचकशब्दप्रयोगहेतुरित्यर्थः। आदिशब्देन ज्ञानत्वाऽहन्त्वाद्याकारो विवक्षितः। भेदकान्तरेति।

ननु तत्र विषयो विशेषणस्स्यात् तत्रापि प्रकाशाकारस्यापि सत्वात्कथं भेदकान्तराभाव इति चेन्मैवं। साक्षात्वादि भेदकान्तराऽभावे कुतो विशेष एवार्थेनैवेति-

विवक्षितः, तत्प्रकाशाकारस्य तदधीनत्वादर्थेनैवेति युक्तम्। अधीनत्वञ्च तद्गोचर-सामग्रीप्रयुक्तत्वमिति भावः। **ननु संभेदकान्तराभाव इति**। विशेषणं व्यर्थमित्यत्राह— **अस्ति हीति**—निराकारत्वस्य तु प्रतीतिनिरपेक्ष प्रतीतिविषयाकारशून्यत्वमभिप्रेतमिति भावः। **तथापीति**।

यद्यपि प्रमाण तदाभासादिव्यवस्थया व्यवहारो न सिद्ध्यत्येव, तथाऽपि प्रायिकाभिप्रायमिदमिति ध्येयम्। **यदि वयमिति**—इदं जानामीति विलक्षणतया उभयं प्रतिपन्नं। नच प्रतिपत्तौ विप्रतिपत्तिः। सर्वसंप्रतिपत्तेः। प्रतिपत्तिश्चार्थसाधिकेति तदभाव एवार्थनिवर्तक इति भावः।

अप्रकाशस्वभावस्य प्रकाशो नैव विद्यते नह्युपाधिशब्देनाऽपि नोलिमा श्वेतिमा भवेत्। तस्मात्प्रकाशस्वाभाव्ये बाह्यं किञ्चिन्न सिद्ध्यतीति पक्षं शङ्कते—**नन्विति**। ननु बाधशङ्कायां न प्रतिज्ञामात्रं परिहार इत्यत्राह—**अयं भाव इति**। **हेतुफलभाव-स्येति**—हेतुभावस्य फलभावस्य चेत्यर्थः। यथा दण्डादेः कदाचिदेव घटजनकत्वं घटस्य वा कदाचिदेवोत्पत्तिमत्वं तद्वत् कदाचिदेवार्थस्य प्रकाशमानत्वमित्यर्थः।

ननु क्षणिकत्वपक्षे हेतुत्वञ्च फलत्वञ्च–वस्तुनो यावत्सत्वं सम्भवत्येवेत्यत्राह— **अन्यथेति**। यदि पूर्वकाले वस्त्वसत्तदा सत्वं कथमपि न स्यादिति क्षणिकविज्ञानसन्ततिर्न स्यादित्यर्थः। **प्रत्यक्षानुपलम्भेति**—अन्वयव्यतिरेकाभ्यां प्रतिष्ठापित इत्यर्थः।

केचित्तु प्रत्यक्षानुपलम्भः योग्यानुपलब्धिः घटादौ प्रकाशमानत्वस्य कदाचिदनु-पलम्भात्कादाचित्कतया हेतुविशेषाधीनत्वादिति भाव इत्याहुः। **लक्षणान्तरेण** ग्राह्यता-प्रयोजकान्तरेण। **तदन्वेषण इति**—

ननु तर्हि लक्षणमात्रस्योच्छेदः गुणाश्रयत्वादिकमपि कुत्र वर्तत इति जिज्ञासा-परम्परयाऽनवस्थापातादिति चेदत्राहुराचार्याः। येषां स्वरूपमनुगतधर्मग्रहणमन्तरेण दुर्ग्रहं तत्र लक्षणापेक्षा। यथा नियतपूर्वसत्वादिलक्षणे ग्राह्यत्वञ्च प्रत्येकमेव ग्रहीतुं शक्यते लक्षणग्रहणवदिति न तत्र लक्षणापेक्षेति—**तात्पर्यमिति**। सौत्रान्तिकादिवदित्यादिशब्देन मायिनां—ग्रहणम्। **एकसामग्रीप्रसूतत्वमिति**।

ननु वैभाषिकपक्षेऽर्थस्य दण्डादिक्षणप्रसूतत्वमाद्यस्य ज्ञानस्येन्द्रियक्षणप्रसूतत्वं द्वितीयस्येन्द्रियज्ञानक्षणप्रसूतत्वमिति कथमेकसामग्रीप्रसूतत्वमिति चेत्। अत्राहुः। एकत्वं सामग्र्याः एककालीनत्वं। तथा चाऽर्थस्य ज्ञान समानकालमुत्पन्नस्य ग्राह्यत्वा-दिति। वयन्तु—

"ज्ञानप्रसूते सामग्री विषयेण समन्ततः।
ग्राह्यलक्षणयोगेन बाह्यं वस्तु प्रकाशते"॥ इति।

विभज्य वैभाषिकपक्षस्य सङ्ग्रहकारैरुपन्यासाद्वैभाषिकशब्दो वैभाषिकैकदेशिपर इति ब्रूमः। अन्यद्वेति—तदध्यस्ततत्वात्मकादित्यर्थः। अनियतत्वं अव्यापकत्वमिति। अतिप्रसक्तत्वञ्चालयविज्ञाने ब्रह्मणि चाऽव्याप्तिः। रूपरससुखादौ चातिव्याप्तिरिति ध्येयम्। येनातिप्रसङ्गस्स्यादिति—एकसामग्रीप्रभवरूप रस-सुख-दुःखादेः परस्परग्राह्यत्वाऽभावात्। यत्संविदेकसामग्रीप्रसूतं तत्तया ग्राह्यमिति लक्षणम्। अधिपतिप्रभृतीनामपि प्रवृत्तिविज्ञानविषयतापातात्। नापि स्वाकार समर्पणक्षणज्ञानहेतुत्वमिति सौत्रान्तिकोक्तं युक्तं, स्वाकारसमर्पणक्षणो हेतुर्यस्येति विग्रहो वा? उत स्वाकारसमर्पणः क्षणश्चासौ हेतुरिति विग्रहः? नाद्यः। अर्थाकार समर्पकहेतुजन्यत्वविवक्षायां ज्ञानस्यार्थजन्यत्वात्-स्वविषयत्वप्रसङ्गः। न द्वितीयः। स्वाकार समर्पकस्य विषयत्वे आलयविज्ञानादेर्विषयता न स्यात्। स्वाकारसमर्पकत्वस्य वा किं लक्षणमिति विचारे कारणत्वविवक्षायामिन्द्रियादावतिप्रसङ्गः। कथञ्चित्किञ्चिन्निरुच्यते चेत्तस्याऽपि तथेत्यनवस्थेतिभावः। सदसद्वेति—तत्काले विद्यमानमविद्यमानञ्च।

ननु सौत्रान्तिक—वैभाषिकपक्षे यथा तथा वाऽस्तु। तदन्यस्य ग्राह्यलक्षणत्वेऽतिप्रसङ्गः कथं परिहर्तव्य इति शङ्कां तदन्यस्य कार्यलक्षणत्वसमाधिना निराकरोति—एवमिति। वैनाशिको माध्यमिकः। अतिप्रसङ्गान्तरमाह—एवञ्चेति—दूष्यस्य दूषणादन्यत्वेऽतिप्रसङ्गाद्वाच्यस्य वाचकादन्यत्वेऽतिप्रसङ्गान्नाश्यस्य नाशकादन्यत्वेऽतिप्रसङ्गान्निवृत्तेश्च निवर्त्यादन्यत्वेऽतिप्रसङ्गाद्दूषणतादात्म्यादिकं कल्प्यमिति व्याघातक्षणिकत्वादिभङ्गश्च स्यादित्यर्थः।

भिन्नलिङ्गपरिमाणादावव्यवस्थितिदर्शनात्
न किञ्चिदपि तत्त्वं स्यात् विचारे तु विपश्चितामिति।

हेमचन्द्रोक्तमनुवदति—नन्विति। व्यवस्थितमेवाङ्गीक्रियतामित्यत्राह—नचेति। एकमेव हीति—एकस्य नक्षत्रस्य विरुद्ध लिङ्गत्रयायोगादिति भावः। एकत्रेति—एकत्वबहुत्वयोर्विरोधादिति भावः एकमेव हीति—एकस्मिन्द्रव्ये विरुद्धपरिमाणा योगादिति भावः। अन्यदपीति—पुत्रपितृत्वादिकमित्यर्थः। तत्तच्छब्देति—अर्थे विरुद्धस्याऽभावान्न व्यवस्थितस्वभावत्वं हीयेतेति भावः।

ननु शब्दोऽपि बाह्यवस्तु तस्याऽव्यवस्थितस्वभावेन शून्यत्वे तन्न्यायेन सर्वं शून्यं स्यादित्यत्राह—न हीति। नक्षत्रादौ—नक्षत्रवाचिशब्दादौ। नह्यनेकस्वभावत्वमात्रं विरुद्धं किन्तु विरुद्धानेकस्वभावत्वं। तथा च मनुष्यादौ दृष्टलिङ्गानामेव विरुद्धत्वात्-तेषां च शब्देऽभावात् तद्विलक्षणं किञ्चित्पारिभाषिकं लिङ्गत्रयमिति न दोषः।

केचित्तु शब्दस्वभावत्वे हेतुमाह—नहीतीत्याहुः। तथा न संख्याऽपि वास्तव-मङ्गीक्रियते अपि तु शब्दसाधुत्वार्थं प्रयुज्यते। न चैकामिति।

केचित्तु संख्याशब्दवद्दारशब्दोऽपि बहुवचनान्तो बह्वीष्वेव प्रयुज्यते नत्वेक-स्मिन्वस्तुनीत्याह—नचैकामिति।

ननु व्यपदेशभेदस्यार्थनिबन्धनत्वाऽभावेऽतिप्रसङ्गस्स्यादित्यत्राह—तत्तदपेक्षया चेति। बुद्धिरिति—प्रकाशिकेत्यर्थः। सर्वस्यापीति—सर्वेषां-सर्वबुद्ध्यधीनार्थप्रकाशा-ङ्गीकार इति भावः। अनुपपत्तेश्चेति—भाविनां भूतं प्रति कारणत्वस्य भूतस्य भविष्यत्-प्रति कार्यत्वस्य चानुपपत्तेरित्यर्थः। तुल्यन्यायेन सुख दुःखयोरपि साधारण्यं स्यादित्याह—वेदनेति—वेदना सुखादिरूपस्कन्धः। "विज्ञानस्कन्धजन्य सुखदुःखादिप्रवाहो वेदना-स्कन्ध" इति बौद्धोक्तेः।

किञ्च लोकसिद्धरागाद्युच्छेदस्स्यादित्याह - रागेति—सुख दुःखादिवैषम्यस्य तद्धेतुतया तदभावादिति भावः।

ननु यथा नैल्यस्य शौक्ल्यात्मकत्वं विरोधान्न युक्तं, तथा नीलस्योत्पलस्वभावत्वं पटस्य दीर्घादिस्वभावत्वञ्चेत्याशङ्कते—अथेति। किञ्चानेकसंबन्धित्वमात्रं विरोध? उताऽनेकात्मकत्वमिति? विकल्पमभिप्रेत्याद्य आह—तवापीति। एकस्य संवेदनस्य तत्तद्भेदाङ्गीकारेण सर्वप्रतिसंबन्धित्वान्न द्वितीय इत्याह—नीलोत्पलेति। तृतीय आह—नील पीतेति—समूहालम्बनरूपायामित्यर्थः। भवन्मते बद्धस्य सर्वज्ञत्वाङ्गीकारात्कथं शङ्कोत्थानमित्याह—किञ्चेति। संवित्तिः—संवेदनम्।

"बाधितस्य द्विचन्द्रादेरधिष्ठानं न विद्यते।
बाह्यं ततस्सर्ववस्तु शून्यमित्याह गौतमः"॥

इति—पक्षं शङ्कते—ननु चेति।

ननु तत्र बाह्यमेवास्तु अधिष्ठानं। तस्याऽऽरोपितस्य चन्द्रस्य बाधितत्वात्। अतः परिशेषाद् ज्ञानमेवाऽधिष्ठानमित्यर्थः। नन्वस्त्वधिष्ठानं तथापि-दोषतया बाह्यं वस्तु कारणं सिद्ध्येदित्यत्राह—समनन्तरेति संस्कारस्य समनन्तरप्रत्यय इति सौत्रान्तिक-परिभाषा। स च ज्ञानस्य सूक्ष्मरूपं न तु स्वहेतोरेव भवतीति। सत्यं। स हेतुर्न बाह्यः। असम्भवात्। अपि तु ज्ञानमित्युक्तौ कः परिहार इत्यत्राह—अयं भाव इति।

ननु प्रथमभ्रमस्यापि ज्ञानमेवाधिष्ठानमस्त्विति चेत्। मैवं। सत्यस्य चन्द्र-स्याधिष्ठानत्वात्तिमिरादीनाञ्च दोषतया कारणत्वादिति भावः मूलं बाधिते—चन्द्रे पुनः। धीः। स्वहेतोः—अधिष्ठानदोषाभ्यां भवतीत्यर्थः॥ २३॥

**अक्षरार्थं०**—अन्यानपि बाह्यापह्नवप्रकारान्निरस्यति—**एकाकारेति**। इदं नीलमित्यादिबुद्धौ नीलादिरेक एवाकार उपलभ्यते। स चेदर्थस्य, तर्हि निराकारा बुद्धिः स्यात्, तथाविधा च न प्रकाशेत, बुद्धेरप्रकाशेऽर्थप्रकाशो न संभवति, अतः प्रकाशमान-एकाकारः प्रकाशमानस्य ज्ञानस्यैवेति केचित् वदन्ति। तत्रैकाकारप्रतीतिः निजमतिविहत्तेत्युच्यते। स्वमतिव्याहतः, ज्ञानस्य अर्थस्य च भिन्नाकारतयैवोपलब्धेः। अर्थो हि नीलाद्याकारः, ज्ञानं तु तत्प्रकाशाद्याकारमिति सर्वानुभवात्। नीलादेः ज्ञानाकारत्वकल्पनयैव सर्वव्यवहारसिद्धेः बाह्यार्थकल्पनायां गौरवप्रसङ्ग इत्यत्राह—**नैवेति**। कल्पनायामेव गौरवं दोषः स्यात् न तु दृष्टाभ्युपगमे। विप्रतिपन्नो बाह्यार्थः, संप्रतिपन्नं तु ज्ञानम्। अतः प्रकाशमानो नीलादिराकारः संप्रतिपन्नस्यैव भवितुमर्हति। सिद्धसाध्ययोस्सिद्धस्यैवावलंबनीयत्वात् इत्यत्राह—**व्यर्थेति**। यदि वादिविप्रतिपत्त्या वस्त्वतिवर्तेत तदा हि तत्संमतिरन्वेषणीया। न चैवमस्ति, अन्यथा सर्ववादिनां परपक्षभङ्गस्यायत्नलभ्यतया साधनदूषणादिप्रयोगो निरर्थकः स्यात्। अत अस्मिन् विषये ते संमतिः व्यर्था निष्प्रयोजनेत्यर्थः।

ननु बाह्यस्य नीलादेरप्रकाशस्वभावत्वे प्रकाशापादनायोगात्, प्रकाशस्वभावत्वे स्वयंप्रकाशत्व ज्ञानत्वयोरवर्जनीयत्वात् वित्तिवेद्यभेदासिद्धिरित्यत्राह—**बहिरपीति**। अन्वयव्यतिरेकशालिसामग्रीविशेषबलात् बाह्यस्य स्वभावतः प्रकाशमानस्यापि नीलाद्याकारस्य प्रकाशमानत्वमप्रतिक्षेप्यमिति वित्तितादात्म्यमेव ग्राह्यलक्षणमिति वक्तव्यम्। किं तु सामग्रीनियतिबलात् केनचिदेव प्रकाशमानत्वं बाह्यार्थसाधारणं ग्राह्यलक्षणमिति भावः।

अथ नक्षत्रं तारका तिष्य इत्येकस्यैव विभिन्नलिङ्गव्यपदेशेन, एकस्यां योषिति दारा इति निर्देशेन एकस्यैवाणुमहद्दीर्घह्रस्वात्मना विकल्पनेन च विरुद्धत्वात् वस्तुनि विकल्पायोगात् बाह्यार्थं एव न स्यादित्यत्राह—**व्याघातेति**। विभिन्नलिङ्गसंख्यापरिमाणवचनानामुपाधिभेदात् विरोधो नास्तीत्यर्थः। लिङ्गवचन व्यपदेश भेदस्य तत्तच्छब्दस्वरूपप्रतिनियतत्वेन अर्थानुबन्धित्वाभावात्, परिमाणे व्यपदेशभेदस्य तु तत्तत्प्रतियोगिविशेषापेक्षया तत्तद्रूपस्य तात्त्विकत्वाच्चेति भावः।

ननु नीलमुत्पलमित्यादौ बाह्यार्थस्यैकस्य नीलत्वोत्पलत्वरूपानेक स्वभावविरोधात् निस्स्वभाव एव स्यात् बाह्यार्थ इत्यत्राह—**एकमिति**। न खलु एकमेवानेकमिति वयं पश्यामः। येन विरोधस्स्यात्। किं तु एकमनेकसंबन्धीति। न चैवं विरोधः। तवापि नीलोत्पलसंविदि जाति-गुण-ग्राहिण्यामाकारभेदस्यापरिहार्यत्वात्। बाधितानुवृत्तिस्थले द्विचन्द्रभ्रमे बाह्याधिष्ठानकारणाद्यभावेन ज्ञानस्यैवाधिष्ठानतायाः समनन्तरप्रत्ययस्यैव कारणतया वक्तव्यतया तत्रार्थाकारेण ज्ञानस्यैव ग्रहणात् सर्वत्रार्थाकारो ज्ञानस्यैवेति शङ्कायामाह—**बाधित इति**। बाधिते—बाधितानुवृत्तिस्थले। धीः—ज्ञानं ( भ्रमः ) स्वहेतोः—प्रथम भ्रमाधिष्ठानमेव अधिष्ठानं, तत्कारणमेव च कारणमिति भावः॥ २३॥

धीत्वात्स्वान्यार्थशून्या विमतमतिरिति स्वोक्तिबुद्धयादि भग्नं
ज्ञानज्ञानेऽतिचारः क्षणिकविविधधीसन्ततेः संमतत्वात् ।
दृष्टान्तस्साध्यशून्यो न च निरुपधिकासत्प्रतीतं क्वचिन्नः
तावन्मिथ्यात्वक्लृप्तौ न तु फलति तवाशेषबाह्यार्थभङ्गः ॥२४॥

सर्वार्थः—अथानुमानतोऽपि बाह्यापलापमनूद्य दूषयति—धीत्वादिति ॥ एवं ह्याहुः—यः प्रत्ययस्स निरालम्बनः यथा स्वप्नादिप्रत्ययः तथा च विमतिपदमिति । तदेतदन्ववादिषुः—

स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः ।
प्रत्ययस्स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥

इति । तत्र स्वोक्तिबाधस्तावत्—अयं प्रयोगो यदि न कंचित् प्रत्ययं साधयितुं प्रवृत्तस्तदा नैरर्थक्याद्भग्नः । अथ साधयितुम्; तदा सोऽपि प्रत्ययः पक्षीकृतो न वा ? आद्ये स्ववाक्यजन्यबुद्धेः स्वेतरालम्बनाभावसाधनाद् बुद्धयन्तरस्य निरालम्बनत्वं न सिध्येत्, अतस्तदर्थं वाक्यमतदर्थं भवतीति व्याघातः । बहिष्कारेऽपि सालम्बनत्वनिरालम्बनत्वविकल्पेन व्याप्तिभङ्गव्याघातौ स्याताम् । स्वबुद्धिविरोधस्तु—यद्यसौ बुद्धिः पक्षीकृतबुद्धयन्तराकारतया निरालम्बनत्वमवलम्बेत, तर्हि सिद्धं बुद्धेः स्वेतरालम्बनत्वम् । अथ स्वाकारतयैव, तथाऽपि बुद्धयन्तराणां निरालम्बनत्वासिद्धिः । नच बुद्धयन्तराकारो बुद्धयन्तरस्य निरालम्बनत्वम्, सर्वबुद्धीनां सर्वाकारत्वप्रसङ्गेन व्याघातापसिद्धान्तमतान्तरोत्थानप्रसङ्गः । आदिशब्देन प्रवृत्तिसंग्रहः । बुद्धिसिद्धा[न्ति]न्तानामपि प्रवृत्तिर्न निष्प्रयोजना; अप्रवृत्तेरेव प्रसङ्गात् । सप्रयोजनत्वे तु साधकबुद्धयारूढं तत्प्रयोजनं तदात्मकं, ततोऽन्यद्वा ? आद्ये वर्तमानत्वभविष्यत्त्वविरोधः । द्वितीये तु बुद्धेः स्वेतरालम्बनत्वमपरिहार्यम् । अनैकान्तिकत्वमाह—ज्ञानेति । अयं भावः—यदि ज्ञानान्तरगोचरं किमपि ज्ञानं न स्यात्, क्षणिकबुद्धिसन्तानभेदाभ्युपगमो भज्येत । अतस्संविदन्तरग्राहिणि ज्ञाने स्वेतरालम्बनत्वं स्वीकृतम् । तस्य पक्षीकारे स्वमतविरोधः; अपक्षीकारे तु तत्रातिचार इति । विविधशब्देन आलयविज्ञानप्रवृत्तिविज्ञानचित्तचैत्तादिकल्पनाभेदसंग्रहः । स्वप्नादिदृष्टान्तस्य साध्यविकलत्वेन व्याप्त्यसिद्धिमाह—दृष्टान्त इति । इदमत्राकूतम् । न हि वयं स्वप्नादिधियां स्वविषयतादात्म्यमभ्युपगच्छामः । नापि बाह्यालम्बनशून्यत्वं, तत्र वाऽन्यत्र वा सत एव स्वप्नादावपि भानात् । तिष्ठतु वा स्वप्नार्थसृष्टिपक्षः; पक्षान्तरेऽपि ह्याहुः—

जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा ।
तद्देशे वाऽन्यदेशे वा स्वप्नज्ञानस्य गोचरः ॥

इति । न च जागरज्ञानेषु तद्वदन्यथाख्यातिरूपत्वमपि साधयितुं शक्यम्; बाधाद्यभावात् । तत्र च सूत्रं वैधर्म्याच्च न स्वप्नादिवदिति । नन्वसद्विषयत्वे साध्ये स्यादेव दृष्टान्तसिद्धिः; अन्यथाख्यातिवादिभिरपि भ्रान्तेरंशतस्तथात्वस्वीकारादित्यत्राह—

**न चेति**। निरुपाधि कासद्विषयत्वसाधने दृष्टान्तासिद्धिरेव; भ्रमविषयसंसर्गतादात्म्ययोरपि सामान्यतः क्वचित्सिद्धत्वात्, तदसिद्धौ च तद्भ्रमायोगात्। निषिध्यमानौ च तादात्म्यसंसर्गौ तत्तत्सत्यवस्त्ववच्छिन्नावेव निषेधविषयाविति भावः। सोपाधिकासद्विषयत्वसाधनं तु निश्शेषबाह्यार्थनिह्नवायोगाद् बाध कासिद्धेश्च न युक्तम्। असद्विषयत्वमात्रं तु सर्वेषां देशान्तरादावसत्त्वात् सिद्धमेवेत्यभिप्रायेणाह—तावदिति ॥ २४ ॥

---

**आनन्द०**—पूर्वसङ्गतिमेवाभिप्रेत्याह **अथानुमानत इति**। प्राञ्चः श्लोकतोऽनुमानं सञ्जग्रहुरित्याह—**तदेतदिति**। स्वोक्तिबुद्ध्यादिबाध इति मूले बाधशब्दः प्रत्येकं संबध्यत इत्यभिप्रायेणाह—तत्र **स्वोक्तिबाधस्तावदिति**—अनेनाऽनुमानेनाऽनुमितिर्जायते ? नवा ? आद्य आह—**अर्थमिति**। द्वितीय आह—**अथेति**। **स्वेतरेति**—स्वेतराऽऽलम्बनं बुद्ध्यन्तराणां निरालम्बनत्वं तदभावो बुद्ध्यन्तराणां सालम्बनत्वं तस्य साधनादित्यर्थः। **अतदर्थं भवतीति**—तद्विरुद्धार्थं भवतीत्यर्थः। सालम्बनत्वपक्षेऽत्र व्यभिचाराद्व्याप्त्यभावः। तदभावपक्षे बुद्ध्यन्तराणां निरालम्बनत्वसाधकत्वाऽभावाद्व्याघात इत्यर्थः। **पक्षीकृतेति**—बुद्ध्यन्तराकारस्य स्वभिन्नत्वेन ज्ञानातिरिक्तस्यालम्बनस्य सत्त्वादिति भावः। **अथेति**—स्वस्यैव निरालम्बनत्वमाकारो विषयः तर्हि पक्षीकृतानां न निरालम्बनत्वसाधनमिति भावः।

ननु स्वस्य निरालम्बनत्वमाकारा ज्ञानान्तराणामप्याऽऽकार इति चेत्तत्राह—**नचेति**—ज्ञानान्तराकारस्य ज्ञानान्तराकारत्वे घटगोचरत्वाद्याकारा अपि स्युरिति घटादिज्ञानमेव घटाभावादिज्ञानं निरालम्बनज्ञानमेव सालम्बनज्ञानमिति स्वानुमितेः सर्वबुद्धि सालम्बनत्व निरालम्बनत्वविषयत्वादिना व्याघातः, नीलबुद्धेः पीतबुद्धित्वं क्षणिकसन्तानबुद्धेरेवाऽक्षणिकबुद्धित्वेनापसिद्धान्तः; एकस्यैव सालम्बनत्वनिरालम्बनत्वादिप्रसङ्गेन जैनमतप्रसङ्गश्चेत्यर्थः। **बुद्धिसिद्धान्तिनां**—बुद्धेर्बोध्यत्वसिद्धान्तिनां योगाचाराणामित्यर्थः। **साधकबुद्ध्यारूढम्**—प्रवर्तकज्ञानविषया। तदात्मकत्वं साधकबुद्ध्यात्मकत्वम्। **आद्य इति**—ज्ञानस्य वर्तमानत्वात्प्रयोजनस्य भावित्वात्कथमैक्यमिति।

ननु ज्ञानज्ञानेऽतिचार इत्यनुपपन्नं घटादिज्ञानतुल्यतया पक्षसमत्वादित्यत्राह—**अयं भाव इति** नीलाद्यर्थगोचरं ज्ञानं प्रवृत्तिविज्ञानं अहमाकारं ज्ञानमालयविज्ञानं चित्तं वासना चेत्यं सुख-दुःखादि। तदुक्तं—

"तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत्स्यात्प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥
वासनानि च यच्चित्तं चैत्यं दुःखादिकं स्मृतम्" ॥ इति।

आदिशब्देन रूपविज्ञान—वेदनासंज्ञासंसारस्कन्धाः शब्दादिषु च प्रत्ययाः आलम्बनसमनन्तरसहकार्यधिपतिरूपाः कार्यप्रत्ययाः दुःखसमुदये निरोधमार्गाः चत्वारः इदम्प्रत्ययफलमित्यादि तत्सूत्राद्युक्तकल्पनाभेदा विवक्षिताः।

ननु कथं दृष्टान्तस्य साध्यवैकल्यं स्वाप्नधीविषयाणामभावादित्यत्राह-- इदमत्राकूतमिति--तत्र किमभिप्रायेण दृष्टान्तत्वं । किं स्वविषयतादात्म्यस्य साध्यत्वे ? यद्वा बाह्यार्थशून्यत्वस्य साध्यत्वे ? नाद्य इत्याह --नहि वयमिति। द्वितीय आह-- नापि--बाह्ये ति ।

ननु स्वप्नस्य स्मृतित्वपक्षेऽनुभूतस्यैव स्मरण नियमात्तज्जन्मन्यननुभूतस्याऽपि स्वाप्नधीदर्शनाद्विरोध इत्यत्राह --जन्मनीति--एकस्मिन्--भिन्ने वा जन्मनि स्वाप व्यवहितपूर्वकालेऽव्यवहितपूर्वकाले वा स्वप्नसमानदेशे देशान्तरे वाऽनुभूतं वस्तु स्वाप्नस्मृतिविषय इत्यर्थः ।

नन्वस्तु स्मृतिरूपमनुभवरूपं वा तदन्यथाख्यातिरूपमेव। तद्दृष्टान्तेन सर्वस्याऽप्यप्रामाण्यं साध्यते। तथा च अन्ततो गत्वा शून्यतायां पर्यवस्यतीत्यत्राह- नच जागरज्ञानेष्वपीति--आदिशब्देन--कारणदोषादिसंग्रहः । वैधर्म्य--बाधः । बाधादिमत्वमुपाधिरिति सूत्रार्थः। नन्विति--इदं रजतमिति भ्रमस्याऽसच्छुक्ति रजतत्वादिसंसर्गतादात्म्यविषयत्वाद् दृष्टान्तस्स्यादिति भावः । तदसिद्धाविति-- संस्काररूपकारणाभावात् अन्यथारजतस्थले खपुष्पादीनामपि भानं स्यादविशेषादिति भावः ।

ननु विशेषणविशेष्यसामग्र्येव संसर्गेऽपि सामग्री नचातिप्रसङ्गः, अन्येषामसंसर्ग- त्वादित्यत्राह--निषिध्यमानौ चेति--बाधकज्ञानेन यस्संसर्गस्तादात्म्यं वा निषिद्ध्यते स एव बाध्यज्ञाने विषयः साऽन्यत्र सन्नेव रङ्गे रजतत्वसंसर्गो नास्तीति रजततादात्म्यं- नास्तीति [च] निषिद्ध्यमानस्याऽन्यत्र सत्त्वादित्यर्थः ।

ननु बाधितसंसर्गतादात्म्यकत्वमेव साध्यमस्त्वित्यत्राह--सोपाधिरू इति-- सोपाधिकत्वं देशकालविशेषावच्छिन्नत्वं। असत्वं अन्यथाख्यातित्वमिति यावत्। असद्विषयत्वमात्रन्त्विति--अभावप्रतियोगित्वमत्यन्ताऽभावप्रतियोगित्वं वा सर्वेषाम- स्त्विति भावः। न च तावन्मिथ्यात्वक्लृप्ताविति मूलं--अस्माकं यन्मिथ्यात्वं तदेव- चेत् ज्ञानेऽर्थे वा साध्यते तदेत्यर्थः ॥ २४ ॥

---

प्रत्यक्षं संप्रयुक्ते स्मृतिरपि विदिते व्याप्तिसिद्धेऽनुमा स्यात्
शाब्दी धीरन्विताद्यौ भवति तदनुगा भ्रान्तिधीः क्वाप्यसिद्धेः ।
व्योमाम्भोजादिशब्दोऽप्यनियतमतिकृत् स्यात् पदार्थं त्यजेच्चेत्
नो चेत्स्यादन्यथाधीर्ध्रुवमिह यदि वाऽनन्वितत्वाप्रतीतिः ॥ २५ ॥

सर्वार्थः--निरुपाधिकासत्प्रतीत्यभावं हेतुदर्शनाभावतः प्रपञ्चयति--प्रत्यक्षमिति ॥ कार्यमपरोक्षज्ञानमन्वयव्यतिरेकावसितेन्द्रियसंप्रयोगविशेषिते विषये भवति ।

यत्पुनराहुः—स्मृतिर्न बाह्यविषया, नष्टेऽप्यर्थे स्मृतिदर्शनादिति, तत्राह—स्मृतिरपीति। अनुभवविषयोक्कते ह्यर्थे संस्कारप्रत्यासत्त्या स्मृतिर्भवति। स्मृतिकालेऽतीतोऽनागतो वेति न स्वकालेऽप्यर्थो न स्यात्। न च न बाह्यः। तथैव हि स्मृतिरपि समुचितमर्थमवलम्बते, न विरुद्धाकारान्तरस्थं स्वाकारं शून्याकारं वा; स्वानुभवविरोधात्। कालान्तरवर्तिविषयत्वादपि सन्निहिताबाह्यविषयत्वं युक्तमिति चेन्न; अनुमेयातीतानागतसंविदात्मस्वात्मताया ग्राह्यत्वस्य वाऽभावप्रसङ्गात् तत्र च पूर्वस्मिन् सन्ततिकल्पना लुप्येत। उत्तरत्र संविन्नित्यत्वप्रसङ्गः; स्मृतेस्त्रिकालवर्त्याकारत्वात्। अतः स्मृतेः कालान्तरवर्तिबाह्यविषयत्वं न विरुद्धम्। ननु सुगतमतवर्तिनामनुमानं न वस्तुतः प्रमाणम्। अदूरविप्रकर्षमात्रेण तु प्रमाणत्वपरिगणना। निपुणनिरूपणे कल्पितसामान्याकारावलम्बनत्वादिदमप्रमाणमेवेति कथं तन्निदर्शनेन स्मृतिरसद्विषया न स्यादित्यत्राह—व्याप्नोति। प्रत्यक्षादिसिद्धस्य लिङ्गस्य तथाविधाव्याप्तिबलात् सामान्यतः पक्षधर्मतया च विशेषतस्सिद्धेन व्यापकेनानुमितिर्विषयिणी। न चात्र कारणदोषो बाधकप्रत्ययो वेति प्रमितिरेवासौ; तद्विषयश्च सन्नेव स्वकालेषु। अन्यथा सर्वसंविदां स्वमात्रप्रकाशरूपत्वे सन्तत्यन्तरस्य संविदन्तरस्य चानुमानाभावात् परस्परानभिज्ञतया सर्वासिद्धिस्सर्वैक्यं वा स्यात्। न ह्येका संवित् अहमस्मीति संविदन्तराय स्वात्मानं साधयति। अनुमानप्रामाण्यतिरस्कारे च तद्विशेषतयाऽभिमतः स्वागमोऽपि तिरस्क्रियेत। मा भूद्वस्तुतः शब्दोऽपि प्रमाणम्। पदपदार्थयोरेव हि संबन्धो मृग्यः। तद्द्वारा भवंस्तु वाक्यार्थसंबन्धो दूरनिरस्तः। अतो वाक्यवाक्यार्थप्रत्ययौ स्वमात्रप्रकाशात्मानौ कल्पितं किंचिदलीकं स्वाकारेणोपरञ्जयतः। तेन वाक्यवाक्यार्थौ प्रमाणमेयभावेनाभिमन्येते इति। तत्राह—शाब्दीति। आदिशब्देन मतभेदेनान्वयग्रहणम्। अयं भावः—पदानि तावत्प्रत्यक्षसिद्धसद्भावानि विभक्त्यन्ततया व्याकृतानि नापह्नवमर्हन्ति; पदार्थाश्च। संबन्धश्च तेषां मिथः संयोगाद्यसंभवेऽपि वाच्यवाचकभावरूपः सांव्यवहारिकः। तदनभ्युपगमे कथानां घोषमात्रशेषत्वप्रसक्तेः। ततश्च लौकिकेष्वलौकिकेष्वपि वाक्येष्वाकाङ्क्षादिपरिष्कृतेषु संसृष्ट[ार्थ]विषया संसर्गविषया वा बुद्धिर्जायत एव। सा च बाधाद्यभावे स्वार्थनियतेति स्वरूपत इव हेतुतो विषयतोऽपि नालीकभावमनुभवतीति। तथाऽपि बाधितांशप्रतीतेरिन्द्रियादिकमसद्ग्रहणे हेतुः स्यादित्यत्राह—तदनुगेति। प्रत्यक्षादित्रयानुगेत्यर्थः। भ्रान्तावपि ह्यसंसृष्टानां संसृष्टतया बोधने संसर्गतादात्म्ययोर्वा सामान्यतस्सिद्धयोः स्वाभावाधिकरणनिष्ठतयाऽऽरोपेऽन्यथाख्यातिमात्रपरिशेषादलीकतुच्छाविद्यमानशब्दानामप्यन्यत्र विद्यमानमेव विषयः। नित्याविद्यमानं निरुपाधिकासदित्यादिशब्दैरपि क्वचिदधिकरणे कस्यचित्स्वदेशादिसिद्धसत्ताकस्यासत्त्वं विवक्षितम्। ननु अङ्गुल्यग्रे हस्तियूथशतमित्यत्र संसर्गस्सत्योऽसत्यो वा? आद्ये सर्वमुपप्लवेत; द्वितीये त्वसद्ग्रहणं तद्धेतुश्च सिध्यत इति मैवम्; अयोग्यपदसमभिव्याहाराणामपि क्वचित्सिद्ध एवार्थस्तदभावाधिकरणे प्रतिभास्यते।

इह स्वारोप्यसंसर्गिसंसर्गास्स्ववर्णनम् ।
नासद्ग्रहणक्लृप्त्यै स्यात् प्रमाविषयसाम्यतः ॥
अदुष्टबुद्धौ तत्रैव संसर्गस्सन् विशेषकः ।
अन्यत्र सिद्ध एवासौ दुष्टायां दोषवैभवात् ॥

अथ स्यात्—खपुष्पवन्ध्यासुतादिशब्दास्तावन्न बुद्धिं न जनयन्ति; एष वन्ध्यासुतो यातीत्यादिस्वदिष्टोदाहृतिविरोधात् । जनयन्तश्च न निर्विषयां, तदनभ्युपगमात् । सविषयामपि न प्रत्येकांशविषयां, विशिष्टप्रतिभासविरोधाद्बाधानुपपत्तेश्च । अतोऽसदेव किंचिद्विशिष्टमन्यत्खपुष्पादिशब्दैरवभास्यत इति । तत्राह—व्योमाम्भोजेति । नह्यत्र संसर्गिद्वितयमनुपस्थाप्य तदुपहितविशिष्टभ्रमः; अतिप्रसङ्गात् । नच खपुष्पवन्ध्यासुतशब्दयोर्बोध्यमसदविशिष्टं शशशृङ्गादिभिर्वन्ध्यासुतविशेषणविरोधात् । द्वितीयं दूषयति—नो चेद्धिति । अवयवार्थानुरोधे ह्यन्यथाधीरेव सिध्येत्; अनन्वितेऽन्वितधीमात्रजननात् । कथमत्रानन्वयग्रहेऽप्यन्वितभ्रम इति दोषमेव पृच्छ । किं न पश्यसि चन्द्रैकत्वं बुध्यमानोऽप्यङ्गुल्यवष्टम्भाच्चन्द्रे द्वित्वम्, निर्मुखमपि मुकुरमवधारयंस्तत्र मुखमिति ? अख्यातिपक्षेण त्वाह—यदि वेति । अनन्वितत्वं न गृह्यते; अनन्वितत्वाग्रहणविशिष्टसामग्रीविशेषात् तत्र विशिष्टव्यवहार इति भावः ॥ २५ ॥

---

आनन्द०—पूर्वसङ्गतिमभिप्रेत्याह—निरुपाधिकेति । हेतु दर्शनाभावतः—तद्धेतुसद्भावे प्रमाणाभावसद्भावादित्यर्थः । विचार्यमाणे प्रत्यक्षादिसामग्र्याः असद्गोचरज्ञानजनकत्वायोगात्सामग्र्यभावाच्च परिशेषान्निरुपाधिकासत्प्रतीतिं वक्तुं तत्र किं प्रत्यक्षरूपं ज्ञानं ? उत स्मृतिरूपं ? यद्वाऽनुमितिरूपं ? अथवा शब्दरूपमिति विकल्पं मनसि कृत्वाऽऽद्य आह—कार्यमिति—असत इन्द्रियसंयोगाभावादिति भावः । द्वितीयं शङ्कते—यत्पुनराहुरिति । अनुभवविषयीकृतेति—असतोऽनुभवविषयत्वासम्भवादित्यर्थः । तत्र किं स्मृतेर्विषयस्याऽतीतानागततया निर्विषयत्वमुच्यते ? यद्वा बाह्यार्थविषयत्वाभावः ? आहोस्वित् स्वाकारविषयत्वं ? यद्वा शून्यविषयत्वमिति विकल्प्याऽऽद्य आह—स्मृतीति—ज्ञानकाले सत्त्वं प्रयोजनं अर्थकाले ह्यविद्यमानत्वात् । स्वकाले—अनुभवविषयीकृतकाल इत्याहुः । अत एव न—द्वितीयोऽपीत्याह—नच न बाह्य इति । तथैव—अनुभवाकारेणैव । समुचितं—तत्तत्काले विद्यमानं । तृतीयचतुर्थौ दूषयति—न विरुद्धाकारेति - अनुभवविषयाकारविरुद्धाकार इत्यर्थः । हेतुमाह—स्वानुभवेति —घटं-स्मरामीत्यादिबाह्यार्थविषयत्वाद्यनुरोधादित्यर्थः । अस्वात्मतायाः अभावः स्वात्मता । अतीतसंविदां—स्वात्मत्वेऽतीतानां ज्ञानानामद्यतनानुभवस्मृत्यात्मकतया क्षणिकसन्ततिकल्पना न स्यादित्यत्राह—तत्र च-पूर्वस्मिन्निति—पूर्वस्मिन्नतीते ज्ञाने विषयीकृते । आगामिवस्तुतादात्म्ये भविष्यत्कालेऽपि सतो नित्यत्वं-स्यादित्यत्राह—उत्तरत्रेति उत्तरस्मिन् ज्ञाने विषयीकृत इत्यर्थं इत्याहुः ।

केचित्तु पूर्वस्मिन्ग्राह्याभावे उत्तरत्र स्वात्मत्वाऽभावे क्रमेण दूषणमनुमेयातीताऽनागतसंविदां ग्राह्यत्वस्य स्वात्मतया वा अभावप्रसङ्गादिति पाठमभ्युपेत्याऽऽहुः।

**स्मृतेरिति**—तथा च स्मृतेस्त्रिकालवृत्तित्वमेव संविदस्त्रिकालवृत्तित्वमिति तदेव नित्यत्वमित्यर्थः।

ननु तर्हि—

"प्रत्यक्षमनुमानञ्च प्रमाणे द्वे तु सम्मते। तथा कणाद सुगतौ"

"पुनरनुमानञ्च तच्चार्थे" इत्यादिष्वनुमानस्यापि प्रामाण्योक्तेः कथमिदमित्यत्राह—**अदूरेति**—मणिप्रभायां मणिबुद्धिन्यायेन प्रमाणभूत प्रत्यक्षादूरविप्रकर्षात्प्रमाणपरिगणनेत्यर्थः। अनुमानस्याप्रामाण्यं किमनुमितौ विषयत्वात्? अथ दुष्टकारणजन्यत्वात्? उत बाधितविषयत्वादिति विकल्पे आद्य—**प्रत्यक्षादिति**। द्वितीयतृतीययोराह—**नचेति**। नन्वनुमितिकाले विषयस्यासत्वाद् बाध इत्यत्राह—**तद्विषयश्चेति**। **अन्यथेति**—अनुमितिकालेऽर्थस्य विद्यमानत्वाऽभावमात्रान्निर्विषयत्वे तन्न्यायेन सर्वसंबिदां निर्विषयत्वप्रसङ्गोऽपीतिभावः। **सर्वासिद्धिः**—सर्वस्यापि साधकाभावादसिद्धिः प्रकाशे तु नानाभेदादैक्यमित्यर्थः। नचेष्टापत्तिरित्याह—**नहीति**—तथात्वे संविदहं संविदन्तरत्वेनाभिमताभिन्नेति प्रकाशस्यानुभवबाधितप्रसङ्ग इत्यर्थः। **तद्विशेषणतयेति**—वैशेषिकवदनुमानविधया शब्दस्यानुमापकत्वदिति भावः। **मा भूदिति**—पदपदार्थयोस्संबन्धाभावेनाऽसंबद्धप्रकाशकत्वेऽतिप्रसङ्गात्तत्रार्थप्रकाशो नेत्यर्थः। ननु कथं तत्र ज्ञानमित्यत्राह—**अत इति**। वाक्यशब्देन वाक्यगोचरं ज्ञानमुच्यते तस्यैवार्थज्ञानहेतुत्वात्।

केचित्तु वाक्यशब्देन पदसङ्घात एवोच्यते स्वमात्रप्रकाशात्मानौ स्वव्यतिरिक्तार्थप्रकाशावित्यर्थः स्वेतराप्रकाशस्य मात्रजर्थत्वादित्याहुः। **तेनेति**—अलीकेऽपि रजतत्वेनेत्यर्थः। **मतभेदेनेति**—अन्विताभिधानमिति मतभेदादिति भावः।

ननु शब्दस्यार्थसंबन्धाभावाद्धीरेव न सम्भवतीत्युक्तमिति तत्राह—**अयं भाव इति**। **व्याकृतानि**—व्याकरणसिद्धानि। **पदार्थाश्चेति**—नापह्नवमर्हन्तीत्यनुषङ्गः। **सांव्यवहारिक इति**—अबाधितव्यवहारानुरोधात्क्लृप्तान्तर्भावाभावेऽन्य एव स्यात्। अन्यथा सन्तानादिकमपि न स्यात् कार्यकारणभावपौर्वापर्यादीनामप्यसम्भवादिति भावः। **तदनभ्युपगम इति**—निरर्थकत्वाविशेषादिति भावः।

नन्वस्तु प्रतीतिः सा भ्रान्तिरित्यत्राह—**सा चेति**। बाधादीत्यादिशब्देन दोषादिकं विवक्षितम्। **अलीकभावः**। भ्रान्तिरित्यर्थः। **तथापीति**—इदं रजतमित्यत्र शुक्तिरजतत्वसंसर्गादेरसत्वादिति भावः। **प्रत्यक्षादीति**—यथा प्रत्यक्षानुमित्यादि-

प्रमितिस्सविषयिणी तथा भ्रान्तिरपि सन्मात्रविषयिणीत्यर्थः। नित्याविद्यमानमित्यादि-क्वचिदधिकरणे विद्यमानस्य क्वचिन्नित्याविद्यमानत्वसम्भवात् क्वचिन्निरुपाधिकत्व सम्भवाच्चेत्यर्थः।

ननु नित्यं सर्वदेशे सदित्यत्र कथमिति चेन्न। तत्रापि क्वचिदधिकरणे विद्यमान— एव तद्देशाविद्यमानस्याऽऽरोपमात्रमित्यन्यथाख्यातिस्स्यादिति भाव। स्वदेशादीत्यादि-शब्देन कालो विवक्षितः। उपप्लवः—प्रमाऽप्रमाविभागाभावः। अयोग्येति—अयोग्य-पदघटितवाक्यानामर्थः क्वचित्सिद्ध एव। अरण्ये विद्यमानं हस्त्यादिकं तत्संसर्गो वा तदभावाधिकरणेऽङ्गुल्यग्रे भासत इत्यर्थः।

ननु संसर्गस्याऽऽरोप्यत्वे तत्संसर्गोऽपि भासेत, तस्याऽप्यारोपे तत्संसर्ग इत्यन-वस्था स्यात्। तत्परिहारायाऽसंसर्गो भासत इत्यभ्युपेयमित्यत्राह इह त्विति— संसर्गस्याऽऽरोप्यस्य संसर्गासत्ववर्णनमात्रेणाऽसद्भानं न सिद्ध्यतीत्यर्थः। कुत इत्यत्राह— प्रमाविषयेति—यथा प्रमायां विशेष्यं विशेषणं संसर्गो भासते नतु संसर्गस्य संसर्गोऽपि। तथा च-तस्य भानप्रसङ्गाऽभावात्कथमसत्ख्यातिरित्यर्थः। क्वचित्कोशे "इहत्वाऽऽ-रोप्य संसर्गि संसर्गासत्ववर्णन"मिति पाठः। सतु सुगम एव।

ननूभयत्र विषयसाम्ये प्रमाप्रमावैषम्यं न स्यादित्यत्राह—अदुष्टेति-प्रमायां यत्र विशेषणं गृह्यते, तत्र तत्संसर्गो विद्यते विद्यमानसंसर्गग्राहित्वात्प्रमात्वं। यत्र तु स्वाभावाधिकरणे विशेषणसंसर्गोऽन्यत्र विद्यमानो गृह्यते तत्र भ्रमत्वमिति न दोष इत्यर्थः।

नन्वन्यत्र विद्यमानस्य कथमन्यत्र भानमित्यत्राह दोषेति-तत्र किं व्योमां— भोजादिशब्दाविशिष्टमसद्बोधयति? उत विशिष्टमेव? नाद्य-इत्याह—न ह्यत्रेति— व्योमाम्भोजादिपदानामवयवार्थाभावे प्रतियोगिद्वयानुपस्थापनाद्वैशिष्ट्यबोधायोग्यत्वा-दित्यर्थः। द्वितीय आह—नच खपुष्पेति—प्रतीयमानमसदविशिष्टमेव चेद्विशिष्टबोध विशेषणसत्वासत्वयोर्विशेषाभावाद्वैयर्थ्यमिति भावः।

ननु बाधबुद्ध्यभावे दोषात्संसर्गप्रत्ययः तस्मिन्सति कथं स्यादित्यत्राह— किं न पश्यसीति—शब्दविशेष एव दोष इत्यर्थः।

मूलं "अनियतमतिकृत्स्यात् पदार्थं त्यजेच्चे"दिति। अवयवार्थशून्यत्वे व्योमत्वाऽम्भोजत्वाद्युपधानाभावाच्छशशृङ्गाद्यपेक्षया व्यावृत्तिबुद्धिर्न स्यात्। तथाच-शशशृङ्गव्योमाम्भोजवन्ध्यासुतादिशब्दानां पर्यायता च स्यादित्यर्थः। नियतं— व्यावृत्तं। अनन्वितत्वाप्रतीतिः—असंसर्गाग्रहः॥ २५॥

**नेष्टः स्वान्यग्रहश्चेत् क्वचिदपि न हि धीर्धर्मिणी वः कृतान्ते**
**बुद्ध्यात्मा वासनातो न च किमपि तयाऽपेक्षणीयं बहिष्ठम् ।**
**धीसन्ताने त्वनादौ भवति च निखिला वासनैकः क्षणस्त-**
**न्निश्शेषध्वंसिनी सा युगपदखिलमप्युद्वमेत् कल्पनौघम् ॥२६॥**

**सर्वार्थ**—बुद्धेः स्वेतरालम्बननिषेधे दोषान्तरं विवक्षुर्दूष्यमनुभाषते नेष्ट इति ॥ इदमहं पश्यामीत्यादिषु बुद्धिस्वरूपातिरिक्तानां विषयाश्रयस्वगतविशेषाणां ग्रहोऽनभ्युपगतश्चेदित्यर्थः। विवक्षितस्योपयुक्तं वासनाबुद्धिस्वरूपयोर्भेदाभावं तावदाह—**न हीति**। बुद्धिर्हि स्वयंविशेषवतीति सिद्धान्ते वासनयाऽपि धर्मवत्त्वं तस्या नास्तीति यावत्। तत्फलितमाह—**बुद्ध्यात्मेति**। बुद्धिस्वरूपमेवेत्यर्थः। वासनायाः स्वकार्ये सहकार्यसम्भवमाह—**न चेति**। बाह्यमभावादेव नापेक्षणीयम्; बुद्ध्यन्तरं तु सदपि न बुद्ध्यन्तरस्य सहकुरुते, अनभ्युपगमात्; अभ्युपमे च समकालानां सर्वसंविदां तदुत्तरकालसंविदारम्भकतया सन्ततिभेदासिद्धिप्रसङ्गादिति भावः। अनादिसंवृतिसम्भूतानां नीलपीताद्यनन्तवासनानामेकैकक्षणात्मकत्वमाह—**धीसन्तान इति** उक्तपरम्पराफलितमनिष्टमाह—**तदिति**। **निश्शेषध्वंसिनी**—निरन्वयविनाशिनी। एतेन भविष्यत्सर्वविकल्पसामग्रीभूतबुद्धिक्षणध्वंसकाले काचिदेव कल्पना जायते नान्येति नियमो न स्यादिति व्यज्यते। **अखिलं**—तत्तत्सन्तताबासंसारं भविष्यत्सर्वम्। एवं सर्वकल्पनायौगपद्यात् उत्तरक्षणवत्पूर्वक्षणेष्वपि तुल्यन्यायतया तत्तदुत्तरलोपे नानादिस्संसारप्रवाहः स्यादिति माध्यमिकमध्यमध्यास्स्वेति ॥ २६ ॥

---

**आनन्द०**—पूर्वसङ्गतिमेवाभिप्रेत्याह—**बुद्धेरिति**। **विषयः**-घटादिः। **आश्रयः**—अतिरिक्तः आत्मा। **स्वगतविशेषाः** सङ्कोचविकासादयः। **विवक्षितस्य**—युगपदेव सर्वोद्वमापादनस्य। **वासना**—संस्कारः। सहकार्यन्तरमन्तरा असम्भवमेवोपपादयति—**बाह्यमित्यादिना**। **अभ्युपगमे चेति**—सर्वसंविदां पूर्ववृत्तित्वाविशेषादेकसामग्री प्रभवत्वेन कार्यभेदो न स्यात्।

नच रूपरसादिवद्भेदः प्रसंगाभावभेदेनेति वाच्यम्। क्षणिकपक्षे स्थिरस्यापि प्रागभावस्याभावेन क्षणातिरिक्तस्य तस्याभावादिति भावः। **अनादिसंवृतीति** एकस्य सन्तानस्यानादि धीवासनास्वरूपमेकक्षणात्मकत्वमेव अनेकत्वेऽनेकसन्तानप्रसङ्गादिति भावः। **एतेनेति**—एकस्य क्षणस्य सर्वकल्पनावासनात्मकत्वादपेक्षणीयान्तराभावादेकस्य पुरुषस्य कदाचिदयं घट इत्यादिरूपेण कल्पना दृश्यते नतु युगपदेव सर्वकल्पनेति सिद्धान्तो न स्यात् सर्वकल्पनासामग्र्यास्सत्त्वेन विलम्बहेत्वभावादिति भावः। **तत्सन्ततावि**ति—एकस्य बुद्धिक्षणस्यानेकनीलपीताद्यात्मकत्वेऽपि न भाव्यनेकवासनात्मकत्वं, किन्तु उत्तरोत्तरबुद्धिक्षणानामेव तथात्वम्। तथा च नातिप्रसङ्गः।

अन्यथा स्थिरपक्षेऽपि धारावाहिकस्थले युगपद्भविष्यत्सर्वज्ञानोत्पादप्रसङ्गेन धारोच्छेदापातादिति चेन्न । स्थिरपक्षे क्षणादयो विशेषास्सहकारिणस्सम्भवन्तीति तत्र व्यवस्था वक्तुं न शक्यते नच त्वयेति भावः । एवमिति ।

ननु यद्यपि समस्तकल्पनाऽपि युगपदेव ज्ञातेति भाविकाले कल्पनाया अभावः । तथापि स्वकाले सत्त्वात्कथं माध्यमिकसभाप्रवेशः । किञ्च कल्पनायाः निवृत्तत्वेऽपि ज्ञानसन्ततेरनुपप्लुतायास्सम्भवाच्च कथं साम्यमिति चेत् ।

अत्र केचित् । यद्यपि कल्पनाकाले क्षणमात्रं स्थितं, तथापि भाविकाले निरन्वयविनाशान्माध्यमिकसाम्यं ।

नच ज्ञानसन्ततेरनुपप्लुतायास्सत्त्वाद्वैषम्यं, तस्य क्षणिकस्याऽप्युत्तरक्षणान्प्रति उक्तरीत्या निरपेक्षकारणतया सन्तानान्तर्गतज्ञानक्षणानां सर्वेषामपि युगपदुत्पत्त्या उत्तरकालोत्पन्नसन्ततिविच्छेदादिति ।

अन्ये तु उत्तरविच्छेदवत्पूर्वस्यापि विच्छेदे स्वस्यापि विच्छेद इति स्वकालेऽपि सत्त्वमेवेत्याहुः ।

---

**स्वाकारोऽर्थः स्वबुद्धौ निहित इति च नाधारहानाद्ययोगात्**
**स्वच्छे च्छाया परस्मिन्न च भवति न च स्यादसौ रूपशून्ये ।**
**साम्यासत्त्याद्ययोगाद्विषयविषयिणोर्नापि भेदाग्रहः स्या-**
**न्नैकाका[रेण रक्तं]रोपरक्तं द्वयमपि स च ते ग्राह्यतो नातिरिक्तः ॥२७॥**

सर्वार्थ—अथ बाह्यार्थवादिबौद्धकल्पिताः पक्षाः प्रतिक्षिप्यन्ते । तत्र सौत्रान्तिकाः प्राहुः—विज्ञानं तावत्स्वप्रकाशप्रत्यक्षसिद्धम्; तच्च क्षणिकम्, पूर्वापरकालवर्तितया प्रकाशाभावात् । न चेदमर्थशून्यम्, नीलादिज्ञानसन्ततौ पीतादिज्ञानसन्तत्यनुत्पादप्रसङ्गात् । स चार्थो न प्रत्यक्षः, अधिपतिसंप्रयुक्तस्य क्षणस्य निरुद्धत्वात् । असंप्रयुक्तस्योत्तरक्षणस्य प्रत्यक्षत्वेऽतिप्रसङ्गात् । अतो बुद्धिजनकस्यार्थक्षणस्य स्वाकारसमर्पकहेतुत्वमेव ग्राह्यत्वमित्युपचर्यते ।

तदुक्तम्—

भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ इति ।

अतः स्वहेतुभूतार्थसमर्पिताकारो बुद्ध्यात्मैव वस्तुतः प्रत्यक्ष इति, तदिदमनुभाष्य प्रतिभाषते—स्वाकार इति । विकल्पितदूष्यकोटिभञ्जकहेतुमाह—आधारहानाद्ययोगादिति । अयमाशयः—योऽयमर्थेन बुद्धावाकारस्समर्प्यते, स किम् अर्थस्य

स्वरूपम्, उत धर्मः, उभयातिरिक्तो वा ? नाद्यः, क्षणध्वंसिनः क्षणान्तरवर्तिसंक्रमणायोगात्; अन्यथा स्थिरवादप्रसङ्गात्; अर्थस्य च साक्षात्प्रत्यक्षत्वापत्तेरनुमेयपरिशेषाभावाच्च। न द्वितीयः, धर्मधर्मिभावानभ्युपगमात्, तदभ्युपगन्तॄणामपि धर्मस्य धर्मिप्रहाणेनान्यत्र प्रवेशादृष्टेः, क्षणिकत्वस्थिरत्वविकल्पेन दत्तोत्तरत्वाच्च। अत एव न तृतीयः; अर्थस्य तेन सम्बन्धाभावात्, असंबद्धस्य चान्यत्र सञ्चारयितुमशक्यत्वात्, अन्यथाऽतिप्रसङ्गादिति। त्रिष्वपि च पक्षेषु परेष्टप्रत्यक्षानुमानयोरप्रवृत्तिरुद्धाटनीया। अत्रानवहितहृद्यं गत्यन्तरं शङ्कते—स्वच्छ इति। यथाऽस्यासन्नमपि मुखं स्वयमगृह्यमाणं दर्पणसन्निधानेन तत्र समर्पितच्छायं तत्रत्यमेव गृह्यते, तथाऽर्थाकारोऽपि स्वच्छबुद्धिप्रतिफलितश्छायात्मा गृह्यत इत्यर्थः। एतदपि दूषयति—न चेति। न हि नष्टस्य क्वचिच्छायापत्तिर्दृष्टा, न च वर्तमानस्यापि वर्तिष्यमाणे। अन्यमपि दृष्टविरोधमाह—न चेति। रूपवत्येव हि पदार्थे रूपवतामेव प्रतिबिम्बसिद्धिः। न च विज्ञानं रूपवत्, नाप्यर्थः; स्पर्शगन्धादिग्रहणे रूपप्रसङ्गाभावात्; नीलादौ रूपवत्त्वानभ्युपगमात्; तत्कल्पनेऽपि प्रत्यक्षत्वानभ्युपगमेन प्रतिबिम्बप्रसङ्गाभावात्। अप्रत्यक्षस्याकाशस्य जलादिषु प्रतिबिम्बितत्वं दृश्यत इति चेन्न; आकाशप्रत्यक्षत्वपक्षे तदभावात्। पक्षान्तरे तु यत्तन्मलिनताध्यासविशिष्टतया किंचिच्चाक्षुषं सर्वलोकसिद्धं, तस्यैव जलादौ प्रतिबिंबितत्वम्। अतो नार्थस्य बुद्धौ कथंचिदपि प्रतिबिम्बितत्वसिद्धिरिति।

स्यादेतत्, न मुख्यच्छायापत्तिं ब्रूमः, किं त्वध्यासमात्रम् आरोपितार्थाकारं विज्ञानमनुभूयत इति, तद्दत्तोत्तरम्। अर्थस्य तदाकारस्य च ग्रहणाभावे कथं बुद्धौ तदध्यासः ? ग्रहणे च कथमर्थो न प्रत्यक्षः ? अर्थग्रहणाभावेऽपि तदाकारो वासनावशादन्यत्राध्यस्यत इति चेन्न; अप्रत्यक्षमेव ह्यर्थं समर्थयमानस्य तद्वासनैव निर्मूला; सा कथमध्यासं प्रसुवीत ? अर्थनिरपेक्षवासनाप्रवाहवैचित्रीसंभवे योगाचारयूथात् किं निर्गतोऽसि ? किं च यत्रानुमानादावर्थस्य न बुद्धिहेतुत्वं तत्र स्वाकारसमर्पणक्षमहेतुत्वायोगात् ग्राह्यत्वाभावः प्रसज्येत। अथ स्यात्—यथा माषराशौ मषी यथा वा नीलोत्पलवने कादम्बस्तद्भेदाग्रहात्तदपृथग्भावेनाभिमन्यते व्यवह्रियते च; एवं तदर्थसन्निहितविज्ञानं तथेति; इदमपि दत्तोत्तरमेव। गृह्यमाणे हि माषराश्यादौ मषीप्रभृतेस्तत्सारूप्ये तत्संसर्गे च सति तथाऽभिमानव्यवहारौ स्याताम्। इह तु न तथा, अर्थस्याप्रत्यक्षत्वात् ज्ञानस्य च तत्सारूप्यसंसर्गयोरयोगात्, तत एव भेदाग्रहस्याप्यसम्भवादिति। अत एव वैभाषिकमुखेनापि नैतद्वाच्यम्। नन्वस्ति तावत्कश्चिन्नीलादिराकारः; दृष्टस्य दुरपलपत्वात्। स त्वर्थे सन्नपि परमाणुगतसत्तावन्न गृह्यते। बुद्धिगतस्तु स्थूलगतसत्तावदुपलभ्यते। अत एकस्याकारस्योभयोपरञ्जकत्वादर्थाकारो बुद्धौ गृह्यत इत्यत्राह—नैकेति। अयं खल्वाकारः प्रागुक्तैरर्थस्वरूपधर्मादिविकल्पक्षोभैरपास्तः। किंचानेकनिष्ठोऽयमेकाकारः सत्यः, असत्यो वा ? नाद्य; जात्यादिखण्डनाशाप्रहाण-

प्रसङ्गात्, पूर्वापरवर्त्तिन एकत्वे स्थिरवादप्रसङ्गाच्च। न द्वितीयः, अवगमाधीन-सत्ताकस्यासत्यस्य कथमगृह्यमाणतयाऽर्थेऽवस्थानम्? तद्ग्रहे च तत्कल्पनाधिष्ठान-स्यार्थस्यापि प्रत्यक्षत्वमकामेनापि स्वीकार्यम्। अपि च नीलाद्याकारस्यार्थातिरिक्तत्व-स्वीकारेऽपसिद्धान्तः, अनतिरेके तु न बुद्धौ तत्सम्भवः संभवे च बुद्ध्यारूढस्यार्थस्य प्रत्यक्षत्वं सुदुस्त्यजमित्यभिप्रायेणाह - स चेति ॥ २७ ॥

---

**आनन्द०**—योगाचारानन्तरं बौद्धसाम्येन प्रसङ्गसङ्गत्या सौत्रान्तिकनिरास इत्याह—**अथेति**। **नीलादीति**—पूर्वपूर्वज्ञानमुत्तरोत्तरज्ञानसन्ततिहेतुः। यादृशं हि पूर्वज्ञानं-तादृशस्यैव हेतुः नान्यस्य। तथा च नीलज्ञानसन्ततिस्थलेऽपि तज्ज्ञानसन्तति-कारणाभावात्कदाचिदपि तत्सन्ततिर्न स्यात्। यदि तज्जनकपीतादिज्ञानमपि वर्तेत तदा सर्वत्र सर्वदा सर्वज्ञानसन्ततिप्रसङ्गात्। यदि नीलाद्याकारमेव पीताद्या-कारज्ञानजनकं तथा सति सर्वसन्तानप्रसङ्गस्स्यादित्यर्थः। **हेतुकत्वं वक्तव्यं**—तथाच यदालम्बनं यदोपनिपतति तदा तदाकारज्ञानमित्यर्थः। **अधिपतीति**—इन्द्रियसंयुक्तस्य क्षणस्य क्षणिकतया निरुद्धस्य विनष्टस्य विषयत्वासंभवादित्यर्थः। **असंप्रयुक्तस्य**—इन्द्रियसंयोगरहितस्य। **अत इति**। क्षणशब्दःस्वरूपपरः। **अर्थक्षणस्य**—अर्थस्येत्यर्थः। स्वाकारसमर्पकत्वरूपहेतुत्वमित्यर्थः।

ननु परोक्षज्ञाने कथं स्वाकारसमर्पकत्वं तत्रातीतानागतविषयाणां हेतुत्वा भावेनाकारसमर्पकत्वायोगादिति चेत्। अत्राहुः। अपरोक्ष एवायं-नियमः। परोक्षे तु विषयविषयिभाव एव, अतिप्रसङ्गाभावात्। अत एव स्वाकारसमर्पणहेतुत्वमेव-ग्राह्यत्वमित्युपचर्यत इत्युपचारत्वोक्तिः। अन्यथाऽस्यैव मुख्यग्राह्यत्वेऽर्थस्य प्रत्यक्ष-ग्राह्यत्वादनुमेयत्वं न स्यादित्याहुः।

अपरे तु स्वाकारसमर्पणहेतुत्वं अपरोक्षग्राह्यलक्षणं, विषयत्वमात्रन्तु ज्ञानगता-कारत्वमेव। आकारस्य ज्ञानगतत्वे हेतुप्रत्यक्षेऽव्यासयादिः। नचैवमौपचारिकत्वोक्ति-विरोधः उपचर्यत-इत्यस्याभिधीयत इत्यर्थत्वात्। उक्तेऽर्थे तत्सम्मतिमाह तदुक्त-मितीत्याहुः। औपचारिकमेव विषयत्वमित्यत्र सम्मतिमाह—**तदुक्तमिति**। **अत इति**—तस्मिन्ज्ञाने समर्पितेनाकारेणार्थस्याऽनुमेयत्वेन सर्वव्यवहारोपपत्तौ तद्विषयत्वकल्पनं गौरवग्रस्तमिति भावः। अत एव सायणीये यथा पुष्ट्या भोजनमनुमीयते यथा च भाषया देशः, यथा वा सम्भ्रमेण स्नेहः, तथा ज्ञानाकारेण ज्ञेयमनुमेयम्। तदुक्तम्—

"अर्थेन घटयत्येनां नहि मुक्त्वाऽर्थरूपताम्।
तस्मात्प्रमेयाधिगतौ प्रमाणं मेयरूपते"ति ॥

नच चित्तिसत्तैव तद्वेदना युक्ता तस्यास्सर्वत्रैवाविशेषात्। (२) [तान्तां तत्तत्सारूप्यं (सारूप्यं) चित्सरूपवन्तं घटयेदिति चेदिति।

नन्वाधारहानाद्ययोगादित्ययुक्तं ज्ञानस्यार्थाकाराधारत्वेनाधारहान्यभावात्। तत एवार्थानुमानसम्भवाच्चेत्यत्राह अयमाशय इति। क्षणध्वंसिन इति—अर्थस्य पूर्वक्षणे विद्यमानस्योत्तरक्षणे विनाशित्वात् ज्ञानस्योत्तरक्षणभावित्वादिति भावः। अर्थस्य चेति—ज्ञानेन संबन्धादिति भावः। इष्टापत्तिरित्यत्राह—अनुमेयेति—सर्वोऽप्यर्थोऽनुमानैकगम्य इति सिद्धान्तो भज्येतेति भावः। क्षणिकत्वेति—स धर्मः क्षणिको वा? स्थिरो वा। नाद्यः। क्षणिकस्य कालान्तरभाविनि सङ्क्रमणायोगात्। न द्वितीयः। स्थिरवादप्रसङ्गादिति दत्तोत्तरप्रायत्वादित्यर्थः। अन्यथेति घटस्य पटाकारसमर्पकतया प्रसङ्गोऽविशेषादिति भावः। त्रिष्वपि चेति—सम्प्रयुक्तस्यैव प्रत्यक्षत्वात् ज्ञानस्य सम्प्रयोगाभावादर्थवत्प्रत्यक्षता न स्यात्। नच स्वप्रकाशत्वात्प्रत्यक्षता अनुमितिसाधारण्यात्। तथा च वह्न्यादिप्रत्यक्षानुमित्योर्वैषम्यं न स्यात्। किञ्चार्थस्य प्रत्यक्षत्वाभावे तन्मूलकव्याप्त्याद्यभावादनुमानमपि न स्यादित्यर्थः।

केचित्तु वैभाषिकमतावष्टम्भेनाह—त्रिष्वपीति—तन्मतेऽप्यर्थाकारसमर्पणमभ्युपेत्य प्रवृत्तम्। अत्र 'स्वच्छेच्छाया परस्मिन्' "नष्टच्छाया परस्मिन्निति पाठभेदौ। तत्र स्वच्छ इति पूर्वपक्षाभिप्रायेणेत्याह—अत्रेति। सिद्धान्ताभिप्रायेणेत्याह—एतदपीत्याहुः।

केचित्तु—नचेति—प्राक्तनग्रन्थेष्वदर्शनान्न पाठभेदः। नष्टच्छायेतिपाठस्तत्र लेखककृत इत्याहुः। उपाधिबिम्बयोस्समानकालत्वे छायापत्तिरित्यभिप्रायेणाह—नहीति। नाप्यर्थ इति—नाप्यर्थमात्रमित्यर्थः। गन्धादीत्यादिशब्देन शब्दादेर्ग्रहणं। नीलावाविति-धर्मधर्मिभावानभ्युपगमेन धर्माऽभावादिति भावः। आद्यर्थः स्पर्शादि।

ननु रूपवत्त्वमभ्युपगम्यत इति चेन्न। तथात्वेऽपि परमाण्वादेः प्रतिबिम्बाभावेन प्रत्यक्षस्यैव प्रतिबिम्ब—इति वाच्यम् तच्च त्वन्मते न सम्भवति तदाह—तत्कल्पनेऽपीति। आकाशेऽपीति—वेदान्तिनां मते प्रत्यक्षत्वादिति भावः। पक्षान्तरे त्विति—तार्किकादीनां मते उपरि प्रसृतसौरालोकादेर्नीलाध्यासविषयस्य प्रतिबिम्बाङ्गीकारः नत्वप्रत्यक्षस्याऽऽकारस्येत्यर्थः आकाशाऽप्रत्यक्षत्वपक्षे तदभावादिति भावः क्वचिद्दृश्यते। तदाऽयमर्थः। किमाकाशशब्देन शास्त्रगम्यमुच्यते? उत लौकिकव्यवहारविषय इति विकल्पमभिप्रेत्याद्य आह—आकाशाप्रत्यक्षेति—अप्रत्यक्षीभूतस्य शास्त्रावसेयस्य प्रतिबिम्बाभावात्। न द्वितीयः, पक्षान्तरे त्विति—नात्र बिम्बप्रतिबिम्बभावोऽभिमतः अपित्वध्यास एव। शुक्तौ रूप्यस्येवेति। नात्रातीतत्वादि रूपवत्त्वादिप्रयुक्तदोषावकाश इति शङ्कते—स्यातेतदिति किमत्र गृह्यमाणारोपः? उत स्मर्यमाणारोप इति विकल्पय-

माद्य आह—अर्थस्येति-गृहीतस्यैवाध्यासादिति भावः। ग्रहणे चेति—तथाच ज्ञानेन ग्रहणायोगादर्थेनाकारो ज्ञानेऽऽरोप्यते। तेनाकारेणाऽर्थोऽनुमीयत इति पक्षः उक्तस्स्यादिति भावः। अप्रत्यक्षमिति।

ननु पूर्वपूर्ववासनावशादुत्तरोत्तराध्यासवासनयोरुपपत्तेः कथं वासनानुपपत्तिरिति चेन्मैवं। तत्राध्यासरूपज्ञानं प्रत्यक्षमेष्टव्यं अन्यथाऽध्यासायोगात्। तथा च अर्थस्य प्रत्यक्षत्वं परिहार्यं परोक्षाध्यासस्य लिङ्गाद्यध्यासापेक्षत्वेन तस्यापि तथेत्यनवस्थापत्तेरिति। अर्थनिरपेक्षेति—अर्थनिरपेक्षज्ञानस्य वासनाहेतुत्वे तदधीनज्ञानमात्रस्यार्थनिरपेक्षत्वायोगात्परमतप्रसङ्ग इत्यर्थः।

किञ्च किं ग्राह्यलक्षणं ज्ञाने स्वाकारसमर्पकत्वं? उत तदपृथग्भावेनाभिमानः? नाद्य इत्याह—किञ्चेति—जनकस्यैवार्थस्य स्वाकारसमर्पकत्वादिति भावः।

ननु प्रत्यक्षत्वाभिमते ग्राह्यस्येदं लक्षणं नत्वनुमित्यादाविति चेन्न। किमर्थगोचरप्रत्यक्षे? यद्वा ज्ञानगोचरप्रत्यक्षे! नाद्यः। अर्थगोचरप्रत्यक्षाभावात्। न द्वितीयः। अनुमित्यादेरपि स्वांशे प्रत्यक्षत्वादिति नोक्तरूपेण समाधानमिति ध्येयम्। द्वितीयं शङ्कते—अथ स्यादिति। एवं तत्तदर्थेति—अर्थसन्निहितज्ञानेऽर्थाभेदबुद्धिर्भवतीत्यर्थः। अर्थस्येति—अर्थस्य प्रत्यक्षत्वे तत्सन्निहिते सदृशे चाभेदग्रहात्तथाभिमानो भवति नान्यत्रेत्यर्थः। अत एवेति—अर्थस्य-प्रत्यक्षत्वाङ्गीकारेऽपि सारूप्यसंसर्गयोरभावादभेदाभिमानसमर्थनं तन्मतेऽपि न सम्भवतीत्यर्थः। ज्ञानार्थयोस्समानेन यदाकारेण रञ्जनं तत् ग्राहकस्य ज्ञानस्य ग्राह्यलक्षणमीरितिमिति पक्षं शङ्कते—नन्विति। उपरञ्जनं—उभयाश्रितत्वमित्यर्थः। धर्मादीत्यादिशब्देन ज्ञाननिष्ठाकारस्यार्थानुमापकत्वं न स्यात् घटनिष्ठसत्तया पटाद्यनुमानाभावादित्यादिसङ्ग्रहः। न द्वितीय इति—असत्यस्यावगमाधीनसत्ताकत्वाभावादिति भावः। तद्ग्रहे चेति—अधिष्ठानग्रहपूर्वकत्वादध्यासग्रहस्येति भावः। असम्भवेति—अतीतत्वरूपानुपपत्यभावादिति भावः॥ २७॥

---

संसर्गाद्बोध्यबुद्ध्योरभिदधति सिताद्याकृतेस्सिद्धिमन्ये
सादेश्यात् तन्मतेऽसौ न तु भवति तथा कालजोऽतिप्रसक्तः।
व्यंशे नैवाभिमुख्यं विषयविषयिताऽत्राकृतेः प्रागसिद्धा
ववास्यास्संसृष्टनाशे जनिरिति कुसृतिः पूगताम्बूलनीतिः॥२८॥

सर्वार्थ०—अन्ये त्वाहुः—बुद्धिरर्थश्च वस्तुतो निराकारौ; तथाऽपि चूर्णहरिद्रायोगजरागन्यायेन सितरक्तादिराकारस्तदोत्पन्नो गृह्यत इति। तदनुभाषते—संसर्गादिति॥ तत्र संसर्गव्यवस्थापकविकल्पभेदानभिसन्धाय देशैक्यात् संसर्गं तावन्निराकरोति—सादेश्यादिति। यथा चूर्णहरिद्रयोरत्यासन्नदेशाधिष्ठानतया मिथःसंयोगो निरन्तरत्वं वा, न तथाऽत्र,

विप्रकृष्टबोध्यग्रहणात्, कालान्तरवर्तिनामपि कयाचिद् बुद्धया गृह्यमाणत्वात्; तत्र संसर्गाभावादेव तज्जन्याकारायोगात्, स्वाकारधीसिद्धेश्च वर्तमानधीसमानत्वात्। न च त्वन्मते देशो नाम कश्चिदन्यः, येन सादेश्यसंभवः। अथ मन्यसे यत्र कालासत्तिस्तत्रैव सांसर्गिक आकारः, अन्यत्र तु वासनात एवेति; तत्राह—तथेति। कालजो हि ग्राह्यग्रहणयोर्निरन्तरपूर्वापरत्वमात्रेण वा समानकालतया वा? उभयत्राप्यतिप्रसक्तिरनिर्वार्या। स्वभावनियमादनतिप्रसक्तिरिति चेत्, तर्हि किमर्थं संसर्गेण, विज्ञानवादनोत्या बुद्धेरेव स्वभावनियमोपपत्तेः?. नन्वयस्कान्ताभिमुख्यादयस एव विकृतिः, चन्द्रसूर्याभिमुख्यात्तत्कान्तयोरेव। एवं कुतश्चिदाभिमुख्यविशेषात् क्वचिदाकारविशेषोत्पत्तिः स्यात्। तत्राह—व्यंश इति सांशयोरेव पदार्थयोराभिमुख्यसंगतिः इह तु द्वयोरपि निरंशत्वाभ्युपगमान्न तत्संभव इत्यर्थः। भिन्नकालयोश्च तदसम्भवः स्पष्टः। स्यादेतत्; समकालयोर्भिन्नकालयोश्च बोध्यबुद्धयोर्विषयविषयिभावः सर्वाभिनन्द्यः; तत एव संसर्गादाकार उत्पद्येतेति। तदपि दूषयति—विषयेति। किमत्र निराकारे वस्तुनि विषयीकृते पश्चादाकार उत्पद्यते? साकारे वा? नाद्यः, अर्थस्य प्रत्यक्षत्वानभ्युपगमात्, आकारोत्पत्तिकाले बोध्यबुद्धयोर्विनष्टतया निराधाराकारोत्पत्तिग्रहणयोः प्रसङ्गात्, आकारस्य च द्विष्ठैकनिष्ठत्वादिविकल्पदौःस्थ्यात्। न द्वितीयः, विषयीकारादाकारसिद्धिः, साकारस्य विषयीकार इति मिथस्संश्रयात्। दूषणान्तरमाह—क्वास्या इति। अस्याः—आकृतेः। क्षणिकवस्तुद्वयसंसर्गजन्यायास्तदुभयनाशकाले तत्र वान्यत्र वा स्थित्ययोगात्, निराधारत्वे च अर्थादेराकार इति ग्रहणायोगाच्च, संसर्गजाकरनीतिः प्रमाणाभावात् प्रमेयविरोधाच्च कुत्सितगतिरित्यर्थः। अयं चात्र भावः—ज्ञानार्थसंसर्गादुत्पत्स्यमान आकारो न प्रत्यक्षज्ञानेन गृह्येत; ज्ञानकाले ग्राह्याकाराभावात्, आकारोत्पत्तिकाले ज्ञानस्य विनष्टत्वात्। लोकदृष्ट्या चात्र निदर्शनेन सम्भावना स्थाप्यते। लोकश्च स्पर्शवद्रूपवद्द्रव्यसंसर्गाद्रक्तिमाद्युत्पत्तिं पश्यति। तत्र यद्यप्यचाक्षुषेऽर्थे क्वचिद्रूपस्पर्शविकल्पास्पदत्वम्, तथाऽपि न बुद्धिस्तथा। अतस्तयोरुभयत्र एकत्र वा न संसर्गहेतुको नीलाद्याकार उत्पद्येत। एकस्य च द्विष्ठत्वे स्वमतक्षोभः, विषयमात्रनिष्ठत्वे तदाकारविषयप्रत्यक्षतापत्तिः, ज्ञानमात्रनिष्ठत्वेऽर्थनैरपेक्ष्यप्रसङ्गश्चोक्त इति ॥ २८ ॥

---

आनन्द०—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—अन्ये त्विति—(२) "आआरत्त इ अं अं क्थ बुंधि जोगेण झणि आ आरी णीलाइ बुंधि विसदे णि इन्द म अं मिरइवे अं" इति पक्षमनुवदति—बुद्धिरर्थश्चेति—अस्य छाया—"आकाररहितोऽर्थो बुद्धियोगेन जनित आकारः नीलादिबुद्धिविषयो मुनीन्द्रमतनिरूपितमिति"। तत्र संसर्गेति –किं देशैक्यात्ससर्गः? उत कालैक्यात्? यद्वा आभिमुख्यादिविशेषात्। अथवा विषयविषयिभावादिति विकल्पकोटय इत्यर्थः। सिद्धान्तवादिपक्षे संयोगादिः पूर्वपक्षि-

मते निरन्तरत्वं धर्मानङ्गीकारात् । तदुक्तं बुद्धचित्तविवरणे—

"सर्वे भावाः स्वभावेन निर्धर्माश्रयका मताः ।
नैरन्तर्यञ्च संयोगो वियदावरणात्ययः" ॥ इति ।

निर्धर्माश्रयका इत्यत्र निर्धर्मकाः निराश्रयका इत्यर्थः । आवरणात्ययः— आवरणाभावः । ज्ञानार्थयोरपि तदस्त्वित्यत्राह—न तथाऽत्रेति ।

ननु यत्र देशसाम्यं तत्र साकारबुद्धिस्स्यादित्यत्राह—साकारेति—अर्थसंबन्धाभावेऽपि साकारत्वे स्वत एव साकारत्वं स्यादिति वर्तमानस्थलेऽर्थबुद्धिसंसर्गादाकार उत्पद्यत इति रिक्तं वचनमिति भावः । किञ्च तन्मते क्वचिदपि न सादेश्यं सम्भवतीत्याह—न त्वन्मत इति । द्वितीयं शङ्कते—अथ मन्यस इत्यादिना । सांसर्गिकः—संसर्गजन्यः । अन्यत्र त्विति—भूत भविष्यदादिषु तु नाकारस्योत्पत्तिः अपित्वध्यासमात्रमित्यर्थः । कालज इति—संसर्ग इति शेषः । उभयथापीति—घटज्ञाने पटाकारोत्पत्तिप्रसङ्गः । पूर्वापरकालत्वस्य समानकालत्वस्य चाविशेषादिति भावः । तर्हीति—ज्ञानमात्रमेव साकारं जन्यते । नचाकारनियमासम्भवः स्वभावादेव सम्भवाद्योगाचारमताविशेष इति भावः । तृतीयं शङ्कते—नन्विति—अर्थविशेषस्य ज्ञानविशेष एवाभिमुख्यं न सर्वत्रेति नातिप्रसङ्ग इति भावः । सांशयोरिति—निरंशत्वे सर्वप्रदेशसाम्यात् सर्वाभिमुख्यं स्यादिति भावः । चतुर्थं दूषयितुं शङ्कते—स्यादेतदिति । तत एव संसर्गादिति—विषयविषयिभावसंसर्गादित्यर्थः । द्विष्ठैकनिष्ठत्वादिशब्देन त्रिष्ठत्वादिसङ्ग्रहः । स आकारस्साधारो निराधारो वेति विकल्पमभिप्रेत्याद्य आह—अस्याकृतेरिति । द्वितीयं दूषयति—निराधारत्व इति—अर्थसंबन्धाभावादिति भावः ।

ननु घटाकारं ज्ञानमनुभूयते । तत्र ज्ञानाकारस्यानुभवात्जन्यत्वं । तस्य सहकारिकारणमर्थ एव । सोऽपि संबन्ध एव अन्यथाऽतिप्रसङ्गात् तथा च कथं कुसृतिरित्यत्राह—अयञ्चात्र भाव इति—अत्र किमाकारः प्रत्यक्षप्रमाणेन गृह्यते ! अनुमानेन वा । नान्त्यः । प्रत्यक्षाभावे तन्मूलकव्याप्त्ययोगात् । प्रथमेऽपि जनकीभूतज्ञानेन गृह्यते ! ततोऽन्येन वा ? नान्त्यः, तत्समयेऽन्यस्याभावात् । अनन्तरमुत्पद्यते चेत् आकारनाशात्, अतः प्रथमः परिशिष्यते तत्राह—ज्ञानकाल इति । ज्ञानार्थयोस्संसर्गादाकारोत्पत्तौ पूगताम्बूलदर्शनं यदुक्तं तद्वैषम्यमाह—लोकेति । तद्दृष्टान्तेन नीलाद्याकारकल्पनमत्यन्तनिरालम्बनमित्याह—तत्रेति—आकारस्य च द्वयेकनिष्ठत्वादिविकल्पाद् दौस्थ्यं प्रागुक्तमुपपादयितुमुपसंहरति—एकत्रेति—स आकारो द्विष्ठो वा ? एकनिष्ठो वा ? नाद्य इत्याह—द्विष्ठत्व इति—निर्धर्मकत्वपक्षस्येत्यर्थः । उत्पन्नस्य च तन्निष्ठत्वे तदुभयक्षणिकत्वस्य च क्षोभ इत्यर्थः । द्वितीयेऽपि किमर्थनिष्ठः । उत ज्ञाननिष्ठः इति विकल्पे आद्य आह—विषयमात्रेति—आकारमात्रग्रहणस्य त्वयोक्तेरिति भावः । द्वितीय आह—ज्ञानमात्रेति ॥ २८ ॥

भ्रान्तौ रूप्यादिरर्थो विलसति निरधिष्ठान इत्याहुरेके
तन्नाधिष्ठानदृष्टेरनियतिविरहादन्यथाऽतिप्रसङ्गात् ।
निष्ठ्यूतस्वाक्षिदोषप्रभृतिषु च भवेत् केश[गुच्छा]पुञ्जादिबुद्धिः
किं चैषाऽप्यन्यथा धीर्यदनिदमिदमित्यत्र भातं ब्रवीषि ॥२९॥

अथ केश्चिद् बाह्यार्थवादिभिस्सौगतैरुक्तां निरधिष्ठानख्यातिमन्वाख्याति—भ्रान्ताविति ॥ नात्र पुरोवर्तिनि रजताध्यासः, किं तु संस्कारोपनीतं प्रमुषिततदंशं रजतं दोषवशादिदमिति भाति। अन्यथा कथं तैमिरिककेशस्तबकटिट्टिभादिप्रत्ययः? न हि तत्र किंचिदधिष्ठानं भ्रान्तिदशायां बाधदशायां वा भाति। न चेयं स्मृतिरेव; अननुभूतेदंत्वग्रहणात्। प्रागनुभूतमेवेदंत्वं भातीत्ययुक्तम्; तद्भाने तत्कारप्रसङ्गात्। अन्यथा कथं भ्रा[न्तिः]न्ता सविहृतिरिति। तदेतत् प्रतीतिविरोधादिविवक्षया प्रतिषेधति—तन्नेति। अबाधितलोकप्रतीतिविरोधात् निरधिष्ठानत्वं दुर्वचमित्यभिप्रायेणाह—अधिष्ठानदृष्टेरिति। पुरोवर्तिद्रव्यमङ्गुल्या निर्दिशन्निदं रजतमिति व्यपदिशति; उपादत्ते च स्वयम्। तद्वाक्यश्रावी च तत् रजतत्वेन वदति। यदि शुक्लभास्वरशुक्तिशकलमिदंतया न प्रतीतं कथं रजतार्थी तदेवोपादत्ते? कथं च नेदं रजतमिति बाधकोदये जहाति? इत्यभिप्रायेणाह—अनियतिविरहादिति। अन्यथा प्रतीतिप्रवृत्त्योरनियतिरेव स्यादित्याह—अन्यथेति। न हि निमीलिताक्षो रजतं स्मरन् कदाचिद्रजतमिदमिति भ्राम्यति। न च रजतस्मृतिकालदृष्टमङ्गुलीयकार्थी संगृह्णातीति भावः। तैमिरिकभ्रान्तिषु साधिष्ठानत्वं साधयति—निष्ठ्यूतेति। प्रभृतिशब्देन गन्धर्वनगरादिभ्रमेषु मेघादेरधिष्ठानस्य संग्रहः। एवं च वर्णयतामन्यथाख्यातिरनतिक्रमणीयेत्याह—किंचेति। इदमर्थस्य रजततया भानमसन्निहितस्य रजतपदार्थस्येदन्तया भानमिति को विशेषः? अस्मत्पक्षे तु प्रतीतिप्रवृत्तिबाधानामुपपत्तिरिति विशेषः॥ २९॥

---

आनन्द०—नन्वन्यथाख्यातिप्रसङ्ग एव नास्ति अन्यत्राऽन्यस्य भाने मानाभावादिति पूर्वमताक्षेपसङ्गत्या शङ्कते अथेति—यद्यपि शाब्दादिज्ञानं निरधिष्ठानं सम्भवत्येव तथापि भ्रान्तिमात्रस्य निरधिष्ठानप्रत्ययत्वं नास्तीति तत्साधनं युक्तमिति भावः। अन्यथाख्यातिमनुवदति—तैमिरिकेति—तिमिरं नयनदोषः। तेन भाव्यमानस्तैमिरिकः। तेन दीव्यतीति ठक्।

केशस्तबकादिप्रत्ययः—केशसमूहभ्रमः। आदिशब्दार्थो गन्धर्वनगरादिः। नचेयमिति—यद्यपीयं शङ्काऽधिष्ठानसाधिका न भवति, तथापि वस्तुगतिमभिप्रेत्योक्तमिति द्रष्टव्यम्। तद्भाने—प्रागनुभूतेदन्त्वभाने। तत्कारप्रसङ्गात्—तच्छब्दप्रयोगप्रसङ्गात्, एवकार इत्यादिवत्साधुः। अन्यथेति—स्मृतिरूपत्व इत्यर्थः। भ्रान्ता—भ्रान्तिरित्यर्थः।

यद्यपि "नपुंसके भावे क्त" इति भावार्थत्वे क्लीबन्तत्वं, तथापि "तयोरेवे"ति सूत्रविहितनिष्ठान्तस्य न तन्नियम इति ध्येयम् । सविहृतिः—बाधितेत्यर्थः ।

ननु निरधिष्ठानपक्षेऽपि कथं भ्रान्तिः । अन्यत्र भानासम्भवात् कथं वा बाध इति चेन्न । दोषजन्यत्वेन भ्रान्तित्वसम्भवात् । यथा संसर्गाग्रहपक्षे व्यवहारबाधेन । प्रतीतिविरोधमुपपादयति—अबाधितलोकेति । उपादत्ते चेति—उपादानं प्रवृत्तिः । सा समानविषयक प्रतीतिसाध्य पुरोवृत्तिगोचरत्वाभावे न सम्भवतीत्यधिष्ठानं भ्रान्तिविषय इति भावः । तद्वाक्येति—वक्तृज्ञानसमानविषयकत्वाद्वाक्यस्येति भावः । अन्यथेति—अन्यविषयकज्ञानस्याऽन्यत्र प्रवर्तकत्वे शुक्ताविव रङ्गस्थलेऽपि प्रवृत्तिस्स्यादिति भावः । अधिष्ठानगोचरत्वाऽभावे चक्षुरन्वयव्यतिरेकानुपपत्तिः । अध्यासविषयस्याऽसत्वेन-इन्द्रियसंप्रयोगाद्यनपेक्षणादित्याह—नहीति—

ननु भ्रान्तिं प्रति नेन्द्रियाद्यनुविधानं तत्काले गृह्यमाणपुरोवर्तिग्रहणार्थम्, अत एव प्रवृत्त्यादावनियमप्रसङ्गोऽपि नास्ति तत्कालदृष्टिगोचरप्रवृत्या नियमकल्पना-दित्यत्राह—नहीति तत्कालदृष्टलोष्टादावपि प्रवृत्तिप्रसङ्गादिति भावः । नन्वख्याति-पक्षेऽप्येष दोषस्समानः तत्रचेद् भेदाग्रहश्च कारणं तर्हि प्रकृतेऽपि तथाऽस्त्विति चेन्मैवं । तर्हि नियतं पुरोवृत्तिग्रहणं भेदाग्रहश्चेति अगृहीतभेदपुरोवर्तिन एवाधिष्ठानशब्दार्थ-त्वात् तद्ग्रहस्यावश्यकत्वेऽख्यातिपक्ष एवान्तर्भाव इति न पक्षान्तरमिति भावः । तैमिरिकेति ।

ननु तत्र निष्ठ्यूतनायनदोषादीनामधिष्ठानत्वे नेदं गन्धर्वनगरं नेदं केशस्तबक-मित्यादि बाधस्स्यात्, ननु स्वरूपेण गन्धर्वनगरं नास्तीति केशस्तबकं नास्तीति चेन्मैवं । तत्रापि इहेतिप्रतीतेस्तस्यैवाधिष्ठानत्वंनिरधिष्ठाननिषेधप्रतीतेरभावात्तत्रापि संसर्गारोपस्यैव नियतत्वादिति भावः ।

ननु पक्षद्वयस्याप्यविशेषे रजते इदन्त्वारोपपक्ष एव स्वीक्रियतामित्यत्राह—[अस्मिन्निति ।] अस्मदिति । मूलं "अनिदमिदमिति"—अनिदं रजतमिदं शब्देन-भासत इत्यर्थः ॥ २९ ॥

---

ख्यातिं भ्रान्तिस्वरूपां जगदुरविषयां केऽपि तद्धीविरुद्धं
ख्यातिः कस्यापि पुंसः क्वचिदपि विषये सिद्धरूपा हि सिद्धा ।
अत्रार्थासत्त्वतः स्यादियमविषयता सर्वथा सत्त्वतो वा
तावृक्त्वेऽप्यन्यथाख्यात्यसदधिगमयोरेव पर्याय एषः ॥ ३० ॥

सर्वार्थ—अत्र केचिदेवमूचुः—ख्यात्यन्तरवादिनां तावदन्ततोऽख्यातिपक्षेऽन्यथा-ख्यातिपक्षे वा विश्रमः; तत्र च ख्यात्यपह्नवदोषमसत्ख्यातिप्रसङ्गं च परिजिहीर्षमाणै-रन्यासक्तदृष्टिन्यायेन निर्विषयैव ख्यातिरङ्गीकार्येति । तदनुभाषते—ख्यातिमिति ॥

तत्र प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तिरित्यभिप्रायेणाह--तद्धीविरुद्धमिति। निर्विषयत्वे घटादिवत् ख्यातित्वं न स्यादिति प्रसङ्गमभिसन्धायाह--ख्यातिरिति। अयं भावः--यद्यप्यात्मस्वरूपं ज्ञानमिति त्रय्यन्तसिद्धान्तः, तथाऽपि तस्य स्वप्रकाश[रूप]तामात्रेण ज्ञानत्वं श्रुतिपरतन्त्रैरङ्गीक्रियते। एवं क्षेत्रिणां धर्मभूतज्ञानस्य विषयप्रकाशरहितावस्थाऽपि। न त्विह तथा वक्तुं शक्यम्; भ्रान्तिर्निर्विषयेत्यवगमाभावात्; प्रत्युत सविषयत्वमेव तस्यास्सर्वेषु शास्त्रेषु सुव्यक्तमुक्तम्। हिः प्रसिद्धौ। तदिह सविषयत्वेऽवश्यंभाविनि तदविरोधाय भ्रान्तिविषयस्यार्थस्याध्यासाधिष्ठानेष्वविद्यमानतया सर्वत्राभावाद्वा भ्रान्तेर्निर्विषयत्वं वक्तव्यम्; तथा सत्यन्यथाख्यातिरलीकख्यातिर्वा स्यादिति न निर्विषयख्यातिसिद्धिरित्युत्तरार्धेनाह--अत्रेति। एषः--भ्रान्तिशब्दार्थो बोधः। स च निर्विषयोऽपि सविषयत्वेन भातश्चेदन्यथाख्यातिस्वीकारः। निर्विषयतया भाने तु प्रवृत्त्यादिहेतुत्वं न स्यादिति भावः॥ ३०॥

---

आनन्द०--ननु भ्रमस्य सविषयत्वे ह्यन्यथाऽख्यात्यादिषु पर्यवसानं तदेव नास्तीत्याक्षेपसङ्गत्याऽऽह--अत्र केचिदिति--"विषयोपरागशून्यां भ्रान्तिं दोषोद्भवां वदन्त्यन्य" इत्यादिनोक्तं पक्षमनुवदति--अत्रेति। ख्यात्यपह्नवः--अख्यातिपक्षे, असत्ख्यातिप्रसङ्गोऽन्यथाख्यातिपक्षे। तत्--प्राक्प्रपञ्चितम्।

ननु ज्ञानस्य सतो निर्विषयत्वमनुपपन्नमित्यत्राह--अन्यासक्तेति। यथा प्रत्यक्षज्ञानं चन्द्रमण्डलं प्राप्य ग्रहणं तद्देशवर्तितारादिविषयकं न भवति यथा वा चक्षुरन्यासक्तं संबद्धमपि विषयं न गृह्णाति, तथा ज्ञानं किञ्चिदपि न विषयीकरोति दोषमाहात्म्यादिति भावः। प्रवृत्तिज्ञानं स्वविषये प्रवर्तकं अन्यथाऽतिप्रसङ्गात्। तथा च निर्विषयत्वे भ्रमस्य ततः प्रवृत्तिर्न स्यात्। किञ्च घटमहं जानामीतिवदिदं रजतं जानामीति सविषयत्वग्राहकप्रतीतिविरोधः। किञ्च निर्विषयत्वे बाधोऽपि न स्यात् विषयापहारिज्ञानस्य बाधत्वात्। अपि च निर्विषयत्वे भ्रमोऽपि न स्यात् अविद्यमानगोचरज्ञानस्य भ्रमत्वात्।

ननु निर्विषयत्वेऽपि व्यवहारे बाधो बाधितव्यवहारत्वाद्, भ्रमत्वञ्चाख्यातिपक्ष इवेति चेन्न। व्यवहारस्यैवासम्भवात्। नचाख्यातिपक्षेऽपि व्यवहारानुपपत्तिः, इदमिति ज्ञानस्य भ्रमत्वात्। ननु निर्विषयकत्वेऽपि सविषयकस्य सत्वादुपस्थितासंसर्गाग्रहस्यावच्छेदकत्वसम्भवेन सर्वातिप्रसङ्गविरहात्। नचात्रापि तथा वक्तुं शक्यं। ज्ञानस्यनिर्विषयत्वे संसर्गाग्रहस्य च साधारणत्वे कस्यापि व्यवहारस्यासम्भवात्।

नन्विदमिति ज्ञानं रजतस्मरणञ्च प्रवर्तकमस्तु अत एव प्रवृत्तिबाधादिकञ्च।

नच तथा सत्यख्यातिपक्षपातः तदन्यस्य निर्विषयज्ञानस्यापि स्वीकारादिति चेन्न। तादृशज्ञानकल्पने मानाभावात्। प्रवृत्त्यादयो हि ज्ञानद्वयेनैवोपपद्यन्ते प्रत्यक्षमपि सविषयज्ञानगोचरमेवेति भावः।

ननु निर्विषयत्वेऽप्यात्मनस्त्वन्मते ज्ञानत्वं तथा धर्मभूतज्ञानस्यापि विषयविरहितावस्थायां, तथा च कथं निर्विषयत्वे ज्ञानत्वाभाव इत्यत्राह— **अयं भावः इति। स्वप्रकाशरूपतामात्रेणेति**—स्वविषयत्वं स्वप्रकाशत्वमिति सविषयत्वात्ज्ञानत्वमित्याहुः। स्वप्रकाशत्वमेव ज्ञानत्वमित्यन्ये। **एवमिति**—धर्मिग्राहकमानेन ज्ञानस्य नित्यत्वावगतौ कथं तदभाव आपाद्यतामित्यर्थः। ननु निर्विषयत्वस्य तत एव व्यभिचारान्न ज्ञानत्वाभावसाधकत्वमितिचेन्न। कथञ्चिदपि सविषयत्वाभावस्य विवक्षितत्वादिति। ननु सिद्धान्तेऽवस्थाविशेषमादाय कदाचिन्निर्विषयत्वमङ्गीक्रियते चेत् भ्रमावस्थायामपि निर्विषयत्वमस्तु विरोधाभावादिति चेन्न। प्रत्यक्षादिजन्यावस्थात्वावच्छेदेन सविषयत्वनियमान्न निर्विषयं जन्यज्ञानमिति तात्पर्यम्।

अन्येतु विषयान्तरप्रकाशनाऽभावेऽप्यात्मगोचरत्वमस्त्येव सुषुप्तौ धर्मभूतज्ञानेनाप्यात्मनो भानात्। नचाऽऽत्मनः स्वप्रकाशत्वाभावप्रसङ्गः। श्रुतिबलेन स्वप्रकाशत्वसिद्धेः। नच विषयप्रकाशनस्य सार्वकालिकत्वे "विषयप्रकाशनदशायां स्वप्रकाशत्व"मिति वचनविरोधः। विषयशब्दस्यात्मेतरविषयपरत्वादिति वदन्ति।

"अन्यथा सन्तमात्मानं अन्यथा प्रतिपद्यते।
भ्रान्तिज्ञानेन पश्यन्ति द्वैतिनोऽतथ्यदर्शिनः"॥

इत्यादि शास्त्रम्। अध्यासाधिष्ठाने विद्यमानत्वाभावेऽन्यथाख्यातित्वं सर्वत्राविद्यमाने त्वसत्ख्यातित्वं बोध्यम्।

विशेष्याभावादेष इति निर्देशानुपपत्तिं परिहरति—**भ्रान्तिशब्दार्थं इति।** प्रतीतिविरोधपरिहारमाशङ्क्य परिहरति—**स चेत्यादिना**। निर्विषयभ्रान्तौ सविषतयाभ्रान्ति स्सविषयानवेति विकल्प्य आद्य आह—**अन्यथाख्यातीति**। द्वितीय आह— **निर्विषयतयेति**—विषयरहिततया भानेऽभ्युपगम्यमान इत्यर्थः। **प्रवृत्तिः** सविषयत्वव्यवहारः। आदिशब्देन स्मृत्यादि विवक्षितम्॥ ३०॥

**इति निर्विषयख्यातिभङ्गः॥**

**प्रत्यक्षादित्रयं च स्मृतिरिति च मतिः श्रुत्यभीष्टा चतुर्धा**
**प्रत्यक्षं त्वत्र साक्षात् प्रतिपदनुमितिर्व्याप्यतो व्यापके धीः ।**
**शाब्दी वाचाऽर्थबुद्धिः स्मृतिरपि कथिता संस्क्रियामात्रजा सा**
**येषामिष्टाऽन्यथाधीः पृथगभिदधिरे तैरिहान्येऽपि भेदाः ।। ३१ ।।**

**सर्वार्थ**—प्रमाणाप्रमाणविभागप्रसङ्गात् ख्यातौ वादिभेदोक्ता विकल्पाः प्रत्युक्ताः । अथ श्रुत्याद्यभिमतं बुद्धेश्चातुर्विध्यमाह—प्रत्यक्षादीति । श्रूयते हि स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयमिति । ऐतिह्यमिह शाब्दज्ञानम्, औचित्यात् । आह च भगवान्मनुः—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ।।

इति । तज्जन्यायाः स्मृतेस्तदनुविधानादधिकार्थासिद्धेश्च पृथगनुक्तिः । यथोद्देशं पादद्वयेन लक्ष्यते । अत्र—उक्तेषु चतुर्षु । प्रत्यक्षमिह साक्षात्प्रतिपत्तृबुद्धिः । तस्यास्साक्षात्त्वं नाम लैङ्गिकत्वशाब्दत्वस्मृतित्वरहितज्ञानत्वम् । तेन मुक्तादीनां धर्मभूतज्ञानेषु धर्मिज्ञाने चानुस्यूतिः वैशद्यमात्रं साक्षात्त्वमिति त्वव्याप्तमतिव्याप्तं च; सुषुप्त्यादावविशदात्मस्वरूपभानस्य परोक्षज्ञानेष्वपि प्रकाशांशवैशद्यस्य च भावितत्वात् । वैशद्यविशेषः साक्षात्त्वमिति तु दुर्विवेचम् । ननु लैङ्गिकादिज्ञानानां स्वात्मनि साक्षात्त्वमस्ति वा न वा ? आद्ये लिङ्गादिजन्ये कथं तदभावलक्षणं साक्षात्त्वम् ? न च तत्र तज्जन्यत्वं नास्ति, अजन्यत्वेनानादित्वप्रसङ्गात् । न चैकस्य निरंशस्य वेद्यांशत आगन्तुकत्वम्, अंशान्तरतश्चानादित्वमिति श्रद्धेयम् । न द्वितीयः, प्रत्यक्षज्ञाने स्वात्मनि प्रत्यक्षत्वाभावप्रसङ्गात् । न ह्यक्षजन्ये लिङ्गादिजन्ये वा ज्ञाने स्वात्मनि कश्चिद्विशेषो दृश्यत इति । अत्र ब्रूमः । ये खल्वाहुः—

सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन संमता ।।

इति, तान् प्रत्ययं पर्यनुयोगश्शोभते । ये तु लैङ्गिकादिज्ञानेषु स्वात्मस्वविषयविभागानादरेण ज्ञातकरणसंस्कारमात्रयोरन्यतरजन्यज्ञानत्वेन परोक्षत्वं निर्धारयन्ति, न तान् प्रत्यसौ ।

अन्ये तु भ्रमसंवित्तौ सत्यासत्यार्थते यथा ।
प्रत्यक्षत्वपरोक्षत्वे तथैकत्राहुरंशतः ।।
अनिर्धारितसाक्षात्त्वैरत्र वक्तुं न शक्यते ।
बुद्धावेकत्र साक्षात्त्वं परोक्षत्वाविरोधतः ।।
परोक्षेतरबोधत्वं साक्षात्त्वमिति चेन्मतम् ।
स्वस्य स्वान्यत्ववैघट्यात् साक्षात्त्वाभाव इष्यताम् ।।
अनादिबुद्धिसाक्षात्त्वं कुतस्त्यमिति चेन्न तत् ।
कारणेनानपेक्षत्वात् प्रमाणं पुनरागमः ।।

श्रूयते हि कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्चेति । स्मर्यते च 'नेव किंचित् परोक्षं ते' इत्यादि । पश्यत्यचक्षुरित्यादिभिरपि सर्वदर्शित्वं सिद्धमिति । अनुमितिरिति लक्ष्यपदम् । व्याप्यतो व्यापके धीरिति लक्षणपदम् । व्याप्यतया प्रतिसन्धीयमानात्तद्व्यापकतया सामान्यतः प्रसिद्धस्यार्थस्य विशेषतोऽवगतिरनुमितिरित्यर्थः । शाब्दीत्यत्र धीरिति योज्यम् । वाचा—वाक्येन । अर्थबुद्धिः—विशिष्टार्थधीः । स्मृतिः लक्ष्यम् । ननु स्मृतिलक्षणे संस्कारमात्रजन्यत्वमसंभवि; एकहेतुजन्यस्य कस्याप्यभावात् । अत्र तु तथाऽभ्युपगमे संस्कारोद्बोधकादिभिरपि नैरपेक्ष्यप्रसङ्गात् । न चैवमस्त्विति युक्तम्, अतिप्रसङ्गात्, उत्पन्नस्थिरसंस्कारस्य च प्रत्ययान्तराव्यवहितस्मृतिसन्ततिप्रसङ्गात्, सुषुप्त्याद्यभावप्रसङ्गाच्चेति । मैवम्; न ह्यत्र साधारणकारणानां सहकारिणां च व्यवच्छित्त्यै मात्रशब्दः; किन्तु पृथग्बोधजननसमर्थतत्तदसाधारणकारणानपेक्षत्वार्थम्, मनसोऽपि ज्ञानोत्पत्तौ साधारणकारणत्वात् न दोष इति । मात्रशब्दः प्रत्यभिज्ञाव्यवच्छेदार्थः । ननु सन्ति संशयादयोऽपि मतिभेदाः, किं ते न विभज्यन्त इत्यत्राह—येषामिति । अयं भावः—यथार्थं सर्वविज्ञानमिति पक्षेण धीचातुर्विध्यमुक्तम् । अन्यथाख्यातिपक्षे तु संशयादिभेदाश्च वक्तव्याः । तद्व्यवच्छेदाय प्रत्यक्षादिलक्षणे प्रमितिशब्दः प्रयोक्तव्य इति ॥ ३१ ॥

---

आनन्द०—अवसरसङ्गतिमाह—प्रमाणप्रमाणेति—आदिशब्देन स्मृतिरभिमता । प्रत्यक्षं—प्रत्यक्षज्ञानं । अनुमान इति । मानेति घञन्तः अनुमानज्ञान इत्यर्थः । यद्वा छान्दसत्वात् ल्युटि व्यत्ययः । "कोऽसावनुमानो नामे"ति श्वादिसूत्रभाष्यदर्शनात्साधुरित्यप्याहुः । औचित्यादिति—प्रमाणविभागप्रकरणत्वादित्यर्थः । शास्त्रं-शास्त्रजन्यज्ञानं । शास्त्रभेदमाह -विविधागममिति । ननु मनुवचनविरोध इत्यत्राह—तज्जन्याया इति । साक्षात्वन्नामेति । ननु लैङ्गिकज्ञानादि धर्मभूतज्ञानाद्भिन्नमभिन्नं वा ? नाद्यः, आरम्भणाधिकरणविरोधात् । न द्वितीयः, प्रत्यक्षस्य तदभिन्नतयाऽव्याप्तेः । नचावस्थाया इदं लक्षणं तस्य तद्भिन्नत्वादिति वाच्यम् । तथा सति स्वरूपभूतज्ञाने धर्मभूते च लक्षणं न स्यादिति चेदुच्यते । उक्तावस्थाभिन्नज्ञानत्वं लक्षणं । तच्च अवस्था स्वरूपसाधारणम् । नचानुमित्यवस्थादशायामपि स्वरूपस्य साक्षात्वापत्त्या तत्कालेऽपि व्यवहारोपपत्तिः । तत्कालेऽनुमित्याद्यवस्थयाऽभिभूतया साक्षात्कारत्वव्यवहारायोगादिति ।

अन्ये तु ज्ञानत्वं ज्ञानावस्थात्वमित्यर्थः । तेन स्वरूपज्ञाने धर्मभूतज्ञानेऽप्यवस्थाराहित्यदशायां नातिव्याप्तिः, नित्यानामपि ज्ञानावस्था सन्तन्यमानाऽस्त्यवेत्याहुः । अजन्यत्वेनेति ।

ननु तदजन्यत्वमात्रेण कथमजन्यत्वं कथं वाऽनादित्वमपि ? तदजन्यत्वेऽपि ततोऽन्यकारणजन्यत्वसम्भवादिति चेन्न । प्रत्यक्षादिकरणत्रितयेषु लिङ्गादिजन्यत्वं

नास्तीति त्वयोक्तं ततोऽन्यच्च कारणमप्रत्यक्षमेव सामान्यकारणं यद्यपि तदन्यत्, तथापि न तन्मात्रादुत्पत्तिरिति प्रसङ्गादकारणककार्योत्पत्त्यसम्भवाच्चार्थादनादित्वे पर्यवसानमिति भावः। **नहीति**—अननुभूतविशेषाणां वैजात्ये मानाभावादिति भावः। त्रिपुटीप्रत्यक्षवादिनामेवायं पर्यनुयोगश्शोभत इत्याह—**ये खल्वाहुरिति**। सर्वाऽपि प्रमाणजन्या। प्रमानुमितौ स्वात्मांशेऽपि प्रत्यक्षत्वेन सम्मता प्रत्यक्षज्ञानमेव कुतः? साक्षात्कर्तृत्वसामान्यात्साक्षात्कारत्वस्य प्रत्यक्षज्ञाने स्वात्मांश इव परोक्षेऽप्यविशेषादित्यर्थः। **ये त्विति** लैङ्गिकादिज्ञानेष्वपि स्वात्मांशेऽपरोक्षत्वमेव। नच वैषम्याभावात्कथं परोक्षत्वमिति वाच्यम्। दशमस्त्वमसीत्यादाविव परोक्षत्वाङ्गीकारात्। तत्रापरोक्षत्वारोपस्य सिद्धान्तिभिरङ्गीकारादिति भावः। **ज्ञातकरणसंस्कारमात्रयोरिति**—निर्धारणे षष्ठी।

केचित्तु एकस्यैव ज्ञानस्यांऽशभेदेन भ्रमत्वं प्रमात्वञ्च। अन्यथा विरुद्धयोरेकत्र समावेशासम्भवात्। तद्वत्परोक्षत्वापरोक्षत्वे चेत्याहुः। तन्मतमाह—**अन्ये त्विति**। दूषयति—**अनिर्धारितेति**—साक्षात्त्वमिदमिति निश्चित्य समावेशो वक्तव्यः। स तु तन्निश्चये सत्येव भवति। तत्र ज्ञानकरण संस्कारमात्रकरणान्यतरजन्यत्वं परोक्षत्वं तदन्यत्वमपरोक्षत्वमिति वक्तव्यं। एवञ्च लैङ्गिकादीनां वेद्यांश इव आत्मस्वात्मांशयोरपि स्वभिन्नत्वासम्भवात्परोक्षत्वमेवेति भावः।

ननु नित्यज्ञानानां लिङ्गादिजन्यत्वाभावादपरोक्षत्वमिति चेत् इन्द्रियजन्यत्वाभावात्परोक्षत्वं कुतो न स्यात्। अपरोक्षत्वं परोक्षभिन्नत्वमिति चेत् परोक्षत्वमेवापरोक्षभिन्नत्वं किं न स्यादिति शङ्कते—**अनादीति**। श्रुतिबलान्नित्यज्ञानस्याऽऽपरोक्ष्ये निश्चिते तदनुरोधेन परोक्षभिन्नत्वं लक्षणमपरोक्षत्वस्येति परिहरति—**न तदिति**। नित्यज्ञानस्याऽऽपरोक्ष्ये श्रुतिमाह—**श्रूयते हीति**—**कर्माध्यक्षः** कर्मगोचरापरोक्षज्ञानवान्। **साक्षी**—प्रत्यक्षज्ञानवान्। **नैत्र किंचिदिति**—व्यतिरेकमुखेनापरोक्षत्वसिद्धिरिति भावः।

नन्वचक्षुरित्यादिना प्रत्यक्षज्ञानकरणनिषेधात्परोक्षत्वमेवोच्यत इत्यत्राह—**पश्यत्यचक्षुरिति**। **सर्वदर्शित्वं**—सर्वसाक्षात्कर्तृत्वं। दर्शनशब्दस्य साक्षात्कारविशेषवाचितया सामान्याकारसिद्ध्युपपत्तेरिति।

ननु शब्दादीनामप्यर्थव्याप्यतया ततोऽर्थज्ञानेऽतिव्याप्तिः धूलीपटलाद्वह्न्यनुमित्यादावव्याप्तिश्चेति तत्राह—**व्याप्यतयेति**—व्याप्यताप्रकारकज्ञानजन्यत्वे सति व्यापकतया प्रतीतवस्तुविषयज्ञानत्वमनुमितित्वमित्यर्थः। शब्दज्ञानेऽतिव्याप्तिनिरासायाऽद्यं विशेषणं। धूलीपटलजन्यवह्न्यनुमितावव्याप्तिपरिहारार्थं **व्यापकतयेति**। अत एव द्वितीयपरामर्शे तद्गोचरानुव्यवसाये नातिव्याप्तिः। व्याप्यताप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकावच्छिन्नत्वं विवक्षितम्। अत एव न संशयोत्तरप्रत्यक्षे-

विशेषदर्शाजन्येऽतिव्याप्तिः। स्थाणुर्वा पुरुषो वेत्यनन्तरं न स्थाणुरिति ज्ञानादपि पुरुषप्रत्यक्षसम्भवात्। विस्तरस्तु मदीये **मणिसारधिक्कारे** द्रष्टव्यः। शब्दादिगोचरसाक्षात्कारेऽतिव्याप्तिवारणायाह—**विशिष्टार्थधी रिति** —शब्दजन्यपदार्थस्मृतिजन्यपदार्थसंसर्गज्ञानमित्यर्थः। तेन स्मृत्यनुव्यवसायादौ नातिव्याप्तिः। **अतिप्रसङ्गादिति**—उद्बोधकस्याऽनपेक्षितत्वेऽतिप्रसङ्गादित्यर्थः। अतिप्रसङ्गमुपपादयति—**उत्पन्नेति**। सुषुप्त्यादिशब्देन मूर्च्छादेर्ग्रहणम्।

ननु तर्हि संस्कारजन्यत्वमेवास्तु मात्रग्रहणं व्यर्थमित्यत्राह—**मात्रशब्द इति**।

नन्वस्तु प्रत्यभिज्ञा विशिष्टज्ञानं अथापि ग्रहणस्मरणात्मकमिति न तत्रातिव्याप्तिरिति चेन्मैवं। परोक्षेतरबोधत्वमपरोक्षत्वं। तथा च स्वात्मनि भेदाऽसम्भवेऽपरोक्षत्वमिव तद्व्याप्यप्रत्यक्षत्वमपि न सम्भवेदिति स्मृतित्वं तस्य नास्तीति भावः। **संशयादयोऽपीत्यादि**शब्देन भ्रमादीनां ग्रहणं।

ननु सर्वेषामपि भ्रान्तिलक्षणाऽन्यथाधियो दुर्लङ्घत्वात्कथं केषाञ्चिदेवेत्युक्तिरित्यत्राह—**अयं भाव इति**। **अन्यथाख्यातिपक्षे त्विति**। मूलं। **अन्येऽपि भेदाः**—संशयादिभेदाः प्रथमनिर्दिष्टा इत्यर्थः॥ ३१॥

**इति प्रत्यक्षादिप्रमाणविभागलक्षणे॥**

---

**ईदृक्त्वात्यन्तशून्ये न हि मिषति मतिर्नापि युक्तिस्तथात्वे**
**सामग्रीमेववेद्ये पृथगवगतिरस्त्वत्र नैषाऽन्यथात्वात्।**
**धीत्वादेर्वा विशिष्टं प्रथयति जनिता बुद्धिराद्याक्षयोगैः**
**तस्मात् संस्कारशून्येन्द्रियजनितमतिर्निर्विकल्पेति वाच्या॥ ३२॥**

**सर्वार्थं**—प्रमाणज्येष्ठतया प्रथमोद्दिष्टलक्षितस्य प्रत्यक्षस्य निर्विकल्पकसविकल्पकविभागमात्रं सर्वानुमतं सिद्धं कृत्वा निर्विकल्पकमविशिष्टविषयमिति परोक्तं निर्मूलयति—**ईदृक्त्वेति**। अयं भावः—अप्रत्यक्षा बुद्धिरिति वादं परिहरिष्यामः। प्रत्यक्षत्वपक्षे तु नीलपीतादिवत्तत्स्वरूपमपि यथोल्लेखं निर्धार्यम्। तत्र न तावत्प्रथमाक्षसन्निपातसमनन्तरमविशिष्टविषया मे बुद्धिर्जातेति पामरः पण्डितो वा सावधानोऽनवहितो वा कश्चिद्विजानन् व्याहरन् वा दृश्यते। न च निर्विकल्पकान्तरेण तद्ग्रहणं परैरभ्युपगम्यते। एवं सविकल्पकेनापि; तद्धि निर्विकल्पकविषयं विशिष्टं गृह्णाति, न तु निर्विकल्पकम्। यत्तु पठ्यते—

अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥ इति,

तदपि डिम्भविप्रलम्भनम् । निदर्शनं च विशिष्टविषयमेव; बालमूकपश्वादीनां जातिगुणादिविशिष्टवस्तुग्रहणाभावे तत्तन्नियतप्रवृत्त्यादिभङ्गप्रसङ्गात् । शुद्धवस्तुजत्वं च वस्तुजत्वमात्रं वा, असहितवस्तुजत्वं वा, अनारोपितवस्तुजत्वं वा, निर्विशेषवस्तुजत्वं वा ? नाद्यः, सविकल्पकसाधारण्यात् । न द्वितीयः, अनेकव्यक्तिविषयैकनिर्विकल्पकसंभवात्, जातिगुणादीनां च धर्मिणा सह मिथस्संबन्धरहित[स्य] ग्रहणस्य कैश्चिन्निर्वाहात् । न तृतीयः, सविकल्पकसाधारण्यादेव । न चारोपितवस्तुजत्वं सविकल्पस्य कैश्चिदुपन्यस्तं यतस्तद्व्यवच्छेदार्थं शुद्धवस्तुजत्वोक्तिश्शोभेत । न चतुर्थः, अपसिद्धान्तापातात् । न हि निर्विकल्पकगृहीतं वस्तु निर्विशेषमिति वस्सिद्धान्तः; तदात्मकजात्यादिविशेषाभ्युपगमात्, अन्तर्हितसुगतमतानभ्युपगमाच्च । धर्माजन्यत्वे सति धर्मिजन्यत्वं विवक्षितमिति चेन्न; धर्मधर्मितादात्म्यवादिनां भवतां तथोक्तेः पांसुविक्षेपप्रायत्वादित्यास्तामेतत् । मा भू दुपलम्भतस्तादृशधीसिद्धिः, युक्तितस्तु स्यादित्यत्राह—**नापीति** । नह्यादावविशिष्टग्रहणे काचिद्युक्तिः, तदभावे वा काचिदयुक्तिरिति भावः । नन्वस्ति युक्तिः; सर्वत्र हि विशिष्टप्रत्ययस्य विशेषणविशेष्यधीपूर्वकत्वं दृष्टम् । अतः प्रथमसंविकल्पकमपि तथा अन्यत्र विशिष्टप्रत्ययस्य विशिष्टप्रत्ययपूर्वकत्वनियमादनवस्थाप्रसङ्गः । अतोऽवसीयते प्रथमाक्षसन्निपातात् प्रत्येकधीरिति । तत्राह—**सामग्रीति** । अयं भावः—यत्र विशिष्टप्रत्ययस्य पृथग्विशेषणविशेष्यग्रहणपूर्वकत्वं, तत्र भिन्नसामग्रीवेद्यत्वनिबन्धनस्तथाभावः; सुरभिचन्दनत्वयोरन्योन्यनिरपेक्षभिन्नेन्द्रियग्राह्यत्वात् । तदपेक्षस्तु पश्चात् कुतश्चित् सुरभि चन्दनमिति विशिष्टप्रत्ययः । स तु चाक्षुषो मानस आनुमानिको वेत्यवसरे चिन्त्यम् । नन्वेकेन्द्रियवेद्येष्वपि दण्डदेवदत्तादिषु कदाचिद्विशिष्टप्रत्ययस्य पृथक्प्रत्ययपूर्वकत्वं दृष्टम् । सत्यम्; तत्रापि सामग्रीप्रवाहवशात् प्रथमं प्रत्येकग्रहणसामग्रीप्रवृत्तिः, अनन्तरं विशिष्टग्रहणमपि न पृथग्ग्रहणकारणकम् । यत्र तु विशेषणविशेष्यतत्सम्बन्धानां युगपद्योग्यैकेन्द्रियसम्बद्धानां विशिष्टप्रत्ययः, तत्र न पृथग्ग्रहणपूर्वकत्वमस्तीति दृष्टम् । अत एव तत्राप्यनुमीयत इति चेन्न; भिन्नसामग्रीवेद्यत्वोपाधेरनिस्तारात् । विशिष्टप्रत्ययत्वं चानादिविशिष्टप्रत्यये व्यभिचरितम् । न चाविशिष्टविषयमेवेश्वरज्ञानम्, तेन कर्तृत्वानिर्वाहात् । आदिमत्त्वे सतीति विशेष्यमिति चेत्; तत्कस्य हेतोः ? अनादेरनपेक्षत्वादिति चेन्न; आदिमतोऽप्येकसामग्रीवेद्यविषयस्य विशिष्टोल्लेखे पृथग्ग्रहणनैरपेक्ष्यात् । तदिदमभिप्रेत्याह—**अत्र नैवेति** । एकसामग्रीवेद्यविषये विशिष्टप्रत्यये कारणभूता पृथगवगतिर्नास्तीत्यर्थः । तत्र भिन्नसामग्रीवेद्यविषयत्वासम्भवं हेतुमाह—**अन्यथात्वादिति** । प्रतिप्रयोगमप्याह—**धीत्वादेरिति** । आदिशब्देन धीशब्दवाच्यत्वधीलक्षणयोगित्वयोर्ग्रहणम् । प्रथमाक्षसन्निपातजनिता द्धिर्विशिष्टविषया, बुधीत्वात् सम्प्रतिपन्नवदिति । आत्मस्वरूपप्रत्ययश्चाहंत्वादिविशिष्टप्रकाशात्मेत्यङ्गीचक्रुः । किं तर्हि निर्विकल्पकस्योदाहरणमिति चेत् प्रथमाक्षसंप्रयोगजमेव । कथं तस्य निर्विकल्पकशब्दवाच्यत्वम् ? विवक्षितविकल्पा-

भावमात्रात्, अल्पधने दरिद्रव्यवहारवत्। ननु तत्तद्विकल्पाभावतारतम्याद्व्यवहारानियतिः स्यात्, न च व्यवस्थापकं लक्षणं दृश्यते, तत्राह—तस्मादिति। अविशिष्टविषयं प्रत्यक्षं निर्विकल्पकमिति परोक्तासम्भवादित्यर्थः। संस्कारनिरपेक्षेन्द्रियजन्या मतिर्निर्विकल्पिकेति लक्षणसिद्धेर्नोक्तदोष इति भावः। एतेन प्रत्यभिज्ञायां सविकल्पकत्वमेवेति अर्थादुक्तं भवति।

ननु भाष्ये कथं निर्विकल्पकमेकजातीयेषु प्रथमपिण्डग्रहणम्, द्वितीयादिपिण्डग्रहणं सविकल्पकमिति विभज्यते? इत्यम्—लक्षणोन्नयनार्थमुदाहरणप्रदर्शनपरत्वादिति। नन्विह विशिष्टविषयत्वसाधनम् अविशिष्टविषयव्यवच्छेदाय। तस्याश्च सिद्ध्यसिद्ध्योस्तव्द्यवच्छेदो दुश्शकः। मैवम्; सर्वत्र विधौ व्यवच्छेदावश्यम्भावाभावात्। प्रसिद्धः खलु केवलान्वयी, तादृशं च साध्यम्। तादृशहेतुसाध्यानभ्युपगन्तॄणामपि तत्स्वरूपं सिद्धम्। न च तद्विधिर्नास्ति; सति च तस्मिन् नान्यव्यवच्छित्तिः; असम्भवात्। अत्र तु विशिष्टविषयत्वं सविकल्पकादौ दृष्टम्, तदभावो घटादौ; तन्निषेधे च न सिद्ध्यसिद्धिविरोध इति। एतेन निर्विकल्पकमप्रमाणम्, अनवधारणात्मकत्वादिति लोकायतोक्तमपि लूनमूलम्; हेत्वसिद्धेरिति ॥ ३२ ॥

---

आनन्द०—सङ्गतिमाह—प्रमाणेति—प्रसङ्ग एव सङ्गतिरिति भावः। उद्देशस्याकरणात्कथञ्चिन्निर्विकल्पककरणमित्यत्राह—निर्विकल्पकेत्यादि।

नन्वीदृशस्यानुभवस्सम्भवत्येव मनस्सन्निकर्षस्यावश्यं वेद्यत्वात् नहि नास्तीत्येतावताऽर्थसिद्धिरित्यत्राह—अयंभाव इति—सर्वरप्यव्यवहारात्तदनुभवो नास्तीति भावः। किञ्च तत्किं निर्विकल्पकेन गृह्यते? यद्वा सविकल्पकेन? आद्य आह—न चेति—तदङ्गीकारोऽपि तादृशेनेति तत्सिद्धिरेव नास्तीत्यर्थः। द्वितीयं दूषयति—एवमिति—सविकल्पकेनापि तद्ग्रहणं परैर्नाभ्युपगम्यत इत्यर्थः। निर्विकल्पकगोचरानुव्यवसायाभ्युपगमाद्बाह्यार्थगोचरसामग्र्या बलवत्वात्। तदाह—तद्धीति। परोक्तमनुभवप्रकारमपि दूषयितुमनुवदति—यत्विति। आलोचनाज्ञानं—प्रत्यक्षज्ञानं। तत्स्वरूपमाह—बालेति—आदिशब्देन पश्वादिग्रहः। निर्विकल्पकं सर्वं यथार्थमित्याह शुद्धवस्तुजमिति। तत्तन्नियतेति—बालो नालिकेरादि गृण्हाति मूकोऽन्नादि, पश्वादि तृणादि, एतन्नस्यात् निर्विकल्पकस्याऽप्रवर्तकत्वादिति भावः। गुणाः शौक्ल्यादयः। क्रियादि आदिशब्दार्थः। प्रवृत्यादिशब्देन निवृत्यादिग्रहणं। शुद्धशब्दः किं? स्वरूपपरः? संख्यापरः? पारमार्थिकपरो? धर्मनिवृत्तिपरो वेति विकल्पयति—वस्तुजत्वञ्चेत्याविना—

ननु विकल्पमुखेन दूषणमनुपपन्नं तस्य वास्तवार्थत्वात् नहीदं लक्षणं येन सविकल्पकसाधारण्यं दोषस्स्यादिति चेन्न। द्वितीयादिविकल्पस्य निर्विकल्पकमात्रं प्रति वास्तवत्वाऽभावात्। प्रथमादिष्वपि व्यावर्तकत्वाऽभावे विकल्पाभिधान वैयर्थ्यात्।

केचित्तु लक्षणत्वमेवाङ्गीकृत्य दूषयतीत्याहुः। टीकाकारादिभिर्धर्मधर्मिगोचरस्य सामग्रीसाधारण्यस्याभिधानात्तत्राव्याप्तिरित्यत आह—**जातिगुणादीनामिति**। अपसिद्धान्तमेवोपपादयति—**नहीति**। **तदात्मकेति**—निर्विकल्पकविषयीभूतधर्मितादात्म्यरूपजात्यादयो विशेषा इत्यर्थः। आदिशब्देन क्रियादयो गृह्यन्ते। ननु निर्विशेषं ब्रह्माऽभ्युपगम्यत इत्यत्राह—**अन्तर्हितेति**—प्रकटबौद्धैरन्तर्हितबौद्धानां मायिनां मतस्यानभ्युपगमादित्यर्थः। पांसुविक्षेपो हि स्वस्मिन्नेव पतति। तच्च धर्मजन्यत्वाऽभावे धर्मिजन्यत्वमपि न सिद्ध्यतीत्याह—**पांस्विति**—अन्वयो व्यतिरेकश्च युक्तिः।

ननु विशिष्टज्ञानस्य विशेषणज्ञाननियमेऽपि तत् विशेषणज्ञानविशिष्टज्ञानमेव स्यादित्यत्राह—**अन्यथेति**। **अत इति**—अनवस्थापरिहारविषयात् प्रथमाक्षसन्निपातजं ज्ञानं निर्विकल्पकं प्रत्येकधीरित्यर्थः।

ननु सामग्रीभेदो विशेषणविशेष्ययोस्सर्वत्राऽस्त्येव सन्निकर्षस्य भिन्नत्वादित्यत्राह—**अयं भाव इति** इदं विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् सुरभि चन्दनमिति ज्ञानवदिति प्रयोगे भिन्नसामग्रीवेद्यविषयकत्वमुपाधिः।

ननु भिन्नसामग्रीवेद्यविषयकत्वं विशिष्टज्ञानमात्रे वर्तते विशेषणविशेष्ययोर्भिन्नसामग्रीवेद्यत्वात्। यदि भिन्नेन्द्रियवेद्यत्वमेव भिन्नसामग्रीवेद्यत्वं तर्ह्येकेन्द्रियग्राह्यदण्डग्रहपूर्वकदण्डिप्रत्यक्षे साध्यव्यापकं न स्यादिति शङ्कते—**नन्विति**। यद्यपि दण्डपुरुषयोर्न भिन्नेन्द्रियग्राह्यत्वं अथापि दण्डिप्रत्यक्षदशायां दण्डस्यापि सन्निकर्षोऽस्ति[**नचान्त्ये भिन्नसामग्रीग्राह्यत्वमस्त्येव**]भिन्नेन्द्रियग्राह्यत्वञ्च भिन्नकालीनसन्निकर्षग्राह्यत्वं तदाह—**तत्रापि सामग्रीति**। न प्रथम इत्याह—**विशिष्टग्रहणमपीति**—तत्र न विशिष्टज्ञाने विशेषणज्ञानं कारणमिति न तत्र साध्यमित्यर्थः।

ननु तत्रापि विशिष्टग्रहणकारणकत्वं कल्प्यत इत्याशङ्क्य यत्र प्रथममेव सर्वसन्निकर्षोऽस्ति तत्र विशिष्टज्ञाने विशेषणज्ञानधीरित्यत्राह—**न भिन्नेति**—तत्र किं विशिष्टज्ञानविषयत्वमात्रं हेतुजन्यत्वविशेषितं नाद्य इत्याह—**विशिष्टप्रत्ययत्वञ्चेति**।

नन्वीश्वरज्ञाने हेतुरेव नास्तीति शङ्कायामाह—**नचेति**—विशिष्टज्ञानमेव हि कारणमिति जनकीभूतज्ञानवत्वाऽभावात्कर्तृत्वं न स्यादिति विशिष्टज्ञानत्वं तस्याऽप्यस्तीति भावः। द्वितीयं शङ्कते—**आदिमत्वे सतीति**—**अनादेरिति**—गौरवमप्यनादृत्य दृष्टव्यभिचारपरिहारार्थं विशेषणीयमिति भावः। एवन्तर्हि युगपत्सन्निकर्षस्थले

दण्डीत्यादिप्रत्यक्षे व्यभिचारस्य स्फुटत्वात्तद्व्यावृत्यर्थं भिन्नेन्द्रियवेद्यविषयत्वेनापि विशेष्यतामित्याह—नेत्यादिना। उल्लेखो-ज्ञानं। तत्रेति—कारणभूतपृथगवगतिरूप विशेषणज्ञानपूर्वकत्वाभाव इति भावः। ननु धीत्वमात्रं स्वरूपज्ञाने व्यभिचारीत्यत्राह-आत्मस्वरूपेति।

ननु स्वरूपज्ञानस्याऽहंत्वादि प्रकाशत्वाऽभ्युपगमे सविषयत्वप्रसङ्गः। नचेष्टापत्तिः। तथासति निर्विषयख्यातिभङ्गावसरे निर्विषयत्वेन ख्यातित्वाऽभावापादने स्वमतेऽप्यात्मस्वरूपज्ञानस्य निर्विषयत्वाज्ज्ञानत्वं न स्यादित्युक्त्वा श्रुतिबलान्निर्विषयत्वेऽपि ज्ञानत्वमभ्युपगम्यत इति पूर्वग्रन्थविरोध इति चेदत्राहुः। विशिष्टप्रकाशत्वमत्र साध्यमानं विशिष्टविषयव्यवहारजनकत्वं। तच्चात्मस्वरूपस्याऽहंत्वादिगोचरत्वाऽभावेऽपि तद्व्यवहारजनकत्वमस्त्येवेति न व्यभिचारः। नच तद्गोचरत्वाऽभावे तदात्मकत्वाऽभावे वा तद्व्यवहारजनकत्वानुपपत्तिः। प्रकाशस्य तद्गोचरत्वं विनाऽपि प्रदीपादिधर्मवत्स्वापृथक्सिद्धव्यवहारजनकत्वोपपत्तेः प्रकाशकत्वेऽप्येतादृशेषु न विषयविषयिभावः। यद्वा स्वरूपवदहंत्वादिकमपि स्वप्रकाशं। तथा च विशिष्टव्यवहारविषयत्वात्तद्विषयकत्वमस्त्येवेति।

अन्ये तु स्वविषयत्वमस्त्येव। नचैवं घटादिवदहंत्वस्यापि कर्मतापत्तिः विशेष्यतयाविषयस्यैव कर्मत्वात्। अन्यथाऽयं घट इति ज्ञानानन्तरं घटमहं जानामीत्यनुव्यवसायप्रसङ्गात्। तथा चाहंत्वस्य स्वातन्त्र्येण स्वप्रकाशतया भाते विशेषणतया भानान्न कर्मतापत्तिः। अत एव पूर्वग्रन्थविरोधोऽपि न विशेष्यरूपविषयाऽभावपरत्वात्तस्येत्याहुः। विवक्षितेति—सविकल्पकभिन्नत्वे सति ज्ञानत्वं निर्विकल्पकत्वमिति लक्षणयोगात्सविकल्पकत्वञ्च निरुच्यत इत्यर्थः। ननु सविकल्पकत्वाभावमात्रन्निर्विकल्पकत्वञ्चेत् सविकल्पकत्वस्य विषयतारतम्येन सविल्पकत्वस्याप्यनियतत्वात्तदभाववत्त्वलक्षणं नियतं न स्यादित्याशङ्कते—नन्विति।

ननु लक्षणान्तरस्याऽसम्भवाद्दुष्टत्वेऽप्युक्तमेव स्वीकार्यमित्यत्राह—संस्कारेति नन्वेकजातीयेषु प्रथमपिण्डग्रहणं निर्विकल्पकमिव द्वितीयपिण्डज्ञानमपि संस्कारसहकृतेन्द्रियजन्यमित्यतिव्याप्तिः। तथा धारावाहिकद्वितीय ज्ञानादावतिव्याप्तिरित्यत्राह—ननु भाष्य इति—पिण्डस्य प्राथम्यं नाम प्रथमसहितत्वं। लक्षणोन्नयनार्थमिति—एकजातीयेषु प्रथमपिण्डग्रहणमित्यादि प्रथमसूत्रभाष्यं न लक्षणपरं अपि तु लक्ष्यप्रदर्शनपरम्। वस्तुतःप्रथमपिण्डज्ञानस्य संस्कारजन्यत्वसम्भावनाऽभावात्प्रायशो द्वितीयादिपिण्डग्रहणस्य "अयमपि गो"रित्यादिकस्य संस्कारजन्यत्वात्।

ननु सुरभि चन्दनमित्यादिज्ञानस्येवेयमपि गौरित्यादिज्ञानस्य न संस्कारजन्यत्वं। अन्यथा तत्तोल्लेखापत्तिरिति चेन्न। इयमपीत्यत्र सा गौः-इयञ्च गौरित्यर्थतया

तत्तोल्लेखस्येष्टत्वात् । सुरभि चन्दनमित्यादिकमपि संस्कारजन्यमेवेत्याहुः । **अविशिष्टविषयव्यवच्छेदाय**—अविशिष्टो विषयो यस्य तस्य निर्विकल्पकस्य व्यवच्छेदायेत्यर्थः । अविशिष्टो यो विषयस्तद्व्यवच्छेदायेत्यर्थ इत्याहुः । **सर्वत्र विधौ** - तत्तत्स्वरूपसाधने । **केवलान्वयी**—हेतुः । **तादृशं**—केवलान्वयी । **तादृशेति**—केवलान्वय्यनुमानं न सम्भवति व्यतिरेकगर्भव्याप्त्यभावादित्यर्थ इत्येके । वस्तुतः केवलान्वयिधर्म एव नास्तीति यन्मतं तन्मतेऽपि तत्तद्वस्तुस्वरूपमेव केवलान्वयिहेतुरित्यङ्गीकार्यम् । तद्विधिश्चास्त्येवेति व्यवच्छेदाऽभावेऽपि विधिसिद्धिरित्यर्थः । **असम्भवादिति**—स्वरूपमात्रस्य सर्वसाधारण्येन स्वरूपशून्यस्य कस्यचिद्व्यवच्छेद्यस्याऽसम्भवादित्यर्थः । किञ्चात्र विशिष्टविषयत्वविधेर्व्यवच्छेदश्च सम्भवतीत्याह—**अत्रत्विति**—

अवधारणशून्यत्वादमानं निर्विकल्पकं ।
सविकल्पकमेवैकं मानं प्रत्यक्षमेव तत्" ॥

इति चार्वाकपक्षं दूषयति—**एतेनेति** । **हेत्वसिद्धेः**—अनवधारणस्याऽसिद्धेः ॥ ३२ ॥

---

**लिङ्गाद्यव्यापृताक्षान्वयवति विषयेऽक्षार्थजन्यो विकल्प-**
**स्संस्कारस्त्वन्द्रियाणामिह सहकुरुतां तावता न स्मृतित्वम् ।**
**न स्यात्तस्यान्यथात्वं बहुविहतिहतेः कल्पनात्वादिलिङ्गैः**
**स्याद्वाऽनैकान्त्यमेषामनियतिमविसंवादिबाधञ्च सूते ॥ ३३ ॥**

**सर्वार्थ०**-सौगतास्तु निर्विकल्पकमेव प्रत्यक्षम्, अर्थजत्वादर्थविषयत्वाच्च; विकल्पस्तूभयरहितः, अतो न प्रत्यक्षमिति; तान् प्रत्याह—**लिङ्गादीति** ॥ अयमर्थः—लिङ्गशब्दबोधनानुपक्षीणेन्द्रियसंप्रयोगानन्तरं यो विशिष्टप्रत्ययो जायते स इन्द्रियार्थसंप्रयोगजन्यः, निर्विकल्पकवत्तदन्वयव्यतिरेकानुविधानात्, परैरपि प्रत्यक्षानुपलम्भाभ्यां कारणत्वव्यवस्थापनात्; अन्यथाऽतिप्रसङ्गात् । अत्र च पराभीष्टकारणचतुष्केऽधिपत्यालम्बनयोरनन्यथासिद्धत्वात्; तदिह निर्विकल्पकवदर्थजत्वमर्थविषयत्वं च दुस्त्यजम् ।

ननु निर्विकल्पस्य विकल्पहेतुत्वं किं साक्षात्, उत संस्कारद्वारा ? नाद्यः; नायनरश्मिप्रवाहे प्रथमचक्षुस्संयोगस्याशुतरविनाशित्वेन सविकल्पकपूर्वक्षणेऽनवस्थानात्, संप्रयोगान्तरकाले च क्षणिकस्य निर्विकल्पस्यापक्रान्तेः, संप्रयोगनिरपेक्षनिर्विकल्पकजन्यत्वे विकल्पस्यानिन्द्रियजन्यत्वापातात्, तत एवार्थजत्वस्याप्यसिद्धेः, अप्राप्यकारित्वस्य भवद्भिरनङ्गीकाराच्च नापि द्वितीयः, संस्कारजन्यत्वे विकल्पस्य स्मृतित्वप्रसङ्गादिति । तत्राह—**संस्कारस्त्विति** । **इह**—सविकल्पके । अयं भावः—न वयं ज्ञानेऽपि त्वदिष्टं क्षणिकत्वमिच्छामः, येन संप्रयोगान्तरकाले अनवस्थान-

नियमः। तथात्वेऽपि संस्कारजन्यत्वमात्रेण न स्मृतित्वापत्तिः; प्रत्यभिज्ञान्यायेन सहकारिमात्रत्वात् संस्कारस्य, अन्यथा प्रत्यभिज्ञाऽपि स्मृतिरेव स्यात्। अस्त्विति चेन्न; अननुभूतविशिष्टग्रहणात्, अन्यथा इन्द्रियसंप्रयोगस्य तत्राकारणत्वप्रसङ्गात्। भवत्यत्र कारणत्वसहकारित्वयोर्विपर्यास इति चेत्, कुतोऽयं निर्णयः? स इत्युद्देश-प्राधान्यादिति चेत्, न; अयं स इति विपरीतप्रत्यभिज्ञायां तदभावात्। त्वत्पक्षेऽपि कुतस्त्यः प्रधानाप्रधानविभाग इति चेत्; अस्तु यतःकुतश्चित्; मा भूद्वा; तथाऽपि संस्कारमात्रजत्वाभावात् प्रत्यभिज्ञायास्सविकल्पकस्य च स्मृतित्वं दुरुपपादम्।

ननु अविसंवादि विज्ञानं प्रमाणम्; अविसंवादश्च बाधविरहः, स च नास्ति विकल्पस्य, स्वारसिकबाधाभावेऽपि नभःस्थलमलिनतादिष्विव यौक्तिकबाधात्। यो विकल्पस्स विभ्रमो यथा विगतिः, तथा च जात्यादिविकल्प इति। न चात्र प्रत्यक्ष-विरोधादनुमानमेव दुर्बलमिति वाच्यम्; ज्वालैक्यादिषु प्रसङ्गादिति। एतद्दूषयति— **न स्यादिति**। कल्पनात्वम्—विशिष्टग्राहित्वम्। आदिशब्देन निर्विकल्पकेतरत्वं संस्कारजन्यत्वमित्यादि गृह्यते। बहुविहतिहतैरिति हेतुगर्भम्। सन्ति ह्यत्र बह्वयो विहतयः। तथा हि; कल्पनात्वादिति हेतुप्रयोगे तत्तत्पक्षदृष्टान्तादिविकल्पाः पक्षीकृता न वा? नाद्यः, स्वयमेवाश्रयाद्यसिद्ध्यापादनात्। न द्वितीयः, पक्षव्यतिरिक्तस्यात्र सपक्षत्वासम्भवे विपक्षत्वपरिशेषात्; तथा च तत्र कल्पनात्वादिहेतुवृत्तेरनैकान्त्यम-परिहार्यम्। तदिदमाह—**स्याद्वाऽनैकान्त्यमेषा**मिति। एवं स्वाभिमतक्षणिकत्वाद्यनु-मानसाध्यादिविकल्पपक्षीकारबहिष्कारयोरुक्तदूषणमनुसन्धेयम्।

यत्पुनराहुः—

विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः इति।
तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः।
व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः॥ इति,

तदप्यसिद्धहेतुकं प्रलोभनमात्रम्; विकल्पविषयावस्तुत्वे समीचीनयुक्त्यभावात्। कूटयुक्तिभिस्तद्बाधे **योगाचारमाध्यमिक**तर्कैस्त्वदिष्टनिर्विकल्पकविषयनीलादिस्व-लक्षणानामपि निरस्ततापत्तेः। तदिदमभिप्रेत्याह—**अनियत**मिति। नन्वर्थक्रियास्थिति-मविसंवादं ब्रूमः। नच विकल्पविषयाणां जात्यादीनां काचिदर्थक्रियाऽस्ति; स्वलक्षण-सापेक्षत्वे तस्यैव हेतुतोपपत्तेः, तन्निरपेक्षत्वे तेषां पृथगेव कदाचित् कस्याश्चिदर्थ-क्रियायास्साधकत्वप्रसङ्गात्। अतः कल्पनात्वादिहेतुभिरविसंवादबाधः क्रियत इति चोद्यानुयोगः। मैवम्; तत्तत्कार्यापेक्षया नियतपूर्वभावित्वेन प्रत्यक्षानुपलम्भनिश्चित-स्वभावानां जात्यादीनां तत्तदर्थक्रियाहेतुत्वस्य दुरपह्नवत्वात्। एतेन समर्थप्रवृत्ति-हेतुत्वमविसंवाद इति स्थापनेऽपि विकल्पप्रामाण्यस्य न काचित् क्षतिः। विकल्पद्वारैव हि निर्विकल्पकस्य प्रवृत्तिहेतुत्वं मन्यसे। तदविसंवादाच्च वस्तदविसंवादवाचोयुक्तिः।

अथ मणिप्रभाविषयमणिविकल्पन्यायेन विकल्पस्य परम्परया निर्विकल्पकविषयार्थ-प्रतिबन्धात् विवेकाग्रहप्रसूतोऽयं तस्मिन्नविसंवादारोपः; न तु वस्तुतस्तस्य प्रामाण्यमिति। तर्ह्यनुमानस्यापि तथैव प्रसक्तिः; तदेव वस्तुतस्सौगतरहस्यमिति चेत्; प्रलीनं तर्ह्यत्र प्रयुक्तैरनुमानैः। उपयोगविशेषादनुमानस्य पृथग्ग्रहणमिति चेत्; तद्भूयस्तया विकल्पस्यापि तदस्तु, न वा द्वयोरपीति निपुणमवसीयतामिति ॥ ३३ ॥

---

आनन्द०—प्रसङ्गसङ्गतिमभिप्रेत्याह—सौगतास्त्विति। त एवमाहुः—अर्थविषयकं ज्ञानं प्रमाणं। तच्च द्विविधम् प्रत्यक्षमनुमानञ्चेति। अर्थज्ञानं प्रत्यक्षं। अन्यदनुमानं। निर्विकल्पकमर्थजन्यतयाऽर्थविषयकम्। अनुमानन्तु व्याप्तिमत्तया। तत्रापि स्वलक्षणमात्रविषयकं प्रमाणं। जात्यादिविषयकन्तु अप्रमाणम् जन्यार्थविषयकत्वाऽभावात्। जात्यादेर्वृत्तिविकल्पादिना निरस्तविधिभावस्यार्थक्रियारहितस्य च वस्तुतोऽलीकत्वात्। तदुक्तं विद्धसेनेन—

"अर्थगोचरविज्ञानं प्रमाणं तत्द्विधा मतम्।
प्रत्यक्षमनुमानञ्च प्रथमं निर्विकल्पकम् ॥
अर्थवत्वात्तदन्यत्तु तदप्यासिद्धि न प्रमा।
व्याप्यान्य विषयञ्चान्त्यं अपि संवादिता यतः ॥
स्वलक्षणे प्रमाणं स्यात् अन्यत्राऽवस्तु गोचरम्।
निर्णीतं सौगते तन्त्रे सामान्यादेरलीकता" ॥ इति ॥

तदाह—निर्विकल्पकमेव प्रत्यक्षमिति।

ननु लिङ्गाद्यव्यापृताक्षान्वयवत्यपि विषयेऽर्थस्य किमर्थं कारणत्वं वक्तव्यं चक्षुस्सन्निकृष्टेऽपि विषये शाब्दबोधाऽदर्शनात्तादृशानुमितिदर्शनाच्च। तत्राह—अयमर्थ इति—बाधादिवारणाय लिङ्गशब्दबोधेत्यादिपक्षविशेषणम्। परैरिति—

"प्रत्यक्षानुपलम्भाद्याः प्रत्ययाः कारणं मते।
अधिपत्यादयस्सर्वे विज्ञानोदयसम्मताः ॥"

इत्यन्वयव्यतिरेकयोरेव प्रत्यक्षानुपलम्भशब्दाभ्यामभिधानादिति भावः। तदिहेति—ज्ञानोत्पत्तौ चतुष्टयं कारणं तैरिष्यते। अधिपतिप्रत्ययः सहकारिप्रत्ययः आलम्बनप्रत्ययः-समनन्तरप्रत्यय इति। अधिपतिरिन्द्रियं। सहकार्यलोकादिः। आलम्बनं विषयः। समनन्तरप्रत्ययो विशेषणज्ञानम् इदं सर्वं प्रागेव प्रतिपादितम्।

ननु सविकल्पकस्य निर्विकल्पकजन्यतयाऽर्थजत्वं वक्तव्यं, तन्न घटत इति शङ्कते—नन्विति—किमिन्द्रियसंप्रयोगसहितं निर्विकल्पकं कारणं ? उत तन्निरपेक्षं ?

मिति विकल्पे प्रथमेऽपि निर्विकल्पकपूर्वभाव्येव संप्रयोगः? उत उत्तरभावीति विकल्पमभिप्रेत्याऽऽद्य आह—**प्रथमचक्षुस्संयोगस्येति**। द्वितीय आह—**संप्रयोनन्तरेति**।

ननु निर्विकल्पकसमकालं प्रयोगस्सहकार्यस्त्विति चेत् तादृशसम्प्रयोगो नास्तीत्यभिमान इत्याहुः।

आद्यविकल्पद्वितीयाभिप्रायेणाह - **सम्प्रयोगनिरपेक्षेति**--इन्द्रियस्य सन्निकर्षद्वारा जनकस्य तदभावे तदयोगादित्यर्थः। **तत एवेति**--इन्द्रियसन्निकर्षजन्यस्यैवाऽर्थजत्वनियमादिति भावः। ननु बौद्धैस्सन्निकर्षस्याऽनभ्युपगमात्कथं सन्निकर्षस्याऽऽपादनमित्यत्राह—**अप्राप्येति** —भवन्मतेऽतिप्रसङ्गभयात्सन्निकृष्टस्यैवजनकत्वाऽभ्युपगमादिति भावः।

ननु संस्कारजन्यत्वमेव स्मृतित्वप्रयोजकं लाघवात् नतु संस्कारमात्रजन्यत्वमित्यत्राह—**अयंभाव इति** संस्कारमात्रजन्यत्वं गुरुत्वेऽपि स्मृतित्वप्रयोजकमभ्युपेत्यम् प्रत्यभिज्ञायास्संस्कारजन्यत्वे स्मृतित्वाऽभावादित्यत्राह—**प्रत्यभिज्ञान्यायेनेति**–सन्निकृष्ट विशिष्टग्रहणवत् संस्कारादननुभूतविशिष्टग्रहणमस्त्विति चेत्तत्राह —**अन्यथेति**—इन्द्रिय – सम्प्रयोगाऽभावेऽपि प्रत्यभिज्ञा स्यादिति भावः। **भवत्विति**—यथा संस्कारजन्यत्वेपोन्द्रियस्य करणत्वात्प्रत्यक्षत्वमुच्यते तथेन्द्रियजन्यत्वेऽपि संस्कारकरणजन्यत्वात्स्मृतित्वमेवास्त्वित्यर्थः। तर्ह्यनवधारणमेव स्यादिति शङ्कते—**त्वत्पक्षेऽपीति**। **संस्कारमात्रजन्यत्वाभावादिति**।

अयंभावः। तमिमं साक्षात्करोमीत्यनुभवबलात्साक्षात्वं सिद्धं। तमिमं स्मरामीति परामर्शस्त्वसिद्धः अपि तु–संस्कारजन्यत्वनिबन्धनतत्कारणवशात्स्मृतित्वं कल्प्यम् तच्चानुभवसिद्धापरोक्षत्वेन बाधितमिति।

नन्वस्तु संवादिज्ञानं प्रमाणमिति सौगता इत्युक्तं पक्षमनुवदति--**नन्विति**। **यौक्तिकबाधः** –अनुमानतो बाधः। बाधकमनुमानमुपन्यस्यति—**यो विकल्प इति**–**नचात्रेति**।

ननु प्रत्यक्षस्य घटादिजातिविषयोऽनुमानस्य ज्ञाने भ्रमत्वमिति कथमत्यन्तभिन्नविषययोर्बाध्यबाधकभाव इति चेन्मैवं। भ्रमत्वन्नाम विषयस्य बाधः तद्ग्रहे घटाद्यभावग्रहण एव पर्यवस्यतीति समानविषयत्वाद् बाधस्स्यादेवेति भावः। **ज्वालैक्येति** ज्वालैक्यग्राहिणा प्रत्यक्षेण ज्वालाभेदानुमानबाधे तदैक्यं स्यादित्यर्थ इत्यन्ये। **ज्वालैक्यादिषु**—ज्वालैक्यप्रत्यक्षादिषु सत्सु भेदानुमानबाधप्रसङ्गादित्यर्थ इत्यपरे। कल्पनाशब्दस्य भ्रान्तिपरत्वे साध्याविशेषदोषस्स्यादित्यत आह—**विशिष्टेति**। आदिशब्देन

सप्रकारत्वादिपरिग्रहः। पक्षदृष्टान्तादीत्यादिशब्देन हेत्वादयो गृह्यन्ते। आश्रयाद्यसिद्धयापादनादित्यत्रादिशब्देन स्वरूपासिद्ध्यादिग्रहः। कल्पनात्वादीत्यादिशब्देन निर्विकल्पकेतरत्वादि संग्रहः। विकल्पस्याऽप्रामाण्यसाधने क्षणिकत्वादिस्वसिद्धान्तहानिरित्याह—**एवमिति** क्षणिकत्वाद्यनुमानेऽपि हेतुसाध्यविकल्पानां भ्रान्तित्वसाधकाऽनुमाने पक्षत्वे क्षणिकत्वानुमानस्याऽऽश्रयासिद्ध्यादिप्रसङ्गः। तद्बहिर्भावे त्वस्यानुमानस्य व्यभिचारस्स्यादित्यर्थः। साध्यादीत्यादिपदेन हेत्वादिपरिग्रहः। **अवस्तुनिर्भासात्** अलीकप्रकाशत्वादित्यर्थः। **उपप्लवः**—भ्रान्तिः। अवस्तुनिर्भासत्वमसिद्धमित्यत्राह—**असंवादादिति**। बाधितत्वादित्यर्थः। **तस्यां**—सविकल्पकसंविदि। **यदेकं रूपं**—सर्वतो व्यावृत्तं विलक्षणं जात्यादिरूपमिव यद्भाति तत्। **निस्तत्त्वं**—अलीकम् तत्र हेतुः। **परीक्षानङ्गभावत इति**—तर्कोपोद्बलितप्रमाणविषयत्वायोगादित्यर्थः। तत्र किं वस्तुत्वे स्वारसिकबाधोऽभिमतः? उत यौक्तिक इति विकल्प्याऽऽद्य आह—**समीचीनयुक्त्यभावादिति**। द्वितीय आह—**कूटयुक्तिभिरिति**।

नन्वसंवादादित्यत्र संवादोऽर्थक्रियास्थितिरिति शङ्कते—**नन्विति**—**अर्थस्य** प्रयोजकस्य। **जननक्रियायाः** व्यापारस्य। **स्थितिः** उत्पत्ति प्रयोजनजनकत्वमित्यर्थः।

यद्वा अर्थं जनकस्पन्दरूपव्यापारवत्त्वमित्यर्थं इत्यप्याहुः। ननु जात्यादीनामाश्रयद्वारा कार्यजनकत्वमस्तीति चेत्तत्राह—**स्वलक्षणेति तन्निरपेक्षत्व इति**—निरपेक्षस्य दण्डादेः प्रत्येकमप्यवस्थानदर्शनात्सामान्यादेरपि पृथगवस्थानसम्भवेन निरपेक्षजनकमपि स्यादिति भावः। **अविसंवादित्वबाधः**—प्रमात्वबाध इत्यर्थः। **चोद्यानुयोगः**—चोद्यं करणं। प्रत्यक्षानुपलम्भनिश्चितस्वभावानामन्वयव्यतिरेकाभ्यां निश्चितकारणस्वभावानामित्यर्थः। समर्थप्रवृत्तिजनकत्वमपि संवादश्चेत्सविकल्पकस्यापि संवादादेव निर्विकल्पकाविसंवादो वक्तव्य इत्यत्राह—**एतेनेति**। एतत्छब्दार्थमाह—**विकल्पद्वारैव होति**। अन्यथासिद्धिं शङ्कते—**अथेति**—यथा मणिप्रभायां मणिसंबन्धः तथा अर्थसम्बद्धनिर्विकल्पकसंबन्धाद्विसंवादो विकल्पस्येत्यर्थः। **लीनं तर्हीति**—एतादृशानुमानप्रामाण्यसिद्ध्यर्थमेवाऽनुमानस्वीकारः, तद्वैयर्थ्यं स्यादिति भावः।

नन्वनुमानस्य व्यवहाररूपार्थक्रियाकारित्वात्साक्षादेवार्थप्रतिबन्धोऽस्ति तदनङ्गीकारे कथाया एवोच्छेदात्। तथा च—तादृशोपयोगबलादनुमानस्य पृथक्प्रमाणतया गणनमिति शङ्कते—**उपयोगेति**। प्रत्यक्षविकल्पस्याऽनुमानं प्रत्यपि मूलत्वादुपयोगभूयस्तया सुतरां प्रामाण्यमभ्युपेत्यं। यद्युपयोगभूयस्त्वेऽपि न प्रामाण्यं तर्ह्यनुमानेऽपि न स्यादिति तत्पृथग्गणनं व्यर्थमिति वक्ति—**तद्भूयस्तयेति** ॥ ३३ ॥

शब्दात् प्रागर्थसिद्धेः परमपि च तयोरक्षभेदादबोधात्
शब्दैक्ये वाच्यभेदादपि बहुषु पदेष्वेकवाच्यप्रसिद्धेः।
साम्यासत्त्वाद्ययोगाद्युगपदवगतेर्व्यक्तिजात्यादिशब्दैः
शब्दाध्यासो न युक्तः प्रथयति विषये किंतु संज्ञा तटस्था ॥३४॥

ननु सर्वे विकल्पाश्शब्दानुविद्धा एव दृश्यन्ते; शब्दश्च विकल्पविषयमर्थं स्वात्मनैवोपरञ्जयति पीतिमेव शङ्खं पीतश्शङ्ख इति अभ्रान्तौ पृथगुपलम्भस्त्वध्यासोपयुक्त एव; अतोऽशब्दात्मकस्यार्थस्य शब्दात्मना भानादप्रमितिर्विकल्प इति। अत्र किमिदं कृत्स्नविकल्पापेक्षयोच्यते उत तद्विशेषापेक्षयेति बुद्ध्या विभज्य पूर्वं तावत्प्रतिक्षिपति—शब्दादिति॥ अयमभिसन्धिः—नहि सर्वो विकल्पश्शब्दोपरञ्जनघन एव प्रवर्तते, पश्वादीनामव्युत्पन्नानां च तदयोगात्। व्युत्पन्नानामपि तत्तत्संज्ञाविशेषस्मरणहेतुतया तत्तत्प्रवृत्तिनिमित्तविशिष्टवस्तुग्रहणावश्यम्भावादिति। तेन शब्दप्रतीतेः पूर्वमर्थप्रतीतिरस्तीत्ययमेको हेतुः। हेत्वन्तरमप्याह—परमपीति। विस्मृतशब्दस्य शब्दप्रतीतिमन्तरेण केवलमर्थ एव प्रतीयते; तत्रापि न शब्दप्रतीत्यवश्यम्भावः। किंच शब्दः श्रोत्रेन्द्रियेण प्रतीयते अर्थस्तु यथायोगं तत्तदिन्द्रियेण। इदं च ग्राहकमात्रोपलक्षणम्। अतो ग्राहकप्रमाणवैलक्षण्यनियमादर्थैक्येनैव शब्दग्रहणमसमञ्जसमित्याह—तयोरिति। तथा च कतिपयविकल्पापेक्षयाऽपि शब्दाध्यासो न युक्तः। पीतशङ्खादिष्वेकेन्द्रियग्राह्यत्वादन्योन्यसंसर्गाध्यासो युक्त एव। अपि च एक एव शब्दो बहूनप्यर्थानभिदधाति; शक्तिवैचित्र्यात्। तत्र परस्परविरुद्धेष्वर्थेष्वेकस्यैव शब्दस्य ऐक्येन बोधनं न घटत इत्याह—शब्दैक्य इति। एवं बहुषु पदेषु परस्परविरुद्धस्वभावेष्वेकस्यैव वाच्यत्वं दृश्यते पर्यायशब्देषु। तत्राप्यर्थैक्यापरञ्जनमनेकेषां शब्दानां न युज्यत इति वदति—बहुष्विति। उपलभ्यते च शब्दानां साम्येऽप्यर्थवैषम्यम्; एवमर्थानां साम्येऽपि शब्दवैषम्यम्, साम्यं चैकजात्यादेकाकारधर्मयोगित्वाद्वेति। एवमर्थस्य दूरस्थत्वं शब्दस्य सन्निकृष्टत्वं शब्दस्य दूरस्थत्वमर्थस्य सन्निकृष्टत्वं च। एवं तीव्रमन्दादि[विशदाविशदादि] विधिवैचित्र्ययोगदर्शनान्न शब्दार्थयोरन्योन्याध्यासेन प्रतिपत्तिरित्याह—साम्येति। यद्वा साम्यं—शब्दार्थयोः समदेशवर्तित्वम्। आसत्त्यादिः पूर्ववदेव। युगपदवगतेः—समानाधिकरणवाक्ये परस्परविरुद्धस्वभावैर्जात्यादिशब्दैरेकस्यैवार्थस्य यौगपद्येन प्रतीतेरपि न शब्दाध्यासो युक्तः। एवं व्यधिकरणवाक्येऽपि शब्दार्थसंसर्गयोः पृथग्भावेनैव भानादिति भावः। कथं तर्हि सविकल्पकज्ञाने संज्ञा स्वोपश्लेषेणार्थं प्रकाशयतीत्याशङ्क्याह—प्रथयतीति। अयमर्थः—तटस्थैव संज्ञा विशेषणान्तरवद्वाचकत्वेनैव प्रतीयते, न पुनरर्थात्मना। अर्थात्मना प्रतीयमाने कथं वाचकत्वेन प्रतीतिर्योयुज्यत इति भावः।

उक्तं च—

संज्ञा तु स्मर्यमाणाऽपि प्रत्यक्षत्वं न बाधते ।
संज्ञिनस्सा तटस्था हि न रूपाच्छादनक्षमा ॥ इति ।

अयमत्र निर्णयः—

परस्परविरुद्धत्वप्रतिभासानुरोधतः ।
सविकल्पकविज्ञाने शब्दाध्यासो न युज्यते ॥ ३४ ॥

---

आनन्द—नन्विति । तदुक्तं—बौद्धसिद्धान्ते—

"प्रत्यक्षं न भवेद्विकल्पमखिलं शब्दात्मना भासनात् ।
अर्थानामिह पीतशङ्खनयतश्शब्दे तिरोधित्सति ॥" इति ।

ननु शब्दस्य विकल्पविषयत्वेऽपि न भ्रमत्वं वाच्यवाचकभाव सम्बन्धस्य सत्त्वादित्यत्राह—शब्दश्चेति । पीतश्शङ्ख इतिवदभेदेनैव भानाद् भ्रमत्वमित्यर्थः । पृथगुपलम्भस्त्विति वाक्यान्तरं ।

ननु सर्वविकल्पानां भ्रान्तित्वमनुपपन्नं शब्दप्रतीतौ तदभावात् । नचायंशब्द इति शब्दशब्दानुविद्धत्वाद्भ्रान्तिता । शब्द इति शब्दगोचरप्रतीतौ स्वस्य स्वाभिन्नतया भ्रमत्वायोगादिति चेत् । अत्र वदन्ति । न तावत् शब्दगोचरबुद्धौ भ्रान्तित्वाभावः वाक्यवर्णादिशब्दानां तद्भिन्नानां बहूनामभेदभ्रमसम्भवात् । एवं हकारादिष्वपि बोध्यमिति ।

ननु शब्दात्पूर्वमेवार्थस्सिद्ध्यतु, अत एव भेदाऽभेदाध्यासो भ्रान्तिरस्त्वित्यत्राह-- [ अभेदाध्यासोभ्रान्तिरस्त्वित्यत्राह ] अयमभिसन्धिरिति--तत्र किं सर्वो विकल्प इत्यत्र एकैकस्मिन्विकल्पे कार्त्स्न्यं विवक्षितं ? उत सर्वा एव विकल्पव्यक्तय ? इति विकल्पमभिप्रेत्याऽऽद्यस्य दूषणमाह--सर्वं इति—घटत्वादिविषयांशे शब्दोपरञ्जनाऽभावात्तत्र तदयोगात् । द्वितीयं दूषयति--पश्वादीनामिति । पूर्वंद्वितीयं प्रतिवक्ति—व्युत्पन्नानामिति । विस्मृतशब्दस्येति ।

ननु यद्यपि विशेषशब्दस्य स्मरणं, तथापि सामान्येदमादिशब्दानां विस्मरणाऽसम्भवात्तदध्यासस्सम्भवतीति चेन्न । इदमिति शब्दप्रयोगोऽपि इदमर्थंदर्शनादेव । अत एव स्वरूपस्य सामान्याकारेणावगमाद्विशेषाऽध्यासोऽपीति न दोषः । सामान्यशब्दानामपि स्मरणमिति केचित् ।

किञ्च ग्राहकभेदादपि न युगपज्ज्ञानं । तथा च प्रत्येकग्रहणस्याऽपि कदाचित् सम्भवान्न विकल्पमात्रे शब्दतादात्म्यभानमित्याह--किञ्चेत्यादिना—शब्दार्थव्यासिभेदेन तद्ग्रहप्रयुक्तग्राहकभेदस्याऽपि पृथग्ग्रहप्रयोजकत्वादाह—इदञ्चेति तथा चेति ।

ननु भिन्नेन्द्रियग्राह्यत्वेऽपि देहात्माऽध्यासो दृश्यते तथा शब्दाध्यासोऽस्त्विति चेत्। अत्राहुः। नात्राध्यासः अपि तु स्वप्रकाशस्याऽऽत्मनो भेदाग्रहमात्रम्। अस्वप्रकाशत्ववादिनां मतेऽपि पृथग्गृहीतस्याऽऽरोपान्न, शब्दस्थलेऽपि तथा पृथग्ग्रहणे वैलक्षण्यस्य शब्दत्वघटत्वादिग्रहे नियमादध्यासाऽयोगात्।

नचात्मादावपि तथा। वैलक्षण्यग्रहनियमाभावाद्, भावेऽपि वा औपाधिकस्य भ्रमस्य विरोधाऽभावादिति।

वस्तुतस्तु प्रायिकाभिप्रायेणेदम्। एकेन्द्रियग्राह्यशब्दादौ बाधकाऽभावादिति द्रष्टव्यम्। **अपि चेति**—भिन्नतया प्रतीतेस्सहैकस्य तादात्म्यायोगादिति भावः। **शब्दानां साम्येऽपीति** सैन्धवादिशब्दानां साम्येऽपि हयलवणरूपार्थवैषम्यं घटकलशशब्दवैषम्यं जातिवाद्यभिप्रायेण। **ऐकजात्यादिति**—तदन्यवाद्यभिप्रायेण। **एकाकारेति**—दूरस्थत्वादिकं प्रतिपत्त्रपेक्षया बोध्यम्। दूरत्वादेर्देशनिबन्धनत्वादिदमपि तन्निबन्धनमेव युक्तमित्यभिप्रायेणाह—**यद्वेत्यादिना**।

ननु वैषम्यमस्त्येव तथापि तत्प्रतीतिनियमाऽभावात्स्वरूपसद्वैषम्यस्य भ्रमाविरोधित्वादिति चेत्तत्राह—**सामानाधिकरण्यमिति**—तत्र बहूनां शब्दानां वैजात्येनैवोपस्थिते देवदत्तो युवाश्यामो लोहिताक्ष इति प्रतीतेश्शब्दैक्यविषयत्वाऽसम्भवेन वाच्यतालक्षणसम्बन्धविषयकस्य वाच्यतया तन्न्यायेनाऽयं घट इत्याद्योऽपि निर्वाह्याः। तत्रौपाधिकत्वं भ्रमस्य, तथा च न दोष इति वाच्यम्, शब्दाध्यासेन भ्रमत्वे मानाभावादित्याहुः।

किञ्च गामानयेति विशिष्टप्रतीतौ संसर्गस्य भासमानस्य शब्दतादात्म्येनाऽप्रतीतेस्सविकल्पके न शब्दानुवेधनियम इत्याह—**एवमिति**।

ननु कतिपयविकल्पापेक्षयाऽपि शब्दानुवेधो नास्तीत्ययुक्तं शब्दजन्यसविकल्पकत्वावच्छेदेन शब्दानुवेधदर्शनादिति शङ्कते—**कथं तर्हीति** केचिदाहुः।

अन्ये तु अयं घट इति ज्ञाने घटादिविशेषणतया शब्दो भाति कथं शब्दानुवेधो नास्तीति शङ्कते—**कथमिति**। अस्मिन्पक्षेऽर्थप्रकाशनमर्थव्यावर्तनम्।

ननु तटस्थत्वे कथं सविकल्पकविषयत्वमित्यत्राह—**अयमर्थं इति**। यद्यपि संज्ञा प्रतीयत एव नत्विन्द्रियजन्यज्ञाने विषयः अपि तु ज्ञानान्तरे। तत्रापि नाऽर्थात्मना अपि तु तद्वाचकत्वेन। अनन्तरश्चाऽर्थोऽपि तद्वाच्यत्वेनेति तत्प्रयुक्तं भ्रमत्वमिति भावः।

ननु वाचकत्वेनाऽपि प्रतीतिरस्तु अर्थात्मनाऽपि भासतां को दोष इत्यत्राह—**अर्थात्मनेति**—वाच्यवाचकभावस्य भेदनिबन्धनतया तद्ज्ञानस्य तदात्मताऽध्यासविरोधित्वादिति भावः।

**उक्तञ्चेति**—वरदराजीयेति शेषः। **संज्ञाशब्दः**। **प्रत्यक्षत्वं न बाधते**—प्रमात्वं न बाधते। विषयतया सविकल्पकप्रत्यक्षस्याऽप्रमात्वन्नापादयतीत्यर्थः। सा संज्ञा संज्ञिनः स्वाभिन्नदेशस्था सती पीतिमवदाचक्रादनक्षमा न भवतीत्यर्थः। उक्तार्थं संगृह्णाति—**अयमत्रेति**।

**मूलं साम्याऽसत्यादियोगात्**—साम्याऽसत्यादेर्विरुद्धस्य योगादित्यर्थः।

केचित्तु साम्याऽसत्याद्ययोगादिति पठित्वा साम्याऽसत्यादिभिरयोगादित्यर्थ इत्याहुः॥ ३४॥

---

**धीत्वाच्छब्दानुविद्धां विमतनतिमुशन्त्यत्र शाब्दा न सत्त-**
**त्तस्यार्थः स्मार्यभावात् स्फुरतु च स कथं बालमूकादिबोधे।**
**सूक्ष्मा वाङ्मात्रकल्प्या न हि समधिगता तादृशी क्वापि संज्ञा**
**वाचस्सूक्ष्माद्यवस्थाकथनमपि विदुर्भावनाद्यर्थमाप्ताः॥ ३५॥**

अत्र केचिदाहुः—अनुमानेनैव सर्वप्रतीतेश्शब्दानुवेधमुपपादयाम इति, तदेतदनुवदति—**धीत्वादीति**॥ अनूदितमर्थं प्रतिक्षिपति—**न सत्तदिति**। तस्य हेतुमाह—**तस्येति**। अयमर्थः—परिदृश्यमान एवार्थः शब्दं स्मारयति; तस्स कथं तदात्मना भानमिति। बालमूकादिबोधे कालात्ययापदेशमाह—**स्फुरतु चेति**। सूक्ष्मा पश्यन्ती मध्यमा वैखरीति शब्दविभागात् सूक्ष्मशब्दस्सर्वत्रास्तीति न बालमूकादिबोधे कालात्ययापदेश इत्याशङ्क्य परिहरति—**सूक्ष्मेति**। अवाचकस्य तादृशावस्थापन्नस्य शब्दस्य प्रतिपत्तिवेलायां प्रसङ्गाभावादित्यर्थः। तदेव विवृणोति—**न हीति**। वाचकः शब्द एवात्र विमृश्यत इति भावः। कथं तर्हि सूक्ष्माद्यवस्थाकथनं तेषु तेषु शास्त्रेष्वित्यत्रोत्तरम्—**वाच इति**। अवस्थाभेदकथनं केवलभावनार्थं न पुनर्वाचकत्वेन; अतः शब्दानुवेधानुमानमसमञ्जसमिति भावः।

अनेन—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते॥

इति शब्दानुवेधप्रत्यक्षत्वोदाहरणमपि दत्तोत्तरम्; तादृशोपलम्भाभावादेव॥३५॥

आनन्द--प्रसङ्गाद्वैयाकरणोक्तप्रकारमप्यपाकरोति अत्र केचिदित्यादिना। नन्वर्थस्मार्यत्वं शब्दस्याऽस्तु तथाप्यनुमानस्याऽदुष्टत्वात्साध्यसाधकत्वमस्त्वित्यत्राह-- अयमर्थ इति--अर्थज्ञानानन्तरमेव शब्दस्मरणमिति व्यवस्थितौ अनुपस्थितस्य समानाकारकार्थज्ञाने विषयत्वाभावात्तस्य पक्षान्तर्भावबहिर्भावाभ्यां बाधव्यभिचारदोषौ स्यातामित्यर्थः। कथं तदात्मना भानमिति तत्संसृष्टतयेत्यर्थः।

केचित्तु वैयाकरणैकदेशिभिश्शब्दानामर्थात्मना भानाङ्गीकारात्तदभिप्रायेणेदमिति वदन्ति।

येषां शब्दव्युत्पत्तिरेव नास्ति तेषां ज्ञाने बाधमाह--बालेति। सूक्ष्मेत्यादि-- एकस्यैव शब्दस्य चतस्रोऽवस्थास्सन्ति। तदुक्तं सङ्गीतशास्त्रे--

"सूक्ष्मा तु प्रथमं बोध्या पश्यन्ती चैव मध्यमा।
वैखरींचेत्यवस्थास्स्युः शब्दानां हि यथाक्रमात्॥
सूक्ष्मा तु नाभिदेशे स्यात् पश्यन्ती हृदये तथा।
मध्यमा कण्ठदेशे तु निर्गता वैखरी भवेदिति॥

तेषु तेषु शास्त्रेष्विति-भागवतादिष्वित्यर्थः। केवलभावनार्थमिति--प्रणवोपासनाय सूक्ष्माद्यवस्थाभेदो याज्ञवल्क्यादिभिरभिहित इति भावः।

न पुनर्वाचकत्वेनेति--वाचकस्याप्यव्युत्पन्नस्य स्मरणं न सम्भवति चेत् सुतरामवाचकस्य सूक्ष्मस्य स्मरणं न सम्भवतीति तदनुवेधो दुर्वच इति भावः।

प्रत्यक्षेऽपि तन्नियमं निराकर्तुमाह-अनेनेति। अनुविद्धमिव--सम्भावनायामिवशब्दः। 'नूनमयं देवदत्त इव भातीति। शब्दानुवेधप्रत्यक्षोदाहरणं--शब्दविशिष्टप्रत्यक्षप्रतिपादनमित्यर्थः॥ ३५॥

---

सत्त्वाद्यैरक्षगम्यं विमतमिति वदन् वक्तु बाधं विपक्षे
श्रुत्याऽऽलम्बे तु सैव प्रसजति शरणं तादृशादृष्टसिद्धौ।
अध्यक्षं लौकिकं चेदधिगतिविहतं भावनोत्थं न युक्तं
नित्यं त्वक्षानपेक्षं निरुपधिरिह ते दुर्वचोऽक्षप्रकर्षः॥३६॥

इत्थं सर्वप्रत्ययानां शब्दानुवेधवादी निरस्तः। इदानीं सर्वेषामप्यर्थानां प्रत्यक्षत्ववादी निरस्यते। स खल्वेवमाह--धर्मादयः कस्यचित्प्रत्यक्षाः सत्त्वादित्यादिकमनुमानजातं धर्मादीनां प्रत्यक्षत्वं साधयतीति; तथा च योगिप्रत्यक्षं सिद्धमिति। तदेतदनूद्य परिहरति--सत्त्वाद्यैरिति॥ अयं भावः किं प्रत्यक्षत्वमात्रं प्रसाध्यते? किं वा पुनरैन्द्रियिकप्रत्यक्षत्वम्? पूर्वत्र न योगिप्रत्यक्षसिद्धिः; ईश्वरप्रत्यक्षेणैवान्यथासिद्धत्वात्। उत्तरत्र विपक्षे बाधकाभावात् अन्यथासिद्धिरनुमानस्य। अतो न योगि-

प्रत्यक्षं साधयितुमलम्। श्रुतिस्मृत्यादिबाधप्रसङ्गो विपक्षे बाधक इति चेत्, तर्हि श्रुत्यादिकमेव शरणम्, किमनेनानुमानेनेत्याह—श्रुत्येति। उक्तमर्थं विकल्प्यापि दूषयति। अध्यक्षमिति किमध्यक्षं लौकिकं वा ? किं वा भावनोत्थम् ? उत नित्यमेव ? लौकिकं चेत् प्रत्यक्षविरुद्धमित्याह-अधिगतिविहतमिति। लोकोपलम्भविरुद्धमित्यर्थः। न हि धर्मादिविषयं लौकिकं प्रत्यक्षमुपलभ्यते, तथात्वे वा 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वा'दिति सूत्रविरोधः। भावनोत्थमपि प्रत्यक्षं भावनावैशद्यातिरिकेण न क्वापि दृष्टमित्याह—भावनोत्थं न युक्तमिति। मारीचादेर्भावनया रामादिसाक्षात्कारो भयभरदोषनिमित्तं विपरीतज्ञानमेव वृक्षे वृक्षे च पश्यामीति। एवमनुरागादिनिमित्तकामिनीमुखदर्शनादिकमपि व्याख्यातम्। नित्यं प्रत्यक्षं न कारणायत्तमित्याह—नित्यं त्विति। तत्साधनेऽपि न योगिप्रत्यक्ष-सिद्धिरिति भावः।

ननु प्रकृष्यमाणं सर्वं निरतिशयदशाशिरस्कं यथा कुवलामलकबिल्वादिपरिमाणं प्रकृष्यमाणं निरतिशयदशाशिरस्के परममहत्परिमाणे विश्राम्यति; तथा चेन्द्रियशक्तेः प्रकृष्यमाणायाः सार्वज्ञ्ये विश्रमस्समुचितः, एवं च योगिनां मानसप्रत्यक्षस्य सर्व-विषयत्वं सेत्स्यतीत्याशङ्क्य परिहरति—निरुपाधेरिति यथा चक्षुःस्पर्शनादेः प्रकृष्य-माणस्य न सर्वविषयत्वे विश्रमः, एवं मनसोऽपीति भाव्यम्। अन्यथा धर्मादयः कस्यचिच्चाक्षुषाः स्पार्शनाः इत्यादिकमपि वक्तुं शक्येत ॥ ३६ ॥

---

आनन्द०—प्रसङ्गसङ्गत्यभिप्रायेणाह—इत्थमिति। आदिशब्देन मीमांसकानाम-प्रत्यक्षत्वादित्यादि गृह्यते। तथा चेति-यो धर्मादि प्रत्यक्षीकरोति स योगीत्यर्थः। वक्तु बाधं विवक्षेत्यसङ्गतं विपक्षबाधकस्य उक्तानुमानस्य साधकत्वादित्यत आह अयं भाव इति।

ननु "विश्वामित्रजमदग्नी वसिष्ठेनाऽस्पर्धेतां" "वसिष्ठो हतपुत्रोऽकामयत" "भृगुर्वै वारुणिः" "विश्वामित्रो महातेजाः, वसिष्ठः काश्यपस्तथा"। "वसिष्ठः पुलहः क्रतुः" इत्यादेरप्रामाण्यप्रसङ्ग एव विपक्षे बाधक इति शङ्कते—श्रुतिस्मृत्यादीति आदि-शब्देन पुराणादिग्रहणम्। भावनोत्थमपीति-निरन्तरस्मृतिसन्तानमित्यर्थः। लोकोपलम्भेति—लौकिकानां धर्मादिगोचरसाक्षात्काराऽदर्शनादिति भावः। धर्मादीनां लौकिकप्रत्यक्षानङ्गीकारे जैमिनिसूत्रं दर्शयति सत्संप्रयोग इति—इन्द्रियसम्प्रयोगेण यस्मात्पुरुषस्य लौकिकप्रत्यक्षरूपबुद्धेर्जन्म उत्पत्तिः तस्मात्तत्प्रत्यक्षं भवति धर्माद्यतो-न्द्रियस्य ग्रहणे तु निमित्तं न भवति न कारणमित्यर्थः। इन्द्रियसम्प्रयोगेणेव तद्ग्रहण-मस्त्वित्यत्राह- विद्यमानोपलम्भनत्वादिति—प्रत्यक्षयोग्यस्यैवोपलम्भसाधनत्वादित्यर्थः।

ननु वृक्षे-वृक्षे च पश्यामीत्यादिभावनोत्थं दृष्टमित्यत्राह—मारीचादेरिति–योगिप्रत्यक्षस्य दोषजन्यत्वानभ्युपगमेचाऽभ्रान्तत्वापातादिति भावः। आदिशब्देन कंसादीनां ग्रहणम्। अनुरागादीत्यादि शब्देन द्वेषादिकं गृह्यते। कामिनी मुखदर्शनादीत्यादिशब्देन द्वेष्यसर्पादिग्रहणम्।

ननु ज्ञानस्य ग्राहकशक्त्युत्कर्षतारतम्यं क्वचिद्विश्राम्यति तारतम्यत्वात् परिमाणतारतम्यवदित्यनुमानेन शङ्कते—नन्विति। प्रकृष्यमाणं—प्रकर्षवद्वस्तु। सार्वज्ञ्ये—सर्वविषयकज्ञाने। एवञ्चेति सर्वगोचरज्ञानजनकशक्त्या जन्यसर्वगोचरज्ञानसिद्धौ तद्ज्ञानं योगिमानसमेवेति भावः। अत्र निरतिशयशिरस्कत्वं नाम किं सर्वविषयकत्वं? यद्वा सजातीयातिशयान्तररहितत्वं? उभयथाऽपि चक्षुस्पर्शनसर्वगोचरज्ञानसिद्धौ तद्ज्ञानशक्त्यादेः परस्परविषयग्राहकत्वाऽभावाद्व्यभिचार इत्याह यथा चक्षुस्स्पर्शनादेरिति। आभाससमानतामप्याह—अन्यथेति–व्यभिचारेऽपि चेत्साधकत्वं बाधेऽपि किन्न स्यादिति भावः। मूलं वक्तुं बाधं विपक्ष इति–एवं वदन्नानुमानस्य विपक्षे बाधो वक्तुं शक्यइत्यर्थः। निरुपधिरिह ते दुर्वचोऽक्षप्रकर्षः–अक्षप्रकर्षसाधकस्य निरतिशयशिरस्कत्वमुपाधिरित्यर्थः ॥३६॥

---

प्रत्येकं ह्यक्षवेद्यं प्रतिनियततया सर्वलोकप्रसिद्धं
काकोलूकादिकानामपि निजविषये ह्यक्षि चक्षुःप्रकर्षः।
मान्थालव्यालपूर्वेष्वपि खलु रसनास्पर्शनादिक्रमात् स्या-
दक्षस्थानैक्यमात्रं स्थितविषयमतस्त्वक्पिपासादिवाक्यम् ॥३७॥

तदेव प्रकाशयति—प्रत्येकमिति। प्रतिनियतविषयतया हि चक्षुरादीनां प्रसिद्धिः, प्रवृत्तिरप्येवमेव। एवं मनसोऽपि प्रतिनियतविषयत्वं स्वीकार्यम्, दृष्टं च तत्; आत्मादिविषय एव हि मनसः स्वातन्त्र्यमवलोक्यते, बाह्यविषये पुनरिन्द्रियान्तरसहकारितामात्रमेव। परमाण्वदृष्टादिविषये पुनस्तदपि नास्ति; तेषामतीन्द्रियत्वात्। तथा च स्वात्मनि तज्ज्ञानादिषु वा शक्तस्य मनसः स्वातन्त्र्येण न बाह्यविषयेषु शक्तिः। तत्र प्रमाणमाह—सर्वलोकेति।

ननु चक्षुरादीनामपि स्वविषयातिलङ्घनं दृश्यते; दूरे हि काकः पश्यति, अन्धकारेऽप्युलूकादिरर्थं गृह्णाति। अतो मनसोऽपि प्रकर्षविशेषादविषयग्रहणं युक्तमित्याशङ्क्याह—काकेति। काकादिचक्षुःप्रकर्षोऽपि न स्वविषयातिलङ्घी, रूपरूपितदेकार्थसमवायिमात्रग्रहणात्। न हि काकश्चक्षुषा रसं गृह्णाति, नापि चोलूकश्चक्षुषा जिघ्रति। कथं तर्हि मान्थालव्यालादिष्विन्द्रियवृत्तिसंकरः? मान्थालो हि मुखेनैवाभ्यवहरति निर्हरति च, व्यालश्चक्षुषैवाकर्णयत्यवलोकते च। अत इन्द्रियवृत्तेरनियमो युक्त इत्याशङ्क्य परिहरति—मान्थालेति। तत्र हि रसनास्पर्शनयोरेकस्थानवर्तित्ववत्

वागपानयोश्चक्षुश्श्रोत्रयोश्च स्थानैक्यमेव, न पुनरन्येन्द्रियेणान्येन्द्रियकृत्यमाचर्यते। अतो न स्वविषयातिलङ्घनमिन्द्रियवृत्तेरिति भावः।

धर्मादिविषयत्वं तु मनसो यद्विशिष्यते।
चक्षुरादेस्तथाभावो नेष्यते केन हेतुना॥

इति चक्षुरादिप्रतिबन्दिरेव मनसो धर्मादिविषयत्वं निवारयतीति संग्रहः। कथं तर्हि—

त्वक् च दृक् च निपिपासति जिह्वा, विह्वला श्रवणवत् परवृत्तौ।
नासिका त्वयि करीश तथेति प्राप्नुयां कथमिमां स्विदवस्थाम्॥

इति इन्द्रियवृत्त्यनियमो महापुरुषैरभिधीयत इति। इत्थम्—इन्द्रियवृत्तिनियममन्तरेण स्वाभाविकेनैव ज्ञानेन सर्वं साक्षात्करिष्यामीति भावः। न पुनरन्येन्द्रियविषयेष्वन्येन्द्रियवृत्तिरभिधीयते। पश्यत्यचक्षुस्स शृणोत्यकर्णः इत्यादेः परविषयतया तस्याप्यकरणायत्तज्ञानत्वस्यासंकुचित[वि]ज्ञाने मुक्तात्मन्यपि साधारण्यात्। अयमत्र निर्णयः—यदि योगिप्रत्यक्षं प्रामाणिकम्, तदा श्रुत्या स्मृत्या पुराणेन च सिध्यति न पुनरनुमानेन; तस्यान्यथासिद्धत्वात्, चाक्षुषत्वादिप्रसञ्जनप्रतिबन्दिग्रस्तत्वाच्चेति पूर्वमेवोक्तम्।

यथौपनिषदस्त्वीशो नानुमानेन सिध्यति।
तथा योगी च शास्त्रेण केवलेन प्रसिध्यतु॥ ३७॥

---

**आनन्द०**—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्यभिप्रायेणाऽऽह **तदेवेति**—चाक्षुषत्वाद्यतिप्रसञ्जनमेवेत्यर्थः। **चक्षुरादीनामिति**—तथाचाऽप्रयोजकत्वाद्धर्मादीनां न प्रत्यक्षत्वसाधनमिति भावः। **परमाण्विति**—तत्र मनसोऽनुमानसहकारिताऽस्त्येव तस्य सर्वज्ञानजनने सहकारित्वात्, तथाऽपि साक्षात्कारजनकत्वं विवक्षितं तन्नास्तीति भावः। **स्वात्मनि**-यदीयं मनः तस्मिन्नात्मनि। **तज्ज्ञानादिषु**—तज्ज्ञानेच्छादिषु। ननु चाक्षुषत्वादौ न प्रतिबन्द्यवकाशः इष्टत्वादिति शङ्कते—**नन्विति**—कस्यचित् किञ्चिच्चाक्षुषं भवति [तीति] सर्वं चाक्षुषमेव प्रतिनियतविषयत्वप्रसिद्धिस्तु प्रत्येकमिति न दोष इति भावः। **काकेति**—तथा च न सर्वेषां चाक्षुषत्वप्रसङ्ग इति भावः। **मान्थालः**—पक्षिविशेषः। मृद्भक्षकसरीसृपविशेष इत्येके। **तत्र हीति**—जीवस्य यथा स्पर्शो गृह्यते न च तत्र रसनेन्द्रियमेव स्पर्शग्राहकं, अस्तु तत्प्रदेशवृत्ति स्पर्शनेन्द्रियमेव। परमेकप्रदेश एवोभयं वर्तते तद्वन्मान्थालानां वागपानयोः, व्यालानाञ्च चक्षुश्श्रोत्रयोस्स्थानैक्यमित्यर्थः।

ननु तत्र एकमेवेन्द्रियनुभयं गृह्णातु नचान्येषामपि प्रसङ्गः, स्थानैक्यप्रसङ्गस्याऽपि तुल्यत्वादिति चेदत्राहुः। यदि रूपग्राहकस्यैवेन्द्रियस्य शब्दग्राहकत्वं तदेन्द्रियभेदः क्वचिदपि न स्यात् एकस्यैवाधिष्ठानभेदेन शक्तिभेदोपपन्तेः। यदि श्रुत्यादिबलाद्भेदाङ्गीकारस्तर्हि तद्बलादेवैकाधिष्ठानकमिन्द्रियद्वयमङ्गीकार्यमिति तदाह—**अतो न**

स्वविषयातिलङ्घनमिन्द्रियवृत्तेरिति भाव इति । उक्तमर्थं कारिकया संगृह्णाति—धर्मादीति ।

ननु तर्हि वरदराजस्तवे इन्द्रियप्रवृत्तेः स्वविषयातिलङ्घनं कथमुक्तमिति शङ्कते—कथं तर्हीति । त्वक् च दृक्च निपिपासति—पातुमिच्छतीति । त्वक्च चक्षुश्च पानशक्तिरसग्रहणं कर्तुमिच्छतीति केचित् । जिह्वाया नासिकायाश्च श्रवणवत्परिवृत्तौ-तत्कथाश्रवणे आशा वर्तते इति । तथा च तच्छक्तिरस्तीति गम्यते । नन्वस्तिचेदधुना-क्किमिति न दृश्यत इत्यत्राह—प्राप्नुयामिति एतादृशावस्था इदानीं प्रतिबद्धा वर्तते कालान्तरे तु स्यादिति भावः । महापुरुषाः—कूरनाथादयः । इत्थमिति—त्वगादीनाम-चेतनत्वाच्चेतनधर्मासम्भवेनौपचारिकत्वस्यावश्यकत्वादिति भावः ।

नन्विन्द्रियनिरपेक्षवृत्तिः परमपुरुषस्यैव, नान्यस्य मानाभावादित्यत्राह—पश्यत्य-चक्षुरित्यादिना । "दिव्यं ददामि ते चक्षु" रित्यादिनाऽर्जुनादेश्चाक्षुषसाक्षात्कार-दर्शनात्कथमिन्द्रियप्रवृत्तेर्नियम इत्यत्राह—अयमत्रेति । उक्तमर्थं कारिकया संगृह्णाति-यथेति ।

मूलं "अक्षस्थानैक्यमात्रं स्थितविषयमतस्त्वक्पिपासादि वाक्यम्"—वरद-राज स्तववाक्यमित्यर्थः ॥३७॥

॥ इति योगिप्रत्यक्षानुमानभङ्गः ॥

---

संयुक्तव्यापकत्वप्रभृतिसहकृतैर्व्याप्तिधीसव्यपेक्षै-
रक्षैरेवानुमाधीर्भवतु किमितरत्कल्पयित्वेति चेन्न ।
निर्व्यापारेन्द्रियस्याप्युदयति खलु सा भूतभाव्यादिलिङ्गैः
स्मृत्यारूढैः श्रुतैर्वा मन इह सकलज्ञानसामान्यमिष्टम् ॥३८॥

एवं योगिप्रत्यक्षादागमगम्यादृष्टादेरसिद्धिरुक्ता । अथायोगिप्रत्यक्षादनुमान-गम्याग्न्यादेरसिद्धिरुच्यते । कश्चिदाह—धूमादिसंयुक्तमिन्द्रियमेव वह्न्यादिकं गृह्णातु; किमनेनानुमानेन ? सहकारिसामर्थ्ये सर्वमपि संपत्स्यते । चक्षुर्धूमादिसंयोगः प्रथमं सहकारी, तत्सहकारि च व्याप्तिपक्षधर्मत्वपरिज्ञानादि, किमितरप्रमाणपरिकल्पनयेति । एतदाशङ्कते—संयुक्तेति । परिहरति—नेति । परिहारं विवृणोति—निर्व्यापारेति । अयमत्र भावः—नेन्द्रियमत्र वह्न्यादिज्ञाने करणमपि तु धूमादिज्ञान एव । अतो न वह्न्यादिज्ञानं प्रत्यक्षप्रमाणफलम् । अपि तु धूमादिज्ञानमेव वह्न्यादिज्ञानं जनयति । नन्वस्तु धूमादिज्ञानमवान्तरव्यापारः, तद्द्वारा प्रत्यक्षमेव वह्न्यादिज्ञानं जनयतीति चेत्, तन्न, इन्द्रियार्थसन्निकर्षजन्यधूमादिज्ञानमन्तरेणापि स्मृत्यारूढैः श्रुतैर्वा भूत-भाव्यादिलिङ्गैरग्न्यादिज्ञानदर्शनात् । किं च यद्धि यज्जनयित्वैव यज्जनयति तस्य तत्र तदवान्तरव्यापारत्वमिति ह्यवान्तरव्यापारलक्षणमाचक्षते । न चेदं लक्षणं

धूमादिज्ञानेऽस्ति; धूमादिज्ञानमन्तरेणापि प्रत्यक्षेण वह्न्यादेर्द्रष्टुं शक्यत्वात्, तथा दर्शनाच्च। अतोऽनुमानादेव साध्यसिद्धिः; न पुनः प्रत्यक्षात्। अन्यथा शब्दज्ञानमवान्तरव्यापारीकृत्य शब्दार्थज्ञानमपि प्रत्यक्षमेव प्रसज्येत। न च तद्युक्तम्; परोक्षापरोक्षविभागाभावप्रसङ्गात्। अथापि सर्वविषयस्य मनइन्द्रियस्य वह्न्यादिज्ञाने व्यापृतत्वान्मानसं प्रत्यक्षं वह्न्यादिज्ञानमस्त्वित्याशङ्क्य परिहरति **मन इति। सकलज्ञान सामान्यमिति**—संशयविपर्ययस्मृत्यादि[ज्ञान]साधारणत्वान्मनइन्द्रियस्य न तज्जन्यतामात्रेण प्रत्यक्षत्वसिद्धिरिति भावः ॥ ३८ ॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमाह-**एवमिति**। प्रत्यक्षसङ्गतिरेवाऽस्य सङ्गतिरिति न पृथक्सङ्गत्यपेक्षेत्याहुः। आगमगम्यस्याऽदृष्टस्य ग्राहकतया न योगिप्रत्यक्षसिद्धिरित्यर्थः। **सहकारि सामर्थ्यं इति**—प्रत्यभिज्ञायामिवेति भावः।

ननु निर्व्यापारेत्ययुक्तं लिङ्गसंयोगादिरेव व्यापार इत्यत्राह—**अयमत्र भाव इति** सन्निकर्षाऽभावेऽपि भाविभूतलिङ्गैर्वह्न्यादिज्ञानोपपत्तेः नेन्द्रियं करणमिति भावः। यज्जनयित्वैव यज्जनयति तत् तस्याऽवान्तरव्यापार इति नियमाद्वह्न्यादिज्ञाने धूमादिज्ञानं न व्यापार इति भावः। **संशयविपर्ययेति**—स्मृतेस्साक्षात्त्वं नास्ति, संशयविपर्ययोः प्रमाणत्वं नास्तीत्यर्थः ॥ ३८ ॥

---

**पक्षस्थं व्याप्यमात्रो विदितमिह तु न व्यापकस्य प्रसक्ति-**
**र्व्याप्तिस्तेन स्मृता स्यान्न च तत उभयोर्निश्चयः पक्षयोगे।**
**तादृग्व्याप्यान्वितोऽसाविति मतिरपि न व्यापकं तत्र यच्छेत्**
**तस्मात्तद्व्यापिपक्षान्वयनियतमतिर्नाक्षतस्संस्कृतेर्वा ॥३९॥**

उक्तार्थस्थेम्ने पुनरपि विकल्प्य दूषयति--**पक्षस्थमिति**। किं धूमादिदर्शनदशायां प्रत्यक्षो वह्निः? तदा धूमादिरेव विदितः; नतु वह्न्यादिः। तदिदमाह—**इह तु न व्यापकस्य प्रसक्तिरिति**। यदा पुनर्व्याप्तिस्मरणं तदा पुनर्दृष्टान्त एव साध्यप्रसिद्धिः, तत्रैव पूर्वं ग्रहणात्; न तु पक्षे। तदिदमाह—**न चेति**। तर्ह्युपनयावस्थायां साध्यसिद्धिरस्तु, ततोऽनुमानं व्यर्थमित्याशङ्क्याह--**तादृगिति**। उपनयजन्यं ज्ञानं व्याप्तस्य हेतोः पक्षधर्मत्वमवगाहते; न पुनः साध्यस्य पक्षधर्मत्वम्। तस्मात् साध्यस्य पक्षधर्मत्वप्रतीतिर्नाक्षतः, नापि व्याप्तिदर्शनजनितसंस्कारात्; न चोभयस्मात्। अतो व्याप्तस्य हेतोः पक्षधर्मत्वप्रतीतिः साध्यस्यापि पक्षधर्मत्वं प्र[साध]व्यापयतीति सुस्थिरमनुमानम् ॥ ३९ ॥

---

**आनन्द०**—पूर्वसङ्गतिरेवात्रेत्यभिप्रायेणाह—**उक्तार्थमेवेति** –उक्तार्थस्थेम्न इति क्वचित्पाठः।

इन्द्रियमेव केवलं वह्निज्ञानकारणं? उत संस्कारः? यद्वोभयमिति? विकल्पाभिप्रायेण व्याचष्टे—**किं धूमादीत्यादिना**।

वस्तुतस्तु साक्षात्करोमीत्यनुभवाऽभावादनुमिनोमीत्यनुभवाच्च पृथक्त्वं सिद्धम् ।

न च मानसत्वावान्तरजातिरनुमितित्वमिति वाच्यम् । तथात्वे सर्वज्ञानस्याऽपि मानसतया तदवान्तरत्वं प्रत्यक्षादेरिति किमनेन साक्षात्वेन ज्ञानत्वापरपर्यायेण ।

किञ्च बहिरिन्द्रियमपि बाह्यादिकं गृह्णातीति वदन्प्रष्टव्यः । यदि सन्निकर्षमात्राद्गृण्हाति तदा तदभावात्, यदि व्याप्तिपक्षधर्मताज्ञानसापेक्षं, तदा सन्निकर्षजन्यतावच्छेदकावच्छिन्नज्ञानवृत्तिधर्मो व्याप्तिपक्षधर्मताज्ञानजन्यताच्छेदको वाच्यः । तथाऽङ्गीकारे सन्निकर्षजन्यज्ञानविषयत्वाऽभावान्न प्रत्यक्षत्वव्यपदेश इति भवति भिन्नमनुमानं प्रमाणम् ।

मूलं **व्यापकस्य** -वह्न्यादेः न **प्रसक्तिः**—नेन्द्रियेण ग्रहणम् । **तेन** वस्तुतो-व्याप्यधूमादिवेदनेन तद्व्याप्तिस्मृत्या । **उभयोः** पक्षदृष्टान्तयोर्न साध्यनिश्चयः । **पक्षयोगे** -पक्षे योगो यस्य स धूमे इति । **मतिरपि** —उपनयरूपमतिरपि **तत्र**—पक्षे । **व्यापकं** —साध्यं न विषयीकरोतीत्यर्थः ॥ ३९ ॥

॥ इति अनुमानस्य प्रत्यक्षादिबहिर्भावः ॥

---

**नायोग्यस्याक्षबाधः स्वविषयविहतिं न क्षमेतानुमानं**
**स्वस्यैवापेक्षितत्वादनुमितिमखिलां बाधते नागमोऽपि ।**
**निस्सन्देहप्रवृत्तेरिह निपुणधियां नाप्यसौ संशयात्मा**
**वैशिष्ट्यान्न स्मृतिश्चेत्यनुमितिरुदिताऽध्यक्षवन्मानमन्यत् ॥४०॥**

नन्वनुमानं प्रमाणमेव न भवति, प्रामाण्ये सत्येव हि प्रत्यक्षाप्रत्यक्षविवादः, इत्याशङ्क्य परिहरति—**नायोग्यस्येति** । अयमत्र विकल्पक्रमः—अनुमानस्याप्रामाण्यमबाधितत्त्वेऽपि, उत बाधितत्त्वेन ? तत्रापि किं बाधः प्रत्यक्षेण ? अथानुमानेन ? अथवाऽऽगमेन ? यद्वा नियतबाधकाभावेऽपि संशयात्मकत्वेनाप्रामाण्यम् ? अथवा स्मृतिरूपत्वेन ? तत्राबाधितत्वेऽप्यप्रामाण्यमिति तावद्व्याहतम् । बाधेऽपि प्रत्यक्षबाधो योग्यस्यैव । स पुनर्धूमानुमानादौ न दृश्यते । अयोग्यविषये बाधस्त्वप्रयोजकः, अयोग्यानुपलब्धेरबाधकत्वात् । अतो न प्रत्यक्षबाधात् अप्रामाण्यमनुमानसामान्यस्य । यत्र पुनः क्वचित् प्रत्यक्षबाधः तत्र वयमप्यप्रामाण्यमङ्गीकुर्महे । नैतावताऽनुमानतत्त्वापलापः । न चानुमानेन वा बाधः; व्याघातात्, कृत्स्नानुमानाप्रामाण्ये बाधकस्याप्यनुमानस्य तदन्तर्भावात् । तदिदमाह—**स्वविषयेति** । नाप्यागमेन बाधः, आगमस्यैव व्युत्पत्तिदशायामनुमानसापेक्षत्वात् । इदमप्याह—**स्वस्येति** । नच संशयात्मकमनुमानम्, निश्चयेनैव प्रवृत्तिव्यवहारयोर्दर्शनात् तदप्याह—**निस्सन्देहेति** । स्मृत्यात्मकत्वमवशिष्यते, तच्च साध्यस्य पक्षधर्मताप्रतिपत्तौ न सम्भवतीत्युक्तं

प्रागेव। एतदपि वदति--वैशिष्ट्यादिति। अतः प्रत्यक्षवदनुमानमपि पृथगेव प्रमाणमिति निगमयति--अध्यक्षवदिति। अत्र स्मृतेरप्रमाणत्वेनोपादानमन्वारुह्यवादेनेति भाव्यम्॥ ४०॥

---

आनन्द०—आक्षेपसङ्गतिमाह—नन्वित्यादिना। नन्वत्राऽक्षबाधादिविचारो व्यर्थः, अनुमानप्रामाण्यविचारत्वादित्यत्राह—अयमत्रेति। व्याहतमिति—प्रत्यक्षस्याऽप्यप्रामाण्यप्रसङ्गादिति भावः। बाधेऽपि प्रथमं दूषयति—प्रत्यक्षबाध इति—अप्रयोजकः न प्रवर्तत इत्यर्थः।

योग्यानुपलब्धेरेवाऽभावग्राहकत्वादत्र तदभावादिति भावः। प्रागेवेति—प्रत्यक्षबहिर्भावसाधनावसर इत्यर्थः।

ननु "स्मृतिः प्रत्यक्षमैतिह्य" मित्यादिना स्मृतिप्रामाण्याऽभ्युपगमाद्व्याघात इत्यत्राह—अत्र स्मृतेरिति। "वैशिष्ट्यान्न स्मृतिश्चे"ति मूलस्याऽनुभवविषयातिरिक्तस्य वैशिष्ट्यस्य स्मृतिविषयत्वायोगादित्यर्थः॥ ४०॥

॥ इत्यनुमानप्रामाण्यसिद्धिः॥

---

सामान्यं प्राक्प्रसिद्धं न पुनरनुगमस्सिद्धपूर्वे विशेषे
व्याप्तिस्सर्वाऽपि भग्ना क्वचिदपि सकलव्याप्यसङ्गत्यदृष्टेः।
भूयोदृष्टेर्व्यवस्था न हि भवति तथोपाधयः स्युर्दुरूहा
इत्याद्याः स्वेष्टतर्कस्थिरनियमजुषां दर्शनेनैव बाध्याः॥४१॥

सर्वार्थ—अत्र चार्वाकः प्रत्यवतिष्ठते। किमनुमानेन विशेषस्साध्यते, उत सामान्यम्? न तावत्सामान्यम्; प्रागेव प्रसिद्धत्वात्। न ह्यग्निमत्त्वसामान्यमप्रसिद्धम्; महानसस्याप्यनग्निमत्त्वेन दृष्टान्तस्य साध्यविकलत्वप्रसङ्गात्। तदिदमाह--सामान्यमिति। न च विशेषस्साध्यः तस्मिन्ननुगमाभावादित्याह—न पुनरिति।

यथाऽऽहुः—

विशेषेऽनुगमाभावस्सामान्ये सिद्धसाधनम्।
अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः॥ इति,
विशेषेऽनुगभावात्सामान्ये सिद्धसाधनात्।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः॥ इति च।

किंच—

व्याप्तिरेवानुमानस्य जीवातुः सा च सर्वथा।
न सम्भवति सम्बन्धग्रहस्यानुपपत्तितः॥

कतिपयव्यक्तिदर्शनेन सम्बन्धग्रहणस्य व्यभिचारिष्वपि साधारणत्वात्, सकलव्यापकव्यक्तिदर्शनेन सम्बन्धग्रहणमसर्वज्ञेन कर्तुं न शक्यते। यदि सर्वज्ञस्संबन्धवेदी

किम[नेना]नुमानेन ? एवं च सर्वाऽपि व्याप्तिर्भग्ना । प्रमेयत्वाभिधेयत्वादौ सर्वव्यक्त्युपसंहारेण व्याप्तिग्रहणस्याशक्यत्वादित्याह--व्याप्तिरिति । अस्तु भूयोदर्शनेन व्यवस्थेत्याशङ्क्याह--भूयोदृष्टेरिति सहस्रशो भूयोदर्शितस्यापि तत्रतत्र व्यभिचारदर्शनादिति भावः। तर्हि निरुपाधिकसम्बन्धो व्याप्तिरिति लक्षणं कृत्वोपाधिविधूननेनैव व्याप्तिं प्रतिष्ठापयाम इति चेन्न, दृष्टादृष्टोपाधीनामनन्तानां दुरूहत्वेन तद्विधूननस्यैवाशक्यत्वादित्याह--तथोपाधय इति । इत्थमनुमाननिराकरणे दुर्वादिनां प्रलापोऽयं किमनुमानमूलः ? उत तर्कमूलः ? अथवा निर्मूलः ? निर्मूलत्वे प्रलाप एव; अनुमानमूलत्वे तर्कमूलत्वे वा व्याप्तिमन्तरेण तदुभयं न सम्भवतीति तवापि व्याप्तिग्रहणमवश्यम्भावि; तथा च व्याघात इत्यभिप्रायेण परिहरति--इत्याद्या इति । न केवलं तर्क एव परपक्षबाधकः, अपि तु लोकोपलम्भोऽपीत्याह--दर्शनेनेति ॥ ४१ ॥

---

आनन्द०—ननु फलसाधनयोरसम्भवान्नानुमानं प्रमाणमिति पूर्वाक्षेपसङ्गत्यभिप्रायेणाह—अत्र चार्वाक इति—प्रागेवेति—व्याप्तिग्रहणसमय एव सिद्धत्वादित्यर्थः । नह्यग्निमत्वेति—तथा च व्याप्यत्वासिद्धिरिति भावः । चार्वकग्रन्थसम्मतिमाह—यथाहुरिति ।

खण्डनसम्मतिमाह – यथेति—न तावद्विशेषस्साध्यते—अनुगमाऽभावादनुगतधर्माभावेन व्याप्तिग्रहणासम्भवात् । वह्निमत्त्वं पक्षाविशेषितं साध्यञ्चेत्सिद्धसाधनम् । तद्वतस्साध्यवत्वेनाऽनुमानेन सिध्यतोऽनुपपन्नत्वादनुमानं न सम्भवतीत्याहुः ।

अन्ये तु साध्यवतः पक्षत्वं वा ? साध्याभाववतो वेति विकल्पे साध्याभाववतो बाधितत्वेन पक्षत्वासम्भवादिति प्रथमं दूषयति—तद्वत इति—साध्यवतस्सिद्धसाधनग्रस्तत्वादित्याहुः ।

किञ्च स्वरूपसती व्याप्तिर्न हेतुः । अपि तु गृहीता । न च तद्ग्रहस्सम्भवतीत्यभिप्रायेणाह—किञ्चेत्यादिना सा चेति—ग्राहकाभावात्स्वरूपञ्च नास्तीत्यर्थः । अत्र किं सहचारदर्शनं ग्राहकं ? उतोपाध्यनुपलम्भः ? इति विकल्प्य आद्येऽपि किं कतिपयव्यक्तिषु सहचारदर्शनं कारणं ? उत यावद्व्यक्तिष्विति ? विकल्प्य आद्य आह—कतिपयेति । द्वितीयेऽपि किं सर्वज्ञो ग्राहकः ? उताऽसर्वज्ञ इति विकल्पे आद्य आह—सकलेति । द्वितीये आह—यदीति । सर्वाऽपीति – सर्वप्रकाराऽपीत्यर्थः । प्रमेयत्वेति ।

ननु प्रमेयत्वाभिधेयत्वयोरेक व्यक्तित्वात्तयोरेकत्र ग्रहसम्भवात्कथं न व्याप्तिग्रह इति चेन्न । साध्यसाधनव्यक्तिभेदाऽभावेऽप्यशेष साधनाश्रयाश्रित साध्यसंबन्धादिग्रहस्य यावत्साधनाश्रयोपस्थित्यभावेऽसम्भवादिति भावः ।

ननु सर्वाऽपि व्याप्तिर्भग्नेत्ययुक्तं—अनौपाधिकत्वस्यैव सम्भवादिति प्रथमे द्वितीयं शङ्कते—तर्हीति । दृष्टादृष्टेति—अनुपलब्धि मात्रस्याऽभावाग्राहकत्वाद-

तीन्द्रियाणां योग्यानुपलब्ध्यभावादिति भावः। **निर्मलत्व इति**—प्रलापमात्रस्याऽप्रयोजकत्वादिति भावः। **अपि त्विति**—धूमदर्शनान्नियमेन वह्निज्ञानदर्शनात्, तृप्त्यर्थं भोजनादौ प्रवृत्तिदर्शनात्, परप्रतिपत्यर्थं शब्दप्रयोगदर्शनाच्चेत्यर्थः। मूलं **"न पुनरनुगमस्सिद्धपूर्वो विशेष"** इति—विशेषेऽनुगतिः पूर्वं न ज्ञातेति व्याप्तिग्रहो न स्यादित्यर्थः॥ ४१॥ **इत्यनुमानबाधकतर्कपरिहारः॥**

---

**दृष्टेऽतीचारशङ्कां न भवति यदि सा क्वापि देशान्तरादौ**
**सिद्धा तत्रानुमानस्थितिरथ न तदा क्वातिशङ्कावकाशः।**
**व्याघातान्ता तु शङ्का न पुनरुदयति स्वप्रवृत्त्यादिभङ्ग-**
**द्यावच्छङ्कं च तर्कप्रसृतिरिह ततो नानवस्थादिदोषः॥ ४२॥**

सर्वार्थः- अनुमाने तावत् सामान्यं न साध्यते; येन सिद्धसाधनत्वमुद्भाव्यते। किंतु सामान्यव्याप्तिसहकृतेन पक्षधर्मत्वेन सामान्यस्य पक्षनिष्ठत्वरूपो विशेषस्साध्यते। कथं तर्हि विशेषव्याप्तिशून्येन पक्षधर्मेणापि हेतुविशेषेण तत्सिद्धिरिति मा वोचः। विशेषव्याप्तेरनुमानाङ्गत्वस्वीकारे पुनरयुक्ताङ्गत्वम्; अनपेक्षितप्राप्तिकल्पनया दूषणाद् प्राप्तिसमा; समाधिश्च सामान्यव्याप्तेरेवानुमानाङ्गत्वात्। कथं सामान्यविषया व्याप्तिर्विशेषसिद्धावङ्गमिति चेत्; एवं तर्हि युक्ताङ्गपरित्यागः, सामान्यव्याप्तेरेव विशेषसिद्धौ युक्ताङ्गत्वात्। विशेषव्याप्तिरूपायाः प्राप्तेरङ्गत्वं परिकल्प्य तदभावेन दूषणमप्राप्तिसमां प्रक्रियामनुधावति। अविषयवृत्तित्वं च सामान्यविषयाया व्याप्तेर्विशेषविषये सञ्चारणेन दूषणकथनात्। तथा च सामान्यव्याप्त्या पक्षधर्मतया च परिष्कृतो हेतुः पक्षे साध्यविशेषं साधयति; अन्यथा प्रत्यनुमानप्रतितर्कयोरपि कण्ठगतजीवितत्वमापद्येत। अतो विशेषेऽनुगमाभाव इत्यादेरनवकाशः। यत्पुनस्सामान्येन सर्वव्यक्तिग्रहणासंभवान्न व्याप्तिग्रहणं संभवतीति, तदनन्तरमेव समाधास्यामः। तदवशिष्यते भूयोदर्शनाव्द्याप्तिग्रहणं न संभवति अतिचारशङ्कायास्सर्वत्र सुलभत्वादिति, तद्देतद्विकल्प्य दूषयति। भूयोदर्शनदृष्टस्याप्यर्थस्य किं दृष्ट एव देशेऽतिचारशङ्का उत देशान्तरादौ? न तावद् दृष्ट इत्याह—**दृष्ट इति**॥ नापि देशान्तरादाविति वक्तुमनुवदति—**यदीति**। देशान्तरादावतिचारशङ्कायां देशान्तराद्यनुमानमेव निष्प्रतिद्वन्द्वमवतिष्ठत इत्याह—**सिद्धेति**। देशान्तरानुमानाभावमाशङ्कते—**अथेति**। शङ्कितमर्थं प्रतिक्षिपति **तदेति**। तर्हि शङ्कायाः को निवारकः? निवारकाभावे कथं शङ्का निवर्तेतेत्यत आह—**व्याघातान्तेति**। अयमर्थः—उत्पन्ना शङ्का व्याघातदर्शनेन निवर्तते। तेनैव व्याघातदर्शनेन उत्तरोत्तरशङ्का न जायत इति। तथा च शङ्कानिवृत्तौ तर्कप्रवृत्तिस्तावतैवावसीदतीत्याह—**यावच्छङ्कमिति**। तेनोत्तरोत्तरतर्कप्रवृत्त्याऽनवस्थावचनमस्थानवाद इत्याह—**तत इति**। एतत्सर्वमभि [सन्धायो] प्रेत्योक्तं न्यायविद्भिः—

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का तत स्तराम्।
व्याघातावधिराशङ्का तर्कश्शङ्कावधिर्मतः ॥
इति, अनेन—व्याघातो यदि शङ्काऽस्ति न चेच्छङ्कातातस्तराम्।
व्याघातावधिराशङ्का तर्कश्शङ्कावधिः कुतः॥

इति कुसृष्टिरपि नष्टप्राया; यावद्व्याघातदर्शनं शङ्कायास्सत्त्वम्; व्याघातदर्शने तन्निवृत्तिरित्युक्तत्वात् । भूयोदर्शनदृष्टाया व्याप्तेर्न निर्मूला शङ्का; तस्यास्सर्वत्र सुलभत्वेन स्वप्रवृत्त्यादिविरोधप्रसङ्गात्। उपाधिदर्शनादिमूलशङ्कायामुपाधिविधूनन-मुत्तरत्र दर्शयिष्यते ॥ ४२ ॥

---

**आनन्द०**—पूर्वोक्तदूषणोद्धाररूपत्वान्न पृथक्सङ्गतिरित्यभिप्रायेणाह—**अनुमाने तावदित्यादिना** । **अयुक्ताङ्गत्वमिति**—हेतुभूताया विशेषव्याप्तेरङ्गत्व-कल्पनादिति भावः। **अनपेक्षितेति**—असाधनं साधनतया प्रकल्प्य दूषणं प्राप्तिसमेति तल्लक्षणादिति भावः। **विशेषव्याप्तिरूपाया इति**—साधनत्वं प्रकल्प्य कस्यचित्तस्याऽ-भावात् यद्दूषणं तदप्राप्तिसमाजातिरिति तत्साधर्म्यमिति भावः।

लक्षणमाह—**सामान्यविषयव्याप्तेरिति**—सामान्यविषयव्याप्तियात्रस्य विशेष-धर्मावच्छिन्नत्वसञ्चारणात् स्वविषयसञ्चारणविषयवृत्तिरिति तल्लक्षणयोगादिति भावः। तर्हि विशेषसिद्धिः कथमित्यत्राह—**तथा चेति**—व्यापारसामान्यसिद्धिः पक्ष धर्मतया च विशेषसिद्धिरिति भावः। **अन्यथेति**—अनुमानमात्रोच्छेदे विशेषविषयकाऽनु-मानं न सम्भवति—अनुगमाभावात्। सामान्यविषयकमपि न सम्भवति—सिद्धसाधना-दिति। **तदेतत्** अनुमानतयोपन्यस्त ? मुत तर्कतया ? उभयमपि ? व्याप्तिसापेक्षत्वादिति भावः ।

**तदनन्तरमेव**—एतत्पद्यव्याख्यान एव । **देशान्तरादाविति**—देशान्तरस्यासन्नि-कृष्टत्वानुमानेनैव तदुपस्थितिर्वाच्या। तथा चानुमानं सिद्ध्यतीति भावः।

ननु सर्वत्र शङ्कायां सत्त्यां कथं व्याप्तिग्रहः ? व्यभिचारज्ञानस्य प्रतिबन्ध-कत्वादित्याशङ्कते—**तर्हीति** ।

ननु शङ्कायाः कथं व्याघातेन निवृत्तिः व्याघातस्य ज्ञानात्मकत्वाभावादित्य-त्राह—**अयमर्थ इति**। **व्याघातदर्शनेनेति**।

ननु व्याघातज्ञानं न शङ्काप्रतिबन्धकं ग्राह्याऽभावानवगाहित्वात्। व्यभिचार-शङ्का हि वह्न्याद्यभावे धूमादिसत्त्वज्ञानं।

न च व्याघातज्ञानं तद्विशेषाभावावगाहि। व्याघातो हि धूमार्थं वह्न्यादेर्निय-मेनोपादानानुपपत्तिः। न च सा तदभाव इति चेत् उच्यते । नियतपूर्वसत्ताभावज्ञानं हि व्यभिचारशङ्का। व्याघातो हि धूमादिकं प्रति नियतोपादानं स च नियतसत्ता-

पादकव्यापारः। तद्भानञ्च नियतसत्ताज्ञानं नान्तरीयकमिति भवति ग्राह्याभावावगाहीति भावः । **न्यायविद्भिरिति**—उदयनादिभिरित्यर्थः । **शङ्का चेत्**—सन्निकृष्टे व्यभिचारशङ्काया असम्भवादसन्निकृष्टे देशान्तरे व्यभिचारशङ्का वाच्या। तथा च देशान्तरज्ञानार्थमनुमानमस्त्येव। शङ्का चेन्नास्ति तदा सुतरामनुमानं प्रवर्तत एव। व्याघातावधिरेव शङ्कोदयः व्याघातज्ञाने सति न भवतीत्यर्थः । **शङ्कावधिः** व्यभिचारशङ्कायां सत्यां तर्को नोदेति मूलभूतव्याप्तिशैथिल्यादिति केचित्।

केचित्तु तर्कःशङ्कावधिः यावदाशङ्कं तर्कोदय इत्याहुः। खण्डनोक्तं दूषयति—**अनेनेत्यादिना** । **व्याघातो यदि शङ्काऽस्ति**—व्याघातो विरोधः, स च द्वयाश्रय इत्याश्रयीभूता शङ्काऽस्त्येव। **न चेत्**—व्याघात इत्यनुषज्यते। व्याघाताऽभावे शङ्का-निर्बाधा सुतरां स्यादेव। तथा च फलितमाह—**व्याघाताऽवधिरिति** । व्याघातावधिराशङ्का तर्कश्शङ्कावधिरित्येतदयुक्तमित्यर्थः । अनेनेत्यर्थमाह—**यावद्व्याघातदर्शनमिति**।

ननु च वह्निं विनाऽपि धूमोऽस्त्विति शङ्कायास्सम्भवात्कथं व्याप्तिग्रह इत्यत्राह—

**भूयोदर्शनेति** । ननूपाधिदर्शनेन तत्सामान्यात्सर्वत्र शङ्का स्यादित्यत्राह—**उपाधिरिति**। ४२ ॥ **इति अतिचारशङ्कोद्धारप्रकारः ॥**

---

**व्याप्यत्वं यस्य यत्र स्फुरति सहचरे सोऽस्य हेतोरुपाधिः**
**साध्यव्यापी समोऽयं समगणि निपुणैस्साधनाव्यापकश्च ।**
**योग्यादृष्ट्या च तर्करपि तमपनुदेच्छङ्कितं निश्चितं वा**
**साम्यं नाम्नाहुरेके तदभिमतमिह व्यापकादर्शनादि ॥ ४३ ॥**

**सर्वार्थः**—उपाधिस्वरूपप्रदर्शनपूर्वकमुपाधिविधूननप्रक्रियां प्रदर्शयितुमारभते—**व्याप्यत्वमिति** ॥ अत्र मतभेदेन लक्षणद्वयमाह—साधनाव्यापकत्वे सति साध्यसमव्याप्तो धर्म उपाधिरित्युदयनः। साधनाव्यापकत्वे सति साध्यव्यापक इति समशब्दप्रतिक्षेपेण वादीन्द्रः। तत्र स्वधर्ममन्यत्रारोपयन्नुपाधिशब्देनोच्यते; तथा च स्वधर्मभूताया व्याप्तेर्हेतुत्वाभिमते मैत्रीतनयत्वादौ प्रतीतिहेतुत्वाच्छाकाद्याहारपरिणतिरुपाधिः। यथा स्फटिकगतारुणिमप्रतीतिहेतुर्ज [वा] पाकुसुमादिः। तथा च निरुपाधिकसंबन्धत्वस्य व्याप्तिलक्षणत्वात् तदभावेन व्याप्तिमवसादयन्नुपाधिर्दूषणमिति समशब्दं प्रयुञ्जानानांमुपाधिशब्दार्थापरित्यागेन दूषणाभिधाने तात्पर्यम्। अन्येषां तु समो विषमो वा भवतूपाधिः, तन्निवृत्तौ पक्षे साध्यनिवृत्तेरुभयत्रापि साधारणत्वात्; तथा च साध्यनिवृत्त्यङ्गभूतव्यापकत्वोपादानमन्तरेण समशब्दप्रयोगो व्यर्थः। तथा च समो वाऽधिको वा व्यापकत्वेनाभिमतः पक्षे व्यावर्तमानः साध्यं व्यावर्तयतीति पक्षे साध्यबाधादुपाधेर्दूषणत्वम्।

उपाधिशब्दार्थस्तु यथातथा वा भवत्विति। तदेतत्सर्वं पूर्वार्धेनोक्तम्। अत्र निपुणैरिति कथनम् उपाधिशब्दार्थनिरूपणेन निर्वाहात्। अन्यथाऽपि दूषणत्वे सिद्धे कथमनपेक्षितसमशब्दोपादानमिति चेत्; इत्थम्—यथा पक्षविपक्षयोर्वर्तमानत्वेन हेतोर्दूषणत्वे सिद्धेऽपि पक्षविपक्षयोरेव वर्तमानो हेतुर्विरुद्ध इति विरुद्धलक्षणे सावधारणनिर्देशः प्रकारान्तरप्रदर्शनार्थः। विपक्षे वर्तमानत्वात् साध्यासाधकत्वम्; विपक्ष एव वर्तमानत्वात्परपक्षस्यापि साधकत्वम्; तथा चात्यन्तदुष्टमनुमानमितीममर्थं प्रकाशयितुं पक्षविपक्षयोरेवेत्यवधारणप्रयोग इति चेत्; एवं तर्हि व्यापकनिवृत्त्या व्याप्यनिवृत्तिद्वारेण पक्षे साध्यबाधं बोधयितुं व्यापकत्वोपादानम्। [ व्याप्यस्य ] मैत्रीतनयत्वादेर्व्याप्यत्वप्रतिभासोऽपि न स्वाभाविकः। अपि तु स्फटिकारुणिमवदन्यप्रयुक्त इति प्रतिभासमात्रस्यापि दुष्टत्वेन हेतोर्व्याप्तिनिवृत्तिं स्फुटमेव वक्तुं समशब्दप्रयोग इति सन्तोष्टव्यम्। व्यापकत्वमात्रोपादाने व्यापकनिवृत्त्या व्याप्यभूतसाध्यनिवृत्तिमुपजीव्य साध्यबाधेन हेतुदोषो वाच्यः। समशब्दोपादाने तु हेतोर्व्याप्तिप्रतिभासोऽप्यौपाधिक इति साक्षाद्धेतुदोषकथनमुद्भटत्वाद्दोषस्येति। अत उपाधिशब्दार्थस्वारस्यादुद्भटदोषप्रकाशनौचित्याच्च समशब्दयोग इत्यौदयनिका इति। अस्तूपाधिलक्षणम्, कथं तस्य निधूननमित्याशङ्क्याह—योग्येति। उपाधिः खलु शङ्कितो निश्चितश्च। शाकाद्याहारपरिणत्यादिः शङ्कितः, निषिद्धत्वादिर्निश्चितः। यत्र खलु साधनाव्यापकत्वसाध्यसमव्याप्तयोरन्यतररूपस्याशङ्का, स शङ्कितोपाधिः; अन्तिमगर्भेऽपि शाकाद्याहारपरिणतिसंभवेन साधनाव्याप्तेराशङ्कितत्वात्। यत्र पुनर्द्वयोरपि रूपयोर्निश्चयः, स निश्चितोपाधिः; यथा हिंसात्वानुमाने निषिद्धत्वम्; यन्निषिद्धं तदधर्महेतुरिति नि [यमा]र्णयात् साध्यव्याप्तिः, वैधहिंसायां निषिद्धत्वाभावात् साधनाव्याप्तिः। उभयं च निश्चितम्। उभयं च प्रत्यक्षेण ग्रहीतुं योग्यं चेत्; योग्यादृष्टया तावदपनुद्यते, अयोग्यं चेत्तर्केणैवेति विभागः तददिमाह - योग्येति। तर्कप्रवृत्तिस्तु—किमुपाधयः सर्वथा प्रमाणपथमनवतीर्णा वा उतावतीर्णा वेत्यादिना विकल्प्य तेषु तेषु ग्रन्थेषु वादिनां पठितपाठा। तथाहि—समव्याप्तिपक्षस्य सर्ववादिसंप्रतिपन्नत्वाद्विषमव्याप्तिमनूद्य तेषां वादिनां भावमाह-साम्यमिति। अयमत्र भावः-व्यापकस्योपाधेः पक्षे दर्शनाभावाद्व्याप्यस्य साध्यस्य बाध इति। आदिशब्देन बौद्धोक्तषोडशविधानुपलब्ध्यन्तर्गता व्यापकविरुद्धोपलब्धिरुच्यते, यथा द्रव्यत्वाभावात् पृथिवीत्वाभाव इति व्यापकानुपलब्धिः, द्रव्यत्वविरुद्धगुणत्वाद्युपलम्भात् पृथिवीत्वाभाव इति व्यापकविरुद्धोपलब्धिरित्यादि एवं पक्षे साध्यव्यापकस्योपाधेरनुपलम्भे तथोपाधिविरुद्धधर्मान्तरोपलम्भेऽपि साध्यासिद्धिरिति भावः। अन्यत् सर्वं विस्तरभयान्न लिख्यते ॥ ४३ ॥

आनन्द०—ननूपाधिनिश्चियाऽभावे तदभावनिश्चयद्वाराऽतिचारशङ्काविधूननं न भवतीत्युपोद्घातसङ्गतिमाह—**उपाधिस्वरूपेति** । **साधनाव्यापकत्व इति**—साध्यसमव्यापकोपाधिरित्युक्ते वह्निसामग्र्यामतिव्याप्तिः अतस्साधनाऽव्यापकेति । व्यजनवत्वनिवृत्यर्थं व्यापकेति । अनित्यः शब्दः श्रावणत्वादित्यत्र अश्रावणत्वमुपाधिस्स्यात् पक्षादन्यत्र साध्यव्यापकत्वात् । तद्व्युदासाय समग्रहणमिति । पक्षे साध्यव्यापकत्वाभावान्न समग्रहणस्य प्रयोजनमस्तीति पक्षान्तरमाह—**साधनेति** । समशब्दं प्रयुञ्जानस्य भावमाह—**तत्रेत्यादिना** । उपधीयते स्वधर्मो व्याप्त्यादिर्येन समीपस्थे स उपाधिरित्युपाधिशब्दार्थत्वायोपाधिलक्षणे समशब्दप्रयोग इति भावः ।

उक्तस्यैवोपाधिशब्दमुख्यार्थत्वहेतुमाह—**यथेति** । उपाध्यनाहितसाध्यसंबन्धस्य व्याप्तितया तदभावेन निरुपाधिकत्वाभावेन व्याप्तिं विघटयन् व्याप्यत्वासिद्ध्यापादकत्वेन दूषणमित्यर्थः ।

केचित्तु उपाध्यभावस्य व्याप्तिज्ञापकतया तदभावाद्व्यापकाभावेन व्याप्यत्वासिद्ध्यापादकमित्याहुः । अत्र पक्षे साध्यव्यावर्तकतया दूषकतायाँ साध्यव्यापकत्वस्यैव प्रयोजकत्वात्समशब्दो व्यर्थ इत्यभिप्रायेण पक्षान्तरमाह-**अन्येषान्त्विति** ।

ननु पक्षद्वयेऽपि साधनावच्छिन्न पक्षधर्मावच्छिन्नसाध्यव्यापकेऽव्याप्तिः । ध्वंसो विनाशी जन्यत्वादित्यत्र साधनावच्छिन्नसाध्यव्यापकस्य शुद्धसाध्यव्यापकत्वाभावात् । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्-स श्यामो मित्रातनयत्वादित्यादौ पक्षधर्मावच्छिन्नसाध्यव्यापकस्य च शुद्धसाध्यव्यापकत्वाभावात् । यत्किञ्चित्साध्यव्यापकत्वोक्तौ व्यजनवत्वादावतिव्याप्तेश्चेति चेन्न । तत्रापि शुद्धसाध्यव्यापकस्य सम्भवात् ।

अन्ततो हि प्रागभावान्यान्यत्वमभावप्रतियोगिजनकाभावान्यत्वमित्यादेस्सम्भवात्स्वव्यभिचारेण साधने साध्यव्यभिचारप्रतीतिजनकत्वं वोपाधिलक्षणमित्याहुः । **अन्यथापीति**—न पूर्वं समशब्दस्य प्रयोजनमुक्तमेव दूषणसमर्थत्वाऽभावेऽपि शक्तमित्यर्थः ॥ ४३ ॥

---

नित्यो व्यापी च न स्यादुपधिरिह सदा सर्वतस्तत्प्रसङ्गा-
द्व्याप्येष व्याप्यमात्राकृतिरवियुतितो नैकलिङ्गोपपत्तेः ।
नासौ पक्षेतरत्वप्रभृतिरपि भवेद्व्यापकोऽतिप्रसङ्गा-
त्तुल्यस्साध्येन पक्षे सह यदि घटते साधनं व्याप्नुयात् सः ॥ ४४ ॥

**सर्वार्थः**—अत्रोपाधिविधूननप्रक्रियां विशेषतो–दर्शयति **नित्य इति** ॥ न तावदनुमाने धूमादौ वह्न्यादिसाधने नित्यो व्यापी वा कश्चिदुपाधित्वेन शङ्कितुं शक्यते । कुत इत्यत्राह-**सदेति** । उपाधेस्सदातनत्वप्रसङ्गात् सार्वत्रिकत्वप्रसङ्गात्; तथा च तत्सम-

वृत्तेस्साध्यस्यापि वह्न्यादेस्सदातनत्वं सार्वत्रिकत्वं च प्रसज्येतेति भावः। तर्ह्यनित्योऽसार्वत्रिकश्च व्याप्यमात्राकृतिरस्त्वित्याशङ्कयाह-**नापीति**। तत्र हेतुं दर्शयति-**अवियुतित इति**। व्याप्यमात्ररूपस्योपाधित्वाङ्गीकारे कृतकत्वानुमाने सावयवत्वमुपाधिः स्यात्। न्यायविदां मते सावयवत्वस्यानित्यत्वकृतकत्वाभ्यां व्याप्तत्वात् उभयं चानित्यत्वसाधने सम्यगनुमानमेव। आहुश्च—कृतसावयवत्वादिप्रयुक्ता च विनाशितेति। अवियुतितः-अविनाभावात्। ये तु समपदं प्रतिक्षिप्य व्यापकमात्रमुपाधिरिति वदन्ति, तेषामपि पक्षेतरत्वम्, पक्षप्रतियोगिकान्योन्याभाववत्त्वम्, पक्षत्वात्यन्ताभाववत्त्वम्, पक्षत्वविरुद्धधर्मवत्त्वम्, पक्षत्वात्यन्ताभावाविनाभूतधर्मवत्त्वमित्येतादृशं नोपाधिरित्याह-**नासाविति**। कुत इत्यत्राह—**अतिप्रसङ्गादिति**। तदुक्तमस्माभिरेवान्यत्र-

नोपाधिः पक्षतोऽन्यत्वं साधनं स विपक्षतः।
बाधनं न सपक्षेभ्यः सर्वानुमितिबाधनात्॥

इति। अयमर्थः—पक्षेतरत्वं नोपाधिः; एवं पर्वतो वह्निशून्यः सपक्षेतरत्वात् विपक्षवदिति बाधितुं न शक्यते। तथा पर्वतो वह्निमान् विपक्षेतरत्वात् सपक्षवदिति साधयितुमपि न शक्यते; सर्वानुमानबाधनादिति। यं पक्षीकरोति वादी तमेव प्रतिवाद्यपि विपक्षीकरोति तथा च परस्परविरोधादनुमान [स्य] प्रामाण्यमेव संभज्येतेति। इत्थं न्यूनाधिकवृत्त्योर्निरासे समवृत्तिरवशिष्यते। स च यदि पक्षे संभवति, साधनव्यापकत्वान्नोपाधिः; असंभवे स एवोपाधिः। अत एव वह्निसामग्र्याः पक्षे संभवमाश्रित्य साधनव्यापकत्वादनुपाधित्वमाहुः। अत उभयाव्यभिचारिणामुभयव्यभिचारिणामन्यतरव्यभिचारेऽपि व्याप्यमात्राव्यभिचारिणां, व्यापकमात्राव्यभिचारेऽपि विषमवृत्तीनामनुपाधित्वे [साध्य] व्याप्यव्यापकस्वभावानां साधनाव्यापकानामुपाधित्वमित्युक्तं भवति। तथा च यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधिः; साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वे सति साध्यवन्निष्ठात्यन्ताभावाप्रतियोग्युपाधिरित्यादिकमपि लक्षणं संगच्छते॥ ४४॥

---

**आनन्द०**—पूर्वशेषत्वान्न पृथक्सङ्गत्यपेक्षेत्याह—**अत्रोपाधीति**—अत्र किमुपाधिर्नित्योऽनित्यो वा? नित्योऽपि—सर्वत्र व्याप्तो? न वा? नाद्य द्वितीय इत्याह—**नित्यो व्यापी वेति**।

केचित्तु उपाधिर्नित्यो नवा? नित्योऽपि व्यापको व्याप्यो वेत्यादि विकल्पे व्यक्तिसमस्ताभ्यामुत्तरमित्याहुः। प्रथमे द्वितीयं दूषयितुमाशङ्कते—**तर्हीति**—सिद्धान्ते भगवन्नित्यविग्रहादेस्सावयवत्वेऽपि नित्यत्वादाह—**न्यायविदां मत इति**।

केचित्तु अतिरिक्त द्रव्योत्पत्त्यनभ्युपगमात् सावयवद्रव्यस्याऽप्रसिद्धेस्सावयवत्वमनादिसिद्धमित्यत आह—न्यायविदां मत इत्याहुः। स तूपाधिरित्यत्राह—**उभयञ्चेति**। **आहुश्चेति**—उदयनादय इति शेषः।

**कृतसावयवत्वादि**—कृतकत्वं-सावयवत्वादित्यर्थः। आदिशब्देन सामान्यवत्त्वे सति चाक्षुषत्वादि संग्रहः। **ये त्विति**।

नन्वनुमानमात्रस्याप्रामाण्यं वदतस्तेषामुपाधित्वमनुकूलमेव अनुमानमात्रोच्छेदस्येष्टत्वादिति चेत्। अत्र वदन्ति। पक्षेतरत्वादिकं नोपाधिरेव। पक्षेतरत्वस्य साध्यव्यापकत्वे गृहीते तद्व्याप्येन साध्येन उपाध्यनुमानसम्भवात्।

नच तत्रापि पक्षेतरत्वस्योपाधित्वं। पूर्वस्य साध्यव्याप्यत्वे गृहीते तदव्यापकस्य साध्यव्यापकत्वायोगात्। उपाधिव्यावृत्या साध्याभावसाधने पक्षेतरत्वस्योपाधित्वायोगाच्च। तथा च साध्यव्यापकताग्राहकाभावे पक्षेतरत्वस्योपाधित्वं नतु पक्षेतरमात्रादिति भावः। **तदुक्तमिति**—न्यायपरिशुद्धावनुमानाध्याय इति शेषः।

ननु विपक्षतस्साधनन्तूपाधिरिति वा उपाधिर्न सम्भवतीति वा, तथा सपक्षेभ्यो बाधनन्तूपाधिरिति वा नोपाधिरिति वा भवत्यत आह—**अयमर्थ इति**।

ननु सपक्षान्यत्वस्य बाधकत्वे कथं—सर्वानुमानबाधः केवलान्वयिनो बाधायोगात्। किञ्च विपक्षान्यत्वस्य साधकत्वे सुतरान्न बाध-इति चेन्तत्राह—**यं पक्षीकरोतीति**—विपक्षेतरत्वस्य साधकत्वाभाव इव सपक्षेतरत्वस्य बाधकत्वं। अन्यथा बाधकानुमानस्याऽप्युच्छेदापातेन बाधकत्वायोगादित्यर्थः। **पक्षीकरोति**—साध्यवत्त्वेन साधयितुमुद्यङ्क्ते **विपक्षीकरोति**—साध्याभावत्वेन सिषाधयिषतीत्यर्थः। **असम्भव इति**—पक्षे सत्वाभावेन साधनाव्यापकत्वादिति भावः। **अत एवेति**—वह्निसायग्री च नोपाधिः साधनव्यापकत्वादित्युदयनादय इत्यर्थः।

**उभयाव्यभिचारिणां**—साध्यसाधनोभयव्यापकानां **व्याप्याव्यभिचारिणामिति**—साधनव्यापकानामित्यर्थः। **व्यापकमात्राव्यभिचारेऽपि**—साध्यव्यापकत्वेऽपि। **विषमवृत्तीनां**—समव्याप्तिविधुराणामित्यर्थः। **यावत्साध्यदेशवृत्तिः**—साध्यसमव्याप्त इत्यर्थः। एवञ्च विषमव्याप्तत्वात्साध्य व्यापकस्याऽप्युपाधित्वाऽभावे दूषणसामर्थ्यमात्रेणावच्छिन्नसाध्यव्यापकोऽपि नोपाधिरिति बोध्यम्। **साधनवन्निष्ठेति**—संयोगादेरुपाधित्वानुपाधित्वार्थञ्चात्यन्ताभावे व्याप्यवृत्तित्वं वा—प्रतियोगिवैयधिकरन्यं वा वक्तव्यं। विषमव्याप्तस्याऽनुपाधित्वात् स्वाधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वं साध्यविशेषणं। तेन समव्याप्तिसिद्धिः। एवञ्च तत्संबन्धेन व्याप्यवृत्तिसाधनवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकतत्संबन्धेन स्वसमानाधिकरण व्याप्यवृत्यत्यन्ताभावप्रतियोगितावच्छेदकतानवच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्न साध्याधिकरणवृत्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वमुपाधिलक्षणम्। तत्संबन्धेत्यारभ्य प्रतियोगितावच्छेदकेत्यन्तं साध्याधिकरणवृत्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मविशेषणं। स्वसमानाधिकरण इत्यत्र स्वपदञ्चोपाधिपरम्। **मूलं नैकलिङ्गोपपत्तेरिति**—न समासः। एकस्याऽप्यनुमानस्योपपत्तिसम्भवो न स्यादित्यर्थः। **तुल्यः** समव्याप्तः। **पक्षे साध्येन सह घटते**—वर्तते। यदीत्यन्वयार्थः। केचित्तु साध्येन सह तुल्य इत्याहुः॥ ४४॥

**दृष्टं साध्यस्य यत्स्यात् सममधिकमपि क्वापि पक्षान्यता वा**
**तस्याभावेऽपि साध्ये सति यदि न भवेद्बाधकं व्यापि नैतत् ।**
**दुर्वारे बाधके तद्द्वयमपि वह्नानुष्णतादावुपाधिः**
**साध्यं तद्व्याप्यतां वा हरतु स विरहात् पक्षतो हेतुतश्च ॥ ४५ ॥**

सर्वार्थः—समाधिकव्याप्तिकपक्षाङ्गीकारेणोपाधेर्व्यापकत्वप्रकारपरिशोधनपूर्वकं तद्दूषणत्वप्रकारमपि विशदयति–**दृष्टमिति** ॥ पूर्वं पक्षेतरत्वस्योपाधित्वं प्रतिक्षिप्तम् । इदानीं तस्याप्युपाधित्वमङ्गीकरोति–**क्वापीति** । अयं भावः–यत्र वह्न्यनुष्णत्वानुमानादौ पक्षे साध्यबाधः स्फुटमेव दृश्यते, तत्र पक्षेतरत्वमप्युपाधिः । यत्र पुनर्बाधो नास्ति, न तत्र पक्षेतरत्वमुपाधिरिति विभागः । अत्रोपाधेर्व्यापकत्वावगमप्रकारमाह–**तस्येति** । अयमस्यार्थः–यद्यस्य व्यापकत्वेन निर्दिश्यते, तस्याभावेऽपि तत्संभवे यदि बाधकतर्कः प्रवर्तते स एव तस्य व्यापकः; यथा शाकाद्याहारपरिणत्यभावे पुरुषगताद्यश्यामिकाभावो नियतमुपलभ्यते । एवमन्यत्रापि अन्यथा अकारणकार्योत्पत्तिप्रसङ्ग इति तर्कः । एतादृशबाधकसद्भावे व्यापकत्वम् । या तु क्षीराद्याहारपरिणतिः सा श्यामत्वं प्रति न व्यापिका; विपक्षे बाधकाभावादित्यर्थः । तथा च वह्न्यनुष्णत्वानुमाने पक्षे प्रत्यक्षबाधकसद्भावादुपजीव्यविरोधादितर्कबाधाच्च सममधिकं वा पक्षेतरत्वं पक्षेतरवह्निसामग्रीशून्यत्वमित्यादिकं सर्वमप्युपाधिः स्यादित्याह **दुर्वार**–इति । तद्द्वयमपि–सममधिकमपि । उपाधेर्दूषणत्वप्रकारं निगमयति–**साध्यमिति** । पक्षे साध्यापहारे बाधः, हेतोस्साध्यव्याप्यत्वापहारे व्याप्यत्वासिद्धिः । उपाधिः खलु व्यापकस्वभावः पक्षे स्वाभावेन साध्यमपहरन् हेतोस्साध्यव्याप्यतामप्यपहरतीति भावः ॥ ४५ ॥

---

**आनन्द०**—पक्षेतरत्वादेरुपाधित्वं नास्तीत्युक्तं तन्न घटते । तस्य किं व्यापकत्वाभावादनुपाधित्वं ? उत दूषकत्वाभावात् ? नाद्यः । व्यापकत्वे बाधकाभावात् । न द्वितीयः । स्वरूपेणैव दूषकत्वादित्याक्षेपसङ्गतिमभिप्रेत्याह—**समाधिकव्याप्तिकेति** । **तस्यापि**—तद्विशेषस्यापि ।

ननु क्वचिपक्षेतरत्वस्योपाधित्वे सर्वत्रापि स्यात् तस्य नियामकाभावात् । नो चेत्क्वापि न स्यात् अविशेषादित्यत्राह—**अयं भाव इति** । क्वचिन्न दृश्यते । **यत्रेति** । **तत्र**—तद्भिन्नत्वस्य साध्यव्यापकत्वनिश्चायकप्रमाणसत्त्वादिति भावः ।

ननु तस्याऽभावेऽपीत्याद्ययुक्तं तच्छब्दस्योपाधिपरत्वे तदभावेऽपि सतीत्यनुपपन्नं । व्यापकनिवृत्त्या व्याप्यनिवृत्त्यवश्यम्भावात् । यद्यनुपाधिपरत्वं तस्य व्यापकत्वाभाव इत्यदुष्ट इत्यत्राह—**अयमस्यार्थ इति** । तच्छब्दः उपाध्यनुपाधिसाधारण वस्तुपरः ।

ननु शाकपाकादेश्शुद्धसाध्यव्यापकत्वं नास्त्येव। यदि यत्किञ्चित्साध्यव्यापकत्वमभिप्रेतं तर्हि व्यजनवत्त्वादिकमुपाधिस्स्यादिति चेत्। मैवम् न ह्यत्र मते उपाधित्वं तस्योच्यते अपि तु व्यापकत्वं। तथा च तन्निवृत्या साध्यव्याप्याभावापादकतया दूषकत्वमस्तु।

नच बाधोन्नायकत्व मात्रेण व्याप्त्यभावोन्नायकत्वमात्रेण—वाऽवश्यमुपाधित्वप्रसङ्गः, प्रत्यक्षस्य तथाविधस्याऽप्यनुपाधित्वादिति।

अन्ये तु अस्मिन्पक्षेऽयमप्युपाधिरेव। नचात्र समव्याप्त्यभावः। तादृशसाध्येन समव्याप्तेर्विद्यमानत्वात्।

न च जन्यत्वावच्छिन्नविनाशित्वव्यापकाभावत्वासङ्ग्रहः। जन्यत्वावच्छिन्नाभावत्वेन समव्याप्तिसम्भवात्। न च व्यजनवत्त्वादावतिप्रसङ्गः दूषणं-अर्थत्वाभावात्। यत्पक्षकानुमाने स्वव्यावृत्या पक्षे साध्यं व्यावर्तयति तस्योपाधित्वात्। नचेदं व्यजनवत्वे सम्भवति, तद्व्यावृतावपि पक्षे वह्नित्वावच्छिन्नस्य सम्भवात्। तथा साधनावच्छिन्नश्चोपाधिस्सम्भवत्येवेत्याहुः। आद्यश्यामिकेति—उत्पत्त्यनन्तरमातपादिजन्यश्यामत्वव्यावृत्तिः। एतादृशेति—यद्यपि श्यामत्वमात्रव्यापकत्वं नास्ति, काकादौव्यभिचारात्। तथाप्यवच्छिन्नव्यापकत्वं बोध्यम्। वह्निसामग्रीशून्यत्वं—वह्निसामग्र्यजन्यत्वमित्यर्थः। आदिशब्देन वह्निसामग्रीजन्यत्वाभावादिकं ग्राह्यम्।

ननूपाधिलक्षणं साध्यव्यापकत्वे सतीत्याद्ययुक्तं शाकाद्याहाराव्याप्तेः। नच तेषामनुपाधित्वं दूषकताबीजसाम्याद्व्यवहाराच्च। नच तेषामुक्तविधयोपाधित्वमिति वाच्यम्। तत्तत्साध्य प्रतिपक्षभेदेनोपाधित्व तदभावयोर्विरोधादिति चेत्। उच्यते। दूषकत्वं व्यभिचारज्ञापकतया। लक्षणन्तु साध्यव्यभिचारिसाधनाव्यापक साध्यसहचरितधर्मवत्वमिति। विस्तरस्तु मणिसाराधिक्कारे प्रपञ्चित इति—तत्रैवानुसन्धेयः। मूलं साध्यस्य सममधिकमपि दृष्टं—तत् साध्यं व्याप्नुयादित्यध्याहारानुषङ्गौ। पक्षात्यता—व्याप्नुयादित्यनुषज्यते। एतद्व्यापि न-व्यापकं-न-भवतीत्यर्थः॥ ४५॥

---

**व्याप्तिः पक्षान्वयश्चेत्युभयमविकलं यस्य हेतुस्स सम्य-**
**ङ्ङाभासौ तद्विहीनौ तदुभयविततिस्स्यादनैकान्तिकादिः।**
**तत्तद्वक्रानुमोत्प्रेक्षणमपि घटते न क्कचित् साध्यसिद्ध्यै**
**स्वव्याघाताविदोषादविषयनियतेर्वाञ्छितालाभतश्च॥ ४६॥**

सर्वार्थः—एवमनुमानेषूपाधिविधूननप्रकारमुक्त्वा हेतुतदाभासादिविभागं दर्शयति—व्याप्तिरिति॥ द्वयमनुमानाङ्गं व्याप्तिः पक्षधर्मता चेत्युक्तम्। सा च व्याप्तिरन्वयव्यतिरेकाभ्यां द्वेधा भवति। साधनसद्भावे साध्यसद्भावोऽन्वयः, साध्याभावे साधनाभावो व्यतिरेकः। तत्रान्वये सर्वसपक्षवर्तिनो हेतोस्साध्येन सह सार्वत्रिकस्संबन्धः तद्यथा, शब्दः

अनित्यः कृतकत्वादिति। कतिपयसपक्षवर्तिनस्तस्य सपक्षे कुत्रचित् साध्येन संबन्धः, तच्च सावयवत्वमिति; घटादिषु सावयवत्वसद्भावात् क्रियादिष्वभावात्। व्यतिरेकस्तु सकल-विपक्षव्यावृत्त्यात्मकत्वादेकरूप एव। तथा च यस्य यस्यानुमानस्यान्वयव्यतिरेकौ स्तः, तदन्वयव्यतिरेकित्वात् सर्वाविगीतमेव। यस्य पुनरन्वयो व्यतिरेको वा न, तयोरुभयोः गतिरुत्तरत्र वक्ष्यते। एवं व्याप्तिपक्षधर्मताभ्यां सम्यक्त्वमुक्त्वा तदभावे पुनरसम्यक्त्व-माह-आभासाविति। व्याप्त्यभावे व्याप्यत्वासिद्धिः; पक्षधर्मताऽभावे स्वरूपासिद्धिः। अनैकान्तिकत्वादिकमशेषमपि हेत्वाभासजातं व्याप्तिपक्षधर्मताविरहे विश्राम्यतीत्याह-तदुभयेति। तथा हि। विपक्षगामित्वे व्याप्तिविरहः। पक्षविपक्षमात्रगामित्वेऽपि स एव। सपक्षे सति पक्षमात्रगामित्वेऽपि व्याप्तिदर्शनाभावात् स एव, विपक्षादिव सपक्षादपि व्यावृत्तत्वेन व्यतिरेकव्याप्त्य [वगमात्] भावात्। यदा पुनः कालात्ययापदिष्टः तदाऽपि व्याप्त्यभावः। तदा साध्यशून्ये साधनवृत्त्या व्याप्तिभङ्ग इति केचित्। अपरे तु बाधितेऽपि सिद्धसाधनवत् साध्यसन्देहाभावात् पक्षधर्मत्वभङ्ग इति। एवं प्रकरणसमेऽपि पक्षे साध्यनिश्चयावसादनेन व्याप्तिभङ्ग इति केचित्। अन्ये तु स्वारसिकसन्देहापवादिनाऽपि विपरीतनिश्चयप्रसङ्गेन बाधतुल्यत्वमापाद्य पक्षधर्मताभङ्ग इति। इतरे तु व्याप्ति पक्षधर्मत्वयोर्द्वयोरपि विमर्दनेनोभयदोषापादनमिति। कथं तर्ह्यनुमानस्य सन्देहोऽङ्ग-मित्युच्यते? इत्थम्-उभयी खलु सन्देहप्रवृत्तिः। एका सर्वानुमानसाधारणी स्वारसिकी, सा भवेदनुमानाङ्गम्। द्वितीया पुनः प्रतिकूलानुमानदर्शनजनिता। सा पुनर्नानुमानाङ्गं, शङ्कापनोदनप्रवृत्तपूर्वानुमानपरिपन्थिरूपेणानुमानान्तरेण प्रवर्तितत्वात्। अतः प्राचीन एव संशयोऽनुमानाङ्गम्; पराचीनस्तु परिपन्थ्यनुमानमूलत्वादनुमानबाधकेष्वन्तर्भवतीति विभागः। अनुकूलतर्काभावो व्याप्तिमेवावसादयति व्याप्तेस्तु तर्कमूलत्वात्। प्रतिकूल-तर्कोऽप्येवमेव; अनुकूलतर्कसद्भाववत् प्रतिकूलतर्काभावस्यापि व्याप्त्यङ्गत्वात्। आत्मा-श्रयादिः स्वरूपासिद्धिमापादयति; केवलानिष्टप्रसङ्गः प्रतिकूलतया व्याप्तिमवसादयतीति विभागः। सोपाधिकत्वमपि व्याप्तिमेव व्यावर्तयति, निरुपाधिकसंबन्धत्वात् व्याप्तेः। यत्सोपाधिकं तदेवान्यथासिद्धमप्रयोजकमित्यादिशब्दैरभिलप्यते। यदा पुनर्हेतोः स्वरूपम-सिद्धं विशेषणं वा, यद्वा पुनराश्रयः, अत्र सर्वत्रापि स्वरूपासिद्धिरेव, अतस्सर्वो हेत्वाभा-सोऽप्यसिद्धावेव पर्यवस्यति, व्याप्यत्वासिद्धेरप्यसिद्धिव्यवहारविषयत्वात् दृष्टान्तदोषाणां पुनर्हेतुदोषपर्यन्तचिन्तायां हेत्वाभासेष्वन्तर्भावमाहुः। अज्ञानासिद्धिरप्यन्ततस्तत्रैव विश्राम्यति। अतस्सर्वेषामपि हेत्वाभासानां व्याप्तिपक्षधर्मताभञ्ज [न] कत्वेन दोषत्वा-त्तदुभयभञ्जनविततिरेव सर्वमनुमानदोषजातमित्याह—तदुभयविततिरिति। एवं च व्याप्तिपक्षधर्मतयोरनुपप्लवे अन्वयव्यतिरेकिवत् केवलान्वयिनोऽप्यनुमानत्वमङ्गीकृतम्। तर्हि वक्रानुमानस्यापि केवलान्वयित्वादनुमानत्वमङ्गीकर्तव्यमित्यत आह—तत्तदिति। वक्रानुमानं सर्वमपि स्वसाध्यसिद्धेरनङ्गत्वादप्रयोजकमेव। कुत इत्यत आह—स्वव्याघा-तेति। विषयनियमाभावादपि दुष्टत्वमाह-अविषयेति। येनैवानुमानेनानित्यत्वं साध्यते,

तेनैव यत्किंचित्पदव्यत्ययेन नित्यत्वमपि साधयितुं शक्यते। अत एव स्वव्याघातो व्यक्तः। वक्रानुमाने सामान्यसिद्धावपि न विशेषसिद्धिः। अतो वाञ्छितस्याप्यर्थविशेषस्य लाभो नास्ति। अतो वक्रानुमानं केवलान्वयिरूपमपि साधनजातिरेव, स्वव्याघातात्,। जातिर्द्विविधा, साधनजातिर्दूषणजातिश्च। तत्र साधनजातिर्महाविद्या; दूषणजातिः प्रतिधर्मसमादिरिति विचक्षणानां निर्णयः। एतत्सर्वं विडम्बने विस्तरेण द्रष्टव्यम्। अतो वक्रानुमानस्य नानुमानत्वप्रसङ्ग इति॥ ४६॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमाह-**एवमिति**—निरुपाधिकसंबन्धो व्याप्तिः सा च द्वेधेत्याह—**सा चेति**। **व्यतिरेकस्त्विति**—यद्यपि व्यापकवति सर्वत्र व्याप्यं न वर्तत एव अयोगोलकादौ व्यभिचारात्तदभावात्। तथा च व्यतिरेकोऽपि कथमेकरूपः। तथापि हेतोस्सपक्षे क्वचिद्वर्तमानत्वमिव तदभावस्य क्वचिदेव विपक्षे वर्तमानत्वं नास्तीति ध्येयम्। **एवमिति**।

ननु किमिदं हेत्वाभासत्वं न तावद्व्याप्तिपक्षधर्मताशून्यत्वं सद्धेतुसत्प्रतिपक्षे साधारणे चाव्याप्तेः। न च तयोर्नाभासत्वं तथा सति तदुद्भावयन् नजातिवादिवन्निगृह्येत।

न च विशेषग्रहणाभावान्न निग्रहः। तथापि वस्तुदोषत्वाभावे हेत्वाभासत्वेन परिगणनं न स्यात् सत्प्रतिपक्षितत्वाच्चेति वस्तुदोषत्वेनोद्भावनाच्चेति चेत्।

अत्राहुः। तदनाभासत्वेऽपि क्षत्यभावात्। उद्भावनन्तु पाक्षिकाभासत्वेनाप्युपपद्यते। अत एव क्वचित्तर्कानुगृहीततयाऽधिकबलत्वे निगृह्यते च। अनुमितिप्रतिबन्धश्च व्यभिचारभ्रमवदधिकबलवत्त्वाज्ञानात्।

ननु बाधसत्प्रतिपक्षयोः कथं न पृथग्घेत्वाभासत्वं साक्षात्प्रतिबन्धकत्वादिति चेन्न। साक्षात्प्रतिबन्धकत्वाङ्गीकारेऽपि सिद्धेः हेत्वाभासत्वाभावात्। यथा च तस्याः पक्षधर्मताविघटकत्वेनाऽसिद्ध्यापादकत्वं तथा बाधसत्प्रतिपक्षयोरपीति ध्येयम्।

नन्वसिद्ध एक एव हेत्वाभास इत्यनुपपन्नं, व्यभिचार-विरुद्धादिरपि सम्भवादित्यत्राह—**अनैकान्तिकत्वादिकमशेषमपीति**। ननु विरुद्धादिः कथमसिद्धौ न पर्यवस्यति साध्याभावव्याप्यत्वादेस्तत्रान्तर्भावायोगादित्यत्राह-**तथाहीति विपक्षगामित्व-इति**—नियमाभावाद्व्याप्त्यभावःविरुद्धत्वे तु साहचर्याभावादिति भावः। **सपक्षे सतीति**।

ननु वस्तुतः पक्षस्साध्यवान्नवा ? द्वितीये व्याप्त्यभावादेव व्याप्यत्वासिद्धः। प्रथमे व्याप्तिप्रदर्शनाऽभावेऽपि वस्तुतो व्याप्तिसत्त्वात्कथं व्याप्यत्वासिद्धिरिति चेन्न। सद्धेत्वसाधारणस्य वस्तुतो हेत्वाभासत्वाभावस्येष्टत्वादसत एव विरुद्धत्वादिवद्ग्राह्यत्वाद्विरुद्धत्वाव्याप्तिर्नास्तीतिवदसाधारणत्वाव्याप्तिर्नास्तीत्युपन्यासे विरोधाभावात्।

केचित्तु सपक्षविपक्षव्यावृत्तं हि ज्ञातं व्याप्तिग्रहप्रतिबन्धद्वाराऽनुमानदूषणम्। तथा च व्यभिचारादेरिव वास्तवतद्धर्मवतो हेत्वाभासत्वनियमात्सद्धेत्वसाधकोऽपि

सद्धेत्वसाधारण इव वस्तुगत्या सत्वाद्धेत्वाभासत्वस्यावश्यकत्वे असिद्धावन्तर्भावो वक्तव्य एव। तथा च ग्राहकाभावे तत्काले व्याप्तिपक्षधर्मतावत्वेन ज्ञानाभावादसिद्धत्वं। नचैवं सर्वहेतूनामपि असिद्धावन्तर्भावस्स्यात् कदाचिज्ज्ञानाभावादिति वाच्यम्। इष्टापत्तेः।

अत एव ह्यज्ञानासिद्धिरुद्भाव्यते। इयांस्तु विशेषः। एतादृशदोषाः पुरुषकालविशेषनियता इति वदन्ति। **यदा पुनः कालात्ययापदिष्ट इति**—यदा कालात्ययापदिष्ट इति—प्रतीयते तदऽपीत्यर्थः तथा च वास्तवव्याप्त्यभावोऽस्तीति भावः। **अपरे त्विति** सन्दिग्धसाध्यवत्वं पक्षत्वमिति विशेषणाभावाद्विशिष्टाभाव इति भावः। सत्प्रतिपक्षमप्यन्तर्भावयति-**एवं प्रकरणसमेऽपीति**—हेत्वधिकरणे साध्यनिश्चयप्रतिबन्धकसाध्याभावज्ञानस्य व्यभिचारज्ञानतया व्याप्यत्वासिद्धिरिति भावः। **अन्ये-त्विति**—[ आहित ] ग्राह्यसंशयस्यापि साध्याभावगोचरस्याधिकबलवत्वाद्बाध-एवान्तर्भाव इति पक्षताविघटकत्वमाहुरिति भावः। **इतरे त्विति**—विनिगमकाभावादिति भावः।

ननु पक्षता हि अनुमानानुकूला-सा चेत्सन्देहरूपा तदा सन्देहस्याऽप्यानुकूल्यं वाच्यम्। तथा च--सत्प्रतिपक्षाद्युद्भावितसन्देहस्यानुमानप्रतिबन्धकत्वं न स्यादिति शङ्कते--**कथं तर्हीति**।

**अतः प्राचीन एवेति**—तथा चानन्याहितसन्दिग्धसाध्यवत्वं पक्षतेति भावः। **व्याप्त्यङ्गत्वादिति**—व्याप्ति [ व्यापकत्वादित्यर्थः ]। प्रयोजकत्वादित्यर्थः व्याप्तिग्राहकत्वादिति केचित्।

नन्वात्माश्रयादिः पृथग्घेत्वाभासस्स्यादित्यत्राह--**आत्माश्रयादिरिति**—स्वरूपासिद्धिमापादयतोत्यन्वयः। आदिशब्देनान्योन्याश्रयादिसङ्ग्रहः। **केवलेति**—यद्यप्यनिष्टप्रसङ्गोऽपिप्रतिकूलतर्क एव तथापि प्रसञ्जक एव तत्र तर्कतयाऽभिमतः अत्र तत्फलभूतानिष्टज्ञानमभिप्रेतमिति बोध्यम्।

नन्वन्यथासिद्धयप्रयोजकत्वादेर्हेत्वाभासत्वप्रसक्तिरित्यत्राह--**यत्सोपाधिकमिति स्वरूपमसिद्धमिति**—शब्दः क्वचिदाश्रितः चाक्षुषत्वादित्यत्र स्वरूपासिद्धिः। जातिरनित्या सामान्यवत्वे सति बाह्येन्द्रियग्राह्यत्वादित्यादौ विशेषणासिद्ध्या स्वरूपासिद्धिरित्यर्थः।

**यद्वा पुनरिति**—यत्र पक्षस्वरूपमेवासिद्धं गगनारविन्दं सुरभि अरविन्दत्वादित्यादावित्यर्थः। **हेत्वाभासेष्वन्तर्भावमिति**--असिद्धावन्तर्भावमित्यर्थः। **तत्रैव**—असिद्धावेवेत्यर्थः। **व्याप्तिपक्षधर्मताभञ्जकत्वेन**—व्याप्ति-पक्षधर्मताज्ञानविघटकत्वेनेत्यर्थः। **वक्रानुमानं**—शब्द अनित्यत्वातिरिक्त शब्दधर्मातिरिक्तधर्मवान् मेयत्वाद्घटवदित्यादिवक्रानुमानं बोध्यम्। किं वक्रानुमानस्य नियतविषयत्वात्साधकत्वं? उत

वाञ्छितसाधकत्वात् ? नाद्य इत्याह--विषयनियमेति—सिषाधयिषितसाध्यविरुद्धार्थसाधकत्वेन सत्प्रतिपक्षितत्वादित्यर्थः। तदेव स्फुटयति--अत एवेति। द्वितीय आह—वक्रानुमान इति—पक्षधर्मताबलादपि सामान्यस्य पक्षसंबन्ध एव सिद्ध्यति नतु विवक्षितविशेषाकारेणेति भावः।

ननु प्रतिधर्मसमादयो दूषणसमा जातयो ग्रान्थिकैरुदाहृताः नतु साधनसमेत्यत्राह--जातिर्द्विविधेति—स्वव्याघातकमुत्तरं जातिरिति लक्षणयोगादिति भावः।

यद्यप्युत्तरतयोक्तौ तल्लक्षणमस्तु स्थापनाहेतुत्वे कथमिति शङ्का भवत्येव, तथापि स्वव्याघातकत्वेन विप्रतिपत्त्यनन्तरमाकाङ्क्षया प्रवृत्तत्वाज्जातित्वं युक्तमिति भावः।

केचित्तु स्थापनाहेतुतो व्याप्यत्वासिद्धत्वमेव नतु जातित्वमित्याहुः। सिद्धविडम्बन इति—महाविद्याविडम्बनाख्यग्रन्थे विडम्बनप्रकरण इत्यर्थः। नानुमानत्वप्रसङ्गः—न साध्यसाधकत्वप्रसङ्ग इत्यर्थः। विस्तरस्तु मणिसारधिक्कारे द्रष्टव्यः।

मूलं सम्यङ्ङाभासाविति—अत्र ङमोह्रस्वादिति ङमुड्। वक्रानुमा—भिदादित्वादङ्‌ः। अनुमितिः तथा तत्करणमुच्यते।

अनुमिमीत इत्यनुमः आतश्चोपसर्गे कः अनुमानमिति यावदिति केचित्॥ ४६॥

---

साध्येन व्याप्तिमेके जगदुरिह सकृद्दर्शनेनैव गम्यां
शङ्कानिर्धूतिमात्रं फलमिति च परं भूयसां दर्शनानाम्।
धूतोपाधिस्तु योगः स्फुरति बहुविधैर्दर्शनैरेव पश्चात्
तज्जात्याधारभावाद्युगपदखिलमप्यक्षसंबन्धि तत्र॥ ४७॥

सवार्थः—पूर्वोक्तव्याप्तिग्रहणानुपपत्तिं पूर्वं परिहृतामपि सिंहावलोकितेन प्रकारान्तरेण परिहरति—साध्येनेति॥ भूयोदर्शनेनैव व्याप्तिरवगम्यते इति न्यायवित्संप्रदायः। एकदेशिनस्तु प्रथमदर्शनेनैव व्याप्तिर्गृह्यते। किमर्थं तर्हि भूयोदर्शनमित्यत्राह—शङ्केति। आद्येनैव दर्शनेन व्याप्तिर्गृह्यते; भूयसां तु दर्शनानां व्यभिचारशङ्कानिराकरणमात्रं फलमित्यर्थः। तर्हि तर्कस्य किं फलमित्यत्राह-धूतोपाधिस्त्विति। प्रथमदर्शनेनैव व्याप्तिग्रहणं भूयोदर्शनैर्व्यभिचारशङ्कानिराकरणं, तर्केण पुनर्व्यभिचारशङ्कानिदानभूतोपाधिनिराकरणमिति विभागः। अस्तु तावदयं क्रमः। अथापि व्याप्तिग्रहणं किं सर्वव्यक्त्युपसंहारेण ? उत कतिपयव्यक्त्युसंहारेण ? द्वितीये व्याप्तिरेव न संभवति। प्रथमे सर्वव्यक्त्युपसंहारे सर्वव्यक्तिसंबन्धाभावादिन्द्रियस्य कथं ग्रहणमित्यत्राह-तज्जात्याधारभावादिति। अयं भावः-इन्द्रियेण तावत्सन्निहिता व्यक्तिस्संबद्धा, तत्समवेतत्वेन जातिः, तदाधारतया तद्विशेषणत्वेन सर्वा व्यक्तयः। तथा चेन्द्रियेण सह संबद्धविशेषणत्वेन सर्वव्यक्तीनां संबन्धः। अतः सर्वव्यक्त्युपसंहारेण व्याप्तिग्रहणोपपत्तिरिति। अस्मिन्नर्थे किं प्रमाणमिति चेत्, आबालगोपालमानुमानिकव्यवहारानुपपत्तिरेव। किमानुमानिक-

व्यवहारो नास्ति ? किं वा तद्व्याप्तिमन्तरेण संभवति ? अथवा व्याप्तिरज्ञाताऽप्यनुमानाङ्गं भवति ? अथवा व्याप्तिज्ञानापेक्षायां प्रकारान्तरेण व्याप्तिज्ञानं संभवति ? अथवा न प्रकारान्तरेण, नानेनापि प्रकारेण व्याप्तिज्ञानं संभवतीति ? नाद्यः, लोकोपलम्भविरोधात् न द्वितीयः, अकारणकार्योत्पत्तिप्रसङ्गात्। अत एव न तृतीयः, व्याप्तिज्ञानमन्तरेणानुमानादर्शनात्। न चतुर्थः, तस्याप्युपायस्य तत्रदुक्तदोषग्रस्तत्वस्य वक्तुं शक्यत्वात्। न पञ्चमः, व्याप्तिज्ञानोपायाभावे व्याप्त्यभावेन सर्वानुमानोच्छेदप्रसङ्गात्। व्याप्तिभञ्जकानुमानतर्कयोरपि व्या [ प्त्यभावेन ] प्तिबाधेन विवक्षितासिद्धेः। तयोर्व्याप्तिज्ञानविधुरयोरपि बाधकत्वे साधकानामपि तद्विधुराणां साधकत्वं स्यात्। अस्मदुक्तप्रकारेण व्याप्तिज्ञानसाधने अस्माकमपि तथैव स्यादिति। तर्हि प्रमेयत्वाभिधेयत्वयोर्व्याप्तिग्रहणे सर्वोपसंहारात् भवतस्सार्वज्ञ्यं स्यादिति चेत्, भवतोऽपि तर्हि सार्वज्ञ्यं स्यात्। अन्यथा कथं सर्वज्ञत्वापादानं करोषि ? भवतः किंचिन्नाविदितं स्यादित्यापादयामीति चेत्; किं सर्वेष्वपि पदार्थेषु किंचिन्नाविदितं स्यादित्यापादयसि ? यद्वा येषु केषुचिदर्थेषु ? उत्तरत्र न सार्वज्ञ्यापादानम्। पूर्वत्र सर्वेष्वपि पदार्थेषु किंचिन्नाविदितं स्यादिति वदतो भवतोऽपि सार्वज्ञ्यं स्यात्। सामान्याकारेण सर्वं मम विदितम्, विशेषतो न विदितमिति चेत्; ममाप्येवमेवेति समस्समाधिः। अतस्सामान्याकारेण व्याप्तिग्रहणस्य वादिप्रतिवादिसाधारणत्वान्नैकः पर्यनुयोक्तव्य इति न्यायः। यदि कतिपयव्यक्तिग्रहणमात्रेऽपि व्याप्तिग्रहणमङ्गीकृत्य प्रतिकूलानुमानं प्रतिकूलतर्कं च वदसि तच्चास्माकमपि समानम्; तस्मात् सुस्थितमनुमानम् ॥ ४७ ॥

---

**आनन्द०**—हेत्वाभासनिरूपण- व्याप्तिग्रहणे साधिते तत्साधनविशेषचिन्ता कर्तव्या। तत्र बाधशङ्कया व्याप्तिज्ञानमेव दुर्घटमिति तत्साधनविचारः कुत एवेति प्रथमं बाधकपरिहारविचारे वृत्ते अनन्तरमवसरसङ्गत्या साधनविचार इत्याह—**पूर्वोक्तेति। भूयोदर्शनैरेवेति**—भूयस्सु स्थानेषु दर्शनेनेत्यर्थः। **एकदेशिनः**—न्यायैकदेशिनः। **भूयसान्तु दर्शनानामिति**—भूयस्सु स्थानेष्विति शेषः। भूयोदर्शनेन निवृत्ताऽपि व्यभिचारशङ्का उपाधिशङ्कया पुनरुज्जीवेत् तां निवर्तयति तर्क इत्याह—**तर्केण पुनरिति। व्याप्तिरेव न सम्भवतीति**—सर्वव्यक्तिगताया व्याप्तेर्यत्किञ्चिद्व्यक्तिग्रहमात्रेण ग्रहणं न सम्भवतीत्यर्थः।

ननु तज्जात्याधारभावमात्रेण नेन्द्रियसंबन्धः, तथात्वेऽतिप्रसङ्गादित्यत्राह—**अयं भाव इति। इन्द्रियेण सह संबद्धेति**—जातिरिन्द्रियसंबद्धा तद्विशेषणानि व्यक्तय इत्यर्थः। **आनुमानिक-व्यवहारानुपपत्तिः**—धूमादिज्ञानाद्वह्न्याद्यर्थप्रवृत्त्याद्यनुपपत्तिरित्यर्थः। **अथवेति**—व्याप्तिज्ञानं नोपपादकमिति भावः। अत एवेत्येतद्विवृणोति—**व्याप्तिज्ञानमन्तरेणेति। विवक्षितासिद्धेरिति**—स्वक्रियाव्याघात इति भावः। व्याप्तिभञ्जकानुमानतर्कयोरित्यत्र नासिकास्तनयोर्धातोरिति लक्षणव्यभिचारचिह्नेनानुमानशब्दस्य

पूर्वनिपातः । अस्मदुक्तेति—बाधकतर्कानुमानयोरित्यनुषङ्गः । भवतः सार्वज्ञ्यं—एतादृशस्याङ्गीकारात् । नच तथा सति क्वचिदपि संशयो न स्यादिति वाच्यम् । तवापि सर्वमिति शाब्दज्ञानेऽपि तथात्वापत्तेः । नच तत्तद्वस्तुप्रकारकत्वाभावात्सर्वत्वाकारकज्ञानेऽपि संशयस्स्यादिति वाच्यम् । तथा सति प्रकृतेऽपि समानत्वात् । न च तद्वस्तूनामपि सामान्यप्रत्यासत्या ग्रहणात्प्रकारत्वमपीति वाच्यम् । परस्परनिरूपितत्वेन वैशिष्ट्यस्याऽग्रहणात् । अन्यथा प्रत्येकं वह्नेः पर्वतस्य पर्वतत्वस्य सामानाधिकरण्यस्य ज्ञानादनुमेयाभावेन संशयो न स्यादिति प्रतिबन्द्यभिप्रायेण परिहरति—भवतोऽपि तर्हीति । भवतः किञ्चिन्नाविदितं स्यादिति—सर्वं ज्ञानं विनाऽप्यापादनं सम्भवतीति भावः । उरत्तरत्रेति—अन्यत्राविदितस्य सम्भवादित्यर्थः ।

ननु सामान्यं न प्रत्यासत्तिः प्रमाणाभावात् । नच व्याप्तिग्रहणानुपपत्तिः । व्यभिचारज्ञानाद्यभावे सन्निहितव्यक्तिग्रहणमात्रेणाऽपि तदग्रहणसम्भवात् ।

न च सामानाधिकरण्यघटिता व्याप्तिः प्रतिव्यक्ति पृथगेव । तथा च पक्षनिष्ठ धूमादौ—तदग्रहे चागृहीता व्याप्तिः कथं सिद्ध्येत् ? कथं तद्विशिष्टपरामर्शः ?

न च महानसधूमव्याप्तिग्रहः स्मृतिहेतुः । अन्यानुभवेनाऽन्यस्मरणायोगात् ।

न च सैव व्याप्तिस्मृतौ पक्षनिष्ठतया ज्ञायत इति वाच्यम् । परामर्शस्य भ्रमत्वप्रसङ्गात् । किञ्च व्यापकतया गृहीतस्यैवानुमितिः, न च व्यापकतया गृहीतः पर्वतवह्निः अपि तु महानसीय एव, तथा च तदज्ञाने भ्रमत्वं दुर्वारमिति वाच्यम् । यद्रूपेणोपस्थितो व्याप्तिग्रहः स एव पूर्वन्तद्रूपेणागृहीतानामपि स्मृतिहेतुरनुमितिहेतुश्च । तथा च वह्नित्वेन धूमत्वेन चैव व्याप्तिग्रहात्तद्रूपेण व्याप्तिस्मृत्यनुमानाद्युपपत्तिः तावतैवातिप्रसङ्गाभावादित्यभिप्रायेणाह कतिपयेति—सामान्यं ज्ञातं प्रत्यासत्तिर्नाज्ञातमित्यादिविचारः सर्वोऽपि मणिसारधिक्कारे प्रपञ्चित इति नेह प्रतन्यते । मूलं योगः—व्याप्तिः ॥ ४७ ॥

---

अस्मिन् सत्येतदस्तीत्यवितथनियतेरन्वयव्याप्त्यभिख्या
तस्याभावे तु तन्नेत्ययमपि नियमस्तौ पृथक् चापृथक् च ।
तस्मात् त्रेधाऽनुमानं कतिचिदकथयन्नेकहानाद् द्विधैके
कश्चिच्चेद्व्याप्तियुग्मप्रिय इह भविता वर्णयत्वेकविध्यम् ॥ ४८ ॥

सर्वार्थः०—अथ व्याप्त्यादिविभागप्रकारं विशदयति—अस्मिन्निति ॥ हेतुसद्भावे साध्यसद्भावोऽन्वयः । व्यतिरेकव्याप्तिमुदाहरति—तस्येति । साध्याभावे साधनाभावो व्यतिरेकः; न पुनस्साधनाभावे साध्याभावः । यथाऽऽहुः—

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥ इति ।

एतौ व्याप्तिप्रकारावन्वयव्यतिरेकिणि [सहैव] उभावेव वर्तेते; केवलान्वयिनि केवलव्यतिरेकिणि च पृथगेव वर्तेते इति न्यायसंप्रदाय इत्याह **ताविति**। अतोऽनुमानत्रैविध्यमिति च दर्शयति--**तस्मादिति**। **कुमारिलादयो** व्यतिरेकिणं निरस्यन्ति; **वादीन्द्रादयो**ऽन्वयिनमिति विशेषं दर्शयति-**एकहानादिति**। एवमन्वयव्यतिरेकिमात्रसक्तो यदि कश्चिद्भविष्यति स त्वन्वयव्यतिरेकिणमेवाङ्गीकृत्य तद्द्वयमपि प्रतिक्षिपत्वित्याह-**कश्चिच्चेदिति**। अयमत्र भावः--अन्वयव्यतिरेकिवत् केवलान्वयी न प्रतिक्षेप्यः; अन्वयस्य निश्चलत्वात्। केवलव्यतिरेकिणं वयमेव प्रतिक्षेप्स्याम इति ॥ ४८ ॥

---

**आनन्द०**---अवसरसङ्गतिमाह--**अथेति**। **हेतुसद्भाव इति**--यावत्साधनाश्रयं साध्यसंबन्धोऽन्वयव्याप्तिः---यावत्साध्याभावाश्रयंसाधनाभावसंबन्धो व्यतिरेकव्याप्तिरित्यर्थः। न्यायमतसम्मतिमाह--**यथाऽऽहुरिति**। **भावयोः**---साध्यसाधनयोः। **यादृशव्याप्यव्यापकभावः इष्यते**---साधनं व्याप्यं साध्यं व्यापकमिति तयोस्साध्यसाधनयोर्विपरीतः--साध्याभावो व्याप्यः साधनाभावो व्यापक इत्यर्थः। **व्याप्तिप्रकारौ**---व्याप्तिभेदौ। **कौमारिलादय इति**---आदिशब्देन प्राभाकरादयः। वादीन्द्रादय इत्यादिशब्देन मायिनः। नन्वैकविध्यं केनाऽपि नोक्तं तत् पक्षान्तरत्वेनोपन्यस्त मित्यत्राह--**अयमत्र भाव इति**। सिद्धान्त्यभिमतपक्षमाह--**केवलव्यतिरेकिणमिति** ॥ ४८ ॥

---

**सर्वस्थः केवलान्वय्यघटितसरणिः स्यात् स्ववृत्तेर्विकल्पे**
**साध्ये स्वस्मान्निवृत्तो भवति च स तदा साध्यहानेर्विपक्षः।**
**हेतोस्तद्वृत्त्यवृत्त्योरभिमतविहतिस्तत्र चैवं विकल्पा-**
**दित्युत्प्रेक्षा विभागं विघटयतु न वा सर्वथा व्याप्तिसिद्धिः ॥ ४९ ॥**

**सर्वार्थः**---एवं केवलान्वय्यङ्गीकारे महाविद्याऽप्यङ्गीकार्या; तस्या अपि केवलान्वयित्वात्। तथा च पूर्वोक्तं तन्निराकरणं न युज्यते। किंच सकलसपक्षवर्ती हि केवलान्वयी महाविद्येत्युच्यते; तच्च न संभवति, प्रमेयत्वाभिधेयत्वादीनां सर्वस्थत्वे स्वात्मन्यपि वृत्तिप्रसङ्गात्, तदभावे केवलान्वयित्वाभावादिति चोदयति-**सर्वस्थ इति**। तदेव विवृणोति-**साध्य इति**। साध्यं स्वस्मान्निवर्तते न वा? न निवर्तते चेदात्माश्रयः; निवर्तते चेत्, तद्विपक्ष एव। तदिदमाह---**साध्य इति**। विपक्षभूते तस्मिन् साध्ये हेतुर्वर्तते न वा? यदि वर्तते, विपक्षवृत्तित्वेन हेतुत्वमेव भज्येत; यदि न वर्तते, प्रमेयत्वाभावात् साध्यस्य साध्यत्वं व्याहन्येत। तदेतदाह---**हेतोरिति**। एवं प्रमेयत्वादिहेतौ साध्यं वर्तते न वा? न चेद्धेतुरेव विपक्षः स्यात्। तस्मिन् विपक्षभूते हेतौ हेतुर्वर्तते चेदात्माश्रयः, विपक्षगामित्वाद्व्यभिचारश्च। न वर्तते चेत् कथमिव केवलान्वयित्वं हेतोः, क्वचिद्व्यतिरेकस्यापि दर्शनात्? यदि हेतौ साध्यं वर्तते स तु हेतुः सपक्षः स्यात्। तत्र हेतुवृत्तावात्माश्रयः, अवृत्तावप्रमेयत्वाद्धेतोरेवासिद्धिः। किंच

हेतुसाध्ययोर्द्वयोरपि सपक्षत्वादन्योन्यवृत्तावन्योन्याश्रयप्रसङ्गः। अवृत्तौ कथमिव केवलान्वयित्वम् ? इत्थं बहुविधतर्ककर्कशं महाविद्यानुमानं न प्रतितिष्ठतीत्याह—तत्र चैवं विकल्पादिति। यथासंभवं विकल्पानां भूयस्त्वादित्यर्थः। इयमुत्प्रेक्षा केवलान्वयिरूपमहाविद्याविभागं विघटयतु न वा। सर्वथा अन्वयव्यतिरेकिहेतुसद्भावात् व्याप्तिरभङ्गुरेत्याह—इतीति। न वेत्युक्त्या विभागविघटनं न सिध्यतीत्यभिप्रैति। अयमभिप्रायः—महाविद्या चेत् स्वव्याघातादिभिः प्रागेव दूषिता। अभिधेयत्वादिसाधकं प्रमेयत्वादिकं तु सर्व [स्थं]था केवलान्वयि च भवति; तस्य च त्वदुक्तदूषणाभासैरपाकरणशङ्काऽपि नाङ्कुरतीति ॥ ४९ ॥

---

आनन्द०—आक्षेपसङ्गतिमाह—एवमिति। तथा चेति तन्न्यायेन केवलान्वयिमात्रं निराकृतं स्यादिति भावः।

ननु महाविद्यानुमानं हि वक्रानुमानं तन्निराकृतं नतु प्रमेयत्वादिकेवलान्वयीत्यत्राह—किञ्चेति। असम्भवमेवोपपादयति—प्रमेयत्वेत्यादिना। निवर्तते चेदिति—साध्याभाववतो विपक्षत्वादिति भावः। हेतुत्वमेव—व्याप्यत्वमेव। साध्यत्वं व्याहन्येतेति—प्रमाविषयत्वरूपप्रमेयत्वाभावे तद्विशेषानुमितिविषयत्वायोगादिति भावः। हेतोरिति—स्वस्मिन्नेवेत्यर्थः। इदमुपलक्षणं। असिद्धिरूपस्स्यादिति भावः। किञ्चेति—सपक्षस्य साध्यसाधनोभयवत्त्वनियमादिति भावः। अवृत्ताविति—तत्रैव व्यतिरेकदर्शनादिति भावः। महाविद्यानुमानं—केवलान्वय्यनुमानं न प्रतिक्षीयत [ न प्रतिक्रियत ] इति—क्वचित्पाठः। न चिकित्स्यते—दूषणेन मोचयितुं—न शक्यत इत्यर्थः। एवं शब्दः प्रकारवाचीत्यभिप्रायेणाह—यथासम्भवमिति।

ननु सर्वथा व्याप्तिसिद्धिरित्ययुक्तं उक्तविकल्पेन केवलान्वयिभङ्गेनान्वयव्याप्तेर्गमकत्वाभावे वक्ष्यमाणनयात्केवलव्यतिरेकिणि च निराकृते व्यतिरेकव्याप्तेरप्यत्राप्रयोजकत्वेऽनुमानमात्रोच्छेदो व्याप्तिज्ञानमात्रमप्रयोजकं स्यादित्यत्राह—अयमभिप्राय इति। महाविद्या चेदिति—वक्रानुमानतारूप महाविद्येत्यर्थः। प्रमेयत्वादिकमित्यादिशब्देन घटो वस्तुशब्दवाच्यो वाच्यत्वादित्यादिकं ग्राह्यं। मूलं विभागं—केवलान्वयीति विभागम् ॥ ४९ ॥

---

तत्तद्धीव्यक्तिभेदात्प्रमितिविषयता मानसिद्धा घटादौ
प्रत्यक्षत्वं च तद्वत्तदिदमुभयमध्यक्षसिद्धं तथैव।
इत्थं तद्वृत्त्यवृत्तिव्यतिकरकलहैः केवलान्वय्यपोहे
दुर्वारः शून्यवादो न तमभिमनुषे स्थापयन् किञ्चिदिष्टम् ॥५०॥

सर्वार्थ—केवलान्वयिविशेषमुदाहृत्य पूर्वोक्तदूषणाभावं दर्शयति—तत्तदिति॥ धर्मादयः कस्यचिद् प्रत्यक्षाः; प्रमेयत्वादिति केवलान्वयिनमुदाहरन्ति न्याय [वादिनः]

विदः । तत्र मेयत्वं स्वात्मनि वर्तते वा न वा ? प्रत्यक्षत्वं स्वात्मनि वर्तते वा न वा ? इति साध्यसाधनविषयविकल्प एव दूषणाङ्कुरः । तत्र स्वात्मनि वृत्तौ न कश्चिदपि दोषः, स्वपरनिर्वाहकसमाधेस्सर्ववादिसाधारणत्वात् । औपाधिकधर्माणां यावदुपाधि वृत्तिमेवाङ्गीकुर्वन्ति विपश्चितः । एकं हि वस्तु प्रमाणेन सिध्यति; अतस्तत्प्रमेयं, तच्च प्रमाणान्तरेण, तच्च तदन्येन प्रमाणेनेति प्रमेयत्वं सर्वसाधारणमेव । एवं वाच्यत्वादिकमपि । अतो वृत्तिभेदेन प्रमेयत्ववाच्यत्वादीनां यावदुपाधिवृत्त्यङ्गीकारावश्यंभावेन नात्माश्रयदोषः । नाप्यन्योन्याश्रयदोषः; प्रमेयत्वस्याभिधेयत्वात् अभिधेयत्वस्यापि प्रमेयत्वात् । न हि दृष्टेऽनुपपन्नं नाम । प्रमेयत्वमेव ह्यभिधीयते; अभिधेयत्वमेव प्रमीयते । व्यक्तिभेदेन विरोध उपशाम्यतीत्युक्तम् । उक्तं च यावदुपाधिवृत्तित्वं सर्वौपाधिकधर्मसाधारणम्; इत्थमनङ्गीकारे शून्यवाद एव प्रसज्येत; न च भवान् शून्यवादी, केवलान्वयिमात्रविडम्बनप्रवृत्तत्वात् । एतत्सर्वमभिप्रेत्याह—**तत्तद्धीति ।** अयमत्र शब्दार्थः—तत्तद्बुद्धिव्यक्तिभेदात् प्रमेयत्वस्यापि प्रमेयत्वे न दोषः । प्रत्यक्षत्वं च प्रत्यक्षान्तरेण प्रत्यक्षम्, तथा च प्रमेयत्वं प्रत्यक्षत्वं च प्रत्यक्षान्तरेण प्रत्यक्षमित्युक्तम् । इत्थं सत्युपरञ्जकधर्माणां स्ववृत्त्यवृत्तिविकल्पेन दूषणे नित्यसमा; विषयिधर्माणां स्वविषयत्वाविषयत्वविकल्पेन दूषणे पुनरनुपलब्धिसमा । एतादृशजात्यन्तर्गतैर्विकल्पैर्दूषणकथने शून्यवादो दुर्वारः । भवान् पुनर्महाविद्यामेव विडम्बयन् न शून्यवादी, तत्तत्स्थापनप्रवणत्वात् । तदिदमाह—**न तमभिमनुष इति ।**

नात्माश्रयप्रसक्तिर्वा नान्योन्याश्रयसंस्थितिः ।<br>
प्रमेयत्वाभिधेयत्वप्रसङ्गे सर्ववादिनाम् ॥

औपाधिकानां धर्माणां वृत्तिर्यावदुपाधि चेत् ।<br>
प्रमेयत्वादिकं सुस्थमन्यथा व्याहतिस्तव ॥

व्याघातो यदि दोषो न को वा दोष इतीर्यताम् ।<br>
दोषादोषविभागश्चेन्न स्यात्त्वं दूषकः कथम् ॥ ५० ॥

---

**आनन्द०**—पूर्वसङ्गतिरित्याह—**केवलान्वयीति**—केवलान्वयिनं हेतुमिति शेषः । **दूषणाङ्कुरः**—दूषणस्य मूलमित्यर्थः । तत्र किं प्रमेयत्वादेरैक्यमङ्गीकृत्य विकल्पमुखेन दूषणमुच्यते ? नानात्वमङ्गीकृत्य वा ? नाद्य इत्याह **स्वात्मनीति**—**स्वपरनिर्वाहकेति**—तत्रात्माश्रयादिर्न दोष इति भावः । द्वितीय आह—**औपाधिकेति ।**

नन्वात्माश्रयाभावेऽन्योन्याश्रयं स्यादित्यत्राह—**नापीति**—**व्यक्तिभेदाभावे**ऽप्यन्योन्याश्रयदोषाय न भवतीति किं पुनर्व्यक्तिभेद इत्यभिप्रायेणाह—**व्यक्तिभेदेनेति ।** **इत्थमिति**—प्रमेयत्वं सर्ववृत्ति न चेत्प्रमाणे प्रमेयत्वाभावे प्रमाणं न सिद्ध्यति तदसिद्धौ-

तन्मूलकप्रमेयमेव न सिद्धयति प्रमेयत्वे प्रमेयत्वाभावे सर्ववस्तूनां प्रमाविषयत्वरूपं प्र मेयत्वं न स्यादिति शून्यता स्यादित्यर्थः ।

ननु धीभेदे परं धियो नात्माश्रयः प्रमेयत्वस्यत्वैक्ये आत्माश्रयस्स्यादेवेत्यत्राह— **अयमत्र शब्दार्थः**—प्रमाया भेदे प्रमेयत्वस्यापि भेदात्प्रमेयत्वस्य प्रमेयत्वे वृत्तावपि नान्योन्याश्रय इति भावः । **प्रत्यक्षत्वञ्चेति ।**

ननु कथमिदं प्रत्यक्षज्ञानस्य मानसस्य प्रत्यक्षत्वेऽपि तद्विषयस्य प्रत्यक्षत्वा— भावादिति चेत् । उच्यते । अनुव्यवसायस्य घटादौ ज्ञानविषयत्वग्रहणेन प्रत्यक्षत्वे विरोधाभावादित्यर्थः ।

ननु प्रमेयत्वं हि प्रमाविषयत्वं । तत्र विशेषणे विशेषणमस्ति ? न वा ? अस्ति- चेदात्माश्रयः । न चेत् विशिष्टे विशिष्टं न स्यात् ।

न च विशेष्यमात्रे विशिष्टस्य वृत्तिः तत्रापि विकल्पात् । तथा प्रमेयत्वस्य प्रमाविषयत्वे प्रमाया अपि विषयत्वमस्ति ? न वा ? अस्ति चेदात्माश्रयः । न चेद्विशेषणस्य विषयत्वाभावे विशिष्टस्यापि विषयत्वं न स्यादिति कथं प्रमेयत्वे प्रत्यक्षत्वाप्रत्यक्षत्वं ? प्रत्यक्षत्वे चेत्यत्राह—**तथा चेति** । प्रत्यक्षान्तरेणेत्युपलक्षणम् । प्रमित्यन्तरेण प्रमेयमित्यपि बोध्यम् ।

**नित्यसमेति**—वह्नित्वविशिष्टस्य साध्यत्वे वह्नित्वं पर्वतवृत्ति न वेति विकल्पेन दूषणप्रसङ्गात् । अनभ्युपेताङ्गसर्वसाधारणविकल्पेन प्रत्यवस्थानान्नित्यसमात्वमित्यर्थः । **विषयिधर्माणामिति**—ज्ञानगतप्रमात्वादेरपि सविषयत्वस्यादुष्टत्वाद्युक्तं भवति । अनेनान्यत्र दृष्टेन प्रत्यवस्थानादनुपलब्धिसमा जातिरित्यर्थः । **शून्यवाद इति**— प्रमेयत्वाभिधेयत्वप्रसङ्गेऽनुमाने सर्वं समाधेयम् । अन्यथा शून्यताप्रसङ्गादित्यर्थः । उक्तमर्थं कारिकया संगृह्णाति—**नात्माश्रयेति** । औपाधिकधर्माणां यावदुपाध्यभ्युप- गम्यत्वमाह—**औपाधिकेति** । अनङ्गीकारे दोषमाह—**अन्यथेति** । प्रमाणादीनामभावेन व्यवहारो न स्यादित्यर्थः । व्याघातव्यतिरिक्तस्यापि दोषत्वं न स्यादित्याह— **व्याघातो यदीति**—यदि विशेषतामादाय विभागोऽस्ति तर्हि तादृशदोषमादाय त्वद्दूषकोऽपि व्याघातेन दूषयेदित्याह—**दोषेति** । कश्चित् त्वत्कल्पितदूषणेन त्वामपि दूषयेदित्यर्थः । **मूलं किञ्चिदिष्टं**—स्वमतं स्थापयन् शून्यवादं नाङ्गी- करोतीत्यर्थः ॥ ५० ॥

**इति केवलान्वयिविशेषनिरूपणम् ॥**

ख्यातत्वाच्छब्दवाच्यो विमतिविषय इत्यादिरूपे तु साध्ये
व्यर्थोऽसौ हेतुरित्थं विमतिसमुदयासंभवादित्ययुक्तम् ।
व्याघातव्यक्त्यभावाच्छ्रुतिशकलबलात् कूटयुक्त्यादिभिर्वा
पाकः कश्चित् प्रमुह्यन् प्रमितिगतिकथापक्त्रिमैर्हि प्रबोध्यः ॥५१॥

**सर्वार्थ**—अथापि विप्रतिपन्नमभिधेयं प्रमेयत्वादिति केवलान्वय्यनुमानं निष्प्रयोजनम्, विप्रतिपत्त्यभावादित्याशङ्क्य परिहरति—**ख्यातत्वादि**त्यादिना पूर्वार्धेन ॥ तत्र हेतुमाह—**व्याघाते**ति । अविचाराणां बालप्रायाणां व्याघाताभिव्यक्त्यभावात्, यतो वाचो निवर्तन्त इति श्रुतिशकलश्रवणात्, प्रच्छन्नसौगतप्रवादाच्च व्यामुह्यन्ननेनानुमानेन प्रतिबोध्यत इति प्रयोजनवानेवायमनुमानप्रयोग इत्युत्तरार्धस्य भावः ॥ ५१ ॥

---

**आनन्द०**—ननु केवलान्वय्यनुमानं न सम्भवति तत्प्रमेयाभावेन प्रमापकत्वानुपपत्तेरित्याक्षेपसङ्गतिं दर्शयति—**अथापी**ति । **निष्प्रयोजनं** प्रयोजनरूपानुमितिजनकं न भवतीत्यर्थः । मूलं-**ख्यातत्वा**दिति -विप्रतिपन्नं वाच्यं प्रमेयत्वादित्यनुमानमित्यर्थः । **विमतिसमुदयासम्भवात्** -विप्रतिपत्त्यभावात् । **व्याघातव्यक्त्यभावात्**—कदाचित्सर्वत्र सत्त्वं समनिश्चयाभावेनापि केवलान्वयित्वव्याघातव्यक्त्यभावादित्यर्थः । **कूटयुक्तिः** ब्रह्म वाच्यं न भवति निर्धर्मकत्वादित्यादिः । लक्ष्यतयाऽपि श्रुतिभिः प्रतिपादनसम्भवाद्वाच्यत्वाभावे नानुपपत्तिरित्यादिरादिशब्दार्थः । **प्रमितिगतिः** [प्रमितगतिः] प्रमित्युपपत्तिकतत्कथाः—तदनुकूलव्यापाराः । **पक्त्रिमा**—स्वयमेव गता येषां केवलान्वयि हेतूनां ते तथोक्ताः प्रमाजनकस्वभावैरिति यावत् । पचेर्ड्वितः क्त्रिः, त्रेर्मम् नित्यम् ॥ ५१ ॥

---

पक्षेऽन्यत्रापि साध्यं न मितमविदिते नापि संबन्धधीः स्यात्
क्वापीत्यप्यस्य सिद्धावृजुरविहतिमान्नास्ति सामान्यहेतुः ।
सत्यप्यस्मिन्न शक्याधिकरणनियतिः स्वेच्छया सर्वसाम्या-
द्वैषम्यं दुर्वचं तत्प्रमितिकरणता क्वापि नावीतहेतोः ॥ ५२ ॥

**सर्वार्थः**—इत्थमन्वयव्यतिरेकिणं केवलान्वयिनं च व्याप्तिसंरक्षणप्रकारैर्बहुभिरुपपाद्य केवलव्यतिरेकिणं निराकर्तुमुपक्रमते—**पक्ष** इति । व्याप्तिग्रहणसापेक्षं प्रमितिसाधनमनुमानमित्यनुमानलक्षणम् । व्याप्तिश्च साध्यसाधनयोः; अतस्तदुभयज्ञानसापेक्षं व्याप्तिपरिज्ञानम् । साध्यं च न क्वापि मितम् । पक्षे मितं चेत् सिद्धसाधनम्; सपक्षे चेद्व्यतिरेकित्वहानिः; विपक्षे चेद्व्याघातः; अविदिते संबन्धबुद्धिरसंभाविनी ।

तदिदमाह—अविदित इति। ननु शब्दः क्वचिदाश्रितः गुणत्वात्, ज्ञानादयः क्वचिदाश्रिताः इति सामान्यहेतुना सिद्धं साध्यमुपजीव्य विशेषविषयस्याष्टद्रव्यातिरिक्तद्रव्यानुमानस्य व्यतिरेकिरूपिणो व्याप्तिरिति मतमनूद्य दूषयति—व्याप्तीति। साक्षात्साध्यसिद्ध्यभावेन विशेषव्याप्तिकथने तावदार्जवं नास्तीति। तदिदमाह—ऋजुरविहतिमान्नास्ति सामान्यहेतुरिति। यस्य येन व्याप्तिरभिधीयते तयोरन्यतरस्येतरेण संबन्धकथने तद्विशेषप्रतिपत्तिरुपयुज्यते; न तु सामान्यस्य प्रतिपत्तिरिति भावः। यद्यन्यप्रतिपत्तिरन्यसंबन्धप्रतिपत्तावुपयुज्यते सर्वत्राप्यन्यप्रतिपत्तिरन्यसंबन्धप्रतिपत्तावुपयुज्येत; अन्यत्वाव्याघातात्। न हि गन्धवत्त्वपृथिवीत्वसंबन्धप्रतिपत्तौ गुणवत्त्वद्रव्यत्वप्रतीतिः तन्त्रमिति भावः। अस्तु वा सामान्यहेतुर्विशेषसंबन्धोपयोगी। अथापि परिशेषः कर्तुं न शक्यते; भवदभिमतमात्रे परिशेषप्रवृत्तेर्विश्रमाभावात्, परस्परव्यावृत्त्या परिशेषानियमाच्चेत्याह—सत्यपीति। अस्मिन्परिशेषप्रमाणे कथं परिशेषानुपपत्तिरित्यत आह—स्वेच्छयेति। किं स्वेच्छया परिशेषः? तथा सति परेच्छया वस्त्वन्तरपरिशेषोऽपि कर्तुं शक्यत इत्यर्थः। वस्तुवैषम्यात् परिशेषसिद्धिमाशङ्क्य परिहरति—वैषम्यं दुर्वचमिति। यथा श्रोत्रेन्द्रियग्राह्यत्वात् शब्दः पृथिव्यादीनां गुणो न भवतीति साध्यते, तथा तेनैव हेतुना विभूनां गुणो न भवतीति साधनादाकाशगुणत्वमपि भज्येत। यथा विशेषगुणत्वादिति दिक्कालगुणत्वं बाध्यते, एवं श्रोत्रेन्द्रियग्राह्यत्वाद्विभ्वन्तरगुणत्वमपि बाध्येत। तथा च बाह्येन्द्रियगुणत्वमपि बाध्येत। अत एव हेतोर्निरवयवगुणत्वमपि निर्धूयेत। उपलक्षणमेतत्; सर्वपरिशेषानुमानेष्वतिप्रसङ्गबाहुल्यं द्रष्टव्यम्। तर्कानुग्रहाद्वैषम्यमपि तत्र तत्र तर्कान्तरकथनेन बाधनीयम्। अतः प्रमितिहेतुत्वं न केवलव्यतिरेकिण इत्याह—तदिति। तस्मादित्यर्थः॥ ५२॥

---

आनन्द०—प्रसङ्गसङ्गतिरित्यभिप्रेत्याह—इत्थमिति। आक्षेपसङ्गतिरित्येके। व्याप्तीति—"व्याप्तिग्रहणसापेक्षम् प्रमितिसाधन"मिति तार्किकरक्षावचनादिति भावः। साध्याप्रसिद्धिः किं पक्षे? उत सपक्षे? यद्वा विपक्ष इति विकल्प्य आद्यपक्षे मितञ्चेदिति—द्वितीय आह—सपक्ष इति। तृतीय आह—विपक्षे चेद्व्याघात इति—व्यभिचाराद्व्याप्तिविरह इत्यर्थः।

ननु सामान्यप्रसिद्धिमुपजीव्य शब्दादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः अष्टानाश्रितत्वे सति गुणत्वात् यदष्टद्रव्यातिरिक्त द्रव्याश्रितं न भवति तदष्टानाश्रितत्वे सति गुणोऽपि न भवति यथा संप्रतिपन्नमिति व्यतिरेक्यनुमानं सम्भवतीत्याशङ्कते—नन्वित्यादिना। यस्य येनेति—अष्टद्रव्यातिरिक्त द्रव्याश्रितत्वप्रसिद्धिं विना तदभावस्य साधनाभावेन व्याप्तिर्न निरूपयितुं शक्यते प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानाभावे तदवच्छिन्नाभावज्ञानायोगादिति भावः। [अन्यत्वाऽव्याघातादिति] अन्यत्व-

**व्याघातादिति**—यत्प्रतीतिः यत्संबन्धप्रतीतावुपयुज्यते तस्य तत्संबन्धित्वनियमेन तत्संबन्ध्यन्यत्वं व्याहतमित्यर्थः । **अस्तु वेति**—सामान्यानुमानजन्यसामान्यसाध्य-प्रसिद्धिर्विशेषव्याप्तिग्रहहेतुरित्यर्थः । **अथापीति**—अष्टानाश्रितत्वस्य विशेषणस्या सिद्धिरित्यर्थः । हेतुमाह—**परस्परेति**—तत्तदिन्द्रियग्राह्यत्वादिरूपवैलक्षण्यादित्यर्थः । **परेच्छयेति**—अष्टानाश्रितत्वेन परिशेषे विभ्वनाश्रितत्वरूपपरिशेषस्यापि कर्तुं युक्त-त्वादिति भावः । **तथा बाह्येन्द्रियेति**—वायोः प्रत्यक्षत्वमभ्युपेत्येदं, इन्द्रियग्राह्यत्वं च सामान्यादिप्रत्यासन्तिनिरपेक्षेन्द्रियजन्यज्ञानविषयत्वं । तथा च सर्वज्ञानसाधनीभूत मनोग्राह्ये चक्षुरूपादौ व्यभिचारवारणाय बाह्येतिविशेषणं बोध्यम् । **मूलं अवीतहेतोः**—व्यतिरेकिहेतोः ॥ ५२ ॥

---

**साध्याभावो विपक्षे कथमिव विदितस्तस्य साध्याप्रसिद्धे-**
**र्भावात्मन्यप्यमुष्मिन् प्रतिभटवपुषा ह्यत्र ते व्याप्तिसिद्धिः ।**
**इत्यज्ञातान्वयेऽस्मिन् कथमिव सुशकः स्यादभावो नियन्तुं**
**हेतौ सारोऽन्वयोऽतः क्वचिदनुपधिकः केवलान्वय्यपीष्टः ॥ ५३ ॥**

**सर्वार्थं**—श्रुतार्थस्य विशदीकरणाय व्यतिरेकिणो विपक्षे व्यतिरेकव्याप्तिदर्शना-संभवमुक्तमप्यनुवदति—**साध्याभाव** इति ॥ साध्याप्रसिद्ध्या तद्व्यतिरेकोऽपि विपक्षे ज्ञातुं न शक्यत इत्यर्थः । अत्र केचिदाहुः—यस्मिन् व्यतिरेकिणि साध्यं भावरूपं, तत्र व्यतिरेकग्रहणासंभवः; व्यतिरेकस्याभावरूपत्वात्, अभावस्य प्रतियोगिग्रहणमन्तरे-णासिद्धेः, प्रतियोगिनश्च पक्षादिषु न क्वापि सिद्धेः । यत्राभावरूपं साध्यं तत्र भावरूपो व्यतिरेकः । स च भावो न प्रतियोगिग्रहणसापेक्षः, भावत्वादेव । तथा च व्यतिरेक्यनु-मानसिद्धिः । उदाहरन्ति च गौरितरेभ्यो भिद्यते सास्नादिमत्त्वादिति । अत्र इतरेभ्यो भेदो हि इतरप्रतियोगिकान्योन्याभावः, तस्य चाभावरूपत्वाद्व्यतिरेक इतरत्वादिकं भावरूपम्; तस्मादभावरूपसाध्यव्यतिरेकस्य निरपेक्षप्रतीतिकत्वात्तेनैव हेतुव्यतिरेकस्य व्याप्तिग्रहणं युज्यत इति । अयं च ग्राम्यजनविप्रलम्भ इत्याह **भावात्मनीति** । अयं भावः—व्यतिरेकस्य भावात्मकत्वेऽपि व्यतिरेकव्याप्तिकथनावस्थायां साध्याभावरूपतया कथनमवश्यंभावि । यदितरस्मान्न भिद्यते तत्सास्नादिमन्न भवतीति हि व्यतिरेकव्याप्ति-कथनम् । अन्यथा साध्यप्रतिभटत्वाभावे व्यतिरेकव्यवहारानुपपत्तिः । तथा च भाव-रूपत्वेऽभावरूपत्वे च व्यतिरेकस्य साध्यविरोधित्वेन ग्रहणावश्यंभावात्साध्याप्रसिद्धौ न प्रसिद्धिः । साध्यं च पक्षादिषु न प्रसिद्धमित्युक्तं प्रागेवेति । अतोऽन्वयापरिज्ञाने व्यतिरेक-परिज्ञानं सर्वथा न शक्यमित्याह—**इतीति** । अस्मिन्—व्यतिरेक्यनुमाने । इत्थं केवल-व्यतिरेकिणं निरस्य सर्वानुमानसारभूतमन्वयव्यतिरेकिणं प्रमाणतया निगमयति—**हेताविति** । अन्वयः—व्यतिरेकसहितोऽन्वयः । हेतौ सारः—स्थिरांशः । अतोऽन्वयव्यतिरेकी

सर्वप्रधानः, अन्वयव्यतिरेकाभ्यामर्थतत्त्वनिर्णयात् । केवलान्वय्यपि क्वचिदिष्टाः । यत्र निरुपाधिकत्वादिनिर्णयः तर्कानुग्रहेण भवति यथा प्रमेयत्वादभिधेयत्वमिति, स च हेतुरभीष्ट एवेति । अत केवलव्यतिरेको अभावविषयत्वे भावविषयत्वेऽपि न साधक एव । अयं गौरिति व्यवहर्तव्य इति भावविषयः । इतरेभ्यो भिद्यत इत्यभावविषय इति भेदः ॥ ५३ ॥

---

आनन्द०—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—श्रुतार्थस्येति—केवलव्यतिरेकि न भवतीति सम्प्रदायपरम्परया श्रुतार्थस्येत्यर्थः । भावरूपव्यतिरेकस्योदाहरणमाह—उदाहरन्ति चेति । [अत्र केचिदाहुरिति] ।

ननु भावात्मकस्याऽभावत्वे प्रतियोगिज्ञानसापेक्षज्ञानत्वाभावात्साध्यानुपस्थितावपि व्यतिरेकग्रहसम्भवात्कथं नानुमानमित्यत्राह—अयं भाव इति । तथा च भाव—रूपत्व इति ।

ननु साध्यं भावः, तद्विरोधिरूपं—प्रतियोगितावच्छेदकं, तद्रूपेणोपस्थितिरसम्भवत्येवेति—यद्रूपेणोपस्थितव्यापकतया यो गृहीतस्तद्रूपावच्छिन्नाभावेन हेतुना तदभावः साध्यत इति—इतरत्वेनोपस्थिततादात्म्यव्यापकतया सास्नादिमत्त्वाभावो गृह्यत इति तदभावेन सास्नादिमत्त्वेनेतरतादात्म्याभावस्साधयितुं शक्यत इति व्यतिरेकि स्यादेव ।

किञ्चान्वयव्यतिरेकिणि यदा व्यतिरेकव्याप्तिरेव गृह्येता तत्र व्यतिरेक्यनुमानं सम्भवत्येवेति चेदत्राहुः आचार्याः । यद्व्यापकत्वेन यो गृहीतस्तदभावेन तदभावसाधनेऽपि न व्यतिरेकिसिद्धिः । व्यापकतावच्छेदकावच्छिन्नाभावेन व्याप्यतावच्छेदकावच्छिन्नाभाव इत्यन्वयिन एव तत्सिद्धेरिदमितरतादात्म्यवन्न भवति तद्व्यापकाभाववत्वात् । यद्यद्व्यापकाभाववत् तत् तदभाववदिति विशेषानुमानसम्भवात् ।

यदपि चोक्तमन्वयव्यतिरेकिणीत्यादि तत्रापि साध्यस्य प्रसिद्धौ क्वचिदधिकरणे तस्यैव सपक्षतया हेतुग्रहेऽन्वयव्याप्तेः । तदग्रहेत्वसाधारण्यात् अधिकरणविशेषानादरेणोपस्थितौ व्यतिरेकव्याप्तिज्ञानमात्रस्य हेतुत्वाभावादन्यव्याप्तिज्ञानस्याऽन्यानुमितौ हेतुत्वेऽतिप्रसङ्गान्मानाभावाच्च तत्रापि व्यापकाभावे व्याप्याभाव इति व्याप्त्येवानुमानसम्भवे व्यतिरेकि नानुमानमिति नेह प्रतन्यते ॥ ५३ ॥

संत्यक्तावीतहेतोरभिदुरमखिलं लक्षणाभावतः स्यात्
मैवं लक्ष्मैव भेदस्तदवगमकमित्याप्तवाक्ये तदुक्तिः।
यद्वा गंधादिरप्त्वप्रभृतिविरहितेष्वेव दृष्टो घटादि-
ष्वाज्यादावन्वयी स्यादयमिव विमतेष्वेकलक्षण्यपोहः ॥ ५४ ॥

**सर्वार्थं**—ननु केवलव्यतिरेक्यभावे सर्वमपि लक्षणं निष्प्रयोजनं स्यात्। व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्; तदुभयमपि केवलव्यतिरेक्यनुमानसाध्य-मित्याशङ्कते—संत्यक्तेति। अभिदुरं—भेदकानुमानाभावादभिन्नमित्यर्थः। निराकरोति-मैवमिति। तत्र हेतुमाह—लक्ष्मैव भेद इति। विरुद्धधर्माध्यासो हि भेदः; लक्षणानि च विरुद्धधर्माः। अतो लक्षणप्रतीतिरेव भेदप्रतीतिः। अतोऽनुमानसाध्यं नावशिष्यते; लक्षण-प्रतीतेरेव लक्षणप्रतीत्या साधने पुनरात्माश्रयः। भवन्तोऽप्याहुः-अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यास इति लक्षणस्यापि भेदत्वम्। लक्षणातिरिक्तो भेदस्तु भवद्भिरङ्गी-कृतोऽपि नैरर्थक्यान्नास्माभिरङ्गीक्रियत इति भावः। कथं तर्हि लक्षणस्य भेदत्वम्? लक्षणं हि वाक्यरूपं, स पुनर्न भेद इत्याशङ्क्य परिहरति—तदवगमकमिति। आप्त-वाक्ये लक्षणत्वकथनमौपचारिकमित्यर्थः। अथवा लक्षणमनुमानम्। अन्वय्येव तदित्याह—यद्वेति। तथा हि—अबादिव्यतिरिक्ततया संप्रतिपन्नेषु घटादिषु गन्धादिः दृष्टः, तमेव दृष्टान्तीकृत्य सन्दिग्धेष्वाज्यादिष्वबादिव्यतिरेकस्साध्यः; तथा चान्वयि-त्वमेव। अयमेव हि पक्षस्साधीयान्। लोके हि व्यवहारानुसारिणा लक्षणेन सुशिक्षिताः पामराः परीक्षकाश्च विप्रतिपन्नेषु विषयेषु लक्षणानुरोधेनार्थतत्त्वं निर्णयन्तीति सार्व-लौकिकमेतत्। अतो लक्षणाद्व्यतिरेकसाधनमन्वय्यनुमानफलमेव। एवं क्वचिदनुमाने विनिश्चिते सर्वत्रापि लक्षणप्रयोगे केवलमन्वयित्वेनैव [लक्षण] वैलक्षण्यप्रसाधनं दर्शयति—अयमिवेति ॥ ५४ ॥

---

**आनन्द०**—आक्षेपसङ्गतिरित्याह—केवलव्यतिरेक्यभाव इति। व्यावृत्तिः इतरभेदः। लक्षणं ज्ञातं? न वा? आद्य आह—अतो नानुमानसाध्यमिति। द्वितीय-आह—लक्षणप्रतीतेरेवेति। भवन्तोऽपीति नैयायिकाः लक्षणस्यापि भेदत्वमाहुरित्यर्थः।

ननु लक्षणातिरिक्तत्वपक्षेऽनुमानं स्यादित्यत्राह—लक्षणातिरिक्त इति।

ननु लक्षणन्त्वसाधारणधर्मवचनमिति वाक्यरूपत्वात्कथमर्थगतभेदत्वमित्या-शङ्कते—कथं तर्हीति। स पुनरिति—परिभाषेयमितिवद्विधेयानुसारेण लिङ्ग-निर्देशः।

नन्वतिरिक्तो भेद इति पक्षे व्यतिरेक्यनुमानं स्यादित्यत्राह—अथवेतीत्याहुः। अन्ये तु लक्षणस्याऽनुमानत्वमस्तु तथापि—गन्धवत्त्वादिना पृथिवीत्वादिकमेव

साध्यम् न भेदः, अयमेव सर्वलोकव्यवहारानुगुणश्चेत्याहुः । किञ्च केवलान्वयि प्रमेयत्वादिलक्षणसाधारण्यञ्च सिद्ध्यति । इतरभेदसाधने तु न सिद्ध्यतीत्याह— **एवं क्वचिदिति । केवलमन्वयित्वेनैव**—अन्वयव्याप्त्यैवेत्यर्थः ।

नन्वितरभेदोऽतिरिक्तश्चेत्तत्साधनं व्यतिरेकि स्यादित्याशङ्कापि निरस्ता । गन्धवत्त्वादिना घटादावितरभेदे सिद्धे तद्दृष्टान्तेनाऽऽज्यादावपीतरभेदस्साध्य इत्यन्वयव्यतिरेकीति भावः ।

**मूलमभिदुरं**—अभिन्नं । विदि भिदि च्छिदेः कुरच् । **एकलक्ष्मण्यपोहः**—एकलक्षणवति-दृष्टान्तसमानलक्षणवति । अपोहः अभेदः, अन्वयिना साधयितुं शक्यत इत्यर्थः ॥ ५४ ॥

---

**भेदोऽबादेर्घटादौ विदित इतरथा त्वप्रसिद्धिः पुरोक्ता**
**कृत्स्नक्षोण्यन्वितोऽसौ न विदित इति चेत् पक्षसिद्धिः कथं स्यात् ।**
**व्यवहारेऽप्येवमूह्यं न खलु न विदितं तन्निमित्तं घटादौ**
**नो चेत्तन्निमित्तव्यवहृतिनियमस्थापनं दुश्शकं ते ॥ ५५ ॥**

**सर्वार्थं**—एवं परोक्तचोद्यमन्यथासिद्ध्या निराकृत्य परोक्तं लक्षणफलद्वयं विभज्य विशेषेण निराकरोति—**भेद इति** । भवता खलु, भेदो वा व्यवहारो वा लक्षणेन नियम्यत इत्यभिधीयते; उभयमप्यसंबद्धम् । भेदे तावद्वदामः—अयं घटोऽबादेः भिद्यत इत्यनुमानं प्रयुज्यते । अयमर्थः प्रसिद्ध एव । अन्यथा पाषाणादेरबादिभेदव्यवहाराभावप्रसङ्गः । अन्यथा पक्षस्याप्रसिद्धविशेषणत्वं पूर्वमुक्तमित्याह—**इतरथेति** । अस्तु प्रसिद्धो घटादेः प्रत्येकमबादिभ्यो भेदः; तथाऽपि कृत्स्नक्षोण्यन्वितोऽबादिभ्यो भेदो न प्रसिद्धः । तथा हि—घटपाषाणकाष्ठादिकं प्रत्येकं जलविलक्षणतया उपलभ्यते; तथाऽपि यावन्ति पार्थिवानि वस्तूनि परमाणुद्व्यणुकत्रसरेणुपूर्वकाणि मेरुसर्षपादीनि च तेषां सर्वेषां यौगपद्येन जलविलक्षणत्वं न पूर्वप्रसिद्धम्; तद्गन्धवत्त्वानुमानेन साध्यत इत्यस्मत्पक्षः; तथा च न सिद्धसाधनमिति । इदमनुवदति—**कृत्स्नेति** । परिहरति—**पक्षसिद्धिरिति** । अयं भावः—प्रसिद्ध एव पक्षे साध्यं साध्यते, प्रसिद्धिश्च पक्षस्य सपक्षविपक्षाभ्यां व्यावृत्तत्वेन; तथा च कृत्स्नाऽपि क्षोणी विपक्षव्यावृत्तत्वेन प्रसिद्धा चेदनुमेयं नावशिष्यते; व्यावृत्तेरेवानुमेयत्वात् । अप्रसिद्धा चेत् कथमनुमानस्य [प्रसिद्धिः] प्रवृत्तिः ? न हि पक्षप्रतीतिमन्तरेणानुमानं प्रवर्तत इति । व्यवहारेऽपि साध्ये दूषणमेतादृशं वाच्यमित्याह—**व्यवहारेऽपीति** । व्यवहारस्यापि पूर्वमप्रसिद्धावप्रसिद्धविशेषणत्वं पक्षस्य । इयं पृथिवीति व्यवहर्तव्या गन्धवत्त्वादिति ह्यनुमानं प्रयुञ्जते । तच्च प्रसिद्धमेव घटादौ; अन्यथा कुत्रापि पृथिवीव्यवहारनियमप्रसिद्ध्यभावात् विप्रतिपन्नं जलमिति

व्यवहर्तव्यं गन्धवत्त्वात्, एवं विप्रतिपन्नं पृथिवीति व्यवहर्तव्यं स्नेहवत्त्वादिति वैपरीत्ये-नानुमानं प्रवर्तेत। एवं व्यवहारे लोकव्यवहारविरोध इति चेत्; तर्हि लोकव्यवहारादेव व्यवहारनियमे सिद्धे किमनेनानुमानेन? असिद्धे वा किमनेनानुमानेन? स्वयमेव व्यवहारनियमस्थापकत्वाभावात्। तदिदं सर्वमभिप्रेत्याह—नो चेदिति। अतो व्यवहारनियमस्य लोकप्रसिद्धिसिद्धत्वादेवानुमानमनर्थकमिति। कथं तर्हि लक्षणेन तत्तदर्थव्यवहारस्थापनं वादिभिः क्रियते? अनादिप्रसिद्धव्यवहारस्य नियामकधर्ममात्र-प्रदर्शनं शिष्याणामिति न कश्चिद्दोषः। न खलु सर्वमपि शब्दार्थव्युत्पादनं लक्षणोपदेशेन, लोकव्यवहारस्यैव प्रायेण नियामकत्वादिति॥ ५५॥

---

**आनन्द०**—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—**एवमिति**। केचित्तु प्रसङ्ग एव सङ्गतिरित्याहुः। [घटादिषुदृष्टोऽबादिभेद इत्यर्थः]

**अन्यथेति**—अबादिभेदस्याऽप्रसिद्धत्व इत्यर्थः। **अन्यथेति**—भेदव्यवहाराभाव-स्येष्टत्व इत्यर्थः। **अप्रसिद्धविशेषणत्वमिति** विशेषणरूपं साध्यमप्रसिद्धमिति तत्संशय-घटिता पक्षता न स्यादित्यर्थः।

ननु कृत्स्नक्षोणीगतोऽबादिभेदो न घटादिगतभेदादन्यः। तथा [च] सुप्रसिद्ध एवेति कथमप्रसिद्धिरित्यत्राह—**तथा हीति**—घटत्वावच्छेदेन प्रसिद्धावपि न पृथिवी-त्वावच्छेदेन प्रसिद्धिरिति भावः।

ननु घटपटपाषाणपृथिव्यादेः प्रसिद्धत्वात् पक्षस्य कथमप्रसिद्धिरित्यत्राह—**अयं भाव इति**—किं प्रसिद्धे पक्षे साध्यं साध्यते? उताप्रसिद्ध? इति विकल्प्याऽऽद्य-आह—**प्रसिद्ध एवेति**—निश्चितसाध्यतदभावाभ्यां व्यावृत्तत्वनिश्चये सिद्धसाधन—बाध-प्रसङ्गादित्यर्थः।

नन्वेवमपि सन्देह एव स्यादिति चेन्मैवं। निश्चितव्यतिरेकाऽभेदग्रहस्य निश्चितसाध्याभावज्ञानतया बाधावश्यम्भावात्। एवं सपक्षत्वनिश्चयेऽपीति भावः। द्वितीय आह—**अप्रसिद्धा चेति**। **अन्यथेति**—गन्धवत्त्वस्य पृथिवीतिव्यवहारनिमित्त-त्वाज्ञानाज्जलमिति व्यवहारनिमित्तत्वं वा कुतो न स्यादविशेषादिति भावः। अत्र किं लोकव्यवहारात्सिद्धमसिद्धं वा? आद्य आह—**एवं तर्हीति**। द्वितीय आह—**असिद्धे वेति**। तदेवोपपादयति—**स्वयमेवेति** विप्रतिपन्नं जलमिति व्यवहर्तव्यमित्याद्य-व्यवस्थापादनादिति भावः।

ननु शास्त्रकारव्यवहारविरोध इति शङ्कते—**कथं तर्हीति**। **अनादीति**—सिद्धस्यैव प्रदर्शनमात्रं क्रियते नत्वनुमानतयोपपाद्यत इति भावः।

ननु शब्दार्थव्युत्पादनस्य लक्षणसाध्यत्वात्तस्य चानुमानरूपतया व्युत्पादकत्वादनुमानं सिद्धमित्यत्राह—न खल्विति ॥ ५५॥

---

विद्यास्थानेषु धर्म्येष्विह यदगणयन् विस्तरं न्यायपूर्वं
तत्रापि ह्यक्षपादस्स इति न नियतिर्न्यायतत्त्वेऽनुगम्ये ।
नार्षत्वादिप्रधानं क्वचिदपि यदि वा वार्तिकं क्वापि युक्तं
यद्वा नेयं कथंचिन्निखिलमपि न किं निर्वहन्त्येवमन्ये ॥ ५६ ॥

सर्वार्थः—यद्येवं न्यायशास्त्रविरुद्धमपि भवद्भिरभिधीयते, तर्हि न्यायशास्त्रस्य कथं धर्म्येषु विद्यास्थानेषु प्राधान्येनाभिधानं पुराणन्याय इति ? एतदनुवदति—विद्यास्थानेष्विति। अस्तु न्यायस्य वेदाङ्गत्वं, स पुनर्न्यायोऽक्षपादप्रणीत इति न नियमोऽस्तीत्याह –तत्रापीति। कस्तर्हि न्याय इत्यत्रोत्तरम् –न्यायतत्त्व इति। अनुसर्तव्ये वेदान्तानुकूले विद्वद्विशेषनिर्मिते ग्रन्थे सति किमनेन वेदविरुद्धेनाक्षपादकल्पितेन। उक्तं खलु नाथमुनिभिः वेदान्तानुकूलं न्यायशास्त्रं न्यायतत्त्वाभिधानेन। तच्च परिगृहीतं यामुनाचार्यादिभिः। नन्वार्षं परित्यज्य कथं मानुषं परिगृह्यते ? युक्त एव मानुषस्याप्युपपन्नस्य परिग्रहः, आर्षस्याप्यनुपपन्नस्य परित्यागः। अन्यथा लोकायतस्यापि परिग्रहः स्यादित्याह—नार्षत्वेति। आर्षत्वमेव परिग्रहकारणं चेत्; ऋषिप्रणीतेषु ग्रन्थेषु वार्तिकारम्भो न स्यात्; उक्तानुक्तदुरुक्तचिन्तारूपत्वाद्वार्तिकस्य। तदिदमाह—यदि वेति। अत्रापि नेत्यनुषज्यते। इत्थमक्षपादप्रणीतस्य न्यायशास्त्रस्य वेदान्तविरुद्धत्वमङ्गीकृत्यान्वा[रुह्य] रोहवादेन त्याज्यत्वमभिहितम्। इदानीं विरोध एव नास्तीति पक्षान्तरमाह—यद्वेति। अयं भावः—अक्षपादप्रणीते सूत्रे न क्वापि वेदान्तविरोधः; व्याख्यातार एव स्वयमप्रतिपत्तिविप्रतिपत्तिभ्यामन्यथा व्याचख्युः; ततसम्यङ्न्यायविद्भिः परिशोधनीयमिति । अत्रोपपत्तिमाह—न किमिति । सर्वेऽपि हि व्याख्यातारः सूत्रभाष्यवार्तिकादिषु विरुद्धवदवभासमानमित्थमेव समादधते इत्यर्थः ॥ ५६ ॥

---

आनन्द०—आक्षेपसङ्गतिमभिप्रेत्याह—यद्येवमिति । धर्म्येषु धर्मयुक्तेषु। धर्मपत्न्यर्थन्यायानपेत इति यत्प्रत्ययः। पुराणन्यायेति—यद्यपि

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥"

इति पाठः। तथापि "मीमांसा धर्मनिर्णयः। पुराणन्यायशास्त्रञ्चेति पाठो विद्यत इत्यभिप्रायेण तदुक्तिरित्याहुः।

पुराणन्यायमीमांसेति न भारतवचनम् अपि त्वन्यदेवैतदिति केचित्। **वेदविरुद्धेनेति** सृष्टिसंहारादिषु विरोधस्स्फुट इति भावः। न्यायतत्त्वनामकं न्यायशास्त्रं नाथमुनिभिः प्रणोतमित्यत्राह **उक्तमिति**। परिहरति—**उक्त एवेति अन्यथेति**। **लोकायतस्य**—चार्वाकशास्त्रस्य सुरगुरुप्रणीतत्वेनार्षत्वादिति भावः। दूषणान्तरमाह—**आर्षत्वमेवेति**—तन्त्रवार्तिकादेर्जैमिन्यादिप्रणीतसूत्रविरुद्धस्य परिग्रहो दृश्यत इत्यर्थः।

केचित्तु वार्तिकशब्देन शब्दवार्तिकमेव विवक्षितम्। कात्यायनस्तु न ऋषिरित्याहुः।

**अन्वारोहवादेनेति**—वस्तुतो विरोध एव नास्तीति—भावः।

ननु समवायसामान्याङ्गीकारात्सृष्ट्यादिवैपरीत्यकथनाच्च कथं न विरोध इति चेत्तत्राह—**अयं भाव इति**—यथा च न विरोधस्तथा न्यायपरिशुद्ध्यादावेव शोधितमिति भावः। **मूलं निखिलमपि**—आक्षपादं सूत्रजातं। कथञ्चित् विरोधे न [अविरोधेन] नेयं - योज्यम्। **अन्येऽपि हि व्याख्यातार एवं न निर्वहन्ति किं** - निर्वहन्त्येवेत्यर्थः॥ ५६॥

---

**अन्यस्मै स्वप्रतीतं प्रकटयति यया वाक्यवृत्त्याऽनुमानं**
**तत्रोदाहृत्युपेताऽप्यविकलमिह तद्बोधयेन्नोपनीतिः।**
**युक्ता तूदाहृतिस्स्वोपनयनिगमना सप्रतिज्ञादिका वा**
**वक्तव्या वावदूकैस्तदधिकमपि वा संमतेः स्याद्यथेष्टम्॥ ५७॥**

**सर्वार्थः**—तर्हि न्यायानुसारे पञ्चावयवमनुमानमेव सर्वत्र प्रयुज्यताम्। त्र्यवयवमपि क्वापि क्वापि प्रयुज्यते भावत्कैरेव विद्वद्भिः कथमित्याशङ्क्यानुमानावयवपरिमाणं नि [ग] यमयितुं परार्थानुमानस्वरूपमाह **अन्यस्मा इति**। अयमर्थः—यावदपेक्षितं तावद्वक्तव्यम्; यद् बौद्धपरिकल्पितमुदाहरणोपनयमात्रम्, तत्पक्षे साध्यव्यवस्थापनाभावादनादरणीयमेवेत्याह—**तत्रेति**। कियत्तर्हि वक्तव्यमित्यत्राह—**युक्तेति**। त्रीनुदाहरणान्तान्वा यद्वोदाहरणादिकानित्युक्तक्रमेण त्र्यवयवमेव प्रायेण परिपूर्णमिति भावः। ये तु प्रतिज्ञामन्तरेण न हेतुप्रयोगः कर्तव्यः, साध्यस्यैव प्रमित्सितत्वात्। नापि हेतुप्रयोगमन्तरेण उदाहरणप्रसङ्गः; हेतुसाध्ययोर्व्याप्तिप्रदर्शनात्मकत्वादुदाहरणस्य। न चोदाहरणमन्तरेणोपनयप्रसिद्धिः, उदाहरणेन गृहीताविनाभावस्य हेतोस्तेनैवाकारेण पक्षधर्मताप्रदर्शनार्थत्वादुपनयस्य। न च हेतुना पौनरुक्त्यमुपनयस्य, पक्षधर्मतामात्रं हेतोरर्थः, व्याप्तस्य पक्षधर्मत्वमुपनयस्यार्थ इति विभागेनार्थनिर्णयात्। न च निगमनं निरर्थकम्; पक्षे बाधकप्रमाणाभावद्योतनार्थमग्निमानेवेति सावधारण-

साध्यनिर्देशरूपत्वेन निगमनस्यापि सफलत्वात् । अतः पञ्चावयवयुक्तं वाक्यमेव परिपूर्णोपदेश इति मन्यन्ते, तेषामपि पक्षमविरुद्धत्वादनुमन्यते—तदधिकमिति। अयमर्थः—त्र्यवयवपञ्चावयवयोर्द्वयोरपि संमतत्वादस्मत्पक्षवादिना त्र्यवयवप्रयोगे न न्यूनाधिकभावप्रसङ्गः।। ५७ ॥

---

आनन्द०—आक्षेपसङ्गतिमाह—तर्हीति । प्रसङ्गस्सङ्गतिरेवेत्यन्ये । पञ्चावयवा-अस्य त्रयोऽवयवा अस्येत्यनुमानप्रदर्शकवाक्यमुच्यते । ननूदाहरणोपनययोः प्रयोगाङ्गत्वात्तत्राह—अयमर्थ इति ।

ननु पर्वतो वह्निमान् वह्निव्याप्यधूमवत्त्वादिति प्रतिज्ञोपनययोः पूर्णोपदेशत्वात् प्रयोगप्रसङ्गः । तथा तस्मात्तथेति निगमनमात्रस्य वा प्रयोगस्स्यादिति चेत्। इष्टापत्तिरिति केचित् । कथकसम्प्रदायपरम्परागतत्त्वं वक्तव्यं, पञ्चावयवत्वेन त्र्यवयवत्वेन द्व्यवयवत्वेन वा कथकसम्प्रदाय इत्यसाम्प्रदायिकं न प्रयोज्यं । अत एव पर्वते वह्निः धूमोऽत्र इत्यादिकमपि नाङ्गं सम्प्रदायाभावादित्यन्ये । बौद्धपरिकल्पित-मिति—उदाहरणोपनयावेवावयवौ तावतैव व्याप्ति—पक्षधर्मताप्रतिपादनादिति—बौद्धसिद्धान्तः । तदुक्तं तार्किकरक्षायां "सोपनीतिरुदाहृतिरिति" । यथा न्याय-चन्द्रिकायाञ्च—

"येन ह्यनुमानाभिव्यक्तिस्तन्मात्रस्यैव वक्तव्यत्वाद्व्याप्तिः पक्षधर्मता चानुमानोप-योगिन्यभिव्यज्यते—उदाहरणोपनयाभ्यामनुमानमिति" ।

पक्षे साध्य व्यवस्थापनाभावादिति—पक्षे साध्यप्रतिपादनं प्रधानं तदभावेन पूर्त्यभावात्तन्मात्रं नाङ्गमित्यर्थः। त्रीनुदाहरणान्तान्वेति—प्रतिज्ञा हेतूदाहरणानि त्रीणि उदाहरणोपनय निगमनानि चेत्यर्थः । नैयायिका हि—आकाङ्क्षाक्रमेणाभिधानं मन्यन्ते तन्मतमाह—ये त्विति । प्रतिज्ञामन्तरेणेति—साध्यप्रतिपत्त्यभावे हेतोरनन्वयादनाकां-क्षिताभिधानप्रसङ्गादिति भावः । हेतुसाध्ययोः—हेतुस्वरूपस्याऽप्रतिपत्तौ गमकत्वा-काङ्क्षाया विरहाद्व्याप्त्यभिधानमपेक्षितमिति भावः ।

उदाहरणेति—व्याप्तिप्रदर्शनाभावे केवलस्य पक्षधर्मताकाङ्क्षाविरहाद्विशिष्ट पक्षधर्मताप्रदर्शनञ्च व्याप्तिरूपविशेषणानभिधाने न शक्यमिति भावः ।

पक्षधर्मतामात्रमिति—इदं शब्दशक्तिमभिप्रेत्य तात्पर्यन्तु हेतुस्वरूपमात्रे । यथा निगमनस्य न साध्ये तात्पर्यम् अपि त्वबाधितत्वादौ । अत एव क्वचिद्धूमादित्येव हेतुप्रयोग इति ध्येयम् ।

ननु तदधिकमपि वा सम्मतेस्स्याद्यथेष्टमित्यनुपपन्नं । [षट्] सप्ताद्यवयवप्रसङ्गा-दित्यत आह—अयमर्थ इति—त्र्यवयवापेक्षयाऽधिकत्वं पञ्चावयवस्य एनयोर्यथेष्ट-

मित्यर्थः । मूलं यया वाक्यवृत्त्याऽनुमानं—परस्मै अर्थं प्रकाशयति—तस्मिन्ननुमान इत्यर्थः । अनुमानावयवत्वे सति पक्षतावच्छेदकसामानाधिकरण्येन साध्यतात्पर्यकं प्रतिज्ञा । तथाभूतं हेतुतात्पर्यकवाक्यं हेतुः । तथाभूतं व्याप्तितात्पर्यकमुदाहरणम् । तथाभूतं पक्षधर्मतातात्पर्यकमुपनयः । तथाभूतमबाधितत्वादितात्पर्यकं वाक्यं निगमनम् ।

केचित्तु अनुमानावयवत्वे सतीति न वक्तव्यम् । न च कथाबहिर्भूते वाक्येऽति-प्रसङ्गः । तस्यापि प्रतिज्ञाद्यवयवत्वे दोषाभावादिति वदन्ति ॥ ५७ ॥

---

कार्यैर्वा कारणैर्वा स्वगुणत उत वा किञ्चिदस्तीति सिद्धं
पक्षीकारादियोग्यं समयनियमितव्यक्तिभेदो न दोषः ।
सिद्धान्तास्पृष्टचित्तैरिति खलु पशुभिः पामरैर्वाऽनुमेयं
नो चेद्रोचेत कस्मै विषमितमनसे वादसंग्रामकेलिः ॥ ५८ ॥

**सर्वार्थः**—नन्वनुमानप्रयोग एव कर्तुं न शक्यते; परस्परविरुद्धाङ्गीकारप्रचुर-त्वाद्वादिनोः । तथा हि—शब्दो द्रव्यं नित्यमिति कौमारिलाः—गुणोऽनित्य इत्यन्ये, शब्द-ब्रह्मविवर्तो वृक्षादिशब्द इति शाब्दिकाः, पञ्चभूतगुण इति पौराणिकादयः, आकाशगुण इत्यौलूक्याः, आक्षपादाश्चैव । तथा च शब्दानित्यत्वाद्यनुमानं न संघटते; एकेन परिगृहीतस्य पक्षस्य इतरेणाग्रहणात् । तथा च परस्परविसंवादादन्यतरासिद्धिः । एवं चानुमानवार्तैव सोषुप्यत इतीमामाशङ्कां परिहरति—कार्यैरिति । अयमभिसन्धिः - पक्षस्य सामान्येन प्रसिद्धत्वमुपजीव्यं वादिप्रतिवादिनोः. न पुनरन्योन्यं विशेषप्रसिद्ध्य-भावेन सामान्यप्रसिद्धस्य पक्षस्य पक्षत्वहानिः । पक्षप्रसिद्धिश्च प्रत्यक्षेण चेत्; अविवाद-मेव । अनुमानेन चेत् कार्येण वा कारणेन वा तद्व्यतिरिक्तेनापि व्याप्तिवैकल्यरहितेन स्वगुणेन वा किंचिदस्तीति प्रसिद्धं पक्षीकारार्हम् । एवं सपक्षो विपक्षश्च प्रमाणप्रसिद्ध-त्वेन तत्तत्कोटिनिवेशार्हं इत्यादिशब्देनोच्यते पक्षीकारादियोग्यमिति । एतच्च हेत्वादिष्वपि समानम् । ततस्तत्तत्सिद्धान्तप्रसिद्धव्यक्तिभेदो न दोष इत्याह—समयेति । एतच्च न केवलं वादिनामेव, शास्त्रपरिज्ञानशून्यानामपि पश्वादीनां साधारणमित्याह—सिद्धान्तेति । इत्थमनङ्गीकारे वादिनां प्रवृत्तिरेव न स्यादित्याह—नो चेदिति । वादिनां वादप्रवृत्तिर्यथा न घटते तथा पामराणां प्रतिनियतप्रवृत्तिरपि न भवेदिति भावः । सर्वस्या अपि प्रवृत्तेरनुमानमूलत्वादनुमानस्य चोक्तप्रकारेणावान्तरविभागानादरेण वस्तुस्वरूपप्रामाणिकत्वमात्रावलम्बित्वादिति ॥ ५८ ॥

---

आनन्द०—ननु परार्थानुमाने प्रयोगाङ्गत्वादवयवानाञ्च—तदभावे तद-भावात्तद्विशेषचिन्ताऽनुपपन्नेत्याक्षेपसङ्गतिमाह—नन्वनुमानेति । गुणोनित्य इति—अनित्य इति छेदः । अन्य इति—गौतमीयाः ।

"अखण्डस्फोटाख्यं सकल भुवनोत्पत्तिलयकृत्,
स्वयं कूटस्थं सद्विविधमुपयाति प्रतिकलम्।
तदेतच्छब्दाख्यं भवति परमं ब्रह्म सकलं,
विवर्तो यस्यैते ह्यभिदधति शाब्दा इति विदुः" ॥

इति पक्षमाह—शब्दब्रह्मेति। पौराणिकादय इत्यादिशब्देन वेदान्तादे ग्रहणम्। औलूक्याः काणादा अन्यतरासिद्धिरिति—प्रसिद्धस्यैव पक्षत्वं वाच्यमिति प्रागभ्यधायि। तथा च स्वरूपस्य सिद्धत्वेऽपीतरव्यावृत्तत्वेनाऽसिद्धौ पक्षत्वासिद्धिवत्प्रकारस्योभय संप्रतिपत्त्यभावेऽप्यसिद्धिरेवेत्यर्थः।

ननु स्वरूपस्य सिद्धत्वेऽपि प्रकारस्याऽसिद्धत्वादसिद्धिस्तदवस्थेत्यत्राह—अयमभिसन्धिरिति—न पुनरिति पक्षतावच्छेदकस्य तद्विशेषणस्य चोभयप्रसिद्धौ तदवच्छिन्नस्य पक्षस्य प्रसिद्धिरप्रत्यूहैव नत्वनुपयुक्तविशेषणानां प्रसिद्धिरपेक्षितेति भावः। अविवादमेवेति—अर्थाऽभावेऽव्ययोभावः। विवादाभाव इत्यर्थः। न तु नञ्समासः पुंलिङ्गतापत्तेः। अन्ये तु प्रतिषेधार्थकस्याकारस्याऽव्ययोभावमाहुः।

एवं सपक्षो वा विपक्षो वा प्रमाणसिद्धत्वेनेति—विवक्षिताकारवत्तया प्रमाणसिद्धत्वमेव सपक्षादिष्वन्तर्भावे तन्त्रम्। न तु सर्वाकारवत्तयेत्यर्थः। हेत्वादिष्वपीति—पर्वतो वह्निमान् धूमादित्यादौ पारमार्थिकत्वव्यावहारिकत्व-सन्देहादिति भावः। व्यक्तिभेदः पृथग्रूपतेत्यर्थः। एतच्चेति—सामान्यप्रसिद्धिमात्रेणैव -पक्षत्वमित्येतदित्यर्थः। पश्वादीनामिति -यद्यपि पश्वादीनां स्वार्थानुमानमेव। तत्र विप्रतिपत्त्यभावादसिद्ध्यादिदोषो न शङ्क्यः तथापि विवक्षिताकारसिद्धिमात्रेणाऽनुमानप्रवृत्तिदर्शनान्नाधिकापेक्षा। अन्यथा तत्राप्यनुमानं न स्यादिति तात्पर्यम्। प्रतिनियतप्रवृत्त्यभावे हेतुस्सर्वस्या अपीति—वादिप्रतिवादि कथामूलक विशेषरूपावान्तर विभागस्य प्रसिद्ध्यादरेऽनुमानासम्भवात्प्रवृत्तिर्न स्यादिति भावः। मूलं विषमितमनसे—असिद्धिशङ्काकलङ्कितमानसाय कस्मै वा वादकेली रोचेत न कोऽपि वादे प्रवर्तेतेत्यर्थः। रुच्यर्थानां प्रीयमाण इति सम्प्रदानता ॥ ५८ ॥

---

आभासोद्धारवाक्ये स्वयमिह पठितेऽप्यक्षतान्यस्य शङ्का
स्याच्चेद्व्यर्थोपनीतिर्निगमनमपि ते तत्तदर्थे यदात्थ।
तस्मादुद्घाटितानां परिहृतिरुचिता जेतुमिच्छोर्विशेषा-
दुक्ते माने विमर्शो यदि भवति परं तत्र तर्कोऽपि वाच्यः ॥ ५९ ॥

आनन्द०—मूले अवयवनिरूपणानन्तरं कण्टकोद्धारविषयकश्लोको दृश्यते। सर्वार्थसिद्धौ न दृश्यते। तस्य टीकापतितता वा? यद्वा मूल एवायं श्लोकः प्रक्षिप्तो वेति न जानीमः। अस्यार्थस्तु पर्वतो वह्निमान् धूमवत्वात् यो धूमवान् सोऽग्निमान्

यथा महानसः तथा चायं तस्मात्तथेति पञ्चावयवप्रयोगानन्तरं—नायमत्राभासः तल्लक्षणरहितत्वादिति कण्टकोद्धारवाक्यमाक्षपादाः प्रयुञ्जते। तत्र किमिदं वाक्यं प्रयोजनरहितम् ? प्रयोजनवद्वा ? नाद्यः। प्रयोजनरहितस्य प्रयोगायोगात् न द्वितीयः। तत्रापि किमाभासशङ्कानिरासः प्रयोजनम् ? उत तदन्यत् ? न द्वितीयः तथाभूतस्याऽदर्शनात्। नाद्य इत्याह—**आभासोद्धार इति**। शतवारं तत्प्रयोगेऽपि वादिवाक्यस्य तन्निरासकत्वायोगादित्यर्थः। यदि वाक्यादेव शङ्कानिवृत्तिः तदा प्रतिज्ञाद्यवयवत्रयादेवेष्टसिद्धेरसिद्धिबाधादिनिरासकयोरुपनयनिगमनयोः प्रयोगो भवद्भिः क्रियमाणो व्यर्थःस्यात्। अपि शब्देन प्रतिज्ञावाक्यादेव साध्यसिद्धेर्हेत्वादि वैयर्थ्यं सूच्यते। किञ्च किमिदं वाक्यं प्रतिवादिशङ्कायाः प्राक्प्रयोज्यम् ? उतानन्तरम् ? नाद्यइत्याह—**तस्मादिति**। उद्घाटिता शङ्का परिहर्तुमुचिता नानुद्घाटिता अनाकाङ्क्षितत्वात् अन्यथाऽनाकाङ्क्षिताभिधानदोषस्य जल्पकथायामप्रसङ्गादिति भावः। द्वितीयआह—**विशेषादिति** उक्तहेतौ विशेषरूपेण शङ्कायां तर्काप्रयोगे निवृत्यसम्भवात्तर्कोऽपि प्रयोक्तव्य इत्यावश्यकतर्कादेव तन्निवृत्तेरुक्तवाक्यं व्यर्थमिति भावः। यद्वा विशेषादित्येतत् परिहृतिरुचितेत्यत्र संबद्धयते। विशेषं प्राप्येति ल्यब्लोपे पञ्चमी। तथा च विशेषेणोचितेत्यर्थः। अनाकाङ्क्षिताभिधानदोषस्य विजिगीषोरवश्यं परिहरणीयत्वादिति भावः॥ ५९॥

---

**तर्को व्याप्याभ्युपेतावनभिमतिपदव्यापकस्य प्रसक्ति-**
**र्मानप्रत्यूहघातिद्विविषय उदितः पञ्चधाऽऽत्माश्रयादिः।**
**विश्रान्तिर्वैपरीत्ये प्रतिहतिविरहोऽनिष्टतोऽनानुकूल्यं**
**व्याप्तिश्चास्याङ्गमेनं कतिचिदनुमितेस्तादृशं भेदमाहुः॥ ६०॥**

**सर्वार्थः**—एवमनुमानमुक्त्वा तदङ्गभूततर्कतत्कर्तव्यतदवान्तरभेदतदङ्गान्याह—**तर्क इति**। अयमत्र श्लोकार्थः—व्याप्याङ्गीकारेऽनिष्टव्यापकप्रसञ्जनं तर्क इति तर्कलक्षणम्। तत्फलमाह—**मानप्रत्यूहघातीति**। विपक्षजिज्ञासाविच्छेदक इत्यर्थः। **द्विविषय उदित इति** तर्कावान्तरभेदकथनम्; प्रामाणिकपरित्यागाप्रामाणिकस्वीकाररूपविषयद्वयोपेत इत्यर्थः। स चात्माश्रयान्योन्याश्रयचक्रकानवस्थाकेवलानिष्टप्रसङ्गभेदेन पञ्चविधः। प्रतिबन्दीति तर्कान्तरमाचक्षते केचित्; तच्च केवलानिष्टप्रसङ्गावान्तरभेद इत्यपरे इत्याह—**पञ्चधेति**। वैपरीत्ये विश्रान्तिः—विपर्यये पर्यवसानम्। प्रतिहतिविरहः—प्रतितर्कपराहत्यभावः। अनिष्टता—प्रसञ्जनीयस्यानिष्टत्वम्। अनानुकूल्यम्—विरुद्धहेत्वाभासवत् परपक्षसाधकत्वाभावः। स्वपक्षपरपक्षयोर्द्वयोरपि साधारणमिष्टं परस्य, परपक्षस्यैवासाधारणं परस्यानुकूलं, तदुभयरूपविधुरमित्यर्थः। यथाऽनैकान्तिकः स्वपरपक्षसाधारणः, यथा च विरुद्धः परपक्षस्यैवासाधारणः, तदुभय-

रूपरहितस्तर्क इत्यर्थः । व्याप्तिः पूर्वोक्ता । एतत्परमङ्गं तर्कस्य । इमं च तर्कं केचिदनुमानभेदमाहुरित्याह —एनमिति । नेदं निरात्मकं जीवच्छरीरं प्राणादिमत्त्वप्रसङ्गादित्यनुमानभेदमाचक्षते केचिन्न्यायवादिन इति भावः ।। ६० ।।

---

आनन्द० —प्रसङ्गसङ्गतिमाह—एवमिति । केचित्तु अवसरसङ्गतिरित्याहुः ।

ननु व्याप्याङ्गीकारेण व्यापकप्रसक्तिरिति लक्षणसम्भवेऽनभिमतिपदं व्यर्थं । मानप्रत्यूहघातीत्यादिकञ्च प्रत्येकलक्षणञ्चेदतिप्रसक्तिरित्याशङ्कानिवृत्तय आह— अयमत्र श्लोकार्थ इति । अनुमानेऽतिव्याप्तिशङ्कायामाह—अनिष्टेति ।

ननु लाघवगौरवादितर्कव्याप्तितयाऽऽत्माश्रयाद्यव्याप्तिश्चेति चेन्न । एवञ्चेदात्माश्रयस्स्यादन्योन्याश्रयस्स्याच्चक्रकं स्यात् एवञ्चेद्गौरवं एवञ्चेल्लाघवमित्येवं शब्दार्थरूप व्याप्याङ्गीकारेणैव व्यापकगौरवाद्यापादनान्नाव्याप्तिरित्याहुः ।

नन्वेवमपि प्रतिपक्षे सारसादिमत्त्वेन वह्न्याद्यभावानुमानेऽतिव्याप्तिः । यदि विपर्यये पर्यवसानमपि तद्विशेषणं तदाऽनभिमतपदं व्यर्थमित्यादिदोषस्स्यादिति चेन्न । व्याप्याङ्गीकारेत्यत्रापि व्याप्यांशेऽनिष्टत्वस्य विशेषणत्वम् । प्रतिपक्षे च व्याप्यत्वेनाभिमतं नानिष्टं । उभयसम्प्रतिपत्तेः । अन्यथा प्रतिपक्षत्वायोगात् । विस्तरस्तु मदीयसिद्धान्तनिर्णये द्रष्टव्यः । विपक्षजिज्ञासा साध्याभावजिज्ञासा । तर्कावान्तरभेदकथनमिति । तर्को द्विविधः । प्रामाणिकपरित्यागविषयकः एकः । तथा यदि पर्वतो वह्न्यभाववान्स्यात्तदा धूमो न स्यादिति प्रामाणिकस्य धूमस्य परित्यागः । अपरस्त्वप्रामाणिकविषयकः । यथेश्वरस्य दुःखादिमत्त्वे कर्मवश्यत्वं स्यादित्यप्रामाणिककर्मवश्यकविषयक इत्यर्थः । स च—तर्कश्चेत्यर्थः । प्रतिबन्दीति —उपलक्षणमिदं गौरवादीनां । केवलानिष्टप्रसङ्गेति वायोस्स्पार्शनत्वाभावे घटादीनामपि स्पार्शनत्वं न स्यात् । तथा चाक्षुषत्वमपि न स्यात् स्पर्शरूपमात्र ग्रहणे तेनानुमानसम्भवादिति हि प्रतिबन्दी । अत्रेन्द्रिययोग्यत्वाभाव आरोपितः । तेन तज्जातीये तदयोग्यं व्यापकमापाद्यते ।

न च समानाधिकरण एवारोपनियमः । उपरि सविता भूमेरालोकवत्त्वादित्यादौ आपाद्याऽऽपदकभावदर्शनादिति भावः । अङ्गान्तराण्यप्याह—विपर्यय इति—अनिष्टाननुकूलत्वयोः प्रतियोगिमुखेन भेदमाह —स्वपक्षेति—अनैकान्तिकसाधनमिति शेषः । तदुभयरूपेति तयोरनैकान्तिकविरुद्धयोरुभयोः रूपेत्यर्थः । एतदिति—विधेयानुसारिलिङ्गम् । परम्—उत्कृष्टम् । अङ्गम्—

"व्याप्तिस्तर्काप्रतिहति रवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्" ।। इति ।

व्याप्तिमूलकत्वादितरेषामिति भावः । अनुमानप्रकारमेवोपपादयति—नेदं निरात्मकमित्यादि । मूलं एनं—तत् । अनुमितेः अनुमानस्य । तादृशं—प्रसङ्गात्मकत्वरूपभेदमित्यर्थः ॥ ६० ॥

---

यस्सर्वं नाभ्युपेयात् स्वपरमतविदा केन किं तस्य साध्यं
प्रश्नोऽसावुत्तरं नः कथमनधिकृते कल्पनीयाः कथाः स्युः ।
मध्यस्थोऽप्येतदेवं यदि न न मनुते योजयेन्नात्र वादं
नो चेन्माध्यस्थ्यहानिः परमनधिकृतिस्त[त्र]स्य शिष्याय वाच्या ॥६१॥

**सर्वार्थः**—इत्थं तर्कस्वरूपमुक्त्वा दुस्तर्कावलम्बनेन सर्वापलापवादिनः कथानधिकारादिकमाह—**यस्सर्वमिति** । अत्र कश्चित् पृच्छति—यस्सर्वमपि दूषणभूषणवादिप्रतिवादिस्वपक्षपरपक्षादिविभागं नाङ्गीकरोति स्वपरमतविदा विदुषा केन किं तस्य साध्यमिति । नायं तावत्प्रतिक्षेपः; हेत्वाद्यनुपादानात् । उपादाने वा यस्सर्वं नाभ्युपैतीति वचनस्य नायं विषयः; हेत्वादेरेवाभ्युपगमात् । अतश्शिष्यप्रश्नोऽयमित्यवशिष्यते । तदिदमाह—**प्रश्नोऽसाविति** । तत्रोत्तरमाह—**उत्तरं न इति** । कथमुत्तरमित्यत्राह—**कथमनधिकृत इति** । नहि बालमूकोद्भ्रान्तादिभिर्वादं कुर्वते वादिनः । न च तदकरणात् सर्ववादिनां विदुषामतिशयस्य काचिद्धानिः । एवमनधिकृतैस्सर्वानङ्गीकारवादिभिरव्यवहारे न कश्चिद्विपश्चितां दोष इति भावः । यदि भवतैवमुच्यते तत्ते न गौरवाय, मध्यस्थवचनमेव सर्वनियामकमिति वदतामुत्तरमाह—**मध्यस्थ इति** । मध्यस्थोऽप्युद्भ्रान्तवदयथायथवादिनां वादाधिकारो नास्तीति यदि न न मनुते—मनुत इत्यर्थः । इत्यर्थः । द्वौ नञौ प्रकृतमर्थं सूचयत इति । यद्येवं जानाति मध्यस्थः वादमेव तेन न प्रवर्तयेत्, न ह्युद्भ्रान्तादिभिर्वादं मध्यस्थाः प्रवर्तयन्ति । यदि पक्षपातात् प्रवर्तयति तर्हि मध्यस्थ एव न स्यादित्याह—**नो चेदिति** । ननु सर्वानङ्गीकारवादिनो वादानधिकार इति यदि तं प्रति वदसि, तस्य वादाधिकारं स्वयमेवानुमन्यसे, तस्मिन्नेव वादेऽधिकारात् । यद्यन्यं प्रति अन्यस्य प्रतिवादित्वाभावात् कथं व्याघातादिदोषोऽभिधीयते ? न हि दोषाभिधानमन्तरेण वादाधिकारनिराकरणं वक्तुं शक्यते । अत्रोत्तरं-परमिति । उद्भ्रान्तवत् सर्वानिर्वचनीयत्ववादिनो दुर्वादिनो वादानधिकारिण इति शिष्यादीनामुपदिश्यते ॥ ६१ ॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमाह—**इत्थं तर्कस्वरूपमिति** । केचित्तु सर्वानङ्गीकारे तर्कस्याप्यभावात्तन्मूल व्याप्तिग्रहमूलकानुमानमेव नास्ति । तथा च तद्विचारो व्यर्थ-इत्यान्तरितपूर्वाक्षेपिको सङ्गतिरित्याहुः । कथानधिकारादिकमित्यादिशब्देन स्वक्रिया व्याघातादिग्रहः हेत्वाद्यनुपादानात्—हेतूपादानं विना निराकर्तुमशक्यत्वादित्यर्थः ।

उपादान इति—सर्वशून्यवादिनिराकरणाय हेतूपादने तस्य तेनानङ्गीकारात्कथं तेन तन्निराकरणमिति शिष्यप्रश्नमात्रमित्यर्थः । यदि भवतैवमुच्यत-इति। मध्यस्थो यदि तेन वादः कर्तव्य इति वदेत्तम्प्रति स नाधिकारी तेन न करवाणीति ब्रूयात्तदाऽऽत्मनोऽशक्तिख्यापनं स्यादित्यर्थः। नञ् द्वयप्रयोगफलमाह—यद्येवमिति—यदिरेवार्थः । मध्यस्थोऽवश्यं जानातीति भावः । स्ववचनव्याघातं शङ्कते—नन्विति। ननु दोषाभिधानमेव मास्त्वित्यत्राह—नहि दोषेति । शिष्यादीनामुपदिश्यत इति।

ननु तन्निराकरणमेवास्तु हेतूपन्यासश्च क्रियतां । न च तेषां कथाधिकार-प्रसक्तिः, अनभ्युपगमादिवचनविरोधो वाऽपशूद्राधिकरणविचारवदन्यं प्रत्येव संभवात्। न हि यो विचारविषयस्स एव प्रतिवादीति नियमः । तथा च व्याघाताद्युपन्यासश्च कर्तुं शक्यत एवेति कथं शिष्यान्प्रत्युपदेशरूपत्वमिति चेत् । अत्रायमभिसन्धिः। यद्यन्यं प्रत्येव प्रवृत्तिस्तदोपदेशरूपत्वं सिद्धम् । तथा हि यदि सर्वशून्यत्वादिकथां प्रविशेत् किं वदिष्यति कथासाधनीभूतहेत्वभावात् । यदि हेत्वादि गृह्णीयात्तदा सर्वशून्यवाद व्याघातस्स्यादिति स्वयमेव कथासङ्ग्रामाद्विरमेदिति कथाधिकारसमर्थनपूर्वपक्षोत्थित्य-भावादुपदेशमात्रमिति ॥ ६१ ॥

---

निर्दिष्टा व्युत्थितोक्तेर्विततिरिह कथा सा त्रिधा तत्र वादः
कर्तव्यो मानतर्कैरभिमतिनियतैस्तत्त्वसिद्ध्यै विरागैः।
जल्पाख्याऽन्या जयार्था भवति कथकयोस्साधनाक्षेपवत्त्वे
सैव प्रोक्ता वितण्डा त्यजति परमते साधनं तां द्विधैके ॥ ६२ ॥

सर्वार्थः—अथ वादिप्रतिवादिनोर्विवादस्थानभूतां कथां तद्विशेषानप्याह—निर्दिष्टेति। परस्परविरुद्धवादिनोर्व्यवहारः कथा। सा त्रिधा, वादजल्पवितण्डाभेदात्। वादे प्रमाणतर्कौ साधनम्। प्रामाणिकत्वाभिमानपरिगृहीतौ प्रमाणतर्कावित्यर्थः। प्रयोजनं पुनस्तत्त्वसिद्धिः, तत्त्वज्ञानम्। अधिकारी वीतरागः। वादाज्जल्पस्य विशेष-माह—जल्पेति। जयार्थी जल्पाधिकारी; अत एव न वीतरागः। उभयोरपि वादिनो-स्साधनवत्त्वे जल्प; अन्यतरस्य स्वपक्षसाधनवत्त्वे परस्य दूषणमात्रशरणत्वे वितण्डा। तत्रापि वैतण्डिकस्य दूषणसमर्थनं कर्तव्यम्। अन्यथा वैतण्डिकव्यवहारः प्रलापमात्रमेव स्यात्। एतमेव विभागमाह—सैवेति। जल्परूपा कथैव वितण्डा, अपि तु परमते साधनं त्यजतोत्यर्थः। तां द्विधैक इति। वितण्डायामपि द्वैविध्यमाहुरेके—वीतराग-वितण्डा विजिगीषुवितण्डेति । अयं भावः—स्वपक्षसाधनं परपक्षदूषणं साधनदूषण-समर्थनं शब्ददोषवर्जनमिति पञ्चाङ्गो वादः। एकस्मिन् वादे वादिप्रतिवादिनावधि-कारिणौ। तत्र वीतरागकर्तृकवादद्वयसमुच्चयेन वीतरागकथारूपो वादः प्रवर्तते। एवं

विजिगीषुकर्तृकवादद्वयसमुच्चयेन विजिगीषुकथारूपो जल्पः । जल्पार्धेनैकेनैव वादेन यथा विजिगीषुवितण्डा, तथा वादार्धेनैकेनैव वादेन वीतरागवितण्डेति । अत्र वितण्डाशब्दोऽन्यतरसाधनवत्त्वसाधर्म्यादिति मन्तव्यम् । दृश्यते चेयं वीतरागवितण्डा । आदौ तावदाचार्यो वदति, शिष्यस्सोपपत्तिकमेवानुयुङ्क्ते, आचार्योऽपि सोपपत्तिकमेव परिहरन् शिष्यचोद्यं विनिवर्तयति ॥ ६२ ॥

---

**आनन्द०**—अनुमानप्रयोगस्य कथाधिकरणत्वादवसरसङ्गत्या कथानिरूपणमित्याह **अथेति । परस्परेति**—युक्तिभिरुक्तिप्रत्युक्तिपरम्परा कथेत्यर्थः ।

ननु त्वं चोरस्त्वमपि चोरः इदं देहि न ददामीत्यादिवचनानां कथात्वं स्यादिति तत्राह **—युक्तिभिरिति** प्रतिज्ञाद्यवयवपुरस्सरमित्यर्थः । ननु केवलप्रत्यक्षशब्दाभ्यां व्यवहारस्य कथात्वं न स्यात्तत्राऽनुमानाप्रवेशेन प्रतिज्ञाद्यभावादिति चेन्न । तथा कथाप्रवृत्त्यभावादिति भावः । तत्त्वज्ञानफलकत्वे सति कथात्वं वादत्वमिति प्रयोजनमुखेन लक्षणमाह**—प्रयोजनं पुनरिति**—वीतरागकथा वाद इति लक्षणान्तराभिप्रायेणाह**—अधिकारीति** । वादलक्षणस्य जल्पे नातिप्रसङ्ग इति वदन्ति । **वादाज्जल्पस्येति**—उभयसाधनवति विजयफलककथा जल्प इति जल्पलक्षणमित्यर्थः । **उभयोरपीति**—वादेऽतिव्याप्तिनिरासाय विजयफलकेति । वितण्डायामतिव्याप्तिनिराकरणाय उभयेति ।

केचित्तु उभयसाधनवत्वं नाम वादिनोः स्वपक्षं साधयामीति प्रतिज्ञापूर्वकत्वं वादवितण्डयोर्नास्तीति तन्मात्रमेव लक्षणमित्याहुः ।

स्वपक्षस्थापनाहीनत्वे सति परपक्षदूषणकथा वितण्डा तदाह**—अन्यतरस्येति ।** ननु वीतरागत्वं वितण्डाया अयुक्तं । जल्प एव परपक्षसाधनवैगुण्याद्वितण्डेत्यभिधानादित्यत आह**—अयं भाव इति—शब्ददोषवर्जनं**—अनन्विताद्यभिधानं न कार्यमित्यर्थः । अपशब्दवर्जनमित्यन्ये । अत्र वादशब्दः उक्तिप्रत्युक्तिपरम्परावचनः न तु कथाविशेषवचनः । **वादार्धेनेति**—अपरपक्षस्थापनाभाव युक्तद्वयाभावादिति ।

ननु वितण्डाद्वैविध्ये सत्येकत्वेनोक्तिः कथमित्यत्राह**—अत्रेति**—विजयफलकत्वं वितण्डाया इति भावः । वीतरागवितण्डामुदाहरति—**दृश्यते चेयमित्यादिना** मूलं व्युत्थितोक्तेर्विततिः—विरुद्धयोर्वादिनोरुक्तिपरम्परा ॥ ६२ ॥

कर्तव्यत्वेन यत्तु प्रमितिपरवशैः कल्पितं स्वेच्छया वा
यच्चाकर्तव्यमेवं परिभवनपदं तत्प्रहाणग्रहौ स्तः ।
स्वाचारद्यूतसंयत्प्रभृतिषु च तथा स्वीकृतेयं व्यवस्था
नैनामीषद्वितण्डाऽप्यलमतिपतितुं साधनांशोज्झिताऽपि ॥ ६३ ॥

**सर्वार्थः**—वितण्डायामपि वादिप्रतिवादिव्यवस्थानुपालनं कर्तव्यमित्याह—**कर्तव्यत्वेनेति**। कर्तव्यत्वेन प्रमितिपरवशैः कल्पितं स्वपक्षसाधनादि। अकर्तव्यत्वेन कल्पितं छलजातिनिग्रहस्थानादि। स्वेच्छया कल्पितं निरोष्ठ्यव्यवहारः, अदन्त्यव्यवहारः, उक्तशब्दस्य पुनरनभिधानं, लुङ्प्रयोगः, चङ्प्रयोगः, यङ्प्रयोगः यक्प्रयोग इत्यादिकं शब्दविषयम्। अनुमानेनैव साधनमागमेनैव साधनं वक्रानुमानेनैव साधनं वैदिकागमेनैव साधनमित्यादिकं प्रमाणविषयम्। एवमन्यदपि वादिप्रतिवादिप्रौढिप्रकाशनार्थं कल्पनं द्रष्टव्यम्। एतत्परित्यागे निग्रह इत्याह—**परिभवनपदमिति**। नियमातिलङ्घने परिभवनं स्वकुलाचारद्यूतादिष्वपि दृष्टमित्याह—**स्वाचारेति**। सर्वा चेयं व्यवस्था वादजल्पयोरेव, वैतण्डिकस्य न काचिद्व्यवस्थेत्याशङ्क्य परिहरति—**साधनांशोज्झिताऽपीति**। वितण्डायां स्वपक्षसाधनाभावेऽपि दूषणसमर्थनसद्भावात् सर्वाऽपि व्यवस्था वैतण्डिकेनाप्यङ्गीकार्येत्यर्थः ६३ ॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमाह—**वितण्डायामपीति**। **स्वपक्षसाधनादीत्यादि** शब्देन परपक्षदूषणादीति [आदिशब्देन हेत्वाभासादि] **निग्रहस्थानादीत्यादिशब्देन** हेत्वाभासादि। **इत्यादिक** मित्यनेन यङ्लुङ्प्रयोगादि। **वक्रानुमानेन वैदिकागमेनैव साधनमित्यादिक** मित्यनेन पुराणवचनेन स्मृतिवचनेनेत्यादिकं ग्राह्यम्। **एवमन्यदपीति**—पद्यरूपेणैकव्याप्तिप्रदर्शनेनैवान्वयमात्रप्रदर्शनेनैवेत्यादि द्रष्टव्यमित्यर्थः। **सर्वाऽपि व्यवस्थेति**—अन्यथा दूषणस्याऽदोषत्वप्रसङ्गेन वैतण्डिकत्वमेव ह्येयेतेत्यर्थः। **मूलं प्रमितिपरवशैः**—प्रामाणिकैरित्यर्थः। **तत्प्रहाणग्रहौ**—अकर्तव्य कर्तव्ययोर्ग्रहणपरित्यागौ। प्रहाणग्रहावित्यल्पाच् तरस्यापि नासिकास्तनयोरितिवत्परनिपातः। **एनां** व्यवस्थामित्यर्थः ॥ ६३ ॥

---

सद्दोषोक्त्या कथायां परपरिभवनं स्वोक्तहान्यादिनाम्ना
तत्त्वाबोधस्य लिङ्गं विविधमकथयन्निग्रहस्थानमाप्ताः ।
तत्राचोद्यानुयोगं द्विविधमशकनासिद्धिभेदादवोचन्
पूर्वो जातिः परस्तु च्छलमनृतवचः स्यादकालग्रहश्च ॥ ६४ ॥

**सर्वार्थ**—इत्थं वैतण्डिकस्यापि दोषादोषव्यवस्थानुपालनमुक्त्वा निग्रहस्थानलक्षणतद्विभागादिकं दर्शयति—**सद्दोषेति**। वादिप्रतिवादिभ्यां दोषत्वेनाङ्गीकृतानामभिधानेन कथायां परेषां परिभवनं—निग्रहो भवति; प्रतिज्ञाहान्यादिनाम्ना वक्तव्य-

मित्याह—**स्वोक्तेति**। निग्रहस्थानलक्षणमाह—**तत्त्वेति**। अप्रतिपत्तिर्विप्रतिपत्तिश्च निग्रहस्थानमिति निग्रहस्थानलक्षणसूत्रम्। तस्याभिप्रायस्तत्त्वाप्रतिपत्तिसूचकं निग्रहस्थानमिति, अप्रतिपत्तिविप्रतिपत्त्योर्द्वयोरपि तत्त्वाप्रतिपत्तिसूचकत्वादिति। वादेऽपि कथावसानहेतुत्वेनात्यन्तानुपादेयस्य निरनुयोज्यानुयोगस्य विभागान् दर्शयति—**तत्रेति**। जातिः, छलं, प्रतिज्ञाहान्याद्याभासः, अप्राप्तकाले ग्रहणमिति चतुर्विधो निरनुयोज्यानुयोगः। स च जातिरजातिरिति द्विविधः। अजातिरपि छलमछलमिति। अछलमपि हान्याद्याभासस्तदन्यच्चेति। तत्र छलजात्योर्वैषम्यमाह—**अचोद्यानुयोगं द्विविधमशक्यनासिद्धिभेदादवोचन्निति**। सिद्धमपि दूषणासमर्थं जातिः; दूषणसमर्थमप्यसिद्धं छलमिति विभागः। तदिदमाह—**पूर्वो जातिः परस्तु च्छलमिति**। अनृतवचः—अविद्यमानस्य वचनं हान्याद्याभासवचनम्। अकालग्रहः—अप्राप्तकालेग्रहणम्॥ ६४॥

---

आनन्द०—प्रसङ्ग एव सङ्गतिरित्याह—**इत्थमिति**। निग्रहस्थानलक्षणं—वक्तुं निग्रहलक्षणमाह—**वादिप्रतिवादिभ्यामिति**—कथायां तत्त्वज्ञानरूपं परिभवनं निग्रह इति लक्षणम्। अन्यत्स्वरूपकथनमिति द्रष्टव्यम्। **निग्रहस्थानेति**—यत्त्वावबोधो-यस्मिन्स्थानेऽवगम्यते तन्निग्रहस्थानमित्यन्वर्थसंज्ञेति भावः। अक्षपादसूत्रेण विभागपूर्वकं लक्षणं दर्शयति—**तत्त्वेति** अननुगतमेव भवतीति कथं सामान्यलक्षणमित्यत्राह—**तस्याभिप्राय इति**। अप्रतिपत्तिर्हि ज्ञानाभावः। विप्रति पत्तिर्हि विपरीतज्ञानम्।

ननु "न्यायपरिशुद्धौ कर्तव्याकरणमकृत्यकरणमिति"—प्रकारान्तरेण विभागः तथा—"त्रेधा च कश्चित्संग्रहः वक्तव्यानुक्तिरुक्तिदूषणमुक्तार्थदूषणञ्चेति" त्रेधाऽपि विभागमुक्त्वा तदवान्तभेदमप्याह—"उक्तहानिरुक्तविशेषणमुक्तापलापउक्तविरोधोऽपसिद्धान्तोऽवाचकमनन्वितं पुनरुक्तमप्राप्तकालमविज्ञातार्थमर्थान्तरं न्यूनमधिकमननुभाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञापर्यनुयोज्योपेक्षणन्निरनुयोज्यानुयोगः प्रमाणाभासाश्च बहुविधाः प्रत्येकं निग्रहस्थानानीति" विभाग उक्तः। तत्र पुनरुक्त्यननुभाषणादेस्तत्त्वप्रतिपत्तावपि सम्भवेनाऽप्रतिपत्तिलिङ्गत्वाभावात्तत्त्वाप्रतिपत्तिलक्षणन्निग्रहस्थानमिति लक्षणमव्याप्तमिति चेत्। अत्राहुः। कथाङ्गं द्विविधम्-साध्यं साधनञ्चेति। साध्यं तत्र शब्दनित्यत्वादि। साधनञ्च व्याप्त्यादिकथापरिकराः। तत्र व्याप्त्यादिवत्पुनरुक्त्यभावाऽनुभाषणादेरपि स्वतस्समयबन्धेन वा कथाङ्गत्वात्तदज्ञानमपि तत्त्वाज्ञानमेवेति नाव्याप्तिरिति। **वादेऽपीति**—निरनुयोज्यानुयोगस्य दोषत्वेन वीतरागकथाया अपि स्वपरिसमाप्तिहेतुरित्यत्यन्तपरिभवनहेतुरिति तद्ज्ञानं विशिष्यावश्यकमिति भावः।

प्रतिज्ञाहान्यादीत्यादिशब्देन प्रतिज्ञान्तरस्वीकारादिवचनं गृह्यते। चतुर्विधत्वे मूले द्वैविध्योक्तिरयुक्तेति मूलं योजयति—**स चेति**—[अस्य चेति] द्विविधमिति

पदन्त्रिरावृत्त्या योज्यमित्यर्थः । [ हान्याद्याभास इति ] हान्याद्याभासवचनमिति प्रतिज्ञाहान्याद्यभावेऽपि प्रतिज्ञाहान्याद्युद्भावनवचनमित्यर्थः । अकालग्रहः—अप्राप्तकालतापादनमित्यर्थः । अत्र कालग्रहणस्य पुरुषदोषतया जल्पादिविषयत्वं बोध्यम् । मूलमचोद्यः—निरनुयोज्यः । अशकनासिद्धिभेदात्—सिद्धत्वेऽपि दूषणासमर्थत्वेन दूषणसमर्थत्वेऽप्यसिद्धयेत्यर्थः ॥ ६४ ॥

---

जातिः स्वव्याहता वागुपधिनियतिभिर्भिद्यतेऽनेकधा सा
युक्तत्यागस्त्वयुक्तग्रहणमविषये वृत्तिरप्यत्र दोषाः ।
स्वव्याघातोऽनुवृत्तश्छलमपि वचसां कल्पितार्थे निषेध,
स्तत्तद्वृत्तिप्रभेदादिदमपि विविधं विस्तरेणालमत्र ॥ ६५ ॥

सर्वार्थः—अथ छलजात्योर्लक्षणविभागमाह—जातिरिति । स्वव्याघातकमुत्तरं दूषणाशक्तमुत्तरं जातिरिति मतभेदेन पूर्वमुक्तम् । सा जातिरवान्तरलक्षणनियतिभिः प्रतिधर्मसमादिभेदेनाऽनेकधा भिद्यत इति दर्शयति—उपधीति । जातिषु विशेषदोषान् कथयति—युक्तेति । युक्ताङ्गत्यागोऽयुक्ताङ्गस्वीकारोऽविषयवृत्तित्वं चेति हि जातिदोषविशेषाः । सर्वजात्यनुवृत्तस्तु दोषः स्वव्याघातः । छललक्षणमाह—छलमपीति कल्पितदूष्यदूषणाभिधानं छलमित्यर्थः । इदं च छलं तत्तच्छब्दप्रवृत्तिभेदात् मुख्योपपचारतात्पर्यवृत्तिभेदेन त्रिविधम् । अस्यार्थस्यानेकेषु ग्रन्देषु प्रसिद्धत्वात्किमत्र विस्तरेणेति विस्तरानादरः ॥ ६५ ॥

---

आनन्द०—पूर्वसङ्गत्याऽऽह—अथ छल-जात्योरिति । अशकनादि पूर्वं जातिलक्षणमुक्तम् । इदानीमन्यदुच्यत इत्यत्राह—दूषणेति । न्यायपरिशुद्धौ सा द्विविधा—प्रतिप्रमाणसमा प्रतितर्क समा चेति । अनभ्युपेतमर्यादेन प्रत्यवस्थानं प्रतिप्रमाण—समा । तादृशेन तर्केणानिष्टापादनं प्रतितर्कसमा । सा च—पुनर्द्विविधा सामान्यतो विशेषतश्चेति । यथा त्वत्पक्षवदस्मत्पक्षेऽपि किञ्चित्प्रमाणं सम्भवेदित्यत्र त्वत्पक्षवदिति सामान्यतः । विशेषतो यथा—यत्किञ्चित्प्रमाणाभासमुत्क्षिप्य यथा त्वदुक्तं विवक्षित—साधकं तथेदमपि, न चेत्त्वदुक्तमप्यसाधकं स्यादित्येतन्मुखभेदा एवं प्रतिधर्मसमादय—इत्युक्त्वा, प्रज्ञापरित्राणे चतुर्दशविधत्वमुक्तमित्युक्त्वा, तथा वरदविष्णुमिश्रैर्न्यायमतोपपत्तिभिरुक्तञ्चतुर्विंशतिविधत्वमित्युक्त्वा, तदुक्तीनामुपलक्षणार्थत्वमुक्त्वा, तदानन्त्यं प्रतिपाद्य तदवान्तरभेदलक्षणोदाहरणानि विस्तरेण प्रतिपादितानीतीह सङ्ग्रहेण तद्भेदान्सूचयति—सा जातिरिति ।

शब्दोऽनित्य इति वादिनोक्ते तद्विरुद्धनित्यत्वप्रसञ्जनेन प्रत्यवस्थानं तन्त्रसम—इत्यर्थः । छललक्षणे आदिशब्देनोत्कर्षापकर्षसमोपलब्ध्यनुपलब्धिसमादृष्टान्तसमोप-

पत्तिसमादयो ग्राह्याः। क्वचिद्युक्ताङ्गत्यागः क्वचिदयुक्ताङ्गस्वीकारः क्वचिदविषयवृत्तित्वं दोषः। छललक्षणमिति अत्रापि दूषणशक्तत्वे सत्यसिद्धत्वं च्छलमिति मतभेदेन प्रागुक्तं द्रष्टव्यं । असिद्ध्यादि, सङ्कीर्णादि, सङ्कीर्णप्रतिपक्षादिव्यावृत्यर्थं विशेषणं विवक्षणीयम् । तद्भेदस्तदवान्तरलक्षणोदाहरणदूषणादयो न्यायपरिशुद्धौ प्रपञ्चिताः॥ ६५॥

---

यस्मिन्मानप्रवृत्तिस्तदिदमशरणैरभ्युपेत्यं हि सर्वै-
र्व्याघातो यत्र दृष्टस्तदपि न शरणं साधने दूषणे वा।
इत्थं सिद्धे कथानां रहसि कथकयोस्सावधानत्वभूम्ने
षट्पक्ष्यन्ता सदुक्तिः परिषदनुमता रुद्धरोधावकाशा॥ ६६॥

सर्वार्थः—उक्तदोषेष्वन्यतमस्यापि संभवे द्वितीयादिकक्ष्यायामेव वादविच्छेदः स्यात्, किमनया षट्पक्षीकल्पनयेत्याशङ्कमानस्योत्तरं वदति—यस्मिन्नि॥ अयमर्थः—यत्प्रमाणेन प्रतीयते तत्सर्वैरपि वादिभिरङ्गीकार्यम्। यत्र पुनस्साधने दूषणे वा व्याघातो दृश्यते तदपि न शरणमेव—स्वपक्षसाधने परपक्षदूषणे वाऽनुपाय इत्यर्थः। इत्थं कथानां तिसृणामपि सिद्धे रहस्ये यद्यपि द्वितीयादिकक्ष्यायामेव दूषणं मध्यस्थैरवलोक्यते; तथाऽपि कथकयोस्सावधानत्वसिद्ध्यर्थं षट्पक्षीपर्यन्ता पुनरसदुक्तिर्मध्यस्थैरनुमता भवति। तत्र हेतुमाह—रुद्धेति। षट्पक्षीपर्यन्तं मध्यस्थानां निवारणावकाशाभावादित्यर्थः। तथा हि-द्विविधा हि कथा; सत्साधनोपक्रमा तावदेका; अपरा पुनरसत्साधनोपक्रमा। पर्यनुयोज्योपेक्षणं च मध्यस्थैर्वक्तव्यम्; उभयोरपि वादिनोर्दुष्टत्वात्। अन्यतरदोषमात्रकथने माध्यस्थ्यमेव हीयेत। तथा च सत्साधनोपक्रमकथायां वादी न दुष्टः। असदुत्तरकथने द्वितीयकक्ष्यायां प्रतिवादी दुष्टः। तत्र वादिना तृतीयकक्ष्यायां दुष्टवचनपरिग्रहे वादिनः पर्यनुयोज्योपेक्षणम्। अयमेव मध्यस्थानां वक्तुमवसरः। अथ मध्यस्थाः प्रतिवादिनो यथावस्थितवचनसंभवमपेक्षन्ते, स पुनरयथैव भाषते, तत्र चतुर्थकक्ष्याप्रवृत्तिः। ततो वादिनमपेक्षन्ते, सोऽप्ययथैव भाषते; अत्र पञ्चमकक्ष्या प्रवर्तते। अथ वादिप्रतिवादिनोः स्तम्भे सभापतिप्रश्नमपेक्षन्ते; स पुनर्न पृच्छति। तस्मिन्नवसरे प्रलाप एव प्रतिपादित इति षष्ठी कक्ष्या। एवं सत्साधनोपक्रमकथायां षट्पक्षी; असत्साधनोपक्रमकथायां पञ्चैव पक्षाः; द्वितीयकक्ष्यायामेव पर्यनुयोज्योपेक्षणस्य प्रवृत्तेरिति विभागः। ततः षट्पक्षादिकमनुसृत्य मध्यस्था निवारयन्तीति न्याय्यमेतत्॥ ६६॥

---

आनन्द०—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—उक्तदोषेष्विति।

ननु यस्मिन्मानप्रवृत्तिरित्यादिना प्रामाणिकं स्वीकर्तव्यमित्युच्यते न पुनष्षट्पक्षीसंभवसमर्थनमित्यत्राह—अयमर्थ इति—कथायां यत्प्रामाणिकं तत्स्वीकर्तव्यम्। यत्र व्याघातादिकमस्ति तन्न स्वीकार्यमित्यर्थः। पर्यनुयोज्योपेक्षणञ्चेति—प्रतिवादिनो

दुष्टवचनत्वाद्वादिनाञ्च तदज्ञानाच्च तदुद्भावनस्योभयपरिभवनहेतुतया ताभ्यामनुद्भाव्यत्वान्मध्यस्थैरुद्भाव्यमित्यर्थः ।

पर्यनुयोज्योपेक्षणमुद्भावनानर्हत्वान्न निग्रहस्थानम् । वादिप्रतिवादिनोर्निग्रहार्हत्वात्ताभ्यामनुद्भाव्यत्वात् । नापि मध्यस्थैरुद्भाव्यम्—तेषां जयार्थित्वाभावादित्याचार्याः । **तथा चेति**—स्थापनवादी हेतुमादौ प्रयुङ्क्ते । द्वितीयस्तु यद्यसदेवोत्तरं ब्रूयात्तदा द्वितीयस्य दुष्टत्वेऽपि मध्यस्थैस्तस्मै तन्नोद्भावनोयम् । नावादिकक्ष्यापेक्षाय स चेद्दोषमविदित्वाऽन्यथा ब्रूयात्तदा पर्यनुयोज्योपेक्षणं मध्यस्थैरुद्भाव्यम् । तथाऽपि प्रतिवादिनस्सम्यग् एव वचनं संभवेदिति पुनर्मध्यस्थैरनुमतः—कक्ष्यान्तरवचनाय । यदि पूर्ववददुष्टं ब्रूयात्ततो वादी च पूर्वदोषमुद्घाटयत्विति प्रेरितोऽपि पञ्चमीमप्यन्यथा ब्रूयात्तदा षष्ठी कोलाहलरूपा प्रवर्तत इति ततः कथाविच्छेद इति सम्प्रदायः । यदि च द्वितोयादिकक्ष्यायामेव प्रतिवादो न सम्भवेत्तदा द्वितोयादिकक्ष्यायामेव कथाविच्छेद इति द्रष्टव्यम् ।

ननु पूर्वं निवारणावकाशाभावादित्युक्तं न सङ्गच्छते । उक्तरीत्या द्वितोयादिकक्ष्यायामेव सम्भवादिति चेत् । अत्र वदन्ति । यद्यप्रतिभा तदा विच्छेदोऽस्त्येव । यदि तदन्याभासवचनं तदा षट्पक्षीपर्यन्तावकाशः, कथकसम्प्रदायेनेति द्रष्टव्यमिति । असत्साधनोपक्रमे कक्ष्यान्तरन्यूनतेत्याह—**असत्साधनेति** । **ततष्षट्पक्ष्यादिकमिति**—पक्षशब्दः कक्ष्या वचनः । समाहारे द्विगुः । मूलं रोधस्य निवारणस्यावकाशो रुद्धो यस्यां कक्ष्यायां सा रुद्धरोधावकाशेत्यर्थः ॥ ६६ ॥

---

**वाक्यार्थो यस्त्वपूर्वो न खलु किमपि तव्द्याप्यमस्मिन् पदादौ**
**साङ्गत्यं बोधकत्वादधिकमनुमितौ ग्राह्यमत्रैतदेव ।**
**वक्तृज्ञानानुमानादिकमपि न भवेदन्ततो व्याप्त्यभावा-**
**त्तत्लिङ्गाप्रतीतावपि मतिजननाद्वक्त्रभावाच्च वेदे ॥ ६७ ॥**

**सर्वार्थः**—इत्थं प्रमाणाभासप्रवृत्तिरूपां षट्पक्षीमुक्त्वा सौगतसमयानुवर्तिना येन केनापि परिकल्पितस्य वाक्याद्वाक्यार्थानुमानस्य **प्राभाकरवैशेषिकपरिकल्पितयोश्च** वक्तृज्ञानानुमानयोराभासत्वं वक्तुमारभते—**वाक्यार्थं** इति । कृत्स्नस्यापि वाक्यस्यानुमानरूपतामाहुः सौगता वैशेषिकाश्च । प्राभाकरास्तु लौकिकवाक्यमात्रस्य । कथं तत्रानुमानप्रवृत्तिरिति पृच्छामः । विप्रतिपन्नानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि पदत्वादिति यदि वदसि, तदा न विशेषसिद्धिः । यदि संसर्गविशेषज्ञानपूर्वकाणि संसर्गविशेषवन्तीति वा, तदा संसर्गविशेषो न प्रसिद्धः, कथं व्याप्तिग्रहः ? अनेनैव वाक्येन प्रसिद्धश्चेदन्योन्याश्रयः; अव्युत्पन्नेषु च पदेषु व्यभिचारः । न ह्यव्युत्पन्नानि पाठमात्रा-

वगतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि । व्युत्पन्नपदत्वादिति चेत् केयं व्युत्पत्तिः ? अभिधानशक्तिग्रहणमिति चेत्; तर्हि पदसङ्घातेनैव वाक्यार्थसिद्धिः; किमनयाऽनुमानकुसृष्ट्या ? वाक्याद्वाक्यार्थप्रतिपत्तिरिति हि लौकिका मन्यन्ते । पूर्वमनुमानं पश्चाद्वाक्यार्थप्रतिपत्तिरनुवादरूपतयेति चेन्न; अदर्शनात् । न हि प्रयुक्ते वाक्ये द्विवारमर्थप्रतिपत्तिर्दृश्यते । अतो वेदवल्लोकेऽपि वाक्यादेवार्थप्रतिपत्तिरिति प्राभाकरस्योत्तरम् । वैशेषिकस्याप्युपलम्भविरोधः । सर्वे हि व्यवहर्तारः शब्दादेव साक्षादर्थप्रतीतिमुपलभन्ते । कल्पनागौरवं चोत्तरम् । शब्दादर्थप्रतीतिरिति कल्पने लाघवम्, वक्तृज्ञानानुमानपृष्ठलग्नवाक्यार्थप्रतीतिकल्पने गौरवम् । सम्बन्धभेदादपि प्रमाणभेदमाह—**साङ्गत्यमिति** । शब्दे केवलबोधकत्वमात्रं सम्बन्धः; अनुमाने व्याप्तिरिति विभागः । एतदेव बोधकत्वम् । उक्तमर्थं सङ्कलय्य विशदयति—**वक्तृज्ञानेति** । यदि वा पूर्वं वाक्यादर्थानुमानं परास्तम्, अत्र वक्तृज्ञानानुमानपूर्वकमर्थसिद्धिर्निरस्यत इति न पौनरुक्त्यशङ्का । बुद्धप्राभाकरवैशेषिकाणां निराकरणे न्यायतौल्यात् साधारण्येनास्माभिर्व्याख्यातं पूर्वमिति न दोषः । तत्र हेतुमाह—**व्याप्त्यभावादिति** । हेत्वन्तरमप्याह—**तत्तदिति** । तत्तद्वाद्युक्तलिङ्गाप्रतीतावपि वाक्यार्थप्रतीतिप्रसिद्धिप्राचुर्यादिति । वैशेषिकस्य विशेषदूषणं प्रदर्शयति—**वक्त्रभावाच्च वेद इति** । ईश्वरानुमानं निरस्तमिति भावः ॥ ६७ ॥

---

**आनन्द०**—अवसरसङ्गत्या शब्दस्य पृथक्प्रामाण्यं समर्थयतीत्याह—**इत्थमिति । न विशेषसिद्धिरिति ।**

नन्वेतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यत्र पदविशेषाणां पक्षत्वात्पक्षधर्मताबलाद्विशेषतस्सिद्ध्यत्येव ।

न च गामानय शुक्लां दण्डेनेति वाक्ये क्रियाकर्मभावे व्यत्ययस्स्यात् पक्षधर्मताया अविशेषादिति वाच्यम् । तात्पर्यविषयत्वविशेषणेन तन्निरासादिति चेत् । उच्यते तात्पर्यविषयत्वं वा तदनुपस्थितौ कथं ग्राह्यं सामान्यज्ञानस्याऽव्यावर्तकत्वात् । किञ्च गवानयनयोस्संसर्गं इत्येतावन्मात्रं सिद्ध्यति न तु विशेषः । तात्पर्यविषयत्वविशेषणेऽपि तादृशस्संसर्गं इत्येव पर्यवस्यति, न तु घटकर्मकानयनक्रियाकस्संसर्ग इति ।

किञ्च नानार्थे कथञ्चिदपि न सिद्ध्यति । न च शब्दप्रामाण्यवादिभिरपि तत्र तत्र वक्तव्यो विशेष इति तन्न्यायेनात्राऽप्यस्त्विति वाच्यम् । तत्राश्वकर्मत्वे तात्पर्यम् आनयनक्रियात्वे तात्पर्यग्रहस्य शब्दसहकारित्वात् । अनुमाने तु लवणकर्मकानयनक्रियाकतात्पर्यविषयत्वेन व्याप्त्यभावात्तात्पर्यविषयलवणकर्मकसंसर्गवत्त्वेनाऽप्यभावादिति भावः । **अव्युत्पन्नेष्विति**—तेषां वाक्यार्थ ज्ञानपूर्वकत्वाभावादिति भावः । **व्युत्पन्नपदत्वादिति**—पक्षविशेषणान्न बाधो नासिद्धिश्च । **अभिधानशक्तीति**—अर्थज्ञानजनकसामर्थ्यग्रहणमित्यर्थः ।

ननु पदार्थज्ञानजनकत्वेऽपि वाक्यार्थज्ञानजनकत्वं नास्तीति चेत्तत्राह— **पदसङ्घातेति**—पदानामेव समुदितानां वाक्यार्थज्ञानजनकत्वं कल्प्यत इत्यर्थः।

किञ्चानुवादकत्वेऽपि शब्दस्य ज्ञानजननसामर्थ्यमावश्यकं, तथा च तस्यैव बोधकत्वसम्भवे मध्येऽनुमान कल्पनं [कुर्विति] व्यर्थमिति बोध्यम्।

व्याप्तिग्रहणाभावे शब्दादर्थप्रतीतिरनुभवसिद्धेति नानुमानविधयेत्यत्राह— **शब्द इति। यदि वेति। वैशेषिकस्येति**—तथा च बाध इति भावः। **मूलं बोधकत्वादधिकं**—बोधकत्वापेक्षयाऽधिकं। **अत्र**—शब्दे। **एतदेव**—बोधकत्वमेव **गृहीतं**—बोधोपयोगीत्यर्थः॥ ६७॥

---

**प्रत्येकं स्वानुभूतात्तदुभयमधिकं संस्कृतिद्वन्द्वयोगात्**
**स्मृत्यारूढं विजानन्त्यनुमितिवचसोर्वेद्यमप्येवमस्तु।**
**पारोक्ष्यं तत्स्मृतित्वादनधिकमिति न प्रागनिर्धारितांश-**
**ज्ञानस्य स्पष्टदृष्टेः परिहृतरहितास्त्वेतदस्पष्टमाहुः॥ ६८॥**

**सर्वार्थः**—अत्र कश्चिदाह—आगमजन्यमनुमानजन्यं वा परोक्षज्ञानमिति किंचिन्नास्ति; किन्तु नानासंस्कारजन्यस्मृतिसमुच्चयमात्रमेव। यथा प्रत्येकमनुभूतानां वृक्षादीनां समुच्चयेन सेनावनादिस्मरणं स्मरणमेव, एवं प्रत्येकानुभूतपदार्थस्मरणमेवागमजन्यं ज्ञानं; तथाऽनुमानजन्यमपीति, न स्मरणादतिरिच्यते परोक्षम्। तदिदमाशङ्कते—**प्रत्येकमित्यारभ्य अनधिकमित्यन्तेन**। परिहरति **नेति**। तत्र हेतुमाह— **प्रागनिर्धारितेति**। अयमत्र भावः—वाक्यार्थे तावत्प्रागविदितस्संसर्गविशेषस्सिध्यति; अतो न स्मृतित्वम्। एवमनुमानेऽपि पक्षनिष्ठं साध्यं सिध्यति। अतोऽपूर्वार्थप्रतीत्या न स्मृतित्वसिद्धिरिति। अयमत्र निर्णयः—संस्कारे सत्यप्यपूर्वार्थप्रतिपत्तौ न स्मृतित्वम्; अन्यदा पुनः स्मृतित्वमिति। अनुभव एव परोक्षापरोक्षविभागं बाह्या अप्याहुरित्याह— **परिहितेति**। **क्षपणकाः** खलु प्रत्यक्षपरोक्षविभागं स्पष्टमस्पष्टमिति विभज्य व्याचक्षते॥ ६८॥

---

**आनन्द०**—आक्षेपसङ्गतिमाह **अत्र कश्चिदिति**। प्रसङ्गसङ्गतिरित्याहुः।

ननु संस्कारसमुच्चयात्सेनावनादिस्मरणरीत्या विशिष्टस्मरणं सम्भवत्येवेत्यभिधानात्प्रागनिर्धारितत्वेऽपि स्मृतिस्सम्भवतीत्यत्राह—**अयमत्र भाव इति**।

यद्यपि संस्कारमेलने उभयस्मृतिस्समूहालम्बनरूपा स्यात् नत्वधिकसंसर्गविषयाननुभूतस्मरणे, अतिप्रसङ्गात्। सेनावनादिस्थलेऽपि न प्रत्येकवृक्षानुभवमात्रात्, तथाऽप्येकप्रदेशगतत्वेनानुभवे तथा स्मृतिः। यदि पदबोधितसंस्कारत्वेन विशेषः

कल्प्यते तर्ह्यभ्युपेतः परोक्षोऽनुभवः । संस्कृतिरिति यदि निर्बन्धः क्रियते तदा प्रसिद्धस्मरणाद्वैलक्षण्यं सामग्रीवैलक्षण्यादङ्गीकार्यमिति नामान्तरेण परोक्षानुभवोऽभ्युपेत इति भावः ।

ननु संस्कारजनकत्वमावश्यकञ्चेत्स्मृतित्वं स्यादिति चेत्तत्राह—**अयमत्र निर्णय इति**—प्रत्यभिज्ञानवदिति—भावः ।

"अनुभूतिरपि द्वेधा, प्रत्यक्षञ्च परोक्षञ्चाऽभिधीयते च तद्ज्ञैः स्पष्टञ्चा स्पष्टमेतत्स्या"दिति वचनमुदाहृत्य ज्ञानं द्विविधं **अनुभूतिश्चेतिस्मृति**—अनुभूतिरपि द्विधा प्रत्यक्षाप्रत्यक्षभेदेन । तदेव स्याद्वादमञ्जर्यां स्पष्टमस्पष्टञ्चेति प्रतिपाद्य जैनसिद्धान्तेऽभिहितमित्याह—**क्षपणका इति** । मूलं **परिहितरहिताः**—परिधान रहिता जैना इत्यर्थः ॥ ६८ ॥

---

**प्रत्यक्षादीव मानं विमतिपदवचो हेतुदोषाद्यभावा-**
**द्वाक्यत्वादप्रमाणं विमतमिति यदि स्वोक्तिबाधादयः स्युः ।**
**अव्युत्पन्नस्य बोधं न जनयति वचस्संगतिज्ञानहाने-**
**र्लिङ्गं व्याप्तिप्रतीतेः पुरत इव न चावद्यमेतावताऽस्य ॥ ६९ ॥**

**सर्वार्थः**—सर्वं वाक्यमप्रमाणमिति वादिनं प्रतिक्षिपति—**प्रत्यक्षादीति** ॥ विप्रतिपन्नं वाक्यं प्रमाणम् कारणदोषबाधकप्रत्यया[द्य]भावादिति हेतुः, दृष्टान्तः प्रत्यक्षमनुमानं वा । अत्र प्रत्यनुमानमाशङ्क्य परिहरति—**वाक्यत्वादिति** । **स्वोक्तिबाधः**—स्वाभ्युपगमबाधः, स्वप्रवृत्तिबाध इत्यादिकमूह्यम् । सर्ववाक्याप्रामाण्ये स्वाचार्यवचनस्यापि सर्वशब्दार्थत्वेन स्वमतपरमतविभागो न स्यादित्यर्थः । यदि शब्दः प्रमाणम्, अव्युत्पन्नस्याप्यर्थं बोधयेत् प्रदीपवत्; न हि दीपो व्युत्पन्नाव्युत्पन्नविभागेनार्थमवबोधयतीत्याशङ्क्य परिहरति—**अव्युत्पन्नस्येति** । **सङ्गतिज्ञानहानेरिति** । वाच्यवाचकभावसम्बन्धप्रतिपत्तिरागमस्यैवार्थावबोधनाङ्गम्, न तु प्रत्यक्षस्य; अतः सहकार्यभावादव्युत्पन्नस्य शब्दोऽर्थं नावबोधयतीति न दोषः । तत्र दृष्टान्तमाह...**लिङ्गमिति** । यथा व्याप्तिप्रतीतिशून्यस्य लिङ्गं साध्यप्रतीतिं न जनयति, नैतावता लिङ्गस्य दोषः; एवमागमस्येति ॥ ६९ ॥

---

**आनन्द०**—ननु परोक्षानुभवसिद्धावपि शब्दो न प्रमाणमिति तन्निरूपणमसङ्गतमित्याक्षेपसङ्गतिमभिप्रेत्याह - **सर्वं वाक्यमिति । कारणदोषेति**—भ्रमविप्रलिप्साकरणापाटवादयो दोषाश्शब्दाप्रामाण्यापादकाः । आदिशब्देन प्रवृत्तिविसंवादादिः ।

नन्वप्रामाण्यज्ञापकाभावमात्रान्न प्रामाण्यसिद्धिः । बाधकाभावस्याऽसाधकत्वादिति चेत् । मैवं ।

स्वतः प्रामाण्यस्य समर्थयिष्यमाणत्वात् । तथा च बाधकाभावे सति ज्ञानसामान्यसामग्र्येव साधिकेति—भावः । **स्वोक्तिबाधः**—सर्वं वाक्यमप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययोस्स्वोक्तिबाध इत्यर्थः ।

**स्वाभ्युपगमबाधः**—सर्वं वाक्यमप्रमाणमिति वाक्यस्य स्वेन प्रामाण्याभ्युपगमादिति भावः । **स्वप्रवृत्तिरिति**—परप्रतिपत्त्यर्थं वाक्यप्रयोगप्रवृत्तिबाध इत्यर्थः ।

केचित्तु किमप्रामाण्यमिति प्रमां प्रत्यजनकत्वमेवोच्यते ? उत जनकत्वेऽपि जातज्ञाने [ज्ञातज्ञाने] प्रमात्वाभाव इति विकल्प्याऽऽद्यन्दूषयति-—**स्वोक्तिबाध इति ।** **द्वितीय माह—इत्यादिकमूह्यमिति** · बाधाभावादित्यर्थः इति वदन्ति । **सर्ववाक्येति**—स्वमतपरमतज्ञानस्याऽऽचार्यवचनाधीनत्वादित्यर्थः । **वाच्यवाचकभावेति**—संबन्धज्ञानं सहकारीति सहकारिणि सति ज्ञानं भवत्येवेति भावः । **मूलं व्याप्तिप्रतीतेः पुरतः**—व्याप्तिज्ञानात्पूर्वमित्यर्थः ॥ ६९ ॥

---

**वक्त्री व्युत्पत्तितः प्राग्यदि निजविषयं वाग्विभक्त्यन्वयाद्यैः**
**किं व्युत्पत्त्या तिरश्चामपि न कथमितो बालकानां च बोधः ।**
**स्वा[र्थे]र्थशब्दस्तथा चेत्तदपि न विषयैस्तस्य साम्यात्तदन्यै,**
**रव्युत्पन्नत्वतो वा स्वमपि न गमयेदेष तद्वत्स्ववाच्यम् ॥ ७० ॥**

**सर्वार्थः**—अत्र शब्दस्य बोधकत्वशक्तिसमर्थनेन संतुष्टः कश्चिदाह—अव्युत्पन्नोऽपि शब्दोऽर्थप्रत्यायक इति, तं प्रतिब्रूते—**वक्त्रीति** । अत्र वक्त्रीति किं शक्तिमात्रमभिधीयते, किं वा वचनक्रियासम्बन्धः ? पूर्वस्मिन् पक्षे नास्माकमपि विप्रतिपत्तिः, शब्दशक्तेर्नित्यत्वात् । उत्तरं पक्षमनुवदति—**वक्त्री व्युत्पत्तितः प्रागिति** । **विभक्त्यन्वयाद्यैरिति** वचनहेतुः । प्रकृतिप्रत्ययादिभेदेन व्युत्पन्नो हि शब्दोऽर्थं प्रत्याययतीति भावः । अनूदितमर्थं प्रतिक्षिपति—**किं व्युत्पत्त्येति** । स्वयमेव शब्दोऽर्थं प्रत्याययति चेत्, व्युत्पत्तिर्निरर्थिकैव स्यात् । अव्युत्पन्नाच्छब्दात्तिरश्चां बालमूकानां च बोधः कथं न स्यात् ? नन्वव्युत्पन्नानामपि शब्दः स्वरूपं प्रतिपादयति; अतः शब्दस्याव्युत्पन्नस्यापि बोधकत्वं स्वस्वरूपे दृष्टमिति, तदिदमाह—**स्वार्थं** इति । दूषयति—**तदपि नेति** । तत्र हेतुमाह—**विषयैरिति** । अयं भावः—यथा विषयेषु व्युत्पन्नः शब्दोऽर्थमवगमयति, एवं स्वबोधकत्वेनापि व्युत्पन्नश्शब्दः स्वात्मानमवगमयति । अन्यथा स्वात्मनि व्युत्पत्त्यभावात् स्वात्मानमपि नावबोधयेत् । उक्तमर्थमनुमानेनाप्युपपादयति—**अव्युत्पन्नत्वत इति** । स्वात्मन्यव्युत्पन्नश्शब्दः स्वात्मानं नावगमयेत्, यथा स्वविषये अव्युत्पन्नश्शब्दः स्वविषयं

नावगमयति। अयमत्र भावः—शब्दस्य द्वयो शक्तिः; अर्थप्रकाशकत्वं स्वस्वरूपप्रकाशकत्वं चेति। अर्थप्रकाशनशक्तिः स्वयमगृहीता नार्थप्रकाशनाङ्गं भवति। एवं शब्दप्रकाशनशक्तिः स्वयमगृहीता चेत्, न स्वप्रकाशनाङ्गं भवति। तस्माच्छब्दः स्वार्थवत् स्वस्मिन्नपि व्युत्पन्नः स्वप्रतीतिं जनयतीति। अतश्शक्तस्यापि शब्दस्य तत्तदर्थप्रकाशनशक्तिप्रतिसन्धानमन्तरेण नार्थप्रतिपत्तिजनकत्वमिति ॥ ७० ॥

---

**आनन्द०**—प्रासङ्गिकी सङ्गतिरित्यभिप्रायेणाह —**अत्रेति**। ताच्छील्ये त्रन्नन्ततया विकल्पावकाश इत्याह—**वक्त्रीति**। **शब्दशक्तेर्नित्यत्वादिति**—स्वाभाविकत्वादित्यर्थः। न साङ्केतिक इति यावत्। **वचनहेतुरिति**—विभक्त्यन्वयाद्यैर्वक्त्री वागित्यन्वय इति भावः। **अव्युत्पन्नाच्छब्दादिति**—ततो बोधोऽनुभवबाधित इति भावः। **नन्वव्युत्पन्नानामपीति** पुरुषाणामिति शेषः। **अव्युत्पन्नश्चापीति**—पाठस्साधुः उत्तरत्राव्युत्पन्नस्यापीति शब्दविशेषणत्वेनाऽभिधानात्।

नन्वव्युत्पन्नस्य विषयरूपस्वार्थाबोधकऽपि बोधकत्वं दृष्टमित्युक्ते तत्रोत्तरं वाच्यं विषयसाम्यमिति। तस्योत्तरमेव [न घटते] दृष्टान्तेन तद्बोधस्यापि साध्यतया दृष्टान्तत्वासिद्धेरित्यत्राह—**अयं भाव इति** बालादीनामर्थज्ञानाभावादव्युत्पन्नस्य विषयरूपस्वार्थबोधनं निश्चितमिति स्वस्यापि स्वार्थतया व्युत्पत्त्यभावे बोधकत्वं न स्यादिति भावः। **अन्यथा स्वात्मनि व्युत्पत्त्यभावकाले—यथा स्वविषये अव्युत्पन्नश्शब्द** इत्यस्य अव्युत्पन्नस्य विषयरूपस्वार्थाबोधनमिति अर्थः।

ननु व्युत्पत्त्यपेक्षाधिक्ये स्वरूपस्य शक्यत्वाभावात्कथं तदपेक्षेत्यत्राह—**अयमत्र भाव इति। एवमिति।**

ननु श्रोत्रेन्द्रियेण गृहीतस्य शब्दस्वरूपस्याऽन्वयबोधसम्भवात्किं तत्र शक्त्या तद्व्युत्पत्त्या वा। वृत्त्यनुपस्थितस्याप्यन्वयबोधविषयत्वेऽतिप्रसङ्गः तात्पर्यस्य नियामकत्वादिति चेत्। उच्यते। तथा सति गामुच्चारयेत्यत्राविकृतस्य गोशब्दस्यान्वयबोधो न स्यात्। विकृतस्यैव श्रोत्रगृहीतत्वाद्विभक्त्यर्थान्वयोऽपि न स्यात् प्रकृत्यर्थस्वाभावादित्यादि मणिसारधिक्कारे प्रपञ्चितमिति। **मूलं विषयं वक्त्रीति** त्रन्नन्तत्वात् द्वितीया ॥ ७० ॥

---

**शब्दस्संकेतितोऽर्थं गमयति विमतोऽपीति शास्त्रप्रतीपं**
**तत्कर्ताऽद्य ह्यसिद्धस्स च दुरधिगमस्सृष्टिकालेऽनुमानैः।**
**श्रुत्या चेत्प्रत्युतैतद्विभुरपि तनुते वेदतो नामरूपे**
**व्याकृत्यादेर्विरुद्धौ क्रमजनिविलयौ क्षुद्रभाषासु नैवम् ॥ ७१ ॥**

**सर्वार्थः**—सर्वस्यापि शब्दस्य संकेतपूर्वकत्वं कश्चिदाह विप्रतिपन्नश्शब्दः सांकेतिकः शब्दत्वात् भाषाशब्दवदिति। तदेतदनुवदति—**शब्द इति**। परिहरति —**शास्त्रप्रतीपमिति**। वाचा विरूपनित्ययेत्यादिश्रुतिविरुद्धत्वात् कालात्ययापदिष्टमित्यर्थः।

संकेतकर्ता किमाधुनिकः ? किं विश्वजगत्सृष्टिकालस्थः ? आधुनिकश्चेन्न दृष्टः ; ईश्वरश्चेदीश्वरानुमाननिरासेन प्रागेव निरस्त इत्याह --तत्कर्त्रेति । श्रुतिप्रसिद्धस्संकेतकर्तेति चेत्, तद्विरुद्धमेव भवतः; धाता यथापूर्वमकल्पयत् ।

नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥

इति नामरूपव्याकरणस्य वेदपूर्वकत्वश्रवणात् । कथं तर्हि काठकादिसमाख्या ? कथं व्याहृत्यादेः क्रमादुपदेशः ? कथं वा ऋग्वेदादेरनुक्रमादुपदेशः पुराणेषु व्यवह्रियते ? सर्वं चैतदभिव्यक्तिविशेषादित्याह---व्याहृत्यादेरिति । प्रवर्तनविशेषादेरित्यर्थः । उत्पत्तिविलयौ नामरूपे व्याकरोदिति श्रुतिविरुद्धौ । तर्हि भाषान्तरेऽप्यसांकेतिकत्वं स्यादित्याशङ्क्य परिहरति --क्षुद्रेति ॥ ७१ ॥

---

आनन्द०---प्रसङ्गसङ्गतिमभिप्रेत्याह---सर्वस्यापीति । भाषाशब्दवदिति---देवदत्तादिशब्दवदित्यर्थः । वाचा विरूपेति---अनेन देवदत्तस्य क्रमविशेषविशिष्टतयानित्यत्वप्रतिपादनान्न साङ्केतिकत्वमित्याह --- यथापूर्वमिति --- पूर्वपूर्वक्रमेण नामरूपकरणेनाऽनादित्वान्नामरूपपरम्परायां न साङ्केतिकत्वावकाश इति भावः । कथं व्याहृत्यादेरिति---प्रथमं भूरिति व्याहरत्, ततो भुवरिति, ततस्सुवरिति ऋग्वेदः प्रथमो यजुर्वेदो द्वितीयस्सामवेदस्तृतीयोऽथर्ववेदश्चतुर्थ इत्यादिश्रुत्युपदेशक्रम इत्यर्थः । आदिशब्देनाभिव्यक्त्यादिग्रहः । नामरूपे व्याकरोदिति श्रुतिविरुद्धाविति---नामरूपञ्च भूतानामित्याद्युपबृह्मणानुरोधेनेति भावः । भाषान्तरेऽपीति---आन्ध्रादिभाषान्तरेऽपीत्यर्थः । मूलं व्याकृतिः---व्याख्याप्रवर्तनेत्यर्थः ॥ ७१ ॥

---

व्युत्पत्तिः कार्य एव प्रथमसमुदिता वृद्धवाक्यात्प्रवृत्तौ
तत्सर्वास्तत्पराः स्युर्गिर इति यदि न क्वापि सिद्धेऽपि सिद्धेः ।
स्याद्वा कार्यैकलक्ष्या प्रथममिह कुतश्शब्दशक्तिं नियच्छे-
त्तात्पर्यं चान्यथाऽपि ह्यनितरशरणैर्लोकवेदप्रयोगैः ॥ ७२ ॥

सर्वार्थः---एवं व्युत्पत्तिं प्रसाध्य सिद्धे व्युत्पत्तिं साधयितुमारभते । तत्र प्राभाकरमतमनुवदति --व्युत्पत्तिरिति । पूर्वं सर्वशब्दानां सांकेतिकत्वं निरस्तम् । अत्र सर्वशब्दानां कार्ये व्युत्पत्तिं वदन् प्राभाकरो निरस्यते । स ह्येवं मनुते--व्युत्पत्त्यायत्तं शब्दस्य प्रामाण्यम्; आद्या व्युत्पत्तिः कार्य एव । वृद्धव्यवहारो हि व्युत्पत्तिबीजम्; प्रयोजकवृद्धो हि गामानयेति वाक्यं प्रयुङ्क्ते; प्रयोज्यश्चानयति; व्युत्पित्सुरन्योऽनेन वाक्येनानुमानसध्रीचा व्युत्पाद्यते । इत्थं ह्यनुमिनोति व्युत्पित्सुः --विप्रतिपन्ना प्रयोज्यप्रवृत्तिः कार्यताबुद्धिपूर्विका चेतनप्रवृत्तित्वात् अस्मत्प्रवृत्तिवत् । विप्रतिपन्ना

कार्यताबुद्धिः प्रयोजकवाक्यजन्या तदन्वयव्यतिरेकानुविधायित्वात्। यद्यदन्वयव्यतिरेकानुविधायि तत्तज्जन्यं यथा संप्रतिपन्नमिति। एवं सामान्यतः कार्यपरत्वे प्रयोजकवाक्यस्य निश्चिते, गामानय गां बधान अश्वमानय अश्वं बधानेत्यादिषु वाक्येषु आवापोद्वापवशाद्विशेषव्युत्पत्तिरपि जायते। अतः कार्य एव शब्दानां व्युत्पत्तिः। तस्मान्न सिद्धरूपे ब्रह्मणि वेदान्तवाक्यानां प्रामाण्यमिति। एतदनुभाषते--**व्युत्पत्तिरिति**। परिहरति--**नेति**। तत्र हेतुमाह--**क्वापीति**। सिद्धे व्युत्पत्तिप्रकार उपरितनग्रन्थे विस्तरेण प्रतिपादयिष्यते। तत्तावत्तिष्ठतु; अन्वारुह्यापि वदामः। कार्य एव व्युत्पत्तिरस्तु; तथापि सिद्धेऽपि तात्पर्यं स्यादित्याह **स्यादिति**। अयं भावः--चत्वारो ह्यर्थाश्शब्दस्य मुख्यगौणलाक्षणिकतात्पर्यवृत्तिभेदेन। तत्र मुख्यवृत्तेरेकत्रावस्थानेऽपि तात्पर्यवृत्तिरन्यत्रापि संक्रमते। अन्यथा कथमृत्विक्पत्नीयजमानादिभेदेन कर्तृविभागः? स्फ्यकपालपुरोडाशादिभेदेन करणविभागः? स्वर्गस्वाराज्यपशुपुत्रादिभेदेन फलविभागः? अतः कार्यशेषतया सिद्धस्यापि कार्यवाक्येषु तात्पर्यभूमित्वात् व्युत्पत्तेः कार्यपरत्वनिर्बन्धो निर्निबन्धनः॥ ७२॥

---

**आनन्द०**—व्युत्पत्तिविचारत्वात्पूर्वसङ्गतिरेवास्य सङ्गतिरित्यभिप्रायेणाह—**एवमिति**। कथं कार्ये व्युत्पत्तिस्सिद्धे वा व्युत्पत्तिरस्त्वित्यत्राह—**आद्येति**। अनुमानप्रकारमाह—**इत्थं ह्यनुमिनोतीति**। **कार्यताबुद्धिपूर्विकेति**—चेतनप्रवृत्तेः कार्यताज्ञानसाध्यत्वादिति भावः।

ननु किं प्रवृत्तिशब्देन हिताहितप्राप्तिकालिका क्रिया विवक्षिता? यद्वा क्रियामात्रं? नाद्यः। चेतनविशेषणवैयर्थ्यात्। न द्वितीयः। शरीरोद्वर्तनक्रियादौ व्यभिचारादिति चेत्। अत्राहुः। इष्टानिष्टप्राप्तिपरिहारफलकक्रियैव चेतनप्रवृत्तिशब्देन विवक्षिता।

न च शरीरपरिवर्तनादिक्रियायामेवमपि व्यभिचारः। तस्यापीष्टसुखसाधनत्वादिति वाच्यम्। प्रवृत्तिशब्देन गमनादिक्रियायाः विवक्षितत्वात्। तत्रापि मत्तोन्मत्तत्वक्रियातिरिक्तत्वमपि विशेषणं बोध्यम्।

ननु वाक्यस्य कार्यताज्ञानजनकत्वेऽपि कार्यान्वित एव पदानां शक्तिरिति कुत इत्यत्राह—**एवमिति**—गामानयेत्यनयोर्मध्ये कस्य गोवाचकत्वमिति विषये गामानयेतिवाक्य इव गां बधानेति वाक्येऽपि गोशब्दर्थानुवृत्तेरानयनशब्दाभावेनानयनार्थाननुवृत्तेरावापोद्वापाभ्यां विशेषनिर्णय इत्यर्थः।

ननु शब्दः स्वार्थ एव वर्तते। स्वार्थश्च व्युत्पत्तिसिद्धः कार्यरूप एव। तत्कथं सिद्धबोधकत्वमित्यत्राह—**अयं भाव इति**। व्युत्पत्तिसिद्ध एवशब्दार्थ इति न नियमः, अपि तु वृत्या बोध्यस्सर्वोऽपीति भावः।

ननु तात्पर्यादिवृत्यन्तरभानाभावाद् घटादिपदाच्छिद्रेतरत्वाद्युपस्थितिर्लक्षणया-स्यात्। छिद्रेतरमात्रोपस्थितिस्तु शक्त्यैव स्यात्। धूमादिपदाद्वह्न्याद्युपस्थितिरनुमानेन न शब्दादिति चेत्। सामान्यशब्दस्य किञ्चिद्विशेषपरत्वं तात्पर्यादेव शक्तेस्साधारण्याद्यथा नियामकाभावात्, तात्पर्यमपि वृत्यन्तरमेवेति भावः—**अन्यथेति** स्वर्गकामो यजेतेति मुख्यवृत्या स्वर्गकामस्य कर्तृत्वेऽपि तात्पर्यगत्या ऋत्विजामपि कर्तृत्वं। तथा-पत्न्या अपि सहकर्तृत्वं। तात्पर्यग्राहकञ्च "ऋत्विजो वृणीतेऽध्वर्युं" ',स्रुचमुद्यम्य जुहोति" दण्डी प्रैषानन्वाह, सह पत्न्या यजते पत्नीस्संयाजयती''त्यादि द्रष्टव्यम्। पुरोडाशैर्यजत इति पुरोडाशस्य यागकरणत्वमवगतम्। तदेव तात्पर्यगत्या स्फ्यादिष्वपि भवति। स्फ्यस्योद्धननद्वारा कपालस्य श्रपणद्वारा। तथा च साक्षात्परम्परया-यागकरणत्वं तात्पर्यगत्याऽवस्थितम्। तथा "सर्वेभ्यःकामेभ्यो दर्शपूर्णमासौ"। "सर्वेभ्यो ज्योतिष्टोम" इति सामान्येन सर्वशब्देन बोधनेऽपि स्वर्गादीनां प्रत्येकमेव फलत्वं तात्पर्यगत्या सिद्धं तद्वृत्यभावे न स्यादिति भावः। किञ्च सिद्धस्यापि यन्न दुःखेन संभिन्नमित्यादेः कार्यशेषत्वेऽपि स्वरूपेण प्रतिपन्नस्य तात्पर्यविषयत्वमवश्यं वक्तव्यं। कार्ये व्युत्पत्यङ्गीकारेऽपि सिद्धकार्यसाधारण्येन व्युत्पत्तिरङ्गीकार्येत्याह—**कार्यशेषतयेति**। तथानिर्बन्धस्य प्रयोजनं नास्तीति भावः। **मूलं कार्यैकलक्ष्या कार्यैकविषयिणी। अनितरशरणैः सिद्धपरमात्रविषयैः ॥ ७२ ॥**

---

**कोऽसौ पाञ्चाल इत्याद्यनुभवतु वचसिसद्धतात्पर्ययोगं**
**शास्त्रं कार्यैकशेषं गमयति निखिलं सिद्धमित्यर्धरम्यम्।**
**यत्र ज्ञानं पुमर्थस्तववधिवचनं तत्र बाधोऽपि नास्मि-**
**न्नातो नाटचादिनीतिर्निधिवचननयादन्यथा स्याद्विरोधः ॥ ७३ ॥**

**सर्वार्थः**—इत्थं कार्य एव व्युत्पत्तिरिति नियमाङ्गीकारेण कार्यशेषतया सिद्धेऽपि तात्पर्यमुक्तम्। इदानीं सिद्ध एव प्राधान्येन तात्पर्यं संभवति; कोऽसौ पाञ्चाल इत्यादिषु तथा दृष्टेरिति वदन्तं सिद्धपरवादिनं तत्पक्षानुवादपूर्वकं **प्राभाकरं** प्रनिक्षिपति--**कोऽसाविति** ॥ अयमस्य भावः—लौकिकवाक्यं सिद्धपरमस्तु, वैदिकवाक्यं सर्वमपि कार्यपरमेव; सिद्धं तु कार्यशेषतया वदतीति—**अर्धरम्यमिति**। कानिचित्सिद्धपराणि कानिचित्कार्यपराणीति विभागस्य दर्शनादर्धरम्यत्वमुच्यते। पुरुषार्थपर्यवसायित्वं हि वाक्यस्य प्रामाण्ये तन्त्रम्; तच्च तव गृहे निधिरस्तीत्यादौ प्रतिपत्तिमात्रेण; ज्योतिष्टोमादिवाक्येषु स्वर्गादिफलप्रतीत्या। अतो ब्रह्मज्ञाने स्वरूपेण पुरुषार्थत्वान्न पुरुषार्थान्तरापेक्षा। तर्हि बालोपच्छन्दनादिवाक्यवदर्थतथात्वं न स्यादिति चेत्; न स्यात्, बाधाभावेन स्वतःप्रामाण्यस्यैव न्यायप्राप्तत्वात्। अत एव न नाटचादिनीतिः। नाटचादावर्थानुकारमात्रेण प्रीतिः। नात्रानुकारप्रतीत्या प्रीतिः; अपि तु स्वगृहे निहितनिधिसद्भावप्रतीत्या। इत्थं बाधविधुरेष्वर्थतत्त्वेषु प्रामाण्यानङ्गीकारे कार्यवाक्येऽपि प्रामाण्यं न स्यादिति कण्ठगतजीवितमेव वेदप्रामाण्यमिति भावः ॥ ७३ ॥

**आनन्द०** — पूर्वचिन्ताशेषत्वात्तत्सङ्गतिरेवास्य सङ्गतिरित्यभिप्रायेणाह—**इत्थमिति । इदानीमिति । कोऽसौ पाञ्चाल इति** पृष्टः कश्चिदाह-असौ पाञ्चाल इति । तत्र सिद्ध एव तात्पर्यम् । पाञ्चालानां राजानमविदुषस्तदज्ञानमात्रार्थित्वात्तं प्रत्युपदेशस्यापि तन्मात्रपरत्वात् । तथा च तत्रैव शक्तिग्रहोऽपीति भावः ।

ननु लोके केवलं सिद्धेऽपि तात्पर्यावगमे वेदेऽपि तात्पर्यं स्यात् बाधकाभावादित्यत्राह—**अयमस्य भाव इति ।** सिद्धार्थफलादिबोधदर्शनात्कथमित्यत्राह—**सिद्धं त्विति । पुरुषार्थेति ।**

ननु बोधकत्वं व्युत्पत्यधीनं, प्रामाण्यञ्च बाधकाभावे तन्मात्रेणैव नतु पुरुषार्थपर्यवसायित्वेन, निष्प्रयोजनानामपि रथ्यायां तृणादिकमस्तीति वाक्यानां-बोधकत्वादबाधेन प्रामाण्यदर्शनाच्चेति चेत् । अत्राहुः यद्यपि बोधकत्वे पुरुषार्थपर्यवसायित्वं न तन्त्रं, तथापि पुरुषार्थानवगमे निष्प्रयोजने वेदान्तवाक्यविचारे प्रवृत्तिर्न स्यात् । तदभावे च नानाकोट्युपस्थित्या निर्णयो न स्यादिति प्रमापकत्वं न स्यादितिभावः । **तर्हीति**—प्रतिपत्तिमात्रेण पुरुषार्थपर्यवसाने प्रतिपत्तिरेव पुरुषार्थ इति पर्यवसितम् । तथा च नाटकादिवदर्थसिद्धिर्न स्यादिति साधु समर्थितं प्रमाणमित्यर्थः । परिहरति — **न स्यादिति ।** नाटकवैषम्यमाह **नाट्यादाविति** नाट्यादावनुकर्तव्यः कार्यविशेषः प्रतीतिस्तु भ्रान्तिरूपा नात्र तथेति भावः । किञ्च बोधकस्य बाधाभाव एव प्रामाण्ये तन्त्रं न त्वन्यदित्याह—**इत्थमिति । मूलं सिद्धं निखिलं** कार्यैकशेषमवगमयतीत्यन्वयः । तदवधिवचनं पुरुषार्थभूतज्ञानजननं वाक्यं । तत्र तस्मिन्नित्यन्वयः । अतोऽस्मिन्नाट्यादिनोतिर्नेत्यन्वय इत्यप्याहुः । **अन्यथा** — बाधाभावेऽपि प्रामाण्याभावे सिद्धस्यापि प्रामाण्यबाधरूपो विरोध इत्यर्थः ।। ७३ ।।

---

**कस्मैचिज्ज्ञापयैतत्त्वमिति परकृतां वीक्ष्य चेष्टां तदन्य-**
**स्तस्मै ब्रूते ततस्तद्गमकमिह वचो वेत्ति चेष्टाविदन्यः ।**
**तत्तद्वाच्येषु शब्दैर्हितविदभिहितैरङ्गुलीयोगपूर्वं**
**जानन्नन्यत्र तत्तत्स्वहितजनकृतिं शिक्षणार्थामवैति ।। ७४ ।।**

**सर्वार्थः**—इदानीमाद्यव्युत्पत्तिः प्रकारत्रयेण सिद्धार्थेऽपि कर्तुं शक्येति वक्तुमारभते—**कस्मै चिदिति ।** एषा किल काचित्प्रक्रिया - पुत्रस्ते जात इति देवदत्ताय ज्ञापयेति केनचिच्चेष्टया चोद्यमानः कश्चित् गत्वा तस्मै देवदत्ताय तं वक्ति; तेन सह गतः कश्चिदन्यो व्युत्पित्सुर्मूकवच्चेष्टाविशेषज्ञस्तद्वाक्यं श्रुत्वा व्युत्पद्यते एतद्वाक्यं पुत्रजन्मरूपार्थप्रतिपादकमिति । तदिदमाह—**ततस्तदिति ।** प्रकारान्तरेण प्रतिपदव्युत्पत्तिनिरूपणेन सिद्धे व्युत्पत्तिं दर्शयति—**तदिति ।** तत्तच्छब्दवाच्येषु शिशुपशुपक्षिमृगादिष्वम्बातातमातुलादिभिर्हितविद्भिरभिहितैश्शिशुपश्वादिशब्दैस्साकमङ्गुलीनिर्देशपूर्वकं-

जानन्—प्रतिपद्यमानस्तत्तत्स्वहितप्रवृत्तिमन्यत्रापि शिक्षणार्थां—व्युत्पादनार्थामवैति। अयमत्र क्रमः—शिक्षको जनः कञ्चित्कालमङ्गुलीनिर्देशपूर्वकं तेषु तेष्वर्थेषु तत्तच्छब्दान् प्रयुङ्क्ते; पश्चादङ्गुलीनिर्देशमन्तरेण वदति। व्युत्पित्सुस्तच्छृणोति, चेष्टापरिज्ञानवत्त्वाद्व्युत्पादकानां प्रवृत्तिं व्युत्पादनार्थां जानाति; ततश्चेष्टामन्तरेणापि शब्दमात्रादेव दृष्ट्वा शब्दस्य बोधकत्वशक्तिं जानाति। अयं शब्द इममर्थं बोधयति, शब्दार्थयोस्संबन्धान्तरं न दृश्यते; संकेतयिता चान्यो न दृष्टः; परिशेषाद् बोध्यबोधकभावेनैवायं शब्द इममर्थं बोधयतीति व्युत्पद्यते ॥ ७४ ॥

---

आनन्द० —पूर्वसङ्गत्यैव विधान्तरेणापि सिद्धे व्युत्पत्तिं दर्शयतीत्याह—इदानीमिति। ननु सिद्धे व्युत्पत्तिर्न सम्भवति ग्राहकाभावादित्याक्षेपसङ्गतिरिति केचित्। एतद्वाक्यमिति—पुत्रजन्मबोधमात्रपरत्वाच्चेष्टायास्तत्समानार्थकत्वाद्वाक्यस्य सिद्धार्थमात्रपरत्वमित्यर्थः। प्रकारान्तरेणेत्यस्य विवरणं प्रतिपदेत्यादि। हितविदभिहितैरित्यनेन भ्रान्तिमूलत्वं व्युत्पत्तेर्निरस्तम्।

ननु शिक्षकाः प्रतिपदमङ्गुलिनिर्देशपूर्वकं शिशुपशुप्रभृतीनुपदिशन्ति। कर्तृचेष्टासहितान् शब्दानेव बोधका मन्यन्ते न तु केवलानित्यत्राह—अयमत्र क्रम इति। केवल चेष्टाया एव तादृशसामर्थ्यावगमान्न शब्दसहकारितां जानाति, अपि तु व्युत्पत्तिग्रहोपायत्वमेवेत्यर्थः। सङ्केतयिता चेति।

ननु जनकादय एव सङ्केतयितारः कुतो न स्युः, तथा च कथं परिशेष इति चेदत्राहुः तथासति प्रतिपुरुषं जनकादेर्भेदादेकरूपेण सङ्केतो न स्यात्, न दृश्यते च वैरूप्यं यदि भूतभाविसकलसाधारण्येन सङ्केतस्यैकरूपता, तदा नामान्तरेण बोध्य, बोधकभाव एवाभिहितस्स्यात् प्रसिद्धसङ्केतवैलक्षण्यादिति परिशेषाद्बोध्यम्। बोधकभावेनैवेति।

ननु साङ्केतिकत्वेऽपि बोधकत्वमेव शब्दस्य। तथा च कथं परिशेष इति चेन्न। सङ्केतेऽपि बोध्यबोधकभाव एव शब्दार्थयोरिति सत्यं, तथापि न सङ्केतमूलकत्वेन सादित्वमिति भावः ॥ ७४ ॥

---

कश्चित् कस्यापि पुंसस्सुतजनिमिह तत्प्रीतिकृत्त्वं च जानन्
तज्जन्मोक्तिप्रहृष्टे पितरि सुतजनेर्वेत्ति तद्वाच्यभावम्।
शक्यं तद्धर्षहेतुस्स इति नियमनं सन्निधानादियुक्ते-
रासीदत्सु प्रसूत्याद्यनियतिकथनं कार्यवाक्येऽपि शक्यम् ॥ ७५ ॥

सर्वार्थः—अयं चान्यः प्रकारः—देवदत्तस्य पुत्रे जाते कश्चिद् गत्वा पुत्रस्ते जात इति वदति। तत्पश्यन् बालकस्तन्मुखविकासेन तस्यानुकूलबुद्धिं जानन्नेतद्वाक्यं सन्निहितानुकूलरूपपुत्रजन्मप्रतिपादकमिति व्युत्पद्यते। तदिदमाह—कश्चिदिति। अयमत्रान्वयः—

कस्यापि पुंसस्सुतजनि—पुत्रजननं तस्य च प्रीतिकृत्त्वं—प्रीतिहेतुत्वं च जानन् तज्जन्मवाक्यप्रहृष्टे पितरि सुतजनेः—पुत्रजननस्य तद्वाच्यभावं—शब्दवाच्यभावम् वेत्ति—जानाति। बहुष्वपि हर्षहेतुषु सत्सु पुत्रजननमेव हर्षहेतुरिति विशेषनियमनं सन्निधानादिलिङ्गैश्शक्यम्। आसीदत्सु बहुषु प्रीतिहेतुषु सुखप्रसूत्याद्यनियतिकथनं कार्यव्युत्पत्तावपि शक्यते वक्तुम्—तत्राप्यवान्तरबहुव्यापारसंभवादनियतिर्वक्तुं शक्या ॥ ७५ ॥

---

आनन्द—पूर्वशेषत्वान्न सङ्गत्यन्तरमित्याह—अयञ्चान्य इति तच्छब्दादेः प्रथमान्ताद्युक्तपरामर्शित्वादिशङ्कां वारयति—अत्रायमन्वय इति । तज्जन्मवाक्यं सुतजन्मवाक्यं। पिताऽत्र कस्यापीति षष्ठ्यन्तोक्तः। तच्छब्दवाच्यभावं—पुत्रादिशब्द-वाच्यभावम्। सन्निधानादीत्यादिशब्देन प्रकरणादेर्ग्रहणम्। कार्यव्युत्पत्तावपीति—पुत्रस्ते जातः स्नानदानादिकं कुर्यादित्यादावपि व्यापारान्तरान्विते व्युत्पत्तिस्स्या-दित्यर्थः ॥ ७५ ॥

---

शब्दस्यैतस्य वाच्यस्त्वयमिति च तथा वाचकोऽसावमुष्ये-
त्येवं शिक्ष्येत पश्चात् कतिपयवचसां पूर्वनिर्ज्ञातशक्तिः।
इत्थं व्युत्पन्नतत्तत्सहपठितिवशाद्वाचकान् वेत्ति कांश्चि-
द्ये लोके ते हि वेदे समधिकमिह यत्तत्तु तत्रैव वेद्यम् ॥ ७६ ॥

सर्वार्थः—इत्थं सिद्धार्थे प्रथमां व्युत्पत्तिमभिधाय द्वितीयामपि व्युत्पत्तिं तत्रैव वदति—शब्दस्येति। अस्य शब्दस्यायमर्थो वाच्यः, अस्यार्थस्यायं शब्दो वाचक इति हि काव्यादिशिक्षाप्रकारः। लोकव्यवहारोऽप्येवमेव ज्ञापयति। इमां व्युत्पत्तिं पूर्वार्धेन दर्शयित्वा व्युत्पत्त्यन्तरमुत्तरार्धेन दर्शयति—इत्थमिति। अयमर्थः—प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीति वाक्यं श्रुत्वा प्रभिन्नेत्यादिशब्दानां पूर्वव्युत्पन्नत्वाद्व्युत्पन्न-पदसंहपठनसामर्थ्यात् पूर्वमव्युत्पन्नं मधुकरपदमौचित्यादिना भ्रमरपरतया व्युत्पद्यत इति कांश्चिद्भ्रमरादिशब्दान्। तर्हि लौकिकशब्दानामेवं व्युत्पत्तिरस्तु, न वैदिकानामि-त्याशङ्क्याह—य इति। य एव लौकिकास्त एव वैदिका इति हि लोकवेदाधिकरणन्याय-इति भावः। कथं तर्हि वैदिकप्रयोगेषु वैषम्यम्? अत आह—समधिकमिति। यल्लौ-किकशब्दाद्वैदिकशब्देषु समधिकं वैषम्यं तत् प्रातिशाख्यादिव्याकरणविशेषावगम्य-मित्यर्थः। अतः कार्ये व्युत्पत्तिसिद्धेः व्युत्पत्त्यादिभिर्बहुभिर्लोकव्यवहारसहितैरभिधान-पठितैर्व्याकरणप्रक्रियादिभिः प्रातिशाख्यादिभिरसाधारणहेतुभिस्सिद्धे वा कार्ये वा सर्वत्रापि व्युत्पत्तिस्समानस्वभावेति नैकत्र व्युत्पत्तिनियमः कार्यं इत्यर्थः ॥ ७६ ॥

आनन्द०—प्रसङ्गसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—इत्थमिति । द्वितीयामिति उक्तव्युत्पत्तिमूलामपरां व्युत्पत्तिमित्यर्थः । आदिशब्देन निखण्डुपाठादिः । लोकव्यवहारोऽपीति —स्वमूलकाद्यव्युत्पत्तिरपि तत्समानविषयेति सिद्धविषयिणीति भावः । व्युत्पन्नदेवशब्दादिसहपठितानाममरादिशब्दानां हि व्युत्पत्तिर्वाच्या । सा चामरकोशादि वाक्यैः कार्या । तत्रामरादिशब्दाः देवादीनां वाचकाः देवादयो ह्यमरादिशब्दानां वाच्या इति वाक्यार्थः । तथा च पूर्वभेद इत्याह—अयमर्थ इति ।

व्युत्पन्नपदसहपठनसामर्थ्यादिति—व्युत्पन्नैः प्रभिन्नादिशब्दैस्तत्तदर्थे प्रतीते तत्रोचितं ज्ञानं भवतीति भावः । अमरादीत्यादिशब्देन "प्रचरति वनभुवि मलयमरुति रुतमनुतनोति पिकोऽपी" त्यादिपिकशब्दादयः गृह्यन्ते । औचित्यादीत्यादिशब्दार्थः परिशेषः । य एव लौकिकास्त इति—"प्रयोगचोदनाभावादर्थैकत्वमविभागादिति" लोकवेदाधिकरणे लौकिकवैदिकयोश्शब्दयोरर्थयोश्च भेदं पूर्वपक्षीकृत्य एवं प्राप्तेऽभिधीयते य एव लौकिकाश्शब्दास्त एव वैदिकास्त एव तेषामर्थाः" इति भाष्यकारोक्तन्याय इत्यर्थः । वैषम्यं—देवासो ब्राह्मणा इत्यादिवैरूप्यमित्यर्थः । प्रातिशाख्यादिभिरित्यादिशब्देन आपिशलादिसङ्ग्रहः । अत इति—प्रथमं कार्ये व्युत्पत्तिरपिसिद्धे व्युत्पत्तिस्सिद्धे पर्यवस्यतीत्यर्थः । अतश्शब्दार्थं विवृण्वन्निगमयति—बहुभिरित्यादिना मूलं—तत्रैवेति प्रसिद्धपरस्य तच्छब्दस्य प्रातिशाख्यादिकमर्थः ॥ ७६ ॥

---

व्युत्पाद्यं नाप्रतीतं प्रसजति विदिते नैरपेक्ष्यं श्रुतीना-
मिन्द्राद्यर्थे पदानामिति दुरधिगमा नामतेत्यप्ययुक्तम् ।
अप्रत्यक्षेषु सिंहप्रभृतिषु वचनैः कैश्चिदारण्यकोक्तैः
व्युत्पद्यन्ते हि पौराः स्वयमपि च वदन्त्येवमत्रापि वार्ता ॥ ७७ ॥

सर्वार्थः—अस्तु प्रत्यक्षेषु पदार्थेषु एतादृशो व्युत्पत्तिः । अप्रत्यक्षेष्विन्द्रादिषु सिद्धेषु व्युत्पत्तिर्न युज्यत इत्याशङ्कते—व्युत्पाद्यमिति । किमप्रतीते व्युत्पत्तिरुत प्रतीते ? अप्रतीतं तावद्व्युत्पाद्यं न प्रसजति—न भवतीत्यर्थः । प्रतीते व्युत्पाद्ये प्रतीतत्वादेवाप्राप्तार्थप्रत्यायकश्रुतिनैरपेक्ष्यप्रसङ्ग इति । इत्थं सतीन्द्राद्यर्थे पदानां नामता दुरधिगमेति । एतदयुक्तमित्याह—इत्यपीति । अयुक्तिमेवापपादयति—अप्रत्यक्षेष्विति । सिंहादिष्वागमाद्व्युत्पत्तिर्नास्ति; अपि तूपमानात् । अत एवोक्तमुपमानवादिभिः—

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि वा ॥

इति चेत्; दुरुक्तं तु तत्, तादृशस्योपमानस्यैवाभावात्; अन्यथा वैदिकेन्द्रादिशब्दानां नित्याव्युत्पत्तिप्रसङ्गात् नित्यादृष्टत्वादिन्द्रादिजातेः । कथं तर्ह्यप्रत्यक्षे गवयत्वे गवयशब्दव्युत्पत्तिः ? कथं वा प्रत्यक्षत्वप्रसङ्गविधुरेन्द्रादिसामान्ये ? तत्र वक्त्रभिप्रायमाश्रित्य

व्युत्पद्यते । अयं खलु वक्तुरभिप्रायः—सहस्राक्षत्वाद्युपलक्षिता काचिज्जातिरिन्द्रशब्दार्थं इति । तदन्यत्रापि समानम्; गोसादृश्योपलक्षिता काचिज्जातिर्गवयशब्दार्थ इति । किंच वक्त्रभिप्रायानङ्गीकारे प्रत्यक्षेऽपि घटादौ व्युत्पत्तिर्न स्यात् । तथा हि । कश्चित्को घट इति पृच्छति । व्युत्पादकः पुनः अयं घट इति व्यक्तिविशेषं दर्शयति; व्युत्पित्सुश्च तावता व्युत्पद्यते । तत्रैकस्यां व्यक्तौ व्युत्पन्नस्य व्यक्त्यन्तरे घटप्रतीतिर्न स्यात् । वक्त्रभिप्राय एव तत्र शरणम् । एतज्जातीयो घट इति वक्तुरभिप्रायः । तेन तज्जातीये व्युत्पद्यते तदभिप्रायाभिज्ञो व्युत्पित्सुरिति । एवं तर्कसहकृतेन वक्त्रभिप्रायपरिशोधनेन गवयत्वादौ गवयादिशब्दं व्युत्पद्यते व्युत्पित्सुः; किमिह निरर्थकोपमानकल्पनेति । केवलं सिंहादिशब्दव्युत्पत्तिः, व्यवहारोऽपि दृश्यत इत्याह—स्वयमिति । दृष्टान्तदृष्टमर्थं पक्षे योजयति—एवमिति । वार्ताप्रवृत्तिः ॥ ७१ ॥

---

आनन्द०—नन्वतीन्द्रिये व्युत्पत्तिरेव न सम्भवति ततो न वेदस्य मानतेति पूर्वाक्षेपसङ्गतिमभिप्रेत्याह—अस्त्वित्यादिना । इन्द्रादिरित्यादिशब्देन वरुणादेर्ग्रहणम् । अप्रतीतमिति—इदमत्र शक्तमिति हि व्युत्पत्तिग्रहः कथमप्रतीते स्यादिति भावः । अप्राप्तार्थप्रत्यायकेति - एतादृश्याःश्रुतेः प्राप्ते प्रवृत्तेरिति भावः । प्राप्तार्थप्रत्यायकेति कश्चित् । परस्सुगमः नामता—वाचकता ।

ननु मूले आरण्यकोक्तैर्वचनैर्व्युत्पद्यन्त इत्युक्त्या उपमानादेव व्युत्पत्तिरिति गम्यते । तथा च तदपि प्रमाणान्तरमेष्टव्यमिति शङ्कामनूद्य परिहरति—सिंहादिष्विति । स्वोक्तार्थे तार्किकरक्षावचनं संवादयति—अत एवेति ।

ननूपमानं न प्रमाणान्तरं । तत्फलस्य गोसदृशो गवय इति शब्दात्सः गवयशब्दवाच्यः गोसदृशत्वादित्यनुमानद्वारा सिद्धेरित्यत्राह—सादृश्यस्येति—शक्यतावच्छेदकप्रतीतौ सत्यामेव शक्तिग्रहः तत्र प्रतीतं सादृश्यं न प्रवृत्तिनिमित्तं । यन्निमित्तं गवयत्वं तन्न प्रतीतमिति शब्दानुमानाभ्यामुपमानात्प्रार्जनफलसिद्धिरित्यर्थः ।

तादृशस्येति—अतिदेशवाक्यार्थविशिष्टप्रत्यक्षप्रत्यभिज्ञानं ह्युपमानम् तस्याऽसम्भवात्तदर्थस्य शब्दानुमानाभ्यामेव सिद्धिरेष्टव्येत्यर्थः । अन्यथेति—शब्दादिना व्युत्पत्तिग्रहानभ्युपगम इत्यर्थः । तत्र हेतुं वक्ति—नित्येति—सादृश्यविशिष्टपिण्डसाक्षात्कारे हि गवयत्वस्याप्यध्यक्षेणोपस्थितौ शक्तिग्रहं ब्रूषे तदतीन्द्रिये न घटत इति भावः । परिहरति—तत्र वक्त्रभिप्रायमिति । गोसदृश इति—गोसदृशशब्देन गोसादृश्योपलक्षिता जातिस्तात्पर्यवृत्त्याऽभिधीयत इत्यर्थः । एतज्जातीय इति—इदंशब्दस्य तज्जातीयार्थत्वं वाच्यम् । तच्च तात्पर्यवृत्त्येत्यर्थः । फलितमाह किमिहेति ।

ननु प्रयोगहेतुव्युत्पत्तिर्हि वक्तव्या । न चेतादृशस्थले प्रयोग इत्यत्राह—किमिहेति । केवलमिति । पक्षे योजयतीति—इन्द्रादिवैदिकेषु शब्देष्वित्यर्थः ॥ ७७ ॥

**व्यक्तिः शब्दैर्न बोध्या यदि न खलु भवेदन्वितज्ञप्तिसिद्धि-**
**स्तच्छक्तिर्व्यक्तिमात्रे न च भवति यतः स्वोपलम्भादिबाधः ।**
**धर्मो धर्मी च नैकं किमपि न च तयोर्भिन्नयोरप्यभेद-**
**स्तस्मात्तां तद्विशिष्टामभिदधति पदान्यन्यथा गत्यभावात् ॥ ७८ ॥**

**सर्वार्थः**—यदि जातिवाचकत्वं शब्दस्य तर्हि विशिष्टविषयत्वं न स्यात् इत्याशङ्कते—**व्यक्तिरिति** । परिहरति—**न खल्विति** । व्यक्तिविषयत्वाभावे कथमन्वितज्ञप्तिसिद्धिः, अन्वयस्य व्यक्तिनिष्ठत्वात् ? यदि व्यक्तिमात्रे शक्तिः, तच्च न भवति, उपलम्भादिबाधात् । व्यक्तिमात्रे शब्दशक्तावनुवृत्तव्यवहारादिबाध इत्यर्थः । तर्हि धर्मो धर्मी चैकम्, अथवा भिन्नाभिन्नमित्याशङ्क्य पक्षद्वयमपि क्रमेण प्रतिक्षिपति—**धर्म इति, न चेति च** । अतो जातिविशिष्टा व्यक्तिरेव शब्दार्थ इति निगमयति—**तस्मादिति** । तदेवोपपादयति **अन्यथा गत्यभावादिति** । अयमर्थः—केचिच्छब्दा जातिमात्रवाचकाः जातिस्सामान्यमित्यादयः । केचिद्व्यक्तिवाचकाः व्यक्तिस्स्वरूपमित्यादयः । अपरे पुनर्जातिविशिष्टव्यक्तिवाचकाः गौरश्व इत्यादयः । तत्र पूर्वकोटिद्वयविलक्षणतृतीयकोटिवाचकाश्शब्दा जातिविशिष्टव्यक्तिवाचिन इति ॥ ७८ ॥

---

**आनन्द०**—ननु शब्दस्य वाचकत्वाङ्गीकारेऽपि जातिरेव वाच्याऽस्तु इति । प्रसङ्गसङ्गतिमभिप्रेत्याह—**यदीति** । **अन्वयस्येति**—पटमानयेत्यादौ नयत्यादिकर्मत्वं व्यक्तावेव नतु जाताविति भावः । परिहरति—**तच्चेति** । **व्यक्तिमात्रेशक्ताविति** ।

ननु व्यक्तीनां वाचकत्वेऽपि वस्तुगत्या जात्याश्रयत्वादनुगतव्यवहारस्स्यादेव । न च विजातीयेऽपि तत्प्रसङ्गः, वस्तुतस्तज्जात्यवच्छिन्नत्वाभावादिति चेत् । अत्राहुः । तथा सति घटत्वविशिष्टबोधो न स्यात् । स्याच्च घटोऽस्तीति शब्दश्रवणेऽपि घटो वा पटो वेति सन्देहः ।

न च घटशब्दप्रयोगबलादनन्तरं स घट इति जानातीति वाच्यम् । तथाऽपि तस्माच्छब्दादेव तद्विशिष्टबुद्धिस्वीकारे प्रथममेव तथाऽस्तु लाघवात् नत्वान्तरालिकबुद्ध्यन्तरकल्पनं । किञ्च सा बुद्धिश्शाब्दी ? लैङ्गी वा ? नाद्यः । तथात्वे विशिष्टवाचकत्वसिद्धेः । न द्वितीयः । तस्याः व्याप्त्यादिसापेक्षत्वेन नैयत्यत्याभावसङ्गात् । शब्दप्रयोगस्थले द्रव्यत्व पृथिवीत्व प्रमेयत्व प्रकारक प्रतीति नैयत्याभावप्रसङ्गात् । नानार्थादविशेषप्रसङ्गाच्चेति । तर्हीति ।

ननु जातिव्यक्त्योरुभयोरपि शब्दवाच्यत्वं सिद्धमितीयं शङ्का निरर्थिकेति चेन्मैवं । धर्मप्रवृत्ति निमित्तत्वानभ्युपगमादेव महान्भेद इति भावः ।

नन्वन्यथा गत्यभावादित्ययुक्तं जातिस्सामान्यं-घटत्वं घटो व्यक्तिरित्यादिशब्दानां जातिव्यक्तिमात्रवाचकत्वस्य सम्प्रतिपन्नतया तन्न्यायेनाऽन्येषां तथात्वकल्पनोपपत्तेरित्यत्राह—**अयमर्थ इति**। स्वरूपमित्यादय इत्यत्रादिशब्देन स्वयमित्यादयो ग्राह्याः। अश्व इत्यादय इत्यादिशब्देन घटपट इत्यादयः। **तत्रेति**—तत्रगत्यन्तरं न सम्भवतीति भावः। **मूलं स्वोपलम्भादिबाध इति**—स्वस्याऽनुगतव्यवहारस्याऽनुभवसिद्धत्वात्तेन बाधितं व्यक्तिमात्रवाचकत्वमित्यर्थः॥ ७८॥

---

**जातिं व्यक्त्या विहीनां स्पृशति न धिषणा तेन जातौ प्रवृत्ता**
**शक्तिर्व्यक्तिं स्पृशेच्चेत् स्थित इह वचसां तद्विशिष्टावगाहः।**
**जातेर्बोधः स्वहेतोः स्थितिरपि हि भवेत्क्वापि गोत्वोक्तिनीत्या**
**शब्दात्तत्पारतन्त्र्यं स्फुरति यदि पराबोधने तन्न शक्यम्॥ ७९॥**

**सर्वार्थः—कौमारिलास्त्वेवं** प्राहुः—जातिवाचिनश्शब्दा व्यक्तिं लक्षयन्तीति। तदयुक्तमित्याह—**जातिमिति**॥ व्यक्तिशून्यां जातिं कदाचिदपि न स्पृशति धिषणा। तेन जातौ प्रवृत्ता शब्दशक्तिर्व्यक्तिमपि स्पृशतीति वक्तव्यम्। तथा चेद्वचसां जातिविशिष्टव्यक्त्यवगाहनं स्थितमेव। तथा च शक्तिर्विशिष्ट इति भवतैवोक्तं भवति। तदेव विवृणोति—**जातेर्बोध** इति। जातेः प्रतिपत्तिः स्वकारणात्, अवस्थानं च कुत्राप्याधारविशेषे। तत्र दृष्टान्तमाह—**गोत्वेति**। यथा गोत्वशब्दे गोर्भावो गोत्वमिति गोशब्दप्रतिपत्तिमन्तरेण प्रतिपत्तिर्न भवति, गोशब्दमन्तरेण भावविषयस्य त्वप्रत्ययस्यानुत्पत्तिः, एवं गोत्वस्य प्रत्ययस्थिती तदाधारभूत[गो]स्वरूपसापेक्षे इत्यर्थः। अस्तु गोत्वस्य पारतन्त्र्यस्फुरणम्, ततः किं शब्दशक्तेरित्यत आह—**शब्दादिति**। शब्दाद् गोत्वस्य व्यक्तिपारतन्त्र्यं यदि स्फुरति, तदा परस्य व्यक्तिद्रव्यस्याबोधने जातेस्तत्पारतन्त्र्यं शब्देन बोधयितुं न शक्यम्। अतो गवादिशब्दशक्तिर्व्यक्तिपर्यन्तेति॥ ७९॥

---

**आनन्द०**—आक्षेप एव सङ्गतिरित्यभिप्रायेणाह—**कौमारिलास्त्विति**। **व्यक्तिशून्यामिति**—घटत्वादिजातिशब्दजन्या धिषणेत्यर्थः।

केचित्तु प्रत्यक्षजन्या धिषणेत्याहुः। **व्यक्तिं स्पृशतीति**—व्यक्तिस्पर्शाभावे तद्विशिष्टाभिधानासम्भवादिति भावः। **स्वकारणात्**—प्रत्यक्षादिप्रमाणाज्जातेः प्रतिपत्तिः। **कुत्राप्याधारविशेषे**—तथाऽवस्थानञ्चेत्यर्थः। **गोर्भाव इति**—गोर्भाववाचकत्वप्रत्यय इत्यर्थः। **गोत्वमिति शब्दप्रतिपत्तिः**—गोशब्दप्रतिपत्तिमन्तरेण न सम्भवतीत्यन्वयः। पदार्थमुक्त्वा वाक्यार्थमाह—**गोशब्दमन्तरेणेति**—यथेत्यध्याहार्यम्।

केचित्तु यथा गोशब्दमन्तरेणेति पाठमाहुः। प्रत्ययश्च स्थितिश्च प्रत्ययस्थिती। अल्पाच्तरत्वेऽपि पूर्वनिपातशास्त्रस्याऽनित्यत्वान्निर्देशोपपत्तिः। **मूलं गोत्वोक्तीति**—गोत्वशब्दस्योक्तिरित्यर्थः॥ ७९॥

जातौ शक्तिलंघुत्वात् भवति च वचसां भाषणं जातिमात्रे
भेदो निष्कर्षकेभ्यस्त्विह परमजहल्लक्षणाया निरूढिः ।
इत्युक्तं कैश्चिदेवं यदि भवति तदोपाधिशब्देऽपि नीति,
र्मन्दं वैषम्यमात्रं भवतु च नियतिः प्रत्ययैर्लक्षणायाः ॥ ८० ॥

**सर्वार्थः**—उक्तमपि दूषणं सम्यगजानानः पूर्वपक्षी लघुत्वावलम्बनेन लक्षणापक्षं पुनर्द्रढयति—**जाताविति** ॥ अयमर्थः—जातावेव शक्त्यङ्गीकारे शब्दस्य शक्तिलाघवं भवति; अतो वचसां भाषणम्—अभिधानं जातिमात्रे । तर्हि गोत्वशब्दात् गोशब्दस्य जातिवाचित्वे को भेदः ? तत्राह—**भेद इति** । गोत्वशब्दो गोत्वजातिमेव प्राधान्येनाह; गोशब्दस्त्वनिष्कर्षकत्वादजहल्लक्षणानिरूढ्या गोत्ववत् तदाधारभूतां गामपि प्रकाशयति । अयमेव निष्कर्षकानिष्कर्षकभेदः । इमं पक्षमनुवदति—**इत्युक्तं कैश्चिदिति** । एतत्प्रतिबन्द्या दूषयति—**एवमिति** । तर्हि उपाधिशब्देऽपीयं नीतिरनुसन्धेया; तत्राप्युपाधावेव शब्दशक्तिः उपाधिमति निरूढलक्षणेति । तदेतदाह—**तदेति** । गवादिशब्दस्तु जातिशब्दः, अन्यस्तूपाधिशब्द इयि वैषम्यं मन्दमेव; प्रयोजकं न्यायसाम्ये वैषम्यमात्रस्याप्रयोजकत्वात् । अत उपाधिशब्दवज्जातिशब्दस्यापि धर्मिपर्यन्ताभिधानमपरित्याज्यम् । कथं तर्हि गङ्गायां घोष इत्यादिषु लोके लाक्षणिकव्यवहारनियमः ? तत्राह—**भवत्विति** । प्रतीतिरेव हि सर्वत्र शरणम्; प्रतीतिश्च व्युत्पत्त्यधीना; व्युत्पत्तिश्च व्युत्पादकपारम्पर्यादेव नियता; व्युत्पादकाश्च गोशब्दं गोत्वाधारद्रव्यविषयतया व्युत्पादयन्ति; गोत्वशब्दं पुनर्भावविषयतया । अतो निष्कर्षकानिष्कर्षकनिर्णयसिद्धिरिति ॥ ८० ॥

---

**आनन्द०**—गतार्थत्वशङ्कां व्युदस्यन्नाक्षेपसङ्गतिमाह—**उक्तमपीति** ।

ननु विशिष्टवाचित्वेऽपि जातौ शक्तिरस्त्येवेति किमत्र साध्यते-पूर्वोत्तरपक्षयोस्तुल्यत्वादित्यत्राह—**अयमर्थ इति** ।

ननु तर्हि गोशब्दाद्भावप्रत्ययो न स्यात् गोशब्दप्रयोगप्रसङ्गे गोत्वशब्दस्यापि प्रयोगस्स्यादिति शङ्कते— **तर्हीति** । **गोशब्दस्त्विति**—तथा च भावप्रत्ययो नीलादिशब्दवद्युक्त इति भावः । निरूढलक्षणावत्त्वे निष्कर्षकत्वं, तद्रहितत्वेऽनिष्कर्षकत्वमिति भेद इत्याह—**अयमेवेति** । **जातिशब्दः**—घटादिशब्दः । **उपाधिशब्दाः**—भूतमूर्तकार्यकारणादिशब्दाः ।

ननूपाध्यादिशब्देऽप्युपाध्यादिमात्रवाचकत्वमस्तु । एवं क्रियाशब्देऽपीति चेत् । मैवं । उपाध्यादिशब्दानां विशिष्टवाचकत्वमिति तत्सिद्धान्तात् ।

किञ्च सर्वशब्दस्यापि विशिष्टार्थबोधकत्वध्रौव्ये निरूढत्वमेव वक्तृकत्वं स्यात् : व्यक्तिवाचकत्वमेव वा शब्दानां जातौ वा निरूढलक्षणा स्यात् ।

नचानुगतव्यवहारानुपपत्तिः लक्षणात एव तदुपपत्तेरित्येतदभिप्रायेणैवाह—अत उपाधिशब्दवदिति। नन्वेकत्र लक्षणाङ्गीकारे उपाधिशब्देऽपि स्यादिति प्रतिबन्द्यनुपपन्ना। गङ्गाशब्दे लक्षणाङ्गीकारेऽपि मधुरायां जन इत्यत्र लक्षणानङ्गीकारादित्याशङ्कते—कथं तर्हीति। प्रतीतिरेव हीति—यत्र मुख्यार्थानुपपत्त्यादिप्रतिसन्धानपूर्वकमेव प्रतीतिः तत्र लक्षणा नियता। यथा घोषपदसमभिव्याहार एव गङ्गापदस्याऽनुपपत्तिप्रतिसन्धानाल्लक्षणानियमः। यत्र तु मत्स्य इत्यादावनुपपत्तिप्रतिसन्धानं विना प्रवाहरूपार्थप्रतीतिस्तत्र मुख्यव्युत्पत्ति रित्यर्थः।

नन्वेवं द्विरेफपदादौ लक्षणा न स्यादिति—चेन्न। तत्रापि भ्रमरपदप्रतीतिपूर्वक प्रतिपत्तिसम्भवेनाऽवयवशक्त्यतिरिक्तशक्तिकल्पनायां मानाभावाल्लक्षणाङ्गीकारात्। गङ्गापदे क्वचिदनुपपत्ति प्रतिसन्धानाऽभावेऽपि घोषबुद्धिशक्तिभ्रममूलिकेतिभावः। व्युत्पत्तिश्चेति—अनन्यथासिद्धानादिव्यवहारादिनियतेत्यर्थः।

लक्षणायामनादिपारम्पर्यंन्नास्ति। वैदिकेष्वप्यन्यत्र शक्तस्यादित्यादिशब्दस्य यूपादिषु लक्षणयाऽन्यथासिद्धप्रयोगस्य न शक्तिरिति भावः॥ ८०॥

---

मत्वर्थीयानुशिष्टिर्गुणवचनगणे वैभवात्स्यादसौत्री
शक्तिस्तत्रापि तत्तद्गुणवति नियता जातिशब्दाविशेषात्।
निष्कृष्यैषां प्रयोगे क्वचिदवगतितया द्रव्य[शक्ति]वृत्तिर्निरुद्धा
शक्तिस्साम्ये विभक्तेस्तदवधिररुणाधिक्रियायामभाषि॥ ८१॥

सर्वार्थं—एवं जातिशब्दवत् गुणशब्दस्यापि द्रव्यपर्यन्ताभिधानम्। कथं तर्हि गुणवाचिशब्दे मत्वर्थीयप्रत्ययः शुक्लवान्मधुरवानित्यादि? तत्राह—मत्वर्थीयेति। द्रव्यपर्यन्ताभिधानशक्तिमस्तु गुणवचनेषु मत्वर्थीयाभिधानं वैभवादेव; न पुनर्मत्वर्थीयप्रत्ययावश्यंभावात्। असौत्री—तथा सूत्रकारोपदेशाभावादित्यर्थः। यत्र शुक्लवान्मधुरवानिति मत्वर्थीयव्यवहारः, तत्रापि शब्दशक्तिर्धर्मिपर्यन्ता, जातिशब्दाविशेषात्; जातिशब्दवत् गुणवाचिनोऽपि तस्य धर्मिपर्यन्ताभिधानशक्तेरपि विद्यमानत्वात्। द्वयी हि प्रवृत्तिश्शुक्लादिशब्दानां लोकव्यवहारानुरोधेन कदाचित् गुणमात्रपरत्वं शुक्लो गुण इति; कदाचिद्गुणिपर्यन्ताभिधानं शुक्लः पट इति। एषां शुक्लादिशब्दानां निष्कृष्य प्रयोगे द्रव्यपर्यन्ताभिधानशक्तिर्निरुध्यते। तदा मत्वर्थीयप्रत्यययोगः स्यात्। विभक्तेः साम्ये—समानाधिकरणप्रयोगे पटः शुक्ल इत्यादौ द्रव्यपर्यन्ताभिधानं शारीरकशास्त्रनिर्णीतारुणाधिकरणन्यायेन भाष्यकारैरेवाभाषीत्यर्थः। अत एव गुणो शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति असौ त्रिलिङ्गनियमोऽप्युपपद्यते॥ ८१॥

आनन्द०—प्रासङ्गिकी सङ्गतिरित्याह – एवमिति। गुणशब्दस्य गुणवाचि-शुक्लादिशब्दस्येत्यर्थः। कथं तर्हीति—गुणशब्दानां द्रव्याभिधायित्वेन वैयर्थ्यादनन्वयाच्चेति भावः। गुणवानिति क्वचित्पाठः। तदा दृष्टान्ताभिप्रायः यथा गुणवानिति-मत्वर्थीयप्रत्ययः तथा मधुरवानित्यादि तन्न स्यादित्यर्थः। अस्मिन्पाठेऽपि शुक्लादि-शब्दानां लोकव्यवहारानुरोधेनेत्याद्युत्तरग्रन्थो दार्ष्टान्तिकपरतया न विरुद्ध्यते। सूत्रकारोपदेशाभावादिति।

ननु गुणवचनेभ्यो मतुब्लोपानुशासनं मतुबनुशासनं साधयतीति कथं सूत्रकृदु-पदेशाभाव इति चेत्। अत्राहुः। लोपो ह्यत्र प्रयोगसाधुत्वाय। प्रयोजनाभावात्। उपमानसमास इवार्थस्येव प्रकृत्यैव तत्संबन्धस्योक्तेरुक्तार्थानामप्रयोग इति हि शाब्दाः। तथा च नानुशासने लिङ्गमिति। यत्र शुक्लवानिति। यद्यपि मतुप्प्रयोगो नास्त्येव। तथापि न कर्मधारयान्मत्वर्थीय इति न्यायेन निवृत्तावपि कर्मधारये क्वचित् कोकप्रीतिचकोरपारणपटुज्योतिष्मतीत्यादौ मतुब्दर्शनमिव शुक्लवानिति दृश्येत तदाऽपि न दोष इत्यर्थः। यद्वा उपदेशाभावादित्यनुपपन्नं अर्शादिगणे वर्णवाचिपदपाठेन शुक्लादिशब्दानामुपादानात्—"प्राणिस्थादातो लजन्यतरस्या"मित्यनुवृत्तेश्च मतुप उपदेशादित्यत्राह— शुक्लवानिति। लोपात्पूर्वभाविनोऽनुवादश्शुक्लवानिति। अर्थनिर्देशो वा शुक्लवानिति मत्वर्थव्यवहार इत्यर्थः। स व्यवहारः—शुक्लो घट इति भावः। गुणवाचिनोऽपीति— शुक्लादिशब्दस्येत्यर्थः।

ननु तर्हि शुक्लो गुण इत्यत्र द्रव्यपर्यन्ताभिधानं स्यादित्यत्राह— निष्कृष्येति— निष्कर्षकशब्दे कदाचिद्धर्ममात्रप्रतिपादकत्वमभिमतं न तु स्वाभाविकं निष्कृष्टत्वमिति ;

मत्वथर्थीयप्रसक्तिमाह—तदेति। ननु शुक्लः पट इति प्रयोगो न स्यात् द्रव्यशब्दप्रयोगे गुणशब्दानां गुणमात्रपरत्वेन निष्कर्षकत्वात्। तथा च मत्वर्थीयं विना सामानाधिकरण्यं न स्यात्। अत एवाऽरुणाधिकरणे उपात्तद्रव्यके गुणमात्रपरत्वं प्राभाकरा अभ्यधुरित्यत्राह—विभक्तेस्साम्य इति। अरुणया क्रीणातीत्यत्रारुणाशब्दः एकहायन्या समानाधिकरणस्सन् क्रयसाधनीभूतद्रव्यावच्छेदकतया क्रयान्वयीति ब्रह्मसूत्रभाष्ये द्रव्यपर्यन्तत्वमुपपादितमित्यर्थः। लक्षणया द्रव्यपरत्वं दूषयति— अत एवेति—लाक्षणिकत्वे विशेष्यानुसारित्वं न स्यात्। गङ्गायां नगरे तुरगा इत्यादिवत्। तस्मान्मुख्यत्वमिति भावः। मूलं क्वचिदगतितयेति—वैयधिकरण्यस्य घटस्य शुक्ल इत्यादावन्यथानुपपत्तेरित्यर्थः॥ ८१॥

जीवं देवादिशब्दो वदति तदपृथक्सिद्धभावाभिधाना-
न्निष्कर्षाभावयुक्ताद् बहुरिह च दृढो लोकवेदप्रयोगः।
आत्मासंबन्धकाले स्थितिरनवगता देवमर्त्यादिमूर्तेः
जीवात्मानुप्रवेशाज्जगति विभुरपि व्याकरोन्नामरूपे ॥ ८२ ॥

**सर्वार्थः**—एवं जातिगुणवाचिनोर्द्रव्यपर्यन्तत्वमुक्तम्। इदानीं द्रव्यवाचिनां देवादिशब्दानामात्मपर्यन्तत्वमुच्यते—जीवमिति। देवादिशब्दो जीवं वदति; जीवापृथक्सिद्धदेवादिशरीररूपभावाभिधानान्निष्कर्षकविवक्षाविधुरत्वात्। अत्र किं प्रमाणमित्यत्राह—बहुरिति। सर्वत्रापि शब्दार्थनिर्णये विशिष्टप्रयोग एव शरणम्। अस्ति च देवादिशब्दानामात्मपर्यन्ताभिधाने लोकप्रयोगः; देवो मनुष्यः पशुर्मृग इत्यादि। तथा वेदप्रयोगोऽपि—चत्वारः पञ्चदशरात्रा देवत्वं गच्छन्तीति; वाचिकैः पक्षिमृगतामित्यादिः। अत्रापृथक्सिद्धविशेषणत्वमेव व्यवहारनियमे तन्त्रम्। अस्ति चापृथक्सिद्धत्वं शरीरिणा शरीरस्य; तदिदमाह—आत्मासंबन्धकाले देवमनुष्यादिमूर्तेः स्थितिरनवगतेति। न हि मृतस्य शरीरं क्षणमपि तत्संस्थानसंस्थितमवतिष्ठते। न केवलं लोकप्रसिद्धिः, जीवात्मानमनुप्रविश्य नामरूपे व्याकरोदीश्वर इति हि वेदप्रसिद्धिः। अतोऽचिच्छरीरको जीवः, अचिज्जीवशरीरक ईश्वर इति चेतनाचेतनशब्दानां भगवत् पर्यन्ताभिधानं युक्तमिति भावः ॥ ८२ ॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमभिप्रेत्याह—एवमिति। देवादिशब्द इति—पक्षनिर्देशः। जीवं वदतीति साध्यः। निष्कर्षकविवक्षाविधुरतदपृथक्सिद्धधर्मवाचकत्वादिति हेतुः। उभयसम्प्रतिपन्नजीवादिशब्दवदिति दृष्टान्तः यद्वा यत्पदं उक्तविशेषणे सति यदपृथक्सिद्धधर्मबोधकं तत्तद्वाचकमिति। यथा नीलादिशब्द इति सामान्य व्याप्तिरभिप्रेता। जीवबोधकमिति साध्यनिर्देशः प्रकृताभिप्रायः। अत्र शक्तिभ्रमाभावे सति वृत्यन्तरवत्त्वनिश्चयाभावे सति मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्याभावनिश्चयरहितत्वम् तद्विवक्षाविधुरत्वम्। इतरसमभिव्याहारादि निरपेक्षधर्मविशेष्यकप्रत्ययजनकत्वसंशयनिवर्तकप्रतीतिविषयशब्द। वं वा निष्कर्षः शब्दस्य। विवक्षाशब्दो व्युत्पत्तिपरः।

केचित्तु धर्ममात्रप्रतिपादनशक्तिर्निष्कर्षः। तद्विवक्षातया विधुरः घटस्य शुक्ल इत्यादौ व्यभिचारवारणाय तद्विशेषणं फलोपहितत्वञ्च साध्यं विवक्षणीयमित्याहुः। विशिष्टप्रयोगोऽभियुक्तप्रयोगः। देवो मनुष्यइत्यादिः।

नन्वत्र शरीरमात्र एवायं प्रयोगोऽस्तु। तस्यैव परप्रत्यक्षसिद्धस्य तज्जन्यबोधविषयतया तच्छक्यत्वादिति चेत्। अत्राहुः। देवश्शरीरं त्यजति पशुः कलेबरं त्यजतीति-

शरीरस्य देवादिशब्दवाच्यत्वात्पृथक्त्वावगमेन बाधकाभावेऽपि राहोश्शिर इतिवद्व्यवहारगतगौणकल्पनाया अयोगात् । न च लौकिकानामभेदबुद्धिर्बाधिका पामराणामपि मृते मनुष्ये स्थिते शरीरे च गत इति प्रतीत्या बाधितत्वेनाऽबाधकत्वात् । गतो नात्र देवदत्तस्तच्छरीरमात्रं न्तिष्ठतीति व्यवहारस्य कथञ्चिदपि निर्वाहासम्भवाच्चेति । आदिशब्देन ब्राह्मणादिपरिग्रहः । **चत्वार इति**—पञ्चदशरात्रनामकक्रतुफलं देवत्वमिति । शरोरस्य विनष्टत्वेन जीवस्यैव देवत्वं सिद्धमिति तद्वाच्यत्वं सिद्धमिति भावः । **वाचिकैरिति**—पक्षि मृगत्वादिकं न शरीरस्येति भावः

ननु देवत्वादि प्रवृत्तिनिमित्तं तद्वत्वञ्च-किं साक्षात्संबन्धेन ? उत परम्परासंबन्धेन ? यद्वा साधारण्येन ? । नाद्यः । जीवे तदभावात् । न द्वितीयः । घटादीनां घटशब्दवाच्यत्वाभावप्रसङ्गात् । भूतलस्य घटादिशब्दवाच्यत्वापाताच्च । अतएव न तृतीयोऽपीत्याह—**अत्रेति** –साक्षात्परम्परौदासीन्येनाऽपृथक्सिद्धप्रवृत्तिनिमित्तवत्वं तन्त्रम् । तथा च नाव्याप्त्यतिव्याप्ती इति भावः । यस्य यद्वस्तुनो पृथगवस्थानाभावस्तस्य तदपृथक्सिद्धत्वं विवक्षितम् । तेन गुणवाचिनां शब्दानां द्रव्यवाचकत्वेऽपि द्रव्यवाचिनां न गुणवाचित्वं-गुणिनो गुणेनाऽपृथक्सिद्ध्यभावात् ।

यत्तु केन चिदुक्तं अयुतसिद्धत्वमेवापृथक्सिद्धत्वं । तथा च गुणिनोऽपीति द्रव्यवाचकानामपि गुणवाचकत्वमस्त्येव । यथा द्रव्यवाचकस्य नीलादिशब्दस्य नीलगुण वाचकत्वं दृष्टम् ।

न च घटादिशब्दस्यापि गुणवाचकत्वप्रसङ्गः । गुणनैल्यादिशब्दवन्निष्कर्षकत्वेन निरासादिति । तदप्यनेन निरस्तम् । अपृथक्सिद्धधर्मिवाचकत्वप्रयुक्तधर्मवाचकत्वकल्पने नीलशब्दस्य रक्त-शौकल्य-गन्धपरिमाणादिवाचकत्वप्रसङ्गः-गुणनैल्यापृथक्सिद्धत्वाविशेषात् । नचात्र निष्कर्षकत्वादिना निरासः । तथा सति नैल्यवाचकत्वस्याऽप्यभावापातात् । नचापृथक्सिद्धयत्प्रवृत्तिनिमित्तकश्शब्दो यः सः तत्प्रवृत्तिनिमित्तस्य प्राधान्येन वाचक इनि नातिप्रसङ्ग इति। तथा सति घटादिशब्दादेव घटत्वादि बोधकत्वप्रसङ्गः ।

किञ्च धर्मिसम्बन्धस्य प्रयोजकत्वे घटस्य शुक्लो गुण इत्यत्र धर्मिणः प्रकारतापत्तिः । तदप्रकारत्वे अनिमित्तकत्वमेव न स्यात् । परन्तु व्याप्तिमात्रमिति सिद्धान्तस्यानुग्राहकत्वमात्रं स्यादिति न किञ्चिदेतत् ।

ननु जीवस्योत्क्रमणानन्तरमपि शरीरस्य सत्वात्कथमपृथक्सिद्धत्वमित्यत्राह—**नहि मृतस्येति**—जीवात्मपरित्यागानन्तरं देहस्यानवस्थितिर्न लोकमात्रसिद्धा । अपि त्वनेन जीवेनेति जीवानुप्रवेशपूर्वकत्वस्य जीवद्वारा नामरूपयोस्स्वपर्यन्तसिद्ध्यर्थं तया जीवाभावे रूपस्यावस्थानमेव नास्तीति न पृथक्स्थितिर्गम्यत इत्याह न केवलमिति ।

अन्ये तु देवादिशरीरवाचकस्याचिद्विशिष्ट जीवबोधकत्वं श्रुतिसिद्धञ्चेत्याह— न केवलमितीत्याहुः। साधितस्याऽर्थस्य प्रयोजनमाह—अत इति। यथा शरीररूपाचिद्वाचिनां जीवाभिधायकत्वं तथा तदुभयवाचिनां परमात्माभिधायकत्वं तच्छरीरत्वेन तदपृथक्सिद्धत्वादित्यर्थः।

ननु सर्वशब्दानां भगवत्परत्वे "वसन्ते ब्राह्मणोऽग्नोनादधीत" "ब्राह्मणो न सुरां पिबेदित्यादि विधिनिषेधशास्त्रवश्यस्स्याच्छब्दस्य साधारण्यादिति चेत्। अत्राहुः। एकमेव प्रवृत्तिनिमित्तं देवत्वादि, तद्विशिष्टबोधो जीवब्रह्मसाधारण इत्येकः पक्षः। जोवे देवत्वविशिष्टबोधो ब्रह्मणि देवत्वविशिष्टबोध इति द्वितीयः पक्षः। एवञ्च समानशक्तिपक्षे शक्तिभेदेऽपि साधारणस्य स्वर्गकामपदस्य "आहवनोये जुहोतीति होमपदस्य "न हिंस्या" दिति हिंसापदस्य च त्रैवर्णिकपदहोमाऽग्नोषोमीयहिंसादिपरत्ववदकर्मवश्यत्व शास्त्रवश्यत्वाऽपहतपाप्मत्वादिबोधकागमबलाज्जीवमात्रपरत्वमिति न कोऽपि दोष इति।

अन्ये तु जोवविशिष्टतया कर्मवश्यत्वादिकमस्तु—जगदुपादानत्वेऽपि विकारतदभावयोरिव कर्मवश्यत्वतदभावयोरुपपत्तेः।

नचैवं दुःखानुभवस्स्यात् साक्षात्संबन्धस्याऽपि सत्वेन तत्कर्माधीनत्वाद्दुःखस्येति वाच्यम्। साक्षात्संबन्धेनैव स्वगतत्वस्य नियामकत्वाज्जीवद्वाराऽपि सम्बन्धादिति। अथवा जीवानुभवस्यैव तदनुभवत्वेनाऽऽपादनासम्भवादित्याहुः॥ ८२॥

---

संस्थानैक्याद्यभावे बहुषु निरुपधिर्देहशब्दस्य रूढि,
लोकाम्नायप्रयोगानुगतमिह ततो लक्ष्म निष्कर्षणीयम्।
अव्याप्त्यादिदुःस्थं परमतपठितं लक्षणं तत्र तस्मा-
द्धीतुल्याश्रयं यद्वपुरिदमपृथक्सिद्धिमद्द्रव्यमस्य॥ ८३॥

**सर्वार्थः**—अत्र देवादिशब्दानां सर्वशरीरित्वेनावस्थितपरमात्मपर्यन्तत्वमुक्त्वा भगवतस्सर्वशरीरित्वसिद्ध्यर्थं शरीरलक्षणं लक्षयति—संस्थानेति॥ अयमत्र भावः—संस्थानैक्यं जात्यैक्यं कारणैक्यं कार्यैक्यमित्यादिनियामकविशेषाभावेऽपि देवमनुष्यपशु-[मृग]पक्षिसरोसृपवृक्षगुल्मलतादिषु शरीरशब्दस्य रूढिरुपलभ्यते। अत्र च लोकाम्नायप्रसिद्ध्यनुगुणं लक्षणमिह निष्कर्षणोयम्। इदं तु सर्वसाधारणन्यायप्रदर्शनम्। अत्र चेष्टेन्द्रियार्थाश्रयश्शरीरमिति परमतपठितं लक्षणमव्याप्त्यादिदोषदुष्टम्। तथा हि—प्रयत्नवदात्मसंयोगासमवायिकारणिका क्रिया चेष्टा। यदाहुः—चेष्टा हिताहितप्राप्तिपरिहारार्थः स्पन्द इति। इदं च लक्षणमीश्वरशरीरतया श्रुतिप्रमितेषु कालादिषु नास्तीत्यव्याप्तिः। तथा प्रतिक्षणपरिणामिषु निद्राण-कुम्भकर्णादिशरीरेष्वव्याप्तिस्सुप्रसिद्धा, कुम्भकर्णशरीरे जागरावस्थायां चेष्टाऽस्ति चेत् किमनेन, शरीरान्तरमेव तत्;

अन्यथाऽऽहारपरिपाकविशेषेण प्रतिक्षणपरिणामकथनस्य भावत्कस्योद्भ्रान्तजल्पितत्व-प्रसङ्गात्। चेष्टाश्रयसजातीयत्वं शरीरत्वमिति चेत्, केयं जातिः? शरीरत्वमेवेति चेन्न; शरीरत्वजातेरभावात्; अन्यथा त्वदुक्तजातिसङ्करप्रसङ्गात्। न हि शरीरत्वस्य पृथिवी-त्ववत् परापरभावो निरूपयितुं शक्यते। शरीरत्वव्यतिरिक्ता काऽपि जातिरिति चेत्; साऽपि सङ्करदोषेण परास्यते, तुल्यन्यायत्वात्। तर्हि जातिं मुक्त्वा चेष्टाश्रयसालक्षण्यं शरीरलक्षणमिति वदाम इति चेत्; किं तत्सालक्षण्यम्? शरीरलक्षणलक्षितत्वमिति चेन्न; शरीरलक्षणस्यैव निरूप्यमाणत्वात्। न ह्यद्यापि शरीरलक्षणं निरूपितं, येनैतत्परिग्रहा-न्निद्राणशरीरस्य शरीरत्वमुपपाद्येत। यदा कदाचिच्चेष्टाश्रयत्वं शरीरलक्षणमिति वचन-मत्यन्तजघन्यमेव; निद्राणशरीरस्य कदाचिदपि चेष्टाश्रयत्वाभावात्। चेष्टाश्रयत्वार्हत्व-मिति चेत्, तदपि न; नित्यानुपलब्धचेष्टस्य निद्राणशरीरस्य चेष्टाश्रयत्वार्हताया अभा-वात्। अथापि शरीरजातीयत्वादस्त्यर्हतेति चेन्न; जातेर्निरस्तत्वात्; अद्यापि शरीरशब्दा-र्थनिरूपणेन तज्जातीयत्वस्य वक्तुमेवाशक्यत्वात्। किंच शरीरावयवानां चेष्टाश्रयत्वेन शरीरत्वप्रसङ्गः। अत एवान्त्यावयवीति विशेषयाम इति चेन्न; शरीरोपष्टम्भकेषु भूतान्तरेष्वपि प्रसङ्गात्। तेषामन्त्यावयवित्वं नास्तीति चेन्न; तैरारभ्यस्यावयव्यन्तर-स्यादर्शनात्। कालान्तरे भविष्यतीति चेत् तर्हि शरीरारभ्यमप्यवयव्यन्तरं कालान्तरे भविष्यतीति तत्राप्यन्त्यावयवित्वं न स्यात् तर्ह्युपष्टम्भकानां चेष्टाश्रयत्वमेव नास्तीति चेत्, शरीरस्यापि तर्हि चेष्टाश्रयत्वं न स्यात्। न ह्युपष्टम्भकमन्तरेण शरीरमपि चेष्टते। किंच प्रयत्नवदीश्वरसंयोगासमवायिकारणेषु भूकम्पादिषु पृथिव्यादीनामीश्वर-शरीरत्वं भवतैवाङ्गीकृतं स्यात्। तत्रादृष्टवदात्मसंयोगोऽसमवायिकारणम्, अदृष्टवांश्च जीवः। अतो नेश्वरसंयोगासमवायिकारणकत्वमिति चेत्; को ब्रवीति नियमम्? ईश्वर-संयोगस्यापि कारणत्वात्, असमवायिकारणलक्षणोपेतत्वात्। तल्लक्षणलक्षितत्वेऽपि तत्कारणत्वाभावे जीवसंयोगोऽप्यसमवायिकारणं न स्यात्। इत्थं भोगाश्रयत्वमपि दुष्टम्, पूर्वोक्तदूषणकलापदूषितत्वात्। इन्द्रियाश्रयत्वमपि शोधयामः। अत्राश्रयत्वं समवायि-कारणत्वं चेदिन्द्रियावयवेषु व्यभिचारः। वस्त्वन्तरसमवायिकारणत्वेऽन्त्यावयवित्वमपि व्याहन्येत। संयोगित्वमात्रं चेत्, पूर्वोक्तदूषणकलापान्न मुच्यते। किंच इन्द्रियान्तरसंब-न्धनियते त्वगिन्द्रिये व्यभिचार; तथा त्वगिन्द्रियसंबन्धिनियतेष्विन्द्रियान्तरेष्वपि व्यभि-चारः। उत्पाटितस्याक्ष्णस्त्वगिन्द्रियसंबन्धनियमो नास्तीति चेन्न; उत्पाटनावस्थाया-मेवाक्ष्णः स्वावयवसंक्षोभेण विनष्टत्वेनाक्षणस्सद्भावाभावात् केवलं गोलकमात्रमुपल-भ्यते। एवं त्वगिन्द्रियोपष्टम्भकेष्वपि व्यभिचारो वाच्यः। शरीरमेव त्वगिन्द्रियोपष्टम्भ-कमिति चेत्; तर्हि शरीरोपष्टम्भकेषु व्यभिचारस्तदवस्थ एव। ईश्वरशरीरतया श्रुतिशत-प्रसिद्धेषु पृथिव्यादिष्वेतल्लक्षणमस्ति चेत्, अविवाद एव; प्रपञ्चवाचिनां शब्दानां परब्रह्मपरत्वेऽपि विरोधाभावात्। नास्तीति चेत्, श्रुतिविरुद्धत्वादलक्षणमेव। श्रुतिरेव गौणीति चेत् किममूलमेव? अथवा केनचित्प्रमाणेन? अमूलं चेत् शब्दार्थसंबन्धनियम-व्यवहारस्यासंबन्धत्वप्रसङ्गः। केनचित्प्रमाणेनेति चेत्, किं तत्प्रमाणम्? श्रुतिप्रयोग-

इति चेत्, स पुनरस्मदीय एव; विश्वशरीरत्वस्य श्रुतिशतसिद्धत्वात् । अस्मत्कल्पितलक्षण-विरोधात् श्रुतेर्गौणत्वं कल्पयाम इति चेन्न; परस्पराश्रयात्; युष्मल्लक्षणस्य लक्षणत्वे श्रुतेर्गौणत्वम्; तद्गौणत्वे च भवदुक्तलक्षणस्य लक्षणत्वमिति । एवमनेकविधदोषदुष्टत्वात् परकल्पितलक्षणप्रहाणेन सर्वप्रयोगानुगुणं शरीरलक्षणं वाच्यमित्याह—**अव्याप्तेति** । किं तल्लक्षणमित्यत्राह-**तस्मादिति** । तथा हि *यस्य चेतनस्य यत्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यमिति लक्षणद्वयमुक्त्वा, *तच्छेषतैकस्वरूपं चेति तृतीयमपि लक्षणमाहुर्भाष्यकाराः । अत्र यस्येति प्रतिसंबन्धिनियमनिर्देशादन्यशरीरस्यान्यं प्रति शरीरत्वं निरस्यते । चेतनस्येति चैतन्यविशिष्टतया प्रतिसंबन्धिनिर्देशात् धर्मभूतज्ञानस्य शरीरत्वं निरस्यते । नहि ज्ञानं ज्ञानविशिष्टस्याऽऽधेयविधेयशेषभूतम् । द्रव्यमिति गुणक्रिय-योर्निरासः । सर्वात्मनेति दण्डकुण्डलादीनां गर्भदासादीनां च निरासः; तेषां कदाचिदेवा-धेयत्वाद्विधेयत्वात् । शक्यमिति योग्यतामात्रकथनेन रुग्णशरीरेऽव्याप्तिपरिहारः । रुग्णस्यापि शरीरस्य धारणादियोग्यताऽस्ति रोगानुबन्धाद्धारणादिकं प्रतिबध्यते; रोगनिवृत्तौ तदेव योग्यत्वं निष्प्रतिद्वन्द्वमवतिष्ठत इति भावः । इत्येषा दिक् ॥ ८३ ॥

---

**आनन्द०—औपोद्घातिकीं सङ्गतिं दर्शयति—अत्रेति** ।

ननु संस्थानस्यैकस्याऽभावेऽपि घटत्वादिवज्जातिरुपाधिर्वाऽनुगतस्सम्भवतीति रूढिनिमित्तत्वलक्षणत्वसम्भवान्न पृथिव्यादेः परमात्मशरीरत्वमित्यत आह—**अयं भाव इति** । कार्यैक्यमित्यादीत्यादिशब्देन सादृश्यादिग्रहः । लतादिष्वित्यत्रादिशब्देन तृणादीनां ग्रहणम् । "याति स्थावरतां नरः" श्मशाने पादपो भूत्वेत्यादिना वृक्षगुल्मा-दीनां चेतनशरीरत्वाद्रूढिरुपलभ्यत इति । तथा च प्रवृत्ति निमित्तंकिञ्चिदनुगतं वाच्य-मिति भावः । **इदं हीति** सिद्धान्तमात्रं हि कर्तुं युक्तं परीक्षकैः न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमिति शास्त्रकारवचनादिति भावः । **अत्र चेष्टेन्द्रियेत्यादि**—अर्थशब्देन प्रयोजनवाचिना भोगोऽभिप्रेतः । 'भोगायतनं शरीरं" चेष्टाभोगेन्द्रियाश्रय-श्शरीरमित्युक्तेः । **इदञ्चेति**—प्रयत्नवतोऽपीश्वरस्य तत्संयोगस्समवायिकारणं न भवति मानाभावात् । कालस्य विभुतया तन्मते क्रियाविरहात् । विकारादिक्रियावादिमतेऽपि हिताहितप्राप्तिपरिहारयोरभावादिति भावः । नन्द्यादित्वान्निद्राणशब्दस्साधुः । द्रातिमुभयपदिनमन्ये मन्यन्ते आदिशब्देन काष्ठाभारतुलादेर्ग्रहणम् । **अन्यथेति** । किरणावल्यां पञ्चभिर्भूतैस्सह पूर्वपूर्वशरीरादुत्तरोत्तरमारभ्यते ततो बाल्यादिशरीरेभ्यो यौवनादिशरीरस्य भेद इत्याद्युक्तेरिति भावः ।

शरीरत्वजातित्वाभावे हेतुमाह—**अन्यथेति**—पञ्चभिर्भूतैरारब्धत्वस्य प्राक् स्थापनेन जातिचतुष्टयापत्त्याऽस्यसाङ्कर्यापत्तेः ।

ननु तत्र पृथिवीत्वादिकं नास्त्येव । यथा गोमयारब्धे वृश्चिके गोमयत्वं नास्ति येन सङ्करस्स्यात् । किन्तु जात्यन्तरमिति चेन्न । केषाञ्चिद्देवानां तेजोरूपशरीरत्वात्—

वायुशरीरत्वाच्चोच्यते, भवद्भिरपि पिशाचानां वायुशरीरत्वमिति भावः। **अबादिरावृत्यर्थः तुल्यायत्वादिति**—पृथिवीत्वादिव्याप्याङ्गीकारे चाननुगमाद्वैयर्थ्यमिति भावः। **नह्यद्यापीति**—तदेव लक्षणमस्तु—किं तल्लक्षितस्वरूपसालक्षण्येनेति भावः। **निद्राणशरीरस्येति**—जाग्रच्छरीरापेक्षया भिन्नत्वादिति भावः। **चेष्टाश्रयत्वार्हताया अभावादिति**—अर्हत्वग्राहकप्रमाणाभावादिति भावः।

ननु दण्डजातीयत्वेन वनस्थदण्डवदर्हतेति शङ्कते—**अथापीति**। **नेति**—योग्यतावच्छेदकापरिचये योग्यता वक्तुं न शक्येति भावः। **शरीरोपष्टम्भकेष्विति**—पृथिव्या एव शरीरारम्भकत्वं भूतान्तराणामुपष्टम्भकत्वमात्रमिति भवद्भिरुक्तेरिति भावः। **तर्हीति**—ईदृशवादमात्रस्य सर्वत्र सुलभत्वादिति भावः। उपष्टम्भकानां चेष्टाश्रयत्वं नास्तीति वचनं प्रत्यक्षबाधितमित्याह—**नह्युपष्टम्भकमन्तरेणेति**—रुधिरादीनामबादिविकाराणां चेष्टादर्शनादिति भावः। किञ्च पृथिव्यादीनां शरीरत्वाभावे भवदीयं लक्षणमतिव्याप्तमित्याह—**किञ्चेति**। **असमवायिकारणलक्षणेति**—समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमिति हि तल्लक्षणं तदस्त्येवेत्यर्थः। अर्थाश्रयश्शरीरमित्येतद्दूषयति—**इत्थमिति**। **पूर्वोक्तेति**—कुम्भकर्णादिशरीरेऽव्याप्तत्वादवयवेऽतिव्याप्तत्वादुपष्टम्भकेऽतिव्याप्तेश्चेत्यर्थः। इन्द्रियाश्रयत्वं किमिन्द्रियसमवायितया? उतेन्द्रियसंयोगितयेति? विकल्पमभिप्रेत्याद्य आह—**अत्राश्रयत्वमिति**। अन्त्यावयवित्वे सतीति विशेषणे दूषणमाह—**वस्त्वन्तरेति**—यौवनादिशरीरं प्रति बाल्यादिशरीरस्यसमवायिकारणत्वादव्याप्तिरित्यर्थः।

ननु पूर्वपूर्वशरीरस्योत्तरोत्तरशरीरम्प्रति न समवायिकारणत्वं। तथा सति तच्छरीरस्य सत्वप्रसङ्गेन बहुशरीरोपलम्भप्रसङ्गात्। अपि तु तस्य नाशे शरीरान्तरस्योत्पत्तिः। ध्वंसत्वेन यथा ध्वंसजन्यमिति तदवयवसमवायिकारणकत्वमिति दुग्धोध्वंसजन्य दध्न इव तदवयवसमवायिकारणकत्वेन शरीरस्याऽनारम्भकतया नाव्याप्तिरिति चेन्न।

पूर्वशरीरस्यापि प्रत्यभिज्ञानेन मृदयं कुम्भ इतिवत्तस्यैव समवायिकारणत्वात्। नच बहुशरीरप्रतिपत्तिप्रसङ्गः। मृद इव तदुपलम्भस्येष्टत्वात्। पृथगुपलम्भप्रसङ्गोऽपि तन्न्यायेनैव परिहार्यः। दध्नि तु न प्रत्यभिज्ञेति न तुल्यत्वमिति पूर्वशरीरेऽव्याप्तिरनिवार्येति भावः। द्वितीय आह—**संयोगित्वमात्रञ्चेति**—त्वगिन्द्रिये व्यभिचार इत्यतिव्याप्तिरित्यर्थः।

ननु संयोगित्वमात्रं न विवक्षितं किन्तु तदाधारत्वमपि, न च त्वगिन्द्रियस्येन्द्रियान्तराणां वा परस्पराधारत्वमस्ति। अतः कथं तत्रातिव्याप्तिरितिचेत्। अत्राहुः। इन्द्रियत्वावच्छिन्नाधारत्वं वक्तव्यं। तत्र श्रोत्रस्यावृत्तित्वात्संयोगित्वमात्रं वाच्यम्। तथा चातिव्याप्तिः।

न च यत्किञ्चिदिन्द्रियाधारकत्वमेव विवक्षितम् तच्चास्तीति वाच्यम् । तथा सति त्वगाश्रयत्वं लक्षणं लाघवादित्येव वक्तुमुचितं नत्विन्द्रियत्वघटितं गौरवात् । यद्वा त्वगिन्द्रियशब्दस्त्वगिन्द्रियाधिष्ठानपरः स त्वगिन्द्रियान्तराणामप्याधार एव । एवमुत्तरत्रेन्द्रियान्तरशब्दोऽपीति । उत्तरत्र त्वगिन्द्रियोपष्टम्भकशब्दस्तु अधिष्ठान-व्यतिरिक्तोपष्टम्भकपर इति द्रष्टव्यम् ।

ननु घटादिष्वतिव्याप्तिनिरासाय संयोगे नैयत्यं वाच्यम् । तत्त्वगिन्द्रिये इन्द्रियान्तरे वा नेति नातिव्याप्तिरिति परिहारं शङ्कते—**उत्पाटितस्येति । स्वावयव-संक्षोभेण विनष्टत्वेनेति**—परमतेनेदं बोध्यम् । स्वमते आहंकारिकस्येदानीं विनाशा-भावादिति ध्येयम् ।

यद्वा प्रतिशरीरमिन्द्रियाण्यहङ्कारादुत्पद्यन्ते तस्मिन्लीयत इति पक्षावलम्बनेनेदं बोध्यम् । **अविवाद एवेति** शरीरवाचित्वनिबन्धनं शरीरिवाचित्वञ्चेद्विवादो न स्यात् । अत्र तु शुक्लादिशब्दानुरोधेनाऽपृथक्स्थितधर्मवाचित्वनिबन्धनमिति वक्तव्यम् । तथा चोक्तं लक्षणं चेत्यस्य पृथिवीशरीराऽशरीरत्वसिद्धावपि नापृथक्सिद्धत्वसिद्धिः । यदि श्रुत्यन्तरात्सिद्धिस्तर्हि शरीरत्वसाधनं तल्लक्षणकथनञ्च प्रकृतानुपयुक्तमिति चेदत्राहुः । सत्यमपृथक्सिद्धधर्मवाचकताप्रयुक्तमेव धर्मिवाचकत्वं तत्प्रकृतेऽप्यस्त्येव । शरीरत्वे सिद्धे शरीरत्वाद्धेतोरपृथक्सिद्धत्वमवगम्यते । ततश्च शब्दवाच्यत्वमपीति शरीरत्वसाधनं तल्लक्षणकथनं वा न प्रकृतानुपयुक्तमिति । **शब्दार्थसंबन्धेति**—शब्दादर्थसंबन्धे नियमस्य व्यवहारनियमस्य चानियतत्वं प्रसज्येतेत्यर्थः । अमूलकल्पे यथेच्छं कल्पनापातादिति यावत् । **स पुनरिति**—अस्मदभिमतसाधकेन स्वद्विरो-धीत्यर्थः ।

नन्वीश्वरधर्मभूतज्ञानातिरिक्तद्रव्यमात्रस्य जीवेश्वरौ प्रति शरीरत्वाद्यस्य चेतनस्येत्यादि व्यर्थम् । परमचेतनातिरिक्तद्रव्यत्वमात्रस्य लक्षणत्वसम्भवादित्यत आह—**अत्र यस्येत्यादि**—विशेषलक्षणपरत्वान्न वैयर्थ्यमिति भावः । द्रव्यपदस्य प्रयोजनमाह **द्रव्यमिति । सर्वात्मनेति**—यावत्सत्त्वमित्यर्थः ।

ननु योग्यत्वं विवक्षितं तर्हि दण्डकुण्डलादिष्वतिव्याप्तिः प्रतिबन्धाद्यभावे तत्सम्भवात् । कदाचित्सम्भवमात्रेण योग्यतासिद्धेः । यावत्सत्त्वं विश्वधारणादेः रुग्णता-दशायां शरीरेऽप्यभावात् ।

किञ्च सर्वेषामपि जीवानां परस्परं शेषत्वनैयत्यात्सर्वेषां सर्वशरीरत्व-प्रसङ्गः ।

किञ्च लक्ष्मीं प्रति चेतनाचेतनयोश्शेषत्वात्तस्यास्सर्वशरीरित्वादिप्रसङ्ग इति शङ्कायामाह—**इत्येषा दिगिति** । दिगर्थस्तु यस्याऽपृथक्सिद्धत्वे सति यद्धार्यं नियाम्यं शेषं तत्तस्य शरीरमित्यर्थात् ।

यद्वा यद्द्रव्यं यच्चेतनं प्रत्यपृथक्सिद्धं तत्तस्य शरीरमिति विवक्षितम् । तेन नातिप्रसङ्गः । उत्तरश्लोकावतारिकायां शरीरत्वविद्धंतदपृथक्सिद्धत्वं वक्ष्यत इत्युच्यते । यद्द्रव्यमिति यदवस्थद्रव्यमिति विवक्षितम् । तेन सिद्धान्तेऽवस्थान्तरयोगिनस्तदभावादव्याप्तिः परिहृता । शेषतैकस्वरूपमित्यत्र शेषित्वाभावोऽभिप्रेतः चेतनानां परस्परशेषित्वस्यापि भावान्न दोषः ।

यदपि–[यद्यपि] लक्ष्म्याः जगच्छरीरित्वापादनं तदपीष्टापत्त्या समाहितमेवेति केचित् ।

अन्ये तु लक्ष्म्याः कालवद्विभुत्वेऽपि नापृथक्सिद्धत्वं यस्य पृथिवी शरीरमितिवद्ग्राहकाभावात् । यद्वा यस्य प्राधान्येन शेषित्वं तस्य शरीरत्वं लक्ष्म्यास्तु सह भावेनैव शेषित्वादिति नातिप्रसङ्ग इति । [वदन्ति] ।

अपरे तु यस्य चेतनस्य यद्द्रव्यं सर्वात्मना नियाम्यमित्यत्र मध्यमपदलोपि—समासः, तथा चायमर्थः । यद्द्रव्यं स्वनियमनार्थं स्वकीयसर्वावयवावच्छेदेनानुप्रविष्टेन येनात्मना नियाम्यं तत्तस्य शरीरमिति विवक्षितम् । अस्मिन्पक्षे दीपस्य स्वप्रभायाः मन्दिरोदरव्याप्तिवदणोरपि जीवस्य ज्ञानविकासेन सर्वावयवावच्छेदेन शरीरानुप्रवेशस्सम्भवत्येव । तथा च न भृत्यादिशरीरस्य स्वाम्यादिशरीरत्वापत्तिरनुप्रवेशाभावात् ।

नाविकस्य नावानुप्रवेशेऽपि न सर्वावयवावच्छेदेनानुप्रवेशः । एवं दारु व्याघ्रादिकमपि प्रविश्य नियन्तारोऽपि न सर्वावयवावच्छेदेन प्रविशन्ति । पिशाचादिकं प्रत्यन्यशरीरस्य शरीरत्वप्रसङ्गस्त्विष्ट एव । भोगायतनं शरीरमिति पक्षेऽपि तस्यावश्यकत्वात् ।

न च मनुष्यशरीरमात्रस्य पिशाचं प्रत्यपि शरीरत्वापत्तिः कदाचिदपि पिशाचादिप्रवेशाभावे योग्यताया अप्यभावाच्च । नित्यानां न जगच्छरीरत्वापत्तिसङ्कल्पेन सर्वनियमनेऽपि तत्प्रवेशस्य नियमनहेतुत्वे मानाभावात् । प्रवेशस्य हि नियमनहेतुत्वं विवक्षितं–प्रवेशमात्रं भवदप्यकिञ्चित्करमिति वदन्ति ।

परे तु यस्य चेतनस्य यद्द्रव्यमहम्प्रत्ययविषयस्तस्य तच्छरीरत्वं, तथा च पिशाचानां न प्रविष्टशरीरेऽहम्प्रत्ययविषयतेति नातिव्याप्तिः । [नवा] न च काणोऽहमित्यहम्प्रत्ययविषयेन्द्रियेऽतिव्याप्तिः । तस्यापि शरीरगोचरत्वात् । काणत्वं हि चक्षुर्वैकल्यम् । नहि चक्षुषश्चक्षुर्वैकल्यं तस्य तद्वत्वाभावेन तद्वत एव तद्वैकल्यात् । चक्षुः काणः चक्षुरन्ध इत्यननुभवाच्च ।

यद्यपि शरीरमन्धमित्यपि नास्ति तथापि शरीरं चक्षुष्मदित्यादिदर्शनेन वैकल्यस्यापि तस्यैवोचितत्वात् ।

नचाहं मनुरभवं सूर्यश्चेति प्रतीतिविषयमन्वादीनां वामदेवशरीरत्वापत्तिः तेषामपि तथाऽहम्प्रत्ययविषयत्वादिति वाच्यम् ।

यन्निष्ठधर्मस्य यदहंत्वाश्रये प्रतीतिस्तस्य तच्छरीरत्वमित्यर्थात् । तथा च स्वशरीरकः परमात्मेयेवं मनुत्वादिप्रतीतिरिति न तत्रातिव्याप्तिः ।

एतेन ब्रह्माहमस्मीत्यपि व्याख्यातम् ।

जगतस्तु "बहु स्यां प्रजायेय इदं सर्वं यदयमात्मा" सर्वं खल्विदं ब्रह्म "ज्योतींषि विष्णु" रित्यादिसामानाधिकरण्यप्रतीतेरौपचारिकत्वे मानाभावाद् ब्रह्मशरीरत्वमुपपादितमिति वदन्ति ॥ ८३ ॥

---

शब्दैस्तन्वंशरूपप्रभृतिभिरखिलः स्थाप्यते विश्वमूर्ते-
रित्थंभाव प्रपञ्चस्तवनवगमतस्तत्पृथक्सिद्धमोहः ।
श्रोत्राद्यैराश्रयेभ्यः स्फुरति खलु पृथक्च्छब्दगन्धादिधर्मो
जीवात्मन्यप्यदृश्ये वपुरपि हि दृशा गृह्यतेऽनन्यनिष्ठम् ॥ ८४ ॥

इत्थं शरीरलक्षणमुक्त्वा विश्वस्येश्वरशरीरत्वेन तदपृथक्सिद्धस्य तच्छरीरत्वप्रतिष्ठापनार्थं तदपृथक्सिद्धिमाह—शब्दैरिति ॥ तत्सर्वं वै हरेस्तनुः, ममैवांशो जीवलोके, रूपान्तरं तद्द्विज कालसंज्ञम्, विष्णुशक्तिः परा प्रोक्ता, यदम्बुवैष्णवः कायः, यस्यात्मा शरीरमित्यादिभिर्विश्वमूर्तेर्विष्णोरित्थंभावः—अपृथक्सिद्धविशेषणं प्रपञ्च इति स्मृतिश्रुत्योरभिधीयते; यद्येवमित्थंभावः प्रपञ्चः, कथं तर्हि पृथक्सिद्धिरिति ? अत्रोत्तरम्—तवनवगमत इति । ईश्वरस्य विशेष्यभूतस्यावगमाभावाद्विशेषणभूतस्य प्रपञ्चस्य पृथक्सिद्धत्वव्यामोहमात्रं पामराणाम्, विदुषां तु परमर्षीणामपृथक्सिद्धत्वेनैव सर्वदा प्रतीतिव्यवहारौ । अमुष्मिन्नर्थे लोकसिद्धं दृष्टान्तमाह—श्रोत्राद्यैरिति । आश्रयग्रहणानर्हैः श्रोत्राद्यैर्यथा शब्दादिकं पृथगेव गृह्यते, एवमीश्वरग्रहणानर्हैरल्पज्ञानां प्रमाणैरीश्वरात् प्रपञ्चस्य पृथक्त्वेन ग्रहणं युक्तमित्यर्थः । उक्तमर्थमुदाहरणान्तरेणापि द्रढयति—जीवात्मनीति । मनोग्राह्ये जीवात्मनि सति चक्षुषा गृह्यमाणं शरीरं न जीवविशेषणत्वेन गृह्यते; जीवस्य चक्षुर्ग्राह्यत्वाभावात् । एवं प्रपञ्चोऽपि पामरबुद्धिभिर्नेश्वरविशेषणत्वेन गृह्यते । नेतावता श्रुतिस्मृत्यादिप्रसिद्धमीश्वरापृथक्सिद्धत्वं न सिध्यतीति ॥ ८४ ॥

आनन्द०—उपोद्घातसङ्गतिमाह—**इत्थमिति** ।

ननु सर्वशब्दवाच्यत्वं प्रथमं प्रक्रान्तं, तच्चापृथक्सिद्धधर्मवाचित्वेन । अपृथक्सिद्धत्वञ्च कथमित्यपेक्षायां शरीरत्वात् । शरीरत्वञ्च तल्लक्षणयोगादिति तल्लक्षणं—पूर्वमुक्तम् । इदानीं शरीरत्वसिद्ध्यर्थमपृथक्सिद्धत्वमुच्यत इत्यपृथक्सिद्धत्वे शरीरत्वं शरीरत्वेऽपृथक्सिद्धत्वमित्यन्योन्याश्रय इति चेत् ।

अत्राहुः । शरीरत्वादेवाऽपृथक्सिद्धत्वमिति । न चान्योन्याश्रयः । शरीरत्वप्रतिष्ठापनं नाम शरीरत्वव्यापकत्वं । तच्च शरीरशब्दादिवच्छब्दान्तरेणापि सिद्ध्यतीति ।

वस्तुतश्शरीरादिशब्देऽसिद्धमपृथक्त्वं प्रत्यक्षादिबाधकपरिहारमुखेन दृढीक्रियत इति निरवद्यम् । आदिशब्देन बहु स्यामित्यादि समानाऽपृथक्सिद्धत्वबाध-इत्याह—**नैतावतेति** । मूलं-इत्थम्भावः-प्रकारः ।। ८४ ।।

---

**निष्कर्षाकूतहानौ विमतिपदपदान्यन्तरात्मानमेकं**
**तन्मूर्तेर्वाचकत्वादभिदधति यथा रामकृष्णादिशब्दाः ।**
**सर्वेषामाप्तमुख्यैरगणि च वचसां शाश्वतेऽस्मिन् प्रतिष्ठा**
**पाकैस्तस्याप्रतीतेर्जगति तदितरैः स्याच्च भङ्क्त्वा प्रयोगः ।। ८५ ।।**

जगतः परमात्मापृथक्सिद्धिमुक्त्वा तद्वाचिनां पदानां निष्कर्षाभिप्रायाभावे परमात्मपर्यन्तत्वमाह—**निष्कर्षेति** । विप्रतिपन्नानि प्रपञ्चवाचकानि पदानि परमात्मवाचकानि; निष्कर्षकेतरत्वे सति तन्मूर्तिवाचकत्वात् । ये निष्कर्षकेतरत्वे सति भगवन्मूर्तिवाचकास्ते भगवद्वाचकाः यथा रामकृष्णादिशब्दा इति विशेषतो व्याप्तिः । सामान्यतोऽपि ये निष्कर्षकेतरत्वे सति यन्मूर्तिवाचकास्ते तद्वाचकाः यथा देवमनुष्यादिशब्दा इति । इत्थमनुमानम्; आगमोऽप्यस्तीत्याह—**सर्वेषामिति** । आप्तमुख्यैर्महर्षिभिः सर्वेषां वचसां शाश्वते—भगवति प्रतिष्ठा—पर्यवसानमगणि । वचसां वाच्यमुत्तमम्, नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वतो इत्यादीनि प्रमाणानि सहस्रशस्सन्ति; वेदैश्च सर्वैरहमेव वेद्य इति स्ववचनमपि । किमनेन स्मृत्युपदेशेन; श्रुतिरेव तावच्छरणं, सर्वे वेदा यत्रैकं भवन्तीत्यादिका बहुशः प्रवर्तते ? कथं तर्हि बालिशानां भगवत्पर्यन्तप्रतीतिः सर्वेष्वपि शब्देषु न जायते ? अत्रोत्तरम्—**पाकैरिति** । तस्याप्रतीतेः—भगवत्पर्यन्तत्वाप्रतीतेः, विशेषणमात्रे प्रयोगः । तदितरैः—विद्वद्भिरपि विशेषणमात्रे क्वचित्क्वचित्भङ्क्त्वा प्रयोगः । विशिष्टवाचिनश्शब्दस्य विशेषणमात्रे विभज्य प्रयोग इत्यर्थः ।।८५।।

आनन्द०—ननु सर्वशब्दानां भगवत्परत्वे यस्य पृथिवी शरीरमित्यादि पृथिव्यादि शब्दानां भगवत्परत्वप्रसङ्गः । तदभावे—तुल्यन्यायेनान्येषामपि तत्परत्वं न स्यादित्याक्षेपसङ्गत्याऽऽह—जगत इति। पूर्वत्र देवादिशब्दानां जीवपर्यन्तत्वं साधितं तत्र भगवत्परत्वं प्रपञ्चवाचिशब्दानामिति । तात्पर्यभेदेन न पौनरुक्त्यम्। अत्र फलोपधानं विवक्षितम् । तेन यस्य पृथिवी शरीरमित्यादिनिष्कर्षकशब्दे व्यभिचारवारणाय निष्कर्षकेति। उत्तमं वाच्यमित्युक्त्या प्राधान्येन वाच्यत्वं भगवत एव सर्वविशेष्यत्वादिति भावः।

नता स्मेति। सर्ववचसां शाश्वती प्रतिष्ठेति—वाच्यत्वमुच्यते। नित्ये शब्दार्थसम्बन्धे इति भाष्योक्तेरिति भावः। वेदैश्चेति।

ननु सर्ववेदविषयत्वं तात्पर्यार्थः ननु सर्ववैदिकशब्दवाच्यत्वमिति चेत् । सत्यं तत्राप्याग्नेयमष्टाकपालमैन्द्रं पयः इत्यादि देवताशब्दानां भगवत्परत्वे हि समाराध्यतया तात्पर्यविषयत्वं भगवतस्सेत्स्यतीति भावः।

"सर्वे वेदा" इत्यत्राप्युक्तरीत्यैवतत्पर्यन्ता भवन्तीत्यर्थः।

ननु शब्दस्य सर्वार्थविशेष्यक ज्ञानजनकत्वात्सर्वशब्दैरपि सर्वेषां ब्रह्मविशेष्यकप्रतीतिप्रसङ्ग इति शङ्कते—कथमिति—गृहीतशक्तेश्शब्दस्य बोधकत्वं शक्तत्वेऽपि शब्दस्य ब्रह्मणि शक्तिग्रहाभावान्न बोध इति—भावः । समाधत्ते—भगवत्पर्यन्तेति। विशेषमात्र इति । अत्र दर्शनद्वयमस्ति गोत्वादिकं प्रवृत्तिनिमित्तीकृत्य प्रवर्तमानाश्शब्दास्साक्षात्परम्परासाधारणसम्बन्धेन प्रवृत्तिनिमित्तेन व्युत्पन्नास्समानप्रकारेणसद्वारकाद्वारकाश्रयद्वयमपि बोधयन्तीति प्रथमं मतम् । देवत्वादिकमादाय तदाश्रये एका शक्तिः। तथा देवादिविशिष्टे ब्रह्मण्यपराशक्तिः। यथा नीलत्वमादाय रूपे एकाशक्तिः। नीलरूपमादाय तदाश्रयाऽपराशक्तिरिति द्वितीयं मतम् । तत्राद्ये पक्षे यथा घटमानयेति साधारणशब्देनापि गेहस्थो घटोऽभिधीयते तथा ब्रह्मविरहितं जगदिति तात्पर्येण विभाग एव शक्तिभङ्गः। पक्षान्तरे तु शक्तिविशेषमादाय व्यवस्थैव—नानार्थ इव शक्तिभङ्गं इति वदन्ति। एकशक्तिनानाशक्त्यादिविचारस्तु नीलादिपदेषु मणिसारधिक्कारे कृत इति तत्रैवानुसन्धेयः॥ ८५॥

व्युत्पत्तिर्वाचकानां स्थिरचरविषये लोकतो नेश्वरादा-
वव्युत्पन्नार्थवृत्तिस्त्वधिपतिनयतः स्यादमुख्येति चेन्न ।
व्युत्पत्तेः पूरणं हि श्रुतिशिरसि कृतं नोपरोधः कथंचि-
द्देहित्वं चाधिपत्यात् समधिकमिह खल्वक्षपादप्रणीतात् ॥ ८६ ॥

**सर्वार्थः**—यदि ब्रह्मणस्सर्वशब्दवाच्यत्वं, तर्हि लोकव्युत्पत्तिविरोधः स्यात्; घटपटादिशब्दानां घटापटादिष्वेव लोके व्युत्पत्तिर्न पुनरीश्वरे; अतः कथं व्युत्पत्तिविरोधः सोढव्य इत्याक्षिपति—**व्युत्पत्तिरि**ति । कथं तर्हीश्वरे जगद्वाचिनां शब्दानां प्रयोग इत्यत्राह—**अव्युत्पन्ने**ति । यथा राजा राष्ट्रमित्यत्राधिपत्यनिबन्धनं सामानाधिकरण्यम्, एवं जगद्वाचिनामीश्वरे प्रयोगोऽप्याधिपत्यनिबन्धन इत्यर्थः । अत्रोत्तरम्—**ने**ति । अयमत्र भावः—प्रथमव्युत्पत्तेरपूर्णायाः पूरणमेव वेदान्ते क्रियते; न पुनः प्रथमव्युत्पत्तिबाधः । वेदान्तश्रवणेन हि व्युत्पत्तिः पूर्यते । कर्मकाण्डश्रवणेन देहमात्रपरतया पूर्वं व्युत्पन्नस्य देवादिशब्दस्य देहव्यतिरिक्तात्मपरतया व्युत्पत्तिः पूर्यते; एवमत्रापि । तदिदमाह—**नोपरोध** इति । नन्वीश्वरस्य जगत्कर्तृत्वमक्षपादेनाप्यभिधीयते किमधिकं देहित्वं भवताऽभिधीयते इत्याशङ्क्याह—**देहित्व**मिति । अयमत्र भावः—यद्यक्षपादोऽपीश्वरस्या-धातृत्वविधातृत्वशेषित्वनियमेन शरीरित्वं शरीरवाचिशब्दानां शरीरिपर्यन्तत्वमाह, तमपि वयमनुमन्यामहे । यदि नाह, तमेवानेनोपपादनेन प्रतिक्षिपाम. । स खलु केवल-माधिपत्यमक्षपादः प्राह; वयं तु विश्वदेहित्वमीश्वरस्य विश्ववाचिशब्दवाच्यत्वं चेति विभागः ॥ ८६ ॥

---

**आनन्द०**—व्युत्पन्नस्य शब्दस्य बोधकत्वं ननु शक्तिमत्त्वमात्रेण । तथा च ब्रह्मणि व्युत्पत्यभावाच्छक्तिरेव न स्यात् । व्युत्पत्तिग्रहनिमित्तत्वात्तस्या इति सङ्गति-माक्षेपिकामाह—**यदि ब्रह्मण इत्यादिना** -अत्र कथं व्युत्पत्तिविरोधस्सोढव्य इत्यनन्तर-माक्षिपति—**व्युत्पत्तिरि**ति ग्रन्थः पतित इति सम्प्रदाय इति [चेद्व्युत्पत्तिविरोध]· चोद्ये व्युत्पत्तिविरोधमेवोपपादयति—**घटपटादिशब्दानामि**ति । **यथे**ति—राष्ट्रशब्दस्य राजन्यव्युत्पन्नस्यापि प्रयोग उपचारादिति भावः ।

ननु वेदान्ते पूर्यत इति कोशः किं ब्रह्मण्येव पर्यवस्यति यथा स्थूलारुन्धतीन्या-येनेति वा ? यद्वा ब्रह्मणि व्युत्पन्यैव बोधनसामर्थ्यं भवति ? नाद्यः । आद्यव्युत्पत्ति-विरोध तादवस्थ्यात् । न द्वितीयः । घटपटादिबोधाभावप्रसङ्गादित्यत्राह—अत्रायं भाव इति—व्युत्पत्तेः पूरणं विकासः, स चैकशक्तिमत्त्वेन वा नानाशक्तिमत्त्वेन वा ? उभयथाऽप्यधिकव्युत्पत्तिग्रहान्न पूर्वव्युत्पत्तिबाधो बोधकत्वाभावो वेति भावः । एवं शक्तिमत्त्वपक्षे विकासदृष्टान्तमुपपादयति—**वेदान्तश्रवणेन हीति** यथा शरीरातिरिक्ते विकासेऽपि न पूर्वव्युत्पत्तिविरोधस्तथेत्यर्थः ।

ननु गौतमविरुद्धाभिधानं कथं सङ्गच्छते। ऋषेस्सूक्ष्मदर्शित्वेन तद्विरुद्धस्यानादेयत्वादिति शङ्कते—किमधिकं भवताऽभिधीयत इति। अनेन कथं-समाधानमित्यत्राह—**अयं भाव इति**—अस्मदुक्तस्य श्रुत्यभिमतत्वाद्व्यासादिभिश्चिन्तितत्वाच्चार्षेयत्वेऽपि तद्धेयमिति भावः ॥ ८६ ॥

---

**न ह्यक्षैः केऽपि वर्णाभ्यधिकमिह विदुर्वाचकं सावधानाः**
**शब्दादर्थं प्रतीमस्त्स्ति च जनवचो नैकमन्यन्व्यनक्ति।**
**सामग्र्यैक्यादिनीत्या भवति मतिरियं तादृशे वर्णसंघे**
**संभेदे वा पदानामिति न तदधिकः कोऽपि शब्दोऽपरोक्षः ॥ ८७ ॥**

**सर्वार्थः**—एवं सर्वशब्दवाच्यत्वं ब्रह्मण उपपाद्य शब्दस्वरूपमेव शोधयति। तत्र स्फोटवादिन आहुः—वर्णानां नानात्वात् ते न वाचकाः शब्दादर्थं प्रतीम इति ह्येकत्वेनैव शब्दप्रतीतिः। अतो वर्णातिरिक्तः पदस्फोटः पदार्थप्रत्यायकः। एवं पदातिरिक्तो वाक्यस्फोटो वाक्यार्थप्रत्यायकः। न च वर्णसमुदायविवक्षया पदसमुदायविवक्षया वा वर्णानां पदानां च एकत्वं संभवति; देशतः कालतो वा तेषामेकत्वासंभवात्। न तावत्ताल्वादिव्यापारोच्चारितानां देशत एकत्वं संभवति। एककर्णशष्कुलीदेशसंबन्धादेकत्वमिति चेत्, तर्हि सर्ववर्णानामेकपदत्वप्रसङ्गः। न च शब्दानामेककालत्वम्, वाचः क्रमवर्तित्वेन क्रमेणैव तदभिधानात्। अतः पदस्फोटो वाक्यस्फोटश्चैकत्वेनोपलभ्यमानः पदार्थं वाक्यार्थं च बोधयतीति। अत्रोत्तरम् एकार्थप्रतिपादकत्वेन व्याकरणादिव्युत्पन्ना एकबुद्ध्युपग्रहेण संघातभावमापन्ना वर्णा एव पदम्। एवमेकार्थप्रतिपादनरूपकार्यावच्छिन्नानि पदार्थप्रतिपादकानि पदान्येव वाक्यम्। अत्रैक्यमेकबुद्ध्यवस्थितानां संघातभावविषयम्; अतो न विरोधः; पदतत्संघातव्यतिरिक्तस्फोटयोरनुपलम्भात् ऐक्यप्रतीतेरन्यथासिद्धत्वात्। एवं बुद्धिसंगृहीतानां वर्णानां पदानामर्थप्रत्यायकत्वानङ्गीकारे स्फोटाभिव्यञ्जकत्वमपि न स्यात्; तत्रापि किमेकैकस्याभिव्यञ्जकत्वमुत समुदायस्येति वक्तुं शक्यत्वात्। अस्मदुक्तप्रक्रियया समाधाय स्फोटाभिव्यञ्जकत्वाङ्गीकारे किमनेन स्फोटेनादृष्टचरेण ? अर्थस्यैव तथा प्रतिपत्तिरस्त्विति। तदेतत्सर्वमभिप्रेत्याह—**न हीति**। किं प्रत्यक्षात् स्फोट उपलभ्यते ? तत्तावन्नास्ति; प्रत्यक्षाभावात्। नाप्यनुपपत्त्येत्याह—**शब्दादिति**। एकत्वं संघातविषयमित्युक्तम्। तदेव दृष्टान्तेन विवृणोति—**सामग्रीति**। न हि सामग्रीव्यतिरेकेण कार्यकारणमिति किंचित्कल्प्यते; तद्वदत्र वर्णपदसंघातव्यतिरेकेण पदवाक्यस्फोटाभिधानविषयत्वेन किंचिन्न कल्पनीयमित्यर्थः। अतो वर्णपदातिरिक्तस्फोटो न प्रत्यक्षगम्य इत्याह—**नेति** ॥ ८७ ॥

**आनन्द०**—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह- **एवमिति**। अवाचकत्वे हेतुमाह—**शब्दादिति**—एकस्यैव बोधकत्वानुभवविरोध इति भावः। एकत्वानुभवविरोधपरिहारं शङ्कते—**नचेति**—अत्र किं देशकृतस्समुदायः? कालकृतो वा? आद्ये व्युत्पत्तिदेशकृतः? उत ग्रहणदेशकृत? इति विकल्पाभिप्रायेणाद्य आह- **न तावदिति**—'इचुयशानान्तालु लृ तु लसानान्दन्ता' इति भिन्नदेशत्वादिति भावः। द्वितीयं शङ्कते—**एककर्णेति**। आद्ये द्वितीयं दूषयति—**नचेति**—अर्थैक्यादेव वर्णानामेकशब्द व्यपदेशः 'अर्थैकत्वादेकं वाक्यमिति तन्त्रान्तरे प्रतिपादनादिति परिहरति—**अत्रोत्तरमिति**। अत्रैक्यमित्यैक्यं शब्दाद्येकत्वसङ्घातभावस्समुदायः तद्विषयः तन्निमित्तमित्यर्थः।

किञ्च स्फोटाभिव्यञ्जनार्थं वर्णानां वा एकोपाध्यवच्छिन्नत्वं वक्तव्यं। तत्र तत्तत्स्फोटाभिव्यञ्जनशक्तिमत्त्वं यद्येकोपाधिस्तर्ह्यर्थाभिव्यञ्जनशक्तिमत्त्वमेवोपाधिरस्तु। तथैकशब्द प्रतीतिर्वर्णादावेवास्तु किमधिकस्फोटविषयत्वेन। तथा च प्रत्यक्षप्रतीतिरन्यथासिद्धेत्याह—**पदतत्सङ्घातेति**—अस्य कार्यस्यैका सामग्रीति लोकव्यवहारस्तत्रापि कारणातिरिक्ता काचित्सामग्री स्यात्। सैव कार्यंजनिकेति दण्डादीनां जनकत्वं न स्यादिति प्रतिबन्द्यभिप्रायेणाह—**सङ्घातविषयमित्यादिना** ॥ ८७ ॥

---

**यादृग्भिः स्फोटधीस्ते भवति भवतु तैरर्थधीरेव वर्णैः**
**वर्णेषूक्तो विकल्पस्समगतिरुभयोर्यौगपद्यक्रमादिः।**
**वाक्यस्फोटेऽपि तुल्यं तदिदमिह पदैरक्षरैर्वाऽवगम्ये**
**स्फोटे तद्बुद्धिबोध्ये सति च न घटते तत्तदध्यासक्लृप्तिः ॥ ८८ ॥**

**सर्वार्थः**—स्फोटप्रत्यक्षत्वं निरस्य स्फोटक्लृप्तिवादं प्रतिबन्द्या विशदं निरस्यति—**यादृग्भिरिति**। यादृग्भिर्वर्णैस्ते स्फोटधीर्भवति तैरर्थधीरेव भवतु। वर्णेषूक्तो विकल्पः स्फोटाभिव्यक्तावपि समगतिः। उभयोः—वादिप्रतिवादिनोरित्यर्थः। यद्वा पक्षप्रतिपक्षयोः पदस्फोटोक्तं दूषणं वाक्यस्फोटेऽपि तुल्यमित्याह—**वाक्येति**। किंच पदैरक्षरैर्वा वाक्यस्फोटः पदस्फोटश्चाभिव्यज्यत इति भवदीया प्रक्रिया। एवं च वर्णपदाभिव्यङ्ग्ये स्फोटे तस्मिंश्च स्फोटबुद्धिबोध्ये सति स्फोटे विश्वस्यापि शब्दविशेषस्याध्यास इति भवदीया क्लृप्तिरसमञ्जसैव। तदिदमाह—**न घटते** इति। स्फुटदृष्टे स्फोटे कथं वर्णाध्यासक्लृप्तिरित्यर्थः। स्फोटोऽपि क्लृप्तिमात्रमिति चेत्; कुत्र क्लृप्तिः? शब्दब्रह्मणीति चेत् वर्णातिरेकेण किं तच्छब्दब्रह्म? वर्णानामेव श्रोत्रग्राह्यत्वेन शब्दत्वात् स्फोटस्य चानुपलम्भनिरस्तत्वादिति ॥ ८८ ॥

आनन्द०—ननु प्रत्यक्षस्याभावेऽनुमानमर्थापत्तिर्वा प्रमाणमस्त्वित्याक्षेपसङ्गत्याऽऽह—स्फोटेति। पूर्वश्लोक एवार्थिकं निरासमभिप्रेत्याह—विशिष्टमिति। वर्णेषूक्तो विकल्प इति –किं वर्णाःप्रत्येकमर्थं बोधयन्ति ? उत मिलिताः ? नाद्यः। एकेनैवार्थप्रतीतावन्यवैयर्थ्यात्, न द्वितीयः। तेषामाशुतरविनाशिनां क्रमिकाणां मेलनाभावादित्यादिविकल्पाः स्फोटमपि प्रत्येकं प्रकाशयन्ति ? उत मिलिताः वेति विकल्पसमाना इत्यर्थः। प्रकृतत्वादाह—यद्वेति। किञ्चेति—अत्र पक्षद्वयमस्ति। स्फोट एकः स्वस्यार्थस्यावगतिकारकः स एव वर्णाभिव्यङ्ग्यः पदस्फोट—इतीर्यते।

पदैस्तु व्यज्यमानस्सन्वाक्यस्फोटश्च सम्मतः।

यद्वा—

"पदैस्स्फुटयमानो वाक्यस्फोटोऽपरो मतः।
पदभेदाद्वाक्यभेदात् स्फोटभेदं प्रचक्षते॥
तदभ्यासस्तदर्थानां बोध इत्यूचिरे पुन"

रिति हरिग्रन्थदर्शनात्। तस्यार्थः। अस्मिन्स्फोटे तदर्थानां शब्दार्थानामध्यासाद्बोधः प्रकाश इत्याहुः। तथा च शब्दाः प्रतिपन्नाः स्फोटमभिव्यञ्जयन्ति। स्फोटेऽभिव्यक्तेऽधिष्ठानज्ञानजनने सति शब्दस्याऽध्यासरूपा प्रतिपत्तिरितीतरेतराश्रयत्वमिति भावः।

ननु सामान्याकारेण स्फोटधीरस्त्येव अधिष्ठानबुद्धिस्तु नास्ति तत्र शब्दाध्यासोऽस्तु तथा च नान्योन्याश्रय इत्यत्राह—स्फुटदृष्टेति।

वस्तुतस्तु स्फोटत्वेनाज्ञातो ? ज्ञातो वा ? नाद्यः। तथात्वे तत्राध्यस्त इत्यत्र न किञ्चिन्मानं बाधाद्यभावात्। न द्वितीयः। विशेषाकारज्ञानेऽध्यासायोगादिति भावः। वर्णात्मनि शक्त एव स्फोटाध्यासः। तथा च वर्णात्मनामेवेति॥ ८८॥

---

शब्दो ब्रह्मेति यत्तन्मुनिभिरभिवधे स ह्यचिद्भेद इष्टः
सूक्ष्माकारस्तु सोऽर्थं न गमयति यतस्सत्तया नैष हेतुः।
स्फोटस्त्वं वर्णजुष्टस्त्विति यदभिहितं भारते साऽपि शक्तिः
वर्णानां स्यात्तयाऽर्थः स्फुट इति घटते स्फोटशब्दोऽपि तस्याम्॥८९॥

सर्वार्थः—आगमिकस्फोटादिशब्दनिर्वाहमाह—शब्द इति॥ तर्हि शब्दब्रह्मेति तत्र तत्र मुनिभिरभिधीयते, तत्किमित्यत्राह—स ह्येति। अचिद्भेदः—ऋग्वेदादिरूपं शब्दमात्रम्, यदि वा शब्दस्य सूक्ष्माकारः, शब्दोत्पत्त्यवस्थाविशेषः; स चार्थावगमको न भवति; शब्दस्य सत्तयाऽर्थावबोधकत्वाभावात्, तादृशावस्थापन्नस्य शब्दस्यानुपलम्भ-

विषयत्वात् । तदिदं सर्वमाह--सूक्ष्माकार इति । तर्हि 'स्फोटस्त्वं वर्णजुष्ट' इति भारतोक्तः कथमिति चेत्, इत्थम्--अर्थस्फोटकत्वात् प्रकाशकत्वाद्वर्णानां शक्तिरेव स्फोट इत्यभिधीयते । अतो वर्णानामुत्पत्त्यवस्थाग्रहविशिष्टाचिद्द्रव्यविशेषव्यतिरेकेण शब्दब्रह्मेति किंचिन्नास्ति । अर्थावबोधकशब्दशक्तिव्यक्तिरेकेण स्फोटशब्दवाच्योऽपि नास्तीत्यर्थः ॥ ८९ ॥

---

आनन्द०—पूर्वसङ्गतिरेवात्रापीत्यभिप्रायेण शब्दप्रमाणमाशङ्क्य निरस्यतीत्याह—तर्हीति—'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती'त्यादिभिरिति शेषः । ऋग्वेदादीयादिशब्देनाष्टाक्षरादिमन्त्राणां ग्रहणम् ।

ननु प्रतीतस्स्वार्थावगमकस्स्यादित्यत्राह—तादृशेति । इत्थमिति—स्फुटयतेऽनेनेति स्फोट इति व्युत्पत्तेर्वर्णसम्बन्धिशक्तिसत्वमिति भावः । किमत्र शब्दब्रह्मशब्दः—स्फोटसाधकः ? उत स्फोटनाद एव ? नाद्य इत्याह—अत इति । उत्पत्त्यवस्थेति—सामग्रीविशिष्ट ऋग्वेदाद्यधिष्ठातृशरीरमित्यर्थः । शब्दस्य द्रव्यत्वपक्षे इदमिति केचित् । द्वितीय आह—अर्थावबोधकेति । मूलं सत्तया शक्तेस्सत्वेनार्थस्य स्फुटत्वमिति व्युत्पत्तिकथनं ।

केचित्तु तया शक्त्या । स्फुट इति सत्—सम्यगित्यर्थमाहुः ॥ ८९ ॥

---

यत्प्रत्येकादिकल्पे गमकविषययोरप्रतीत्यादिदोषात्
बौद्धाश्शब्दाश्च बुद्धिं कतिचिदभिदधुर्वाक्यवाक्यार्थरूपाम् ।
नैतद्बाह्येन बाह्यो विदित इति मतेर्बाधकोक्तेश्च साम्या-
द्वाक्यावाक्यबुद्धेस्त्वनुकथितनयादन्यथासिद्धितश्च ॥ ९० ॥

सर्वार्थः—चिन्मात्रविवर्तवत् शब्दब्रह्मविवर्तत्वेन विश्वमपि वदन्तं शाब्दिकं प्रतिक्षिप्य प्रतिभैव वाक्यवाक्यार्थभावेन दृश्यते न प्रतिभातिरिक्तं किंचिदिति वदन्तौ बौद्धशाब्दिकाभासौ प्रतिक्षिपति—यदिति । तत्र पूर्वार्धेनानुवदति, उत्तरार्धेन परिहारं वदतीति विभागः । अयमत्र भावः—प्रत्येकं वा शब्दवाच्यमर्थः, सर्वो वा ? यदि प्रत्येकमर्थः व्यभिचारः स्यात् । सर्वस्याप्यर्थत्वे पुनरानन्त्यम् । एवं प्रत्येकं वा वाचकत्वं शब्दस्य सामस्त्येन वेति विकल्प्य दूषणं वाच्यम् । तथा च गमकविषययोरप्रतीतिर्विरुद्धप्रतीतिर्वा भवेदिति दोषात् बौद्धाश्शाब्दाश्च केचिद् बुद्धिमेव वाक्यवाक्यार्थभावेनारोपितामाहुः । एतद्दूषयति - नैतदिति । कुत इत्यत आह—बाह्येनेति । बाह्येन शब्देन बाह्योऽर्थो विदित इति प्रतीतेः; प्रत्येकादिविकल्पेन दोषोक्तेश्च साम्यात् । वाक्यवाक्यार्थयोः प्रतिभारूपत्वेऽपि किं व्यवस्थितप्रतिभारूपत्वमुताव्यवस्थितप्रतिभा-

रूपत्वम् ? अव्यवस्थितरूपत्वे लोकव्यवहारविरोधः; व्यवस्थितरूपत्वे सैव व्यवस्था शब्दार्थयोरप्रतिभारूपत्वे स्यादिति भावः। कथं तर्हि वाक्यपदवाक्यार्थपदार्थादिष्वैक्यबुद्धिरिति चोद्यं पूर्वोक्तन्यायेन समुदायविषयत्वेन परिहृतमित्याह—वाक्यादाविति ॥ ९० ॥

---

आनन्द० —प्रसङ्गसङ्गतिमभिप्रेत्याह—चिन्मात्रेति।

ननु प्रतिभायाः वाक्यार्थत्वे का युक्तिः ? कथञ्च तैरुक्तमित्यत्राह—अयमत्र भाव इति—

"प्रत्येकसमुदायादिविकल्पेन विदूषितः।
बाह्यार्थवादस्तत्त्वज्ञैः सम्यगालोच्य निश्चितः॥
वाक्यवाक्यार्थभावेन प्रतिभैव विभाति सा"॥

इति हेमचन्द्राद्युक्तमनुवदति—प्रत्येकं वेति—गामभ्याज दण्डेनेत्यत्र गवादीनां प्रत्येकमर्थत्वं ? उत समुदितत्वेनेति विकल्पार्थः। व्यभिचारस्स्यादिति–एकस्या गोव्यक्तेरभावेऽपि गोशब्दप्रयोगान्नार्थत्वमित्यर्थः। सर्वस्येति—व्युत्पत्तिग्रहणासम्भवाद्व्यवहारमात्रोच्छेद इति भावः। वाचकमपि विकल्प्य दूषयति—एवमिति—गोशब्दः प्रत्येकं वाचकः ? समुदितो वेति विकल्पे पूर्वत्र व्यभिचारः, एकस्य शब्दस्याऽभावे व्यर्था प्रतीतिः। न द्वितीयः। गोशब्दादेरानन्त्येन व्युत्पत्तिग्रहाद्यसम्भवेन व्यवहारमात्रोच्छेदादिति भावः। अप्रतीतिः—आनन्त्येन शक्तिग्रहणाद्यसम्भवेनाऽप्रतीतिरित्यर्थः। विरुद्धप्रतीतिः—प्रत्येकपक्षे यस्मिन्नर्थे वाचकत्वं तदभावेऽपि शब्दार्थप्रतीतौ भ्रान्तिस्स्यात्। प्रत्येकं बोधकाभावेऽपि प्रतीतिर्भ्रान्तिस्स्यात्। अवाचकार्थप्रतीतौ विशेषाभावात्तदभावप्रतीतिस्स्यादिति केचित्। बाह्ये नेति—अनुभवानुसारेणार्थक्लृप्तिरिति भावः। साधकमुपन्यस्य बाधकं परिहरति—प्रत्येकादीति। सैवेति—विकल्पमुखप्रवृत्तदोषत्वेन समत्वमिति भावः। अप्रतिभारूपत्वे स्यादिति—प्रतिभायाः नियामकाभावे व्यवस्थायोगादिति भावः। तत्र व्यभिचारदोषाभाववदत्रापि स्यादिति भावः।

ननु वाक्यं पदातिरिक्तं नास्त्येव–तदनभ्युपगमात्। प्रत्येकं वाक्यबुद्धिश्च नास्ति। तथा वर्णातिरिक्तं पदं नाभ्युपगम्यते प्रत्येकं पदबुद्धिश्च नास्ति। तथा गवाद्यर्थोऽपि वाक्यार्थः समुदाय्यतिरिक्तश्च नास्ति। समुदायिनः प्रत्येकं वाक्यार्थः पदार्थश्च। तथा च पद-वाक्य-पदार्थ-वाक्यार्थाश्च बुद्धिमात्रमिति शङ्कते—कथन्तर्हीति ॥ ९० ॥

आचष्टे प्रत्ययश्च प्रकृतिरपि मिथः श्लिष्टमित्यभ्युपेतं
स्पष्टं दण्डयादिशब्देष्वपि तदितरथा धीविरोधप्रसङ्गात् ।
अन्योन्यस्मारितार्थान्वितमभिदधति स्वार्थमेवं पदानि
स्यान्नातश्चक्रकादिर्नं च पुनरभिधा नापि वाक्यस्य भेदः ॥ ९१ ॥

सर्वार्थः—वाक्यानामर्थवत्त्वे सिद्धे तेषामन्विताभिधायित्वं पदप्रतिबन्द्या समर्थ्यते—आचष्ट इति। द्विविधं हि वाक्यार्थप्रक्रियाभेदमाहुः तत्तत्तन्त्रनिष्ठाः, अन्विताभिधानमभिहितान्वय इति। तत्र पदैरभिहिताः पदार्था वाक्यार्थं बोधयन्तीत्यभिहितान्वयः।

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥

इत्यन्विताभिधानम् । अयमत्र श्लोकार्थः। पदानि तावच्छ्रूयन्ते। श्रुतानि च व्युत्पत्त्यनुसारेण पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति। स्मृतेषु च पदार्थेष्वाकाङ्क्षादिपरामर्शः। तत्रैव न्यायप्रवृत्तिः, न्यायप्रवृत्त्या च वचनव्यक्तिविशेषाभिव्यक्तिस्संपाद्यते। ततस्सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानपदार्थात्मकं वाक्यार्थमभिदधतीति। अभिहितान्वयवादिनस्त्वेवमभ्यदधुः—पदैः पदार्थाः पृथक्पृथग'भिधीयन्ते। तच्चाभिधानं' विशेषव्यक्त्यभावात् स्मारकान्न विशिष्यते; पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते इति वचनात्। ते चाभिहिताः पदार्था योग्यत्वेन परामृश्यमानाः स्वयमेव विशेषसंसर्गात्मकं वाक्यार्थमवबोधयन्ति। न तत्र पदव्यापारः; अर्थैरेवार्थविशेषसिद्धेः। यथा कविभिरालोच्यमानाः पदार्था एव वाक्यार्थरूपमर्थविशेषं संसर्गात्मकमवबोधयन्ति, पश्चादेव शब्दरचना प्रतिपन्नार्थानुरोधेन; एवमत्राप्यर्था एवार्थविशेषमवबोधयन्तीति। अत्रान्विताभिधानवाद्याह—यथा पदे प्रकृतिप्रत्ययौ सहैवार्थं विशिष्टरूपमभिधत्तः, तथैव वाक्येऽपि सर्वे शब्दाः सहैवार्थं विशिष्टमभिदधति। तदिदमाह—आचष्ट इति। तदिदं मत्वर्थीयप्रत्ययसहितेषु दण्डयादिशब्देष्वपि समानमिति दर्शयति—स्पष्टमिति। उक्तार्थेऽनुग्राहकं तर्कमाह—इतरथेति। उपलम्भविरोधप्रसङ्ग एव हि सर्वेष्वपि तर्केषु सारतमः; यथा पदानि प्रकृतिप्रत्ययविभागेन विभक्तान्यपि विशिष्टमेकं पदार्थं वदन्ति; एवं पदान्यपि परस्परस्मारितार्थविशिष्टमेकमर्थं वदन्ति। अयमर्थः—कार्यपरं चेद्वाक्यं संहतान्येतानि पदानि कारकविशिष्टक्रियामभिदधति। सिद्धपरत्वेऽपि समानाधिकरणवाक्यं नीलमुत्पलमितिवन्नानाविशेषणविशिष्टमेकं विशेष्यं सिद्धमेवाभिदधाति। वैयधिकरण्येऽपि व्यधिकरणविशेषणविशिष्टं सिद्धमसिद्धं वा विशेष्यमाचष्टे—काष्ठैः स्थाल्यामोदनं पचतीति; काष्ठैः स्थाल्यामोदनः पक्व इति वा। अत्रायं सारतमोऽर्थः—योग्येतरान्वितस्वार्थाभिधायीनि सर्वाण्यपि पदानि। तत्रतत्र कारकपदानि क्रियान्वितस्वार्थाभिधायीनि। क्रियापदं तु कारकान्वितस्वार्थाभिधायकम् । एवं सिद्धपरत्वेऽपि

विशेष्यपदं विशेषणान्वितस्वार्थाभिधायकम्; विशेषणपदं च विशेष्यान्वित-स्वार्थाभिधायकम्। सर्वमेतदन्विताभिधानान्न मुच्यते; गुणप्रधानभावेनैव पदार्थानां प्रतीतेरेकवाक्यत्वं न विरुध्यते इति। एवमभिधानाङ्गीकारे परवाद्युक्तास्सर्वे दोषा निरस्ता इत्याह—स्यादिति। पदैरर्थप्रतीतिः; अनन्तरमाकाङ्क्षादिपरामर्शः; पश्चात्पदै-रर्थाभिधानम्; ततोऽर्थप्रतीतिरिति चक्रकम्। आकाङ्क्षादिपरामर्शादर्थाभिधानमर्थाभिधा-नानन्तरमाकाङ्क्षादिपरामर्श इत्यन्योन्याश्रयः। उभयमपि नास्ति; प्रथममर्थाभिधाना-भावात् स्मरणमात्रत्वात्प्रथमं प्रत्येकमर्थानाम्। अत एव न द्विरभिधानप्रसङ्गः। विशेषणानां नानात्वेऽपि सर्वेषामपि पदानां विशिष्टार्थैक्यपरत्वेन वाक्यभेदप्रसङ्गोऽपि नास्ति ॥ ९१ ॥

---

आनन्द०—अनुभवबलाद्धि वाक्यानामर्थवत्त्वं पूर्वं साधितम् तुल्यन्यायादन्विता-भिधायित्वमपीति प्रसङ्गादाह—वाक्यानामपीति। विशेषाभिव्यक्तिः—विशेषग्राहकं प्रमाणमित्यर्थः। तन्त्रनिष्ठवाक्यमुदाहरति—यथेति—प्रत्येकं पदार्थानां स्मरणे सति "भेजेऽभितः पातुकसिद्धसिन्धोः। अभूतपूर्वां श्रियमम्बुराशे" रित्यादिवाक्यार्थप्रतीतिर्या तथेत्यर्थः। प्रतिपन्नार्थानुरोधेन पश्चादेव शब्दरचनेत्यन्वयः। यथा पद इति।

ननु प्रकृतिप्रत्ययार्थयोर्युगपदेव स्मरणमस्तु अन्विताभिधानं पश्चादेव। अन्यथा प्रकृतिप्रत्ययौ पदार्थस्मृतिद्वारौ न स्तः। नचेष्टापत्तिः। पदार्थस्मरणं विनाप्यन्विता-भिधाने वाक्यमात्र एव तथा स्यात्। व्युत्पत्तिग्रहश्च व्यर्थ इति चेत्। मैवम्। गामनय दण्डेनेत्युक्तौ गव्येव—द्वितीयार्थान्वयः न तु दण्ड इति। तथा देवदत्तं पश्यति यज्ञदत्त इत्यत्र देवदत्तस्यैव द्वितीयार्थान्वय इति नियमस्त्वभिहितान्वयपक्षे नोपपद्यते अविशेषात्। तथा च प्रकृतिः प्रत्ययार्थान्वितं स्वार्थं प्रतिपादयति प्रत्ययश्च प्रकृत्यन्वयमिति नियम-स्त्वन्विताभिधान पक्ष एव सम्भवति। न च प्रकृति प्रत्ययस्मारितयोरेव कल्पना। तथा सति कार्यादिस्मृतार्थं साधारण्याभावात्तद्वैलक्षण्यात्पदानामेव लाघवाद् बोधकत्वसिद्धेः। तथा चामुमर्थं शब्देन जानामीत्यनुभवश्चानुगृहीतस्स्यात्। लाक्षणिकस्याननुभावकत्व-मित्ति मर्यादाऽपि सिद्ध्यति। न च प्रकृतिप्रत्ययसमुदायेन विशिष्टस्मृतिः, वैशिष्ट्य-शक्त्यभावेन समूहालम्बनापत्तेः। शक्त्यन्तरकल्पने च बोधकत्वमेवाङ्गीक्रियतां तुल्य-त्वादिति।

ननु पदानामभिधायकत्वं किं प्रत्येक ? मुत मिलित्वा ? नाद्यः। अनेकवाक्यार्थ-बोधप्रसङ्गात्। न द्वितीयः। अभिन्नार्थानां सम्भूय बोध्यार्थाभावादित्यत्राह—अयमर्थ-इति। क्वचिद्विशेष्यशब्दो द्विः पठितः तदाऽनुषङ्गक्लेशो नास्तीत्यादि द्रष्टव्यम्।

ननु विशिष्टार्थाभिधायित्वमेव न सम्भवति। सर्वेषां प्राधान्येनाभिधायकतया गुणप्रधानभावेनाभिधानायोगात्।

किञ्च गौरश्वः पुरुष इत्यादावपि विशिष्टान्वयबोधस्स्यात् । अग्निना सिञ्चतीत्यत्राप्यन्वयबोधस्स्यादित्यत्राह—**अत्रायं सारतम इति**—अनुभवानुरोधेन कल्पनेति क्रियापरवाक्ये क्रियाप्राधान्यमन्यत्र विशेष्यस्य प्राधान्यमिति भावः । **अर्थप्रतीतिः**—अर्थगोचरानुभवः । **अर्थाभिधानम्**—अर्थप्रतिपत्त्युत्पादनव्यापारः । प्रथमं नानुभव इति समाधत्ते—**स्मरणमात्रत्वात्प्रथममिति** । **सर्वेषामपीति**—अर्थैक्यादेकवाक्यत्वमिति भावः ॥ ९१ ॥

---

**स्वार्थे शब्दस्स चासावपि मिलितमतौ व्यापृतावित्यनेकाः**
**कल्प्यास्ते शक्तयः स्युः कथमपि न भवेत्तादृशी शक्तिरेका ।**
**अर्थेषु स्मारितेषु प्रथममथ च तद्योग्यतादौ विमृष्टे**
**शब्दैरेवान्विते धीर्मम भवति तव स्वार्थबोधव्यपेतैः ॥ ९२ ॥**

**स्वार्थः**—इत्थमन्विताभिधानं साधयित्वा स एवान्विताभिधानवादी परैरभिहितमभिहितान्वयवादं दूषयति—**स्वार्थ इति** । पदानां स्वार्थबोधनशक्तिः, पदार्थानां संसर्गबोधनशक्तिः, पदानामेव पदार्थेषु संसर्गबोधनशक्त्याधानशक्तिरिति शक्तित्रयं कल्प्यमभिहितान्वयवादिनः । **स चासाविति**—शब्दश्चार्थश्चेत्यर्थः । मिलितमतौ शब्दा अपि व्याप्रियन्त इति वक्तव्यमभिहितान्वयवादिना; अर्थे संसर्गबोधनशक्त्याधानशक्तेश्शब्दनिष्ठत्वादिति भावः । नन्वेकैव शक्तिः अर्थप्रतिपादनं संसर्गप्रतिपादनं च तद्द्वारा करोति, तन्न; तत्तच्छक्तीनां नियतविषयत्वात् । तदिदमाह—**कथमपीति** । अस्माकं पुनरेकैव शक्तिर्योग्येतरान्वितं स्वार्थमभिदधातीति लाघवम् । प्रथमं स्मरणं, न तत्राभिधानव्यापारः; अथ च परामर्शः, तत्रापि न शब्दव्यापारः, केवलं विशिष्ट एवार्थे शब्दव्यापारः; अत एव शाब्दत्वं वाक्यार्थज्ञानस्यास्मत्पक्षे । युष्मत्पक्षे तु पदार्थप्रतिपादनद्वारेण कथंचिदेव शाब्दत्वम् अतो जघन्यस्त्वत्पक्ष इत्याह—**शब्दैरेवेति** ॥९२ ॥

---

**आनन्द०**—परपक्षदूषणस्यापि प्रकृतसिद्ध्यर्थतयोपोद्घातसङ्गतिमाह—**—इत्थमिति । पदानां स्वार्थबोधेनेति** ।

यद्यपि पदार्थानां पदैस्स्मृतिमात्रमेव, तथापि स्मारकत्वशक्तिरस्तीत्यर्थः । **शक्त्याधानशक्तिरिति**—पदोपस्थितपदार्थानामेवान्वितार्थबोधकत्वादिति भावः । **शक्तीनां नियतविषयत्वादिति**—विषयभेदेन शक्तिभेदान्नानार्थवदिति भावः । **न तत्राभिधानव्यापार इति**—यद्यपि परस्यापीदं समानं । किञ्चास्मन्मतेऽर्थानामप्यन्विताभिधानेन पृथक् शक्ति कविकाव्याद्यर्थसाधारण्येन क्लृप्तायास्सत्त्वादिति विपरीतं लाघवम् । तथापि कर्मकर्तृत्वादिविपरीतान्वयप्रसङ्गात् । गौरश्वः पुरुष इत्यादिनिराकाङ्क्षस्थलेऽन्वयबोधाभावाच्छक्तित्रयमुपगम्य परस्येदमुक्तमिति मन्तव्यम् । **मूलं तव स्वार्थबोधव्यपेतैः**—स्वार्थबोधनव्यवहितै स्तत्रैव पर्यवसितैरिति । अस्मन्मते तु शब्दैरेवान्विताभिधानमित्यर्थः ॥ ९२ ॥

संसर्गं वाक्यवेद्यं स्फुटमभिदधते कानिचिद्भाष्यवाक्या-
न्याद्यव्युत्पत्तिरुक्ता प्रतिपदमिह च क्वापि मान्यस्य हानिः।
इत्थं मत्वा सयूथ्याः कतिचिदभिहितान्योन्यसंसर्गमीषु-
स्तत्तत्स्वारस्यलोकप्रतिपदनुगमात्तच्च नाधिक्षिपामः ॥ ९३ ॥

**सर्वार्थः**—इत्थमन्विताभिधानमु[क्तम् ।] क्त्वा अभिहितान्वयपक्षेऽपि नास्माकं काचित्क्षतिरित्याह—**संसर्गमिति**। संसर्गमेव वाक्यवेद्यं कानिचिद्भाष्यवाक्यान्यभिदधति। तदनुकूलं चाम्बातातमातुलादिभिर्बालानां प्रतिपदव्युत्पत्त्यभिधानं भाष्यकारस्य। तदेतदाह—**आद्येति**। एतत्पक्षस्वीकारे नान्यस्य प्रधानार्थस्य हानिः। तदिदमाह—**इह चेति**। यत्तु शक्तित्रयकल्पनागौरवमभिहितं, तदपि नास्ति; पदानामेव पदार्थाभिधानशक्तेः स्वीकारात्। अर्थानां संसर्गबोधनसामर्थ्यं स्वाभाव्यमेव; शब्दाभिधानमन्तरेणापि प्रतीतानामर्थानां संसर्गबोधनसामर्थ्यस्य लोके दृष्टत्वात्। अन्यथा कथमिव कवयः परामृश्यमानैः पदार्थैर्वाक्यार्थं प्रतिपद्य स्वयमेव वाक्यं रचयेयुः? शाब्दत्वं च शब्दान्वयव्यतिरेकाभ्यामेव युज्यते; वाक्यार्थस्याव्यवधाने त्वनादरः; अतोऽभिहितान्वय एव स्यादिति केचिदाचार्याः। तदेतदाह—**इत्थमिति**। एतदङ्गीकरोति—**तत्तदिति**। तत्तद्भाष्यस्वारस्याल्लोके बालकानां व्युत्पत्तिसमये पदार्थप्रतिपत्तिपूर्वकं वाक्यार्थप्रतिपत्तिस्वारस्यानुगमादमुमपि पक्षं नाधिक्षिपाम इति। अयमत्र भावः—यद्यप्यन्विताभिधानं, तथाऽपि निर्विशेषब्रह्मवादिनो न वेदवेद्यत्वं निर्विशेषस्य सिध्येत्। यद्यभिहितान्वयस्तथाऽपि तथा; अन्वितस्यान्वयस्य वा भेदगर्भत्वात्। अतो गुरुकुमारिलपरिगृहीतं पक्षद्वयमप्याश्रित्य परपक्षवादिनं प्रतिक्षिपामः, नास्माकं क्वापि निर्बन्ध इति। प्रधानार्थविरोधे हि प्रतिक्षेप्यत्वनिर्बन्धः ॥ ९३ ॥

---

**आनन्द०**—प्रसङ्गादाह—**इत्थमिति**—**संसर्ग एव वाक्यवेद्यः**—स्मृतपदार्थवेद्य इत्यर्थः। **भाष्यवाक्यानि**—प्रथमसूत्रभाष्यवाक्यानि। **तदनुकूलञ्चेति**--पदार्थे व्युत्पादनस्य पदार्थबोधन एवोपयुक्ततयाऽन्यत्राऽप्रयोजकत्वादिति भावः। **पदानामेवेति**—पदैरभिहितानामेवान्वयबोधाङ्गत्वमिति नियममभ्युपेत्येदं।

वस्तुतस्स्मारकान्न विशिष्यत इति पक्षे तदेव नास्तीति भावः। **स्वाभाव्यं**—स्वभावसिद्धमित्यर्थः। तदेवोपपादयति--**शब्दाभिधानमिति**—अस्मिन्पक्षे शाब्दीह्याकाङ्क्षा शब्देनैव पूर्यत इति न नियम इति भावः। वाक्यार्थस्य शाब्दत्वञ्चेत्यन्वयः।

केचित्तु संसर्गं वाक्यवेद्यमिति पद्ये पूर्वार्धे अन्विताभिधानपक्ष उच्यते। उत्तरार्धेऽभिहितान्वयपक्षः। तथा च यत्विति पर्यन्तमन्विताभिधानपक्षः, ततः परमभिहितान्वयपक्षः प्रतिपाद्यत इति व्याचक्षते। तदाऽवतारिकाऽपि कथञ्चित्सङ्गमनीया।

नन्वभिहितान्वयपक्षे स्वरूपप्रतिपादनस्याऽपि सम्भवान्निर्विशेषवादोऽपि तवानिष्टस्सेत्स्यतीत्याह—अयमत्र भाव इति—अन्विताभिधानवादी गुरुः। अभिहितान्वयवादी कुमारिलः। मूलं कतिचित्सयूथ्या इति—श्रीराममिश्रप्रभृतयः। तत्तत्स्वारस्यलोकप्रतिपदनुगमात्—तत्तल्लौकिकानुभवानुरोधेन कल्प्यत्वात् यद्यनुभवानुगतं न तत्प्रतिक्षेप्यमिति भावः ॥ ९३ ॥

---

द्वारे भिन्ने समानाधिकरणवचसामैक्यतात्पर्यसिद्धेः
भेदाभेदस्थितानामिदमनुगुणमित्याहृताद्देर्दुराशा ।
वस्तुस्थित्यैकरूप्ये वचनमितरथा बोधयत्स्यान्न मानं
तन्मानत्वाद्द्विधैकं स्थितमिति च न सद्भेद एवोपपत्तेः ॥ ९४ ॥

सर्वार्थः—इत्थं वाक्यस्याभिधानप्रकारभेदमुक्त्वा समानाधिकरणवाक्यानां भेदाभेदपरत्वं प्रतिक्षिपति—द्वार इति। इत्थं खल्वार्हतादीनामालापः—यत्र समवायमिच्छन्ति समवायवादिनः, तत्र भेदाभेदमेव वयमन्विच्छामः। स च भेदाभेदात्मा धर्मविशेषस्सामानाधिकरण्येनैव सिद्धः, भेदे सति मत्वर्थीयदर्शनात् सामानाधिकरण्यस्य; दण्डी कुण्डली गोमानश्ववानिति। अतो मत्वर्थीयनिरपेक्षसामानाधिकरण्यं भेदाभेदमेवोपपादयति। अत्यन्तभेदे सामानाधिकरण्यानुपपत्तेः, घटः पट इतिवत्; अत्यन्ताभेदे च सामानाधिकरण्यं न संभवति, घटो घट इतिवत्। यत्र भेदाभेदौ तत्रैव सामानाधिकरण्यम्, नीलमुत्पलमिति। अतो नीलत्वोत्पलत्वादीनां द्रव्यात्मना भवत्यैक्यम्, पर्यायात्मना भेदः। पर्यायशब्देन धर्मा उच्यन्ते। अतस्सामानाधिकरण्यं भेदाभेदानुगुणमिति। तदेतदनुभाष्य दूषयति—आर्हतादेर्दुराशेति। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेक[त्र]स्मिन्नर्थे वृत्तिस्सामाधिकरण्यमिति प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वलक्षणत्वात्सामानाधिकरण्यस्य, तेनैव सामानाधिकरण्येन भेदाभेदसिद्धिरिति वचनं विरुद्धभाषणत्वात् दुराशामूलमेव। यदि भेदाभेदं बोधयेत् सामानाधिकरण्यम्, प्रमाणविरुद्धार्थप्रतिपादकत्वात्प्रमाणमेव न स्यादित्याह—वस्त्विति। नह्यतीतमस्तीति बोधयितुमेव शक्नोति वचनम्। वचनबलाद्वस्तुस्थितिमप्यन्यथयाम इति चेत्, तन्नेत्याह—तन्मानत्वाद्द्विधैकं स्थितमिति च न सदिति। कुत इत्यत आह—भेद इति। भेदपक्ष एव सामानाधिकरण्यस्योपपत्तेर्भवत्पक्षविरुद्धं सामानाधिकरण्यमित्यर्थः। किञ्च सामानाधिकरण्यस्यानेकान्तपरत्वे भेदाभेदसिद्धिः, तत्सिद्धौ सामानाधिकरण्यस्यानेकान्तनिष्ठत्वमित्यन्योन्याश्रय इति भावः ॥ ९४ ॥

आनन्द०—प्रसङ्गसङ्गतिमाह इत्थं वाक्यस्येति—आदिशब्देन कौमारिलादीनां ग्रहणं। जिनग्रहणप्रक्रियाग्रन्थवाक्यमेवानुवदति—यत्रेत्यादिना। स चेति—नीलादिकमेव भेदाभेदस्वरूपमित्यर्थः। तथैव न्यायकौमुद्यामुक्तेः। अतिरिक्तो धर्मो धर्मधर्मिणोः स्वपर निर्वाहकश्च स इत्यर्थं इत्यन्ये।

ननु सामानाधिकरण्यमात्रं न साधकं दण्डीत्यादावभावादित्यत आह—अतो मत्वर्थीयेति। पर्यायात्मनेति—नीलत्वोत्पलत्वादिनेत्यर्थः। अत्र किं सामानाधिकरण्यान्यथानुपपत्त्या भेदाभेदसिद्धि? उत तद्बोध्यतया? नाद्य इत्याह—भिन्नेति—भेदाधीनस्याऽभेदसाधकत्वं विरुद्धमित्यर्थः। द्वितीय आह—यदिति—योग्यताहीनस्य प्रतिपादनसामर्थ्याभावादिति भावः। प्रमाणमेव न स्यात्—बोधकत्वमेव न भवेदित्यर्थः। वचनबलात्—वाक्यबलादित्यर्थः।

ननु सामानाधिकरण्यं विरुद्धं न भवति तस्यैव प्रतिपादकत्वेन तदधीनत्वादित्यत आह—भेदपक्ष—एव सामानाधिकरण्यस्येति—सिद्धे हि व्युत्पत्तिः—क्वचिदपि तस्यासिद्धत्वात्। वाक्यात्क्वचिदपूर्ववस्तुसिद्धिस्तु मानान्तराविरुद्धत्व इति विवेकः। मूलं द्वारे भिन्ने—अभिधानप्रकारभेदे भिन्न इत्यर्थः। वस्तुस्थित्यैकरूप्ये वचनं एकरूपत्वे वाक्येन प्रतिपादनं नतु विरुद्धरूपत्वे। अबोधयदिति—पदच्छेदः—अबोधकमित्यर्थः। बोधयदित्यपि च्छेदमाहुः। एकं द्विधा—भिन्नाभिन्नत्वेन। तन्मानत्वात्—समानाधिकरणवाक्यबलात्। न स्थितं—सिद्धमित्यसत्। भेद एव—सामानाधिकरण्यादित्यर्थः॥ ९४॥

---

ऐकाधार्याद्विगीतं तदिदमिति नयाल्लक्षयेन्निर्विशेषं
मैवं बाधातिचारस्ववचनहतिभिः स्वोक्तदृष्टान्तदौस्थ्यात्।
तत्तेदन्ताविरोधो वचसि न हि भवेत्तादृशाध्यक्षनीत्या
नो चेत् स्याद्ध्वस्तमस्तं क्षणिकमिह पुनर्देशभेदः क्रमात् स्यात्॥९५॥

सर्वार्थः—मा भूद्भेदाभेदपरं सामानाधिकरण्यम्; अन्यथाऽप्यनुमानबलान्निर्विशेषोपलक्षकमस्त्वित्याह। तथा हि—तत्त्वमित्यादिसामानाधिकरण्यं निर्विशेषोपलक्षकम्, सामानाधिकरण्यात्मकत्वात्; सोऽयं देवदत्त इत्यादिसामानाधिकरण्यवदिति। तदेतदनुभाषते—ऐकाधार्यादिति। दूषयति—मैवमिति। कुत इत्यत आह—बाधेति। तत्त्वमिति विशेषणद्वयविशिष्टविषयतयोपलब्धस्य निर्विशेषपरत्वे स्फुट एव बाधः। अतिचारोऽपि नीलमुत्पलं दण्डी कुण्डलीत्यादौ सविशेषपरत्वात्। स्ववचनहतिः—तदिदमिति सामानाधिकरण्यमिति च भेदव्यवहारं कुर्वाणस्य निर्विशेषपरत्वकथनं स्ववचनविरुद्धमेव। स्वोक्ते च सोऽयं देवदत्त इत्यत्र निर्विशेषपरत्वदृष्टान्तेऽपि दौःस्थ्यमेव; सोऽयमिति सामानाधिकरण्यस्य तत्तेदन्ताविशिष्टवस्तुपरत्वात्। ननु तत्तेदन्तावैशिष्ट्यमेकस्य कथमुच्यते? तत्तेदन्तयोः परस्परविरुद्धत्वादिति; तन्न; विरोधाभावात्।

यदि तत्तेदन्तयोरेकत्र विरोधः, तर्हि सोऽयं देवदत्त इति प्रत्यक्षोपलम्भविरोधः स्यात्। तदिदमाह—**तत्तेदन्तेति**। तर्हि प्रत्यक्षेऽपि वचनवद्विरुद्धमेव स्यादित्याशङ्क्याह—**नो चेदिति**। एकस्य कालद्वयसंबन्धानङ्गीकारे क्षणभङ्गवाद एव प्रसज्येत। अतो न कालविरोधः। देशद्वयसंबन्धविरोधस्तु कालभेदेन परिहृत इत्याह—**इहेति**। प्रत्यभिज्ञायां देशभेदः कालभेदादेव परिहृत इत्यर्थः। अयमत्र निर्णयः—कालद्वयमेकस्याविरुद्धम्; अक्षणिकत्वाङ्गीकारात्। स्वप्रागभावस्वप्रध्वंसकालौ स्वस्य विरुद्धौ। स्वकालस्तु सर्वोऽपि स्वकालत्वादेव स्वस्याविरुद्धः। स्वकालांशौ च तदेतत्कालौ स्वस्याविरुद्धावेव। तत्कालस्तत्काले वस्तुनि संबध्यते; एतत्कालोऽप्येतत्काले। कालस्य स्वपरनिर्वाहकत्वेन कालान्तरानपेक्षणान्नानवस्थादोषः, नाप्यात्माश्रयदोषः। अन्यथा स्थिरवादानङ्गीकारेण क्षणभङ्गप्रसङ्गादिति ॥ ९५ ॥

---

**आनन्द०**—प्रसङ्गादाह—**मा भूदिति**। **उपलक्षकं**—लक्षणया बोधकमित्यर्थः। शाखाग्रन्यायेन शब्दस्पर्शं विनोपलक्षकमित्यन्ये। **विशेषणद्वयेति**।

ननु गङ्गाविषयतयोपलब्धस्य तीरविषयत्वं दृश्यते। अन्यविषयस्याप्यन्यपरत्वं सम्भवतु को–दोष इति चेन्न। तथा सति समानाधिकरणवाक्यमात्रस्य बाधकाभावे विशिष्टपरत्वमभ्युपगतं स्यात्।

किञ्च तथा सति सामानाधिकरण्यात्मकत्वादित्यत्र समानाधिकरणवाक्यत्वादित्यर्थः। तत्र समानाधिकरणांशो व्यर्थः। किञ्च तत्त्वमसीति लक्षणया निर्विशेषपरत्वं-वक्तव्यं लोके लक्ष्यार्थमात्रं सविशेष इति बाध इति भावः। **नीलमुत्पलमिति**—स्वरूपपराणामेव निर्विशेषपरैर्निर्विशेषपरत्वमभ्युपगतम्। **सोऽयं देवदत्त इति**। **नीलमुत्पलमित्यादि**–गुणवाचिशब्दानामिति भावः। **तदिदमिति**—**निर्देश** एव। **सामानाधिकरण्यमिति**—सामानाधिकरण्यं ययोस्तस्य भावः। **इति च**—एतावदर्थ-प्रतिपादकत्वमिति भेदव्यवहार इत्यर्थः।

केचित्तु **तदिदमिति** तत्तेदन्तयोर्भेदव्यवहारः। **सामानाधिकरण्यमिति**—समानधिकरणं ययोस्तयोर्भावः। **इति च**—एतावदर्थप्रतिपादकमिति भेदव्यवहार इत्यर्थ इत्याहुः। **परस्परेति**—एकत्रेति शेषः। **तर्हि सोऽयमिति**—अयं स इत्येकत्र पुरुष भानादिति भावः। **तर्हि प्रत्यक्षेऽपीति**—यथा सोऽयं देवदत्त इति वाक्यविरुद्धार्थप्रति-पादकं न भवति तथा प्रत्यक्षमप्येकत्र विरुद्धोभयग्राहकं न भवति। अन्यथा संशयतापत्तेः। विरोधाप्रतिपत्तौ भ्रान्तिमात्रमिति भावः। इदन्ता–वर्तमानकालसम्बन्धः। तत्ता–भूतकालसम्बन्धः। तौ यदि न विरुद्धौ तथा सति स्वप्रागभावकाले स्वसम्बन्ध-स्स्यात्। तथा ध्वंसकालेऽपि विरोधाभावात्। किञ्च कस्मिन्काले? अतीतकाले न सम्बद्ध्यते। यदि वर्तमानकाले तदाऽतीतकालस्यात्ययो न स्यात् अतीतकाल एव तदा-श्रयादिरित्यत्राह—**अयमत्र निर्णय इति**—मूलं। **ऐकाधार्यम्**—सामानाधिकरण्यम्-एकाधारस्य भावः। ब्राह्मणादेराकृतिगणत्वात् ष्यञ् ॥ ९५ ॥

॥ इति निर्विशेषोपलक्षण सामानाधिकरण्य भङ्गः ॥

सत्याद्युक्तिः प्रकृष्टद्युतिरुडुपतिरित्यादिवद्वस्तुमात्रं
ब्रूते लक्ष्मोक्तिभावादिति यदि न तथा स्वोक्तिबाधादिदोषात्।
रोधस्सद्वाक्यभावाद्भवति च कथितोदाहृतिस्साध्यहीना
प्रश्नोक्तेश्चाविशिष्टं न विषय इति नापृष्टजल्पोपहासः ॥ ९६ ॥

**सर्वार्थः**—उक्तमर्थमसहमानो मृषावादी प्रत्यवतिष्ठते—सत्यादिवाक्यमखण्डपरम् लक्षणवाक्यत्वात् प्रकृष्टप्रकाशश्चन्द्र इतिवाक्यवत्। न चैतद्वाक्यं स्वरूपपरं न भवतीति वक्तुं शक्यते; स्वरूपस्यैव प्रकृष्टत्वात्। कश्चन्द्र इति यदेव पृष्टं तदेव प्रतिवक्तव्यम्। अन्यथा आम्रान् पृष्टः कोविदारानाचष्ट इति न्यायस्स्यादिति। तदेतदनुवदति—सत्येत्यादिना यदीत्यन्तेन। दूषयति—नेति। तत्र हेतुमाह—स्वोक्तीति। लक्ष्मोक्तिभावादिति वदसि, वस्तुमात्रं ब्रूत इति च; परस्परविरुद्धमेतत्; असाधारणधर्मो लक्षणम् तद्वाचिनः कथं निर्विशेषवाचित्वमिति। एवं स्वाचार्यादिवचनबाधः श्रुतिबाध इत्यादि-क्रमादिशब्दार्थः। सत्यादिवाक्यं सविशेषं वक्ति सद्वाक्यत्वादित्यादिभिः प्रतिरोध-श्चानुमानस्य, बाधो वा; तेषामेवानुमानानां तर्कानुग्रहणेन प्राबल्यादिति भावः। तदिदमाह—रोध इति। दृष्टान्तोऽपि साध्यविकल इत्याह—भवति चेति। प्रकृष्ट-प्रकाशश्चन्द्र इति वाक्यस्य सविशेषपरत्वात्, अन्यथा लक्षणसंबन्धाभावेन चन्द्रप्रतीतिः सिध्येत्। अपृष्टोत्तरत्वचोद्यस्य किमुत्तरम्? अभाव एवोत्तरम्; न ह्यपृष्टस्यैवोत्तरं दीयते। प्रष्टा खलु सामान्यतश्चन्द्रशब्दार्थं प्रतिपद्य तद्विशेषप्रतिपत्त्यर्थं चन्द्रस्या-साधारणलक्षणमप्राक्षीत्; वक्ता च तदसाधारणलक्षणं प्राहेति न कश्चिद्विरोधः। अतः प्रश्नोऽपि सविशेषविषय एव, उत्तरमपि तथेति ॥ ९६ ॥

---

**आनन्द०**—आक्षेपसङ्गतिं दर्शयति—उक्तमर्थमिति। कश्चन्द्र इति यत्पृष्टमिति-चन्द्रस्वरूपमात्रं हि अज्ञातं चन्द्रस्य प्रकृष्टप्रकाशादिधर्मा ज्ञाता एवेति भावः। एवं स्वाचार्येति—अतोऽनित्यव्यावृत्तं ब्रह्मेति व्यावृत्तिविशिष्टवस्तुबोधकशाङ्करविवर-णादिभिर्बाध इत्यर्थः। श्रुतिस्सत्यत्वादिविशिष्टबोधिकेति तद्बाधश्चेत्याह—सविशेषं वक्तीति—विद्यमानविशेषसंसर्गवतीत्यर्थः। सद्वाक्यत्वादित्यत्र सद्ग्रहणेन भ्रान्तवाक्ये व्यभिचारपरिहारः।

अन्ये तु वाक्यत्वादित्युक्ते गौरश्व इत्यादौ व्यभिचारः। तदर्थं सदिति। बोधकत्वं तदर्थः। वाक्यशब्देन पदसमुदायमात्रं विवक्षितमित्याहुः।

अन्यथेति—इतरव्यावर्तकधर्माबोधने वस्तु चन्द्र इति पदाद्यविशेषादुत्तरं न स्यादिति भावः। तत्र हेतुमाह—नह्यपृष्टस्येति ॥ ९६ ॥

एकत्रार्थे समानाधिकरणवचसां वृत्तिरुक्ता ततोऽत्र
स्थाप्ये तत्तन्निमित्ते प्रसजति हि भिदा धर्मिणोऽपीति चेन्न ।
नेतव्यं लक्ष्मवाक्यं प्रतिपदनुगुणं साऽत्र सिद्धा विशिष्टे
व्युत्पत्तेस्तादृशत्वाद्भवति तु विहतेः क्वापि भिन्नं विशेष्यम् ॥९७॥

सर्वार्थः—अत्र चोदयति—एकत्रेति । एकस्मिन्नर्थे समानाधिकरणपदानां प्रवृत्तिरुक्ता तर्हि विशेषणभेदाद् विशेष्यभेदोऽवर्जनीयः; तत्तन्निमित्ते तत्तद्विशेषणे खण्डत्वादितिवदिति भावः । [एवं] विशेषणभेदाद्विशेष्यभेदमाशङ्क्य तदेव प्रतिक्षिपति—नेति । तदुपपादयति—नेतव्यमिति । प्रतीत्यनुगुणं हि सर्वं वाक्यं प्रतिपादयति । लक्षणवाक्येऽपि प्रतीतिर्विशिष्ट एव; अन्यथा लक्षणानुपपत्तेः । व्युत्पत्तिरपि तथैव, भिन्नप्रवृत्तोत्यादिना समानाधिकरणपदानां विशिष्ट[पर]वाचित्वस्यैव निर्णयात् । यथैव व्युत्पत्तिस्तथैवार्थं[व वाक्यं] प्रतिपादयति । तथैव श्रोतॄणां प्रतीत्युत्पत्तिः । व्युत्पत्तिश्च यथादर्शनम् । दर्शनं चानेकेषां विशेषणानामेकवस्तुनिष्ठत्वेन । अतो यत्र नीलमुत्पलमित्यादौ विशेषणमेकवस्तुनिष्ठत्वेन तत्र तथैवाङ्गीकर्तव्यम् । यत्र पुनः खण्डो मुण्ड इत्यादौ विरुद्धानां विशेषणानां भिन्नवस्तुनिष्ठत्वेन तत्र तथैवाङ्गीकर्तव्यमिति विभागः । तदिदमाह भवतीति । क्वापि–खण्डो मुण्ड इत्यादौ ॥ ९७ ॥

---

आनन्द०—आक्षेपसङ्गतिरित्यभिप्रायेणाह–अत्र चोदयतीति । तत्तन्निमित्तेति–खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादावित्यर्थः । तथा चैकार्थवृत्तित्वाभावाद्ध्रुवदुक्तं सामानाधिकरण्यमयुक्तमिति भावः । अन्यथेति—प्रतीतेर्विशिष्टवस्तुगोचरत्वाभावे लक्षणं न प्रतिपादयेदिति वैयर्थ्यं वाक्यस्येति भावः । यत्र तु खण्डो मुण्ड इत्यादाविति । यत्र विशेषणानां–सामानाधिकरण्यं विरुद्धं तत्र विशेषणभेदाद्विशेष्यभेद इत्यर्थः । शुक्लो नीलश्शबलो गौरित्यादिरादिशब्दार्थः । मूलं विहतिर्विरोधः ॥ ९७ ॥

---

नानाधर्मप्रणाड्या बहुभिरपि पदैर्धर्मिणोऽत्रैक्यसिद्धौ
नान्योन्याधारतैक्ये प्रसजत उचितज्ञापनैकप्रवृत्तेः ।
बोध्ये सर्वविशिष्टे न च वचनभिदा तच्च सूत्रादिसिद्धं
तात्पर्यं च स्वरूपे क्वचिदपि न भवेन्निर्निमित्तेऽनुपाख्ये ॥ ९८ ॥

सर्वार्थः—नन्वनेकधर्मविशिष्टैकार्थाभिधाने किं क्रमेणाभिधानम् ? युगपद्वा ? क्रमेणाभिधाने पूर्वविशेषणविशिष्टे वस्तुनि उत्तरविशेषणाभावात् विशेषणानां च पाठे क्रमनियमाभावादन्योन्यसमवायप्रसङ्गः । युगपदभिधाने पुनरन्योन्यैक्यप्रसङ्गः, विशेणानामपि विशिष्ट[प्रातिपदि]प्रतिपादकगतसमानविभक्तेर्विशेष्यवद्विशेषणेऽप्यैक्यप्रतिपादनावश्यंभावात् । न हि विशेषणं मुक्त्वा विशिष्टमिति किंचित् प्रतिप[ा]द्यत इत्याशङ्क्य परिहरति—नानाधर्मेत्यादिना प्रसजत इत्यन्तेन ॥ अयमत्र भावः—अन्योन्यसमवायै-

क्ययोः प्रसञ्जनमव्युत्पन्नानां वादः। सामानाधिकरण्यलक्षणानवधारणेनैव ह्येवमुच्यते। भिन्नानामर्थानाम् एकत्र धर्मिणि वृत्तिरर्थसामानाधिकरण्यम्। भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन्नर्थे वृत्तिः—प्रवृत्तिः, पर्यवसानं शब्दसामानाधिकरण्यमित्युक्तम्। तथा च क्रमाभिधाने युगपदभिधाने च नान्योन्यसमवायप्रसङ्गः। नाप्यन्योन्यैक्यप्रसङ्गः। कुत इत्यत आह—**उचिते**। आकाङ्क्षासन्निधियोग्यतापरामर्शपूर्वकमेव शब्दार्थं प्रतिपद्यन्ते श्रोतारः। तथा च योग्यमेव परामृश्यते नायोग्यं, न ह्यग्निना सिञ्चेदिति अग्निसेकयोः कार्यकारणभावं परामृशन्ति। यथैव परामृश्यन्ते तथैव प्रतिपादयन्ति पदानि। नहि विशेषणानामन्योन्यसमवायो योग्यकोटिमाटीकते। तथाऽन्योन्यैक्यमपि। तेनोचितज्ञापनैकप्रवृत्तं वाक्यमनेकविशेषणविशिष्टमेकमाश्रयं प्रतिपादयति। तत्र च परामर्शदशायामेव प्राप्ताप्राप्तविभागसिद्ध्यर्थं पौर्वापर्यपरिकल्पनं विभागः। वाक्यार्थ-प्रतिपादनावस्थायामेकबुद्धिसमावेशेन सहितानि पदानि विशेषणविशेष्यभावेन युगपदेव विशिष्टमर्थं प्रतिपादयन्ति; अन्यथा सामानाधिकरण्यलक्षणमेव संभज्येतेति भावः। तर्हि विशेषणभेदाङ्गीकारे कथमेकवचनप्रवृत्तिरिति मन्दस्य चोद्यमाशङ्क्य परिहरति—**बोध्य इति**। तदुपपादयति—**तदिति**। सामानाधिकरण्यप्रतिपादकसूत्रभाष्यवाक्यादिसिद्धत्वा-दनवद्येयमास्माकी प्रक्रिया। शब्दादर्थप्रतिपत्तिर्माभूत्; तात्पर्यादेव निर्विशेषसिद्धिरित्या-शङ्क्याह—**तात्पर्यमिति**। तात्पर्यमपि शब्दानां वृत्तिरेव। तच्च प्रतिपत्त्यर्हे वस्तुनि; न तु तदनर्हे। प्रतिपत्त्यर्हं च सविशेषमेव; अतो निर्विशेषे नाभिधा, नापि लक्षणा, नच गौणी वृत्तिः, नापि तात्पर्यमिति शब्दाविषयत्वमेव। निर्विशेषशब्दस्तु यदि प्रामाणिक-स्तदा केनचिद्विशेषणेन विशिष्टस्य विशेषणान्तरनिवारणार्थः; निर्विशेषं नगरमितिवत्। न हि नगरस्य यो गजरथतुरगादिसंबन्धः, सोऽपि निषिध्यते निर्विशेषशब्देन। अपि त्वतिपातगृहदाहाद्युपघात एव। एवं ब्रह्मणि निर्विशेषशब्दः। यद्यप्रामाणिकप्रयुक्तोऽयं निर्विशेषशब्दः, किमस्यार्थवत्त्वगवेषणेन, नैरर्थक्यस्यैव तादृशवचनदूषणत्वात्? न ह्यप्रामाणिकवचनमनर्थकमित्यस्माकं काचिद्धानिरिति ॥ ९८ ॥

---

आनन्द०—पुनरप्याक्षेपसङ्गतिः **नन्वनेकेति**—विशेषणविशिष्टेऽन्वय उच्यमाने विशिष्टस्य विशेषणविशेष्याभ्यामनतिरेकाद्विशेष्यवद्विशेषणेऽप्यन्वयस्स्यादिति भावः। **युगपदभिधाने पुनरिति**—क्रमेणाभिधानेऽपीदं समानं, तथाऽपि दूषणान्तरस्योद्भटत्वा, त्तदेवोद्भावितमिति भावः।

ननु समानाधिकरणवाक्यस्यैक्यबोधकत्वं व्युत्पत्तिसिद्धं, समानाधिकरणवाक्य-गतानि विशेषणपदान्यपि भवन्ति चेत्कुतो न स्यात्, न भिन्नेत्यनेनार्थस्य सिद्धिरित्यत आह—**अयमत्र भाव इति**—अत्र विशेषणानां सामानाधिकरण्यं विरुद्धं तत्र विशेषण-भेदाद्विशेष्यभेद इत्यर्थः। शुक्लो नीलश्शबलो गौरित्यादिरादिशब्दार्थः। **मूलं भिन्न-प्रवृत्तीति**।

नन्वेकस्मिन्नित्यत्राऽवधारणं विवक्षितं। तथा चाऽखण्डार्थत्व एवोपपत्तिः अन्यथा गामानयेत्यादेरपि संसर्गरूपैकार्थवृत्तित्वात्सामानाधिकरण्यं स्यात्।

किञ्चाऽऽख्यातस्य कर्तृसङ्ख्यामात्राभिधानपक्षे देवदत्तः पचतीत्यादावव्याप्तिरिति चेन्न। तथा सति नीलोत्पलमित्यादिवाक्यश्रवणानन्तरमुत्पले संशयनिवृत्तिर्न स्यात्। तथा प्रवृत्तिनिमित्तभेदाश्रयणमपि न स्यात्, व्यर्थत्वात्।

न च गौर्गौरित्यादिव्यावृत्तिः तस्य स्वरूपमात्रबोधकत्वादिति वाच्यम्। अन्योन्याश्रयात्। प्राशस्त्यमात्रमर्थवादादेर्लक्ष्यमिति पक्षे तत्रातिव्याप्तिश्च। प्रवृत्तिनिमित्तयोरेकाश्रयबोधकत्वं सामानाधिकरण्यमिति तदर्थतया न वाक्यमात्रेऽतिव्याप्तिः। आख्यातस्यापि प्रथमान्तपदबोधितैकार्थतात्पर्यकत्वान्नाव्याप्तिः।

यद्वा विरुद्धविभक्तिरहितत्वे सति यत्पदं येन सहैकविशेष्यबोधकं तत्पदं तेन सहसमानाधिकरणं। यद्वा भिन्नप्रवृत्तिनिमित्तकत्वे सति एकसंख्याबोधकविभक्तिमत्त्वं वा लक्षणमिति।

वृत्तिशब्दस्यार्थमाह—प्रवृत्तिपर्यवसानमिति प्रवृत्तेश्शब्दव्यापारस्य परिसमाप्तिरित्यर्थः। उक्तमिति—शाब्दिकैरिति शेषः। परामृश्यत इति—विचारपूर्वकं निश्चीयत इत्यर्थः। अन्यथेति।

ननु क्रमेण प्रवृत्तावपि एकस्मिन्प्रवृत्तिरस्त्येवेति कथं सामानाधिकरण्यानुपपत्तिः लक्षणस्य सत्वादिति चेत्। देवदत्तो भुङ्क्ते नैवमिति वक्ति लम्बकर्ण एव सर्वदेत्यादिस्थलेऽपि देवदत्त एव लम्बकर्णादिशब्दानां—तथात्वात्सामानाधिकरण्यप्रसङ्गः। भिन्नप्रवृत्तिनिमित्तानामिति च व्यर्थम् देवदत्त इत्यादेरपि समानाधिकरणत्वसम्भवात्।

न च समानप्रवृत्तिनिमित्ते व्यवहाराभावादावश्यकमिति वाच्यम्। क्रमेण प्रवृत्तावपि तथात्वादिति तुल्यमिति युगपत्सम्भूयैकार्थबोधकत्वं वक्तव्यमिति भावः। सामानाधिकरण्यप्रतिपादकसूत्रेत्यादि।

ननु पूर्वकाले एकस्मिन् इत्यादौ यद्यप्येकवचनादिकं नोक्तं। तथापि नीलोत्पलमित्याद्येकवचनानन्तरमेवोदाहृतमिति भावः। नापि लक्षणेति—मुख्यार्थसम्बन्धो हि लक्षणा सा ज्ञात्वोपयुज्यते। ज्ञानञ्च सविशेषस्यैव। एवं गौण्यपि तस्याः गुणयोगनिमित्तत्वेन विशिष्टाभिधानप्रयोजकत्वात्। तात्पर्यमर्थविशेषबोधनेच्छा। साऽपि सविशेषैव। तथा च न निर्विशेषप्रतिपत्तिरिति भावः। प्रामाणिकः—प्रमाजनकत्वेन सम्मतः। नैरर्थक्यस्यैवेति - निरर्थकस्य शब्दशब्द इत्यस्यैवेत्यर्थः।

केचित्तु आरोपितपरोऽप्रामाणिकशब्द इत्याहुः। मूलं अनुपाख्यं—शब्देन बोधनायोग्यमित्यर्थः॥ ९८॥

बोध्यं चेन्निर्विशेषं बहुभिरपि पदैरेकतोऽन्यद्वृथा स्या-
दन्यव्यावृत्तिभेदात् फलमभिदधतः स्यादखण्डत्वहानिः।
व्यावृत्तिश्चेत्स्वरूपं भ्रम इह न भवेद्भासमाने तु तस्मिं-
स्तस्मात् स्वार्थेषु मुक्तेष्वखिलपदगता लक्षणैवात्र लाभः॥ ९९॥

सर्वार्थः—इदानीं निर्विशेषबोध्यत्वं प्रकरान्तरेणापि [विकल्प्य] दूषयति—बोध्यमिति। यदि बहुभिरपि सत्यज्ञानादिपदैरेकं निर्विशेषं बोध्यम्, एकमेव पदमर्थवत्; अन्यत् सर्वं वृथैव स्यात्। ननु विधिरूपार्थपराणि सत्यज्ञानादिपदानि मा भूवन्, किन्तु निषेधपराणीति यदि वदसि, तदाऽप्यखण्डवाक्यासंभङ्गः; व्यावृत्तिरूपैरेव विशेषणैर्ब्रह्मणस्सखण्डत्वात्; तर्हि व्यावृत्तिर्ब्रह्मस्वरूपमेव। तथा च व्यावृत्तिभेदेनार्थवत्त्वं व्यावृत्तीनां स्वरूपत्वादैक्यं चोपपन्नमिति चेत्, तच्च न; स्वरूपभूताया व्यावृत्तेर्नित्यस्वयंप्रकाशत्वेन प्रपञ्चभ्रमो न स्यात्। तदिदमाह—भ्रम इति। कथं तर्हि शौक्ल्यादीनां स्वरूपमेव भेदः इत्थम्—शौक्ल्यादीनां स्वरूपप्रतिभासे कार्ष्ण्याद्यध्यासाभावात्। शौक्ल्यादयो हि स्वपरनिर्वाहकधर्माः। तेषां प्रतिभासे च न कार्ष्ण्याद्यध्यासः। अतो युक्तं स्वस्यैव भेदत्वं शौक्ल्यादिषु। ब्रह्म तु न धर्मः; नापि च ब्रह्मप्रतिभासे प्रपञ्चाध्यासनिवृत्तिः। अतः कथं व्यावृत्तिरूपत्वं ब्रह्मणः? तदयमर्थः—ब्रह्मस्वरूपस्यैव व्यावृत्तिरूपत्वे प्राभाकरस्यैव शिष्योऽसि। तथा च स्वरूपभेदखण्डनबिभीषिकाभङ्गः; धर्मस्य कस्यचिद्व्यावृत्तिरूपत्वे कणभक्षाक्षपादादिमतमवलम्बसे; तथा च धर्मभेदवादखण्डनगर्वो निर्वापित इति दुर्वैतण्डिकतां मुञ्चसीति कथमखण्डवाक्यार्थ इति। यान्यत्र वक्तव्यान्यन्यानि दूषणानि भाष्य एव वितरेणानुसन्धेयानीत्यस्माभिरुपरम्यते॥ ९९॥

---

आनन्द०—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्याह—इदानीमिति। प्रसङ्ग एव सङ्गतिरित्यप्याहुः। गूढाभिसन्धिश्शङ्कते नन्विति। अभिसन्धिमुद्घाटयति—शौक्ल्यादयो हीति—यथा शौक्ल्यप्रत्यक्षे धर्मिणि कृष्णरूपाध्यासाभावस्तथा तस्मिन्कृष्णरूप तादात्म्याध्यासोऽपि नास्तीत्यर्थः।

ननु यथा केषाञ्चित्पक्षेऽधिकरणमेवाभावः तदा ज्ञानेऽप्यध्यासश्च तथाऽत्राप्यस्त्वित्याह—तदयमर्थ इति। तथा च स्वरूपेति—अत्र किं भेदः स्वरूपं धर्मो वेत्यादिखण्डनमयुक्तमित्यर्थः।

ननु स्वरूपमेव भेदो भवतु। नच भेदखण्डनविरोधः। भेदत्वप्रकारकप्रतीतिखण्डनपरत्वात्तस्य। किं बहुना। प्रपञ्चमिथ्यात्वपर्यवसानार्थत्वान्निर्विशेषज्ञानस्यैव मोक्षसाधनार्थत्वाच्चेति चेत्तत्राह—अत्र यानि वक्तव्यानीति—न तावत् भेदत्वप्रकारकप्रतीतिखण्डनार्थत्वं सम्भवति अनृताऽभेदादिभ्रमप्रसङ्गात्। निष्प्रकारकज्ञानस्याऽध्यासाविरोधित्वात् नापि मिथ्यात्वसिद्ध्यर्थता। भेदखण्डने सत्यभेदप्रसङ्गेन प्रपञ्चस्यापि सत्यतापातात्।

नापि निर्विशेषज्ञानस्य मोक्षसाधनत्वसिद्धिः। भेदखण्डने सति जडाभेदज्ञानस्यैव मोक्षहेतुत्वप्रसङ्गादित्यादि प्रथमसूत्र भाष्य एव वाचनिकतया तात्पर्यंगत्या चानुसन्धेय इत्यर्थः ॥ ९९ ॥

---

**बाधार्थं यत्समानाधिकरणवचनं नाविशिष्टं वदेत्त-**
**त्त्रैकोऽध्यासयोग्याकृति वदति परो भेदयुक्तं तु शब्दः।**
**निर्दिष्टे वस्तुमात्रे भवतु कथमिहारोपितं बाधनीयं**
**भ्रान्तिर्भेदाप्रतीतौ विरमतु च कथं हेतुपौष्कल्ययुक्ता ॥ १०० ॥**

**सर्वार्थः**—नन्वस्मत्पक्षे बाधार्थसामाधिकरण्याङ्गीकारान्न विशिष्टविषयत्वसिद्धिः। यथा चोरः स्थाणुरिति, तथैव पुरुष एवेदं सर्वम्, तत्त्वमसीत्यादिकमिति; तदेतदप्यसमञ्जसमित्याह—**बाधार्थमिति**। यदिदं बाधार्थं सामाधिकरण्यमित्युच्येत तद्विशिष्टमेव वदति। तत्कथमित्यत्राह **तत्रेति**। बाधार्थे सामानाधिकरण्येऽप्येकश्शब्दोऽध्यासयोग्याकृति वस्तु वदति, यश्चोरत्वेन प्रतिपन्न इति। परस्तु शब्दो भेदयुक्तं वस्तु वदति स्थाणुरिति। तथा च य एतावन्तं कालं चोरत्वेन प्रतिपन्नः स स्थाणुरिति चोरप्रतीतिविषयत्वं स्थाणुत्वं चैकवस्तुनिष्ठमेव प्रतीयते; तथा च सविशेषविषयत्वमेव। चोरत्वस्थाणुत्वयोः परस्परविरुद्धत्वात्, चोरत्वबाधेन बाधार्थमित्युच्यते; यदि स्थाणुत्वमपि मिथ्या कथं चोरत्वं बाध्येत? अतो विरुद्धधर्मसद्भावस्तद्विरोधिधर्मबाधाङ्गम्। न हि शुक्तित्वसद्भावमन्तरेण रजतत्वं बाध्यते। तदिदमाह **पर** इति। ननु वस्तुमात्रप्रतीतिरेव बाधकमस्तु, किमनेन तदतिरिक्तेन धर्मेणेति मा वोचः; वस्तुप्रतीतेरध्यासावस्थायामपि सद्भावादित्याह—**निर्दिष्ट** इति। बाधाभावे भ्रान्तिर्नित्यमेवानुवर्तेत; बाधश्च भेदग्रहणमन्तरेण नोपपद्यत इत्याह—**भ्रान्तिरिति**। **हेतुपौष्कल्ययुक्ता**—भेदाप्रतीतिरेव भ्रान्तेर्हेतुपौष्कल्यम्; तथा च कथं भ्रान्तिर्विरमेत्? अयमर्थः-यथा चोरत्वस्य स्थाणुत्वं बाधकम्, एवं तत्तत्पदार्थगतासाधारणधर्मदर्शनमेव प्रपञ्चबाधहेतुः। अन्यथा बाध्यबाधकभाव एव न स्यादिति ॥ १०० ॥

---

**आनन्द०**—आक्षेपसङ्गतिमभिप्रेत्याह—**नन्विति**। चोरः स्थाणुरित्यत्र विशेषणस्य बाधात्। अबाध्यत्वे स्वरूपमात्रं वाक्यबोध्यमिति निर्विशेषसिद्धिरिति भावः। **तथैवेदमिति—पुरुष एवेदं सर्वं**—तत्त्वमस्यादिकमिदं सामानाधिकरण्यमित्यर्थः।

ननु बाधार्थसामानाधिकरण्यं नाम परस्परं निषेध्यनिषेधपरत्वं। तथा च स्थाणुश्चोर इति स्थाणुत्वेन यथा चोरत्वं निषिध्यते तथा चोरत्वेन स्थाणुत्वमपीति कथं सविशेषपरत्वमित्यत्राह—**न चोरत्वस्थाणुत्वयोरिति**। तत्र हेतुं वक्ति **यदि चोरत्व मिति**। क्वचिन्नञा विनैव चोरत्वस्थाणुत्वयोरिति पाठः सतु सुगम एव।

ननु वस्तुगत्या चोरत्वस्य मिथ्यात्वमप्यस्तु स्थाणुत्वं सत्यमप्यस्तु। तथाऽपि वाक्यात्प्रतीतिस्सविशेषविषयप्रतिरुद्धा स्वरूपमात्रगोचरा जायत इति न विशिष्ट-बोधकमिति चेत्। अत्राहुः। यदि कोटिद्वयज्ञानं प्रतिरुद्धं तर्हि ज्ञानं न-जायते संशयमात्रं न स्यादपि। स्वरूपज्ञाने न सामग्री। अन्यसामग्र्या अन्यकार्यजनने सामर्थ्या-भावात्–अन्यथाऽतिप्रसङ्गात् वस्तुतो निर्विशेषप्रसङ्गाच्चेति।

नन्वेतावता निश्चायकज्ञानमावश्यकम्। तच्चानन्यगत्या स्वरूपज्ञानमेव स्यादित्यत्राह—**अयमर्थं इति**—अगतिर्नास्ति गत्यन्तरमस्तीति भावः॥ १००॥

---

**मानबाधाद्यभावान्निगम इतरवद्वक्तृदोषस्तु नास्मिन्**
**बाधोऽप्यस्यानुमाद्यैरपि न हि सुवचनस्तद्बलेनैव बाध्यैः।**
**संदिग्धा नात्र बुद्धिर्न च न समुदिता तेन विज्ञानसिद्धा-**
**वुत्सर्गाम्नानमेतन्मतिकलुषजयः स्याच्च मीमांसयैव॥ १०१॥**

**सर्वार्थः**—अत्र कश्चिदाह—मा भून्निर्विशेषपरत्वं वाक्यस्य, अथापि वेदप्रामाण्यमेव नास्तीति। तं प्रतिब्रूते—**मानमिति** वेदः प्रमाणं कारणदोषबाधकप्रत्ययविधुरत्वे सति वाक्यत्वात्संप्रतिपन्नवाक्यवत्। न चायं विशेषणासिद्धो हेतुरित्याह—**वक्तृदोष इति**। वक्त्रभावादेव वक्तृदोषो नास्ति; बाधकप्रत्ययोऽपि न तावदनुमानेन, अनुमानस्यै-वागमबाधितत्वेनाप्रमाणत्वादित्याह—**बाधोऽपीति**। आगमेन चेद्बाधः, स चागमो वेदश्चेद्वेदप्रामाण्याङ्गीकारः। स्मृत्यादिकं चेद्वेदमूलत्वान्न वेदबाधकम्। वेदविरुद्धस्मृतिः पुनर्वेदानुकूलस्मृतिविरोधादप्रमाणमिति **शारीरकस्मृत्यधिकरणे** स्थापितम्। लौकिकं चेद्वाक्यं बाधकं तस्यालौकिकविषये प्रवृत्त्यभावादबाधकत्वमेवेति भावः। तर्हि वेदवाक्य-जनितस्य ज्ञानस्य बाधितत्वाभावेऽपि संदिग्धत्वादप्रमाणत्वमुपवर्णयाम इति चेत्, तन्न; असंदेहरूपत्वात् ज्ञानस्येत्याह—**संदिग्धेति**। [नच] ज्ञानमेव वेदवाक्यान्न जायत इत्यनुत्पत्तिलक्षणाप्रामाण्यमपि नेत्याह—**न चेति**। अतो विज्ञानस्य सद्भावे सति प्रामाण्यस्य स्वतस्त्वाद्वेदवाक्यमुत्सर्गात्सामान्यात् प्रमाणमेव। अप्रामाण्यशङ्कानिराकरणं मीमांसया सिध्यतीत्याह—**मतिकलुषेति**॥ १०१॥

---

**आनन्द०**—प्रसङ्गादाह—**अत्र कश्चिदिति**। उपोद्घात इत्यप्याहुः। चैत्यवन्दन-वाक्ये व्यभिचारादाह—**कारणदोषेति**—भ्रमादिमूलत्वादिति भावः। यूपादित्यवाक्ये व्यभिचारपरिहाराय—**बाधकेति**—यूपादित्यैक्ये तस्याऽप्रमाणत्वादिति भावः। घटः कर्मत्वमानयनं कृतिरित्यत्र व्यभिचारवारणाय **वाक्यत्वादिति**—आकाङ्क्षादिमत्पद-समूहो वाक्यमित्यर्थः।

नन्वत्र न कारणदोषाभावेति विशेषणं तत्र विशेष्यस्यैव हेतुत्वसम्भवात्।

नच हेतुद्वये तात्पर्यं तथा सति नचायं विशेषणासिद्धिरित्यादिमूलविरोधात्। भ्रान्तप्रकारकवाक्ये व्यभिचाराच्चेति चेत्। अत्र वदन्ति। प्रमासहचरितदोषमूलत्वं तदर्थः। भ्रान्तप्रकारकवाक्ये च न व्यभिचारः, प्रमासहचरितत्वात् तथा-बाधशब्देन प्रत्यक्षबाधो विवक्षितः। तावन्मात्रञ्च गगननीलिमवाक्ये व्यभिचारीति दोषाभावे सतीति।

न च शुक्लाद्युक्तिरिति गगननीलिमादिवाक्ये व्यभिचार इति वाच्यम्। तद्भिन्नत्वेनापि विशेषणादिति। बाधकप्रत्ययः किमनुमानेन ? यद्वा आगमेन ? नाद्य-इत्याह—**न तावदनुमानेनेति**।

नन्वागमस्याधिकबलत्वं प्रामाण्ये सिद्धे, अधिकबलत्वे सिद्धे प्रामाण्यमिति परस्पराश्रय इति चेत्। अत्राहुः। कारणदोषविधुरस्य प्रत्यक्षबाधा भावा-त्तस्याऽधिकबलत्वाभावे प्रतिरोधस्स्यादित्यनुमानेन बाधो नास्तीति भावः। द्वितीयेऽपि किमागमशब्देन वेदो विवक्षितः ? उत तदन्य इति विकल्प्याऽद्य आह —**स चागमो वेद-श्चेदिति**। द्वितीयेऽपि स्मृतिर्लौकिकवाक्यं वा। प्रथममपि द्विविधम् अप्रमाजनकत्वं प्रमाजनकत्वाभावोऽपि। आद्यं दूषितं बाधाभावादिति। द्वितीयमपि द्विविधम् संशयजनकत्वं ? उत ज्ञानमात्रजनकत्वं। तत्राऽऽद्यं शङ्कते—**ज्ञानमेवेति**।

ननु वेदवाक्यानामेव परस्परविरुद्धार्थबोधकत्वं दृश्यते। यथा 'निर्गुणं निष्क्रियं शान्तं पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'यस्सर्वज्ञस्सर्ववित्' 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाती'ति। ततश्च परस्परप्रति-बन्धात्कथं ज्ञानमुदेति कथं वा स्वतः प्रामाण्यमिति शङ्कायामाह—**अत इति**—मीमांसया शङ्कानिवृत्तौ बोधे सति स्वतः प्रामाण्यात्प्रमाजनकत्वलक्षणं प्रामाण्यमक्षतमेवेति भावः ॥ १०१ ॥

---

**मानं वेदोऽपि वक्तुर्गुणत इति परं न्यायवित्साधयिष्यन्**
**सामान्याद् बुद्धिहेतोः प्रमितिमधिकतस्साधयत्यन्यनीत्या।**
**कार्यत्वं भेदकं स त्विह वदतु कथं धीविशेषत्वहेतौ**
**सिद्धेऽसिद्धेऽपि नित्यप्रमितिमति विभौ निष्फलत्वादमुष्य ॥ १०२ ॥**

**सर्वार्थः**—इत्थं किल परतःप्रामाण्यवादिनो वदन्ति—वक्तुर्गुणत एव मानं वेद इति। तस्यायमनुमानाभिप्रायः—प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशे-षत्वादप्रमावदिति सामान्याद्बुद्धिहेतोः। अधिकतः—अधिकेनाप्तोक्तत्वेन हेतुना। अन्यनीत्या—अप्रमादृष्टान्तेन; यथा अप्रामाण्यमनाप्तोक्तत्वेनाधिकेन हेतुना जायते। एवं प्रामाण्यमप्याप्तोक्तत्वेनाधिकेन हेतुना भवतीत्यर्थः। अत्रोत्तरम्—**कार्यत्वमिति**। धीविशेषत्वहेतौ—तद्विशेषत्वादित्यस्मिन् हेतौ। कार्यत्वम्—भेदकं विशेषणम्। स तु—स-वादी; कथं वदतु—वक्तुमशक्यमित्यर्थः। तदेवोपपादयति—**सिद्धेऽसिद्धेऽपीति**। यदि

नित्यप्रमितिमानीश्वरस्सिद्धः, स्वतःप्रामाण्यमेव सिद्धं भवति; ईश्वरप्रमितेर्नित्यत्वेन प्रामाण्यकारणाभावात्। तथा चेश्वरप्रमितेः पक्षकोटिनिवेशे कार्यत्वे सतीति विशेषणमसिद्धम्। पक्षकोटिनिवेशाभावे क्वचित् स्वतः प्रामाण्यमेव सिध्यति। नित्यप्रमितिमत ईश्वरस्यासिद्धावपि कार्यत्वे सतीति विशेषणं व्यर्थं व्यवच्छेद्याभावादित्यर्थः॥ १०२॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमाह—**इत्थमिति**। अवतारिकायाः वैचित्र्यप्रदर्शनाय प्रतीकानुपादानमिति वदन्ति। अनुमानस्याऽस्पष्टत्वादाह—**इत्थं किलेति**। **ज्ञान हेत्वतिरिक्तेति**—ज्ञानत्वावच्छिन्न कार्यतानिरूपितकारणतानाश्रयहेतुजन्येत्यर्थः। तेन न बाधो यत्स्वाद्राव न्यायेन विशेषमादाय च न सिद्धसाधनम्।

नन्विन्द्रियादिकमादाय सिद्धसाधनमिति चेत्-प्रमाभ्रमसाधारणधर्मावच्छिन्नकार्यतानिरूपित कारणतानाश्रयत्वस्य विवक्षितत्वात्। कार्यत्वे सति इति नित्यज्ञाने व्यभिचारवारणाय तद्विशेषत्वं ज्ञानविशेषत्वम्। तथा च कार्यं ज्ञानत्वादित्यर्थः। अप्रयोजकत्वशङ्कावारणार्थं विशेष्यम्। अन्यथा घटो घटसामान्यहेत्वतिरिक्तहेतुजन्यः—कार्यत्वादित्यनुमानापातात्। एवञ्चाऽप्रमायां विशेषव्याप्तिसत्वेन कार्यत्वहेतुवन्नाप्रयोजकत्वशङ्केत्याहुः।

अन्ये तु ज्ञान हेत्वतिरिक्त हेतुजन्येत्यत्र प्रमाऽप्रमोभयवृत्तित्वरहितानेकव्यक्ति ज्ञाननिष्ठधर्मावच्छिन्नकार्यतानिरूपककारणजन्येति साध्यमिति। स्मृतिज्ञाने व्यभिचारवारणाय विशेषशब्दस्तु अनुभव पर इत्याहुः।

अप्रयोजकत्वशङ्कां परिहरति—**यथाऽप्रामाण्यमिति**—**स्वतः प्रामाण्यमेव सिद्धं भवतीति**। यद्यपि जन्यप्रमायां तत्सिद्धिर्नास्त्येव। तत्र हि स्वतस्त्वं साधनीयं तस्यैव वेदप्रामाण्यप्रयोजकत्वात्। तथाऽप्यप्रयोजकत्वान्नित्यवदनित्येऽपि प्रामाण्यं कारणप्रयोज्यं नेति ध्येयम्। एवञ्च तत्र व्यभिचारव्यावर्तनेन प्रयोजनं नास्तीति भावः। **मूलं वक्तुः गुणत इति**—वक्तृवाक्यार्थयथार्थज्ञानादित्यर्थः॥ १०२॥

---

**संवित्तीनां यथावस्थितनिजविषयोल्लेख औत्सर्गिकः स्या-**
**द्वह्न्यादेर्दाहकत्वप्रभृतिवदुपधेरन्यथात्वं भ्रमांशे।**
**नित्यज्ञानप्रमात्वं वदसि च निरुपाध्येव निर्हेतुकत्वा-**
**द्दोषाभावात् प्रमा चेच्छ्रुतिरपि जयिनी दोषदूरोज्झिता नः॥१०३॥**

**सर्वार्थं**—इत्थं वेदप्रामाण्यमुपपाद्य तत्प्रसङ्गागतं बुद्धीनां स्वतःप्रामाण्यमाह—**संवित्तीनामिति**। अयमर्थः—ज्ञानानां यथावस्थितार्थप्रकाशकत्वं सामान्यमेव; भ्रान्तस्यापि ज्ञानस्य धर्मिण्यभ्रान्तत्वात्। अतो वह्न्यादेर्दाहकत्ववत् ज्ञानानां प्रामाण्यं स्वाभाविकमेव। उपधेः—मणिमन्त्रवद्दोषोपाधिवशादप्रमाणत्वं भ्रमांशे। किंच भवानपि

नित्यस्येश्वरज्ञानस्य कारणाभावेन निरुपाधिकमेव प्रमात्वमाचष्ट इत्याह—नित्येति। ईश्वरज्ञाने दोषाभाव एव प्रमात्वनियामक इति चेत्; तच्छ्रुतावपि तुल्यमित्याह—श्रुतिरपीति। यथा नित्यमीश्वरज्ञानं कारणदोषाभावात् प्रमाणम्; एवं वेदवाक्यमपि कारणदोषाभावात् प्रमाणम्; तद्वाक्यजनितं ज्ञानमपि निर्दोषवाक्यजनितत्वात् प्रमैवेति। इत्थं च स्वतःप्रामाण्यं निर्वहति। घटोऽस्तीति ज्ञानमुत्पद्यते। तत्र विषयास्तित्वमेव प्रामाण्यम्। तत्तु तेनैव ज्ञानेन प्रतीयते। अतः स्वतःप्रामाण्यं प्रतीयते। यत्र पुनः शुक्तौ रजतज्ञानमुत्पद्यते तत्रापि रजतमस्तीति रजतास्तित्वमेव प्रतीयते; न पुनर्नास्तित्वं तेनैव ज्ञानेन प्रतीयते। अतो विषयास्तित्वं स्वेन, नास्तित्वं बाधकेन प्रतीयत इति स्वतः प्रामाण्यप्रतीतिः, अप्रामाण्यप्रतीतिः परत इति विभागः। शेषं विस्तरभयान्न लिख्यते॥ १०३॥

---

**आनन्द०**—प्रामाण्यस्य परत उत्पत्त्यभावे व्युत्पत्तिरनुपपन्ना अप्रामाण्यवत् अन्यथा सर्ववित्तीनां याथार्थ्यं स्यादिति पूर्वसङ्गतिरेवास्य सङ्गतिरित्यभिप्रायेणाह—**इत्थमिति**।

ननु याथार्थ्यमौत्सर्गिकञ्चेदप्रामाण्यमप्यौत्सर्गिकं स्यात् अविशेषादित्यत्राह—**अयमर्थ इति**—चाकचक्यादिदोषस्य धर्मांशेऽन्वयव्यतिरेकदर्शनवद्धर्म्यंशे कस्यचिदप्रामाण्यप्रयोजकस्य दर्शनं नास्तीति भावः। **सामान्यं**—स्वाभाविकमित्यर्थः। स्वाभाव्यस्याऽपि दोषवशादन्यथाभावे दृष्टान्तमाह—**उपाधेरिति**।

ननु परोक्षज्ञाने प्रमांशे वक्तृवाक्यार्थयथार्थज्ञानस्याऽन्वयव्यतिरेकौ दृश्येते तद्बलाद्वैपरीत्यकल्पनं शक्यमित्यत्राह—**किञ्चेति**—तत्र स्वाभाविकत्वे लाघवात्सर्वत्र स्वाभाविकत्वं कल्प्यत इति भावः। उत्पत्तौ स्वतस्त्वमुक्त्वा ज्ञप्तौ स्वतस्त्वमाह—**इत्थमिति**। **विषयास्तित्वमेवेति**—विषयस्याऽस्तित्वघटितः तद्वति तत्प्रकारकत्वमिति यावत्। तथा च तद्वत्त्वस्य व्यवसाये ग्रहणात् तत्प्रकारकत्वस्य स्वप्रकाशेन ग्रहणाद्व्यवसायोपनीतस्य चाऽनुव्यवसायेन ग्रहणात्स्वतोग्रहः प्रामाण्यस्य। अप्रामाण्यस्य तु बाधकज्ञानसहकृतेनाऽनुमानेनेति न ज्ञानग्रहणनियतत्वमिति न स्वतोग्रह इति भावः।

ननु प्रामाण्यस्य स्वतोग्रहे तत्संशयो न स्यात् निश्चिते संशयायोगात्। धर्मिज्ञानस्य व्यवसायस्य वाऽनुव्यवसायस्य वाऽसत्वात्। दृश्यते च संशयः ममोत्पन्नं ज्ञानं प्रमाणं नवेति तत्राह—**शेष इति**। **यथेदं रजतमिति**—रजतनिश्चये सति कथं नेदं रजतमिति ज्ञानोदयः। यथा वा नीलं नभ इति ज्ञाने सत्येव न नीलं नभ इत्यनुमितिस्तथोपाधिसंशयात्तत्संशयोऽपि स्यादिति भावः॥ १०३॥

सर्वं साक्षात्करोति स्वत उपधिगणैरुज्झितस्संप्रसादः
प्रामाण्यं तत्र नोपाध्युपनतमिति तत्तुल्यताऽन्यत्र युक्ता ।
आत्मस्वात्मांशयोश्च क्वचिदपि न भवेद् भ्रान्तिरंशान्तरेऽपि
स्यादेषा न स्वरूपे क्वचन परमसौ द्विप्रकारे प्रकारे ॥ १०४ ॥

**सर्वार्थः**—किंच स्वतःप्रामाण्यं श्रुत्यर्थानुधाविना दुस्त्यजमिति दर्शयति—**सर्वमिति** । सर्वं ह पश्यः पश्यतीत्यादिश्रुतिः उपधिगणैरुज्झितः—मुक्तः संप्रसादः—जोवः सर्वं साक्षात्करोतीति वदति । तत्र प्रामाण्यमुपाधिकृतं परप्रयुक्तमिति वक्तुं न शक्यते; स्वाभाविकत्वात्तज्ज्ञानस्य । अतोऽन्यत्रापि तत्तुल्यता युक्ता—स्वाभाविकत्वमेव युक्तमिति भावः । किंच भ्रान्त्यभ्रान्तिविभागाभावेन सर्वेष्वपि ज्ञानेषु आत्मस्वात्मांशयोः क्वचिदपि भ्रान्तिर्न भवति; अतः स्वाभाव्यमेव प्रामाण्यस्य समुचितम् । अंशान्तरेऽपि । एषा—भ्रान्तिः स्वरूपे क्वचन न स्यात्, सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति वचनात्; तथा च विषयेऽपि स्वरूपांशे सर्वज्ञानसाधारण्यात् प्रामाण्यस्य स्वाभाविकत्वमेव युक्तमित्यर्थः । तर्हि कुत्र भ्रान्तिरित्यत आह—**परमिति** । असौ-भ्रान्तिः । द्विप्रकारे प्रकारे-द्विप्रकारे स्वरूपनिरूपकधर्मे निरूपितस्वरूपविशेषकधर्मे चेत्यर्थः । इदं रजतमित्यत्र स्वरूपनिरूपकधर्मवैपरीत्यम् । पोतश्शङ्ख इत्यत्र निरूपितस्वरूपविशेषकधर्मवैपरीत्यमिति विभागः ॥ १०४ ॥

---

**आनन्द०**—पूर्वशेषत्वान्न पृथक्सङ्गत्यपेक्षेत्याह—**किञ्चेति** । श्रुतार्थापत्तिं दर्शयति—**स्वतः प्रामाण्यमिति** । स्वाभाविकत्वात्तद्ज्ञानस्येति—स्वरूपस्य नित्यत्वाद्विकासः प्रतिबन्धकाभावमात्राधोनतया । अतिरिक्तहेतुकत्वाभावादिति भावः ।

किञ्च ज्ञानत्ववद्ज्ञानमात्रसाधारण्यात्प्रामाण्यस्य स्वतस्त्वमित्याह—**किञ्चेति** । **स्वरूपांशे**—धर्म्यंशे । **स्वरूपनिरूपकधर्मः**—रजतत्वं । वस्तुस्वरूपस्य जातिं विना प्रतीत्ययोगात् । **निरूपित स्वरूपविषयको धर्मः**—पीतत्वं । शङ्खत्वेन धर्मिप्रतोतौ तत्र विशेषणत्वादिति ॥ १०४ ॥

---

भ्रान्तिज्ञानेऽपि सत्यं किमपि तव मतेऽप्यस्त्यधिष्ठानपूर्वं
सत्यैकालम्बि चैकं समयिभिरखिलैर्दुस्त्यजं स्वार्थसिद्ध्यै ।
बुद्धेस्तत्पक्षपातः स्वयमपि कथितस्सौगतैरेव कैश्चित्
स्वात्मांशे सत्यता च स्वत इति तदसौ वैदिकोक्ते वृथेर्ष्या ॥ १०५ ॥

**सर्वार्थः**—अत्र सौगतः पुनरप्रामाण्यमेव स्वाभाविकमित्याह; तन्न युज्यत इति वदति—**भ्रान्तिज्ञानेऽपीति** । अप्रामाण्यस्वाभाविकत्ववादिनोऽपि तव मते भ्रान्तिज्ञानेऽप्यधिष्ठानांशे प्रामाण्यस्य स्वाभाविकत्वं वाच्यम्; अन्यथा निरधिष्ठानभ्रमप्रसङ्गात् । किंच प्रमाणात्प्रमेयसिद्धिः, युक्तियुक्तं वचो ग्राह्यमित्यादिकं वचनं सर्वैरपि वादिभिः

स्वसिद्धान्तसिद्धये सत्यैकालम्बि भवतीति दुस्त्यजम्; सत्यैकालम्बि—सत्यमात्रावलम्बि। अन्यथा व्याघातात्। अतः स्वतः प्रामाण्यं सिद्धमिति भावः। किंच कैश्चित् सौगतैरेव बुद्धेः प्रामाण्यपक्षपातः स्वयमेवोक्तः; निर्विकल्पकस्य वासनोप्लवाभावेन स्वभावत एव प्रामाण्यात्सविकल्पकस्यापि स्वयंप्रकाशस्य स्वात्मांशे प्रामाण्यस्यावर्जनीयत्वात्। विषयांश एव हि विकल्पस्यावस्तुनिर्भासत्वम्, असंवादः, वासनोपप्लवदूषितत्वं चेति भावः। तदिदमाह –स्वात्मांशे सत्यता चेति एवं प्रामाण्यस्वाभाविकत्वे स्वस्याप्यवर्जनीये सति वैदिकोक्ते स्वतःप्रामाण्ये वृथैवेर्ष्या अवैदिकस्येति ॥ १०५ ॥

---

आनन्द०—आक्षेपिकी सङ्गतिरित्यभिप्रायेणाह—अत्र सौगता इति। अन्यथा व्याघातादिति—युक्ति युक्तं वचोग्राह्यं प्रमाणात्प्रमेयसिद्धिरित्यादिकस्याऽपि सविकल्पस्याऽप्रामाण्ये प्रमाणेनाऽपि भ्रान्तिज्ञानप्रसङ्गेन सर्वाऽपि व्यवस्थोच्छिद्येतेति भावः। प्रामाण्यपक्षपातः—अबाधितार्थविषयत्वमित्यर्थः। तदेवोपपादयति—निर्विकल्पकस्येति। सविकल्पकस्यापीति—ज्ञानस्यैव नीलाद्याकारेण भासमानांशे याथार्थ्यादिति भावः ॥ १०५ ॥

---

अप्रामाण्यं स्वभावो गुणत इतरदित्यत्र न ह्यस्ति हेतु-
र्नाभावो हेत्वपेक्षस्त्विति च न नियमादन्यथाऽतिप्रसङ्गात्।
किञ्चाभावोऽपि भावान्तरमिति मथने स्वेष्टभङ्गश्च भावी
मुक्तौ शुद्धां हि बुद्धिं वदसि न यदि सा विभ्रमः स्यान्न वा स्यात् ॥१०६॥

सर्वार्थः—यदि प्रामाण्यं स्वभावः अप्रामाण्यमपि स्वभाव एव किं न स्यात्? अथवा स्यादप्रामाण्यमेव स्वभावः; प्रामाण्यं तु गुणतः, अतः प्रामाण्यमेवौपाधिकमिति। एतदनूद्य परिहरति—अप्रामाण्यमिति। न ह्यस्ति हेतुः—प्रामाण्यस्वभावत्वे सार्वत्रिकत्वं हेतुः, अप्रामाण्यस्य पुनरसार्वत्रिकत्वात् किंशुकाद्युपाधिकारुण्यन्यायेनौपाधिकतामेवाश्रयते; अतोऽप्रामाण्यस्य स्वाभाविकत्वे हेतुर्नास्तीत्यर्थः। नन्वभावः शून्यात्मकत्वाद्धेतुनिरपेक्षः; अप्रामाण्यं चाभावत्वाद्धेतुं नापेक्षते। तदेतदनुभाष्य परिहरति—नाभाव इति। कुत इत्यत्राह—नियमादिति। मुद्गरादिप्रहारघटादिध्वंसयोः पौर्वापर्यनियमेनाभावस्य हेतुनैरपेक्ष्यं न घटत इत्यर्थः। विपर्यये बाधमाह—अन्यथेति। अन्वयव्यतिरेके सत्यप्यभावस्य कारणानपेक्षत्वे भावस्यापि कारणानपेक्षत्वं स्यादित्यर्थः। इत्थमभावस्य भावादतिरिक्तत्वपक्षाङ्गीकारेण दूषणमभिधाय भावान्तराभाववादेनापि दूषणमाह—किं चेति। गोत्वाभावोऽश्वत्वादिः, शौक्ल्याभावो नैल्यादिरिति हि भावान्तराभावः; तथा चाभावस्य भावान्तररूपत्वे तस्याभावत्वाभावात्, अप्रामाण्यमभावत्वात् स्वाभाविकमित्यसिद्धो हेतुः। तदयमर्थः—यदभावो भावो वा यस्य स्वरूपानुबन्धि तत्स्वा-

भाविकम्, यदुपाध्यन्तरसापेक्षं तदौपाधिकम्; प्रामाण्यं च ज्ञानस्य स्वभावानुबन्धि; धर्मिस्वरूपे संशयविपर्ययोरप्यभ्रान्तत्वात्। तथाऽस्तित्वभास्वरोर्ध्वत्वादिसाधर्म्येऽपि प्रामाण्यं दुरपह्नवम्। केवलं धर्ममात्रे वैपरीत्यं सन्देहो वा; अतः प्रामाण्यं स्वतः, अप्रामाण्यं परत इति सिद्धम् ॥ १०६ ॥

---

**आनन्द०**—पूर्वाक्षेपेण प्रवृत्तिरित्याह—**यदि प्रामाण्यमिति**— निर्निबन्धनमेवाप्रामाण्यस्य परतस्त्वञ्चेत् प्रामाण्यस्य वा परतस्त्वं कुतो न स्यादित्याह—**अथवेति**-न वयमप्रामाण्यस्य निर्निबन्धनमेव परतस्त्वं ब्रूमः-अपि तु स्वतस्त्व साधकाऽभावात्परतस्त्व साधकसद्भावाच्चेत्याह—**नह्यस्तीति**-अप्रामाण्यस्येति शेषः। प्रामाण्यस्य स्वतस्त्वे हेतुमाह—**प्रामाण्यस्य स्वाभाविकत्व इति**——प्रामाण्यं विषयसत्वं। अप्रामाण्यं विषयाऽभाव इत्यभिप्रायेणाह—**नन्वित्यादिना**।

नन्वप्रामाण्यस्य प्रामाण्याभावरूपस्याऽभावत्वपक्षे यद्दूषणं तद्ध्वंपपक्ष एव स्यात्। अत्यन्ताभावादेरजन्यतया कारणनिरपेक्षत्वस्य वक्तुं शक्यत्वादित्यत आह—**तदयमर्थं इति** ॥ १०६ ॥

---

**मानत्वामानते द्वे स्वत इति वदतस्सांख्यसिद्धान्तिनस्ते**
**व्यक्तिद्वैतं तयोश्चेत् प्रतिनियततयोपाधिभेदोऽभ्युपेत्यः।**
**व्यक्त्यैक्ये व्याहतिः स्यादथ निजविषयेष्वंशतस्ते तथाऽपि**
**स्याद्धीस्सर्वा तथेति स्वपरसमययोर्द्वेषरागौ जुषस्व ॥ १०७ ॥**

**सर्वार्थ**—प्रामाण्यमप्रामाण्यं च स्वत इति सांख्याः। तन्मतमनूद्य दूषयति—**मानत्वामानते इति**। मानत्वामानत्वे द्वे अपि स्वत एव भवत इति वदतस्ते सांख्यस्य तयोर्मानत्वामानत्वयोर्व्यक्तिद्वैविध्यं चेत्-भिन्नाधिकरणवृत्तित्वं चेत्। उपाधिभेदोऽङ्गीकार्यः। कारणदोषात् क्वचिदप्रामाण्यम्, कारणगुणात् क्वचित्प्रामाण्यमिति। तथा च नैयायिकानामयं सिद्धान्तः—एकस्यामेव व्यक्तौ प्रायाण्यमप्रामाण्यं चेत् स्वाभाविकमभ्युपैषि; तदा व्याघातः। न ह्येकमेव विज्ञानमेकविषये स्वत एव प्रमाणमप्रमाणं चेत्यनुन्मत्तो ब्रवीति। तर्हि स्वविषयेष्वंशभेदेन प्रामाण्यमप्रामाण्यं चेत्; ते प्रामाण्याप्रामाण्ये। ते इति द्विवचनम्। एवं तर्हि स्वसिद्धान्तजन्यज्ञानमपि प्रमाणाप्रमाणात्मकम्, परसिद्धान्तजन्यज्ञानमपि प्रमाणाप्रमाणात्मकं कृत्वा स्वसिद्धान्तेऽपि द्वेषम्, परसिद्धान्तेऽपि रागं भजस्वेति परिहासेनोत्तरम् ॥ १०७ ॥

---

**आनन्द०**—इद्रियजन्यत्वस्य परोक्षत्वाभावप्रयोजकत्ववदप्रामाण्यस्यापि साधकाभावोऽविशिष्ट इत्याशङ्कायां तत्परिहारार्थं भ्रान्तिज्ञानेऽपीत्यादि पद्यं पश्चादिति मूलक्रम एव क्रमः। सर्वार्थसिद्धिक्रमस्तु लेखकदोषाधीन इत्याहुः। अस्मिन्पक्षे अत्र

सौगता इति भ्रान्तिज्ञानेऽभिप्रेत्याह—प्रामाण्यमिति। पूर्वसङ्गतिरेवास्यापीत्यन्ये। अत्र मूलकोशे क्रमव्यत्यासो दृश्यते सर्वज्ञस्येति पद्यं—"प्रथमम्। अनन्तरं 'मानत्वामानते' इति। अनन्तरं ज्ञानं मानं स्वतश्चेदिति।

अत्र केचित्। मूलक्रम एव क्रमः। सर्वार्थसिद्धिक्रमस्तु लेखकभ्रमकृतः। तथाहि प्रथममुत्पत्तौ स्वतस्त्वकथनानन्तरं सांख्यपक्षप्रतिक्षेपः। अनन्तरं ज्ञप्तिस्वतस्त्वनिरूपणम्। अनन्तरं बाधशङ्कापरिहार इति क्रममाहुः।

अपरे तु यथा व्याख्यं क्रमः। बाधशङ्काया उत्पत्तिमात्रनिष्ठतया निराकरणयोग्यत्वात्। तदनन्तरमेव भानादितिविदन्ति। कारणदोषादिति—अन्यथासर्वाधिकरणवृत्तित्वं स्यादिति भावः। अधिकरणभेदाभावे दोषमाह—एकस्यामेवेति। एवं तर्हीति सर्वज्ञानेऽप्यंशभेदेन प्रामाण्यस्येवाऽप्रामाण्यस्याऽप्यावश्यकत्वादिति भावः॥ १०७॥

---

ज्ञानं मानं स्वतश्चेत्कथमिव विशयः कस्य चित्क्वापि भावी
मीमांसा चानपेक्ष्येत्यसदुपधिकृताकारशङ्कोपपत्तेः।
नेत्रालोकादिनीतेर्भवति च निगमोऽप्यत्र मीमांसयार्थी
हेतूनां साध्यसिद्धौ सहकृदनुविधिर्हेतुभावं न हन्ति॥ १०८॥

सर्वार्थः—अत्र चोदयति—ज्ञानमिति। ज्ञानं स्वत एव प्रमाणं चेत्तर्हि कस्यचित्कुत्रचित् प्रमाणमप्रमाणं वेति संशयो न स्यात्, तथा च मीमांसाऽनपेक्ष्या स्यात्; इतीमां शङ्कां निराकरोति—असदिति। अत्र हेतुमाह—उपधीति। प्रामाण्यस्य स्वाभाविकत्वेऽप्युपाधिकृताप्रामाण्यशङ्कायास्सद्भावात्तन्निराकरणार्थं मीमांसाऽपेक्षणीया स्यादिति भावः। दृष्टं चैतत्स्वत एव रूपादिविषये प्रमाणभूतस्यापि नेत्रस्यालोकादिसहकारिसाहित्यापेक्षणम् तदिदमाह—नेत्रेति। यथा नेत्रमालोकमपेक्षते, एवं निगमोऽप्यर्थतत्त्वावधारणे मीमांसयाऽर्थी—मीमांसासापेक्ष इत्यर्थः। न केवलं प्रमाणानामेव सहकारिसापेक्षत्वम्, अपि तु सर्वेषामपि कारणानाम्। इदं च सापेक्षत्वं कारणत्वं न व्याहन्तीत्याह—हेतूनामिति॥ १०८॥

---

आनन्द०—आक्षेपसङ्गतिमाह—अत्र चोदयतीति—ज्ञानत्वरूपविशेषस्य दर्शनादिति भावः। तथा चेति—मीमांसायाः भ्रमनिरासार्थत्वादिति भावः। प्रामाण्यस्येति—बाधकाऽभावे सति ज्ञानत्वं प्रमात्वनियतमिति ज्ञानत्वदर्शनं न विशेषदर्शनमिति भावः।

ननु तर्हि प्रमाजननार्थं मीमांसापेक्षयां स्वतस्त्वं न स्यादित्यत आह—दृष्टञ्चैतदित्यादि। एवं निगमोऽपीति—

ननु मीमांसायास्सहकारित्वं न ज्ञानोत्पादने अपि तु प्रमायां। तथा च सति प्रमात्वस्य कार्यतावच्छेदकत्वात्परतस्त्वमिति चेत्। मैवं। नात्र आलोकस्य तज्जनकतया सहकारित्वं। अपि तु विपरीततात्पर्यभ्रमनिवर्तने। निवृत्तौ तु प्रतिबन्धकाभावात्स्वत—एव प्रमोत्पद्यत इति न परतस्त्वशङ्का।

यद्यपि विपरीततात्पर्यभ्रमरूपदोषाभावे प्रमात्वं जनकतावच्छेदकमिति शङ्कातादवस्थ्यं—तथापि शक्तौ प्रयोजकतया न जनकत्वं। शक्तिस्तु ज्ञानसामान्यजननसमर्थेति न तत्र विशेषणजन्यतावच्छेदकम्।

यद्वा भावकारणजन्यतावच्छेदकत्वं परतस्त्वमिति न स्वतस्त्वहानिरिति-भावः॥ १०८॥

---

सर्वज्ञस्य प्रमाया न खलु न विषयः स्यात्स्वकीयं प्रमात्वं
निर्बाधा धीः प्रमेति प्रमितिरपि निजं गाहते मानभावम्।
मानेऽर्थः स्वात्मनैव स्फुरति न च परं भाति शङ्कानिरासे
भ्रान्त्या स्वार्थान्यथात्वं स्वयमनवगतं बाधकैर्बोध्यतेऽतः॥ १०९॥

सर्वार्थः—उभयवादिसंप्रतिपन्नदृष्टान्तोपादानेन स्वतःप्रामाण्यज्ञप्तिमुपपादयति—सर्वज्ञस्येति। पूर्वं प्रामाण्यस्वरूपस्य ज्ञानेषु स्वतस्त्वमुक्तम्। इदानीं प्रमाज्ञप्तेरपि स्वतस्त्वमुच्यत इति विभागः। ज्ञानस्य स्वप्रामाण्यं स्वत एव गृह्यत इति दृष्टमित्याह—सर्वज्ञस्येति। ईश्वरज्ञानं सर्वविषयत्वात् स्वगतमपि प्रामाण्यं गृह्णाति; अन्यथा सर्वविषयत्वमेव न स्यात्। न केवलमीश्वरज्ञानमीदृशम्, अस्मदीयमपि ज्ञानं तथेत्याह—निर्बाधेति। प्रमितिः—लक्षणप्रमितिः स्वकीयमपि प्रमितित्वं गृह्णाति। अन्यथा सर्वानुवृत्तलक्षणग्रहणमेव न स्यादिति भावः। अस्त्वेवम्; तथाऽपि कथं प्रामाण्यं स्वतो गृह्यते? कथं वा अप्रामाण्यं परतो गृह्यते? इत्याशङ्क्य क्रमादुभयत्रोपपत्तिमाह - मान इति। प्रमाणज्ञाने घटोऽस्तीति सद्भावविशिष्ट एव घटः प्रतीयते, स एवार्थसद्भावो घटज्ञानस्य प्रामाण्यम्। अतः स्वतो गृह्यते प्रामाण्यम्। नन्वप्रामाण्यशङ्कानिरासकैस्संवादकारणगुणार्थक्रियाज्ञानैः किं क्रियते? तदेव पूर्वप्रतिपन्नं प्रामाण्यं प्रतिष्ठाप्यते। न हि संवादादिज्ञानेषु घटसद्भावातिरेकेण ज्ञाप्यमस्ति। अतः स्वतःप्रतिपन्नमेवार्थतथात्वं तैरपि पुनर्गृह्यत इति प्रामाण्यग्रहणस्य स्वतस्त्वमेव। तदिदमाह—न चेति। भ्रान्तिज्ञानेष्वप्रामाण्यं परत एव ज्ञाप्यत इत्याह—भ्रान्त्येति। अर्थान्यथात्वमेव ज्ञानस्याप्रायाण्यम्; तदन्यैरेव बाधकैरवबुध्यते। न हि रजतज्ञानं रजत[ज्ञान]स्यान्यथात्वमावेदयति। अपि तु कारणदोषादिज्ञानं ज्ञानविषयस्यान्यथात्वं बोधयति। अतोऽप्रामाण्यस्य परतस्त्वमिति विभागः। अत्र वक्तव्यं सर्वमवशिष्टं स्वयमेव भाव्यमन्तेवासिभिः॥१०९॥

**आनन्द०**—स्वतस्त्वप्रसङ्गात् ज्ञप्तौ स्वतस्त्वमाह—**उभयवादीति**। यद्यपि पूर्वतमश्लोकव्याख्याने स्वतस्त्वमुक्तम्। तथापि मूले नोक्तमिति ध्येयम्।

अप्रामाण्यस्य परतस्त्वप्रतिपादनान्न पौनरुक्त्यमित्यन्ये। **अर्थसद्भावो घटज्ञानस्य प्रामाण्यमिति**—तद्वति तत्प्रकारकत्वमिति प्रामाण्यलक्षणेऽपि तद्वत्वस्याऽर्थ-सद्भावरूपत्वादिति भावः।

ननु प्रामाण्यस्य स्वत एव ग्रहणे संवादादीनां किं प्रयोजनमिति शङ्कते—**नन्विति**। **न हीति**—अप्रामाण्यशङ्का संवादेन पराक्रियते। संवादश्च प्रामाण्यं गृहीत्वैव नश्यति। तद्विषयश्चाऽर्थतथात्वमेव। तदेव प्रथमज्ञानस्यापि विषय इति स्वप्रामाण्यं स्वेनैव गृह्यत इत्यर्थः। **अर्थान्यथात्वमेवेति**—तदभाववति तत्प्रकारकत्वमित्यत्र तद-भावस्याऽर्थान्यथात्वरूपत्वादिति भावः। **न हि रजतज्ञानमिति**—रजतत्वस्यैव पुरो-वर्तिनि ग्रहणेन तदभावविषयत्वाऽभावादिति भावः।

ननु संशयरूपज्ञानं प्रामाण्यमिवाऽप्रामाण्यमपि। अर्थस्याऽन्यथात्वमावेदयतीति चेत्। सत्यं। स्वांशस्य स्वयं नावेदयति अपि त्वंशान्तरस्येति तत्रापि परतस्त्वमेवेति भावः।

ननु प्रामाण्यस्य स्वतो ग्रहे ममोत्पन्नं ज्ञानं प्रमा नवेति संशयो न स्यात्, प्रामाण्य-निश्चयस्य प्रतिबन्धकत्वात्। न च प्रामाण्यनिश्चयाभावः। धर्मिज्ञानस्यैव प्रामाण्य-निश्चयत्वादर्थसद्भावस्यैव प्रामाण्यत्वादिति चेदत्राह—**अत्र वक्तव्यमिति**—यदि प्रामाण्यनिश्चयस्य प्रतिबन्धकत्वात्संशयो न स्यात्तर्हि तव वा कथं प्रामाण्यसंशया-नन्तरमर्थसंशयस्स्यात्। ग्राह्यनिश्चयस्य प्रतिबन्धकस्य सत्वात्। यदि चशङ्काऽऽहितेन प्रतिबन्धस्तदाऽत्रापि कारणदोषशङ्काऽऽहितः प्रामाण्यसंशयस्स्यादेवेति भावः। विस्तरस्तु मदीये मणिसारधिक्कारे द्रष्टव्यः॥ १०९॥

---

**दृष्टं मान्थालभोगिप्रभृतिषु करणस्थानभेदादिचित्रं**
**तादृग्द्वीपान्तरादौ श्रुतमपि न मृषा वेदसिद्धे तथा नः।**
**यत्रानाप्तोक्तताधीनं भवति विहतिर्नापि संभावनायाः**
**किं व्याप्तचाऽत्रोपचारो विहतिमति भवेन्नैव तद्व्याप्तिदौःस्थ्ये ॥११०॥**

**सर्वार्थः**—अस्तु स्वतःप्रामाण्यं प्रमाणस्य, अथापि वेदेष्वद्भुतोक्तीनां न याथात्म्यमित्याशङ्क्य परिहरति—**दृष्टमिति**। न हि वेद एवाद्भुतदृष्टिः, लोकेऽपि। अद्भुतं नाम अन्यत्रादृष्टस्यापि क्वाचित्कदर्शनम्। दृश्यते हि मान्थालव्यालादीनामन्ध-कारेऽपि रूपदर्शनम्, मान्थालानामाहारनिर्हारकरणयोरेकस्थानवर्तित्वम्, व्यालानां चक्षुःश्रवस्त्वम्, पक्षिषु च केषुचिदङ्गाराहारत्वम्, ईक्षणध्यानसंस्पर्शैर्मत्स्यकूर्मविहङ्गानां

पुत्रपोषगम्, नालिकेरद्वीपवासिनामपक्वान्नेनैव देहधारणम्। तदिदमाह—तादृगिति। दृष्टान्तदृष्टं दार्ष्टान्तिके योजयति—वेदसिद्ध इति। लोकेऽप्यद्भुतार्था[र्थः?]ङ्गीकारः प्रमाणसिद्धत्वादङ्गीक्रियते, किं पुनर्वेद इत्यर्थः। तर्हि सर्वमप्यघटितं वेदसिद्धमित्यङ्गीकार्यम् ? नेत्याह—यत्रेति। अयमत्र नियमः—यत्रानाप्तोक्तत्वज्ञानं नास्ति, प्रतीतेश्च न व्याघातः, तत्र दृष्टान्ताभावेऽपि सोऽर्थोऽङ्गीकार्यः। तदेतदाह—किं व्याप्त्येति। किं दृष्टान्तदर्शनेनेत्यर्थः। उपचारस्तर्हि कुत्रेत्याशङ्क्याह—उपचार इति। व्याघाते सत्युपचारः; नैव तत् उपचरणम्। व्याप्तिदौःस्थ्ये—दृष्टान्तदौःस्थ्ये। अपूर्वार्थस्य प्रमाणेन दर्शने पूर्वदर्शनविरूपता न दोषायेत्यर्थः। देवकीजठरे वासः स्वोदरे विश्वदर्शनमित्यादिकं विश्वरूपस्य भगवतो योयुज्यत इत्यर्थः॥ ११०॥

---

आनन्द०—पूर्वाक्षेपेण सङ्गतिं दर्शयति—अस्त्विति। एकदेशाप्रामाण्येन सर्वाऽप्रामाण्याक्षेप इत्याहुः।

नन्वनाप्तोक्तत्वज्ञानविशिष्टव्याघातस्याऽभावः प्रयोजकश्चे "दादित्यो यूप" इत्यत्रापि तथा स्यात्। नित्यत्वेनाऽनाप्तोक्तत्वविशिष्टशङ्काविरहात् इति चेन्न। यत्र व्याघातादपि न प्रत्येकमेकैकाभावः अपित्वभावद्वयमिति नातिप्रसङ्ग इति भावः। तत्रेति—सहस्रशीर्षा पुरुष इत्यादावित्यर्थः।

ननु व्याप्तिदौस्थ्यं उपचरणनिमित्तं न भवति चेत्। "प्रजापतिरात्मनो वपामुदखिदत्" "उत्ताना वै देवगवा वहन्ति" इत्यादीनामौपचारिकत्वं न स्यादिति चेत्। उच्यते। वपाहरणस्य मरणसाधनत्वाज्जीवतो वपाहरणं विरुद्धं। तथा आधेयपूर्वभूतस्यैव धारणसाधनत्वमिति तद्विपरीतं व्याहतमेव। अस्तु वा प्रतीतार्थकत्वं तथापि न दोषः।

ननु तर्ह्यणोरणीयानित्यादिना प्रतिपादितं अणुत्व महत्त्वादिकं ब्रह्मणः स्वाभाविकं स्यादिति चेत्। मैवं। अणुत्वं हि परिच्छिन्नत्वं तदभावस्तद्व्याप्यं वा महत्वं। तथा च निश्चितविरोधादत्र व्याघात एव। अन्यत्र तु न तथा। तदभावव्याप्तिमात्रं कल्प्यं। तच्चानुकूलतर्कविरहाद्व्यभिचारशङ्कया सन्दिग्धमिति न श्रुतिः प्रतिरोद्धुं शक्नोतीति। देवकी जठर इत्यादि—प्रागेव व्याख्यातम्॥ ११०॥

**वाक्यत्वात् कर्तृमत्त्यः श्रुतय इति यदि ब्रूहि बाधं विपक्षे**
**श्रुत्या स्मृत्या च बाध्या त्वदनुमितिरियं कर्तुरत्रास्मृतेश्च ।**
**त्वं तावत्तिष्ठ लोकैर्न हि पुरुषगुणप्रत्ययात्तद्गृहीति-**
**स्सन्तश्चापह्नवीरंस्तमिह न मुनयस्सत्यनिष्ठाः कृतज्ञाः ॥ १११ ॥**

**सर्वार्थः**—एवं वेदानां स्वाभाविकं प्रामाण्यमुपपाद्य तेषामाप्तोक्तत्वेन प्रामाण्यमुपपादयतां पक्षप्रतिक्षेपार्थं वाक्यत्वात् कर्तृमत्त्वं वेदानामित्यादिकमनुमानं दूषयितुमारभते—वाक्यत्वादिति ॥ तथा हि—वेदवाक्यानि सकर्तृकाणि वाक्यत्वादित्य[द्य]नुमाने यदि विपक्षे बाधकतर्कोऽस्ति, स वक्तव्यः। न चेदनुग्राहकतर्काभावादप्रयोजकोऽयं हेतुः। वक्त्रभावे वाक्यत्वं हीयत इति चेत्, तन्न; स्वतन्त्रवक्त्रभावेऽपि प्रवक्तृपारम्पर्यमात्रेण वाक्यत्वस्यान्यथासिद्धत्वात्। यथा स [कर्तृ] वक्तृकाणामपि वाक्यानामुच्चारयितृपूर्वपुरुषताल्वोष्ठादिव्यापारपूर्वकत्वमेव हि वाक्यत्वे तन्त्रम्। आदौ कस्यचित्पुरुषस्य स्वातन्त्र्यमङ्गमिति चेन्न; तस्य कादाचित्कसन्दर्भसाजात्य एव नियामकता। यथा भवतां ज्ञानानामनित्यत्वेन कारणगुणपूर्वकत्वेनैव प्रमात्वे सत्यपीश्वरज्ञानस्य नित्यत्वेन तादृशगुणपूर्वकत्वाभावः, एवमागन्तुकसंदर्भस्य स्वतन्त्रपुरुषपूर्वकत्वेऽपि नित्यसन्दर्भसाजात्यस्य स्वतन्त्रपुरुषपूर्वकत्वं न स्यात्। तथा च वाक्यत्वमन्यथासिद्धत्वान्न स्वतन्त्रपुरुषपूर्वकत्वं साधयति। सर्वं वाक्यमनित्यमेव वाक्यत्वादिति चेत्तन्न; सिद्धसाधनत्वात्। तत्र चोच्चार्यमाणवाक्यस्यानित्यत्वात्, तादृशवाक्यपारम्पर्यस्य च नित्यत्वे बाधकाभावात्; तावन्मात्रेणैव अस्माकं वेदनित्यत्वसिद्धेः। न ह्येकरूपवाक्यप्रवाहानादित्वातिरेकेण वेदवाक्यानामनादित्वं प्रतिपद्यामहे। नह्येकरूपब्रह्माण्डप्रवाहस्यानादित्वे को नाम विप्रतिपद्यते ? सावयवत्वाद्ब्रह्माण्डस्य सादित्वे साध्यमाने तज्जातीयब्रह्माण्डस्य पूर्वं सद्भावो न निषिध्यते। एवं प्रत्येकं वाक्यस्य सवक्तृकत्वेऽपि प्रवाहस्यानादित्वे न कश्चिद्विरोधः। किं चेदमनुमानं वाचा विरूपनित्यया, नामरूपं च भूतानामित्यादिश्रुतिस्मृतिविरोधात् कालात्ययापदिष्टम्। तदिदमाह—श्रुत्येति। स्मर्तव्यत्वे सति कर्तृस्मरणाभावाच्च कर्तृशून्यो वेदः। न च जीर्णकूपारामादिषु व्यभिचारः, उपदेशपारम्पर्ये स्मर्तव्यत्वे च सत्यस्मरणस्य कर्त्रभावनियतत्वात्। मया स्मृतः कर्ता, तत्प्रत्ययाद्वेदप्रामाण्यमिति चेत्तन्न, आग्रहगृहीतस्य भवतो वाक्ये प्रामाण्याभावादित्याह—त्वं तावदिति। न हि मन्वादीनां वेदपरिग्रहः पुरुषगुणप्रत्ययेनेत्याह—न हीति। प्रत्युत वेदस्याकर्तृकत्वमेव परमर्षयः प्रवदन्ति। ननु सर्ववेदकर्तरि भगवति विद्यमानेऽपि मन्वादयस्तदनुविधायिनश्च वेदवक्तारमपलपन्तीति, तन्न; तेषां तदपलापे प्रयोजनाभावात्। न हि सत्यनिष्ठास्तादृशा महात्मानस्तमपि भगवन्तमपलपन्तीति सम्भवतीत्याह—सन्तश्चेति ॥ १११ ॥

आनन्द०—परमतनिराकरणस्य स्वमतप्रतिष्ठार्थत्वादुपोद्घात इत्यभिप्रायेणाह-एवमिति । तर्कमाह-वक्त्रभाव इति-अत्र-किं वक्तृमात्राभावे वाक्यत्वं हीयते । उत स्वतन्त्र वक्तृभाव-इति विकल्प्याऽऽद्य आह-स्वतन्त्रवक्त्रभावेऽपीति । यथा-सकर्तृकाणामपीति-इदनींतनभारत पुराणकाव्यादीना मेवेति भावः । द्वितीयमाशङ्कते-आदाविति-कदाचित्सन्दर्भसाजात्यमुपाधिरित्याह-तस्येति । स्वतन्त्रकर्तृपूर्वकत्वमिति । अत्र किं वाक्यस्याऽनित्यत्वं साध्यते । उत तत्पारम्पर्यस्येति विकल्पमभिप्रेत्याऽऽद्य आह-सिद्धसाधनत्वादिति । द्वितीय आह-तादृशवाक्यपारम्पर्यस्येति । ननु तर्हि वेदस्य नित्यत्वं न सिद्ध्येदित्यत्राह-तावन्मात्रेण चेति । ननु घटादीनामपि नित्यत्वं स्यादित्यत्राह-एकरूपेति ।

ननु प्रवाहस्यैव सादित्वं साध्यत इत्यत्राह-किञ्चेति । वाचा विरूपनित्यया-प्रवाहरूपेणेत्यर्थः । नामरूपञ्च भूतानामित्यत्र वेदशब्दपूर्वकत्वोक्तेर्भूतानां प्रवाह इव वेदस्यापि प्रवाहस्सिद्ध्यतीति ध्येयम् । अनुपलब्धिबाधमाह-स्मर्तव्यत्वे सतीति—

केचित्तु नित्यत्वे अस्मर्यमाणकर्तृकत्वादिति प्रतिरोधमाहुः ।

हेत्वभावान्न व्यभिचार इत्याह-उपदेशेति-सकर्तृकत्वोपदेशपारम्पर्यसत्वे कर्तुस्सतस्स्मर्तुं योग्यत्वस्य भारतादौ दर्शनाज्जीर्णकूपादावुपदेशपारम्पर्याऽभावान्न व्यभिचार इति भावः । तेषामिति ।

ननु वेदे विश्वाससिद्धयेऽपलापस्सम्भवति । यथापूर्वकाले कर्मणि विश्वाससिद्धये देवतापलाप इत्यत्राह न हि सत्यनिष्ठा इति । भगवतस्सर्वज्ञत्वाद्वेदहेतुत्वाद्वेदकर्तृत्वस्य भगवति विश्वाससिद्ध्यर्थं वेदे विश्वासमुत्पादयन्तो कथं तदनुगुणं वेदकर्तृत्वमपलपेयुः । पूर्वभागे च देवतापलापो नास्त्येव व्याख्यातृवचनस्याऽनादेयत्वादिति भावः । मूलं लोकैः—न हि स्वद्व्यतिरिक्तजनैस्स्मर्यत इत्यर्थः । सन्तः—कर्मठत्वेन सन्त इत्यर्थः ॥१११॥

---

आदौ वेदैक्यवादस्त्वविभजनवशात्तावता नान्यसृष्टि-
स्सर्वेषामेकवेदान्वयमपि जगदुः कालभेदप्रतिष्ठम् ।
तत्तच्छाखाविभागः प्रवचननियता काठकाद्या समाख्या
द्रष्टा मन्त्रादिकर्ता परिहृत इह चानित्ययोगः प्रवाहैः ॥ ११२ ॥

सर्वार्थः—नन्वादिकाले वेदैक्यं श्रुतम्, अतस्तदा तदा नानावेदसृष्टिरित्याशङ्क्य परिहरति—आदाविति ॥ तत्र हेतुमाह—अविभजनेति । तस्मिन्काले सर्वेषां वेदानामेकवेदान्वयकथनं कथम् ? तदपि युज्यते कालभेदनियतत्वात् । तदिदमाह—कालेति । अत एव पश्चाच्छाखाविभागकथनमपि कालभेदादेवेत्याह—तद्वदिति । एवं काठकादिसमाख्याऽपि प्रवचनानुबन्धित्वान्न वेदसृष्टिहेतुरित्याह—प्रवचनेति । एवं

वेदद्रष्टृत्वान्मन्त्रादिकर्तृत्वं च व्याख्येयमित्याह—द्रष्टेति। कथं तर्हि नित्यस्य वेदस्यानित्यैर्योग इत्यत्राह—अनित्येति। अयमर्थः—वेदवाक्यसन्दर्भसाजात्यमनादित्वेन नियतम्; सर्वमप्यनित्यं पदार्थजातं साजात्येन नित्येन वेदेन संबध्यते, स्फयकपालपुरोडाशादीनामपि साजात्येनानादित्वात् ॥ ११२ ॥

---

आनन्द०—नन्वेको वेदस्समभवदि" ति श्रुत्या वेदसृष्टिरवसीयत इत्याक्षेपसङ्गतिमभिप्रेत्याह—नन्विति तस्मिन्काले—अविभजनदशायां विशकलितमादायैक्यव्यपदेश—इति भावः सर्वेषामिति—तत्तच्छाखान्वयिनां भिन्नप्रश्नकाण्डात्मकवेदान्वयित्वादिति भावः। कालभेदेति—अभेदेनाऽन्वयसम्भवेन तावताऽप्युपपत्तेरेककालस्य सर्वान्वयस्याऽनुक्तेरिति भावः। भेदकथनञ्च कालभेदाद्युक्तमित्याह—अत एवेति। एवमिति—कठेन प्रोक्तत्वस्य प्रवचने कथञ्चिद्वक्तुं शक्यत्वादिति भावः।

ननु "ऋषिस्तु मन्त्रकृत्प्रोक्त" इति मन्त्रस्य कृतिसाध्यताऽवगम्यते। मन्त्रश्च वेदभाग एवेति सकर्तृकत्वं स्यादित्यत्राह—एवमिति—द्रष्टृत्वमेव कर्तृत्वमिति भावः।

ननु स्फय कपालादि पदार्थानां योगः कथं अनित्यत्वादित्युक्ते प्रवाहैरिति कथं परिहारः। प्रवाहस्य भिन्नत्वादित्यत आह—अयमर्थ इति। वेदस्य यथा नित्यत्वं तथा पदार्थनामपीति—तत्सम्बन्धे न कोऽपि दोष इति भावः। ॥ ११२ ॥

---

भेदो मन्वन्तरादौ भवति च नियतोऽनादिसिद्धे तदंशे
पुंसूक्तादौ श्रुतीनां जनिवचनमपि प्राग्वदाविष्कृतौ स्यात्।
आज्ञारूपत्वमासां न च गलति विभो[रेकरूपा]रैक्यरूप्याभिसन्धे-
र्योऽसौ वेदः प्रमाणं स च न शिथिलयेच्छक्तिमन्तं क्रमं तम् ॥११३॥

सर्वार्थः—कथं तर्हि प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्याशङ्क्य परिहरति—भेद इति। अनादिसिद्धानां वेदांशानामनन्तत्वात् कस्मिंचिन्मन्वन्तरे कश्चिद्वेदांशः प्रवर्तत इत्यर्थः। कथं तर्हि पुंसूक्तादौ ऋचस्सामानि जज्ञिरे इत्यादिवचनम्? तच्च प्रादुर्भावमात्रपरमित्याह—पुंसूक्तेति। अन्यथा यो वै वेदांश्च प्रहिणोति तस्मै इत्यादिवचनशतविरोधात्। कथं तर्हि नित्यानां वेदानामीश्वराज्ञारूपत्वम्? आज्ञावाक्यस्य तदा तदाऽन्यथाकरणसंभवादित्याशङ्क्य परिहरति आज्ञेति। हेतुमाह—विभोरिति। प्रतिकल्पमेकरूपाभिसन्धिरीश्वर एकरूपमेवाज्ञावाक्यं वदति। एतदेव वेदस्य नित्यत्वम्, यदेकरूप्येण सर्वेष्वपि कल्पेषूच्चार्यमाणत्वम्; ईश्वराभिसन्धिविशेषद्योतनत्वादाज्ञारूपत्वमपि न विहन्यत इत्यर्थः। नन्वीश्वरः स्वतन्त्रत्वाद्वेदान् प्रतिकल्पमन्यथयतु? नान्यथयति; अन्यथाकरणे प्रमाणाभावात्, यथापूर्वमकल्पयदिति यथापूर्वकल्पने प्रमाणसंभवाच्च। अतस्तत्तत्क्रमविशेषविशिष्टतया तत्तत्कार्यकारणशक्तं मन्त्रार्थवादविधिरूपं वेदराशिं नेश्वरश्शिथिलयेदिति ॥ ११३ ॥

आनन्द०—पूर्वसङ्गतिरेवात्रापीत्याह- कथं तर्हीति। विधीयत इत्यस्य नोत्पत्ति-परत्वं अपि तु प्रवृत्तिपरत्वमित्यभिप्रायेणाह—अनादिसिद्धानामिति।

ननु तस्याऽऽनुपूर्वीविशिष्टतया साजात्यं वाच्यं? उत न स्यात् भिन्नसन्दर्भत्वात्। तथा च प्रवाहरूपेण कथं नित्यतेति चेत् उच्यते। सान्तरत्वेप्यानुपूर्व्याः—सजातीयासमानकालीनप्रागभावप्रतियोगिवृत्तित्वरहितजातिमत्वरूपस्य नित्यत्वस्याऽनपायादिति भावः। तच्च प्रादुर्भावमात्रपरमिति सजातीयप्रतिसन्धानसापेक्षोच्चारणमित्यर्थः।

ननु "तस्मादश्वा अजायन्ते" त्युत्पत्तिप्रकरणविरोधस्स्यादिति चेत्तत्राह—अन्यथेति—प्रादुर्भावस्यैव धात्वर्थत्वात्। तदतिक्रमेऽपि विराट् पुरुषादुत्पत्तिवचनस्य पुरुषात्पूर्वसत्वप्रतिपादकवचनैर्विरोधस्स्यात् चतुर्मुखशरीर एव विराट्पुरुष इति भावः। प्रतिकल्पमिति धाता यथापूर्वमकल्पयदिति वचनादिति भावः।

नन्वीश्वरवाक्यत्वादिति कथं तस्याऽऽज्ञारूपत्वमित्याह—नन्वीश्वर इति—तदभिप्रायद्योतकवाक्यत्वमेव तदाज्ञात्वप्रयोजकं न तु तद्वाक्यत्वमिति भावः। शिथिलं अन्यथाकरणम्। मूलं—योऽसौ देवः प्रमाणमिति—मर्यादास्थापकः एकरूपतयेव जगत्सृष्टिरिति यावत्॥ ११३॥

---

प्रेक्षावन्तो महान्तः परिजगृहुरिमं सार्थमङ्गैरनन्तं
नेत्थं बाह्यागमानां प्रसृतिरनुपधेस्तद्गृहीतेरभावात्।
दृश्यन्ते गत्यभावो नियतिषु लघिमा वञ्चनं तर्कमोहो
वृत्तिस्वास्थ्यादि चैषामुपधिरधिगमे वैपरीत्यं तु वेदे॥ ११४॥

सर्वार्थः—ननु महाजनपरिग्रहाद्वेदप्रामाण्यं प्रतिपद्यन्ते वेदवादिनः। स च परिग्रहो बाह्यागमेष्वपि तुल्य इत्याशङ्क्य वैषम्यमाह—प्रेक्षावन्त इति। अयमर्थः—बहुजनपरिगृहीतत्वं न महाजनपरिग्रहः; अपि तूत्कृष्टजनपरिग्रहः। स तु वेदेष्वेवेति भावः। कथमन्येषामागमानामनुत्कृष्टजनपरिग्रह इत्यत्राह—नेति। प्रसृतिः—मर्यादा। तत्परिग्रहप्रकारपरिशोधने वैषम्यमवगम्यत इत्यर्थः। कथमित्यत्राह—अनुपधेरिति। द्विविधो हि परिग्रहः। आस्तिक्यनिबन्धनः कश्चित्; अल्पाल्पप्रयोजनाभिलाषादपरः। तत्र वेदपरिग्रहः पूर्वकोटौ निविशते; बाह्यागमपरिग्रहस्सोपाधिक इत्यर्थः। उपाधिस्तु दृष्टमेव प्रयोजनम्। उपाधीनेव परिगणयति—दृश्यन्त इति। अनन्यगतिकत्वम्, कर्तव्याकर्तव्यनियमेषु लाघवम्, परैर्वञ्चनम्, कुतर्काभ्यासव्यामोहः, वृत्तिस्वास्थ्यम्—अशनाच्छादनादिसौकर्यम्। एतादृशमन्यदपि बाह्यागमपरिग्रहे निदानम्। एतद्वैपरीत्यं वेदपरिग्रहे दृष्टमिति न बाह्यपरिग्रहस्य वेदपरिग्रहेण तुल्यत्वमिति भावः। इदमेव न्यायविद्भिरपि हेतुदर्शनादर्शनाभ्यां विवेकादित्युच्यते॥ ११४॥

**आनन्द०**—ननु वेदस्याऽबाधितत्वेन प्रामाण्यमुक्त्वा वेदविरोध्यागमानां वेदबाधितत्वान्न तैर्बाध इति प्रागुक्तं न सम्भवति तैरेव वेदबाधसम्भवादित्याक्षेपसङ्गतिमभिप्रेत्याह—**नन्विति** ।

ननु प्रामाण्यप्रयोजकं महाजनपरिगृहीतत्वं तच्च बाह्यागमानामेव वर्तते । तत्परिगृहीतॄणामेव बहुत्वात् । प्रेक्षावन्महत्परिग्रहस्तिष्ठतु मा वा—तत्राह—**अयमर्थं इति** । **अनुत्कृष्टजनपरिग्रहः**—उत्कृष्टजनपरिग्रहाऽभावः । **उपाधिस्त्विति**—दृष्टप्रयोजनवतः परिग्रहः । तादृशप्रयोजनबोधकस्य प्रामाण्ये सत्येव भवति । अन्यथा वैयर्थ्यात् । दृष्टप्रयोजनपरिग्रहस्य यावता दृष्टं सम्भवति तावतैव परिग्रहः । नचात्र तदर्थानुष्ठानाददृष्टं येन प्रामाण्यमावश्यकं स्यात् । अपि तु तद्ग्रहमात्रादेवेति भावः । गत्यभावशब्दार्थमाह—**अनन्यगतिकत्वमिति** । **कर्तव्येति**—गुरुभूतस्य करणे सामर्थ्याभावादिति भावः । **परैर्वञ्चनमिति**—परे "तद्बाधे सर्वाभीष्टं स्वपद्यत" इत्युपदेशेन वञ्चयन्ति । वञ्चितास्सन्तो छिन्ननासिकन्यायेनाऽन्यान् ते वञ्चयन्तीत्यन्धपरम्परया परिगृह्णन्तीतिभावः । **अशनाच्छादनेति**—तत्परिग्रहे धनादिकं दास्यन्तीति बुद्ध्येति भावः । आदिशब्देन यथेष्टाचरणादिसौकर्यं गृह्यते । **अन्यदपि**—परदार परिग्रहादीत्यर्थः । जैमिनीयैरपीदमुक्तमित्याह—**इदमेवेति**—वेदप्रामाण्यसमर्थनप्रकरणे तर्कपादे उक्तमित्यर्थः । हेतुदर्शनाऽदर्शनाभ्यां विवेकादित्यस्यदृष्ट प्रयोजनादिदर्शनतदभावाभ्यां वैषम्यादित्यर्थः ॥ ११४ ॥

---

**नित्यैरस्पृष्टदोषैर्भवति च निगमैः पौरुषेयेषु बाधः**
**पाषण्डत्वप्रथैषां जगति न च मृषा पक्षपातप्रहाणे ।**
**अन्योन्यं चैषु बाधः प्रसजति कृतकेष्वाप्तिमोहादिसाम्यात्**
**संवादोऽशेषु तुल्यः परमिह कुहनासिद्धयेऽन्यप्रवेशः ॥ ११५ ॥**

**सर्वार्थः**—किंचैवं प्रमाणत्वेन प्रतिपन्नवेदवाक्याद्बाह्यानां बाधस्थापनमप्रामाण्यहेतुरित्याह—**नित्यैरिति** ॥ अतस्तेषां पाषण्डत्वप्रसिद्धिरप्यप्रामाण्यनिमित्तं भवतीत्याह **पाषण्डत्वेति** । न चैतावदेव, बौद्धचार्वाकार्हतसांख्यादीनां परस्परबाधोऽप्यप्रामाण्यहेतुरित्याह—**अन्योन्यमिति** । तत्रैकश्चेदाप्तः, अपरोऽप्याप्तः, मूढश्चेन्मूढ इत्याह—**आप्तीति** । क्वचिद्वेदसंवादात् कुत्रचित्प्रामाण्यमिति चेत् तुल्यमित्याह—**संवाद इति** । अतः सिद्धान्तान्तरप्रवेशः कुहनासिद्धये—परवञ्चनादिसिद्धय इति न बाह्यसिद्धान्तैर्वेदागमस्य तुल्यत्वप्रसङ्ग इत्यर्थः ॥ ११५ ॥

आनन्द०—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्याह—**किञ्चैवमिति**—ननु बाह्यागमानां बाधमेव हि सूत्रकृदाह तत्वप्रामाण्यमित्यत आह—**बाह्यानां बाधस्थापनमिति**—पाषण्डिभिर्वेदविरुद्धाचारैः परिगृहीतत्वादप्यप्रामाण्यमिति दर्शयति—**अतस्तेषामिति**। **परस्परबाधोऽपीति**।

ननु परस्परबाधो वेदेऽप्यस्ति। तैर्वेदस्य बाधः वेदेन वा तेषां बाध इति, यदि बाधो न प्रयोजकः तदा तेषां परस्परबाधोऽपि तथा स्यादिति चेत्। अत्राहुः। वेदस्य नित्यनिर्दोषत्वेनाधिकबलत्वादनेन तेषामेव बाधः न तु तैस्तस्य बाध इति न तुल्यतेतिभावः। यथा न हिंस्यादिति वेदसंवादे जिनमतस्य यथा वा सांख्यपक्षस्य "इन्द्रियेभ्यः परा ह्यर्थाः" इति तथा विज्ञानात्मवादिबौद्धमतेऽपि समान इत्याह—**क्वचिदिति** ॥ ११५ ॥

---

**संवादे मानवादेः श्रुतिभिरविरले संग्रहे तत्समाने**
**ताभिश्चाप्तत्वसिद्धौ स्वकथित उचितस्तस्य तन्मूलभावः।**
**नाक्षं लिङ्गं नरोक्तिभ्रम इह घटते विप्रलिप्साऽपि मूलं**
**नाज्ञाते भावनाऽपि श्रुतिविषयतया भाति योगे तु धर्मः ॥ ११६ ॥**

**सर्वार्थः**—इत्थं वेदस्य प्रामाण्यमुपपाद्य स्मृतीतिहासादेर्वेदमूलत्वेन प्रामाण्यमुपपादयति—**संवाद इति** ॥ अयमर्थः—मानवादेः—मन्वादिग्रन्थस्य। श्रुतिभिस्संवादे अविरले—सार्वत्रिके। संग्रहे—परिग्रहे। तत्समाने—श्रुतिभिस्समाने। स्मर्तॄणां। मन्वादीनाम्। ताभिः—यद्वै किंच मनुरवददित्यादिभिश्श्रुतिभिरेव। आप्तत्वसिद्धौ; स्वकथितः स्मृतिभिरेव कथितः। तस्य—मानवादेस्तन्मूलभावः। उचितः—प्राप्तः। स्मर्तार एव वेदमूलत्वं स्मृतीनामाहुरित्यर्थः। श्रुतेरेव स्मृतिमूलत्वमुक्त्वा तदन्येषां तन्मूलत्वं निषेधति—**नेति**। न तावदिन्द्रियं स्मृत्यादिमूलं संभवति; तस्यालौकिकार्थत्वात्, तद्विषये लौकिकस्य प्रत्यक्षस्याप्रवृत्तेः। न चानुमानं तत्र प्रवर्तते; अन्वयव्यतिरेकस्य प्रत्यक्षमूलत्वेन प्रत्यक्षस्य निवृत्तावनुमानस्यापि निवृत्तेः। न च लौकिकं वाक्यं तन्मूलम्; तस्य प्रत्यक्षानुमानमूलत्वेन तन्निवृत्तावसंभवात्। न च भ्रम एव मूलम्; महाजनपरिग्रहासंभवात्। तत एव न विप्रलिप्साऽपि मूलम्। तर्हि भावनैव मूलमिति चेत् तदपि नेत्याह—**नाज्ञात इति**। तथा च चक्रकमित्यर्थः। ज्ञाते भावना, भावनया च स्मृतिः, स्मृत्या ज्ञानमिति। श्रुत्या ज्ञाने पुनरस्मत्पक्षः। प्रत्यक्षादिभिः स्मृतिविषयज्ञानमत्रैव प्रतिक्षिप्तम्। कथं तर्हि महर्षीणां प्रत्यक्षेण धर्मदर्शनम्? इत्थम्—श्रुत्या धर्मं प्रतिपद्य स्वयमनुष्ठातारो धर्मप्रभावात् प्रभावविशेषमासाद्य पश्चात् चोदनालक्षणोऽर्थो धर्म इति श्रुतिविषयत्वेन धर्मान् साक्षात्कुर्वन्ति। नैतावता स्मृतीनां श्रुतिमूलत्वभङ्गः; तैरपि योगिभिर्योगदशायां श्रुतिप्रमाणगम्यत्वेनैव धर्माणामुपलम्भात्। अतो वेदमूलत्वं स्मृत्यादेरुपपन्नमिति ॥ ११६ ॥

**आनन्द०**—प्रसङ्गसङ्गतिमभिप्रेत्याह—**इत्थमिति**। इतिहासादेरित्यादिशब्देन पुराणादिसङ्ग्रहः।

ननु श्रुतिसंवादोऽस्तु नाम? तावता तन्मूलत्वं किमर्थं वाच्यं? श्रुत्यन्तरस्य श्रुत्यन्तरसंवादवत्सारस्वतसंवादवच्च यादृच्छिकत्वसम्भवादित्यत्राह—**अयमर्थ इति**—अवश्यं स्मृत्यादेर्मूलं कल्प्यमिति संवादादिभिश्श्रुतिरेव कल्प्यते लाघवादेरिति-भावः। पारिशेष्यादपि श्रुतिमूलत्वं स्मृत्यादेरित्याह—**श्रुतेरेवेत्यादिना**। **भावना**-संस्कारविशेषः। भावनया च स्मृतिरिति स्मरणमूलकग्रन्थ इत्यर्थः।

ननु द्रष्टारस्सर्वधर्माणामिति प्रत्यक्षविषयत्वाद्धर्माणां तद्विषयस्मृतीनां तन्मूलत्वं सम्भवतीत्यभिप्रायेणाह—**कथं तर्हीति**।

ननु चोदनामूलत्वेन धर्मसाक्षात्कारो महर्षीणामस्तु तथा स्मृतौ प्रत्यक्षमेव मूलं न तु चोदनात्मकश्रुतिः नहि विषयस्याऽलौकिकसाक्षात्त्वमित्यत आह—**तैरपीति**—श्रुत्येकसमधिगम्यत्वेन धर्मज्ञानं श्रुतिमूलकधर्मज्ञानं विना न सम्भवति। यथा कथञ्चित् श्रुतेरपेक्षितत्वे श्रुतेरेव मूलत्वमस्तु। किञ्च योगजन्य साक्षात्कारस्यापि श्रुतिमूलत्वात्श्रुति-मूलक साक्षात्कारापेक्षया श्रुतेरेव मूलत्वमस्तु लाघवादिति भावः॥ ११६॥

---

**या मूलं त्वष्टकादेरियमपि मनुजैः क्वाप्यधीता श्रुतित्वात्**
**सा चेन्नित्यानुमेया प्रसजति न कथं तादृशाध्यक्षक्लृप्तिः।**
**सर्वस्मिन् पूर्वपूर्वस्मृतिरपि निगमोपज्ञमित्याचरिष्णौ**
**नित्यादृश्ये च मूले नियतमिह भवेदन्धसन्ताननीतिः॥ ११७॥**

**सर्वार्थः**—इत्थं वेदमूलत्वं स्मृतीनामुपपाद्य अष्टकाद्याचारादेः **प्राभाकरोक्तं** नित्यानुमेयवेदमूलत्वं प्रतिक्षिपति—**या मूलमिति** इदमत्रानुमानम्—अष्टकाद्याचारमूल-भूता श्रुतिरन्यत्र क्वचिदधीता श्रुतित्वात् प्रत्यक्षश्रुतिवदिति। नित्यानुमेया सा श्रुति-रिति चेन्न; श्रुतित्वे नित्यानुमेयत्वव्याघातात्। ताल्वादिव्यापारैः क्वचिदुच्चार्यमाणो वर्ण-संघातविशेष एव हि श्रुतिः। तस्य कथं नित्यानुमेयत्वम्? उच्चारणदशायां वक्तृश्रोत्रो-रुपलम्भात्। यदि च नित्यानुमेया श्रुतिर्मूलभूता स्मृतीनां, तर्हि तादृशं नित्यानुमेयं प्रत्यक्षमपि तन्मूलतायां किं न कल्प्यते? प्रमाणाभावादिति चेत्तुल्यम्। स्मृतिरेव मूल-सद्भावे प्रमाणमिति चेत् सत्यम्, सा हि स्मृतिर्मूलमेवानुमापयति न पुनर्नित्यानुमेयत्व-मपि। मूलभूतस्य वेदस्य मूलान्तराभावादिति चेन्न; विप्रकीर्णैव श्रुतिरस्तु मूलम्; किमनया नित्यानुमेयया श्रुत्या? किंच सर्वेऽपि पूर्वपूर्वस्मृतिमेव प्रमाणीकृत्याचरन्ति। न कश्चिदपि वेदं दृष्टवानिति हि नित्यानुमेयत्वं वेदस्य। तथा च सर्वेषामेव परप्रत्यय-मात्रशरणत्वात् सकलस्यापि मूलभूतप्रमाणादृष्टेरन्धपारम्पर्यवदप्रमाणमूल एव स्मृति-परिग्रह इति प्रसज्येत। अतो नित्यानुमेयवेदमूलत्वं स्मृतीनामप्रामाण्यकारणमिति ॥ ११७॥

**आनन्द०**—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—**इत्थमिति**—सा श्रुतिरभिव्यक्ताऽनभिव्यक्ता वा ? नाद्य इत्याह—**श्रुतित्व इत्यादिना**। द्वितीयं दूषयति—**यदि च नित्यानुमेयेत्यादिना**। **मूलभूतस्य वेदस्येति**—तथा च श्रवणादिप्रापकाऽभावान्नित्यानुमेयत्वादिति भावः। **विप्रकीर्णैवेति**।

यद्यपि पराभिमतविप्रकीर्णश्रुतिमूलत्वं नाभिमतं, तथाऽपि [चरमो अनामुक्तार्थमित्याहुः]। विप्रकीर्णशब्देन सर्वत्र व्यापनाभावोऽभिमतः, स तु सिद्धान्तेऽप्यस्तीत्याहुः। **किञ्चेति**।

नन्वनुमितवेदार्थप्रतीत्या अनुष्ठानं, न तु स्मृतं प्रमाणीकृत्येति चेन्न। सर्वेऽपि स्मृत्या श्रुतिमनुमाय श्रुत्यर्थं प्रत्याययन्तीति स्मृतिमूलभूत ज्ञानस्य परप्रत्ययमूलत्वादन्धपरम्परेति भावः। **अप्रामाण्यकारणं**—अप्रामाण्यबुद्धिहेतुरित्यर्थः ॥११७॥

---

**शाखोच्छेदस्त्विदानीमिह यदि स मतस्सर्वतश्चेदसिद्धि-**
**र्व्यासागस्त्यप्रधानैर्भवति च मुनिभिर्भूषिताऽद्यापि भूमिः।**
**उच्छिन्ना सा यथैवाचरितुरविदिता तत्तदाचारमूलं**
**तद्वत्सा विप्रकीर्णा क्रमसमधिगमः कालवद्देशतोऽपि ॥ ११८ ॥**

**सर्वार्थः**—मा भून्नित्यानुमेयवेदमूलत्वम्; उच्छिन्नशाखामूलत्वं स्मृतीनामिति तार्किकाः। तान् प्रत्याह—**शाखोच्छेद इति**॥ अयमर्थः—किं शाखोच्छेदं प्रत्यक्षेण साधयति ? तत्र प्रत्यक्षमभावादेव निरस्तम्। काव्याद्युच्छेददर्शनाद्वेदोच्छेदमपि वदाम इति चेत्तन्न; न ह्यन्योच्छेद एवान्योच्छेदः। अस्तु वा अन्योच्छेदादन्योच्छेदः; अथापि केनापि हेतुना वेदोच्छेदमनुमिमीषे। स पुनरुच्छेदः किमिदानीमेतस्मिन्नेव देशे उत देशान्तरेऽपि ? पूर्वत्र सिद्धसाधनम्, एतद्देशे तत्प्रवृत्त्यभावात्; उत्तरत्र कालात्ययापदेशः, व्यासागस्त्यादेरद्यापि तत्र तत्र विद्यमानत्वात्। असिद्धिः—बाध इत्यर्थः। तर्हि विप्रकीर्णा श्रुतिः कथमत्रत्याचारमूलमिति चेत्, कथं वोच्छिन्ना श्रुतिरत्रत्याधुनिकाचारमूलमिति भवानेव पश्यतु। आचरितुरविदिताऽपि तत्पूर्वविदितत्वात् तदाचारमूलमिति चेत्, तुल्यमत्रत्यैरविदिताऽपि देशान्तरस्थैर्विदिता श्रुतिस्तदुपदेशपारम्पर्यादत्रत्याचारमूलमिति। तदिदमाह—**क्रमेति**। यथा कालक्रमागतप्रवक्तृपारम्पर्यादधिगमः, एवं देशक्रमागतप्रवक्तृपारम्पर्यादस्माकमप्यधिगम इति ॥ ११८ ॥

आनन्द०—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—**माभूदिति**।

ननु शाखोच्छेदस्य सम्मतत्वे परसिद्धान्त एव स्यादित्यत्राह—**अयमर्थ इति** सर्वदेशावच्छेदेनोच्छेदशब्दार्थः। स किं प्रत्यक्षेण? उतानुमानेनेति? विकल्प्याऽऽद्य-आह—**तत्र प्रत्यक्षाभावादिति**—सर्वदेशाद्यवच्छेदेन योग्यानुपलब्ध्यभावादित्यर्थः। ननु प्रत्यक्षमाशङ्कते—**काण्व्याद्युच्छेद इति**।

यद्यपि सर्वदेशावच्छेदेनोच्छेदः न प्रत्यक्षः तथाऽप्युच्छेदमात्रस्य प्रत्यक्षत्वेन तदुक्तिरिति हृदयम्। द्वितीयमाशङ्कते—**तथाऽपीति**। **व्यासागस्त्यादेरिति**—तै. पठ्यमानत्वात्तद्बुद्धिविषयत्वादिति भावः। **विप्रकीर्णेति**—क्वचिदेव देशे विद्यमान-स्याऽत्रत्यैर्ज्ञातुमशक्यत्वादिति भावः। **कथं वेति**—इदानीन्तनैस्तच्छ्रवणासम्भवादिति भावः॥ ११८॥

---

**दृष्टे वेदैर्विरोधे स्मृतिपरिहरणं सूत्रभाष्यादिसिद्धं**
**तद्वन्नीतिः पुराणप्रभृतिषु भविनां संभवाद्विभ्रमादेः।**
**स्यादन्योन्यं विरोधे त्विह बलनियतिस्सात्त्विकत्वादिभेदा-**
**न्मात्स्यादौ दर्शितं तच्छ्रुतिहतिरहितैस्तत्परैरेव वाक्यैः॥ ११९॥**

**सर्वार्थः**—स्मृतेर्वेदमूलत्वेन श्रुतिविरोधे सत्यप्रामाण्यमुक्तम्। तत्पुराणादीना-मपि समानमित्याह **दृष्ट इति**। तत्र हेतुमाह—**भविनामिति**। पुरुषाणां भ्रमविप्रलम्भादि-संभवो हि वेदात् स्मृतीनां दौर्बल्ये हेतुः। स च हेतुः पुराणादिष्वपि समान इत्यर्थः। अस्तु श्रुत्या विरोधे पुराणादीनां दौर्बल्यम्; अन्योन्यविरोधे कथमित्यत्राह—**स्यादिति**। सात्त्विकत्वादिभेदस्य बलाबलहेतुत्वे प्रमाणमाह—**मात्स्यादाविति**। उक्तं हि **मात्स्ये**—

अग्नेश्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥
संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते।
सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः॥
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्॥ इति।

श्रुतिविरोधरहितैस्तात्पर्यवद्भिर्वाक्यैः प्रतिपन्नत्वादयमर्थस्सर्वैरपि वादिभिरन-तिलङ्घनीय इत्यर्थः। अतः श्रुत्यविरोधिनां सात्त्विकानामेव पुराणानामुपादेयत्वम्; न पुनः श्रुतिविरोधिनां राजसानां तामसानां च पुराणानामुपादेयत्वम्। तेषां संसार-वर्धनाय भगवत्प्रवर्तितैः पितामहादिभिः प्रवर्तितत्वान्न सात्त्विकपरिग्राह्यत्वमिति भावः॥ ११९॥

आनन्द०—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—स्मृतेरिति-विरोधाधिकरण-इति शेषः। दौर्बल्ये स्मृतित्वमप्रयोजकं, किन्तु भ्रमादिमूलत्वं तच्च, पुराणादिसाधारणमित्याह—पुराणादीनामित्यादि। सात्त्विकत्वादि—भेदस्येति।

नन्वत्र मात्स्यवचनेषु सात्त्विकादिभेद एव प्रतिपाद्यते। न तु तद्भेदस्य बलाबलभाव इति चेत्। सत्यं, तेष्वेव योगसंसिद्धा" इति मोक्षसाधनीभूतज्ञानहेतुत्वं प्रतिपाद्यते। तत्साधनीभूतञ्च ज्ञानं तत्त्वगोचरम्। एतादृशज्ञानहेतुत्वञ्च प्रमाणभूतस्यैवेति प्रमाणत्वमुक्तम्। राजसतामसयोस्तु भ्रमहेतुसंसारवर्धकत्वमर्थादवगतमिति भ्रमहेतुतयाऽप्रामाण्यमुक्तं भवति। प्रमाणत्वाऽप्रमाणत्व एव बलाबले इति भवति। तत्र प्रमाणं भगवत्प्रवर्तितैरिति प्रवृत्तिलक्षणं धर्मं "प्रजापतिरथाब्रवी" दित्यादिभिरिति भावः।

केचित्तु "त्वं हि महाबाहो मोहशास्त्राणि कारये"त्यादिभिरित्यर्थ इत्याहुः। अत्र "यस्मिन्कल्पे तु यत्प्रोक्त" मित्युपक्रम्य प्रवृत्तस्य वचनस्य कल्पविभागपरत्वं न तु पुराणविभागपरत्वमित्यादिपरोक्तकुचोद्यस्य परिहारो महाचार्यविजयोल्लासेऽनुसन्धेयः। अयं न्यायस्स्मृतावपि समानः कारणस्य तुल्यत्वादिति ध्येयम्॥ ११९॥

---

भागे वेदाविरुद्धे पशुपतिकपिलाद्यागमास्स्युः प्रमाणं
मोहाद्यर्थं तु शेषं मुनिभिरभिहितं यत्र मज्जन्ति डिम्भाः।
भूयस्यर्थे प्रधाने विहतिमति सतां संशयश्च क्वचित्स्यात्
श्रुत्या बाधं न रुन्धे श्रुतिसहपठितिर्हेत्वहन्तव्यता च॥ १२०॥

सर्वार्थः—तर्हि पुराणादिवद्वेदाविरुद्धांशे पशुपतिकपिलाद्युक्तीनां प्रामाण्यमस्तु; कथं तर्कपादे तेषां प्रतिक्षेप इत्याशङ्कते-भाग इति॥ वेदविरुद्धांशस्योपयोगं पूर्वपक्ष्यभिप्रायेणाह-मोहाद्यर्थमिति। असुरमोहनार्थं तत्र वेदविरुद्धांशाभिधानम् अतः पुराणादिवत् कापिलादिकमपि परिग्राह्यमिति। यत्र मज्जन्ति डिम्भाः-येष्वभिधानेषु बालिशा मुह्यन्तीत्यर्थः। परिहरति—भूयसीति। न हि पुराणादिषु प्रधानार्थविरोधो भूयान्। श्रुत्युक्तमेवानुसरन्ति सत्त्वोत्तराणि पुराणादीनि। तामसानि पुनरप्रमाणान्येव। कापिलपाशुपतादिषु श्रुतिविरोधभूयस्त्वात् सत्त्वोत्तरस्मृतिपुराणादितुल्यत्वं नाङ्गीकुर्महे; विरुद्धस्मृतिपुराणादितुल्यत्वे का नो हानिरिति, वेदविरुद्धांशस्य भूयस्त्वात्क्वचित् सत्त्वोत्तरांशसद्भावेऽपि न सार्वत्रिकविश्वासास्पदत्वमिति भावः। संशयश्च क्वचित् स्यात्-बह्वर्थविरोधे सति संशय एव स्यादित्यर्थः। कथं तर्हि सांख्यं योगः पञ्चरात्रमिति वेदैस्सह कथनम्? कथं वा हेतुबाध्यत्वं पञ्चानां नास्तीति? अत आह—श्रुत्येति। श्रुतिविरोधे पुनर्बाध्यत्वमेव; नहि साधर्म्यमात्रेण वैधर्म्यं निवार्यत इति भावः॥ १२०॥

आनन्द० - तर्हीति । तामसानीति ।

ननु लैङ्गादावपि वैकुण्ठे तु परे लोक इत्यादिवचनानि तत्र तत्र प्रमाणतयोपादीयन्ते । तथा च कथं सर्वात्मना तान्यप्रमाणानीति चेत् । अत्राहुः । सर्वात्मनातत्त्वांशे तामसान्यप्रमाणान्येव । वैकुण्ठेत्यादिकानि तु प्रमाणान्तरसंवादात्प्रमाणानि न स्वतः । आचारांशे तु सात्विकाद्यविरुद्धानि ग्राह्याणि ।

न च कापिलपाशुपतादावपि तथा स्यात् । तेषां प्रमाणान्तरसंवादाऽभावे अविरुद्धांशेऽपि प्रामाण्यं नास्त्येव । क्लृप्तभ्रमादिमूलसजातीयत्वेनचैत्यवन्दनवाक्यवदप्रमाणत्वस्यौचित्यादिति वदन्ति ।

केचित्तु अविरुद्धांशे प्रामाण्यमस्त्येव ।

"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा"
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः" ।

इत्युक्तेः । समयपादे तन्निरासस्तु भूयस्तया श्रुतिविरोधज्ञापनाय । न च तामसपुराणस्यापि तथा प्रसङ्गः । तत्र भारतादि वचनाऽभावादिति भावमाहुः ।

श्रुतिविरोध इति । इदमुपलक्षणम् । सात्विकस्मृतिपुराणादिविरोधोऽपीत्यपि द्रष्टव्यम् ॥ १२० ॥

---

निर्दोषाम्नायमौलिश्रुतनिखिलजगन्मूलसर्वज्ञमूले
हेतुव्यूढे चतुर्धा क्वचिदपि न भवेद्विभ्रमः पञ्चरात्रे ।
युक्ता भक्तानुकम्पागरिमसमुदिते विप्रलिप्साऽपि नास्मिन्
वेदाच्छ्रैष्ठ्योक्तिरर्थस्थितिविशदतया भूमविद्यादिवच्च ॥ १२१ ॥

सर्वार्थः—अस्तु तर्हि श्रीपाञ्चरात्रस्यापि पाशुपतादितुल्यत्वमित्याशङ्कमानं प्रतिक्षिपति—निर्दोषेति ॥ तत्र कर्तृवैषम्यं प्रामाण्ये हेतुमाह—निर्दोषेति । अयमर्थः—सांख्यं योगः पञ्चरात्रमिति सहपठितिनिमित्तसाम्यभ्रमं मन्दानां निवारयितुं भगवता बादरायणेनैव सांख्यस्य वक्ता कपिल इत्यादिना सांख्यादीनां संभावितभ्रमकपिलादिकर्तृकत्वेनाप्रामाण्यमभिधाय पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् । इति भगवदभिहितत्वेन प्रामाण्यमेव प्रतिष्ठापितमिति । अथापि तन्त्रमन्त्रादिसिद्धान्तभेदेन वा ज्ञानादिकाण्डभेदेन वा वासुदेवादिचातुरात्म्यप्रतिपादनभेदेन वा विभक्ते तस्मिन् शास्त्रे सार्वत्रिकाप्रामाण्याभावेऽपि क्वाचित्कमप्रामाण्यं स्यादित्याशङ्क्याह हेतुव्यूढ इति । अत्र कुत्रापि वेदविरोधाभावात् कर्तृसामान्याच्चाप्रामाण्यशङ्का न जायत इत्यर्थः । मा भूद्विभ्रमः, विप्रलिप्सा भगवतस्स्यात्, दृष्टा हि भगवतोऽपि विप्रलिप्सा, त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारयेत्यादौ, क्षिरामग जबनगुमानित्यादौ च । अत्राह—युक्तेति ।

द्विविधा खलु भगवतः प्रवृत्तिः; असुरमोहनार्थम् आश्रितसंरक्षणार्थं च। पञ्चरात्रे सत्त्वोत्तरजनसंरक्षणार्थमेव प्रवृत्तिः। अत एव सत्त्वोत्तराश्शाण्डिल्यादय एव तच्छास्त्रप्रवक्तारः। अतो नास्मिन् शास्त्रे विप्रलिप्साऽपि कारणम् तर्हि साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रतन्त्रमधीतवानिति वेदाच्छ्रेष्ठ्यवचनं पञ्चरात्रस्य वेदविरोधख्यापकं न कथमित्यत्राह वेदादिति। द्विधा ह्यत्र गतिः–इतिहासपुराणवदर्थवैशद्यादित्येका; शाण्डिल्यस्य पञ्चरात्रशास्त्राभ्यासपर्यन्तं वेदवाक्यादर्थप्रतिपत्तिर्विशदा नाभूदित्यपरा। तदेव दृष्टान्तेनाह–भूमविद्येति। यथा भूमविद्योपक्रमे भूमविद्यार्थंप्रशंसा ऋग्वेदं भगवोऽध्येमीत्यादिना कृत्स्नस्यापि वेदस्य अनादरेण ज्ञानहेतुत्वाभावमुक्त्वा भूमविद्याया एव ज्ञानहेतुत्वं स्वीक्रियते, नैतावता भूमव्यतिरिक्तविद्यानिन्दा; अपि तु भूमविद्याप्रशंसैव। तद्वदत्रापीति ॥ १२१ ॥

---

आनन्द० – आक्षेपसङ्गतिमाह—अस्तु तर्हीति।

ननु सर्वज्ञमूलत्वं कथं ? यदि कथञ्चित्तन्मूलत्वंतत्सर्वेषामपि समानं तदधीनत्वात्सर्वेषामित्यत्राह—अयमर्थं इति—सांख्यस्य वक्ता कपिल इत्यादिना कर्त्रभिधानस्य प्रयोजनं तत्तदागमानां प्रामाण्यतारतम्यज्ञापनमेवेति भावः। अथापीति—सिद्धान्तादिभेदानुवादस्य परस्परविरोधो नास्तीति ज्ञापनं प्रयोजनम्। दृष्टा हीति—"त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारयेत्यादिभिः परमपि प्रेरयतस्स्वस्य सुतरां विप्रलिप्सेति भावः। क्षिपामीत्यत्राऽसुरभावस्य ज्ञानविरोधित्वात्तदापादने ज्ञानापहारसिद्धेर्विप्रलिप्सेति भावः।

ननु सत्वोत्तरत्वं शाण्डिल्यस्य न सम्भवति। वेदाप्रामाण्यबुद्धिमत्वादित्याशङ्कते—तर्हीति—न शाण्डिल्यस्य वेदाप्रामाण्यबुद्धिमत्वं अपि तु वेदश्रवणमात्रेण तदर्थावबोधो दुरवगम इत्येवं बुद्धिरिति भावः। तर्हि साङ्गेषु वेदेषु निष्ठामलभमान इत्यादि कथनं किमर्थमित्यत्राह—यथा भूमविद्योपक्रम इति ॥ १२१ ॥

---

जीवोत्पत्त्यादिवादो निगमवदिह तन्नित्यतोक्तेश्च साम्या-
ज्जीवाद्याख्यानिरूढिस्त्वभिमतिभिदया स्याच्च संकर्षणादौ।
मन्वादेश्चोपजीव्यं हिततममिदमित्यादिकं भारतोक्तं
तत्त्वाप्यैक्यं विकल्पः क्वचिदभिमतवत्तादृशाम्नायभेदात् ॥१२२॥

सर्वार्थः—तर्हि वासुदेवात् संकर्षणो नाम जीवो जायत इत्यादिना पञ्चरात्रे जीवोत्पत्त्यादिकं वेदविरुद्धमभिधीयत इत्याशङ्क्य परिहरति—जीवेति निगमवत्–यथा निगम एव इमानि भूतानि जायन्त इत्यादिना जीवोत्पत्त्यादिकमभिधीयते। तद्वत् नित्यो नित्यानामित्यादिना जीवनित्यत्वादिकमपि निगमे निगद्यत इति चेत्तुल्यम्। अत्रापि अचेतना परार्था च नित्या सततविक्रियेत्यादिना प्रकृतेरपि नित्यत्वमभिधीयते;

किं पुनर्जीवस्य नित्यत्वम्; अनित्यत्वं च प्रकारभेदेन घटत इत्यर्थः। द्रव्यस्वरूपनित्यत्वान्नित्यत्वमचेतनस्य; स्वरूपे नामान्तरभजनार्हावस्थान्तरयोगादनित्यत्वम्; जीवस्यापि स्वरूपनित्यत्वेऽपि नानादेहपरिग्रहात्, ज्ञानसंकोचविकासयोगमात्राच्चानित्यत्वमिति। किंच वासुदेवात्संकर्षणो नाम जीवो जायत इत्यादिवचनं जीवाद्यभिमानिसंकर्षणाद्याविर्भावपरम्। अतो न विरोध इत्याह-**जीवाद्याख्ये। मन्वादेरिति**। इदं श्रेय इत्यादिना ऋग्यजुस्सामभिर्जुष्टमिदं पञ्चरात्रं मन्वादेरप्युपजीव्यमित्युक्तं **महाभारते**। सात्त्वतं विधिमास्थाय गीतास्संकर्षणेन यः इत्यादिना च ब्राह्मणादीनां सर्वेषामुपजीव्यत्वं च तत्र तत्रोक्तम्। तत्त्वाप्यैक्यम्- अविरुद्धतयैव संप्रतिपन्नस्थले; आपाततो विरुद्धतया प्रतिपन्ने स्थले ग्रहणाग्रहणवद्विकल्प एव। तदिदमाह-**अभिमतवदिति**। **तत्रोभयत्रापि** गृह्णाति न गृह्णाति चेति वेदवाक्यमस्तीति चेत्; अत्रापि पञ्चरात्रमूलभूताया मूलश्रुतेरधीयमानत्वादिति तुल्यम्। सा मूलश्रुतिः प्रचुरं नाधीयत इति चेत् किं कुर्मः ? अध्येतॄणामेव परिमितत्वेनायं दोषः यथोपनिषदामिति एतच्चागमप्रामाण्ये भाष्यादौ च विस्तरेणानुसन्धेयम् ॥ १२२ ॥

---

**आनन्द०**—पूर्वाक्षेपेण सङ्गतिरित्यभिप्रायेणाह—**तर्हीति। इमानि भूतानीति**—भूतशब्दो जीवपरः।

ननु तर्हि विरुद्धभाषणत्वात्प्रामाण्यं न स्यादित्याह—**नित्यत्वमनित्यत्वञ्चेति**-व्याहतिर्नास्तीति भावः। किञ्च जीवपरत्व एव विरोधशङ्का जीवपरत्वमेव नास्तीत्याह—**किञ्चेति। ब्राह्मणादीनामिति**—

"ब्राह्मणक्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः
अद्वितीयश्च सेव्यश्च नित्ययुक्तैस्स्वकर्मभि"

रित्यादिभिरिति शेषः।

ननु युक्तो ग्रहणाऽग्रहणस्थले विकल्पस्तुल्यप्रमाणकत्वात्। अत्र पाञ्चरात्रस्य वेदतुल्यत्वं न सम्भवतीति चोदयत्यत्राह— **तत्रोभयत्रापीति**।

वस्तुतस्तु नित्यसर्वज्ञप्रणीतत्वात्पाञ्चरात्रमेव वेदतुल्यप्रमाणं। विप्रलिप्सादि दोषमूलत्वञ्च नास्तोति निर्णीतम्। तथा वेदानां अपौरुषेयत्ववाद इत्यभिप्रायेणाह—**एतच्चेति** ॥ १२२ ॥

सर्वे सर्वज्ञबुद्धेर्ननु विषयतया नित्यसिद्धाः कृतान्ता-
स्तस्मात्तेन प्रवर्त्ये सति समयगणे कस्यचित्को विशेषः ।
मैवं तत्त्वे विकल्पत्यजि विहतिमतामेकशेषत्वमाना-
त्तन्निष्ठा स्यात् कनिष्ठा नमति न विदुषोऽनामिकादिः परस्मै ॥१२३॥

सर्वार्थः—अत्र सिद्धान्तान्तरप्रतिबन्दिमाह—सर्वे इति ॥ सिद्धान्तान्तरमीश्वरबुद्धेर्नित्यमेव विषयः । तस्मादीश्वरप्रवर्त्ये सर्वस्मिन्नपि सिद्धान्ते सति कस्यचित् पञ्चरात्रस्य को विशेषः ? अत्रोत्तरम्—मैवमिति । परस्परविरुद्धतत्त्वप्रतिपादकेषु ग्रन्थेषु सर्वत्र प्रामाण्यं दुरुपपादम् । अतः क्वचित्प्रामाण्ये पञ्चरात्रस्यैव प्रामाण्यं भगवत्प्रोक्तत्वात् शाण्डिल्यादिसत्त्वोत्तराधिकारिपरिग्रहात्, वेदविरोधाभावात्, अन्यस्मादपि शतशः प्रतिपादिताद्वैषम्यात् सिध्यति । ईश्वरस्य सर्वज्ञत्वेन तद्बुद्धिस्थत्वं वेदानां बुद्धागमादीनापि समानम्; नैतावता तत्र साम्यम् तद्वदत्रापीति भावः । अयमर्थः—अप्रमाणत्वेन तन्त्रान्तराणीश्वरबुद्धिस्थानि, प्रमाणत्वेन पञ्चरात्रमिति । अयं च न्यायो वेदबाह्यागमयोरपि समान इति ॥ १२३ ॥

---

आनन्द०—आक्षेप सङ्गतिमाह · अत्रेति । अस्य पद्यस्य प्रतीकाऽनुपादानेनैव व्याख्या द्रष्टव्या । सर्वस्मिन्नपीति—तद्बुद्धेर्नित्यत्वात्सर्वविषयत्वाच्चेति भावः ।

नन्वीश्वरबुद्धिविषयत्वं न पाञ्चरात्रस्य प्रामाण्यप्रयोजकतयोक्तं, अपि त्वीश्वरकर्तृत्वमेव । तथा सति तद्बुद्धिविषयत्वकथनमयुक्तमिति चेत् । अत्राहुः । तद्बुद्धिविषयत्वस्य द्वेधा प्रामाण्यप्रयोजकत्वं, तद्विषयत्वे हि तत्कर्तृत्वं वा तत्प्रवर्त्यत्वं वा स्यादिति तस्याः यथावस्थितार्थगोचरत्वेनोभयथापि प्रामाण्यं स्यादिति भावः । प्रथमप्रकारमाश्रित्य परिहरति—भगवत्प्रक्तोत्वादिति—अन्येषां जीवद्वारा तत्प्रोक्तत्वमिति जीवबुद्धियाथार्थ्यानुसारित्वात्प्रामाण्यस्य तदभावान्न तदिति भावः । द्वितीयप्रकारमपि दूषयति—ईश्वरस्येति ।

ननु प्रतिबन्दीमात्रान्नार्थसिद्धिः वेदे वा कथं वैषम्यं ? तद्बुद्धिविषयत्वस्य तत्प्रवर्त्यत्वस्य चाविशेषात् । निरीश्वरवादस्वीकारे वा परसिद्धान्तस्स्यादित्यत्राह—अयमर्थ इति इदं वैषम्यं कथं ग्राह्यमिति चेद्व्यासादि वचनैर्ग्राह्यमिति भावः । मूलं विहतिमतां—विरुद्धानामागमानां । एकशेषत्वमानात्—एकस्यैव मानत्वस्य वक्तव्यत्वाद्धेतोः । कनिष्ठा अङ्गुलिः । तन्निष्ठा स्यात्—पञ्चरात्रप्रामाण्यपरिगणन एव नमतीत्यर्थः । अनामिकादिः परस्मै न नमति —एकपरिगणनानन्तरं प्रमाणतया द्वितीयं न गण्यत इति भावः ॥ १२३ ॥

अर्थे पूर्वानुभूते सहमितसदृशाख्यात्यदृष्टप्रभेदै-
स्संस्कारानुग्रहे या परिणमति मतिस्सा स्मृतिस्त्रिप्रकारा।
याथार्थ्येऽपि स्वपूर्वानुभवमनुसरेद्बाह्यशून्या न चैषा
हेतुश्चार्थक्रियादेः स्मृतिवदनुभवोऽप्यस्ति नष्टादिकेषु ॥ १२४ ॥

**सर्वार्थः**—एवं प्रामाण्यप्रक्रियामुपपाद्य स्मृतेरयाथार्थ्यवादिनं प्रतिक्षेप्तुं स्मृत्युत्पत्तिप्रकारानाह—**अर्थ इति**। पूर्वानुभूतेऽर्थे सहदृ [ष्टि]ष्टसदृशदृष्टयदृष्टभेदैः संस्कारानुग्रहे—संस्कारोद्बोधे। या परिणमति मतिस्सा स्मृतिः। स च स्वकारणवैविध्यात् त्रिप्रकारा। अथवा स्वकारणभूतप्रमितिभ्रान्तिसंशयानुरोधेन स्वयमपि तादृग्रूपा सती त्रिपकारा। अत्र कश्चिदाह—सर्वाऽपि स्मृतिरयथार्थेति। तमुत्तरश्लोके निराकर्तुं स्मृतेः पूर्वानुभवानुसरणमाह—**याथार्थ्येऽपीति**। यथा स्मृतिरयाथार्थ्येऽपि पूर्वानुभवमनुसरेत्, तथा यार्थार्थ्येऽपीत्यपिशब्दार्थः। अर्थशून्या स्मृतिः कथं यथार्थेत्याशङ्क्य परिहरित—**बाह्यशून्येति**। स्मर्तव्यस्यापि स्वकाले सत्वादित्यर्थः। अर्थक्रियादिहेतुत्वाच्च स्मृतिर्यथार्थेत्याह—**हेतुश्चेति** ननु स्मृतिर्नष्टविषया; नष्टं चासदेव; कथं याथार्थ्यं स्मृतेरत्याशङ्क्य प्रतिबन्द्या परिहरति—**स्मृतिवदिति**। अतीतानागतानुमानागमयोगिप्रत्यक्षेषु नष्टविषयत्वेऽपि याथार्थ्यं भवानेवाङ्गीकरोतीत्यर्थः॥ १२४॥

---

**आनन्द०**—अवसरसङ्गत्या स्मृतिनिरूपणे प्रसक्ते तत्रोपोद्घातसङ्गत्या स्मृत्यप्रामाण्यं निराकर्तुं पूर्वानुसारित्वमाह—**एवमिति**। अत्राऽवतारिकानन्तरं मूलोपादानं न दृश्यते व्याख्या वैचित्र्यप्रदर्शनार्थं तदनुपादानमिति केचित्।

लेखकदोषात्पातः ईदृशस्थलेषु सर्वत्रेत्यन्ये मन्यन्ते। **सहदृष्टेति**—सह दृष्टिस्सहानुभवः सम्बन्धिदर्शनात् सम्बन्ध्यन्तरे स्मृतिदर्शनात्संस्कारोद्बोधिका। **सदृशदृष्टिः**—सादृश्यज्ञानं। गोसदृशगवयदर्शनाद्गोस्मरणं दृश्यत इति साऽपि संस्कारोद्बोधिका। **अदृष्टं**—धर्माऽधर्मविशेषः। तूष्णीं स्थितस्य स्मृति दर्शनात्तदुद्बोधकमित्यर्थः।

ननु "सदृशादृष्टचिन्ताद्याः स्मृति बीजस्य बोधकाः" इति विचारस्याऽप्युद्बोधकत्वकथनं दृश्यते। तथा सहदृष्टेरनुक्तिश्चेति चेत्। सत्यं। सहदृष्टिरप्येकदेशस्थत्वादिगोचर सादृश्य दृष्टिरेवेति न पृथगुक्तिः। चिन्ता चात्र दृष्टविशेष एवेति केचित्।

अन्ये तु उपलक्षणपरमेतदित्याहुः स्मृतेर्लक्षणमाह—**संस्कारोद्बोध इति**—प्रमाणान्तराऽसहकृत संस्कारजन्यज्ञानं स्मृतिरित्यर्थः। तथा च न प्रत्यभिज्ञादावतिव्याप्तिरिति भावः।

ननु स्वकारणसंस्कारो न तत्र त्रैविध्यं तस्यैकरूपत्वात्। नापि सहदृष्ट्यादि प्रकारभेदः। तस्य स्मृतिवैलक्षण्याप्रयोजकत्वादित्यत आह—**अथवेति**। **तथा याथार्थ्येऽपीति**—अविशेषादिति भावः। **अतीतेत्यादि**—यथा ज्ञानमर्थसत्ता प्रामाण्ये-हेतुः न तु ज्ञानकालसत्वमिति भावः ॥१२४॥

पूर्वं श्यामत्वमात्राद्भवति न हि मितिः पाकरक्तेऽपि तद्धी-
स्तत्ताभानं तथा चेत् प्रसजति तदिदं प्रत्यभिज्ञादिकेऽपि ।
याथार्थ्यं पारतन्त्र्यान्न च गलति न चेदभ्युपेतातिवृत्ति-
र्वेदे मानैस्सहोक्ता स्मृतिरपि विफला त्वक्षपादाद्यनुक्तिः ॥ १२५ ॥

**सर्वार्थः**—उक्तमपि स्मृतियाथार्थ्यं प्रतिवाद्युक्तहेतुप्रतिक्षेपेण स्वाभिमतप्रमाणविशेषेण चोपपादयति –**पूर्वमिति** । इत्थं किल परवादी स्वमतमाह—नहि पाकरक्ते श्यामतामतिर्यथार्था । इत्थं निवृत्तपूर्वावस्थे वस्तुनि तत्तामुल्लिखन्ती स्मृतिरयथार्थेति । अयं पुनरपरामर्शवादः । न हि स्मृतिर्निवृत्तामपि पूर्वावस्थां वर्तमानत्वेनोल्लिखति, तथा चेदिदमित्येवोल्लिखेत् । अपि तु निवृत्तत्वेनैव; अन्यथा तत्तोल्लेखाभावप्रसङ्गात् । पाकरक्ते तु श्यामताप्रत्ययो निवृत्त[स्यैव] स्यापि श्यामत्वस्य वर्तमानत्वेनोल्लिखति । अतो विषमो दृष्टान्तः । उक्तमर्थं प्रतिबन्द्योपपादयति –**तत्तेति** । तथा चेत्—वर्तमानत्वेन तत्तायाः स्मृतौ भानं चेत् । प्रत्यभिज्ञायामपि तादृगेव भानमिति तत्राप्ययाथार्थ्यप्रसङ्गः । आदिशब्देनानुवादो गृह्यते; तत्रापि यत्तच्छब्दप्रयोगभूयस्त्वात् । तर्हि पारतन्त्र्यात्स्मृतेरयाथार्थ्यं वदाम इति चेत्, तच्च नेत्याह—**याथार्थ्यमिति** । उक्तार्थानङ्गीकारे दोषमाह—**न चेदिति** । अभ्युपेतातिवृत्तिः–स्वाभ्युपेतव्याघात इत्यर्थः । न हि प्रत्यक्षपारतन्त्र्यादनुमानमयथार्थम् । नाप्यनुमानपारतन्त्र्यादागमः । नच संस्कारपारतन्त्र्यात् प्रत्यभिज्ञानम् । अन्यदप्येतादृशमुदाहर्तव्यम् । इत्थं स्मृतेर्याथार्थ्यं युक्तिभिरुपपाद्य तत्र प्रमाणमपि वक्ति—**वेद इति**। स्मृतिः "प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयमि"ति वाक्ये स्मृतिः प्रथममेव प्रमाणत्वेनोपादीयते । कथं तर्हि स्मृतेरक्षपादो न प्रामाण्यमाचष्टे तत्राह—**विफलेति** । न ह्यक्षपादः कणादः कपिल इत्यादयः प्रामाणिकत्वेन परिग्राह्याः । युक्तियुक्तं तु गृह्णीमः; न पुनस्तद्वाक्यगौरवादित्यर्थः ॥ १२५ ॥

---

**आनन्द०**—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेण –**उक्तमपीति** । **न हि पाकरक्तेति**—वर्तमानतया श्यामताधीरित्यर्थः । **इत्थमिति** । तत्तायाः वर्तमानताप्रतीतेः तत्ता हि तद्देशतत्कालवैशिष्ट्यमिति भावः । **निवृत्तत्वेनेति** । ननु निवृत्तत्वस्याऽपि पूर्वानुभवविषयत्वाभावात्कथं प्रतीतिरिति चेत् । संस्कारमाहात्म्यात् । संस्कारस्यैष महिमा यत्पूर्वानुभवविषयमपि निवृत्तं बोधयतीति । **अन्यथेति**—पूर्वावस्थायां निवृत्तिरेव तत्तेति भावः । **प्रत्यभिज्ञायामपीति** -तथा च गतं स्थैर्यवादेनेति भावः ।

ननु तत्ताभानाऽभावान्न दोष इत्यत आह—**तत्रापीति**—"य एवं विद्वान्पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" "स परमामेव काष्ठां गच्छति" स वा एष पुरुषोऽन्नरसमयः" इत्यादौ यच्छब्दतच्छब्दमात्रस्य गृहीतत्वेन स्मृतिशब्दस्य भावनाजन्यज्ञानपरत्वात् । **युक्तियुक्तन्त्विति**—युक्तियुक्तं वचो ग्राह्यं न च पुरुषगौरवादिति भावः ॥ १२५ ॥

जातः पूर्वानुभूत्या स्मृतिमुपजनयेत्क्वापि संस्कार एव
प्राग्दृष्टव्यक्तिमात्रप्रतिनियतिमती कीदृशादन्वयात्स्यात् ।
मैवं कार्ये त्वबाध्ये ननु तदनुगुणः कल्प्यते हेतुयोग-
स्तज्ज्ञानोत्पाद्यभावस्स इति न विदितः किं तदन्येन नाम्ना ॥ १२६ ॥

**सर्वार्थः**—अस्तु स्मृतिः, भवतु च यथार्था । तथाऽपि पूर्वानुभूतविषयमात्रत्वे किं नियामकमित्याशङ्क्ते—**जात** इति ।। पूर्वानुभूत्या जातस्संस्कारः क्वापि स्मृतिं जनयेदेव । अथापि सैषा स्मृतिर्दृष्टव्यक्तिमात्रविषयेति कोदृशादन्वयात्—संबन्धात् स्यादिति । अत्रोत्तरम्—**मैवमिति** । उक्तं हि बहुशः कार्ये निर्बाधेनैव प्रमाणेन स्फुटदृष्टे तदनुगुणो हेतुयोगः कल्प्यत इति । अस्माभिरवगन्तव्यो हेतुरित्यत्राह—**तज्ज्ञानोत्पाद्यभावस्स**-**इति च विदित** इति । या स्मृतिर्येन ज्ञानेनोत्पद्यते तद्विषयमेव सा गृह्णातीति नियमः । **किं तदन्येनेति**—हेतुहेतुमद्भावनाम्नि जाग्रति किमन्येन विशेषनाम्नेत्यर्थः ॥ १२६ ॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमभिप्रेत्याह—**अस्तु तर्हीति** । **स्मृतिरिति** । **पूर्वानुभूत्येति** । **संस्कारः**—स्मृतिमात्रजनकत्वेन सिद्धत्वाद्विषयविशेषनियामकाऽभावादिति भावः । **सम्बन्धादिति**—नियामकादित्यर्थः । **या स्मृतिरिति**—अननुभूतादन्यत्र स्मरणादर्शनादनुभवस्य स्मृतिकारणत्वे तन्निर्वाहकतया कल्प्यस्याऽपि संस्कारस्याऽनुभूतविषय-एव स्मृतिजनकत्वादिति भावः ॥ १२६ ॥

---

तुल्यात्तुल्यान्तरे धीः स्मृतिरियमिव गौस्सेति बोधोऽनुमानं
यत्तुल्यो यस्य चैतत्सम इति निजयोर्हस्तयोर्व्याप्तिसिद्धेः ।
चिह्नोन्नीते निमित्ते पदमपि विदितं शक्तमाप्तातिदेशे
व्युत्पत्तिलक्षणैः स्वैः क्वचिदपि न भवेदन्यथाऽतीन्द्रियेषु ॥ १२७ ॥

**सर्वार्थः**—इत्थं स्मृतेः प्रामाण्यमुपपाद्य परोक्तोपमानानां स्मृत्याद्यव्यतिरेकमाह—**तुल्यादिति** ।। अत्रैवमाहुरुपमानप्रक्रियां केचित्—तुल्यं दृष्ट्वा तत्तुल्यस्य देशान्तरस्थस्य प्रतीतिरुपमानमिति । तत्र विकल्पयामः किं स्वरूपप्रतीतिरुत सादृश्यप्रतीतिरिति । पूर्वत्र सा धीः स्मृतिरित्याह—**स्मृतिरिति** । उत्तरत्र सादृश्यप्रतिपत्तिरनुमानमित्याह—**इयमिवेति** । अनेन सदृशी मदीया गौरिति बोधोऽनुमानमेव । इयमिव—इयं गवयव्यक्तिरिवेत्यर्थः । अत्र कथं व्याप्तिग्रह इत्यत आह—**यत्तुल्य** इति । अयमत्रानुमानक्रमः—गौर्गवयसदृशः गवयस्थसादृश्यप्रतियोगित्वात्, यो यद्गतसादृश्यप्रतियोगी स तत्सदृशः, यथा वामहस्तो दक्षिणहस्तेनेति । अस्तु तर्ह्यन्यदेवोपमानलक्षणं, श्रुतातिदेशवाक्यस्य

संज्ञिनि प्रत्यक्षप्रत्यभिज्ञानमुपमानम्; संज्ञासंज्ञिसंबन्धप्रमितिरुपमितिरिति। स च सम्बन्ध एव उपमानप्रमाणावगम्यः। अतिदेशवाक्यं च त्रिप्रकारम्; गोसदृशो गवय इति साधर्म्योपमाने, गवादिवद्द्विशफो न भवत्यश्व इति वैधर्म्योपमाने, दीर्घग्रीवः प्रलम्बोष्ठः कठोर कण्टकाशी पशुः क्रमेळक इति धर्ममात्रोपमान इति। तदिदमुपमानमाप्तोपदेशान्नातिरिच्यत इत्याह—चिह्नोन्नीत इति। यथाऽयं गौरिति व्यक्तिविशेषे गोशब्दव्युत्पादनेऽपि वक्त्रभिप्रायमालोच्य न्यायानुसारात् सार्वत्रिकीं गोशब्दव्युत्पत्तिं प्रतिपद्यन्ते बालाः। नहि यावदुक्तमेव गृह्णन्ति निरूपणधुरन्धरा प्रेक्षावन्तः। एवमेवातिदेशवाक्येऽपि प्रेक्षावन्तो न्यायपर्यालोचनेन गोसादृश्यादिचिह्नोन्नीते गवयत्वादौ श्रोतारो व्युत्पद्यन्ते; अतिदेशवाक्यश्रवणकाले गवयत्वादेरप्रत्यक्षत्वात्। यदि शब्दतो व्युत्पत्तिं प्रतिक्षिपति कश्चित् पश्चादुपमानं चापेक्षते; स कथं तैस्तैर्लक्षणैरिन्द्रोपेन्द्रादिशब्दानां व्युत्पत्तिकोटिमाटीकेत? अव्युत्पन्नो वा कथं वैदिकवाक्यार्थान् प्रतिपद्येत? अप्रतिपन्नवाक्यार्थः कथंतरामनुतिष्ठेत्? अननुष्ठान कथंतमां पुरुषार्थमाप्नुयात्? इति सर्वमपि दुर्वचम्। अतस्तत्तल्लक्षणोपदेशादेव प्रजापतिपशुपतिसुरपतिप्रभृतीनां स्वरूपेषु तत्तदनुबन्धेष्वर्थान्तरेष्वपि व्युत्पत्तिरिति सर्वमवदातम्॥ १२७॥

---

आनन्द०—प्रसङ्गसङ्गतिमेवाभिप्रेत्याह—इत्थमिति।

केचित्तु प्राक्परिगणितत्रित्वसंख्यासमर्थनार्थत्वादुपोद्घातं मेनिरे। मीमांसकमतमुपन्यस्यति—अत्रैवमिति—

ननु हस्तयोः परस्परसादृश्य व्याप्तिग्रहेऽपि गोर्गवयसादृश्यं कथमनुमीयते? अन्यव्याप्तिग्रहेणाऽन्यानुमानेऽतिप्रसङ्गादित्यत्राह—अयमत्राऽनुमानक्रम इति—सामान्यव्याप्तिरभिमतेति भावः। नैयायिकाभिमतोपमानमुपन्यस्यति—अस्तु तर्ह्यन्यथैवेति।

नन्वयं गौरित्यत्र गोत्वमपि प्रत्यक्षेण प्रतिपन्नमिति प्रवृत्तिनिमित्तस्य प्रतिपन्नत्वाच्छक्तिग्रहो युज्यते। गोसदृशो गवय इत्यादौ तु गवयत्वप्रतिपत्त्यभावात्कथं—शक्तिग्रहः? प्रतिपन्नस्य सादृश्यस्याऽनिमित्तत्वान्निमित्तस्य गवयत्वस्याऽप्रतीतेरव्युत्पन्नतया गवयपदस्याऽप्यबोधकत्वात्।

न च शक्यतावच्छेदकग्रहं विना शक्तिग्रहस्सम्भवति। तदुक्तं—सादृश्यस्यानिमित्तत्वान्निमित्तस्याऽप्रतीतिः।

समयो दुर्ग्रहः पूर्वं शब्देनाऽनुमयाऽपि वेतिचेत्तत्राह—यदीति। नन्विन्द्रोपेन्द्रत्वादिकं तत्तलक्षणत्वे तच्च प्रतिपन्नमेवेति चेन्न। तेषां सामान्यविशेषत्वात्। अन्यथा देवत्वसिंहत्वादिसामान्यमपि न स्यात्। सादृश्यमेव गवयत्वादिकमस्त्विति भावः। अननुष्ठानः—अनुष्ठानहीनः।

ननु तर्हि व्युत्पत्तिग्रहः कथमित्यत्राह—अत इति—लक्षणेन संस्थानविशेषादिस्सामान्यमनुमीयते। तथा तत्—संस्थानविशेषादिमत् लक्षणविशेषवत्त्वात् यत् लक्षणविशेषवत् तत् संस्थानविशेषवत् यथा सम्प्रतिपन्नमिति। तथा च अनुमितसामान्यमवच्छेदकीकृत्य व्युत्पत्तिग्रहः। अन्यथा वाय्वादि शब्दानां व्युत्पत्तिग्रहो न स्यात् वायुत्वाद्यप्रतीतेरिति भावः॥ १२७॥

---

अर्थापत्तिः परोक्ता न पृथगनुमितेर्व्याप्तिबोधादिसाम्या-
दव्याप्यानामयुक्तिर्न हि भवति न चाव्यापकाः स्थापकाः स्युः।
जीवन् क्वापीति बोधो न गृह इति मतिं निश्चितां नोपरुन्धे
नातस्तच्छान्तये सा न यदि सममिदं सम्मते चानुमाने॥ १२८॥

सर्वार्थः—एवमुपमानस्यागमान्तर्भावमुक्त्वा तद्वदेवार्थापत्तेरनुमानान्तर्भावमाह—अर्थापत्तिरिति॥ व्याप्तिज्ञानादिसाम्यात् परोक्तार्थापत्तिर्नानुमानात् पृथग् भवति। आदिशब्दात् पक्षधर्मत्वमप्याह। जीवन् देवदत्तो बहिरस्ति, विद्यमानत्वे सति गृहे असत्त्वादिति देवदत्तनिष्ठतया हि हेतुरभिधीयते। अत्र व्याप्तिम् अनियाम्यस्य नायुक्तिरित्युक्तप्रकारेण विशदयति—अव्याप्यानामिति। जीवनवत्त्वे सति यो यत्र नास्ति स ततोऽन्यत्रास्तीति हि व्याप्तिप्रकारः तमेवानुस्मृत्यानुपपद्यमानदर्शनादुपपादकभूतार्थान्तरकल्पनमर्थापत्तिरित्यभिधीयते, अनुपपद्यमानं व्याप्यं, व्यापकमन्तरेण व्याप्यस्यानवस्थानात्। तदिदमाह—अव्याप्यानामयुक्तिर्न हि भवतीति। उपपादकाश्च नाव्यापकाः। यदप्याह—न चाव्यापकाः स्थापकाः स्युरिति। अनेन अनियाम्यस्येत्यादिश्लोके पूर्वार्धं विवृतम्। अनियाम्यस्य—अव्याप्यस्य नायुक्तिः—नानुपपद्यमानता; नानियन्तोपपादकः—नाव्यापक उपपादक इत्यर्थः। तथा च व्याप्तिरेव नामान्तरेणानुपपत्तिरित्युच्यते अर्थापत्तिवादिभिः। ननु प्रमाणद्वयविरोधपरिहारोऽर्थापत्तिकार्यं, तदर्थमर्थापत्तिरिति किमपि प्रमाणमन्वेषणीयम्। जीवनप्रमाणं तावद् देशसामान्यसंबन्धाद् गृहेऽपि देवदत्तसद्भावमावेदयति, प्रतिक्षिपति च प्रत्यक्षमिति प्रमाणद्वयविरोधः। मैवम्; द्वयोरपि प्रमाणत्वे कथं विरोधः? विरोधे वा कथं प्रामाण्यम्? तदिदमुक्तम्—न मानयोर्विरोधोऽस्तीति। तदेवाचष्टे—जीवन् क्वापीति बोधो न गृह इति मतिं निश्चितां नोपरुन्धे इति। अतः परस्परविरोधाभावाद्विरोधशान्तये असावर्थापत्तिर्नाङ्गीकरणीयेत्याह—नात इति। इत्थमनङ्गीकारे धूमानुमानेऽप्यर्थापत्तित्वं कल्पयितुं शक्यत इत्याह—न यदीति। अयमर्थः पूर्वोक्तसंवादश्लोकान्तिमपादेनोच्यते 'प्रसिद्धे चाप्यसौ समः' इति॥ १२८॥

आनन्द०—पूर्ववदेवाऽस्यापि सङ्गतिरित्याह एवमिति—अत्रेवं मतद्वयम् । पीनो देवदत्तो दिवा न भुङ्क्ते इति निश्चये भोजनसाध्यपीनत्वं भोजनं विनाऽनुपपन्नमित्यनुपपत्तिवशाद्रात्रिभोजनं कल्प्यत इत्यनुपपत्तिकरणिकाऽर्थापत्तिरित्येकं मतम् । शतवर्षजीविदेवदत्त इति ज्योतिश्शास्त्रान्निश्चिते पश्चाद् देवदत्तो गृहे नास्तीति निश्चये सति संशयो जायते । जीवनग्राहकंप्रमाणं देवदत्तसत्तां सामान्यतोऽवगमयद्गृहेऽपि सत्तामवगमयति गृहाऽभावग्राहकञ्च गृह एवाऽसत्तामवगमयतीति प्रमाणद्वयविरोधे प्रमाणद्वयेऽपि प्रामाण्यसंशयो वा देवदत्तो जीवति न वेति संशयो वा भवति । ततो बहिस्सत्वं कल्प्यत इत्यविरोधसिद्धिरिति संशयकरणिकाऽर्थापत्तिरिति द्वितीयं मतम् । प्रमाणद्वयविरोधकरणिकेत्यप्याहुः । तत्राऽद्यं मतं दूषयति—व्याप्तिज्ञानादिसाम्यादिति । अनेनाऽनियम्यस्येत्यादीति—

"अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ॥"

इत्यादिरौदयनिकश्लोकः । द्वितीयं मतं दूषयितुं शङ्कते—नन्विति विरोधेति—विरुद्धयोरन्यतरस्याऽप्रामाण्यनियमादित्यर्थः । अयं भावः । प्रमाणयोः किं क्रमेण प्रवृत्तिः ? युगपद्वा ? नाद्यः । गृहसत्ताग्राहके बाधके जाग्रति कथं तदभावनिश्चयप्रमाणप्रवृत्तिः ? यदि प्रत्यक्षस्याधिकबलत्वं तदा पूर्वं बाधित्वेव प्रवर्तत इति न विरोधेन संशयावकाशः । न द्वितीयः तुल्यबलयोः परस्परविरोधेन सत्प्रतिपक्षितत्वात्प्रमाणत्वानिश्चयान्न प्रमाणविरोधप्रशमनार्थमर्थापत्तिप्रवृत्तिः संशयश्च सत्प्रतिपक्षस्थल इव न कल्पनावकाशः । तस्मात्प्रमाणद्वयस्यापि निश्चयजनकत्वे विरोध एव नास्तीति तत्वमिति न संशयकरणिकाप्यर्थापत्तिरिति भावः ॥ १२८ ॥

---

तत्तद्भावैरभावव्यवहृतिनियतौ मानमन्यत् किमर्थं
स्मर्तव्यस्मृत्यभावात् परमनुमिमते प्रातरश्वाद्यभावम् ।
स्यादक्षाद्भावधीवद्भिमतिविषयधीरन्वयादेस्समत्वात्
भावग्राहिण्यभावं तदुचितसहकार्यागमे बोधयन्ति ॥ १२९ ॥

सर्वार्थः—मा भूदर्थापत्तिः; अभाव इति किमपि प्रमाणमन्यदेव परिगृह्यतामित्याशङ्क्य परिहरति—तत्तदिति । भावान्तराभावस्य प्रसाधितत्वात्, भावेषु च भावस्येव प्रमाणत्वात् अभावप्रमाणापेक्षा नास्तीति । यत्तु प्रातर्गजाद्यभावप्रतिपत्त्यर्थं प्रमाणान्तरमपेक्षन्ते, तदनुभाष्य परिहरति—स्मर्तव्येति । प्रातर्गजाद्यभावः स्मर्तव्यस्य स्मरणाभावादनुमीयते । इदमिहानुमानं—विप्रतिपन्नः प्रदेशः प्रातर्गजवत्तया मयाऽननुभूतः, स्मर्तव्यत्वे सति तद्वत्तया इदानीमस्मर्यमाणत्वादिति । तथा च स्मरणाभावाद-

नुभवाभावः अनुभवाभावाच्च विषयाभाव इति प्रातर्गजाद्यभावसिद्ध्यर्थं न प्रमाणान्तरमन्वेषणीयम् । अभावस्य प्रत्यक्षगम्यत्वे सर्वाविगीतमनुमानमप्याह—स्यादक्षादिति। अभावज्ञानमिन्द्रियजन्यम्, इन्द्रियान्वयव्यतिरेकानुविधायित्वादित्यनुमानम् । ननु भावग्राहिप्रमाणस्य कथमभावग्राहित्वमित्याशङ्क्य परिहरति—भावग्राहिणीति । एकस्यापि कारणस्य सहकारिभेदेन नानाकारणत्ववद् बोधकस्यापि सहकारिभेदेन नानार्थबोधकत्वं योयुज्यत इति भावः ॥ १२९ ॥

---

**आनन्द०—मा भूदिति** । वादिन एवमाहुः । अभावस्य संयोगसमवायाद्यसम्भवेनेन्द्रियसन्निकर्षाभावाद्विशेषणतायास्सन्निकर्षत्वे मानाभावादसन्निकृष्टस्य गृहेऽतिप्रसङ्गात् । लिङ्गादि प्रतिसन्धानाद्यभावेऽपि जायमानत्वादभावान्तराख्यं प्रमाणान्तरमङ्गीकरणीयम् ।

ऐन्द्रियकत्वाङ्गीकारेऽप्यनुपलब्धिरूपस्याऽभावप्रमाणस्य सहकारिताया अवश्योपेयत्वात् । तथा चत्वरं प्रति प्रातर्गतस्य देवदत्तस्य एतत्काले गजादिप्रतियोगिज्ञानाभावाद् गजाद्यभावो नानुभूतोऽपि पश्चाद् गजादिप्रश्ने सति चत्वरे प्रातर्गजो नास्तीति निश्चयो जायते । स तावन्नेन्द्रियजन्यः । सन्निकर्षाद्यभावात् । नापि लिङ्गादिजन्यः । तत्प्रतिसन्धानाद्यभावेऽपि जातत्वात् । तस्मात्प्रमाणान्तरमेषितव्यमित्यभावाख्य प्रमाणसिद्धिरिति । तत्राद्यं परिहरति—**अभावान्तरेति**—संयोगादेस्सम्भवान्न सन्निकर्षानुपपत्तिरिति भावः । द्वितीयं प्रकारं दूषयति—**यत्त्विति** ।

ननु लिङ्गाद्यसम्भवात्कथमनुमानमित्यत्राह **इदमिहानुमानमिति**—अवश्यं विद्यमानस्याऽनुभवयोग्यस्याऽनुभवाभावे तस्याभाव इति भावः ।

ननु सप्तमपदार्थपक्षे लिङ्गप्रतिसन्धानाऽभावकालेऽपि प्रतीतेः प्रमाणान्तरप्रसङ्ग इति चेत्तत्राह—**प्रत्यक्षत्वेनैवेति**—तत्र किमभावप्रतीतेरनुमित्यादिवत्प्रमित्यन्तरत्वेन भावात्प्रमाणान्तरं कल्प्यते ? उत सम्बन्धानुपपत्तेरिति विकल्पमभिप्रेत्याऽद्य आह—**प्रत्यक्षत्वेनैवेति** । द्वितीयं दूषयति—**अभावस्येति**—अन्वयव्यतिरेकाभ्यां सम्बन्धः कल्प्य इति भावः ।

ननु भावाऽभावयोरिव ग्राहकयोरपि विरोध एव । अन्यथा युगपदुभयग्रहप्रसङ्गादित्यभिप्रायेण शङ्कते **नन्विति**—एकस्यैव दण्डस्य घटतद्ध्वंसहेतुत्वदर्शनान्न दोष इत्याह—**एकस्यापीति** ॥ १२९ ॥

ऐतिह्यं वृद्धवाक्यं बहुदिवसगते यत्त्वनिर्धार्यं मूलं
मानं चेदागमस्तत्तदितरदपि च स्यात्तदाभास एव।
लक्षादिभ्यश्शतादिप्रमितिरनुमितिर्व्याप्यतादेरबाधा-
च्चेष्टालिप्यादि लिङ्गं शितमतिभिरतश्शिष्टमप्येवमूह्यम् ॥ १३० ॥

**सर्वार्थः**—एवमैतिह्यस्याप्यागमेऽन्तर्भावः प्रामाण्ये; प्रामाण्याभावे तु प्रमाणाभासत्वमित्याह—ऐतिह्यमिति । मानं चेदागमः; तदितरत्—अमानं चेदाभास—एवेत्यर्थः । तदिदमाहुः 'जगति बहु न तथ्यं नित्यमैतिह्ययुक्तं भवति तु यदि सत्यं नागमाद्भिद्यते तत्' ॥ इति । लक्षादिभ्यश्शतादिज्ञानं पुनरनुमानमेवेत्याह—लक्षादिभ्य इति । तत्र हेतुमाह—व्याप्यतादेरिति । विप्रतिपन्नं लक्षं शतवत् लक्षत्वादित्यनुमानम् । एतदप्याहुः पूर्वपठितस्यार्थस्य पूर्वार्धेन 'इह भवति शतादौ संभवाद्या सहस्रे मतिरवियुतिभावात् साऽनुमानादभिन्ना' । इति । एवं चेष्टया पुरुषाभिप्रायविशेषानुमानम्, सङ्केतविशेषयुक्तया लिप्या लिङ्गभूतया वर्णविशेषबोधनम्, अन्यच्चैतादृशं सर्वं साङ्केतिकं शितमतिभिः—बुद्धिमद्भिः अनुमानविशेषतया भाव्यम् ॥ १३० ॥

---

**आनन्द०**—पूर्वसङ्गतिमभिप्रेत्याह—एवमिति । अत्र वृद्धसम्मतिमाह—तदिदमाहुरिति । एवं चेष्टयेति ।

ननु अयुक्तं लिप्या वर्णानुमानं तत्र व्युत्पत्तिग्रहात् । ये तु चेष्टया शब्दानुमानं शङ्कन्ते गृहाभावादौ, मूकादेस्सुतरां तद्ग्रहासम्भवादर्थ एव शब्दवत्सङ्केतग्रह इति स्वत एव बोधकता स्यात् ।

न च तथाऽप्यनुमानमेव स्यात् तदन्याकारेण न प्रमापकत्वमिति वाच्यम् । तथा सति शब्दस्यापि तथात्वापत्तेरिति चेत् । उच्यते । शब्दे व्याप्त्याद्यप्रतिसन्धानेऽपि अर्थबोधो दृश्यते न च चेष्टास्थलेऽपि तथा । गौरश्वः पुरुष इत्यादिवाक्यवत्तत्तत्पदार्थस्वरूपानुबन्धिमदभिसन्धिविशेषज्ञानाभावे कर्मकर्तृत्ववर्तमानत्वाद्यप्रतीत्या घटमानयेत्यादिवद्बोधकत्वाभावेन सांशयिकत्वात् ।

अभिसन्धिविशेषानुबन्धिता ज्ञाने तु व्याप्तिप्रतिसन्धानादनुमानमेव स्यादिति न पृथक्प्रामाण्यमिति भावः । अन्यच्चेति—घण्टा शब्द संख्यादिना घटिकादिनिर्णय-इत्यर्थः । मूलं बहुदिवसगते-वस्तुनि । अनिर्धार्यं मूलं यद्वृद्धादिवाक्यं—तदैतिह्यमित्यर्थः इह वटे यक्षस्तिष्ठतीत्याद्यनिर्धारितकर्तृकप्रवादपारम्पर्यवचनमैतिह्यमित्यर्थः । लक्षादिभ्य इत्यत्रादिशब्देन सहस्रे शतं सम्भवतीत्यादिस्सम्भव इत्यर्थः ॥ १३० ॥

मानत्रित्वे तु मन्वाद्यनुमतिविषये तत्र यत्कैश्चिदाप्तै-
राधिक्यं क्वाप्यधीतं तदपि सुघटितं गोबलीवर्दनीत्या ।
उक्तार्थोदाहृतिर्वा भवतु बहुमुखी शिष्यमेधामहिम्ने
सर्वे च स्वेष्टतन्त्रेष्वनुकथनशतं निर्वहन्त्येवमूहैः ॥ १३१ ॥

**सर्वार्थ**—ननु—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

इति प्रत्यक्षादिभेदेन प्रमाणत्रित्वे मन्वादीनामभिमते कैश्चिदाप्तैराधिक्यमप्यभिधीयते; तत्कथमिति चोद्यमनुभाषते—**मानत्रित्व** इति ॥ तत्परिहरति—**तदपीति**। अधिककथनं तात्पर्यविशेषेण गोबलीवर्दन्यायेनाविरुद्धमित्यर्थः । अथवा उक्तस्य वार्थस्य शिष्यमेधामहिम्ने बहुमुखमुदाहरणं तद्भवत्वित्याह—**उक्तेति**। अयं निर्वाहः सर्वेष्वपि शास्त्रेषु पौनरुक्त्यपरिहारे साधारण इत्याचष्टे—**सर्वे चेति** ॥ १३१ ॥

---

**आनन्द०**—आक्षेपसङ्गतिमाह—**भेदेन प्रमाणत्रित्व इति** - वेदशास्त्रशब्देन शब्दप्रमाणस्याभिहितत्वात्ततो भिन्नप्रत्यक्षाद्यनन्तर्भूतस्याऽऽर्षधर्मोपदेशादेः पृथक्त्वावगमादिति—पूर्वपक्षिणो भावः ।

ननु गोबलीवर्दन्यायस्य को विषय इति चेत् । यत्र सामान्यविशेषनिर्देशः एकस्मिन्वाक्ये स विषयः । अत एव न छागपशुन्यायविषयता समानप्रकरणत्वात्तदन्यत्रैव तन्न्यायस्य प्रवृत्तेरिति । मूले प्रत्यक्षादिश्लोकः पूर्वं पठ्यते तल्लेश्वकदोषकृतं मानत्रित्वव्यवस्थापनाक्षेपपरत्वादेतस्यैव तदानन्तर्यौचित्यादित्याहुः ॥ १३१ ॥

---

प्रत्यक्षादित्रिकं यत्पृथगभिदधता भाष्यकारेण शेषं
नैव क्षिप्तं न चोपस्कृतमिह न ततः स्यात्तदाधिक्यसिद्धिः ।
रीतिः सर्वोदितानामियमिति हि तथोदासि सङ्ख्याविवादे
तेनान्वारुह्य तत्तत्समधिकगणना स्वीकृता नस्सयूथ्यैः ॥ १३२ ॥

**सर्वार्थ**—कथं तर्हि भाष्यकारैः प्रमाणत्रयमभिधाय शिष्टं प्रमाणं न प्रतिक्षिप्तम् ? तस्मादाधिक्यमिति कश्चिन्मनुते । तस्योत्तरम्—**प्रत्यक्षादीति**। न **चोपस्कृतमिहेति**—क्षेपाभाववदुपस्काराभावादाधिक्यं न सिध्यतीत्यर्थः । अत एव सगुणविषयत्वेन प्रमाणत्रयनुपन्यस्य सर्वोदितानां प्रमाणानामियमेव हि रीतिरिति भाष्यकारैरुदासि । अतोऽस्मत्सयूथ्यानामाधिक्यकथनमन्वारुह्य वादो न पुनः स्वपक्ष इति संप्रदायनिर्णयः ॥ १३२ ॥

आनन्द०—आक्षेपिकीं सङ्गतिं दर्शयति—कथं तर्हीत्यादिना । सर्वोदितानामिति—सर्ववादिभिः पृथक्त्वेन कथितानां प्रमाणानामित्यर्थः । अस्मिन् सयूथ्यानामधिकोपदेशस्तु परपक्षानुवादमात्रमित्याह—अतोऽस्मत्सयूथ्यानामिति ॥ १३२ ॥

---

मानं सर्वोपजीव्या प्रथममिह भवेदक्षजन्या मनीषा
तन्मूला चानुमा स्यात्तदुभयजनितस्त्वागमो द्विप्रकारः ।
मूलं न क्वापि बाध्यं क्वचिदधिकबलैर्मूलजातीयबाधः
स्यादेतैः कर्ममालाघटितभवघटीयन्त्रजभ्रान्तिशान्तिः ॥ १३३ ॥

सर्वार्थः—इत्थं प्रमाणत्रयं विविच्य तद्विवेकप्रयोजनमाह—मानमिति ॥ अनुमानागमयोरपि मूलत्वात् सर्वोपजीव्यं प्रत्यक्षमेव प्रथमम् । तन्मूलमनुमानं ततः । तदुभयनियतस्त्वागमः पश्चान्निश्चीयते । स चागमो द्विप्रकारः दृष्टार्थोऽदृष्टार्थश्चेति । दृष्टार्थः कारीर्यादिप्रतिपादकः; अदृष्टार्थः स्वर्गसाधनप्रतिपादकः । अथवा द्विप्रकारः—प्रवृत्तिधर्मप्रतिपादको भागो निवृत्तिधर्मप्रतिपादको भाग इति । अत्राहुर्मृषावादिनः—उपजीव्यमपि प्रत्यक्षमुपजीवकेन बाध्यते, एवमनुमानेनापि; तत्प्रतिक्षिपति—मूलं न क्वापि बाध्यमिति । स्वमूलबाधे स्वस्यैव बाधेन व्याघातादित्यर्थः । कथं तर्हि प्रत्यक्षोपजीविना ज्वालाभेदानुमानेन प्रत्यक्षोपमर्द इत्याशङ्क्याह—क्वचिदिति । अयमर्थः—अधिकबलैर्विजातीयैः प्रमाणैर्मूलजातीयस्यैव बाधः क्रियते; न पुनः स्वमूलस्यैव । न हि ज्वालाभेदानुमानं ज्वालैक्यप्रत्यक्षमुपजीवति; अपि तु वर्तितैलादिसामस्त्यप्रत्यक्षम् । इयं खलु तत्रानुमानप्रक्रिया—विप्रतिपन्ना प्रदीपसामग्री स्वानन्तरभाविप्रदीपवती, प्रदीपसामग्रीत्वात् प्रथमप्रदीपसामग्रीवत् । विप्रतिपन्नः प्रदीपसामग्रीनाशः स्वानन्तरभाविप्रदीपनाशवान् प्रदीपसामग्रीनाशत्वात् चरमप्रदीपसामग्रीनाशवदिति । तत्र यत्प्रत्यक्षमनुमानेनोपजीव्यते न तद्बाध्यते; यत्तु बाध्यते न तदुपजीव्यत इति विवेकः । अतस्तैः प्रमाणैर्निपुणं निरूपितैः कर्ममालाघटितभवघटीयन्त्रजभ्रान्तेरज्ञानस्य शान्तिरित्यर्थः । अयमत्र बाध्यबाधकभावनिर्णयः—द्वयोः प्रमाणयोर्विरोधे यत् संभाव्यमानान्यथासिद्धि तद्बाध्यम्, अनन्यथासिद्धमितरद् बाधकमिति । सावकाशत्वनिरवकाशत्वाभ्याम् अन्यथासिद्ध्यनन्यथासिद्धिविवेकः सावकाशत्वं च क्वचिदप्रमाणकोटिनिवेशात्, इदं रजतमित्यादौ । क्वचिद्विषयान्तरलाभात्, न हिंस्यात् सर्वभूतानीत्यादौ । निरवकाशत्वं तु तदुभयाभावेन सिध्यति नेदं रजतं, पशुमालभेतेत्यत्र । अप्रमाणकोटिनिवेशश्च कारणदोषाद् बाधकप्रत्ययाच्च भवति । उभयं च यत्र नास्ति तत्प्रमाणमेव । अतः प्रपञ्चग्राहिणः प्रत्यक्षस्य काचकामलादिकारणदोषाभावात् काल्पनिकबाधस्य बुद्ध्यादिकल्पितबाधेन मृषावादिपक्षस्याप्युन्मूलनहेतुत्वान्निर्दोषमेव प्रत्यक्षादिकमवतिष्ठत इति निर्मूलोऽयं मृषावादिवादः ॥ १३३ ॥

आनन्द०—तत्त्वनिर्णयार्थं प्रवृत्ते प्रबन्धे प्रमाणनिर्णयविचारोऽसङ्गत इत्याशङ्क्य तत्त्वनिर्णयोपयोगितया उपोद्घातसङ्गतिमाह—**इत्थमिति** उपजीव्योपजीवकभाव-कथनस्य प्रयोजनमाह—**अत्राहुरिति**। भेदग्राहिप्रत्यक्षमभेदबोधकागमेन बाध्यत इत्यर्थः। **एवमनुमानेनापीति**—प्रपञ्चसत्ताग्राहिप्रत्यक्षं मिथ्यात्वग्राह्यनुमानेन बाध्यत इत्यर्थः। **स्वमूलबाध इति**—तथा च स्वस्यैवाऽसत्वात्कथं बाधकत्वमित्यर्थः।

नन्वधिकबलत्वे सर्वबाधकता स्यादविशेषात् । दृष्टश्च ज्वालाभेदानुमानेन तदुपजीविज्वालैक्यप्रत्यक्षबाध इत्यत्राह—**अयमर्थ इति**। **साभस्त्यं**—सामग्री।

नन्वियं ज्वालैक्यरहिता भिन्नसामग्रोप्रभवत्वादित्यनुमाने ज्वालैक्यप्रत्यक्ष-मेवोपजोव्यमित्यत्राह—**इयं खल्विति**। **विप्रतिपन्नेति** द्वितीयादिक्षणवर्तिन्यः प्रदीप सामग्र्य इत्यर्थः। **विप्रतिपन्न इति**—क्षणनाशातिरिक्तनाशः पक्ष इत्यर्थः। प्रतिक्षणं वर्त्यवयवाग्निसंयोगस्य तन्नाशस्य च प्रत्यक्षत्वादिति भावः। **अत्रेति**—ज्वालासामग्रो-तन्नाशप्रत्यक्ष उपजीव्यः न तस्य बाधः, बाध्यन्त्वैक्यप्रत्यक्षं न तदुपजीव्यमित्यर्थः।

ननु तर्हीदं रजतमिति बुद्ध्या बाधो न स्यात् उक्तप्रयोजकाभावादिति चेन्तत्राह **अयमत्रेति**। ननु तर्हीदं रजतमित्यस्य निरवकाशत्वाद्बाधो न स्यादित्यत्राह—**सावकाश-त्वञ्चेति**।

ननु तर्हीत प्रपञ्चग्राहिप्रत्यक्षस्याप्यप्रामाणिककोटिनिवेशेन सावकाशत्वाद्बा-ध्यत्वमित्यत्राह—**अप्रामाणिककोटिनिवेशश्चेति**—अत्र किं स्वारसिको बाधः ? किं वा काल्पनिक इति विकल्पे आद्यस्याऽदर्शनात् । द्वितोयस्याऽतिप्रसञ्जकत्वमित्याह—**काल्पनिकस्येति** ।॥ १३३ ॥

---

**सर्वं संदिग्धसत्त्वं क्षणिकमगुणकं नित्यमाकस्मिकं वा**
**बुद्धिः कृत्स्ना न मानं निखिलमपि ततः स्यान्मृषा धीतरद्वा।**
**प्रख्योपाख्यादवीयः किमपि नियतिमन्नामरूपं च नेत्या-**
**द्युद्वेलापार्थजल्पानपहसितुमसौ वर्णितो मानभेदः॥ १३४॥**

**सर्वार्थ**—न केवलं मृषादिवादिवादस्यैकस्यैवोन्मूलनार्थं प्रत्यक्षादिप्रमाणत्रयपरि-शोधनम्; सर्वेषामपि दुर्वादिनामुन्मूलनायेत्याह—**सर्वमिति**॥ सर्वं सन्दिग्धसत्त्वमिति **विश्वखण्डकः**; क्षणिकमिति **वैभाषिकसौत्रान्तिकयोगाचराः**। अगुणकमित्यपि त एव; अथवा **मृषावाद्यपि**। नित्यमिति **सांख्याः** अवस्थानामप्यनागन्तुकत्वात् । आकस्मिक-मिति **चार्वाकाः**। बुद्धिः कृत्स्ना न मानमिति स एव **खण्डकः**। निखिलमपि ततः स्यान्मृषेति तद्गुरुर्**माध्यमिकः** । धीरद्वे[त्यद्वैतवादी]ति **चेतनावादी**। प्रख्योपाख्यात-दवीयः किमपीति स एव **माध्यमिकः**। प्रख्या-बुद्धिः उपाख्या-व्यवहारः । तच्छिष्य-संप्रदायपातिनोऽन्येऽपि। नियतिमन्नामरूपं च नेत्यनेकान्तवादिनः, इत्याद्युद्वेलसप्त-भङ्ग्यादिनानाजल्पानपहसितुमसो प्रमाणभेदो वर्णितः ॥ १३४॥

आनन्द०—पूर्वसङ्गतिमेव मत्वाऽह—न केवलमिति । विश्वखण्डकः—माध्यमिकैकदेशिखण्डनकार इत्यपरे । चेतनावादी—योगाचारः । अनेकान्तवादिनः—जैनाः । उद्वेलता—प्रमाणतो हीनता ॥ १३४ ॥

---

प्रज्ञाव्युत्पत्तिपाकव्यवहरणफलश्रेणिनिश्रेणिकाया-
मारूढा निष्प्रकम्पा प्रमितिगुणकरालम्बनात्सत्परीक्षा ।
मिथ्यालीकादिशापैरपि न न भवति प्राप्तविस्रम्भसौधा
तत्साह्याद्बाह्यपाटच्चरमुषितमिदं सद्धनं प्रत्यनैष्म ॥ १३५ ॥

सर्वार्थ—इत्थं प्रमाणैरर्थपरीक्षणं कृत्वा प्रकृतमर्थं निगमयति—प्रज्ञेति ॥ अत्र प्रज्ञाव्युत्पत्त्यादिर्निश्रेणिका, तस्यामारूढा परीक्षा कथं निष्प्रकम्पा ? प्रमितिगुणकरालम्बनात् । इयं परीक्षा फलप्राप्तिविस्रम्भसौधमधिरुह्य मृषावादिप्रभृतिभिरभिहितैर्मिथ्यालीकादिशापैर्न न भवति । तेषां व्यवहारः शापमात्रमेव, न युक्तियुक्तमित्यर्थः । सुरक्षितस्थलेऽवस्थिता तेषां वचनैरनर्थकैर्न न भवति । सुरक्षितपरीक्षासाह्याद्वेदबाह्यपाटच्चराहृतं तत्त्वज्ञानरूपं सद्धनं प्रत्यनैष्मेत्यर्थः ॥ १३५ ॥

॥ इति श्रीसर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे बुद्धिसरः चतुर्थः ॥ ४ ॥

---

आनन्द०—निगमनस्य पूर्वशेषत्वान्न सङ्गत्यपेक्षेत्याह—इत्थमिति । अत्र मूले पाठद्वयं दृश्यते । प्रमितिगुणकरालम्बनात् सत्परीक्षेत्येकः । प्रमितिगणकरेत्यपरः । उभयं युज्यते ।

इत्येवं वृषशैलतुङ्गमकुटीकोटीरकोटीलसत्-
पादाम्भोजयुगेन वारिधिसुतास्थानोभवद्वक्षसा ।
तुर्यस्याऽस्य सरस्य या च विवृतिस्सा लेखिता भासते
भव्यानन्तगुणेन वेङ्कटगुरोस्सर्वार्थसिद्धेरियम् ॥

वात्स्य नृसिह्मगुरुसुतेन महादेशिककटाक्षितेन नृसिह्मदेवेन विरचितायां सर्वार्थसिद्धिव्याख्यायां बुद्धिसरश्चतुर्थः ।

हरिः ओम् श्रीरस्तु



# अथ अद्रव्यसरः पञ्चमः

तत्तद्द्रव्येषु दृष्टं नियतिमदपृथक्सिद्धमद्रव्यजातं
तद्वद्विश्वं परस्य व्यवधिनियमनान्न स्वरूपेऽस्य दोषः।
इत्थं निर्धार्य भाव्ये भगवति विविधोदाहृतिव्यक्तिसिद्ध्यै
निर्बाधान् द्रव्यधर्मान्निरनुगतिगलद्दुर्नयान्निर्णयामः ॥ १ ॥

**सर्वार्थं**—इत्थं द्रव्यवर्गं विचार्य अद्रव्यं विचारयिष्यंस्तद्विचारस्य प्रधानप्रयोजनमाह—तत्तदिति ॥ तेषु तेषु द्रव्येषु दृष्टं नियतिमत्—यस्य द्रव्यस्य यदुचितं तत्तत्रैव नियतमित्यर्थः। तच्च तत्रतत्रापृथक्सिद्धमद्रव्यजातम्। तद्वदेव विश्वमपि परस्यापृथक्सिद्धम्। एवं च सति विशेषणगतानां विकारादीनां व्यवधिनियमनात्—तत्तद्द्रव्यव्यवधानेन भगवद्विशेषणत्वात् न स्वरूपे भगवतो दोषः—न विकारादिसंबन्ध इत्यर्थः। इत्थं निर्धार्य भाव्ये—ध्यातव्ये भगवति विविधोदाहरणव्यक्तिसिद्ध्यै निर्बाधान्—प्रामाणिकान् बाधकप्रमाणविधुरांश्च द्रव्यधर्मान्। निरनुगतिगलद्दुर्नयान् अनुगतिः—व्याप्तिः; निरनुगतिः—व्याप्त्यभावेन स्वयमेव गलद्दुर्नयान्निर्णयामः ॥ १ ॥

---

## आनन्ददायिनी

महागुरुरसौ मुदे भवतु तर्कशस्त्रच्छटा-
निराकृतकुदृक्जनप्रथितसर्वगर्वाहवः ।
वधूलकुलभूषणो वृषभभूधराधीशितुः
सुदर्शनमिवापरस्सकललोकरक्षाकरः ॥

करोतु कुशिकान्वयांबुधिसुधानिधिः पाविनीं।
कटाक्षलहरीं मुहुर्हरिवधूप्रियंभावुकां।
यदीयकरुणालवादपि बृहस्पतिर्जायते -
श्रियं समुपतिष्ठते कृपणजन्तुरप्यञ्जसा ॥

उपोद्घातसङ्गतिमाह—**इत्थमिति**। अथाद्रव्यनिरूपणस्यावसरसङ्गतिः । अस्य पद्यस्योपोद्घातसङ्गतिरिति केचित्।

**तत्तद्द्रव्यव्यवधानेन भगवद्विशेषणत्वादिति**—तत्तद्द्रव्यद्वारा भगवन्निष्ठत्वादित्यर्थः । तथा च निर्विकारश्श्रुतिस्साक्षात्सम्बन्धेन विकारं निषेधतीत्यर्थः॥ १ ॥

**व्याख्यातं द्रव्यषट्कं व्यतिभिदुरमथाद्रव्यचिन्ताऽस्य सत्ता**
**धीभेदादेः पुरोक्ता निजगदुरनुपादानतां तस्य लक्ष्म ।**
**द्रव्यादत्यन्तभिन्नं त्विदमनुपधिकं तद्विशिष्यात् स्वभावात्**
**दृष्टे न ह्यस्त्ययुक्तं न कथमितरथा विश्वतत्त्वापलापः ॥ २ ॥**

**सर्वार्थः**—इत्थं द्रव्यषट्के व्याख्याते तदनुबन्ध्यद्रव्यप्रमाणादिकमुच्यत इत्याह—**व्याख्यातमिति** ॥ **द्रव्यषट्कं**—चिदचिदीश्वरधर्मभूतज्ञानकालनित्यविभूतिरूपम् । **व्यतिभिदुरं**—परस्परलक्षणासङ्करेण भिन्नस्वभावम् । अथाद्रव्यचिन्ता प्रवर्तते । अस्याद्रव्यस्य सत्ता बुद्धिभेदादेः प्रागेवोक्ता । तस्य चाद्रव्यस्यानुपादानत्वं लक्षणं **निजगदुः**—अवस्थावद् द्रव्यम्, तद्व्यतिरिक्तमद्रव्यम् । आगन्तुरपृथक्सिद्धधर्मोऽवस्थेति प्रागेवोक्तम् । इदं चाद्रव्यं द्रव्यादत्यन्तभिन्नम्, न पुनः कौमारिलजैनादिवद् भिन्नाभिन्नम् । इदं चानुपधिकं समवायादिसंबन्धाभावेन स्वभावादेव तत्—द्रव्यं विशिष्यात् । यथा समवायः स्वयं संबन्धान्तराभावेऽपि स्वभावादेव तावेव संबन्धिनौ संघटयति नान्यौ, नापि स्वयंसंबद्धः । एवमेव द्रव्याद्रव्ये स्वभावादेव विशिष्टव्यवहारमातन्वाते; अपर्यनुयोज्यत्वाद्वस्तुस्वभावानाम्, **स्वभावो नाम प्रामाणिकं रूपम्** । अपृथक्सिद्धविशेषणत्वेनोपलभ्यन्ते द्रव्यं प्रत्यद्रव्याणि । अन्यथा भवताऽपि कथमवश्यमेकमपराश्रितमेवावतिष्ठत इत्यादिकमुद्घुष्यते । अयमर्थः—भवता ययोरयुतसिद्ध्या समवायः कल्प्यते तयोरयुतसिद्धिरेव सम्बन्धः, न पुनस्तत्कल्पनीयः समवायः; कल्पनागौरवात्, स्वाभाविकापृथक्सिद्धिव्यतिरेकेण समवायस्यानुपलम्भात् । अतः स्वभावादेव द्रव्याद्रव्ययोरुपश्लेषः । न हि दृष्टेऽनुपपन्नं नाम । दृष्टापलापे विश्वमपि लोलुप्येत । दृष्टमित्येव दृष्टं तावद्गृह्यते । अनुमेयमपि दृष्टसजातीयत्वेन । तत्रापि विशेषतो दृष्टं दृष्टमेव । सामान्यतोदृष्टमपि सामान्याकारेण दृष्टमेव । अतो दृष्टानुरोधित्वमनुमानस्यापि । आगमोऽपि व्युत्पत्त्यादिसमये दृष्टमपेक्षते । इत्थं साधनसमये दृष्टानतिलङ्घनमुक्तम् । एवं दूषणसमयेऽपि दूषणमप्यभिधीयमानं दृष्टानुरोधि चेद्भवत्येव दूषणम् । न चेद्दूषणमेव न भवति । **व्याघातो हि सर्वदूषणानां सीमाभूमिः** । स च दृष्टविरुद्धाभिधानेन ख्याप्यते । अतीतमस्ति, सर्वं मिथ्या, माता मे वन्ध्या, यावज्जीवमहं मौनीत्यादिषु व्याघातवचनं दृष्टविरोधोत्पादनमेव । अतो दर्शनानुरोधानङ्गीकारे सर्वापलापप्रसङ्गः ॥ २ ॥

---

**आनन्द०**—उपोद्घातसङ्गतिमाह **इत्थमिति । चिदचिदीश्वरेति ।**

यद्यपि प्रकृतिकालेति प्राक्क्रम उक्तः तथापि विवक्षाधीनः क्रम इति द्योतनाय क्रमान्तरोक्तिः । **अद्रव्यस्येति**—अद्रव्यस्य बुद्धिभेदादेस्सत्ता प्रथमसर एवोक्तेत्यर्थः । **न पुनरिति**—तथैवानुपदमेव वक्ष्यत इत्यर्थः ।

नन्वसंबद्धस्य सर्वशेषि नियतविशेषणत्वं न स्यादित्यत्राह—**यथेति** ।

ननु वस्तुनस्स्वभावो वस्त्वेव स्वभाव इति वा ? आद्येऽतिरिक्तस्स्वभावः । वस्त्वेव स्वभावः । नचातिप्रसङ्गः । यथा संबन्धाङ्गीकारेऽपि तयोरेव नान्येषामिति नियमः तथैव प्रमाणप्रतिपन्नत्वात्संबन्धासत्त्वेऽपि विशिष्टप्रत्ययादिनियामकत्वमभ्युपेत्यमिति भावः ।

ननु विषयभेदमन्तरेणापि विशिष्टबुद्धिश्चेत् गुणगुणिसमूहालम्बनाद्विशिष्टबुद्धेर्भेदो न स्यादित्यत आह—**अयमर्थ इति** ।

नन्वयुतसिद्धत्वं विशिष्टज्ञानविषय इत्यभ्युपेत्यं, स एव समवायस्स्यादित्यत-आह—**स्वाभाविकेति**—स्वरूपं वा तदतिरिक्तं वा नात्राग्रह इति भावः ।

ननु स्वरूपत्वे पूर्वोक्तदोषस्तदवस्थ इत्यत्राह—**नहीति**—अतिरिक्ताऽभावपक्षे यथा अभावभूतलयोस्संबन्धान्तराऽभावेऽपि विशिष्टप्रत्यय समूहालम्बनयोर्भेद-स्तथाऽत्रापि प्रमाणबलादभ्युपेत्य इति भावः । **विशेषतो दृष्टमिति**—पर्वतो वह्निमान् धूमादित्यादि विशेषतो व्याप्तिदर्शनमूलकं विशषतो दृष्टं दृष्टप्रायमित्यर्थः ।

**सामान्यतो दृष्टमपीति**—चत्वरादिः प्रातर्गजाद्यभाववत् तद्वत्त्वेनाऽस्मर्यमाण-त्वादित्यादि यत्तदादिघटितसामान्यव्याप्तिप्रदर्शनपूर्वकत्वात्सामान्यतो दृष्टमित्यर्थः । **दूषणमपीति**—तथा चातिरिक्तसंबन्धाऽभावे विशिष्टप्रत्ययादिर्न स्यादित्यादिदूषणं दृष्टानुरोधित्वाभावाद्धेयमेवेति भावः।

**व्याघातो हीति**—अन्ततो गत्वा गौरवादिकमपि ज्ञानस्य लघुविषयकतया गुरुविषयकत्वाऽभावसिद्धौ तद्विषयत्वापादनं व्याहतमिति व्याघाते पर्यवसित-मित्यर्थः ॥ २ ॥

---

**अद्रव्यं द्रव्यसिद्धौ तदुपहिततया तच्च लक्ष्येत तस्मा-**
**देकासिद्धौ द्वयं नेत्यपि न सदुभयान्योन्यवैशिष्ट्यदृष्टेः ।**
**आधारे द्रव्यशब्दस्तदधिकरणकेऽनाश्रये त्वन्यदित्थं**
**व्युत्पत्तिर्विभ्वहृद्या न तदपलपति स्वर्गकर्णीसुतोऽपि ॥ ३ ॥**

**सर्वार्थः**—अत्र कश्चिद्विश्वापलापवादी द्रव्याद्रव्यविभागमप्यपलपति—**अद्रव्य-मिति** । द्रव्यसिद्धावेव अद्रव्यसिद्धिः, अद्रव्यस्य द्रव्यप्रतियोगित्वेन तदसिद्धावसिद्धेः । तथा द्रव्यमप्यद्रव्यसिद्धिपूर्वकमेव । अवस्थावदद्रव्यमिति हि द्रव्यं लक्ष्यते । अवस्था चाद्रव्यमेव । तथा चान्योन्यसापेक्षत्वाद् द्रव्यमद्रव्यं च द्वयमपि न सिध्यतीति । तदेत-

दनुभाषितं सर्वापलापहेतुत्वादसदिति दूषयति—**न सदिति** । अयमभिसन्धिः—किं द्रव्याद्रव्ययोरुपलम्भानुपपत्तिरन्योन्यापेक्षयोच्यते, उत व्यवहारानुपपत्तिः ? उभयमपि नास्ति; एकस्मिन्नेव क्षणे विशेषणविशेष्ययोरेकज्ञानग्रहणयोग्ययोर्विशेषणविशेष्यभावेनोपलम्भात् । तदिदमाह—**उभयान्योन्यवैशिष्टयदृष्टेरिति** । एवं व्यवहारेऽपि नान्योन्याश्रयः । व्युत्पत्त्यायत्तो हि व्यवहारः, व्युत्पत्तिश्च द्रव्याद्रव्यशब्दयोर्विशेषणविशेष्यविषययोर्युगपदेव, उपलभ्यमानयोराधाराधेययोरनयोरनुक्रमाद् द्रव्याद्रव्यशब्दौ वाचकाविति । आधाराधेयौ च युगपदुपलभ्येते; तच्छब्दौ च युगपदेव व्युत्पद्येते । अतो द्रव्याद्रव्यशब्दयोर्व्युत्पत्तौ व्यवहारे तत्प्रतिपत्तौ च परस्परपौर्वापर्याभावान्न विरोधः । तदिदमाह—**आधार इति** । अनाश्रये—स्वयमाश्रयव्यतिरिक्त इत्यर्थः । इयमेव हि व्युत्पत्तिः पामराणामपि व्यवहारे निदानम् । बालाः खलु विशेषणविशेष्यभावेन वस्तुस्वरूपं युगपदुपलभन्ते । अनादौ च संसारे पूर्वपूर्वव्यवहारैर्युगपदेव शिक्ष्यन्ते । अन्यथा कथमिव तेषां व्यवहारनियमः प्रवृत्तिनियमो वा ? न चान्योन्याश्रयादिविभीषिकेयं लोकव्यवहारनियमं निरोद्धुं शक्नोति । एवं व्यवहारादेव व्युत्पन्नाः पश्चाद्वाक्येनापि व्युत्पाद्यन्ते । अतो लोकदृष्टेयं व्युत्पत्तिरित्याह **व्युत्पत्तिरिति** । न चात्यन्ताव्युत्पन्नाश्शास्त्रैर्व्युत्पाद्यन्ते । अपि तु लोकेनैव व्युत्पन्नाः व्युत्पत्तिविशेषपरिपूरणाय शास्त्रेष्वधिकुर्वते । अतो लोकदृष्टविशेषणविशेष्यादिविभागानुसारेण द्रव्याद्रव्यादिविभागपरिकल्पनं न्याय्यम् । अन्यथा सर्वापलापवादिनस्स्वव्याघातादिदोषोपघातेन वादित्वमेव भज्येतेति । न हि वादिनः प्रमाणप्रमेयविभागं वाच्यवाचकविभागं वा वादिप्रतिवादिविभागं वा परिहृत्य वादिनो भवन्ति; न प्रमाणनिरूपणे प्रमेयनिरूपणं प्रमेयनिरूपणे प्रमाणनिरूपणमित्यादिकं प्रलप्य वा तूष्णीमासते । अतः सर्वेऽपि भेदाः सेनावनतारामण्डलादिविभागदर्शनन्यायेन युगपदुपलभ्यन्ते; युगपच्च व्यवह्रियन्ते । केवलं वाचः क्रमवृत्तित्वाद्भावाभावाधाराधेयवाच्यवाचकादिव्यवहारेषु क्रमोपलम्भः । अभावो हि क्वचिद् भावपूर्वकोपलम्भेऽपि योग्यदशायां युगपदेवोलभ्यते । यथा घटसद्भावासद्भावविशिष्टभूतलयोर्युगपदिन्द्रियसन्निकर्षे केवलं घटाभावोल्लेखनं घटोल्लेखननान्तरीयकमित्यविनाभावात्प्रतियोगिग्रहणसध्रीची प्रतीतिः न पुनः प्रतियोगिग्रहणस्य पूर्वभावित्वनिर्बन्धः । एवं चौपाधिकसंबन्धानां विशेषणविशेष्यभाववाच्यवाचकभावादीनां निर्वाहाभावेऽप्यन्ततो दूष्यदूषणभावमपि निर्वोढुं न शक्नोति दुर्वैतण्डिकः । अतो लक्ष्यलक्षणादिखण्डनचण्डचण्डमारुतो व्याघातशेषफणिमुखसहस्रेण परिपीतो जाठरदहनेन भस्मीभवतीति सर्वमवदातम् । स्वर्गकर्णिसुतोऽपि—अत्रत्या लुण्टाकाः शून्यवादिप्रभृतयः, अतोऽपि विशिष्टो यद्यस्ति स्वर्गवासी सोऽपीति भावः ॥ ३ ॥

आनन्द०—नन्वद्रव्यसिद्धौ तन्निरूपणं तत्सिद्धिरेव नास्तीत्याक्षेपसङ्गत्याऽऽह—अत्रेति। तथा चान्योन्यसापेक्षत्वादिति—अद्रव्यत्वं द्रव्यभिन्नत्वं द्रव्यत्वमद्रव्याश्रयत्वमित्यन्योन्याश्रय इत्यर्थः।

ननु परस्पराश्रयादसिद्धावाशङ्कितायामन्योन्यवैशिष्ट्यकथनेनैव सा निराकृता स्यादित्यत्राह—अयमभिसन्धिरिति। द्रव्याद्रव्ययोस्स्वरूपानुपपत्तिर्नापादयितुं—शक्यते, द्रव्यस्य गुणाश्रयत्वेऽपि गुणस्य द्रव्याश्रयत्वाभावेन अन्योन्याश्रयाभावादित्यभिप्रायेण स्वरूपानुपपत्तिं विहाय विकल्पयति -किमिति। उभयमपि नास्तीति। प्रतिज्ञायां प्रथमं परिहरति—एकस्मिन्नेवेति। परस्परपौर्वापर्यम्—परस्परकार्यकारणभावः। आधेयत्वे सत्यनाश्रयत्वोक्तिमहिम्ना गकारे कत्वं नास्तीति गौणाधारत्वव्युदास इत्यभिप्रायेणाह—स्वयमनाधार इति।

नन्वाधार एव गुणः आधेय एव द्रव्यमिति कुतो न स्यादित्यत्राह—इयमेवेति—नात्राऽपूर्वपरिभाषा क्रियते अपित्वनादिव्यवहारसिद्धेति भावः।

ननु लोकतो व्युत्पत्तौ किं शास्त्रेणेत्यत्राह—नचात्यन्तेति। अन्यथा—लोकसिद्धव्यवस्थानङ्गीकारे।

नन्वेतावता परस्परभेदाग्रहे परस्पराश्रयः कथं परिहृतस्स्यादित्यत्राह—अत इति।

ननु प्रतियोगिग्रहणस्याऽभावग्रहहेतुत्वात्कथं युगपदेव गृह्यत इत्यत्राह—केवलं घटाभाव इति—अविनाभावादेव सह प्रतीतिः नतु तत्कारणत्वादिति भावः। औपाधिकसम्बन्धानां—इतरसापेक्षसम्बन्धानां। तथा च—"विशेषणस्य विशेष्यसापेक्षत्व"मित्यादि न्यायेन दूषणस्य सापेक्षत्वं [दूषणापेक्ष]त्वमिति परस्पराश्रयग्रस्ततया दूष्यदूषणभावोऽप्युच्छिन्न इति परपक्षो न दूषितस्स्यात्—तदाह—अत इति। स्वर्गकर्णी-माध्यमिकमात्रता। मूलमुभयान्योन्यवैशिष्ट्येति—अन्योन्यवैशिष्ट्यं-परस्परसम्बन्धः। उभयेषां विशेषणविशेष्ययोः परस्परसम्बन्ध इत्यर्थः॥ ३॥

---

सामान्यात्मा विशेषाकृतिरपि यदि न स्वीकृतो धर्मवर्गः
स्यातां न भ्रान्तिबाधौ न किमपि कथकास्साधयेयुः स्वसाध्यम्।
यस्मिन् बाधानवस्थे क्वचन न खलु तन्नीतिरन्यत्र दृष्टे
नो चेन्निश्शेषकुक्षिम्भरिरुपनिपतन् दुस्तरश्शून्यपक्षः॥ ४॥

सर्वार्थः—धर्मधर्मिभावानङ्गीकारे सकललोकव्यवहारविरोध इत्यद्रव्यवर्गस्य सर्वैर्दुरपह्नवत्वं द्रढयति—सामान्यात्मेति। यदि सामान्यात्मा विशेषाकृतिश्च न स्वीकृतो धर्मवर्गस्सामान्याभावाद्भ्रान्त्यभावः; विशेषाभावाद् बाधाभावः। तदुभयाभावे

कथका वादिनः स्वसाध्यमपि न साधयेयुः। एक एव धूमवत्त्वादिको हेतुः पक्षसपक्षयोः सामान्यम्; विपक्षाच्च विशेषः। इत्थं साधर्म्यवैधर्म्यात्मानस्सर्वे धर्माः, तानेवावलम्ब्य साध्यसाधनभावो बाध्यबाधकभावश्च प्रवर्तते। अन्यथा मौनमेव शरणं वादिनामिति भावः। ननु यथा द्वितीयसत्ताभेदादिपरिक्लृप्त्यभावेऽपि व्यवहारनिर्वाहः, एवं प्रथमसत्ताभेदादिपरित्यागेऽपि व्यवहारनिर्वाहः स्यात्; तथा च सर्वधर्मोच्छेद इति कश्चिदाह। तं प्रतिक्षिपति - यस्मिन्निति । अयमर्थः—द्वितीयसत्ताभेदादिक्लृप्तावनुपलम्भस्तावद्बाधकः, अनवस्था च। तन्नीतिरन्यत्र दृष्टे—प्रत्यक्षदृष्टे प्रथमसत्ताभेदादौ न भवति; अनुपलम्भबाधाभावात्, अनवस्थाप्रसञ्जकत्वाभावाच्च। सजातीयापेक्षायामेवानवस्था न तूपलब्धस्य प्रथमस्यापि स्वीकारे। अतः प्रथमधर्मापलापः कर्तुं न शक्यत इत्यर्थः। यस्मिन्क्वचन द्वितीयसत्तादौ बाधानवस्थे भवतः, न तन्नीतिरन्यत्र दृष्टे प्रमाणप्रतिपन्ने प्रथमसत्तादावपीति शब्दयोजना। इत्थं प्रथमस्यापि धर्मस्यानङ्गीकारेण सर्वधर्माणां सांवृतत्वकल्पने धर्म्यपलापोऽपि तेनैव सांवृतत्वेन कल्पयितुं शक्यत इति शून्यवाद एव परिशिष्येतेत्याह - नो चेदिति ॥ ४ ॥

---

आनन्द०—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्याह—धर्मधर्मीति ।

अन्यथा—साध्यसाधनभावानङ्गीकारे व्याप्तिग्रहासम्भवात्स्वरूपेण व्याप्तिग्रहेऽतिप्रसङ्गात्। सामान्यञ्च सौसादृश्यं, तच्च धर्मातिरिक्तमिति मातृकाद्वये पाठः धर्मातिरिक्तमन्यद्वेति भावः। अतिरिक्तसत्ताभेदमादाय—नन्विति ।

यद्यपि भ्रमबाधान्यथाऽनुपपत्त्या धर्माङ्गीकार उक्तः, न च द्वितीयादिसत्तानङ्गीकारे तादृशाऽनुपपत्तिरस्ति।

ननु धर्माऽभावेऽपि भ्रमबाधानुपपत्तिर्नास्त्येव । यत्र धर्मिग्रहस्तत्र भ्रमसम्भवः शुक्त्यधिकरणे शुक्त्यग्रहेण रजतस्यैवारोपो न रजतत्वादेः। विशेषदर्शनञ्च शुक्त्यादेर्दर्शनमेवेति चेन्न। सादृश्य ज्ञानात् भ्रमः तदभावे स नास्त्येवेति सर्वसिद्धम् । तथा श्यामादिरूपेण प्रतीयमानस्यैव समीपगमने विशेषज्ञानं जायते । तत्र विशेषो यदि धर्म्येव स पूर्वमेव गृहीत इति समीपे ग्रहणस्य विशेषो न स्यात्।

नचात्राऽवयवसाकल्यमेव विशेष इति वाच्यम् । तस्य गृहीतत्वादेवेति तथाविधधर्माऽभावेऽपि व्यवहारो दृष्ट इत्येतावता शङ्केति ध्येयम्।

नन्वनवस्थापरिहारार्थं क्वचिद्विश्रमे प्रथमत एव विश्रमोऽस्त्वित्युक्तौ कथमयं परिहार इत्यत्राह—अयमर्थ इति। प्रथमसत्ताभेदादौ न भवति—अत्राऽनुपलम्भबाधः

इत्यनुपपद्यते। अनुपलम्भबाधाभावादनवस्था प्रसञ्जकत्वाभावाच्चेति पञ्चम्यन्तस्य प्रथमसत्ताभेदादिसिद्धिरित्यध्याहृतेन साध्येनान्वयो द्रष्टव्यः। **सजातीयापेक्षायां**— व्याप्त्या कल्पनायामित्यर्थः अन्यत्र दृष्ट इत्येतद्बाधानवस्थयोर्विशेषणं न भवतीत्याह— **यस्मिन्नित्यादिना**।

ननु सर्वेऽपि धर्माः वस्तुतो न सन्त्येव अपि तु काल्पनिकाः। अत एव भ्रमबाधाद्युपपत्तिरित्यभिप्रायेण प्रवृत्तामाशङ्कामनुवदति—**प्रथमस्यापीति**॥ ४॥

---

**चादीनां वृत्तियोग्यं यदुत पदविदोऽसत्त्वमद्रव्यमाहु-**
**र्नैतावत्तन्मृषात्वं गमयति न च तद्बाधकं किंचिदस्ति।**
**तात्पर्यं चान्यदत्र स्फुटविदितमतस्तत्र सत्त्वेतरत्वा-**
**दन्यः कश्चिन्नत्रर्थः परमिह निपुणैर्द्योतकत्वादि चिन्त्यम्॥ ५॥**

**सर्वार्थ**—ननु सत्त्वं द्रव्यमसत्त्वमद्रव्यमिति पदविद्भिरभिहितत्वादद्रव्याणां मृषात्वमिति यदि कश्चिन्मनुते तदनूद्य प्रतिक्षिपति—**चादीनामिति**। कुत इत्यत आह—**न च तदिति**। बाध एव ह्यसत्त्वे कारणम्; न च चाद्यर्थानां समुच्चयादीनां बाधोऽस्ति। तदभावेऽपि तन्मिथ्यात्वे सर्वपदार्थानां मिथ्यात्वं स्यादिति भावः। कस्तर्हि पदविदां वाक्याभिप्राय इत्यत्राह—**तात्पर्यमिति**। किं तत्तात्पर्यमित्यत्र सामान्येन तात्पर्यार्थमाह – **अत इति**। प्रमाणबलात् सत्त्वेतरत्वादन्यत्रैव तात्पर्यमिति सामान्यतो निर्णीतमित्यर्थः। तात्पर्यविशेषं प्रकाशयति—**परमिहेति**। द्योतकत्वादि चिन्त्यम्— चादीनां द्योतकत्वमन्येषां वाचकत्वम्; यत् द्योत्यं तस्य विशेषणसंबन्धानर्हत्वम्; यद्वाच्यं तस्य विशेषणसंबन्धार्हत्वमित्यादिविभागो यथाप्रमाणं चिन्तनीयः। अतोऽसत्त्वशब्दकथनमात्राद‌द्रव्याणां मिथ्यात्वप्रसङ्गाभाव इत्यर्थः॥ ५॥

---

**आनन्द०**—ननु वैयाकरणानां "चादयोऽसत्त्वे" इति सूत्रार्थवर्णने—"सत्त्वं द्रव्यमसत्त्वमद्रव्यम्" असत्त्वे वर्तमानाश्चादयो निपाता इत्यभिदधतामद्रव्याणां शून्यत्वमेव सिद्धम्। तथा च [सर्वपरिषद्] व्याकरणविरुद्धं कथमुच्यत इत्याक्षेपेणाह— नन्विति—विशेष्य भावेनाऽन्वय जननाऽयोग्यस्वार्थोपस्थापकत्वं चादीनामसत्त्वे वर्तमानत्वमिति यावत्॥ ५॥

आहुर्द्रव्येषु धर्मान् कतिचन गुणपर्यायवैषम्यभिन्नान्
पर्यायाणां गुणत्वे स्थितवति सहजागन्तुतामात्रमेतत् ।
मिथ्याभूतान् विकारानभिदधति परे सत्यरूपान् स्वभावान्
तानेकद्व्यादिरूपानभिदधतु कथं निर्गुणानां क्षणानाम् ॥ ६ ॥

**सर्वार्थ**—अत्र क्षपणका गुणपर्यायभेदेन गुणानेव विभजन्ते; तन्न युक्तमित्याह—आहुरिति । सहजागन्तुतामात्रमेतदिति । सहजा धर्मा गुणा इत्युच्यन्ते, आगन्तवः पर्याया इति क्षपणकपरिभाषा । गुणत्वे तुल्ये किमनेन विशेषकथनेनेत्यर्थः । बौद्धास्तु केचित् सर्वानप्यवस्थाभेदान् गुणशब्दाभिधेयान्मिथ्याभूतानभिदधति । तेष्वेवापरे सत्यभूतान् स्वभावांस्तांश्चैकद्व्यादिरूपान्—रूपरसगन्धस्पर्शस्वभावा पृथिवी, रूपरसस्पर्शस्वभावं जलम्, रूपस्पर्शस्वभावं तेजः, स्पर्शस्वभावो वायुरिति। एतत्सर्वं निर्गुणानां न घटत इत्याह—अभिदधत्विति । आरोपो हि सगुणेष्वेव; तिरोहितातिरोहितस्वरूपसापेक्षत्वात् । रूपरसादीनां स्वभावमात्रत्वे धर्मधर्मिणोर्भिन्नेन्द्रियग्राह्यत्वविरोधात्, भिन्नेन्द्रियग्राह्याणां रूपरसादीनां बहूनां स्वभावानामेकवस्त्वात्मकत्वे बहुविरोधसंकलनाच्च सगुणत्वमेव न्याय्यमिति द्रव्याद्रव्यविभागोऽनतिलङ्घनीय इत्यर्थः ॥ ६ ॥

---

**आनन्द०**—प्रसङ्गसङ्गतिमभिप्रेत्याह—**अत्रेति** । **क्षपणकाः**—जैनाः निर्धर्मका इत्युक्तपक्षमाह - **बौद्धास्त्विति** । निराधाराः शब्दादय इति पक्षमाह—**तेष्वेवापर इति** । इदं सर्वं प्रथमसरे प्रपञ्चितं संग्रहेण स्मारयति—**आरोपो हि सगुणेष्वेवेति**—सामान्याकारेण ज्ञाते विशेषतो ज्ञानाऽभावे आरोप इत्यर्थः । आद्यपक्षे दूषणमाह—**रूपरसादीनामिति**—धर्मिस्वरूपत्व इत्यर्थः । द्वितीयं दूषयति—**भिन्नेन्द्रियेति**—अन्धानां धानादिविवेको न स्यादिति भावः ॥ ६ ॥

---

बाह्येऽर्थे बौद्धलोकाः किल जननजराभङ्गरूपान् विकारा-
नाद्यन्तौ चित्तचैत्तेष्वपि जगदुरमी तत्स्वरूपं न वा स्युः ।
पूर्वस्मिन्नक्रमः स्यादुपरि तु न कथं तस्य धर्मास्त एते
तन्मिथ्यात्वे तु नित्यं निखिलमपि भवेत्तुच्छमेवान्यदा स्यात् ॥ ७ ॥

**सर्वार्थः**—बाह्यार्थं इति । अत्र केचित् बौद्धाभासा बाह्यार्थेषु जननजराभङ्गरूपान् विकारानाहुः । चित्तचैत्तेषु जननभङ्गावेव द्वौ विकारौ । तत्र विकल्पनीयम्—एतद्विकारजातं वस्तुनः स्वरूपं, धर्मो वा ? तत्र पूर्वस्मिन् पक्षे जननादीनां क्रम एव न

स्यात्। न हि स्वरूपं क्रमेण भवति; स्वरूपत्वव्याघातात्। उत्तरत्र धर्मधर्मिभावं स्वयमेव वदसीत्याह—उपरीति। तर्हि जननादयो मिथ्येति चेन्नेत्याह—तन्मिथ्यात्व इति। जननादीनां मिथ्यात्वे तस्य वस्तुनो नित्यत्वमेव स्यात्; यदि वा तुच्छत्वमिति। यथाऽऽहुः—

नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः।

इति। अत्राहेतोरित्युपलक्षणम्; अजननस्येत्यर्थः, हेतोरपि जनन एवोपयोगात्। अन्यथा जननादीनां मिथ्यात्वे सत्येकदा नित्यत्वम्; अन्यदा तुच्छत्वमेवेत्यर्थः। स्यादेव वा नतु कदाचित्स्यादिति ह्याहुः॥ ७॥

---

आनन्द०—बाह्यं हि जननजरामरणादिविकारास्पदं भाति जननमरणे तु चित्ते चैत्ते चाहुः—गुरूपदिष्टार्था इति। बौद्धसारसमुच्चयोक्तपक्षमाह—अत्र केचिदिति—आभासत्वं—विकारत्रयाश्रयस्य क्षणिकत्वायोगात्सिद्धविरुद्धार्थाऽस्वीकारादिति-ध्येयम्। वाह्यार्थाः शरीरादयः। चित्तमहमर्थ आत्मा। चैत्तं घटादिज्ञानं। आलयविज्ञानं चित्तं प्रवृत्तिविज्ञानं चैत्तमिति" तदुक्तेः। स्वरूपत्वव्याघातादिति जननदशायां सिद्धस्य पुनस्तत्काले सत्वाभावे उत्तरकालं सतः क्रमो न भवति।

नचैतस्यैव तत्काले सत्वाऽसत्वात्मकत्वं सम्भवति विरोधादिति भावः। उदयनोक्ति संवादयति—यथाऽऽहुरिति।

नन्वहेतोर्नित्य सत्वाऽसत्वापादनमुक्तं तत्र नैवमिति कथं दृष्टान्त इत्यत आह—अत्राहेतोरिति। एकदा—सत्वपक्षे। अन्यदा—असत्वपक्षे।

एकदा—युगपत्। अन्यदा—क्रमेणेति केचित्॥ ७॥

---

आदावैक्येन बुद्धिर्द्वयमपि मिलितं गृह्णती व्यक्तिजात्यो-
र्भेदाभेदाविरोधं विशति यदि न तत्तद्विशिष्टैक्यबुद्धेः।
इत्थंत्वेदंत्वशून्यं न हि किमपि कदाऽप्यर्भकोऽपि प्रतीया-
त्तद्वैशिष्ट्यप्रतीतिर्निरुपधिरपृथक्सिद्धिमात्रेण सिध्येत्॥ ८॥

सर्वार्थः—एवमद्रव्यं साधयित्वा द्रव्याद्रव्ययोर्भेदाभेदवादस्याप्रामाणिकत्वमाह—आदाविति। प्रथमपिण्डग्रहणेषु भेदेनाप्रत्ययात्, मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यात्, सहोपलम्भनियमात्, एकशब्दानुविद्धप्रत्ययाच्च भेदाभेदं समर्थयन्ते। तत्र

भेदाभेदयोः किं प्रत्यक्षगम्यत्वमुतानुमानगम्यत्वमिति विकल्प्य प्रत्यक्षगम्यत्वपक्षमनुवदति, गौरयमित्यैक्येन बुद्धिरुत्पद्यमाना मिलितामेव जातिं व्यक्तिं च गृह्णती भेदाभेदयोर्विरोधमुपशमयतीति। तन्निराचष्टे—न तदिति। तत्र हेतुमाह—तद्विशिष्टेति। तद्विवृणोति—इत्थंत्वेति। इदमित्थमिति हि सर्वा प्रतीतिरुपजायते। तत्रेदमंशो धर्मी इत्थमंशो धर्मः। अर्भकेऽपीति। बालिशादपि बालिशो भवानित्यर्थः। कथं तर्ह्यत्यन्तभिन्नयोर्धर्मधर्मिणोर्वैशिष्ट्यप्रतीतिः ? समवायाङ्गीकारे चापसिद्धान्तप्रसङ्गादित्याशङ्क्याह—तदिति। तत्—तस्मात्। निरुपधिः उपाधित्वेन स्वीकृतसमवायाभावेऽपि स्वाभाविकापृथक्सिद्धिमात्रेण वैशिष्ट्यप्रतीतिः सिध्येदिति ॥ ८ ॥

---

आनन्द०—नन्वेवमप्यत्यन्तभेदो नोपपद्यते भेदाऽभेदाङ्गीकारेण सर्वव्यवस्थाप्युपपद्यत इत्याक्षेपसङ्गत्या निरूपयतीत्याह—एवमिति। प्रथमपिण्डेति। यद्यपि द्वयादिपिण्डग्रहणमपि नीलघट इत्येव न तु धर्मधर्मिणोर्भेदेन ग्रहः। तथापि अत्र नैल्यमित्यपि ग्रहणसम्भवात् प्रथमोपादानम्। मत्वर्थीयेति—यद्यप्यत्यन्तभिन्नदण्डादिष्विव रूपिरूपवानिव सापेक्ष सामानाधिकरण्यमस्ति तथापि नीलो घटः इत्यप्यस्तीत्यविरोध इति भावः। एकशब्देति—नीलो घट एकः इति प्रत्यय इत्यर्थः। ऐक्येन बुद्धिः—ऐक्यविषयिणी बुद्धिः। अन्वयमुखेन प्रतीकमुपादत्ते—तत्रेति। कथं तर्हीति। यद्यपि दण्डपुरुषयोरपि विशिष्टबुद्धिरस्ति तथापि तत्र संयोगरूपोपाधिमादाय सा प्रतीतिः। अत्र तु तादृशोपाध्यभावादत्यन्तभेदाङ्गीकारे वैशिष्ट्यबुद्धिरेव न स्यादिति भावः। उपाधित्वेनेति—समवायादि विशिष्टबुद्धिवदिति भावः ॥ ८ ॥

---

व्यक्त्या जातेरभेदं यदि वदसि पृथक्सिद्ध्यभावादिलिङ्गै-
र्भेदाभावोऽक्षबाध्यस्तव च न हि मतो नान्यथाऽत्रास्य युक्तिः।
धर्म्यैक्यादेकवाक्यान्न तु भवति ततो धर्मधर्म्यैक्यबुद्धि-
स्तद्बोधश्चाप्युपाधिर्न स इह भवता दृश्य इत्यभ्युपेते ॥ ९ ॥

सर्वार्थः—लिङ्गादपि भेदाभेदवादो न सिध्यतीति वक्तुं परोक्तानुमानान्यनुवदति—व्यक्त्येति। पृथक्सिद्ध्यभावादिलिङ्गैः—सहोपलम्भनियमादिलिङ्गैः। धर्मधर्मिणोरभेदः कालात्ययापदिष्ट इत्याह—भेदाभाव इति। तवाप्ययं दोषोऽभिमत इत्याह—तव चेति। अन्यथा सहोपलब्धिनियमयुक्तिरेव न स्यादित्याह—नान्यथेति। साहित्यं भेद एव नियतम्, अभेदगन्धमपि न सहत इति भावः। कथं तर्हि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमित्याशङ्क्य सामानाधिकरण्यलक्षणानुरोधे[न]नैव परिहरति—धर्म्यैक्यादिति। न पुनस्सामानाधिकरण्यात् धर्मधर्मिणोरैक्यबुद्धिरित्याह—न तु भवतीति। यत्र पुनरैक्यं तत्र तद्बुद्धिरेव उपाधिः। न स इह—बुद्धिरूपोपाधिर्ना-

स्तीत्यर्थः। नन्वदृश्यविषये बुद्धिमन्तरेणाप्यर्थोऽस्ति, तत्कथं बुद्धयभावादर्थाभाव इत्याशङ्क्याह—**भवता दृश्य इत्यभ्युपेत** इति। दृश्यत्वेनैव हि भवता धर्मधर्मिणावुभावपि परिगृह्येते। तथा च धर्मधर्मिणोरैक्यमपि यद्यस्ति योग्यत्वादुपलभ्येत; न चोपलभ्यते, तस्मान्नास्ति। एतेनैवैकशब्दानुविद्धप्रत्ययोऽपि निरस्तः; एको दण्डोतिवत् एकशब्दस्य विशिष्टविषयत्वादिति ॥ ९ ॥

---

आनन्द०—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—**लिङ्गावपीति**—सहोपलम्भनियमादिलिङ्गैरित्यत्रादिशब्देन मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यादिग्रहः। **धर्मधर्मिणोरिति** घटे नैल्यं घटस्य नैल्यमिति भेदप्रत्यक्षबाधित इत्यर्थः। भिन्नेन्द्रियग्राह्ययोर्भेदावश्यम्भावाद् बाधित इत्यप्याहुः।

ननु भेदाऽभेदवादिमते न बाधो विरोधाभावादिति चेत्। सत्यम्। अभेदे सिद्धे हि भेदाभेदयोर्विरोधाभावः। तत्सिद्धेः पूर्वं विरोधबुद्धेस्सत्वेनाऽयोगात्। अन्यथा क्वचिदपि बाधो न दोषस्स्यादित्याह—**साहित्यमित्यादि सामानाधिकरण्यलक्षणेति**—भिन्नप्रवृत्तिनिमित्तकानामेकार्थवृत्तित्वमिति हि लक्षणं। तत्र विशेष्यैक्यमात्रं प्रयोजकमिति भावः। **न पुनरिति**—अन्यथासिद्धत्वादिति भावः।

नन्वतीन्द्रियस्थलेऽप्यनुमानादिबुद्धिरस्त्येव। तथा च कथं साध्यव्यापकत्वमिति चेत्। बुद्धिशब्देन प्रत्यक्षबुद्धिरेव विवक्षितेति भावः ॥ ९ ।

---

**सत्त्वान्नैकान्तमाहुर्विमतमितरवत् केऽपि तद्धीविरुद्धं**
**न ह्यत्राकारभेदात् परिहृतिरनवस्थानदोषप्रसङ्गात्।**
**स्वव्यापारोक्तिचर्यासमयनियतयोऽप्येवमेवाकुलाः स्यु-**
**र्दृष्टान्तेऽपि ह्युपाधिद्वयवति नियतस्थौल्यसौक्ष्म्यादियोगः ॥ १० ॥**

**सर्वार्थः** अत्रानेकान्तवादी प्रत्यवतिष्ठते—**सत्त्वादिति**। सर्वमनेकान्तं सत्त्वात् घटाकाशमहाकाशवदिति। तत्प्रतीतिविरुद्धमित्याह—**तद्धीविरुद्धमिति**। सामान्याकारेणाभेदः व्यक्त्याकारेण भेद इति विरोधं परिहराम इत्याशङ्क्य निराकरोति—**नहीति**। कुत इत्यत आह—**अनवस्थानेति**। व्यक्तीनामभेदनिर्वाहार्थं जातिः परिगृह्यते। जातिव्यक्त्योरत्यन्तविरुद्धस्वभावयोरभेदनिर्वाहार्थं धर्मान्तरस्वीकारेऽनवस्था। अस्वीकारे विरुद्धाकारेण प्रतिभासमानयोः कथमभेदः? उक्तार्थबाधकानिष्टप्रसङ्गानाह—**स्वव्यापारेति**। सर्वत्रानेकान्तवादे व्यापारनियमो व्यवहारनियमस्सिद्धान्तनियमइत्यादयस्सर्वे नियमा व्याकुलीभवेयुः। आकाशेऽपि घटकरकाद्यवच्छेदकभेदेनैव स्थूलसूक्ष्मादिव्यवहारः। तत्रोपाधीनां भिन्नत्वमेव, उपाधिमतः पुनरभिन्नत्वमेव; केवलमुपाधिगतो भेद उपाधिमत्पर्यन्तमुपाधिद्वारेण व्यवह्रियत इति न विरोधः ॥ १० ॥

**आनन्द०**—ननु भिन्नानां व्यक्तीनामप्यभेदे धर्मधर्म्यभेदः कैमुत्यसिद्ध इत्याक्षेपसङ्गतिं दर्शयति—**अत्रेति**। अस्वीकार इति व्यक्तिषु भेदाऽभेदयोविरुद्धयोरवच्छेदकभेदेन परिहारार्थं जात्यादिरङ्गीक्रियत इति जातिव्यक्त्योरत्यन्तभेदेऽपि न दोष इति नानवस्थेति चेत् तथा सति सत्वादिति हेतोर्व्यभिचार इति भावः। **व्यापारनियमः**—अभक्ष्य भक्षण व्यावृत्तिः। गौरयं नान्य इति व्यवहारनियमः। अनुमानादिति प्रमाणाऽप्रमाणनियमः। आदिशब्देन दूषणादिनियमा गृह्यन्ते।

नन्वत्राप्यवच्छेदक भेदेन व्यवहारोऽस्त्वित्यत्राह—**तत्रेति**।

ननु मूले वृक्षः कपिसंयोगी शाखायान्नेति भेदाऽभेदौ दृष्टाविति चेन्न। तत्र संयोगतदभावातिरेकेण भेदाऽभेदयोरभावात्।

न च तद्वदेवास्त्विति वाच्यम्। तत्राप्येकप्रदेशे सत्वाऽभावादिति भावः॥ १०॥

---

**सिद्धे वस्तुन्यशेषैः स्वमतमुभयथा वर्ण्यते तत्रतत्र**
**स्यादर्थस्यैकरूप्ये कथमिदमिति चेत्तन्न भिन्नाशयोक्तेः।**
**मन्तव्या वैभवोक्तिः क्वचिदनभिमते संशयोक्तिः क्वचिद्वा**
**भाग[द्वन्द्वा]द्वैतान्नृसिंहप्रभृतिषु घटते चित्रसंस्थानयोगः॥ ११॥**

**सर्वार्थः**—कथं तर्ह्यनेकान्ताभावे सर्वैरपि वादिभिरेकस्मिन् सिद्धान्ते पक्षद्वयोपवर्णनं क्रियते? यथा स्मृतेर्याथार्थ्यमयाथार्थ्यं चेति न्यायवादिन। एवं तेषुतेषु सिद्धान्तेषु मतभेदोपवर्णनं दृष्टम्। यथा भवन्त एवान्विताभिधानमभिहितान्वयं चाभिदधत इत्याशङ्कते—**सिद्ध** इत्यादिना। परिहरति—**तन्नेति**। तत्र हेतुमाह—**भिन्नाशयोक्तेरिति**। तत्तच्छास्त्रप्रवक्तॄणामाशयभेदेन पक्षभेदोपवर्णनं न्याय्यमित्यर्थः। अस्मिन्नर्थे परिहारान्तरम्प्याह—**मन्तव्येति**। एकस्यैव वक्तुः क्वचिद्वैभवोक्तिः, क्वचित् परमार्थोक्तिरिति। तृतीयमपि परिहारमाह—**संशयोक्तिरिति**। अर्थानवधारणेन वादिभिस्संभावितकोटिद्वयोपादानमिति। अतो नानेकान्तवादप्रसङ्गः। कथं तर्हि नृसिंहादिरूपेषु विरुद्धाकार इति चेत् अंशभेदादविरोध इत्याह—**भाग[द्वन्द्व]द्वैतादिति**॥ ११॥

---

**आनन्द०**—पूर्वाक्षेपेण सङ्गतिमाह—**कथमिति**—एकस्यैव ज्ञानादेः प्रमाऽप्रमात्वरूपत्वमनेकान्तवादं विना न सम्भवतीति भावः। **तेषु तेष्विति**—अद्वैतिनां जीवैक्य बहुत्वादि। गुरुमते समवाय प्रत्यक्षत्वाऽप्रत्यक्षत्वादि द्रष्टव्यम्। एकवक्तृके किमित्यत्राह—**अस्मिन्नर्थं इति**।

ननु कुत्र वैभवोक्तिरित्यत्र नियामकं नास्त्येव अन्यथा कस्यचिदेव परिग्रहप्रसङ्गात्। तथा च कथं वैभवपरतया परिहार इत्यत्राह—**तृतीयमपीति**। **अंशभेदादिति**—तत्रापि नैकांशस्योभयरूपतेति भावः॥ ११॥

स्यादस्ति स्याच्च नास्ति द्वितयमनुभयं स्यात्त्रिभिश्चान्तिमं त्रि-
स्सैषोक्ता सप्तभङ्गी जिनसमयजडैर्द्रव्यपर्यायवर्गे।
इष्टां सार्वत्रिकीं तां स्वपरमतकथातत्फलादौ विवक्षन्
कक्षीकुर्वीत धूतः कथकपरिषदा कां दिशं कान्दिशीकः॥ १२॥

सर्वार्थः—इत्थमनेकान्तवादप्रतिक्षेपमसहमानोऽनेकान्तवादी सप्तभङ्गीं पुरस्कुरुते। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादस्ति नास्ति विलक्षणम्, अस्ति स्यादस्ति नास्ति विलक्षणं, नास्ति स्यादस्ति नास्ति विलक्षणम्, अस्ति च नास्ति स्यादस्ति नास्ति विलक्षणमिति सप्तभङ्ग्या संवलितमेव विश्वमिति। द्रव्यं हि वस्तुस्वरूपम्। पर्यायश्चागन्तुकधर्मः। द्रव्यपर्यायात्मना सदसद्रूपे च जगति सर्वमपि रूपमन्वयव्यतिरेकाभ्यां संघटत इति। तदिदमनुभाषते—स्यादस्तीति। स्यात्त्रिभिश्चान्तिमं त्रिरिति। अन्तिमम्—अनुभयं त्रिभिः—स्यादस्तीत्यादिभिस्त्रिभिः प्रत्येकमन्वितमित्यर्थः। अस्ति नास्ति विलक्षणं प्रत्येकं स्यादस्तीत्यादिभिस्त्रिभिरन्वितमिति पक्षत्रयम्। पूर्वं चत्वारः पक्षाः। अतस्सप्तभङ्गी। सैषा सप्तभङ्गी द्रव्यपर्यायवर्गेऽनेकान्तवादिभिरुक्ता। जिनसमयजडैरिति। अस्यार्थस्य उपक्षेप एव वक्तॄणां जाड्यं प्रकटयतीत्यर्थः। अत्रोत्तरमाह—इष्टामिति। अनियतार्थोपपादनस्वभावामेनां सप्तभङ्गीं विवक्षन् परस्परविरुद्धभाषणेन विद्वद्भिर्निष्कासितः शुष्कतर्कवादो कान्दिशीकः—भयद्रुतः कां दिशं कक्षीकुर्वीत—न कांचिदपि दिशं प्राप्नुयादित्यर्थः। अनियतवादिनां हि स्वपक्ष एव परपक्षः; दूषणमेव भूषणम्; विजय एव पराजयः; व्यवहार एव मौनमिति सर्वो व्याघातस्संपनीपद्येतेति भावः॥ १२॥

---

आनन्द०—आक्षेपसङ्गतिमेव दर्शयति—इत्थमिति—सत्वमसत्वं—सदसत्वं सदसद्विलक्षणत्वं सत्वे सति सदसद्विलक्षणत्वं असत्वे सति सदसद्विलक्षणत्वं सदसत्वे सति सदसद्विलक्षणत्वमिति—सप्तभङ्गीप्रकारः—स्याद्वादमञ्जर्यामुपन्यस्तः।

अनन्तवीर्योऽपि—

"तद्विधानविवक्षायां पञ्चमो भाग इष्यते
अन्त्यो वाच्यविवक्षायां षष्ठ भङ्गसमुद्भवः
समुच्चयेन मुक्तश्च सप्तमो भङ्ग इष्यते"

इति जगाद। स्यादस्ति नास्ति विलक्षणमितीति इति शब्दः—प्रकारार्थः। घटादावपि घटत्वमघटत्वं घटाघटत्वं घटाघटविलक्षणत्वं घटत्वे सति घटाघटविलक्षणत्वं अघटत्वे सति घटाघटविलक्षणत्वं, घटाघटत्वे सति घटाघटविलक्षणत्वमिति सर्वत्रापि—योज्यमित्यर्थः॥ १२॥

भेदे वस्तुस्वरूपे भ्रम इह न भवेद्धर्मपक्षेऽनवस्था
स्याद्वाऽन्योन्याश्रयादिस्तदयमनृत इत्युक्तिबाधादिदुःस्थम् ।
धर्मः क्वापि स्वरूपं क्वचिदिति च यथादृष्टि नोक्तप्रसङ्गौ
यद्दृष्ट्या यत्र यस्याध्यसनपरिहृतिस्सोऽस्य तस्मात्तु भेदः ॥ १३ ॥

**सर्वार्थः**—इत्थं भेदाभेदवादे निरस्ते भेदोऽपि तद्वदेव निरस्यतामिति वदतः परपक्षवादिनः पक्षमनुवदति—भेद इति । तन्निराकरोति—उक्तीति; अयमत्र पूर्वपक्ष-सिद्धान्तयोरनुक्रमः—किं भेदो वस्तुनः स्वरूपम् ? अथवा धर्मः ? यदि स्वरूपम्, स्वरूप-भूते भेदे गृहीते सत्यध्यासो न स्यात् । अथ न गृह्यते, तथाऽप्यध्यासो न स्यात्; धर्मि-ग्रहणमन्तरेणाध्यासाभावात् । तथा च स्वरूपभूतभेदस्य ग्रहणाग्रहणयोरध्यासाभाव-इति स्वरूपभेदवादनिरासः । किंच स्वरूपस्यैव भेदत्वे स्वरूपं भेद इति व्यवह्रियेत, न पुनर्भिन्नमिति; स्वरूपस्य प्रतियोगिनिरपेक्षत्वात्, भेदस्य तत्सापेक्षत्वाच्च । विरुद्धधर्मा-ध्यासोऽपि स्वरूपभेदवादमपाकरोति । नापि धर्मो भेदः; तस्य धर्मिप्रतियोगिभ्यामभेदे व्याघातः; धर्मधर्मिभावादेर्भेदनिष्ठत्वात् । भेदे पुनरात्मनैव भेदाङ्गीकारे तावदात्मा-श्रयः । द्वितीयभेदमङ्गीकृत्य परस्परभेदकत्वकथने परस्पराश्रयः । तृतीयादिभेदमङ्गीकृत्य परिवर्तने चक्रकम्; उत्तरोत्तरमपि धावने अनवस्था । उत्तरोत्तरभेदानां पूर्वपूर्वभेदेभ्यो भेदानङ्गीकारे द्वितीयादीनां भेदानां प्रथमभेदाव्यतिरेकाभावेन तदङ्गीकारानङ्गीकार-योरविशेष इति धर्मभेदोऽपि दुर्वचः । किंच किं धर्मिप्रतियोगिग्रहणपूर्वको भेदग्रहः, उत स्वतन्त्रः ? यदि स्वतन्त्रः; भेदग्रहणमेव तन्न स्यात्, कस्य कस्मात् भेद इति । यदि धर्मिप्रतियोगिग्रहणपूर्वकः, तत्रापि विकल्पयामः, किं धर्मिप्रतियोगिनौ परस्परविलक्षण-त्वेन गृह्यमाणौ तथा भवतः ? उताविलक्षणत्वेन ? यद्यविलक्षणत्वेन, घटाद्घटो भिन्न इत्येव स्यात् । न च तद्युक्तम् । विलक्षणत्वेन चेदन्योन्याश्रयकुक्षिनिक्षेपणेन निर्दह्यते भेदवादः; भेदे गृहीते सति धर्म्यादिग्रहणम्, तद्ग्रहणे सति भेदग्रहणमिति । अत्रोत्तरम्-उक्तिबाधादिदुःस्थमिति । अयमत्र भावः—यस्तु भेदस्स्वरूपं धर्मो वेति विकल्पयति स पुनस्तृतीयकोट्यङ्गीकारेण विकल्पयति ? किं वा तदनङ्गीकारेण विकल्पयति ? यद्यङ्गीकारेण अयावत्संभवी तावदयं विकल्पयतीति न्यूनं नाम निग्रहस्थानम् । संभवन्ति च स्वरूपधर्मव्यतिरिक्तास्सहस्रमप्यर्थाः; न हि घटस्य स्वरूपं नापि धर्मः पटकुड्यकूसू-लादयः । तृतीयकोटितयाऽपि भेदं वदन्ति भेदवादिनः; ज्ञानाभावसंबन्धानां विषयप्रति-योगिसंबन्धिभिरेव व्यावृत्तव्यवहारात्, तेषामपि भेदलक्षणलक्षितत्वस्य भवद्भिरप्यङ्गी कार्यत्वात् । यदि तृतीयकोट्यनङ्गीकारेण वैयर्थ्याद्विकल्पयति, तथाऽपि तर्काभासोऽयं प्रसङ्गः; स्वरूपं चेदेवं स्यात्; न चैवम्, तस्मान्न स्वरूपम् । धर्मश्चेदेवं स्यात्; न चैवम्, तस्मान्न धर्म इति परस्परविरुद्धयोस्तर्कयोर्विपर्यये पर्यवसानं यद्यस्ति तदा मिथो विरोधात्तर्काभासत्वम् । यदि नास्ति तथाऽपि तर्काभासत्वम्; विपर्यये पर्यवसानाभावे-नाङ्गशून्यत्वात् । उभयोरपि तृतीयकोटौ पर्यवसानमस्त्विति चेत्, अहो नुभवानात्मोक्त-मेव प्रस्मरति ! तृतीयकोट्यसद्भावेन हि भवानालपति । यदि कोट्यन्तरमस्ति,

अस्माकमपि तद्रूपेणोपतिष्ठतां भेदः। अतो न भेदतत्त्वापलापः। तथा च न विवक्षितार्थसिद्धिः। स्वरूपं चेदध्यासानुपपत्तिः स्यादिति भवतां मूलशैथिल्यम्, अनृतजडपरिच्छिन्नव्यावृत्तीनां ब्रह्मस्वरूपत्वेऽपि भवद्भिरेव प्रपञ्चाध्यासाङ्गीकारात्। व्यावृत्तीनां धर्मत्वे भवतैव धर्मभेदवादोऽङ्गीकृत इति धर्मभेदवादप्रतिक्षेपकाणां तर्काभासानामङ्गान्यतमवैकल्यं भवतैव प्रतिपादितं स्यात्। आस्तामयं तर्काभासप्रसङ्गः; प्रतिबन्धाऽपि दूषयामः। अभेदः स्वरूपं, धर्मो वा ? धर्मश्चेदनवस्था, स्वरूपातिरिक्तस्य धर्मस्याभेदत्वव्याघातश्च। आत्माश्रयान्योन्याश्रयचक्रकाश्रयाद्यभिधानमस्माभिरप्यत्राभिधातुं शक्येत। स्वरूपं चेदभेदः; अभेदो ब्रह्मेति स्यात्, न पुनरभिन्नं ब्रह्मेति। किंचाभेद [ रूपस्य नित्यस्वभावत्वेन ] स्वरूपस्य नित्यस्वप्रकाशत्वेन भेदप्रपञ्चाध्यासो न स्यात्, स्वरूपान्तरमभेद- इति चेद्भेदवादमेवोद्गिरसि। किंच स्वस्य रूपं स्वरूपमिति यदि वदसि, सोऽपि च भेद एवावसीयते। स्वमेव रूपमिति वचने स्वरूपातिरिक्ताभेदानभिधानादध्यासानुपपत्तिस्तदवस्थैव। अतो भेदवदभेदस्यापि त्वदुक्तेनैव दूषणकलापेन दुर्निरूपत्वात्स्वरूपधर्मयोर्भेदत्वानुपपत्तिरिति रिक्तं वचः। कस्तर्हि भेदः ? अनृतजडपरिच्छिन्नव्यावृत्तीनां स्वरूपत्वे स्वरूपभेदवादमङ्गीकृत्य मूकीभव; धर्मत्वे पुनर्धर्मभेदवादमङ्गीकुर्वन् निर्वैरमेव संचर। अथापि कथं भेदस्य भेदाभावे स्वरूपसिद्धिरिति चेत्, स्वस्य स्वयमेव भेदः, स्वपरनिर्वाहकत्वात्; यो हि यत्र यदध्यासविरोधी स तस्माद्भेदः। तथा च स्वाश्रये पटादावध्यासविरोधी शौक्ल्यादिधर्मं एव स्वस्मिन्नपि कार्ष्ण्याद्यध्यासविरोधित्वात्स्वस्यापि स्वयमेव भेदः। तथा च धर्मिप्रतियोगिभ्यामपि शौक्ल्यादेः स्वरूपमेव भेदः; स्वरूपस्यैव स्वात्मनि तत्तदध्यासविरोधित्वात्। यत्पुनरुक्तम्—भेदग्रहणस्य धर्मिप्रतियोगिग्रहणपूर्वकत्वात्परस्पराश्रय इति, तदपि चानिरूपकाणामाघोषणम्। घटपटौ हि गृह्यमाणौ युगपदेव घटत्वपटत्वाश्रयावेव गृह्येते। तावेव धर्मौ भेदौ, इतरेतराध्यासविरोधित्वात्। स्वस्मिन्नपि तत्तदध्यासविरोधित्वात् स्वात्मनोरपि भेदस्तावेव। अतो नान्योन्याश्रयणशङ्काऽप्यङ्कुरति। कथं तर्हि प्रतियोगिनिरपेक्षाणां धर्माणां भेदत्वमिति चेत्; इत्थम्—यदा शुक्लत्वकृष्णत्वादयः स्वरूपेण प्रतीतिविषयाः परस्पराध्यासं व्यावर्तयन्ति, तदा शुक्लत्वकृष्णत्वादय इति व्यवह्रियन्ते। कुर्वन्ति चाध्यासनिवृत्तिं तेनैव स्वरूपेण। यदा पुनरध्यासनिवर्तकत्वरूपधर्मान्तरवैशिष्ट्येन व्यवह्रियन्ते, तदा भेदा इत्युच्यन्ते। तेन तेषामेव धर्माणां [ वस्तु ] स्वरूपेण व्यवह्रियमाणानां न प्रतियोगिसापेक्षत्वम्; अध्यासनिवर्तकत्वरूपधर्मान्तरवैशिष्ट्येन व्यवह्रियमाणानां प्रतियोगिसापेक्षत्वमिति न कश्चिद्विरोधः। यथा घटे दण्डादीनां व्याप्रियमाणानां दण्डादिव्यवहारे न प्रतियोग्यपेक्षा, घटकारणत्वव्यवहारे प्रतियोग्यपेक्षेति। एतेन ग्राहकानुपपत्तिप्रलापोऽपि दूरोत्सारितः; जात्यादीनामेव भेदत्वात्, तेषां वस्तुना सह युगपदेव ग्रहणेन स्वरूपभेदयोर्ग्रहणपौर्वापर्याभावात्। अतः प्रत्यक्षमेव युगपदुभयं गृह्णाति। अतो भेदस्य न विकल्पग्राह्यत्वम्। तदिदं सर्वमभिप्रेत्याह—**धर्मः क्वापीति**। घटादीनां धर्मो भेदः स्वरूपम्। क्वचित् भेदे पुनः स्वरूपमेव भेदः। यथादृष्टि—यथादर्शनमित्यर्थः। तेन नोक्तप्रसङ्गो न

स्वरूपभेददूषणम्, नापि धर्मभेददूषणम्। उक्तस्यार्थस्योपपत्त्यर्थं भेदलक्षणमेव परिशोधयति। यस्य दृष्ट्या यत्र यदध्यासनिवृत्तिः स तस्य तस्मात् भेद इति। अतः शौक्ल्यादिरसाधारणो धर्म एव भेदः। अतस्तदतिरिक्तभेदकल्पनमल्पबुद्धीनां कल्पनागौरवहेतुत्वादनादरणीयमेवेति भावः। तदयं संक्षेपः-भेदप्रतीत्यपलापे तवापसिद्धान्तः, प्रतीत्यभावे कथं बाधार्थं प्रयतसे? तत्कारणापलापे भेदप्रतीतेः कार्यत्वमेव परिपन्थि; न ह्यकारणं कार्यमुत्पद्यते। कारणनिरूपणापलापे कार्यविशेष एव कारणविशेषं निरूपयति; तत्तत्कार्यविशेषसमुचितत्वेनैव कारणविशेषस्य प्रतीतेः। भेदप्रतीतेर्विषयापलापे भेदप्रतीतिर्निर्विषयेति व्याघातः; प्रतीतेस्सविषयत्वनियमात्। न हि निर्विषयं ज्ञानमिति जाघटीति। विपरीतज्ञानमपि सविषयमेव; अपि तु बाधितविषयमिति विशेषः। अतो भेदज्ञानस्य विषयबाधोपपादनमेव तवावशिष्यते। तत्र प्रत्यक्षेण बाधोपपादने सर्वस्यापि प्रत्यक्षस्य सविशेषविषयत्वान्न बाधकत्वम्। अनुमानं चेत्सुतरां सविशेषविषयमेव, पक्षहेतुदृष्टान्तसाध्यतज्ज्ञानादिबहुभेदसंवलितत्वात्। आगमोऽपि पदपदार्थवाक्यवाक्यार्थादिभेदगर्भ। एवं तर्कोऽपि व्याप्त्याङ्गीकारे व्यापकानिष्टप्रसञ्जनम्, व्याप्यव्यापकभावश्च भेदात्मक एव, अङ्गपञ्चकोपेतत्वाच्च। अतो भेदखण्डनप्रसङ्ग एव भेदमुपपादयति। एतेन प्रत्यक्षं धर्मिग्राहि? उत भेदग्राहि? उतोभयग्राहि? स्वरूपग्राहित्वेऽस्मत्पक्ष एव। भेदग्राहित्वे धर्मिप्रतियोगिसापेक्षस्य भेदग्रहणस्य तद्ग्रहणमन्तरेण ग्रहणं न स्यात्। उभयग्राहित्वेऽपि युगपदुभयग्राहि वा क्रमेण वा? युगपद्ग्रहणं न संभवति; सापेक्षनिरपेक्षयोर्यौगपद्यायोगात्। क्रमेणोभयग्राहित्वेऽपि भेदपूर्वकं धर्मिग्रहणं न संभवति; सापेक्षस्य पूर्वंभावित्वायोगात्। धर्मिग्रहणस्य पूर्वंभावित्वे तस्मिन्नेव क्षणे प्रत्यक्षस्य नष्टत्वात् न तद्भेदग्राहकम्। न च प्रत्यक्षान्तरं भेदग्राहकम्, परस्परवार्तानभिज्ञत्वात्। अतो भ्रान्तिरेवाप्रत्यक्षं चापि भेदं गृह्णातीति दत्तोत्तरम्॥ १३॥

---

**आनन्द०**—प्रतिबन्द्युत्थापनेन सङ्गतिमाह—**इत्थमिति।**

ननु घटः पटो न भवतीत्यादिभिर्भेदस्वरूपं प्रत्यक्षसिद्धम्। तच्च धर्मिस्वरूपमेव। नचाध्यासानुपपत्तिः। प्रत्यक्षसिद्धे कथन्तानुदयात्। अत एव पूर्वपक्षस्य मान्द्यात्सिद्धान्तोऽप्ययुक्त इत्यत्राह—**अयमत्रेतिस्वरूपभूते भेदे गृहीत इति**—ग्राह्याभावज्ञानस्य विरोधित्वादित्यर्थः। **भिन्नं**—भेदवत्। **विरुद्धधर्माध्यासोऽपीति**—अनेकान्तवादस्य निरस्तत्वादिति भावः। व्याघातमेवाह—**धर्मधर्मिभावादेरिति**—आदिशब्देन प्रतियोग्यनुयोगिभावग्रहः। **द्वितीयभेदेति**—धर्मिप्रतियोगिभ्यां भेदस्य कस्यचिद्भेदः। एतस्य धर्मिप्रतियोगिभ्यां भेदः पूर्वं—चेत् पूर्वभेदसिद्धौ द्वितीतभेदसिद्धिः द्वितीयभेदसिद्धौ पूर्वभेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः। **तृतीयादीति**—धर्मिप्रतियोगिभ्यां प्रथमभेदे सिद्धे द्वितीयभेदः, द्वितीयभेदश्च तृतीयभेदसिद्ध्या, तृतीयस्तु प्रथमसिद्ध्येति चक्रकम्। एवञ्चतुर्थाद्यङ्गीकारेऽपीति ध्येयम्।

किञ्चानन्तरोक्तभेदानां प्रथमादिभेदभेदापेक्षं त्वया भेदोऽङ्गीक्रियते नवा ? आद्येऽपि स भेदस्स्वयमेवाऽन्यो वेत्यादि विकल्पे—आत्माश्रयादिः । उत्तरत्र सर्वभेदानामपि प्रथमभेदाभिन्नत्वादात्माश्रयदोषानतिवृत्तिरित्याह—**उत्तरोत्तरभेदानामिति**—धर्मभेदानामपीत्यर्थः । **धर्मभेदोऽपि**—धर्मभेदपक्षोऽपीत्यर्थः । किञ्च ग्रहणासम्भवादपि भेदो नोपपद्यत इत्याह—**किञ्चेति** । **स्वतन्त्रः**—धर्मिप्रतियोगिनौ विना भेदमात्रग्रह इत्यर्थः । **कस्य कस्मादिति**—इदमस्माद्भिन्नमिति हि सर्वो भेदग्रहो दृश्यते न तु स्वरूपेण तथा ग्रहे स भेद एव न भवेदिति भावः । **तथाभवतः**—अभावज्ञानेन गृहीतौ भवत इत्यर्थः । **न च तद्युक्तमिति** ।

नन्वुक्तिबाधः कथं ? उक्तरीत्या स्वरूपं धर्मो वेति विकल्पे बाधकाभावात् । उक्तिबाधादीत्यादिशब्दार्थविवक्षितव्याघातादेरप्यभावादित्यत आह—**अयमत्र भाव-इति** । **तृतीयकोटिः**—धर्मधर्मिव्यतिरिक्तकोटिः । **तेषामपीति** । अनृतजडादि—व्यावृत्तेः स्वरूपतो विशेषाऽभावेऽपि प्रतियोगिवशेन विशेषान्न वैयर्थ्यादिरित्यभिधानात् । चैतन्यस्यैकत्वेऽपि —तत्तद्विषयभेदाद्भेदव्यवहाराच्च विषयादिना स्वरूपधर्मव्यतिरिक्तानामपि भेदत्वमिति भावः । **मिथो विरोधादिति**—स्वरूपधर्मव्यतिरेकेण कोट्यन्तराभावात्स्वरूपत्वाऽभावे धर्मत्वे पर्यवसानं धर्मत्वाऽभावे स्वरूपत्व इति परस्परप्रतिहत्या तर्काऽप्रतिहतिरूपाङ्गहानेराभासत्वमित्यर्थः । **स्वरूपञ्चेदिति** । मूलभूतव्याप्तिशैथिल्यमुपपादयति—**अनृतेत्यादिना** । **अङ्गान्यतम वैकल्यमिति**—अङ्गेषु मध्ये अन्यतम वैकल्यमित्यर्थः । तेन न समासानुपपत्तिः । अन्यतमाङ्गवैकल्यमिति पाठ इति केचिदूचुः । **स्वरूपातिरिक्तस्येति**—तस्य भेदरूपत्वादिति भावः । **आत्माश्रयेत्यादि**—धर्मोऽपि स्वस्मादभिन्नो ? नवा ? आद्ये स्वभेदः । स्वयमेवाऽन्यो वेति विकल्पे आद्यपक्षे आत्माश्रयः । अन्यश्चेत्तस्याऽप्यभेदः । स्वयञ्चेत्परस्पराश्रयः । अन्योन्यस्वीकारे चक्रकाऽनवस्थाप्रसङ्ग इत्यर्थः ।

नन्वभेदः स्वरूपातिरिक्त एव । न च तस्याऽप्यभेदस्वीकारे दोषस्स्यात् । नचाऽभेदः स्वीक्रियते, येनात्माश्रयादि दोषस्स्यादिति चेन्न । तस्याऽभेदस्याऽभेदात्मकत्वाऽभावे भेदरूपतया तत्स्वीकारो भेदस्वीकार एव स्यात् । किञ्च तस्य सत्यत्वाऽसत्यत्वयोरद्वैतहानिरिति. भावः । **स्वरूपान्तरं**—ब्रह्मस्वरूपापेक्षया भिन्नमित्यर्थः । **भेदवादं**—स्वरूपादभेदो भिन्न इति भेदपक्षमित्यर्थः भेददूषणस्याऽतिरिक्तत्वमाह—**अत इति** । दुर्निरूपत्वप्रसङ्गादित्यर्थः ।

ननु घटादौ सम्भेदो न दृष्ट इत्याह—**यो हीति** यद्यप्यत्र यद्रूपेण प्रतीयमानं यदभेदाध्यासविरोधि स तस्य तस्माद्भेद इत्यर्थः । यत्प्रतीयमानत्वमात्रमध्यासविरोधीति विवक्षितं ? उत प्रत्यक्षेण प्रतीयमानं ? नाद्यः । शौक्ल्यादेः शब्दात्प्रतीयमानस्यापि पीताध्यासविरोधित्वाऽभावात् । न द्वितीयः । परोक्षस्थलेऽव्याप्तेः । नापि तज्जातीयत्वादिविवक्षया परिहारः । व्यावृत्ततादृशधर्माऽभावात् । भावे वा तस्यैव भेदत्व-

सम्भवात् । उच्यते । न तादृशभेदलक्षणमभिधीयते । येनाऽव्याप्त्यादिदोषस्स्यात् । अपि तु भेदव्याप्तौ धर्मः कथित इति न दोषः ।

अन्ये तु ज्ञानमात्रमेव विवक्षितं । न चासम्भवः । अतिरिक्त भेदपक्षेऽपि तद्ज्ञानेऽप्यध्यासदर्शनादनौपाधिकाऽध्यासविरोधित्वस्य विवक्षितत्वान्नाव्याप्ति— रित्याहुः ।

**स्वात्मनि तत्तदध्यासविरोधित्वादिति**—धर्मिप्रतियोग्यध्यासविरोधित्वा- दित्यर्थः । **आघोषणम्**—ईषद्घोषः रहस्युपदेश इति यावत् । भेदस्वरूपग्रहणे प्रति- योग्यादिग्रहणापेक्षा नास्तीति परिहरति—**घटपटाविति** । **कथन्तर्हि प्रतियोगीति**— प्रतियोगिग्रहणनिरपेक्षग्रहणविषयाणामित्यर्थः । **अध्यासनिवर्तकेति**—योऽध्यासनिवर्तक- ज्ञानविषयतावच्छेदको धर्मस्तद्वैशिष्ट्येनेत्यर्थः ।

ननु स धर्मो धर्मभेदोऽस्त्विति चेत् । **तदज्ञानाऽभावेऽपि**—स्वज्ञानाच्छौक्ल्याद्य- ध्यासनिवृत्तेरिति भावः ।

**न विकल्पग्राह्यत्वमिति**—भ्रान्तिग्राह्यत्वन्नेत्यर्थः । भेदस्य - परपक्षे भ्रान्ति- ग्राह्यत्वात् ।

ननु धर्मस्य वा स्वरूपस्य [वा] अभावे भेदत्वं नोपपद्यते । यदि भूतले घटा- पेक्षया भेदः तदाऽत्यन्ताऽभावेऽपि तथा स्यादिति भूतलत्वस्य घटत्वसामानाधिकरण्यं न स्यात् । नापि स्वरूपं शौक्ल्याद्याश्रयत्वं न स्यादित्यादि बहुविप्लवसम्भवाद्भेदो दुर्वच- इत्याह—**तदयं संक्षेप इति**—किं भेदप्रतीतेरपलापः क्रियते ? अहोस्वित्कारणस्य ? उताऽहो कारणनिरूपणस्य ? यद्वा प्रतीतिविषयस्य ? अथवा तद्विषयपारमार्थ्यस्येति विकल्पं मनसि कृत्वा आद्य आह—**भेदप्रतीतेरिति**—अनृतादि व्यावृत्तिबुद्धिस्वीकारा- दिति भावः । स्वक्रियाव्याघातमेवाह—**प्रतीत्यभावेति**—बाधो दूषणाभिधानं । द्वितीय- आह—**तत्कारणेति** । तृतीय आह—**कारणेति** । चतुर्थं दूषयति—**भेदप्रतीतेरिति** । पञ्चममपि दूषयति—**अत इत्यादिना** । किं प्रत्यक्षेण विषयबाधः ? उताऽनुमानेन ? यद्वा आगमेन ? अथवा तर्केणेति ? विकल्पमभिप्रेत्य दूषयति—**तत्र प्रत्यक्षेणेति**— बाधकस्याऽपि विशेषविषयस्य प्रत्यक्षस्य बाधितविषयकतया बाधकत्वायोगादिति भावः । द्वितीयमपि दूषयति—**अनुमानञ्चेदिति**—तृतीय आह **आगमोऽपीति** । चतुर्थं दूषयति—**तर्कोऽपीति** । नन्वङ्गपंचकं वस्तुतो भेदसंवलितं भवतु तथाऽपि तर्कविषय- त्वाऽभावात्कथं तदादाय तर्कस्य बाधितविषयत्वमिति चेदुच्यते । वस्तुतोऽङ्गपञ्चक- घटकभेदाऽभावेऽङ्गपञ्चकाऽभावात्तर्कस्य बाधकत्वमिति भावः । **धर्मिग्राहीति** - धर्मीत्यत्र धर्मधर्म्युभयस्वरूपं विवक्षितम् । तथा च तयोरेकैकमात्रग्राहीत्यर्थः ।

केचित्तु किं धर्मिग्राहि ? किं वा भेदग्राहि ? उतोभय ग्राहीत्येवं पाठमाहुः ।

**दत्तोत्तरमिति**—प्रथमप्रत्यक्षानन्तरं भेदप्रत्यक्षस्यैव धर्मिगाहकत्वे विरोधाऽ- भावात् युगपद्ग्रहे एकस्योत्तरत्वाच्चेत्यर्थः । अन्यत्सर्वं—भेदधिक्कारत्यक्कारेऽनु- सन्धेयम् ॥ १३ ॥

भेदो गृह्येत बुद्ध्वाऽधिकरणमवधिं चेति न ह्यक्रमोऽस्मिन्
प्रत्यक्षस्य क्रमोऽपि क्षणभिदुरतया नेति तुल्यं भ्रमेऽपि।
अक्षान्ध्यादिव्यवस्थाक्षतिरपि युगपद्योग्यधर्मैर्ग्रहोऽत-
स्तद्युक्ते भिन्नशब्दः कथिततदुपधिज्ञप्त्यपेक्षः क्रमात्स्यात् ॥ १४ ॥

**सर्वार्थः**—भेदग्रहणे पूर्वोक्तां ग्राहकानुपपत्तिं प्रतिबन्द्या दूषयति—भेद इति। धर्मिभेदयोस्सापेक्षत्वनिरपेक्षत्वाभ्यां युगपद्ग्रहणमनुपपन्नम्; प्रत्यक्षज्ञानस्य क्षणिकत्वात्। क्रमग्रहणं च न जाघटीति; परस्परवार्तानभिज्ञत्वात्। प्रत्यक्षान्तरेण ग्रहणमपि न स्यादिति ह्युक्तम्। एतत्काल्पनिकभेदपक्षेऽपि तुल्यम्; कल्पनायामप्यधिकरणप्रतियोगि-सापेक्षत्वस्यावश्यंभावित्वात्, धर्मिज्ञानक्षणिकत्वस्य तुल्यत्वात्, कल्पनारूपभेदग्रहणेऽपि परस्परवार्तानभिज्ञत्वस्यानिवारणात्। न हि कल्पनाऽपि धर्मिप्रतियोगिनावन्तरेण भेदं गृह्णाति। नापि धर्मिज्ञानवार्तामभिजानाति; तस्य तस्मात् भिन्नत्वात्। अतः काल्प-निकभेदज्ञानस्य संघटने पारमार्थिकमपि भेदज्ञानं तेनैव न्यायेन संघटेत। तस्यासंघटने काल्पनिकमपि भेदज्ञानं न संघटेतेति **वीवधघटन्यायः**। तर्हि काल्पनिकमपि भेदज्ञानं मा भूदिति चेत्, तर्हि लोकव्यवहारोच्छेदप्रसङ्गः, कृत्स्नवेदान्तानारम्भप्रसङ्गश्च। भेदप्रतिभासनिरासायैव हि सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे। तदिदमाह—तुल्यं भ्रमेऽपीति। किंच भेदस्य प्रत्यक्षत्वाभावे सतीन्द्रियव्यवस्था न स्यात्। रूपादिग्रहण-मिन्द्रियकृत्यम्; विषयभेदव्यवस्थयैव हि चक्षुरादिव्यवस्थामाहुः। एवमन्धादिव्यव-स्थाऽपि न स्यात्। तत्तद्विषयभेदग्राहकेन्द्रियभेदविनाशादेव ह्यन्धादिव्यवस्था। तदिद-माह—**अक्षान्ध्यादीति**। अतो युगपदेव तत्तद्विशेषणभेदविशिष्टवस्तुग्रहणमिन्द्रिय-कृत्यम्। ते च विशिष्टा युगपदेव सन्निधाने युगपदेव गृह्यन्ते, यथा सेनावनतारामण्ड-लादिज्ञान इत्युक्तम्। तथा च परस्परासंकीर्णनानाधर्मविशिष्टाः पदार्था युगपदेव गृह्यन्ते। घटः पटः शुक्लं कृष्णं चलं निश्चलमित्यादि। तत्र घटत्वपटत्वशुक्लत्वकृष्ण-त्वादयः स्वरूपेणं गृह्यमाणः परस्पराध्यासं व्यावर्तयन्ति। तच्च व्यावर्तनं तत्तद्धर्म-स्वरूपग्रहणकृत्यम्। तेनैव कृत्येन विशेष्यमाणास्त एव धर्माः प्रतियोग्यपेक्षया भेदा इति व्यवह्रियन्त इति प्रागुक्तमेवार्थं प्रतिपत्तॄणां बुद्धिसौकर्याय प्रकटयति-तद्युक्त-इति। भेदव्यवहारेऽपि युगपद्व्यवहारे न पौर्वापर्यापेक्षा; यथा पञ्चाप्यङ्गुलयः परस्परं भिन्ना इति। यत्र पुनः क्रमव्यवहारस्तत्र वाचः क्रमवृत्तित्वादस्तु वाङ्मात्रे पौर्वापर्यम्, अङ्गुष्ठात् कनिष्ठा भिन्नेति। अत्रापि प्रतिपत्तिपौर्वापर्यं न निर्बघ्नीमः। अतो न भेद-प्रत्यक्षत्वानुपपत्तिः ॥ १४ ॥

---

**आनन्द०**—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—भेदग्रहण इति। कल्पना-रूपेति। यद्यपि पूर्वज्ञानं धर्मिमात्रविषयकमिति द्वितीयज्ञानविषयभेदविषयकत्वाऽ-भावात्तद्वार्तां न जानाति तथापि द्वितीयन्तु ज्ञानं धर्मिणा सह भेदं गृह्णातीति पूर्व-

वार्ताभिज्ञत्वात्कथं परस्परवार्ताऽनभिज्ञतेति चेत्। न। तर्हि पारमार्थिकभेदपक्ष एव स्वीक्रियतां किं भेदकल्पनयेति भावः। **वीवधघटन्याय इति**—वीवो जलाहरणाय यन्त्रविशेषः। [वेत्रविशेषः] तत्र घटद्वयं तेन नीयते। तत्र एकस्य घटस्य पतने अपरोऽपि पतेतेति न्याय इत्यर्थः। **भेदप्रतिभासेति**—अन्यथा वैयर्थ्यादिति भावः।

ननु रूपादिप्रत्यक्षेणेन्द्रियव्यवस्था स्यादित्यत्राह—**किञ्चेति** रूपरसादेः परस्परं भेदनिश्चयाऽभावे रूपस्य ग्राहकं चक्षुः रसस्य ग्राहकं रसनमित्यादिव्यवस्था न स्यात्। रूपस्य रसभेदाऽज्ञाने रसग्राहकस्यैव रूपग्राहकत्वबोधादिति भावः। **परस्पराऽसङ्कीर्णाः**—परस्परभिन्नाः।

ननु परस्परं भेदग्रहो युगपदनुपपन्नः। युगपदग्रहणे घटः पटाद्भिन्न इति क्रम व्यवहाराऽनुपपत्तेरित्याह—**भेदव्यवहारेऽपीति**—व्यवहारक्रमे न बुद्धिक्रमो नियामक—इति भावः। क्रमव्यवहारे किं निमित्तमित्यत्राह—**यत्र पुनरिति**—युगपज्ज्ञानेऽपि युगपदभिधानाऽसम्भवाच्छब्दनिबन्धनस्सर्वव्यवहार इत्यर्थः। तदाह—**वाचः क्रमवृत्तित्वादिति**—क्रमेणोच्चार्यत्वादित्यर्थः।

**मूलं-अवधिं**—प्रतियोगिनं। **अस्मिन्**—भेदग्रहे। **नह्यक्रमः** नूतनक्रमः अपूर्वसृष्टिरित्यर्थः। **क्षणभिदुरतया**—क्षणध्वंसितया। प्रत्यक्षस्याऽधिकरणं गृहीत्वाऽभावं गृह्णातीति क्रमोऽपि न सम्भवतीत्यर्थः। **कथित तदुपधिज्ञप्त्यपेक्षः**—उक्तप्रतियोगिज्ञानापेक्षः॥ १४॥

---

**अद्रव्ये नैकरूपे ह्यगणिषत गुणाः सत्त्वमुख्या द्विधाऽऽद्यं**
**शुद्धं तन्नित्यभूतौ त्रितयमिह चतुर्विंशतौ व्याप्नितः स्यात्।**
**पञ्चान्ये शब्दपूर्वा अपि परिगणिता भूतवर्गेष्वथान्यः**
**संख्यानादिश्च भेदः परिणमति यथासंभवं द्रव्यवर्गे॥ १५॥**

**सर्वार्थः**—एवं भेदतत्त्वं प्रसाध्य प्रामाणिकत्वेनाभिमतान् गुणभेदान् यथाप्रमाणं विभज्य दर्शयति—**अद्रव्य** इति। तस्मिन्नद्रव्यवर्गे सत्त्वं रजस्तम इति प्रधानभूता गुणाः। सत्त्वं च द्विविधम्—शुद्धसत्त्वं मिश्रसत्त्वं चेति। शुद्धसत्त्वं नित्यविभूतौ। तदिदमाह—**शुद्धं तन्नित्यभूताविति त्रितयमिति।** मिश्रसत्त्वं रजस्तमसी चेति त्रितयम्। इदं चतुर्विंशतितत्त्वे सर्वत्रापि स्यादित्याह—**व्याप्नितः स्यादिति**। एवं शब्दादयः पञ्च गुणाः आकाशादिपञ्चभूतेषु उत्तरोत्तरमाधिक्येन दृश्यन्त इत्याह—**पञ्चेति**। संख्यादिरन्यो गुणवर्गो यथाप्रमाणमुपलभ्यमानो न्यूनाधिकभावेन तत्रतत्रावतिष्ठत इति दर्शयति—**अथान्य इति। यथासंभवमिति।** प्रमाणगतिरेव पदार्थपरिकल्पनायां शरणं न पुनः वैशेषिकादीनां सांकेतिकसंव्यवहार इत्यर्थः॥ १५॥

आनन्द० -अवसरसङ्गतिं दर्शयति—एवमिति। आदिशब्देन शक्ति—संख्या-परिमाणादिग्रहः ।

यद्यपि न्यायसिद्धाञ्जनादौ सत्वरजस्तमांसि शब्दादयः पञ्च शक्तिसंयोगोऽपीति परिगणनमस्ति। तथाऽपि स्फुटगुणाभिप्रायकत्वात्तथा परिगणनस्येति न दोषः। अत-एव "सूक्ष्माऽद्रव्यभेदा बहवस्सन्ति—तथाऽपि स्फुटपरिगणनं क्रियत" इति तत्रैवोक्तम्। न्यूनाधिकभावेन—व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वेन । आदिशब्देन मीमांसकव्यवहार-ग्रहः ॥ १५ ॥

---

स्थित्युत्पत्त्यन्तलीलाविधिषु भगवताऽधिष्ठिताः शास्त्रवेद्याः
सत्त्वाद्याः स्थूलसूक्ष्मप्रकृतिगतगुणा हेतुभूतास्सुखादेः।
साम्ये तेषां त्रयाणां सदृशपरिणतिः स्यादिहान्यात्यथात्वे
क्लृप्ताऽन्यैर्द्रव्यतैषां श्रुतिपथविहता कुत्रचित्तूपचारः ॥ १६ ॥

सर्वार्थं—स्थितीति। पूर्वोक्तानां सत्त्वरजस्तमसां स्थित्युत्पत्तिलयेषु विशेषेण भगवताऽधिष्ठितत्वं तेषुतेषु शास्त्रेषूच्यते। ते च स्थूलसूक्ष्मप्रकृतिगतास्सुखदुःखमोहानां हेतवो भवन्तीति च शास्त्रसिद्धम्। तेषां च साम्ये प्रलयावस्थायां सदृशपरिणतिः, वैषम्ये सृष्ट्यवस्थायां विसदृशपरिणतिश्च शास्त्रैकसमधिगम्या। अन्या—विसदृश-परिणतिः। अन्यथात्वे—वैषम्ये। सांख्याः पुनरेषां द्रव्याभेदेन द्रव्यत्वमाहुः। तत् गुणत्वप्रतिपादकश्रुतिस्मृतीतिहासादिविरुद्धम् । प्रमाणेषु च क्वचिद्यद्यस्ति द्रव्याभेदव्यवहारः, स पुनरौपचारिकः। व्यक्तमन्यत् ॥ १६ ॥

---

आनन्द०—पूर्वसङ्गतिरेवाऽत्र सङ्गतिरित्यभिप्रायेणाह—पूर्वोक्तानामिति । तेषु तेष्विति—

"स रजस्समधिष्ठाय ससर्ज विविधाः प्रजाः।
ररक्ष सत्वमास्थाय तमसा संहरन्नपि॥"

लीलयैव जगन्नाथः सर्गस्थित्यन्तकारकः। इत्यादिरित्यर्थः। शास्त्रसिद्धमिति-

"सत्वेन सुखमाप्नोति रजसा दुःखमश्नुते।
तमसा चापि मूढात्मा लयमेष्यति मानवः॥"

इत्यादिभिरित्यर्थः ।

केचित्तु "प्रकृतिर्या मयाऽऽख्याता व्यायतेऽध्यासिता तेने" त्यादिशास्त्रं विवक्षित-मित्याहुः।

तत् । गुणत्वेति—"सत्वादिगुणवैषम्यतो देवा भवन्ति देवेभ्यो लोक इति" "सत्वं रजस्तम इति, गुणाः प्रकृति सम्भवाः" इति श्रुतिस्मृतिश्रीविष्णुपुराणादिभिरित्यर्थः । "सत्वं परिणमत्—ज्ञानं जायते चेन्द्रियाणि चे"ति—वचनानां का गतिरित्यत्राह—**प्रमाणेषु चेति** ।

ननु द्रव्याऽभेदव्यवहारो मुख्योऽस्तु गुणत्वव्यपदेशो ज्ञानादिवदेवाऽस्तु । अत एव वरदविष्णुमिश्रैः—"द्रव्यं षड्विंशतिविधं सत्वरजस्तमांसी" त्यादिना सत्वरजस्तमसां द्रव्यत्वमुक्तमपि संगच्छत इत्यत्राह—**व्यक्तमन्यदिति** । अत्र किं सत्वरजस्तमसां प्रकृतिस्वरूपता वा ? तद्धर्मता वा ? आद्ये गुणाः प्रकृतिसम्भवा इति विरोधः । द्वितीयेऽपि तेषां प्रभान्यायतोऽङ्गीकारे न किञ्चिन्नियामकमस्तीति ।

न च द्रव्यत्वव्यपदेशो नियामकः । तस्याऽन्यथा सिद्धत्वात् । गुणत्व-व्यपदेशानां श्रौतस्मार्तादिगतानां बहुत्वेन बाधाऽयोगादिति । वरदविष्णु मिश्रवचनं तु [तत्] सांख्यमतमन्वारुह्ये ति न विरोधः । अन्यथा सांख्याधिकरण-सूत्र-भाष्यादि—विरोधादिति भावः ॥ १६ ॥

---

**बुद्धित्वादिः प्रधाने समपरिणतिरित्येवमागन्तुधर्माः**
**द्रव्येष्वन्येषु चान्ये कतिचन कथिताः केचिदध्यक्षसिद्धाः ।**
**आनन्त्यादर्थमान्द्याद् दुरवगमतया सूक्ष्मवैषम्यभेदै-**
**रैकैकश्येन चिन्तामिह जहति बुधा निश्चितापेक्षितार्थाः ॥ १७ ॥**

**सर्वार्थः**—प्रधाने बुद्धित्वादीन् कतिचन प्रकारानुक्त्वा, प्रकारान्तराण्यपि अनन्तत्वान्न परिगण्यन्ते, अथापि प्रामाणिकत्वात् प्रधाने कार्यकारणरूपे परिगृह्यन्ते इति दर्शयति—**बुद्धीति** । प्रधाने बुद्धित्वादयो धर्माः सृष्टयवस्थायां विषमरूपाः; प्रलयावस्थायां समपरिणतयः । एवमन्येष्वपि द्रव्येषु कतिचिद्धर्माः शास्त्रसिद्धाः, कतिचिच्च प्रत्यक्षसिद्धाः । अतोऽनुमानशरणानां साधनबाधनयोरत्रानवकाशः । न हि नरशिरःपवित्रत्वाद्यनुमानं शास्त्रप्र[वृत्ति]तिपत्तिशैलीमुल्लिलङ्घयिषति । तर्हि सर्वेऽपि धर्माः प्रत्येकं प्रतिपाद्या इत्याशङ्क्य परिहरति—**आनन्त्यादिति** । अद्रव्यावान्तरभेदानामानन्त्यात् विविच्य प्रतिपादने पुनरर्थमान्द्यात् सूक्ष्मवैषम्यभेदैर्दुरवगमत्वाच्च, निश्चितापेक्षितार्थाः मनीषिणः, ऐकैकश्येन चिन्तामिह जहति—न तावता तेषां प्रकारभेदानामप्रामाणिकत्वमित्यर्थः ॥ १७ ॥

आनन्द०—प्रसङ्गसङ्गतिमेव दर्शयति--प्रधान इति । कार्यकारणरूपे--प्रकृत्याद्यपेक्षया कार्यरूपं महत्त्वाद्यहङ्काराद्यपेक्षया कारणरूपञ्च तद्विशिष्ट इत्यर्थः । बुद्धित्वादयो धर्मा इति--महत्त्वादयस्सत्वाद्युन्मेषवशादहङ्कारादि सृष्ट्यवस्थायां विषमाः स्वकारणे लयावस्थायां समा इत्यर्थः अत इति—अनुमानेन तादृशधर्मसाधनं बाधञ्च सम्भवतीत्यर्थः। निश्चितापेक्षितार्थः--निश्चितमात्रेण वस्तुनाऽपेक्षितप्रयोजन इत्यर्थः। निश्चितं—निश्चयः। ऐकैकश्येनेति --एकैकश इत्यर्थः। एकशब्दात्संख्यैकवचनाच्चेति सूत्रेण शसि चातुर्वर्ण्यादित्वात् ष्यञि टिलोपे रूपम्।

केचित्तु संज्ञापूर्वकविधेरनित्यतामाश्रित्य वृद्ध्यभावं मन्वाना एकैकश्येनेति पाठं मन्यन्ते ॥ १७ ॥

---

शब्दाद्यास्तत्तदक्षप्रतिनियतिजुषस्सर्वतन्त्रप्रसिद्धा-
स्तैरेकद्व्यादिसंख्यैर्द्युपवनहुतभुग्वारिभूम्यस्समेताः ।
पञ्चीकारादिनैषां विनिमितगुणता व्योमनैल्यादिबोधे
तद्योगात्तत्र तत्तद्गुणजनिरिति चेन्नान्यथाऽत्रोपपत्तेः ॥ १८ ॥

सर्वार्थ—अनन्तरं शब्दादीनां ग्राहकनियममाधारनियमं चोक्त्वा भूतान्तरे तत्तद्गुणप्रतिभासस्योपाधिनियमं चाह—शब्दाद्या इति। शब्दादीनां श्रोत्रादिग्राह्यत्व-नियमस्सर्वतन्त्रसिद्धः। शब्दादीनामाकाशादिषु उत्तरोत्तरगुणाधिक्यं शास्त्रप्रसिद्धमुप-लम्भसिद्धं च। गुणविनिमयस्तु पञ्चीकरणादिभिरेव स्यात्। तत्रोदाहरणमाह-व्योमेति। गगनतले नैल्यादिप्रतिभासः पञ्चीकृतपृथिव्यादिसंबन्धेनैव स्यात्। एवमुष्णं जलं सुरभि-स्समीर इत्यादिषु संसर्गविशेषाद् गुणान्तरप्रतिभासः स्वयमेवोहनीयः। भूतान्तरसंसर्गात् भूतान्तरे तत्तद्गुणोत्पत्तिकल्पनं कल्पनागौरवान्न योयुज्यते। अतो रक्तं नभः धूम्रा दिश इत्यादयो व्यवहारा औपाधिका इति। [पटमलिनिमवत् यथा पटस्य मालिन्या-भावेऽपि शङ्खस्य पीतिमाभावेऽपि मलिनः पटः, पीतश्शङ्खः, उष्णं जलमित्यादि] ॥ १८ ॥

---

आनन्द०—प्रसङ्गसङ्गतिरित्यभिप्रेत्याह-अनन्तरमिति-निर्धारणे-षष्ठी शब्दा-दीनां मध्ये उत्तरोत्तरगुणाधिक्यभूतेष्विति शास्त्रमित्यर्थः।

ननु पञ्चीकरणेन संसर्गान्नैल्यमिव। लौहित्यमपि भासेत उष्ण स्पर्शादयश्च गृह्येरन् न च तथेति चेत्। उच्यते। तत्तद्गुणानां सत्वेऽपि नैल्यस्य व्यञ्जकं दूरत्वमिव तत्तद्द्रव्यसंसर्गः गुणान्तरव्यञ्जकः तस्य क्वाचित्कतयाऽभिव्यक्तिरपि कदाचिदेव भवति।

ननु तर्हि तप्तजलोष्णस्पर्शाभिव्यक्तिरपि पञ्चीकृतभूतगतस्यैव स्यात् ननु तादात्विकसंसर्गिण इति वाच्यम् । इष्टत्वात् । यद्वा विनिगमकाभावादन्वयव्यतिरेकाभ्यां तादात्विक संसर्गिण एवेत्युपेयते । अत एव कस्तूरिकासंसर्गेण गन्धविशेषोपलम्भः । नहि तत्प्राक्तादृशगन्धसम्भवः । तथात्वे तस्यैव दुर्गन्धसंसर्गात्तत्तद्गन्धोपलम्भेन तस्यापि सत्वाङ्गीकारे विरुद्धसंवलनप्रसङ्गात् ।

एतेन संसर्गाद्गुणान्तरप्रतीतौ उत्तरोत्तरगुणान्तरकल्पनं व्यर्थं तत्प्रतोतेरन्यथासिद्धत्वादिति निरस्तम् । श्रौतत्वेन तस्याऽकल्पनात् । संसर्गविशेषादिति तच्चम्पकादिविशेषसंसर्गादित्यर्थः । कल्पनागौरवादिति—यद्यपि – तद्द्रव्यापगमेऽपि तद्गन्धोपलम्भस्तत्रोत्पत्तिं साधयति तथापि—तदवयवसंसर्गस्याऽवस्थानात्तत एव प्रतीत्युपपत्तौ न तदुत्पत्तिरस्ति । तन्न्यायेन जलादावपि गन्धाद्युत्पत्यङ्गीकारस्सं भवत्येव । तथापि क्लृप्तैरेव तदुपपत्तेरुपाध्यपगमेऽपि पाकजरूपादेरिवावस्थानाभावाच्च न प्रतिबन्दीति हृदयम् ॥ १८ ॥

---

**कस्तूरीचम्पकाद्यौ समविषमतया सम्मतस्सौरभादि-**
**स्तद्वच्छब्दादयोऽमी त्रिगुणतदधिकद्रव्यनिष्ठा गुणाः स्युः ।**
**निष्कृष्टे शास्त्रदृष्ट्या न कथमपि मिथस्संकरश्शङ्कनीयः**
**स्वाच्छन्द्याच्छङ्कमानः स्वमिव सुरगुरुं किं न शङ्केत मुग्धम् ॥१९॥**

**सर्वार्थः**—लीलाविभूतिवन्नित्यविभूतावपि शब्दादिसंभवं तस्य च सर्वातिशाय्युत्कर्षशालित्वं चोपपादयति—कस्तूरीति । यथा कस्तूरीचम्पकप्रभृतिषु गन्धसाम्ये सत्यपि सौरभविशेषस्तत्रतत्रोपलभ्यते, एवं त्रिगुणे शुद्धसत्त्वे च शब्दादिसद्भावेऽपि धर्मिग्राहकप्रमाणसिद्धं वैषम्यमनतिलङ्घनीयमेव । न हि वीणावेणुप्रभृतीनामैकरूप्येण स्वरनियमः; सुखविशेषहेतुत्वं चान्यथाऽन्यथोपलभ्यते । एतत् सर्वं प्राकृतेष्वेव । अप्राकृते पुनर्विभूत्यन्तरे श्रुतिस्मृतीतिहासपुराणप्रसिद्धाः प्रकारविशेषाः तत्तदनुभवाधीनानन्दविशेषाश्चापलपितुं न शक्यन्त इति भावः । तदधिकद्रव्यं—त्रिगुणद्रव्याधिकं नित्यविभूतिद्रव्यम् । निष्कृष्ट इत्यादि । शास्त्रदृष्ट्या निर्णीते वैषम्ये सामान्यधर्ममात्रात् संकरो न शङ्कनीयः । अन्यथा सर्वत्रातिशङ्कायां निर्मूलशङ्कायास्सुलभत्वात् । स्वयमिव सुरगुरुरपि मूढ इत्येव शङ्क्येत । अतो विलक्षणस्वरूपे शुद्धसत्त्वद्रव्ये विलक्षणाः शब्दादय इति न संकटं किंचित् ॥ १९ ॥

---

**आनन्द०**—प्रसङ्गाभिप्रायेणाह—**लीलाविभूतिवदिति** । **सौरभविशेषः** उत्कर्षापकर्षादिः श्रुति-स्मृति-कौषीतकी-शतपथ—पाञ्चरात्र-भारत-स्कान्दादिप्रसिद्धा इत्यर्थः । **अन्यथेति**—श्रौतेऽप्यर्थेऽनुमानाल्लीलाविभूतिसाम्यशङ्कायामित्यर्थः ॥ १९ ॥

शब्दो नैकेषु युक्त्याऽप्युचित इह पुनः पारिशेष्यं तु मन्दं
वायुश्शब्दस्वभावश्श्रुतिशिरसि यतः स्मर्यते च स्वरात्मा ।
गन्धालोकादिनीति यदिह निजगदुर्यामुनाद्यास्ततोऽपि
स्पष्टो भेर्यादिनिष्ठोऽयमिति गतिवचो गन्धवत्तद्वि[शेषे]शिष्टे ॥२०॥

**सर्वार्थः**—अत्र केचित् शब्दस्याकाशमात्राश्रितत्वमाहुः । तन्नेति प्रतिपादयति—**शब्द इति । युक्त्याऽप्युचित** इति । युक्तिरन्वयव्यतिरेकोपलम्भः । पृथिवीजलादावपि शब्दान्वयव्यतिरेकोपलम्भो हि दृश्यते । तेन शब्दः क्वचिदाश्रित इति सामान्येनाधिकरणोपलम्भेऽपि स्वविवक्षिताकाशमात्रपरिशेषो न स्यात्; तादृशस्य परिशेषस्यानियतत्वात् । यथा युक्त्याभासेन द्रव्यान्तरनिषेधः, एवमाकाशनिषेधस्यापि केनापि तादृशेन युक्त्याभासेन कर्तुं शक्यत्वात् । तदिदमाह—**इहेति** । युक्त्यापीत्यपिशब्देन प्रत्यक्षादिकमपि प्रमाणयति; मेघो गर्जति, शङ्खो नदति, भेरी ध्वनतीत्यादिलोकोपलम्भात् । अस्तु वाऽयमानुमानिकोपलम्भः । अथापि भेर्यादिनिष्ठ एवायमुपलभ्यत इति न केवलमाकाशैकनिष्ठत्वम् । अपि च श्रुतिरेव शब्दस्य भूतान्तरनिष्ठत्वमुपपादयति । अध्ययनोपक्रमपरिपाठ्ये शन्नो मित्र इत्यस्मिन्मन्त्रे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि इति वायोरेव वेदात्मना परिणतिरुपलभ्यते । तत्तु वायोश्शब्दाधारत्वमन्तरेण न संजाघटीति । एवं तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इत्यादिकमपि भाव्यम् । स्मर्यते च स्वरात्मा -स्वररूपेण वायुरेव स्मर्यते,

वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥

इति । एवं नाभिदेशादेव निर्गतस्य वायोस्ताल्वादिस्थानसंबन्धेन तत्तच्छब्दपरिणतिहेतुत्वं स्मृत्यादिप्रसिद्धं स्वयमेवानुसन्धेयम् । उपलम्भस्तु पञ्चभूतासाधारणत्वान्नाकाशस्यैव शब्दाश्रयत्वमुपपादयितुं शक्नोति । तर्कोऽपि तादृशः । अनुमानमप्यव्यवस्थितमिति प्रागेवोक्तम् । शब्दस्यापि गन्धवदालोकवच्च स्वाश्रयानुवर्तित्वमशेषदेशव्यापित्वं च लोकदृष्ट्या श्रीयामुनाचार्यादिभिरुपपादितम् । ततः शब्दस्य भेर्यादिनिष्ठत्वमुपपादितं भवति । कथं तर्हि शब्दस्य गतिव्यवहारः भेरीध्वनिरुज्जृम्भते, अध्ययनशब्दश्च सर्वतः प्रवर्तत इति ? अयमपि पूर्वोक्तेनैव दृष्टान्तेन संघटते; गन्धाद्याश्रयद्रव्यप्रसरणवत् शब्दाश्रयद्रव्यप्रसरणेन तत्तद्द्रव्यनिष्ठशब्दोपलम्भस्यापि संभव इति । आकाशनिष्ठत्वं तु शब्दस्य भूतान्तर्गतत्वेनास्माभिरप्यनुमन्यते ॥ २० ॥

आनन्द०—ननु नैयायिकादयश्शब्दमाकाशमात्राश्रितमाहुः तत्कथं—वाय्वादीनामपि धर्मं इत्याक्षेपसङ्गतिमाह—अत्रेति । पृथिवीजलादाविति—संघट्टनेन पृथिव्यादौ शब्दोपलम्भात् ।

ननु शब्दः पृथिव्याद्याश्रितो न भवति श्रोत्रैकग्राह्यत्वादिति निषेधात्कथं पृथिव्यादिगतत्वमित्यत्राह—यथेति—शब्दः आकाशाश्रितो न भवति श्रोत्रैकग्राह्यत्वादिति भावः ।

ननु मेघादीनां श्रोत्रेण ग्रहणायोगाच्चक्षुरादेश्शब्दाग्राहकत्वात्कथं प्रत्यक्षोपलम्भइत्यत्राह—अस्तु वेति । शन्नो मित्रादिमन्त्र इति—ब्रह्मशब्दो वेदपरः । मन्त्रस्य वेदोपक्रमार्थतया वेदप्रकाशकत्वादिति भावः । शब्दाधारत्वमन्तरेणेति - वायोरशब्दात्मकतया स्वतो वेदात्मकत्वाऽसम्भवात् ।

ननु निमित्तत्वमात्रेण तथा व्यपदेश इति चेत् । तस्य कालादिसाधारणत्वादाधाराधेयभावप्रतीतौ बाधकाभावाच्चेति भावः । निश्वसितमिति श्वसनरूपवाय्वात्मकत्वप्रतिपादनादिति भावः। वेणुरन्ध्रेणेति—शब्दात्मकत्वं कैमुतिकसिद्धं । तद्धर्मवत्वप्रतिपादनात् । तथा च तदाधारत्वं दृढतरमिति भावः । याज्ञवल्क्य—भरतशिक्षादिसिद्धं स्वरूपमागमः । एवन्नाभीति । लोकदृष्ट्या—लौकिकव्यवहारेण । एवं तत्तद्द्रव्येणेति ।

ननु स्वाश्रयप्रसरणेन शब्दप्रसरणमनुपपन्नं शंखभेरीप्रभृतीनां प्रसरणाभावेन तत्तच्छब्दप्रसरणायोगात् । नचेष्टापत्तिः तच्छब्दग्रहणानुपपत्तेः ।

न च गन्धादिद्रव्यवत्तदवयवप्रसरः प्रमाणाभावाद्विरोधाच्च । किञ्च तत्प्रसरणमपि वायुवशात् । तथा च वायुशब्द एव गृह्यतां ।

न च भेरीशब्द इत्यादिप्रतीतिबाधाद्भेरीशब्दग्रहः । तन्निमित्तत्व मात्रेणापि तद्ग्रहोपपत्तेरिति चेत् । मैवं पृथिवीशब्द इत्यादिप्रतीतिबलात्परम्परयाऽऽकाशपरिणतेऽपि तद्गुणानुवृत्तेरावश्यकत्वाच्च पृथिव्यादावपि शब्दसत्वेऽवश्यं वाच्ये वायुशब्द एव गृह्यत इति वक्तुमशक्यत्वात् गन्धादिन्यायेनाऽवयवप्रसरसम्भवाच्च। वस्तुतः प्रायिकाभिप्रायमिदं द्रष्टव्यम् । आकाशनिष्ठत्वे किं मानमित्यत्राह—आकाशनिष्ठत्वमिति—सर्वभूतेष्वाकाशस्याऽनुस्यूतत्वादवकाश प्रदेश—एव शब्दोपलम्भाच्चेत्यर्थः ।

केचित्तु भूतमात्रधर्मत्वस्य श्रुत्यादिसिद्धत्वात्तत्राऽऽकाशस्याऽन्तर्गतत्वादित्याहुः ॥ २० ॥

सत्यान् सत्यापयन्तः कतिचन चतुरः स्पर्शरूपादिधातून्
शब्दं स्वार्हाक्षसिद्धं चतुरधिकरणं प्राहुरेभ्यो न भिन्नम्।
किं तद् भेदाप्रतीतेः प्रबलविहतितस्संमतैक्यप्रमातः
स्वाच्छन्द्याद्देशनाया विभवत इति वा वीक्ष्य शिष्टा विजह्युः ॥२१॥

**सर्वार्थः**—अत्र केचिद्रूपादिकं चतुष्टयमस्ति। शब्दस्तु तच्चतुष्टय एव वर्तते। स च श्रोत्रगम्यः; तथाऽपि तेभ्यो न भिद्यत इत्याहुः। तदिदमनुभाषते—सत्यानिति। अत्र धातुशब्दः परसिद्धान्तप्रयोगप्रसिद्धमनुवदति। अतिरोहितमन्यत्। अनुभाषितमर्थं विकल्प्य दूषयति—किं तदिति। किं चतुर्भ्यो धातुभ्यो व्यतिरिक्तपदार्थभेदाप्रतीतेः, किं वा प्रबलव्याघातदर्शनात्, यद्वा चतुर्भिरुपरितनानामैक्यप्रतीतेः, यदि वा स्वाच्छन्द्यात्, केवलसुगतगुरूपदेशाद्वा, तादृशं मतं स्वीक्रियते? तत्सर्वमसिद्ध्यादिदोषदूषितत्वाच्चतुर्भ्यो धातुभ्यो व्यतिरिक्तार्थप्रहाणे हेतुर्न भवतीत्यर्थः ॥ २१ ॥

---

**आनन्द०**—"शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुव"न्निति मतं प्रसङ्गाद्दूषयतीत्याह—केचिदिति। अत्र धातुशब्द इति धातुशब्दो वैभाषिकैर्वस्तुशब्दपर्यायतया व्यवह्रियत इति भावः। अतिरोहितम्—असिध्यादिशब्देन व्याघाताऽभावः सुगतोपदेशस्याऽप्रमाणत्वञ्च गृह्यते ॥ २१ ॥

---

शब्दोऽवस्थाविशेषः श्रुतिभिरभिहितस्तेन नैष स्वनिष्ठो
व्योमादेश्चाविभुत्वात् क्वचिदपि न तु तत्सन्निधिस्तद्विदूरे।
साक्षादक्षाप्तिसाक्षात्कृत इति घटवद् द्रव्यमित्यप्यसारं
साध्यात् प्राग्धेत्वसिद्धेर्न हि परमतवन्नाभसं श्रोत्रमत्र ॥ २२ ॥

**सर्वार्थः**—अत्र केचिदाहुः शब्दस्य गुणत्वमेव नास्ति, अपि तु द्रव्यत्वमेव; यथाऽऽहुः—

वर्णात्मकाश्च ये शब्दा नित्यास्सर्वगतास्तथा।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः॥

इति। एतत्तु वाय्वाद्यवस्थाविशेषरूपशब्दप्रतिपादकश्रुतीतिहासपुराणादिविरुद्धत्वादनादर्तव्यमित्याह—शब्द इति। नैष स्वनिष्ठः—स्वतन्त्रं द्रव्यं न भवतीत्यर्थः। अस्य च शब्दस्य स्वाधारभूतव्योमादेरविभुत्वात् व्योमादिरहिते देशे पुनरसन्निधानं न दोषायेत्याह—व्योमादेरिति। परमाकाशे तु प्राकृताकाशाभावेऽपि शब्दसद्भावो युज्यत इति प्रागेवोक्तम्। तर्हि शब्दो द्रव्यं साक्षादिन्द्रियसंबन्धेन गृह्यमाणत्वात् घटवदित्यनुमानं प्रयुञ्ज्महे इति चेत्, तदप्यसारमित्याह—साक्षादिति।

कुत इत्यत्राह—**साध्यादिति** । अयमर्थः—शब्दस्य द्रव्यत्वे सिद्धे साक्षादिन्द्रियसम्बन्धेन साक्षात्कारसिद्धिः; तत्सिद्धौ तत्सिद्धिरितीतरेतराश्रयत्वम् । अथापि द्रव्यत्वसिद्धिमन्तरेण साक्षादिन्द्रियसंबन्धस्सिध्यति, श्रोत्रस्याकाशत्वात् शब्दस्याकाशगुणत्वादिति चेत्. अत्र केचिदाहुः—हेतुसिद्धया साध्यसिद्धिर्व्याहन्यत इति । तथा हि—शब्दस्याकाशगुणत्वाङ्गीकारेण साक्षादिन्द्रियसंबन्धस्सिध्यति । तथा च हेतुरेवायं साध्यं व्याहन्तीति । तदिदं सर्वमभिप्रेत्याह—**साध्यादिति** । हेत्वसिद्धिमुपपादयति—**न हीति** । अस्मत्पक्षे श्रोत्रस्याकाशत्वायोगात् नैयायिकादिमतवत्साक्षादिन्द्रियसंबन्धप्रसङ्गोऽपि नास्तीत्यर्थः ॥ २२ ॥

---

**आनन्द०**—आक्षेपसङ्गत्यभिप्रायेणाह—**अत्र केचिदिति** । मीमांसकमतं—तार्किकरक्षाकारिकयाऽनुवदति—**यथाऽऽहुरिति** । **नित्याः**—नित्यभूताः नित्यत्वे सति भूततया वर्णात्मकानां शब्दानामुक्तान्तर्भावाऽभावे पृथग्द्रव्यत्वमित्यर्थः । **एतत्त्विति**—शन्नोमित्रादि वेणुरन्ध्रेत्यादिभिरित्यर्थः ।

ननु गुणत्वे विभुत्वायोगाद्व्योमादिरहितदेशे शब्दो न स्यादित्यत्राह—**अस्य चेति** । ननु तर्हि शुद्धसत्त्वे प्राकृताकाशाभावात्कथं "सहस्राक्षरा परमे व्योम"न्नित्यादिभिश्शब्दसत्वमित्याह—**परमाकाशे त्विति** । **तत्सिद्धौ तत्सिद्धिरित्यादि**—साक्षादिन्द्रियसम्बन्धेन गृह्यमाणत्वे सिद्धे द्रव्यत्वसिद्धिरित्यर्थः । साक्षात्संबन्धासिद्धयर्थं गुणत्वाङ्गीकारे द्रव्यत्वं न स्यादित्यत्राह—**साध्यं व्याहन्तीति** ।

आकाशगुणत्वाङ्गीकारेऽपि हेत्वसिद्धिरित्याह—**हेत्वसिद्धिमिति** । **मूलं तद्विदूरे**—व्योमादिरहिते देशे शब्दसन्निधिः **ननु**—नास्तीत्यर्थः ॥ २२ ॥

---

**वर्णानां सध्वनीनामभिवदति हरिद्वाससः पुद्गलत्वं**
**नाक्षादेस्सिद्धमेतन्न च तदभिमते शब्दितः शब्दशब्दः ।**
**सूक्ष्मद्रव्ये हि धर्मः श्रुतिविषयवशाल्लक्षणो दुस्त्यजस्तै-**
**स्तस्मान्नास्मत्समीक्षामतिपतितुममी शक्नुयुस्तद्वदन्ये ॥ २३ ॥**

**सर्वार्थः**—सध्वनीनां वर्णानां पुद्गलरूपत्वमाहुः क्षपणकाः, तदिदमनुवदति—**वर्णानामिति** । **हरिद्वाससः**—नग्नाटाः । दूषयति - **नाक्षादेरिति** । अयमर्थः—न तावत्प्रत्यक्षादिप्रमाणसिद्धत्वादयमर्थोऽवगम्यते । नापि लोकव्यवहारानुरोधेन । उभयमपि नास्ति । तदाह—**न चेति** । **तदभिमते पुद्गले न शब्दशब्दः शब्दितः**—न व्युत्पन्नः; पुद्गलेषु शब्दशब्दस्य व्याकरणाभिधानपाठलोकव्यवहारशिष्टप्रयोगेष्वन्यतमस्याप्यभावात्, उपजीव्यानुमानाभावात्, तदनुग्राहकतर्काभावाच्चेत्यर्थः ॥ २३ ॥

आनन्द०—"सवर्णास्सध्वनयो ये च पुद्गलाः वाय्वादिप्रेरितास्ते तु गृह्यन्ते नित्यरूपिणः" इति जैनमतं प्रसङ्गसङ्गत्या दूषयतीत्याह—सध्वनीनामिति—पूरयन्ति चैति व्युत्पत्त्या परमाणवः—पुद्गलाः।

ननु पुद्गलार्थकशब्दशब्द एव प्रमाणमित्यत्राह—तदभिमते पुद्गल इति। मूलं शब्दस्य पुद्गलात्मकत्वे पुद्गलस्य परमाणुस्वरूपस्याऽतीन्द्रिय त्वात्तस्य प्रत्यक्षत्वं न स्यात्। अतो जैनैरपि सूक्ष्मद्रव्ये श्रुतिविषयदशालक्षणः श्रोत्रग्रहणयोग्यावस्थास्वरूपश्शब्दात्मको वक्तव्यः। तस्मान्नास्मत्समीक्षामतिपतितुं—अस्मन्निर्णयं निराकर्तुं न समर्थाः। तद्वत्—शब्दवदेव रूपादयोऽपि न पुद्गलरूपाः ॥ २३ ॥

---

वर्णे स्थैर्यं विरुद्धान्वयविरहवति प्रत्यभिज्ञा नियच्छे-
त्तैव्रयादिव्यञ्जकस्थं भ्रमवशघटितं तत्र कल्प्येत दिग्वत्।
एकाक्षग्राह्यसंवित्प्रतिनियतिरपि ह्यञ्जनादाविव स्या-
द्व्यक्त्या स्यात् कार्यताधीर्यदि न निगदितो नैगमैरस्य नाशः ॥२४॥

सर्वार्थः—वर्णात्मकशब्दस्वरूपनित्यत्वमाहुः कौमारिलाः। तदिदमाह—वर्ण-इति। पूर्वं द्रव्यत्वं निराकृतम्; इदानीं नित्यत्वमिति विभागान्न पौनरुक्त्यम्। ननु तीव्रमन्दादिभेदेन विरुद्धधर्मग्रस्तत्वात्कथमस्मिन्नित्यत्वमित्याशङ्क्याह विरुद्धान्वयेति। तीव्रमन्दादिभावो व्यञ्जकस्थ एव; न पुनः शब्दस्थ इत्याह—तैव्र्यादीति। कथं तर्हि शब्दे तैव्रयादिप्रत्यय इत्यत्राह—भ्रमवशघटितमिति। तत्र दृष्टान्तं दर्शयति—दिग्वदिति। यथा नित्यविभुशब्दवादिनां पूर्वशब्दोऽपरशब्द इति दिक्प्रत्ययः काल्पनिकः, एवं तीव्रादिप्रत्ययोऽपीति। अनेनैव दृष्टन्तोपादानेन दिक्प्रत्ययस्यापि शब्दे काल्पनिकत्वं स्थापितं भवति। अथवा अनित्याविभुशब्दवादिनामपि शब्दे दिक्प्रत्ययः काल्पनिक एव। भेर्याद्युपाधीनामेव तत्तद्दिक्संबन्धः, उपाधिसंबद्धाकाशनिष्ठतामात्रेण शब्दे दिक्संबन्धव्यवहारः। ननु कथं समानेन्द्रियग्राह्याणां समानदेशस्थानामित्यादिना प्रतिनियतव्यञ्जकाभिव्यङ्ग्यत्वं प्रतिषिद्धं शब्दानाम्? अतस्ताल्वादिव्यापारोत्पाद्यत्वं शब्दस्येति। तन्न; अञ्जनादिभिर्व्यभिचारात् दृष्टं खलु प्रतिनियताञ्जनाभिव्यङ्ग्यत्वं पिशाचादौ निहितनिध्यादौ च; तद्वदिहापि ताल्वादिव्यापाराणामकारणत्वेऽपि न दोषः। तदिदमाह—अञ्जनादाविवेति। कथं तर्हि कविः काव्यं निर्ममे, प्रोवाच ब्रह्मविद्यामिति शब्दे कार्यत्वप्रतिपत्तिरित्यत आह—व्यक्त्येति। इत्थमङ्गीकारे श्रुतिविरोधमाह—यदि नेति। श्रुतिस्मृतीतिहासपुराणेषु शब्दस्य विनाश एव सर्वत्र प्रतिपाद्यत इत्यर्थः। नैगमैः—निगमसंश्रयैर्वचनैश्शब्दनाशो निगदितः ॥ २४ ॥

आनन्द०—प्रसङ्गसङ्गतिमभिप्रेत्याह—वर्णात्मकेति । "वर्णात्मकास्तु ये शब्दा नित्यास्सर्वगताश्च ते" इत्यनुवादश्लोके नित्यशब्ददर्शनान्न पौनरुक्त्याशङ्का ।

ननु नित्यतापक्षे सर्वप्रत्ययस्यापि भ्रमत्वकल्पनं दोष इत्यत आह—अथवेति ।

ननु शब्दस्य नित्यत्वपक्षे ताल्वोष्ठपुटव्यापारादेर्व्यञ्जकत्वापत्तेस्समानदेशस्थानामित्यादि प्रथमसूत्रभाष्याभिप्रेतात् घटायोन्मीलितं चक्षुः पटं न बुद्ध्यत इति न्यायात् प्रासादार्थारोपितदीपन्यायाच्च पटशब्दोच्चारणदशायां सर्वशब्दप्रकाशस्स्यादिति शङ्कते—नन्विति । सिद्धान्तमवतारयति –इत्थमिति ॥ २४ ॥

---

ध्वन्यात्मा वायुभेदः श्रुतिविषयतयाऽपाठि तौताततिताद्यैः
तद्वत् पञ्चाशदेते समकरणतया वर्णिताः किं न वर्णाः ।
तैव्राचादिर्वर्णधर्मो नियत इति यथादर्शनं स्थापनीयं
स्पर्शादौ चैवमिष्टं तदिह न सुलभा द्रव्यता नित्यता च ॥ २५ ॥

सर्वार्थः—किंच ये शब्दस्य द्रव्यत्वं नित्यत्वं च वर्णयन्ति तैरेव तौताततिताद्यैः—कौमारिलाद्यैः ध्वन्यात्मा वायुभेद एव श्रुतिविषयतयाऽपाठि । एवमेव पञ्चाशदेते वर्णाः किं न वर्णिताः ? समकरणतया—समानेन्द्रियग्राह्यतया समानताल्वादिव्यापारजन्यतया च । तेषामेव वर्णानां वायुभेदानां स्वाभाविक एव तीव्रादिभावः; न पुनरौपाधिकः । यथादर्शनं व्यवस्थापनीयम्—यथा दुरालभास्पर्शस्य दुःखहेतुत्वं दहनस्पर्शस्य दाहहेतुत्वम् । तस्मात् ध्वन्यात्मकशब्दवत् वर्णात्मकोऽपि शब्दो वाय्ववस्थाभेद इति स्वीकारे को विशेषः ? अवस्था चागन्तुरपृथक्सिद्धो धर्म इत्युक्तम् । अतो द्रव्यत्वं नित्यत्वं च वर्णानामिति वर्णितमेतदप्रामाणिकमिति वर्णयामः । विस्तरस्त्वन्यत्रानुसन्धेयः ॥ २५ ॥

---

आनन्द०—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्याह—किञ्चेति । वायुभेदः वायुधर्मको विशेषः तुल्य इत्यर्थः ।

ननु शब्दस्य द्रव्यत्वं कार्यत्वञ्च श्रुतिसिद्धं "यद्वेदादौ स्वरः प्रोक्तः" "यस्य वेदश्शरीर" मित्यादिभिरुपादानत्व—शरीरत्वाभिधानात् । तदाह—वेदार्थसंग्रहे—"सर्वस्य वेदजातस्य प्रकृतिः—प्रणवः । प्रणवस्य प्रकृतिरकारः । प्रणवविकारो वेदस्तु प्रकृतिभूते प्रणवे लीनः । प्रणवोऽप्यकारविकारः स्वप्रकृतावकारे लीन" इत्यादिभिर्द्रव्यत्व कार्यत्वप्रतीतेरिति चेत्तत्राह—विस्तरस्त्विति—न्यायसिद्धाञ्चनादावेव सम्यक्समर्थितत्वात्तत्रानुसन्धातव्य इत्यर्थः ॥ २५ ॥

शब्दानित्यत्वतोऽपि श्रुतिषु न विलयः स्यात् क्रमव्यक्तितीत्या
तन्नित्यत्वे च काव्यादिकमपि न कथं नित्यामित्यभ्युपैषि ।
तस्मान्नित्यैकरूपक्रमनियमवशान्नित्यभावः श्रुतीना-
मीशोऽप्यध्यापको नः पर[मि]मतिचकितैर्वर्णनित्यत्वमुक्तम् ॥२६॥

**सर्वार्थः**—कथं तर्हि वर्णानित्यत्वे वेदनित्यत्वं सिध्यतीत्यत्यन्तभीतस्यात्यास्तिक्यनिमित्तचोद्यं परिहरति—**शब्देति** । शब्दानित्यत्वेऽपि श्रुतिषु न विलयः स्यात्—यथा शब्दानां नित्यत्वेऽपि नित्यविभूनां तेषां देशतः कालतो वा कश्चित् क्रमो नास्ति, क्रमविशेषविशिष्टस्यैव शब्दस्य पदत्वं वाक्यत्वं चानुवर्ण्यते; स पुनः क्रमः कीदृग्रूप इति चिन्तने शब्दानां क्रमाभिव्यक्तिमात्रमेव; अभिव्यक्तिश्चोपलम्भसामग्रीसान्निध्यं वा, तदधीनोपलम्भो वा; तदनुक्रमोऽपि तत्कालपरम्परासंपातः; सर्वमेतदनित्यमेव. एवं च यथा क्रमाभिव्यक्त्या वेदनित्यत्वं भवद्भिरभिव्यक्तिनियममात्रेणाङ्गीक्रियते, एवं क्रमविशेषविशिष्टशब्दोत्पत्तिपारम्पर्यमेवोच्चारणक्रमनियमः; तेनैव वेदनित्यत्वमस्माकं सिध्यति । वर्णनित्यत्वमप्रयोजकमेव; वर्णानामवेदत्वात् । वाक्यसङ्घातविशेषो हि वेदः; पदसङ्घातविशेषो वाक्यम्; पदं च वर्णसङ्घातविशेषः, सर्वमेतदनित्यमेव, वाक्यानां सजातीयत्वमात्रं त्ववशिष्यते, तदेव नित्यत्वमिति । अन्यथा वर्णानां नित्यत्वमात्रेण काव्यादिकमपि नित्यमिति कथं नाभ्युपैषीत्याह—**तन्नित्यत्वे चेति** । कथं तर्हि वेदनित्यत्वमित्यत्र नित्यत्वे प्रयोजकं निगमयति—**तस्मादिति** । इदं खलु वेदानां नित्यत्वं यन्नित्यैकरूपक्रमविशेषोच्चार्यमाणत्वम् । स पुनः क्रमो निपुणं निरूपयतामुच्चारणमात्रनिष्ठ एवेति । एतेनाध्यापकानां पूर्वपूर्वाध्यापकाध्ययनानुक्रमानुसरणमेव वेदनित्यत्वमिति सिद्धे सति, ईश्वरोऽपि पूर्वकल्पानुसरणं स्वसंकल्पसिद्धं स्वयमप्यनुसरतीति, वेदेऽपि पूर्वकल्पोच्चारणानुसरणमनुवर्तयतीति वेदनित्यत्वसिद्धिः । वर्णनित्यत्ववादिभिस्तु तदनित्यत्वे वेदानित्यत्वभ्रान्त्या तद्भ्रान्तिनिबन्धनभीत्या वा वर्णनित्यत्वमुक्तमिति न तानप्यधिक्षिपामः ॥ २६ ॥

---

**आनन्द०**—आक्षेपसङ्गतिं दर्शयति—**कथं तर्हीति** । **अभिव्यक्तिश्चेति**—ततोऽतिरिक्तस्य वक्तुमशक्यत्वादिति भावः ।

नन्वभिव्यञ्जकाभिव्यक्त्यादीनामनित्यत्वेऽपि वर्णानान्नित्यत्वमस्त्वित्यत्राह—**वर्णनित्यत्वमिति** । तर्हि नित्यत्वं भवतामपि कथमित्यत्राह—**वाक्यानामिति**—एवञ्चाऽऽनुपूर्वीप्रवाहमात्रेण नित्यत्वं पर्यवस्यति, तद्वर्णानित्यत्वेऽप्यविशिष्टमिति भावः । **यन्नित्यैकरूपेति**—एकरूपस्य क्रमस्य यन्नित्यता अनादिपरम्परा तद्विशिष्टत्वमित्यर्थः । तदयं निर्गलितार्थः । येन धर्मेण स्वाश्रयसमानकालीनत्वरहित प्रागभावप्रतियोगिवृत्तित्वरहित धर्मवत्त्वं तेन रूपेणानादित्वं पर्यवस्यति । मूलं, **ईशोऽप्यध्यापकः**—ईश्वरोऽप्यध्यापक एव न वेदकर्तेत्यर्थः । **परमतिचकितैः**—त्रेदनित्यत्वरक्षणाय वर्णनित्यत्वमुक्तमित्यर्थः ॥ २६ ॥

नैवोष्णौ नापि शीतौ क्षितिसततगती तत्र तोयादियोगात्
शीतत्वादिप्रतीतिस्तदुपधिकतया तत्रतत्रैव दृष्टेः ।
आयुर्वेदे तुषारो मरुदिति कथनं त्वद्भिराप्यायिकाभि-
र्वृद्धिह्रासौ समाद्यैर्भवत इति परं तच्चिकित्सानियत्यै ॥ २७ ॥

**सर्वार्थ**—एवं शब्दं निरूप्य स्पर्शे विशेषान् निरूपयति—नैवेति । यथोपलम्भमनुष्णाशीतस्पर्शौ पृथिवीवायू, तत्र तोयादियोगात् शीतत्वादिप्रतीतिः, शीतं स्थलं शीतो वायुरित्यादि । तत्र हेतुमाह—तदुपधिकतयेति । दर्शनं हि सर्वत्र व्यवस्थापकम्, उष्णा भूरुष्णं जलमित्यादिष्वातपाद्युपाधिवशादेव तत्रतत्रौष्ण्यादेर्दर्शनात् । कथं तर्हि आयुर्वेदे तुषारो मरुदित्युच्यते ? तुषारः शीत इत्यर्थः; तत्तु आप्यायिकाभिरद्भिरेव । कथं वा तर्हि वृद्धिह्रासौ समाद्यैर्भवत इति तुल्यगुणयोगेन विरूपाणामपि तत्रैवायुर्वेदे साम्यादिकमुच्यते ? तत्पुनश्चिकित्सानियमार्थम् । अयमत्र भावः—अस्य धातोरनेन हेतुनाऽभिवृद्धिः, अनेन च परिक्षय इत्यादिशास्त्रसिद्धं दृष्टं च । सर्वेषां धातूनां यथोचितं चिकित्सा अनादिसिद्धा । शास्त्रेण तत्रतत्र चिकित्साविशेषनियमसिद्ध्यर्थं तानि तानि रूपाणि कल्पितान्यकल्पितानि व्यवह्रियन्त इति, नैतावता पदार्थतत्त्वनियमसिद्धिरिति ॥ २७ ॥

---

**आनन्द०**—आश्रयाधिक्यक्रममनुरुद्ध्याह—एवमिति । उष्णा भूरिति—तत्रोपाधियोगस्य स्पष्टत्वादौपाधिकत्वस्य सिद्धौ तथा शीतत्वादिकमपीति भावः ।

ननु तुषारो मरुदिति वैद्यकन्तु शीतत्वमिति, तद्विरोधमाशङ्क्य समाधत्ते—कथन्तर्हीत्यादिना—

ननु "वृद्धिह्रासौ समाद्यैर्भवतः" इति वैद्यके दृश्यते । धातोर्वृद्धिह्रासौ समगुणकाधिकगुणकपदार्थोपसेवनेन भवत इत्यर्थः । शीतद्रव्यसम्बन्धाद्वातकोपो दृश्यते । तद्ध्रासे च ह्रासः । तथा च वायोश्शीतत्वं विना नोपपद्यते—"वृद्धिह्राससमानैः सर्वेषां विपरीतैर्विपर्यय" इति न्यायात् । सजातीयगुणकवृद्धिहेतोस्तद्गुणकत्वं स्यादित्युक्तस्य कथञ्चिन्निर्वाहस्सेत्स्यतीत्याह—अयमत्र भाव इति—वाय्वाकाशादौ कल्पितानि शीतोष्णस्पर्शादीनि अग्निजलादावकल्पितानि तानि । एवञ्च वायोश्शीतत्वोक्तिरवकादीनामुष्णत्वोक्तिवन्नेयेति हृदयम् ॥ २७ ॥

स्यादुष्णः कृष्णवर्त्मा सलिलमपि तथा शीतमस्तु प्रकृत्या
स्पर्शोऽन्योऽप्यत्र दृष्टस्स तु भवतु रुमाक्षिप्तलावण्यवच्चेत् ।
मैवं संसृष्टवस्तूपधिनियततया तद्विवेकस्य युक्तेः
प्रायश्शीतो भवेतिप्रभृतिकमपि तद्दाहकत्वाविरोधात् ॥ २८ ॥

**सर्वार्थः**—एवं शीतोष्णभूतनियमोऽपि यथोपलम्भं द्रष्टव्य इति दर्शयति—स्यादिति । उष्णः कृष्णवर्त्मा, तथैव जलमपि शीतमित्युपलभ्यते प्रकृत्या । अत्र कश्चिदाह—अन्योऽपि स्पर्शो दहने सलिले च कदाचिदुपलभ्यते । स तु रुमाक्षिप्तकाष्ठादिलवणत्वन्यायेन तस्यैव परिणतिविशेष इति । तदिदमाह—स्पर्श इति । तन्निराकरोति—मैवमिति । रुमाक्षिप्तकाष्ठादेर्लवणत्वपरिणतिः प्रत्यक्षसिद्धगुणवैषम्यनियमेन युक्ता । अत्र त्वग्न्यादिसंसर्ग एव जलादेरौष्ण्यं तथा सलिलसंसर्ग एव भूतान्तरे शैत्यमित्युपाधिसंसर्गो दृश्यत इति विशेषः । इदमेव स्फोरयति—संसृष्टेति । कथं तर्हि शीतो भव हनुमत इति वह्नेरपि शीतत्वमित्याशङ्क्याह –प्राय इति अयमत्र भावः—न पुनर्वह्नेश्शीतत्वं जायते; अपि तु सीतासंकल्पविशेषेण दाहकत्वमेवोपरुध्यत इति ॥ २८ ॥

---

**आनन्द०**—पूर्वसङ्गतिमभिप्रेत्याह—एवमिति । अत्र कश्चिदाहेति—पार्थिवेऽग्निसंयोगाद्रूपाद्युत्पत्तिदर्शनादत्राप्युत्पत्तिरस्त्वित्याशङ्कार्थः । अत्र त्विति—अग्न्याद्यपगमेऽपि रूपाद्यवस्थानादुत्पत्तिर्युक्ता । इह तु उपाध्यपगमे उष्णाद्यनुपलम्भेन तदपगमात्तत्सन्निधौ तत्स्पर्शस्योपलम्भसम्भवे स्पर्शान्तरकल्पनस्य गौरवपराहतत्वादिति भावः ।

ननु शीतो भव हनूमत इत्यत्र शीतशब्दस्य दहनप्रतिबन्धपरत्वे किं मानमित्यत्राह—अयमत्र भाव इति—तत्र शीतत्वपरत्वेऽपि दाहोपरोधपरत्वं वक्तव्यं, लाघवादावश्यकत्वाच्च दाहप्रतिरोधमात्रपरत्वमित्यर्थः । उद्भूतत्वाऽनुद्भूतत्वपाकत्वाऽभिभूतत्वानभिभूतत्वादिप्रपञ्चस्तु न्यायसिद्धाञ्जने वक्तव्य इत्यभिप्रायेणाह—इतीति ॥ २८ ॥

---

पीता भूः श्वेतमम्भो हुतवहपवनौ रक्तधूम्रौ तथा द्यौ-
र्नीलेति क्वापि शिष्टं तदिह न नियतां वर्णसत्तां ब्रवीति ।
ध्यानार्थं मन्त्रवर्णेष्विव कथितमिदं व्योमवातौ ह्यरूपौ
पीतैकान्त्यं भुवोऽक्षश्रुतिहतमथ तत्प्राचुरी साऽस्तु मा वा ॥ २९ ॥

**सर्वार्थः**—एवं रूपमपि परिशोधयति—पीतेति । अत्र कश्चिदचूचुदत् । पीता भूमिः श्वेतमम्भः वह्निपवनौ रक्तधूम्रौ द्यौर्नीलेति मन्त्रशास्त्रे वर्णविशेषे विविच्यते; तच्च शास्त्रं नाग्रहनिबन्धनम्; अतस्तदनुसारेण नियता वर्णसिद्धिरनुसरणीयेति । तदिदं निराचष्टे—तदिहेति । कथमित्यत आह—ध्यानार्थमिति । केवलं ध्यानार्थमेव तत्तद्वर्णकथनं तेषुतेषु भूतेषु । तत्र दृष्टान्तमाह—मन्त्रवर्णेष्विवेति । अत्रैव हेतुमाह—व्योमेति ।

अरूपावेव ह्याकाशवायू रूपवत्तयाऽत्र निर्दिश्येते। किंच अनेकरूपयुक्ताया भुवः पीतैकान्त्यवचनं प्रत्यक्षविहतं श्रुतिविहतं च; श्रूयते हि यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां, यत्कृष्णं तदन्नस्येति। तर्हि प्राचुर्यविशेषात्तत्तद्वर्णक्लृप्तिरिति चेत्; साऽप्यस्तु मा वा; नास्माकं काचिद्धानिरित्याह—प्राचुरीति ॥ २९ ॥

आनन्द०—अवसरसङ्गतिमाह—एवमिति।

"पञ्च भूतानि देहेषु संहारे ध्यानमादितः कृत्वेत्यारभ्य पीता भूः श्वेतमम्भोऽग्निः रक्तो धूम्रस्समीरणः। नीलं नभस्तथा मन्त्रा अपि तादृशवर्णकाः" इति निर्देश उपपन्नः। प्रत्यक्षविहतं श्रुतिविहतञ्चेति।

ननु श्रुतिबलादेव भुवः कृष्णैकान्त्यमस्तु यद्युपलम्भात्पीतादयोऽपि भुवः तर्हि नीलं नभ इत्युपलम्भादाकाशेऽपि तथाऽस्तु। यदि पञ्चीकरणबलाद् भूतान्तरगतस्य तथा तर्हि पृथिव्यामपि तथाऽस्त्विति चेत्। अत्राहुः तथा सति पृथिव्यां पीतादिप्रतीतिरेव न स्यात्। नीलरूपवत्पृथिवीभागस्याधिकत्वेन तद्रूपेणाऽल्पभागरूपान्तराणामभिभवात् अन्यथा नीले श्वैत्यादिप्रतीतिप्रसङ्गात्।

नचाधिकस्य गृहीतस्याभिभावकत्वमिति वाच्यम्। तथा सति शङ्खे पीतज्ञानस्य भ्रमत्वं न स्यात् विद्यमानस्यैव ग्रहसम्भवात्।

ननु तस्याऽऽकाशेऽप्यभिभवसम्भवादिति चेत् अधिकस्याऽभावात् न च रूपान्तरस्याप्युत्पत्यापत्तिः, इष्टत्वात्। न च वायावपि रूपप्रतीत्यापत्तिः, भवतोऽपि समानत्वात्।

वस्तुतस्तु पञ्चीकरणानुरोधेन भूतान्तरे रूपप्रतीतिर्नास्ति तथा सति रूपभ्रमानुदयप्रसङ्गात्।

नचैवं नभो नैल्यप्रतीतिः कथमिति वाच्यम्। समुद्रे नैल्याध्यासवद्भ्रान्तित्वात् भाष्यन्तु अभ्युच्चयमात्रपरमिति ध्येयम्। अन्नं—पृथिवी। साऽपीति। कार्ष्ण्यस्य रक्तप्रतीतिरस्तु वा मा वा मम सिद्धान्तहानिर्नेति भावः। प्रचुरशब्दात् स्यन्दिन्दीवि प्राचुरी ॥ २९ ॥

कृष्णामाम्नासिषुः क्ष्मां तदिह न विरहं वक्ति रूपान्तराणां
प्रत्यक्षादेर्विरोधात्पचनविषमितं स्पर्शगन्धादि चास्याः।
पाथस्तेजोविशेषे स्फुरति वसुमती भागतोवर्णभेदा
न ह्यम्भः क्वापि दृष्टं विपरिणतगुणं पाकसंस्कारतोऽपि ॥ ३० ॥

सर्वार्थः—तर्हि कथं श्रुत्या पृथिव्याः कृष्णत्वनियम इत्याशङ्क्य परिहरति—कृष्णामिति। यत्कृष्णं तदन्नस्येति श्रुतिर्न पृथिव्या रूपान्तरविरहं वक्ति, प्रत्यक्षादिविरोधात्; उपलभ्यते हि रूपान्तरमपि पृथिव्याम्। एवं पाकभेदविषमितः स्पर्शगन्धादि-

नियमोऽप्यङ्गीकार्यं इति दर्शयति—पचनविषमितमिति। क्वचित्तु कलुषजलादौ पलालवह्न्यादौ च पृथिवीसंसर्गविशेषात् वर्णभेदो दृश्यते; सोऽपि संसर्गविशेषकृत इति यथोपलम्भमङ्गीकार्यं इत्याह—पाथ इति। अम्भसि पुनः पाके सत्यपि गुणविपरिणतिर्न क्वाप्युपलभ्यत इति युक्तमैकरूप्यमेव तत्राभिधातुमिति। दृष्टप्रक्रियामात्रानुसरणेन सर्वमेतदुपपादितमिति दर्शयति—न ह्यम्भ इति॥ ३०॥

---

आनन्द०—आक्षेपसङ्गतिमाह—तर्हीति। कृष्णजल-पलाल-दहनादावपि। रूपान्तरमुपाधिवशादुत्पद्यतामित्याशङ्क्याह—क्वचिदिति—उपाधिनिष्ठ एव प्रतिनियत इति भावः। दृष्टानुसारेणाङ्गीकारो गन्धरसादावपीति तन्निरूपणमपि तुल्यन्यायेन सिद्धमित्यभिप्रायेणाह—दृष्टप्रक्रियेति। भूजलयोरेव रसवत्त्वं भुवो माधुर्यादिसकलरसवत्वं जलस्य माधुर्यमेवेत्यनुसन्धेयम्॥ ३०॥

॥ पाकजापाकजरूपादिभङ्गः॥

---

आरब्धं रूपभेदैरवयवनियतैश्चित्रमन्यत्तु रूपं
काणादाः कल्पयन्तः क्व तदिति कथयन्त्वंशतस्तद्विकल्पे।
नांशेष्वेतत्तदिष्टं न च तदभिहितः कश्चिदंशीति तूक्तं
स्वाधारव्यापकत्वं सुगममिह तथा स्पर्शगन्धादिचैत्र्यम्॥ ३१॥

सर्वार्थः—एवमुक्तेषु शुक्लकृष्णादिषु [रूपादिषु] चित्रमिति किमपि रूपा [द्य] न्तरमस्तीति केचिन्मन्यन्ते तदनुभाषते—आरब्धमिति। तद्विकल्पयति—क्वेति। अवयवरूपादिभिरारब्धं चित्ररूपं क्व वर्तते? अंशेषु वा, अंशवति वा? विकल्पितमर्थं दूषयति—नांशेष्विति। अंशेषु चित्ररूपं वर्तत इति काणादानामेव नेष्टम्; तेषां प्रागेव रूपवत्त्वात्, तस्य च रूपस्यानिवृत्तेः। तस्मादवयविनि चित्रं रूपादि वर्तत इति वक्तव्यम्। तदपि नेत्याह—न चेति। अवयविभङ्गस्य प्रागेव कृतत्वादित्यर्थः। कथं तर्ह्यंशनिष्ठानां रूपभेदानां स्वाधारभूतपटव्यापकत्वमिति चेत्; तदस्माकमेव सुगमम्, पटस्याभावात्; अंशनिष्ठानां रूपभेदानां तत्तदंशव्यापकत्वाच्च। उक्तमर्थं स्पर्शादावपि तुल्यमिति निगमयति—तथेति। यथा चित्रं रूपं तथैव चित्रस्स्पर्शः चित्रो रसः चित्रो गन्ध इति व्यवहारोऽपीति। तत्तदंशे वैचित्रीभेदान्नापूर्वरूपादिक्लृप्तिरिति सर्वमप्यर्थं समुच्चित्य निगमितवान्॥ ३१॥ इति अतिरिक्तचित्ररूपादिभङ्गः॥

---

आनन्द०—प्रसङ्गमभिप्रेत्याह—एवमिति। केचिदिति—नैयायिकैकदेशिनः। प्राग्रूपवत्वेऽपि तन्नाशे रूपान्तरमुत्पद्यतामित्यत आह—तस्य चेति। स्वाधारभूतेति—समुदायस्याधारत्वमित्यर्थः। यद्वा स्वशब्दः अंशपरः स्वमावनादिन्यायेन समुदायस्य धारो यस्येति समुदायपरः॥ ३१॥

स्नेहः प्रत्यक्षसिद्धो यदुपधिरुदके स्निग्धधीस्स द्रवत्वा-
त्तोयत्वाच्चातिरिक्तः क्वचिदिह यदसौ भाति ताभ्यां विनाऽपि ।
सौवर्णादिद्रवाणां न च भवति यतः पांसुसंग्राहकत्वं
पर्यायानुक्तिरस्मिन् भवति विगमता चेति केचिद् गृणन्ति ॥ ३२ ॥

**सर्वार्थः**—अत्र केचित् स्नेहाख्यगुणान्तरमस्तीत्याहुः । अपरे पुनस्तद्रूपादावन्तर्भावयन्ति । उभयमपि पक्षमनुक्रमादुपपादयति; उभयोरपि पक्षयोरेकदेशिमतत्वेन स्वीकारात् । तत्र प्रथमपक्षे प्रत्यक्षं प्रमाणयति **स्नेह इति** । **यदुपधिरुदके स्निग्धधीरीति**—उदके स्निग्धधीर्यद्गुणोपाधिकेत्यर्थः । नन्वसौ स्नेहो द्रवत्वात्तोयत्वाच्च नातिरिक्त इति कश्चित् । तन्नेत्याह—**अतिरिक्त इति** । तत्र हेतुमाह—**क्वचिदिति** । असौ–स्नेहः । क्वचित्—पृथिव्याम् । ताभ्यां–द्रवत्वतोयत्वाभ्यां विनाऽपि प्रतिभातीति यतः, अतः द्रवत्वतोयत्वाभ्यामतिरिच्यते स्नेह इत्यर्थः । अयं चात्र हेतुः—द्रवत्वमेव स्नेहश्चेत् सौवर्णादिद्रवाणां पांसुसंग्राहकत्वं स्यात् । न च तत् दृश्यते । अतो द्रवत्वादतिरिक्तः स्नेहः । तदिदमाह—**सौवर्णादीति** । अपि च पर्यायानुक्तिरपि द्रवत्वस्नेहयोर्भेदं साधयति; यत्र यत्र स्निग्धत्वं तत्र सर्वत्र द्रवत्वमिति व्यवहाराभावात् । यथा मणिकृपाणदर्पणादौ सुवर्णे च स्नेहाभावस्य द्रवत्वस्य च भवतैवोक्तत्वात् । **विषमता चेति** द्रवत्ववैषम्ये स्नेहवैषम्यं नास्ति; स्नेहवैषम्ये द्रवत्ववैषम्यं चास्तीति केषांचित् पक्षः ॥ ३२ ॥

---

**आनन्द०**—भूतानांप्रतिनियतगुणप्रसङ्गे तन्न्यायेन जलमात्रसाधारणगुणतया परमतप्रसिद्धस्नेहचिन्तामधिकृत्य प्रथमं वैशेषिकमतानुसारिणामस्मदेकदेशिनां मतमाह—**अत्र केचिदिति** । **अपरे पुनरिति**—न्यायतत्त्वकारादयः । **यदुपधिरुदके-स्निग्धधीरिति**—उदके स्निग्धधीर्यद्गुणविषयेत्यर्थः । **स्निग्ध इति** प्रत्यक्षाऽसाधारणकारणगुणः स्नेह इति तल्लक्षणं सूचितम् । **पृथिव्यामिति**—मणिकृपाणादौ पृथिवीविकार इत्यर्थः ।

ननु क्वचित्ताभ्यां विनाऽपि व्यवहारो गौणोऽस्तु मृदुः शब्दः कटुश्शब्द इति-वदित्यत्राह—**अयञ्चात्र हेतुरिति** । **सौवर्णादीति**—पांसुसंग्राहकत्वस्य स्तत्कार्यत्वादिति भावः । **पर्यायानुक्तिरिति** । किञ्च समव्याप्त्यभावाद् द्रवत्वमेव, न स्नेहत्वमित्यत्राह—**यत्रेति** । किञ्च द्रवत्वमेव स्नेहश्चेदेकवैषम्ये उभयोरपि वैषम्यप्रसङ्गस्तु नास्तीति न द्रवत्वमेव स्नेहत्वमित्याह—**द्रवत्ववैषम्य इति** ॥ ३२ ॥

॥ इति स्नेहाख्यगुणसद्भावपक्षः ॥

अन्ये स्नेहं तु रूपं किमपि निजगदुः स्निग्धवर्णोक्त्यबाधात्
इष्टत्वात् दुस्त्यजं तद्भवति खलु भिदा काऽपि गन्धादिकेऽपि ।
अप्त्वादेः पांसुसङ्गस्सुगममिदमयस्कान्तजात्यादिनोत्या
न ह्यन्यत्तत्र क्लृप्तं न च न दृढमितं पार्थिवे पिच्छिलत्वम् ॥ ३३ ॥

सर्वार्थं—अन्ये पुनरन्यथा आहुरित्याह—अन्य इति इत्थं किल ते मन्यन्ते—स्निग्धवर्णोक्त्यबाधात् स्नेहाख्यं रूपं किमप्यधिगच्छाम इति। तदेवोपपादयति—दृष्टत्वादिति। अथापि रूपसामान्यात् स्नेहाख्यरूपविशेषे वैषम्यं दृश्यत इत्याशङ्क्य तत् प्रतिबन्द्या निराकरोति—भवतीति। दृष्टं खलु गन्धादिष्वपि तत्तद्धर्मिग्राहकप्रमाणसिद्धं वैषम्यम्, न हि कस्तूरीकरीषादिष्वेकरूपो गन्धः; न च दुरालभाशतपत्रादिष्वेकरूपः स्पर्शः। एवं रसादिष्वपि द्रष्टव्यम्। कथं तर्हि स्नेहमन्तरेण पांसुसंग्रह इत्यत्राह—अप्त्वादेरिति। अप्त्वं स्नेहश्च समानाधिकरणमिति हि भवता प्रतिपाद्यते तथा च सत्यप्त्वमेव स्नेहकार्यपांसुसंग्रहे नियामकमस्तु। कथं जातिरेव गुणविशेषमन्तरेण कार्यविशेषनियामिकेत्यत्र दृष्टान्तमाह—अयस्कान्तजात्यादिनोत्येति। अयस्कान्तजातिविशेष एवायस्संग्रहणे निमित्तम्; न ह्यन्या तत्र कारणक्लृप्तिः। एवमत्रापि तोयत्वजात्यतिरिक्तस्नेहरूपगुणक्लृप्तिर्न युक्तेत्यर्थः। किंच स्नेहो जलैकनियत इति स्नेहवादिभिरभिधीयते। अथापि पार्थिवे पिच्छिलत्वं दृश्यते। अतस्तत्तद्वस्तुनियतरूपविशेषाद्यतिरेकेण स्नेहो नाम कश्चिन्नास्तीत्यपरेषां पक्षः॥ ३३ ॥

---

आनन्द०—पूर्वसङ्गतिमभिप्रेत्याह—अन्ये पुनरिति—अतिरिक्तत्वे किं व्यवहारः प्रमाणमुत कार्यमिति विकल्पमभिप्रेत्याह—स्निग्धेति—स्निग्धो वर्णः स्निग्धं रूपमिति व्यवहाराद्रूपमेव व्यवहारनिदानमित्यर्थः।

ननु रूपस्यैव स्नेहव्यवहारनिमित्तत्वे रूपमात्रे व्यवहारस्स्यात्। नचेष्टापत्तिः। तन्मात्रे व्यवहाराऽभावात्। अतो नाभिन्नमित्याशङ्क्य परिहरति—अथेत्यादिना। एवं रसादिष्विति—निम्बचिञ्चागुडादिषु रसवैषम्यं दृश्यत इत्यर्थः। द्वितीयं शङ्कते—कथं तर्हीति।

नन्वप्त्वमेव स्नेहकार्यकारि चेञ्जतुनिष्यासादौ कथं तत्कार्यमित्यत्राह—किञ्चेति—उभयसमाधेयत्वान्नैकस्य भार इति भावः। पिच्छिलत्वं दृढसंयोगनिदान—पांसु सङ्ग्रहः। तदुक्तं न्यायसिद्धाञ्जने—"दुष्करवियोगस्वभावसंयोगस्पर्शत्वं पिच्छिलत्वमिति"। निष्यासादेस्सग्राहकत्वातिशयात्स्नेहाधिक्यं स्यादिति चेत्। इष्टापत्तिरिति भावः॥ ३३ ॥ इति स्नेहस्य रूपविशेषान्तर्भावपक्षः॥

मासृण्यादिप्रभेदोपहितगुरुतयाऽबादिनिम्नाभिमुख्यं
माषव्रीह्यादिराशौ भवति च पतने तादृशं तारतम्यम् ।
किंचादृष्टान्यक्लृप्तिर्ज्वलनपवनयोर्न क्रियायां तथाऽस्मि-
न्नित्येकेऽन्ये तु दृष्ट्वा गुणमधिकमुशन्त्यादिमस्यन्दहेतुम् ॥ ३४ ॥

**सर्वार्थः**—एवं द्रवत्वेऽपि पक्षभेदावाह—**मासृण्यादीति** । मासृण्यादिप्रभेदावच्छिन्न-गुरुत्वमेवाबादीनां निम्नाभिमुख्ये कारणम्, न पुनर्द्रवत्वं नाम कश्चिद्गुणः । इदं च पतने तारतम्यं माषव्रीह्यादिराशौ दृष्टमिति यथादर्शनमेवानुसरामः । न हि माषादि-राशौ पतनाद्यर्थं गुणान्तरं परिकल्प्यते भवद्भिः । किंचाग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्-[गमन]पवनमित्यत्रादृष्टातिरेकेण गुणान्तरं भवद्भिर्न कल्प्यते । एवं सलिलस्यापि निम्नाभिमुख्येन सरणमित्यत्रादृष्टव्यतिरेकेण न गुणान्तरं कल्पनीयम् । तदिदमाह—**किंचेति** । दृष्टान्तदृष्टं पक्षे योजयति—**तथेति** । एवमेकदेशिनां पक्षं परिसमाप्यान्येषां पक्षमनुवदति—**अन्ये त्विति** ॥ ३४ ॥

---

**आनन्द०**—अब्धर्मस्नेहप्रसङ्गेन तद्धर्मतया प्रसिद्धं द्रवत्वं निरूप्यत इति दर्शयति—**एवमिति**—न सिद्धान्ते गुरुत्वातिरिक्तं द्रवत्वं दृश्यते-तत्रापि निम्नाभि-मुख्येनाऽऽद्यस्यन्दनं दृश्यते इति तत्कारणमस्त्येव (यदि तत्र पतनमेव) यत्र लक्षणभागे माषलिकुचफलादेर्गमनं तत्र स्यन्दनमस्त्येवेति भावः । गुरुत्वानङ्गीकारेण पक्षान्तरमाह—**किञ्चेति** । गुणान्तरपक्षमाह—**अन्येषामिति** । **पक्षमिति**—इदं द्रवमिति द्रवत्व-प्रत्यक्षं दृश्यते तत् तव न बाध्यम् । नाप्यन्यथासिद्धं । तथाहि न तावज्जलस्वरूपं । करकादौ काठिन्यावस्थायामपि तथा व्यवहारप्रसङ्गात्, नापि पूर्वोक्तं गुरुत्वं तस्याऽ-प्रत्यक्षत्वात् । नापि विशिष्टसंयोगः तूलपिण्डादौ तदप्रतीतेः । नापि जलत्वविशेषितं तत्-घृतलाक्षादिष्वसम्भवात् । तस्मात् द्रवत्वं धर्मान्तरमेव आदिमस्यन्दनकारणमिति । अनेन मद्यं तक्रमपि स्पष्टम् ॥ ३४ ॥ **इति द्रवत्वान्तर्भावबहिर्भावपक्षौ ॥**

---

तोये दृष्टं स्वभावाद् घृतकनकमुखे पाकजन्यं द्रवत्वं
तैलादौ नैव पाकानुगम इति भवेत्तादृशावंशक्लृप्तिः ।
भस्मीभावाद्यनर्हे यदुत कणभुजा सूत्रितं तैजसत्वं
हैमादिश्लिष्टभौमावयवनयविदामित्थमेतन्न हृद्यम् ॥ ३५ ॥

**सर्वार्थः**—उक्तस्य द्रवत्वस्य स्वाभाविकास्वाभाविकादिविभागं दर्शयति—**तोय-इति** । स्वभावादेव तोये द्रवत्वं दृष्टम्; घृतकनकमुखे पाकजन्यं द्रवत्वं दृष्टम्; उभयमपि तथैवाङ्गीकर्तव्यम् । तैलादौ पाकानुगमो न दृष्ट इति तादृशावंशक्लृप्तिः । एवं दृष्ट-प्रक्रियामुक्त्वा कणभुगभिमतमर्थान्तरमनूद्य दूषयति—**भस्मीभावादीति** । अत्यन्तानल-

संयोगेऽनुच्छिद्यमानद्रवत्वेन हेमादीनां तैजसत्वमुक्तं कणभुजा। तद्धेमादिश्लिष्टभौमावयवे व्यभिचारात् दुःस्थमेव। तुल्यं खलु हेम्ना तच्छ्लिष्टभौमावयवानामत्यन्ताग्निसंयोगेऽपि भस्मीभावानर्हत्वम्; अथापि यथा तेषां भौमत्वं तद्वद्धेम्नोऽपि तैजसत्वमेव साधयितुं न शक्यत इत्यर्थः। अन्यत् सर्वं न्यायपरिशुद्धौ विस्तरेणोक्तमस्माभिरिति नेह प्रतन्यते ॥ ३५ ॥

---

आनन्द०—पूर्वशेषत्वान्न सङ्गत्यन्तरापेक्षेत्याह—उक्तस्येति। स्वभावादेव—अग्निसंयोगादिकं विनैवेत्यर्थः। तैलादाविति।

ननु तत्रापि स्वाभाविकमेवाऽस्तु किमबंशक्लृप्त्या? अन्यथा सुवर्णेऽपि पार्थिवातिरिक्ततेजःकल्पनाप्रसङ्गादिति चेत्। उच्यते। अन्यत्र पृथिवीमात्रे नैमित्तिकं दृष्टमिति तैलस्य पार्थिवत्वाच्छैत्योपलम्भेनाप्यब्भागस्यापि अवश्यकल्प्यत्वाच्च कललजल इव जलद्रवत्वमेवेति। न च सुवर्णंप्रतिबन्दो, अन्यत्र तेजसो द्रवत्वादृष्टेः। पार्थिवे तद्दृष्टेश्चेति।

केचित्तु कललजलन्यायेन गन्धोपलम्भस्याऽन्यथासिद्धेः स्वाभाविकद्रवत्वशैत्याभ्यामाप्यमेव तैलमित्याहुः।

अन्ये तु पार्थिवत्वेऽपि सांसिद्धिकद्रवत्वमस्तीति वदन्ति, वेदनिष्ठप्रक्रियादृष्टप्रकाराः। अत्यन्तानलेति—परिदृश्यमानद्रवत्वाधिकरणं न पार्थिवं अत्यन्तानलसंयोगेसत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् जलवत्। तथा न जलं नैमित्तिकद्रवत्वाधिकरणत्वात्। नापि वाय्वादि रूपाधिकरणत्वात्। तस्मात्तत्तैजसं उक्तभिन्नत्वे सति रूपवत्वात् प्रभावदित्यादिभिरित्यर्थः।

केचित्तु उक्तञ्च तैजसं अत्यन्तानलसंयोगे सत्यपि अनुच्छिद्यमानतत्प्रयोज्यद्रवत्वाधिकरणत्वात् व्यतिरेकेण घटवदिति वदन्ति। हेमादिश्लिष्टेति—उपष्टम्भकस्य गुरुतया पार्थिवत्वादिति भावः। उपष्टम्भकरूपपरावृत्तिभस्मीभावप्रतिबन्धकद्रव्यसंयुक्तं, अत्यन्तानल संयोगे सत्यपि परावृत्तिरूपाऽनधिकरणत्वात् भस्मानारम्भकत्वाच्च जलमध्यस्थौषधवत्। तद्द्रव्यं न पार्थिवं रूपपरावृत्त्यादि प्रतिबन्धकत्वात् जलवदित्यादिना तत्सिद्धिरित्यत्राह—अन्यदिति—प्रत्यक्षसिद्धस्य द्रवत्वाश्रयस्य पार्थिवत्वातिरिक्तस्याऽसिद्धया परिदृश्यमानं पार्थिवं नैमित्तिकद्रवत्वाश्रयत्वाज्जतुवदित्यनुमाने प्रतिरोधाऽभावादबाधाच्चाऽन्यत्राऽदृष्टस्य रूपपरावृत्तिप्रतिबन्धकत्वस्य दृष्ट एव पार्थिवविशेषे कल्पनौचित्याद्धर्मिकल्पनात इति न्यायादितिभावः॥ ३५ ॥

॥ इति सांसिद्धिकपाकजद्रवत्वाधारनियमादिः ॥

पातस्तुल्योऽम्बुभूम्योः पवनदहनयोस्तिर्यगूर्ध्वंप्रवृत्त्या
पाते भेदात् पलादिप्रतिनियतिरपि ह्यंशवैषम्यतः स्यात् ।
भागानां तारतम्याज्जलशिखिमरुतां स्यन्दनादे[र्भिदेष्टा]विशेष-
स्तस्मात् सर्वोऽप्यदृष्टादिह भवतु न चेत् स्याद् गुणोऽन्योऽनलादौ ॥३६॥

सर्वार्थः—गुरुत्वाख्यस्य गुणस्यानुमानगम्यत्वं प्रतिबन्द्या प्रतिक्षिपति—पात इति । अग्नेरूर्ध्वंज्वलनम् इत्यादिना पवनदहनयोस्तिर्यक्प्रवृत्तिरूर्ध्वप्रवृत्तिश्च यथा-केवलमदृष्टात्परिकल्प्यते; एवमम्बुभूम्योरपि पातः केवलमदृष्टादेवास्तु, किमनेन कल्पितेन गुरुत्वेन, तत्कल्पने गौरवात् ? कथं तर्हि गुरुत्वाभावे मानवेलायां द्विपलादिव्यवहारः पातभेदात् परिकल्प्येत ? तदपि चांशवैषम्याद्योयुज्यत इत्याह—पाते भेदादिति । पञ्चपणनिक्षेपाद्दशपणनिक्षेपे हि पातवैषम्यं दृश्यते; तत्तदाधिक्यमन्तरेण न भवति । निष्कनिक्षेपेऽप्यंशाधिक्यमस्त्येव; निष्कार्धनिक्षेपात्, अन्यथा गुरुत्वाधिक्यस्याप्ययोगात् । तथा च तेनैवांशवैषम्येण पातभेदः । तथा च किमजागलस्तनवदप्रयोजकेन गुरुत्वा-धिक्येन ? दृष्टा च भूतान्तरेषु गुणान्तरकल्पनामन्तरेणांशाधिक्यादेव कार्यभिदा; यथा—अग्नेरूर्ध्वंज्वलनादौ । जाज्वल्यते हि वह्निरंशाधिक्ये; तदभावे केवलं ज्वलति । एवं पोपवीति च मरुत् अंशाधिक्ये, तदभावे केवलं पवते । एवं जलमप्यंशाधिक्ये क्रियासम-भिहारेण स्यन्दते, तदभावे न स्यन्दत एव । तस्मात् सर्वोऽप्यदृष्टादेव भवतु; अन्यथा अग्न्यादावपि गुणान्तरं कल्प्यं स्यादित्याह—न चेदिति । न ह्यग्न्यादावूर्ध्वंज्वलनादि-कारणं भवद्भिः कल्प्यते; अतो गुरुत्वस्यानुमानिकत्वमनुमानवार्तानभिज्ञतानिबन्धन-मिति ॥ ३६ ॥

---

आनन्द०—अवान्तरसङ्गतिं दर्शयति—गुरुत्वाख्यस्येति—उभयनिष्ठगुणप्रसङ्गः सङ्गतिरिति भावः ।

ननु घटायां तोलनादौ पाततारतम्येण फलभेदकल्पनं कथमित्यत्राह—कथन्त-र्हीति । द्वे फले यस्येति बहुव्रीहिः । पात्रादित्वात्साधुः । एवं दशपणेत्यपि द्रष्टव्यम् ।

केचित्तु पञ्चपणानि दशपणानि यस्मिन्समूह इति विगृह्य साधयन्ति ।

निष्कनिक्षेपेति । समप्रविभागपरभागात् षष्ठी समासः । इदं सर्वं न्यायतत्त्वे—"अधः पतनस्वभावत्वं गुरुत्वमित्यारभ्य तर्ह्यूर्ध्वंज्वलनतिर्यक्पवनाभ्यां पावकपवनयोरपि गुणद्वयकल्पनं स्यात् । स्वभावादृष्टात् ईश्वरसंकल्पविशेषाद्वा तत्सिद्धिरिति चेत् तत्रापि तथा स्यादविशेषादि"त्यन्तेनोक्तं स्मारयति—तस्मात्सर्वोऽप्यदृष्टादित्यादिना ॥ ३६ ॥

॥ इति गुरुत्वाख्यगुणानुमानभङ्गः ॥

त्वक्संवेद्यं गुरुत्वं कतिचिदभिदधुस्तत्तु तेषां गुरुत्वं
नोर्ध्वं स्पृष्ट्वा प्रतीमस्तदिह परधृते नाप्यधस्तात्स्पृशन्तः।
न ह्यन्यालम्बितोऽर्थो भवति लघुतरः स्पर्शनं नोपरुद्धं
तेनाक्रान्तौ प्रणुत्तिक्रम इति गुरुणा तर्कितस्तोलनाद्यैः ॥ ३७ ॥

**सर्वार्थः**—तर्हि गुरुत्वस्य प्रत्यक्षत्वमस्त्विति वदन्तमपि प्रतिक्षिपति—**त्वक्संवेद्यमिति**। त्वचा गुरुत्वं संवेद्यत इति ये ह्यभिदधुः तत्तु तेषां गुरुत्वमित्यधिक्षेपवादः। तत्र हेतुमाह—**नोर्ध्वमिति**। यदि गुरुत्वं त्वचा गृह्येत, रुचकादिष्वधः—स्पर्शवदूर्ध्वस्पर्शेऽपि गुरुत्वं प्रतीयेत। न च तथा प्रतीमः। किंचाधस्तादपि स्पर्शनेन क्वचित् गुरुत्वं न प्रतीयते। न हि परधृते वस्तुन्यधस्तादपि स्पृशन्तो गुरुत्वं प्रतियन्ति। नन्वन्यालम्बिते लघुत्वमेव तदा जातमिति वक्तुं न शक्यते; अन्यस्य प्रयासेन धारणाभावप्रसङ्गात्। अस्तु गुरुत्वमनुवर्तत इति; अथाऽप्यन्यालम्बिते स्प्रष्टुः स्पर्शनमुपरुद्धमिति च वक्तुं न शक्यमित्याह—**स्पर्शनमिति**। स्पर्शनेन्द्रियोपरोधे गुणान्तरोपलम्भस्याप्यभावप्रसङ्गादित्यर्थः। कथं तर्हि लोके गौरवतारतम्यं हस्तेन परीक्ष्यत इत्यत्राह—**तेनेति**। गुरुणा द्रव्येण हस्ताद्याक्रान्तौ प्रणोदनक्रमविशेषस्य उपलब्धत्वात् हस्ततोलनाद्यैः प्रणोदनक्रमस्तर्कित इत्यर्थः। यदि गुरुत्वमस्ति; तदा गुरुत्वनिमित्तकः प्रणोदनक्रमः। यदि वा गुरुत्वं नास्ति, तदा गुरुत्वाश्रयत्वेन परिकल्पितद्रव्याधिक्यनिबन्धनः प्रणोदनक्रमः; सर्वथा गुरुत्वप्रत्यक्षत्वं नास्तीति भावः॥ ३७॥

---

**आनन्द०**—आक्षेपसङ्गतिमाह—**गुरुत्वस्येति**। **रुचकं**—स्वर्णविकारः। **अन्यस्येति**—तेन गुरुत्वस्याऽभावादिति भावः। **गुणान्तरोपलम्भस्येति**—गुरुत्वग्रह एव प्रतिबन्धो न स्पर्शादिग्रहोऽपि। यथा दोषेण श्वैत्यग्रहप्रतिबन्धेऽपि शङ्खत्वादिग्रहप्रतिबन्धो नास्ति तथाऽत्रापि गुरुत्वस्य प्रत्यक्षत्वमसिद्धमिति न तथा कार्यप्रमाणकं प्रतिबन्धकत्वं कल्पयितुं शक्यते।

**किञ्च** बहुपुरुषधार्ये प्रतिबन्धादर्शनात्कल्पान्तरपरिग्रहे गौरवञ्चेति भावः। **तोलनाद्यैरिति**—तेन प्रणोदन भेदेन गुरुत्वतारतम्यमनुमीयत इति भावः **सर्वञ्चेति**।

ननु तोलनादि सहकारित्ववशाद् गुरुत्वप्रत्यक्षं भवतु, नचातिप्रसङ्गः तोलनधारणादिसहकारिसत्वे इष्टापत्तेः। न च सन्निकर्षे सति सहकार्यन्तरापेक्षा न दृष्टेति वाच्यम्। षड्जादिसाक्षात्कारे कुङ्कुमगन्धादिसाक्षात्कारे च गन्धर्वागमश्रवणतैलादिसंयोगसापेक्षत्वदर्शनात्।

किञ्च न तत्र लिङ्गमपि वक्तुं शक्यं गुरुत्वज्ञानाऽभावेन व्याप्तिज्ञानाऽभावात्।

नचाधः पतनश्रमादिना किञ्चित्कारणमनुमीयमानं गुरुत्वं भवति द्रव्येणैवाऽन्यथासिद्धेरिति चेत्। अत्राहुः। द्रव्यस्वरूपातिरिक्तं यद्यभ्युपगम्यते तदा प्रत्यक्षत्वं न सम्भवति। तथा हि। न तावच्चाक्षुषम् अन्धादिभिरग्रहणप्रसङ्गात्। नचेन्द्रियान्तरैः तेषां रसाद्यतिरिक्ताऽग्राहकत्वात्। नापि स्पार्शनमात्रेण। ग्रहणाऽदर्शनात्। न च कार्यान्तरेण तद्ग्रहः तदा तौलनादाविव सहकार्यन्तरैरनुमेयत्वात्। किञ्च, वस्त्रान्तरितस्य सन्निकर्षाऽभावेऽपि तोलनादिनाऽनुमेयत्वस्याऽवश्यकत्वे सर्वत्र तथा भावाच्च। अन्यथा घटादावधःपातरूपक्रियासहकारिवशाच्चाक्षुषत्वमपि स्यात्। नचेष्टापत्तिः—गृहीतव्याप्तिकस्य फलादावपि रस-चाक्षुषत्वादि-प्रसङ्गे क्रमेणानुमानविलोपप्रसङ्गादिति। मूलं तेन गुरुणा—पदार्थेनाक्रान्तौ तोलनाद्यैरनुमीयत इत्यर्थः॥ ३७॥

॥ इति गुरुत्वप्रत्यक्षभङ्गः॥

---

क्षित्यादौ सांख्यदृष्ट्या यदि किमपि तम [ः] स्कार्यमिष्टं गुरुत्वं
तद्वत् कल्प्येत वह्निप्रभृतिषु न कथं सत्त्वकार्यं लघुत्वम्।
यादृग्भूताद् गुणात्तद्वदसि च पतनं तादृशादस्तु तस्मात्
क्लृप्तिस्त्वन्यस्य गुर्वी भवतु तदधिकं काममाप्तोपदेशात्॥ ३८॥

**सर्वार्थः**—इत्थमनुमानगम्यत्वं प्रत्यक्षगम्यत्वं च गुरुत्वस्य प्रतिक्षिप्तम्। एवं तर्हि गुरुत्वमेव प्रतिक्षिप्तं भवति; तथा चागमविरोधः। सांख्यास्तु गुरुवरणकमेव तमइति तमःकार्यत्वेन गुरुत्वमुपपादयन्ति। यत्सांख्योक्तं न तत्सर्वमपि प्रतिक्षिप्यते; अनुकूलमविरुद्धं चाङ्गीक्रियते वेदवादिभिरिति। एतत्प्रतिबन्द्या निराकर्तुमनुवदति—क्षित्यांदाविति तदेव प्रतिबन्द्या प्रतिक्षिपति—तद्वदिति। यदि सांख्योक्तमिति गुरुत्वं स्वीक्रियेत, तर्हि सत्त्वं लघु प्रकाशकमिति तैरेवोक्तं सत्त्वकार्यं लघुत्वमपि वह्न्यादौ स्वीक्रियेत। न च तथा स्वीकृतमिति भावः। किंच पतनानुपपत्त्या हि गुरुत्वं कल्प्यते प्रकृतिपरिणामविशेषे पृथिव्यादौ। तच्च गुरुत्वं यादृग्भूतात्तमसो भवतीति वदसि। तादृशादेव तस्मात् तमसः पतनमस्तु, किमनेन मध्ये परिकल्पितेन गुरुत्वेनेत्याह—यादृग्भूतादिति। अन्यथा लघुत्वमपि परिकल्प्येतेति प्रतिबन्द्यनुवर्तते; तस्मादधिकस्य गुरुत्वस्य परिक्लृप्तिर्लघुत्वक्लृप्तिवत् गुर्वी। अथापि तेषुतेषु शास्त्रेषु माषसर्षपादोनामन्येषामपि पर्वतपरमाण्वादोनां गौरवतारतम्यव्यवहारो दृश्यत इति चेत्, तर्हि आगमिकमेव गुरुत्वमङ्गीकुर्महे। अतो नास्माकं क्वचिद्विरोधः। अविरोधमेवाह—काममिति। आगमप्रामाण्यावलम्बनेन अतिरिक्तगुरुत्वाङ्गीकारे[ऽपि] नास्माकं काचित् क्षतिः। तस्याप्यागमस्य पूर्वोक्तप्रक्रियया विषयभेदाङ्गीकारेऽपि नास्माकं प्रधानार्थविरोधः।
॥ ३८॥

आनन्द०—आक्षेपसङ्गतिमेव दर्शयति—इत्थमिति। केचित्तु प्रसङ्गसङ्गतिमूचुः। "सत्वं लघुप्रकाशकमिष्टं उपष्टम्भकञ्च रजः, गुरु वरणकमेव तमः" इति सप्ततिवचनपुरस्सरं सांख्यपक्षमनुवदति—सांख्याः खल्वित्यादिना—"गुरु वरणकमेव तमः" इति तमो गुरुत्वजनकमावरणजनकञ्च। तेन तज्जन्यगुरुत्वसिद्धिरिति भावः।

ननु सांख्योक्तिमात्रेण कथमङ्गीक्रियते सांख्यस्मृतेस्स्मृत्यनवकाशदोष इत्यादिना प्रतिक्षेपादित्यत आह—यत्सांख्योक्तमिति। न च तथेति। यद्यपि नैयायिकैर्न स्वीकृतम् तथापि सिद्धान्ते लघुत्वमप्यङ्गीक्रियतामिति चेत्। अत्र वदन्ति। किमागमबलात्स्वीकारो युक्तिबलाद्वा। नाद्यः। तदागमस्याप्रमाणत्वात्। द्वितीय आह—किञ्चेति। तर्ह्यागमिकमिति।

ननु पर्वतपरमाण्वादेरुद्धरणादौ आयासतारतम्यदर्शनादित्यनुमानमस्तु तथा तोलनायामप्यनुमानमस्तु तत्तद्द्रव्यस्वरूपेणाऽन्यथासिद्धेः, तथा सति चक्षुषा द्रव्यग्रहे सन्देहाऽभावप्रसङ्गात्। तस्मादन्यद् गुरुत्वमिति चेत्। उच्यते। तमो गुण एव गुरुत्वं। तच्च द्रव्यादन्यदेव। अत एव चाक्षुषत्वापादनेन न सन्देहलोपः।

नचाकाशादावपि गुरुत्वप्रसङ्गः तमो गुणसत्वादिति वाच्यम्। गुरुत्वोत्पादनेऽपि तुल्यत्वात्। अस्तु वा तत्तत्क्रियाजनकद्रव्यत्वमेव गुरुत्वं। न च सन्देहाऽनुपपत्तिः। तत्तद्द्रव्यग्रहेऽपि क्रियाजनकत्वाऽग्रहात्।

यद्वा न गुरुत्वे सन्देहः अपि तु परिमाणतत्तारतम्ये। तथा च दीर्घतरेषु दीर्घरूपपरिमाणग्रहेऽपि यथाऽयं दीर्घतरो न वेति सन्देहः, तत्रापि तोलनादिना तन्निर्णय इति न दोषः। आगमप्रामाण्यावलम्बनेनेति—सांख्यागमप्रामाण्यावलम्बनेऽपि प्रधानार्थविरोधो नास्तीत्यर्थः। मूलं यादृग्भूतात् तद्वदसि—यादृशात्तमोगुणाद्गुरुत्वं वदसि तादृशादेव तमोगुणात्पतनक्रियाऽस्तु किमतिरिक्तगुरुत्वेनेति भावः॥ ३८॥

॥ इत्यागमिकगुरुत्वनिर्वाहः॥

---

एकव्द्यादिप्रतीतिव्यवहृतिविषयो यो गुणस्सा तु संख्या
क्वाप्यैक्यं नित्यसिद्धं क्वचिदवयवगैर्जन्यते तत्तदैक्यैः॥
द्वित्रित्वाद्यं त्वनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यं
तत्तत्पुंमात्रदृश्यं क्षणिकमिति कथा काऽपि कौतस्कुतानाम्॥ ३९॥

सर्वार्थः—अथ संख्यायाः परिशोधनार्थं प्रागेव संख्याविषयां प्रक्रियामनुवदति—एकेति। एकव्द्यादिप्रतीतिव्यवहारविषयो यो गुणस्सा संख्या। सा पुनः क्वापि—परमाण्वादौ नित्यसिद्धा, क्वचित्—व्द्यणुकादौ तत्तत्कारणगतैरैक्यैर्जन्यते। द्वित्वत्रित्वादिकं तु अनेकावगतिसहकृतैकैकनिष्ठैक्यजन्यम्। तादृशी चावगतिरपेक्षाबुद्धिरित्यभिधीयते। सा चापेक्षाबुद्धिः तत्तत्पुरुषमात्रनिष्ठेति तज्जन्यं द्वित्वत्रित्वादिकं तत्तत्पुरुषैरेव दृश्यते; तत्कालमात्रभावित्वात्। तच्च क्षणिकमिति कौतस्कुतानां तार्किकाणां—कथा; काऽपि श्रूयत इति शेषः॥ ३९॥

आनन्द०—गुरुत्वगुणनिरूपणप्रकरणसङ्गत्या संख्यानिरूपणं सङ्गमयन् उपोद्धातसङ्गतिमाह—**अथेति**। **एकत्व्यादीति**—एकशब्दो द्विशब्दश्च शब्दपरः प्रतीतिपरो वा ? तथा चैक इत्यादिप्रतीतिविषयगुणवृत्तित्वे सति गुणत्व(साक्षाद् ) व्याप्य जातिमत्त्वं लक्षणं द्रष्टव्यम् ।

**परमाण्वादौ नित्यसिद्धेति**—परमाणुगतैकत्वस्याऽजन्यत्वादिति भावः। **कारणगतैरैक्यैः**—कारणगतैकत्वैरित्यर्थः। **अनेकावगतीति**—इदमेकं इदमेकमित्यनेकावगतिरूपाऽपेक्षाबुद्धिर्निमित्तकारणं। द्वित्वाद्युत्पत्तौ आश्रयगतैकत्वं समवायिकारणम्। यदीयापेक्षाबुद्धिर्निमित्तकारणं तस्यैव द्वित्वादिप्रत्यक्षं। निमित्तकारणत्वेऽपि तन्नाशात् द्वित्वादिनाश इति तन्मत इत्यर्थः। कौतस्कुतानामित्यत्र कस्कादित्वात्सत्वं कुत। कुत इति व्यवहरन्तीति शेष इत्यर्थः ॥ ३९ ॥

॥ इति कणादोक्तसंख्याप्रक्रिया ॥

---

तत्र द्वित्वाद्यपेक्षामतिविषयभिदामात्रमेवास्त्वभीष्टं
द्वित्वाद्युत्पत्तिमूलं यदभिलपसि तद्व्याहृतेरस्तु मूलम् ।
द्वित्वादिप्रागभावैर्ध्रुवमिह हि विना धीविशेषोऽभ्युपेयः
तन्मूलं निर्गुणानां विगणनमपि च स्थापनीयं गुणानाम् ॥ ४० ॥

**सर्वार्थः**—अनूदितेऽर्थे द्वित्वादिकं निराकरोति - **तत्रेति**। यादृशापेक्षाबुद्धिविषयात् द्वित्वाद्युत्पत्ति वदसि तादृशापेक्षाबुद्धिविषयवस्तुविशेषोपलम्भ एव द्वित्वादिव्यवहारमातनोतु; किमनेन द्वित्वादिकल्पनेन ? तदिदमाह—**द्वित्वाद्युत्पत्तिमूलमिति**। अयं भावः—न ह्यपेक्षाबुद्धिर्निर्विषया; अज्ञानत्वप्रसङ्गात्। नापि प्रकृतानुपयोगिवस्तुविषया, प्रकृतासंगतिप्रसङ्गात्। तथा सविषयत्वे प्रकृतसंगतविषयत्वे च सिद्धे कोऽयं विषयविशेष इति निरूपणीयमित्यवशिष्यते। स पुनर्विषयविशेष एव द्वित्वादिस्थाने निविश्य द्वित्वादिव्यवहारमातनोत्विति। तर्हि द्वित्वादिप्रागभाव एव विशेषः, स एव द्वित्वाद्युत्पत्तौ मूलम्; स चाभावत्वादेव भावमपेक्षते। न हि द्वित्वादिकमन्तरेण द्वित्वादिप्रागभावो व[क्तुमपि]क्तुं, शक्यत इति चेत्–तदपि मन्दम्; प्रागभावस्यानादित्वेन द्वित्वादेरनादित्वप्रसङ्गात्। तर्ह्यनेकावगतिसहकृतैकैकनिष्ठैक्यप्रतीतिरपेक्षाबुद्धिरिति विशेषयाम इति चेत्तर्हि प्रागभावातिरिक्तो विषयविशेषो भवद्भिरेवाभ्युपेय इति, तदेव द्वित्वादिकमस्त्विति पुनरायातम्। तदिदमाह—**धीविशेषोऽभ्युपेय इति**। अभ्युपेयते च भवद्भिरप्ययमर्थो गुणादीनां गणनाविशेष इति प्रतिबन्दीं पुरस्कुरुते—**तन्मूलमिति**। नहि गुणादीनां द्वित्वादिकं भवद्भिरभ्युपगम्यते; गुणानां गुणाभावात्। नच द्रव्यगतेन संख्याविशेषेण गुणानां संख्यैकार्थसमवायेन द्वित्वत्रित्वादिव्यवहार इति वाच्यम्, विरुद्धत्वात् संख्यायाः। नव द्रव्याणि, चतुर्विंशतिर्गुणाः, पञ्च कर्माणि, द्वे सामान्ये

इत्यादिर्हि भवन्व्यवहारः। ते च परस्परविरुद्धाः कथं गुणेषु संघटेरन् ? अथापि द्रव्यान्तरेषु घटपटादिषु चतुर्विंशतित्वमप्यस्ति; तदेव गुणेषु व्यवह्रियते; पञ्चत्वमपि कुत्रचिदङ्गुलिप्रभृतिषु, तत् कर्मस्विति नियमोऽस्त्विति चेन्न; अनियमात्। नहि चतुर्विंशतित्वमेव गुणेषु व्यवहर्तव्यम्, पञ्चत्वमेव कर्मस्विति नियामकमस्ति; संख्याया अभावात्। अथापि बहुलक्षणविशेषपरिगृहीतेषु गुणेषु चतुर्विंशतित्वव्यवहारः, कतिपयलक्षणपरिगृहीतेषु पञ्चत्वव्यवहार इति [मा वोच] चेन्न; लक्षणबहुत्वस्य लक्षणाल्पत्वस्य च तत्तदपेक्षाबुद्धिविषयत्वव्यतिरेकेण निरूपयितुमशक्यत्वात्; अन्यथा मुख्यसंख्याङ्गीकारप्रसङ्गात्। एवंच सति तत्तदपेक्षाबुद्धिविषयतारतम्यमात्रेण त्रिचतुरादिव्यवहारो गुणादिष्विव द्रव्येष्वपीत्यभ्युपेत्य इति निर्णयः॥ ४०॥

---

**आनन्द०**—पूर्वापवादत्वादापवादिकीसङ्गतिमाह—**अनूदिते इति**। तद्धेतोरेवेति न्यायमवतारयति—**यादृशादिति**।

नन्वपेक्षाबुद्धिविषय एव द्वित्वादिबुद्धिव्यवहारविषय इत्यसङ्गतं, तस्याः निर्विषयतयाऽप्युपपन्नत्वात्। अन्यस्याऽन्यबुद्धिविषयत्वाऽयोगाच्च। अन्यथा घटस्य पटबुद्धिविषयत्वप्रसङ्गाच्चेति चेत्तत्राह-**अयं भाव इति**। **स पुनरिति**—अपेक्षाबुद्धिविषय एवेत्यर्थः। **द्वित्वादिप्रागभाव एवेति**—स एवाऽपेक्षाबुद्धिविषय इति भावः। **तदपीति**—द्वित्वप्रागभावस्य द्वित्वमन्तरेणाऽयोगो हि द्वित्वव्याप्यव्याप्यत्वमेव। तथा च प्रागभावव्याप्यस्याऽनादित्वे द्वित्वस्याप्यनादित्वं स्यादिति भावः।

यद्यपि प्रागभावस्य प्रतियोगिनियतत्वमस्ति न तु कालिकव्याप्तिः, तथा च कथमनादित्वं तथापि प्रागभावस्याऽपेक्षाबुद्धिविषयत्वं विना सम्भवतीति द्वित्वविषयत्वाऽवश्यंभावे द्वित्वोत्पत्तौ द्वित्वबुद्धिः कारणं द्वित्वबुद्धौ च द्वित्वमिति परस्पराश्रयस्स्यादिति भावः। **अभ्युपगम्यते च भवद्भिरपीति**। गुणादावेकत्वस्याऽप्यभावात्तत्र तद्व्यवहारस्याऽन्यथा निर्वाह्यत्वात्तन्न्यायेनैकत्वमपि न स्यादिति चेत्। सत्यम्। तस्योत्तरं विचार्यत्वात्। अत्र तदनुक्तिविरुद्धत्वमेवोपपादयति **न च द्रव्येति** वेदाः प्रमाणमितिवन्निर्वाहः।

केचित्तु समस्तं पदं पात्रादिरिति वदन्ति। द्रव्ये नवत्वसंख्या गुणेषु चतुर्विंशतिसंख्येति विरोधः पञ्चत्वं कर्मणीति द्रव्यसंख्यातो विरोधः। अविरोधं शङ्कते—**अथापीति** उपनियमे उपपत्तिमाह—**नह्यीत्यादिना**—गुणाश्रयत्वस्याऽविशेषे नियामकान्तराभावादिति भावः। **संख्याया अभावादिति**—गुणेषु संख्यामात्रस्याऽभावात्कथं नियमेन संख्याविशेषव्यवहार इति भावः। **अथापीति** गुणानाञ्चतुर्विंशतित्वात्तदवान्तरलक्षणानि बहूनि। कर्मादीनान्तथात्वाऽभावादलक्षणत्वमिति भावः। एवमपि संख्यालक्षणगता नियामिका वाच्या। सा नास्तीति तदन्यदेव संख्याव्यवहारे निमित्तं वाच्यं। तदेव निमित्तं सर्वत्रास्त्वित्याह—**लक्षणबहुत्वस्येति**। **अन्यथेति**—तथा चानवस्थेति भावः॥ ४०॥ ॥ **इति परोक्तद्वित्वादिनिरासः**॥

कैवल्यं नैकसंख्यापरविरहतया नापि मुख्यान्यभावौ
सङ्घातैक्यं तु राशिक्रममवयवि तु प्राङ्निरस्तं ततोऽन्यत्।
तेनासङ्घातरूपे क्वचन निरुपधिः स्यादसावेकसंख्या
स्वाधारैकायुरेषा परमुपचरिता सेयमद्रव्यवर्गे ॥ ४१ ॥

**सर्वार्थः**—एवं द्वित्वादिसंख्यां निरस्य एकत्वसंख्यां स्वरूपतः परिशोधयति—**कैवल्यमिति**। मुख्यान्यकेवलेष्वेकमिति बहुषु विषयेषु एकशब्दं प्रयुञ्जते प्रयोक्तारः। तत्र कैवल्यं नैकत्वसंख्या; परविरहरूपत्वात् कैवल्यस्य। न ह्येकत्वसंख्या वस्त्वन्तरवैधुर्यरूपतया प्रतीयते; एकमिति भावत्वेनैव प्रतीयमानत्वात्। नापि मुख्यत्वमेकत्वसंख्या; अमुख्येष्वप्येकव्यवहारदर्शनात्। नाप्यन्यभाव एकत्वम्; स्वस्मिन्नप्येकव्यवहारात्। अतो मुख्यत्वमन्यत्वमसहायत्वं चापहायान्यदेव किंचिदेकत्वम्। तच्च नावयविनि वर्तते; अवयविन एवाभावात्। संघातैक्यं तु राशिवदौपचारिकमेव। तदिदमाह—**संघातैक्यमित्यादिना, ततोऽन्यदित्यन्तेन**। असंघातरूपे परमाण्वादौ निरुपाधिरसावेकत्वसंख्या स्वीक्रियते। एषा चैकत्वसंख्या स्वाधारैकायुः—यावद्द्रव्यभाविनीत्यर्थः। अद्रव्येषु कथमेकत्वसंख्येति चेत्तत्राह **परमिति**। द्विविधो ह्येकत्वव्यवहारो मुख्य-औपचारिक इति। परमाण्वादौ मुख्यः; संघातरूपे पुनरवयव्यादौ औपचारिकः; औपाधिकत्वात्तद्व्यवहारस्य। एवमद्रव्येष्वेकव्यवहार औपचारिकः; अन्यथा अनवस्थादिदोषप्रसङ्गादिति। अयमत्र निर्णयः—द्वित्वादिकं नास्त्येव; अपेक्षाबुद्धिविषयतामात्रेण प्रतीतिव्यवहारयोरन्यथासिद्धत्वात्। एकत्वं तु विद्यते, तत्पुनर्यत्र बाधोऽस्ति गुणादौ, तत्र त्वौपचारिक इति ॥ ४१ ॥

---

**आनन्द०**—पूर्वसङ्गतिरेवात्रापीत्याह—**एवमिति**। **नह्येकत्वसंख्येति** एकं वर्तत इति यत्र संख्या प्रतीयते तत्रेतरविरहप्रतीतिः यद्यप्यस्ति, तथापि तत्प्रतीतिरन्या तदाह—**भावत्वेनेति अमुख्येष्वपीति**। उपसर्जनीभूतघटादावित्यर्थः। **अन्यभाव इति**। अन्यत्वमित्यर्थः। **स्वस्मिन्नपीति**—यद्यपि स्वव्यतिरिक्तसमस्तभेदोऽप्यस्तितथापि भावत्वेनैवप्रतीतेर्नैकत्वं सम्भवति। **तेनासङ्घातरूप इति**।

ननु तद्गतसंख्या कथं चक्षुषा गृह्येत? परमाणोरतीन्द्रियतया तत्संख्याया अप्यतीन्द्रियत्वात्। यदि वा जालसूर्यमरीचिमण्डले प्रत्यक्षत्वं तथाप्यदृष्टपरमाणूनामेको घट इत्यादिप्रतीतिर्न स्यात् अन्यत्र गृहीतस्यैवाऽन्यत्रारोपादिति चेत्। मण्डूकवसाञ्जनाक्तनयनस्याऽज्ञातसर्पस्य पुरुषस्य वंशोरगभ्रमन्यायेनोपपत्तेः।

नचारोपे प्रमापूर्वकत्वमावश्यकमिति परपक्षदूषणं भवन्मते न स्यादिति वाच्यम्। तस्य नियतत्वमात्रपरत्वात्। आरोप्यस्य क्वचिद्बाधितत्वं हि नियतं न तु तत्पूर्वकत्वं, तज्ज्ञानमात्रपूर्वकत्वस्यैव व्यभिचारे तस्य सुतरां व्यभिचारित्वात्। अतः

एत्र पित्तोपहतस्याऽपीतिमेऽपि पीतिमारोपः तथा समुद्रे कार्ष्ण्यारोपञ्चेति घटादावेकत्वारोपे न किञ्चिद्बाधकमिति ।

वस्तुतस्तु घटादावेकत्वसंख्या न प्रतीयते । राश्यादाविवाऽन्यदेव प्रतीयमानं संख्याव्यहारमातनोति नात्र कस्यचिदारोपः। अत एवौपचारिकौपाधिकभाक्तव्यवहारस्येत्युक्तं । यद्यप्युपाधिगतैकत्वमादाय तत्प्रतीतिरिति प्रतीयते तथापि गुणादावेकत्वव्यवहार इव निर्वाह इति भावः ।

ननु व्यवहारस्य तुल्यत्वे कथमेकत्रौपचारिकत्वं कल्प्यते । व्यवहारे च वैविध्यकल्पनञ्च गुर्वित्यत्राह—**अयमत्र निर्णय इति**—बाधकं हि विनिगमकं, अद्रव्यस्य संख्यावत्त्वे द्रव्यत्वप्रसङ्गो हि बाधक इति भावः ॥ ४१ ॥

॥ इति एकत्वसंख्यास्वरूपाश्रयादिनिरूपणम् ॥

---

**ऐक्यं स्वाभेदमाहुः कतिचन न भिदाऽस्त्येकमेवेति दृष्टे-**
**र्भेदादृष्टचैक्यमोहस्तदिति च वचनं तत्रतत्राभ्युपेतम् ।**
**अन्ये त्वेतत्स्वसत्त्वं विदुरितरसमुच्चित्यवस्थानुवृत्तं**
**तत्पक्षेऽपि स्वरूपादधिकमिदमिह द्वित्वमोहादिसिद्धेः ॥ ४२ ॥**

**सर्वार्थः**—इत्थमेकत्वं प्रसाध्य तस्य मतभेदेन स्वरूपमेव विविच्य दर्शयति—**ऐक्यमिति** । आचार्याः केचित् स्वाभेदमेवैक्यमाहुः । तत्र हेतुमाह—**न भिदाऽस्त्येकमेवेति दृष्टेरिति** । अयं भावः—ऐक्यविवरणे प्रवृत्ता निर्णेतारो भेदाभावरूपतयैव ह्यैक्यं विवृण्वन्तीति । व्यवहारान्तरमप्यत्रानुकूलमित्याह—**भेदेति** । ऐक्यभ्रमो भेदादर्शनादभूदिति भ्रान्तिविषये व्यवहरन्ति व्यवहर्तारः; तच्चैक्यस्य भेदाभावरूपत्वानुकूलं तत्रतत्राभ्युपेतमितीदृशो व्यवहारो भूयान् । स च व्यवहारस्सर्वैरप्यभ्युपेयः । अतो भेदाभाव एवैक्यमिति केचिदाचार्या निरणैषुः । अन्ये तु स्वसत्त्वमेवैक्यम्; इतरसद्भावेऽपि तद्वर्तते; तच्च स्वसत्त्वं स्वरूपादधिकमेव; अन्यथा स्वरूपे प्रकाशमाने द्वित्वादिमोहानुपपत्तेः । एकत्वे तिरोहिते हि द्वित्वादिव्यामोहः, द्वौ चन्द्रमसावित्यत्र स्वरूपं प्रकाशते; एकत्वं तिरोहितमिति वाच्यम् । तथा चैक्यस्य भेदाभावरूपत्वे[ऽपि] स्वसत्त्वरूपत्वेऽपि स्वरूपादतिरेकः स्वीकार्यः, अन्यथा द्वित्वादिव्यामोहायोगादिति ॥ ४२ ॥

---

आनन्द०—पूर्वसङ्गतिरेवात्रापीत्याह—**इत्थमिति** ।

ननु दर्शनमसिद्धं नहि भिदाभावः एकत्वमिति प्रत्यक्षमस्ति । किञ्च भिदाभाव इति विवरणरूपत्वान्न पौनरुक्त्यमिति भावः । **तच्चेति**—ग्राह्याभावप्रतीतेरेवाऽऽरोपविरोधित्वादिति भावः ।

ननु ग्राह्यविरोधिज्ञानं निवर्तकं विरोधिता चाऽभावादन्यस्याप्यस्तीति चेत् । अत्राहुः—तदभावव्याप्यत्वादिकं न विरोधप्रयोजकं, तज्ज्ञानस्य संशयनिवर्तकत्वाभाव—प्रसङ्गात् । ग्राह्याभावज्ञानसामग्रीत्वेनैव प्रतिबन्धकत्वात् ।

नचैवं स्थाणुर्वा पुरुषो वेति संशयो न स्यात्, स्थाणुत्वपुरुषत्वयोर्विरोधाभावादिति वाच्यम्। इष्टापत्तेः। नचानुभवविरोधः। तस्य स्थाणुत्व तदभाव, पुरुषत्व तदभावकोटिकत्वात्तदभावयोरवश्यमुपस्थित्या तत्कोटित्वस्याऽवर्जनीयत्वात्। अन्यथा श्वैत्यशङ्खत्वयोस्सामानाधिकरण्यनिश्चयो न स्यात्। दोषजन्यार्थादावप्यविरुद्धयोरेव निश्चयः (दोषमाहात्म्यादप्यविरुद्धयोरेव निश्चयः) अन्यथा श्वैत्याभावस्याऽपि समूहालम्बनं स्यात् अविशेषात्। यदि च प्रतिबन्धकज्ञानविषयो विशेषाभावत्वादिकं तर्हि जितमिति वदन्ति। भूयान्—सर्वदेशव्यापीत्यर्थः। केचिदाचार्या इति पुनः पाठो लेखकदोषात्क्वाचित्क इत्याहुः। न्यायतत्त्वोक्तं मतमुक्त्वा वरदमिश्रोक्तं पक्षमाह—**अन्ये त्विति** स्वसत्वं द्वित्वादिभ्रमविरोधिज्ञानविषयो भाव एवेत्यर्थः।

ननु स्वरूपस्यैव तिरोधानमस्त्वित्यत्राह—**द्वाविति** स्वरूपादतिरेकत्वं पक्षद्वयेऽपि समानमित्याह—**तथा चेत्यादिना**।

नन्वतिरिक्तत्वपक्षे दशैवेत्यद्रव्यपरिगणनानुपपत्तिरिति चेत्। अत्र केचित्। तस्योपलक्षणत्वात्। तस्मिन्पक्षे यावदपेक्षितं तावद्ग्राह्यम् उक्तेष्वन्तर्भावो वेति वदन्ति। अन्यथेति स्वरूपस्यैवैकत्वे तद्ग्रहणे द्वित्वारोपासम्भवादित्यर्थः। ननु तर्ह्यद्रव्येष्वप्येकत्वं स्यात्, न चाद्रव्ये धर्माद्यारोपः गकारे घत्वारोपादेकस्मिन् गकारे—द्वित्वारोपाच्चेति भाव इति चेन्न। तत्र न घत्वारोपः, अपि तु गकारस्यैवारोप इति न गकारग्रहः। तथा नैकस्मिन् द्वित्वारोपः अपि तु द्वयोरेवारोप इति न विरोधः।

अन्ये तु ईदृशस्थले एकत्वमस्तु नाम, न च द्रव्यत्वापत्तिः, अवस्थाश्रयस्यैव तत्त्वात् अवस्था च आगन्तुकोऽपृथक्सिद्धो धर्म इत्युक्तम्। आगन्तुकत्वञ्च धर्मस्याऽनन्तरभावित्वमिति न विरोध इत्युक्तम्॥ ४२॥

॥ इति एकत्वविषयमतभेदः ॥

---

**अन्यत् गृह्णात्यभिज्ञा तदिदमिति पुनः प्रत्यभिज्ञाऽन्यदैक्यं**
**कालक्षेत्रादिभेदग्रहजनितभिदाभ्रान्तिशान्तिस्ततः स्यात्।**
**मोहस्तत्रैकताधीर्ज्वलन इव भवेत् प्रत्यभिज्ञा त्वतश्चेत्**
**स्वव्याघातोऽनुमाया भ्रम इह निखिला स्यादभिज्ञाऽपि तद्वत् ॥४३॥**

अतःपरं अभिज्ञाप्रत्यभिज्ञाविषययोरेकत्वयोर्वैषम्यमाह—**अन्यदिति**॥ इदमिति ग्रहणं तावदभिज्ञा; सा खल्वेकदेशकालवर्तिनः स्वस्मिन्नैक्यं गृह्णाति; तदिदमिति पुनः प्रत्यभिज्ञा देशकालभेदप्रसक्तभेदविरो[ध्यन्यदैक्यं]ध्यैक्यं गृह्णाति। अतो विषयभेदाद् भेदभ्रान्तिशान्तिः स्यात्। ननु विप्रतिपन्ना प्रत्यभिज्ञा भ्रान्तिः प्रत्यभिज्ञात्वात् प्रदीप-

प्रत्यभिज्ञावदिति प्रत्यभिज्ञायास्सार्वत्रिकं भ्रान्तित्वमाशङ्कते—**मोह** इति। परिहरति-**स्वव्याघात** इति। तथा च अयमिति ह्यनुमानं प्रवर्तते। तत्रापि प्रतिसन्धानरूपत्वेन स्वव्याघातः प्रसज्यत इति भावः। बाधाबाधविवेकाभावेन प्रत्यभिज्ञामात्रतया सर्वत्रापि भ्रान्तित्वसाधने शुक्तिरजताभिज्ञावत् स्वलक्षणाभिज्ञायामपि भ्रान्तित्वं साधयितुं शक्यत इत्याह—**भ्रम इहेति** ॥ ४३ ॥

---

**आनन्द०**—ननु अस्मिन्पक्षे अभिज्ञाप्रत्यभिज्ञयोरेकसंख्याविषयत्वादभिज्ञातः प्रत्यभिज्ञाया अपि भेदभ्रमनिवृत्तिर्न स्यादिति शङ्कया सङ्गतिमाह—**अतः परमिति**—अभिज्ञा अयं घट इति ज्ञानं, प्रत्यभिज्ञा सोयं घट इति ज्ञानम्। भेदाभावत्वमिति पक्षानुसारेणैव वैषम्यं निरूप्यत इत्यभिप्रायेणाह—**इदमिति**। **भेदभ्रान्तिशान्तिरिति**। **इदं** पदार्थस्य घटभेदभ्रमः **तदैक्यग्रहाच्छाम्यति**। तद्देश-तत्कालविशिष्टघटस्य वर्तमान-घटभेदभ्रमः तदैक्यग्रहाच्छाम्यतीत्यर्थः। प्रत्यवतिष्ठते—**नन्विति**। तत्तुल्यानुमानान्तरमादाय स्वमतव्याघातोऽपि स्यादित्याह-**तथा चायमिति**। **अनुमानं प्रवर्तत इति**-प्रत्यभिज्ञापरं। तत्रापीत्यनुमानान्तरपरमित्याहुः।

नन्वनुमानाप्रामाण्यं ज्ञानमात्राप्रामाण्यं वेष्टमित्यत आह—**बाधाबाधेति**—बाधकानुमानस्याऽप्यप्रामाण्यबाधायोगाच्चेति भावः। **मूलं ज्वलन इव**—ज्वालाप्रत्यभिज्ञेवेत्यर्थः ॥ ४३ ॥

**॥ इति अभिज्ञाप्रत्यभिज्ञाविषयैकत्वविशेषसत्यत्वम् ॥**

---

**अद्रव्येऽप्यस्ति संख्याव्यवहृतिबलतस्सा ततोऽन्या गुणादेः**
**मैवं संख्यासु संख्याव्यवहृतिवदियं स्यात्त्विहोपाधिसाम्यात्।**
**नो चेत्प्राप्ताऽनवस्थाव्यवहृतिनियतिस्थापनं तुल्यचर्चं**
**तस्मात् काणादक्लृप्तिर्गुरुमतकथकैर्युक्तमत्रापि सोढुम्॥४४॥**

**वैशेषिकोक्तसंख्यातो** व्यतिरिक्तसंख्यावादिनं **प्राभाकरं** प्रतिबन्द्या प्रतिक्षेप्तुमारभते—**अद्रव्य** इति॥ इत्थं किल तेषामाशयः-संख्याव्यवहृतिरद्रव्येऽप्यस्ति। अतो व्यवहारबलात् सा संख्या पुनरद्रव्याद् गुणादेरन्येति। तत् दूषयति—**मैवमिति**। तत्र प्रतिबन्दीमाह—**संख्यास्विति**। अद्रव्यत्वे समानेऽपि संख्यासु संख्याव्यवहारो भवद्भिरप्यङ्गीकार्यः। द्रव्यत्ववैधुर्यं ह्यद्रव्यत्वम्; तत्तु संख्यायामपि समानम्। तथा च संख्यायां संख्याव्यवहारवत् अन्येष्वप्यद्रव्येषु संख्याव्यवहारे औपाधिकः स्यादेवेति। तत्र हेतुमाह—**उपाधिसाम्यादिति**। स्वाभाविकसंख्याङ्गीकारे पुनरनवस्थेत्याह—**नो चेदिति**। गुणादाविव संख्यायामपि संख्याव्यवहारो मुख्यः स्यादिति भावः। संख्यायाममुख्यसंख्याव्यवहृतिनियमस्थापनं चेत्, तद्गुणादावपि तुल्यचर्चमित्याह—**व्यवहृतिनियतिस्थापनमिति**। उक्तमर्थं नियमयति—**तस्मादिति**। काणादक्लृप्तिमङ्गीकुर्वाणस्य **प्राभाकरस्य** संख्यायामपि तत्क्लृप्तिरङ्गीकार्येत्यर्थः ॥ ४४ ॥

**आनन्द०**—ननु सिद्धान्ते भेदाऽभावरूपसंख्यायाः स्वसत्त्वरूपसंख्यायाश्चाऽद्रव्येष्वपि वृत्तिमत्त्वात्तस्याश्च द्रव्यत्वेऽपि रूपादिशब्दबहिर्भावाच्च तद्दूषणमनुपपन्नमिति शङ्कां परिहरन् प्रसङ्गसङ्गतिं सूचयति—**वैशेषिकेति**।

ननु द्रव्येष्वप्यस्तु व्यवहारः तथाऽपि तद्भिन्नो मास्तु तद्भेदे वा को हेतुरित्यत आह—**इत्थमिति**—द्रव्येषु संख्यासत्त्वं व्यवहारबलादेवाङ्गीक्रियते—स चायमद्रव्येष्वपि तत्रापि संख्या स्यात्, अविशेषणेषु गुणत्वं न सम्भवति द्रव्यत्वप्रसङ्गात्। तस्माद् गुणव्यवहार साधारणसंख्यानुगुणो इति। अद्रव्यस्य संख्यावत्त्वं नियतं? न वा? आद्ये संख्याया अपि अद्रव्यत्वात्तत्रापि संख्याव्यवहारस्स्यादित्याह—**अद्रव्यत्व इति**।

नन्वद्रव्यत्वं संख्यायां नास्तीत्यत आह—**द्रव्यत्ववैधुर्यमिति**—द्वितीय आह—**तथा चेति**—संख्यायां संख्याव्यवहारस्य मुख्यसंख्यां विनाऽपि सङ्गतत्वे गुणमात्रेऽपि तथा स्यादित्यर्थः। संख्यायामपि संख्याऽङ्गीक्रियतां को दोष इत्यत आह—**अनवस्थेति**। मुख्यव्यवहारो हि संख्याबाधकः गुणेष्वेव न संख्यायामित्यत आह—**गुणादाविवेति**। यद्यपि द्रव्येष्वपि संख्या न स्यादिति शङ्का स्यात् तथापि सा प्राङ्निरस्तेति भावः॥ ४४॥

**॥ इति प्राभाकरोक्तसंख्यानिरासः ॥**

---

**देशाधिक्यादिसिद्धावुपधिभिरिह तद्युक्तसंयोगभेदात्**
**देशव्याप्तिप्रभेदः परिमितिरिति चेन्नोपधीनां मितत्वात्।**
**देशैस्तन्न्यूनतादौ प्रसजति हि मिथस्संश्रयस्तत्स्वतस्सा**
**मन्तव्या क्वापि राशिप्रभृतिषु तु परं देशसंबन्धभेदः॥ ४५॥**

अत्र कश्चिदाह—गुणेषु संख्याव्यवहारवत् द्रव्येष्वपि परिमाणव्यवहारोऽप्युपाधिभेदादेव स्यात्; न पुनः स्वाभाविकं परिमाणमिति। तदाह—**देशाधिक्यादीति**॥ उपाधिभिर्मणिकघटकरकादिभिराकाशदेशाधिक्यादिसिद्धौ तत्तदुपाधियुक्ताकाशदेशसंयोगतारतम्यात्तत्तदन्तर्गतानां द्रव्याणां तत्तद्देशव्याप्तिप्रभेद एव परिमाणम्, न पुनः परिमाणमिति गुणान्तरमिति चेत्, तन्न; उपाधीनामेव मणिकादीनां स्वभावतः परिमितत्वात्। अतः स्वाभाविकं परिमाणम् उपाधिष्विवान्यत्राप्यङ्गीकरणीयमित्यर्थः। ननु देशैरेवोपाधीनां परिमाणमस्त्विति यदि वदसि, तर्हि परस्पराश्रयः; आकाशादिदेशैरुपाधिद्रव्यपरिमाणम्, उपाधिभिश्चाकाशादिदेशपरिमाणमिति। उक्तमर्थं निगमयति—**तदिति**। **स्वतः क्वापि सा परिमितिर्मन्तव्या**। क्वापीत्यसंघातरूपद्रव्यमुच्यते। संघातरूपेषु राशिप्रभृतिषु देशसंबन्धविशेषमात्रमेव परिमाणव्यवहारकारणमित्याह—**राशीति**। नहि क्वाचिदौपचारिकत्वे सर्वत्राप्यौपचारिकत्वमित्यर्थः॥ ४५॥

आनन्द०—आक्षेपसङ्गतिमाह—अत्र कश्चिदिति। तत्तदुपाधियुक्ताकाशदेश संयोगतारतम्यादिति—राश्यादौ तथाऽभ्युपगमादिति भावः। यद्यपि संयोगमात्रेणे-त्युक्तावपि देशव्यापनरूपपरिमाणं सम्भवत्येव तथापि परिमाणानर्हत्वादौ औपाधिको व्यवहार इत्यर्थः। देशैस्तन्न्यूनतादाविति—उपाधीनां देशाधीनपरिमितत्वमित्यर्थः। स्वतस्सा परिमितिः—स्वत एव परिमितिरस्तीत्यर्थः ।। ४५ ।।

।। इति परिमाणसिद्धिः ।।

---

बौद्धास्तुच्छामणूनामभिदधति परिच्छित्तिमाकाशधातुं
वस्तुस्थित्या परिच्छित्त्यभवनवशतस्स्यादमीषां विभुत्वम्।
अन्यत्रासत्त्वरूपा परिमितिरिति हि स्थापितं सा मृषा चेत्
प्राप्तं सर्वत्र सत्त्वं प्रथमसरगता स्मर्यतां व्योम्नि युक्तिः ।। ४६ ।।

अत्र बौद्धपरिकल्पितां तुच्छरूपां परिमितिं दूषयति—बौद्धा इति। बौद्धाः खल्वाकाशधातुरूपत्वादाकाशस्य च तुच्छत्वादणूनां परिमितिं तुच्छरूपामभिदधति। आकाशपरिवृतत्वमेवाणूनां परिमितिः आकाशं चाभावरूपतया तुच्छमेव। अत्रोत्तरम्—वस्तुस्थित्येति। एवं तर्ह्यणूनां परमार्थतः परिच्छित्त्यभाववशात् विभुत्वमेव स्यादित्यर्थः। न हि परस्परविरोधे कोट्यन्तरमस्ति; द्रव्यस्य सतः परिमाणावश्यं-भावात्। उक्तमर्थं विवृणोति—अन्यत्रेति। बौद्धपक्षे हि एकत्र देशेऽवस्थितस्य देशान्तरासत्त्वमेव हि परिमाणम्। सा चेन्मृषा परिमितिस्तर्हि देशान्तरेऽपि सत्त्वं स्यात्। तर्हि कथमाकाशादौ परिमितत्वमपरिमितत्वं(वे) चेत्यादिचोद्यं प्रथमसर एव परिहृतमुपाधिभेदादिति; तदत्रापि स्मर्यतामित्यर्थः ।। ४६ ।।

---

आनन्द०—प्रसङ्गसङ्गतिमाह—अत्रेति—आवरणाभावो ह्याकाशः। अभावश्च तुच्छस्वरूपमेवेत्याकाशस्य तुच्छता, तदधिकदेशव्याप्तित्वतारतम्यं परिमाण तारतम्यं अत एव परिमाणस्यापि तुच्छत्वम्। यद्वा देशान्तरे स्वाभाव एव परिमाणं अत-एव तुच्छत्वमित्यादिकः। कबन्धमीमांसोक्तमनुवदति—बौद्धाः खल्वित्यादिना। अणूनां परिमितिरिति—तन्मतेऽणुव्यतिरिक्तस्याऽभावादिति भावः। एवं तर्हीति—यद्यप्य-भावात्मकमेव तुच्छत्वमिति कथं परिच्छेदप्रसङ्गः? तथापि परिमितत्वस्याप्यपरिमित-त्वाऽभावरूपतया निस्स्वरूपत्वं तन्मत इति तथोक्तमिति भावः। न हीति—यद्यपि गुणादौ कोट्यन्तरप्रसिद्धिः तथापि न द्रव्यस्य परिमाणवतः कोट्यन्तरसम्भव इति भावः।

ननूभयरूपत्वमस्त्वाकाशादिवदिति चोद्यमाशङ्क्य परिहरति—किञ्चेति। तर्हीति। उपाधि भेदादिति—घटकरकोपाधिभेदेन तदुपपत्तेः परिमितत्वस्यतदभाव-त्वस्य च स्वभावतस्तत्रासम्भवान्न दृष्टान्त इति भावः ।। ४६ ।।

।। इति सौगतोक्ततुच्छपरिमितिनिरासः ।।

स्थूलाणुह्रस्वदीर्घैतरदुपनिषदि स्थापितं ब्रह्म तस्मिन्
सर्वोत्कृष्टं महत्वं श्रुतमपि तदिह स्थूलतान्या निषिद्धा।
अन्ये त्वाहुर्विभूनामपरिमितवचःप्रत्ययान्मित्यभावं
भावैकात्मन्यभावे परिमितिविरहोऽप्यत्र भावान्तरं स्यात् ॥४७॥

ननु सर्वपरिमाणनिषेधो ब्रह्मणि दृश्यते अस्थूलमनण्वह्रस्वमिति । तत्कथं विरुद्धपरिमाणनिषेधसमुच्चय इति कश्चिच्चोदयति—**स्थूलेति**। तत्र परिहारमाह—**तस्मिन्निति**। सर्वोत्कृष्टं महत्त्वं ब्रह्मणि श्रुतम्। विहितव्यतिरिक्तविषयो निषेध इति न्यायसिद्धम्। तेन ब्रह्मणि अस्थूलता पर्वतादितुल्यपरिमाणराहित्यमेव, न पुनस्सर्वव्यापित्वरूपपरिमाणराहित्यम्; विषयभेदेन व्यवस्थासिद्धौ विरुद्धार्थकल्पनायोगादिति । विभुत्वरूपं परिमाणं भावरूपमेवाङ्गीकृत्य केचिदाचार्याः प्राहुः। अन्ये पुनर्विभूनामपरिमितवचोविषयत्वात् परिमाणाभावमेव विभुत्वं प्रतिपादयन्ति, सर्वव्यापिनः परस्य ब्रह्मणः परिमितौ मानाभावादिति । अभावरूपपदार्थाङ्गीकारेणायं निर्वाहः। भावान्तराभाववादे तु परितो मानविरहोऽपि भावात्मक एवेत्याह—**भावेति**। भावैकात्मन्यभावेऽपि भावरूपतया स्वीकृते सतीत्यर्थः ॥ ४७ ॥

---

**आनन्द०**—आक्षेपसङ्गतिमाह—**नन्विति**—न हि परस्परविरोधे कोट्यन्तरमस्तीति भावः। **सर्वोत्कृष्टमिति** "नित्यं विभुं सर्वगतं सुसूक्ष्मं" "सत्यं ज्ञानमनन्तं ब्रह्म" "यो वै भूमे" त्यादिभिरिति भावः। **विहितव्यतिरिक्तेति**—न हिंस्यात् सर्वा भूतानि" "रात्रौ न स्नायात्" "अग्नीषोमीयं पशुमालभेत इत्यादिः राहुदर्शनसंक्रान्ति विवाहेत्यादिविहितव्यतिरिक्तविषयत्व दर्शनादिति भावः। ननु जर्तिल यवाग्वा वा जुहुया"दित्यादे"रनाहुतिर्वै जर्तिलाश्चे" त्याद्यर्थवादमात्रेणापि निपेधस्वोकारादत्रापि निषेधस्स्यादित्यत्राह—**विषयभेदेनेति**। तत्र विषयभेदेन अवस्थायाः असम्भवादिति भावः? पक्षान्तरमाह—**अन्ये पुनरिति**। ननु विभुत्वबोधकश्रुत्या परिमाणसिद्धिरित्यत्राह—**परिमाणाभावमेवेति**। विभुत्वस्य परिमाणाभावत्वे युक्तिमाह—**परस्येति**। अस्थूलादिवाक्यात्परिमाणशब्दस्य परिच्छेदार्थकत्वाच्चेति भावः। अस्मिन्पक्षे अतिरिक्ताभावाङ्गीकार गौरवमित्याह—भावरूपेति ॥ ४७ ॥ इति **ब्रह्मणः परममहत्त्वम्** ॥

---

नात्यन्ताणोर्महत्ताऽस्त्यवयविनि हते मध्यमं क्वास्तु मानं
तद्धेतुष्वेव तद्धीरपि तव घटते लाघवोत्कण्ठितस्य।
एवं त्यक्ते महत्त्वे परममहदपि त्याज्यमेवेति चेन्न
त्यागाभावात्तदिष्टादधिकमनधिकं वाऽस्तु न क्वापि दोषः ॥ ४८ ॥

**सर्वार्थः**—ननु तव मते महत्त्वमेव न संजाघटीतीति [कश्चित्] चोदयति—**नात्यन्तेति**। अत्यन्ताणोर्जीवस्य न तावन्महत्ताऽस्ति; अवयविवादानङ्गीकारात्; त्र्यणुकाद्यभावेन मध्यमपरिमाणरूपं महत्त्वमपि भवतां नास्ति। तदिदमाह—**अवय-**

विनीति। घटादिषु महत्त्वप्रतीतिश्च लाघवोत्कण्ठितस्य तव पक्षे पटघटादिहेतुषु तन्तुकपालादिसंघातेष्वेव घटते। एवं मध्यममहत्त्वे त्यक्ते परममहत्त्वमपि भवतः परित्याज्यं स्यात्। परमशब्दव्यवच्छेद्याभावेन विशेषप्रतीतेरभावादिति चेत्, अनूदितमर्थं दूषयति–नेति। तत्र हेतुमाह—त्यागाभावादिति। तदेवोपपादयति—तदिति। तत्—महत्त्वं परेष्टान्महत्त्वपरिमाणादधिकं वाऽस्तु; अनधिकम्—तदेव वा परिमाणम्। सर्वथा तावन्न परित्यज्यते परिमाणरूपं वस्तुतत्त्वमिति न क्वाप्यस्माकं दोष इत्यर्थः॥ ४८॥

---

आनन्द०—आक्षेपसङ्गतिमाह—ननु तव महत्वमेवेति—अवयविवादानङ्गीकारादित्येतत् त्र्यणुकाद्यभावे हेतुः, तस्याऽवयवत्वादिति भावः। द्वित्वादिकारणादेव द्वित्वादिव्यवहारवत् घटादिकारणादेव परमाणुव्यवहृतिरपीति प्रतिबन्द्यभिप्रायेणाह—घटादिष्विति परममहत्वमपीति। इदमुपलक्षणम्। अणुत्वस्यापि तुल्यन्यायात्परेष्ट महत्वपरिमाणादिति मध्यमपरिमाणरूपत्वं—महत्वमस्त्येव। नचाश्रयाभावः। अवयविनो निरासेऽपि तदारम्भकावयवसमुदाये तदुपपत्तेः।

नचाणुत्वे न विरोधः। परमते द्वित्वादिवद्व्यासज्यवृत्तित्वात्। इयांस्तु विशेषः। द्वित्वादिकं वियुक्तेऽप्यस्ति इदन्तु सङ्घीभूते। नचावयव्यारम्भकादेव व्यवहारोपपत्तिः तस्याऽवयवरूपत्वेऽतिप्रसङ्गेन समुदायरूपत्वं वक्तव्यं, समुदायश्चाऽवयवातिरिक्त-एव। स च संयोगविशेषो वा तदतिरिक्तो वेति न किञ्चिदेतत्।

अन्ये तु समुदाये राश्यादौ महदिति प्रतीतिरौपाधिकीति वक्तव्यं। औपचारिकता च क्वचिन्मुख्यतानियतेति परममहत्वसिद्धिरित्याहुः।

वस्तुतस्तु मध्यमपरिमाणं घटाद्याकारेण परिणतिरेव प्रकृते। संख्यारूपत्वपक्षे तु तुल्यन्यायेन शुद्धसत्वादेरपि तथात्वात् घटादावेकत्वसंख्यान्यायेनाऽभावे लोप एवेत्याहुः॥ ४८॥ इति परमहत्त्वनिरुपणम्।

---

द्रव्यं कृत्स्नं स्वभावात् परिमितिरहितं व्यापकैकत्वयुक्ते-
रौपाधिक्यंशक्लृप्तिर्घटगगननयात्स्यादवस्था ह्युपाधिः।
स्वाभावैर्वेष्टितत्वं घटत इह घटाद्याकृतौ द्रव्यधर्मे
पार्श्वोक्तिस्तावता स्यादिति न सदवधेरन्यथाऽप्यत्र सिद्धेः॥ ४९॥

सर्वार्थः—कश्चिदाह—न द्रव्येष्वणुमहदादिप्रक्रियाभेदेन परिमाणं स्वाभाविकमस्ति, अपि त्ववस्थाभेद एव तत्सर्वमिति। तदेतदनुवदति—द्रव्यमिति। तत्र हेतुमाह—व्यापकैकत्वयुक्तेरिति। एकैव सर्वव्यापिका प्रकृतिरिति ह्युच्यते—अचेतना परार्था चेत्यादिभिर्वचनैः। युक्तियुक्तं चैतत्; एकस्यैव नानावस्थायोगेन नानात्वे लाघवात्।

अंशक्लृप्तिस्तु कथमिति चेत्तत्राह—**औपाधिकीति**। तत्र दृष्टान्तं कथयति—**घटेति**। यथाऽऽकाशे घटाद्युपाधिभेदादंशक्लृप्तिरित्यर्थः। तत्र घटादिरेवोपाधिः। इह पुनः कोऽयमुपाधिरिति चेत्, तत्राह—**अवस्था ह्युपाधिरिति**। सैवावस्था तत्रतत्र परिणता नानात्वव्यवहारे निदानमित्यर्थः। तर्हि परिमितद्रव्याभावे घटादिषु स्वाभावावेष्टितत्वं कथमित्याशङ्क्य परिहरति—**स्वाभावैरिति**। घटादीति स्वाभाववेष्टितं कथमपि द्रव्यान्तरं न पश्यामः अपि तु प्रकृतौ परिणता घटाद्याकृतिरेव स्वाभाववेष्टिता प्रतिभाति। अनेनैव न्यायेन घटादौ पार्श्वोक्तिरपि संघटत इति वदति—**पार्श्वार्थोक्तिरिति**। घटाद्याकृतावेव परितः पार्श्वोक्तिव्यवहारः। अतः परिमाणं नाम किमपि द्रव्ये न परिकल्प्यमिति। तन्निषेधति—**न सदिति**। तत्र हेतुमाह **अवधेरिति**। उपलब्धिरेव हि सर्वत्र प्रमाणम्। परिमितत्वरूपेण उपलभ्यमानेषु घटपटादिषु न ह्यवधिसापेक्षं तत्तत्परिमाणमुपलभ्यते। तत्सापेक्षत्वे पुनः, अवधेरपि निरपेक्षपरिमाणशालित्वमकामेनापि स्वीकर्तव्यमिति भावः॥ ४९॥

---

**आनन्द०**—आक्षेप सङ्गतिं दर्शयति—**अत्रेति**। **अचेतना परार्थाचेत्यादिरिति** "नित्या सततविक्रिया त्रिगुणा कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते" इति –"प्रकृतिर्या मयाऽऽख्याते" त्यादौ यद्यपि विभुत्वं न प्रतीयते। तथापि नित्यद्रव्यस्य मध्यमपरिमाणायोगान्महत्वमिति भावः।

ननु निरवयवस्य कथमंशक्लृप्त्या अण्वादिभेद इति शङ्कते—**अंशक्लृप्तिरिति**। **तर्हीति**—स्वाभाववेष्टितस्यैव परिमितत्वं परममहत्वञ्च न परिमाणमिति भावः।

ननु गुणादेरपि स्वाभाववेष्टितत्वमस्तीति तस्यापि परिमाणप्रसङ्गः। नचेष्टापत्तिः। महादीर्घादिव्यवहारप्रसङ्गात्। नचास्त्येव महादीर्घादिव्यवहारः, महान् शब्दो महत्परिमाणमिति दीर्घादिबुद्धिरित्यादि वाच्यम्। आश्रयप्रयुक्त व्यवहारतया स्वाभाविकस्य तस्याऽभावादिति चेत्। अत्राहुः। स्वाभाववेष्टितद्रव्यस्यैव परिमितिरिति न दोषः।

अन्ये तु गुणादावप्युक्तस्य वृत्तौ न दोष इति वदन्ति। **उपलब्धिरेवेति**।

नन्ववस्था भेद एव परिमाणमित्युक्तौ नात्रावधिसापेक्षत्वमुक्तं, येन नह्यवधिसापेक्षत्वमिति वक्तुं शक्यं स्यादिति चेत्। उच्यते। अवस्थारूपोपाधिबलादेकस्मिन्द्रव्ये परिमाणन्यूनाऽधिकभावव्यवहारे न्यूनाधिक भावस्य न्यूनाधिकदेशव्याप्त्युपाध्यधीनत्वस्य वक्तव्यतया देशन्यूनाधिकभावेऽपि उपाध्यन्तरस्यावश्यकत्वे तन्न्यायेननावस्थापातात्। क्वचिन्निरुपाधिकपरिमाणाङ्गीकारस्यावश्यकत्वे सर्वत्र तथाऽस्तु। नचावस्थैव परिमाणमस्त्विति शङ्क्यं' घटाद्यवस्थातिरेके विवादविरहात् अनतिरेके च सन्देहाभावप्रसङ्गादिति। मूलं **घटगगननयात्**—न विरोध इति भावः॥ ४९॥

अव्यक्ते स्यादणुत्वप्रभृतिपरिणतिः स्तम्भकुम्भादिनीत्या
नाणुत्वं पूर्वसिद्धं नरमृगरचनाद्यप्यवस्थाक्रमेण।
इत्युक्तं सांख्यशैवप्रभृतिसमयिभिस्तत्तथैवास्तु मा वा
नित्याणौ जीवतत्त्वे न कथमपि भवेदण्वस्थाप्रसूतिः ॥ ५० ॥

इत्थं सामान्येन परिमाणं प्रसाध्य स्वाभाविकमात्मनोऽणुत्वं प्रसाधयितुं विशेषतोऽप्यणुपरिमाणं शोधयति—**अव्यक्त** इति ॥ अणुत्वप्रभृतयो हि धर्माः प्रकृतिद्रव्य-एव परिणामभेदाद्युज्यन्ते, यथा स्तम्भत्वकुम्भत्वादयः; अतोऽनादिसिद्धमणुत्वं नाम किंचिन्नास्ति। यथा एकस्यैव प्रदेशभेदेन नरमृगादिविरुद्धधर्मरचना। अथवा एकस्यैव क्रमेण पूर्वं नररूपेणावस्थितस्य पश्चान्मृगरूपेणावस्थानम्। एवं कालभेदेनाणुत्वेनावस्थि-तस्यैकस्यैव महत्त्वम्; महत्त्वेनावस्थितस्याणुत्वम्। इत्थं सांख्यशैवप्रभृतिभिरुक्तम्। एतद्युक्तमयुक्तं वाऽस्तु; उभयथाऽपि नास्माकं क्षतिः; यदि कारणावस्थायां महती प्रकृतिः कार्यावस्थायां कालभेदेन परिणतिवशादणुत्वं भजति; यदि वा कारणावस्थायां त्रसरेणुसंघातरूपेणावस्थिता प्रकृतिरनुपलभ्यमानस्वरूपभेदा कार्यावस्थायां कालभेदाधीनभागोपलम्भेन त्रसरेण्वादिरूपेणोपलभ्यत इति; उभयथाऽ-पीश्वरकारणत्वादिरूपप्रधानार्थविरोधाभावादुच्यमानस्य चार्थस्यानुपपत्तिविशेषस्फौ-ट्याभावात्तत्र न विप्रतिपद्यामहे। अयमत्र विशेषः—प्राकृतपरमाणौ यथातथा वाऽस्त्वणु-परिमाणम्, जीवतत्त्वे न कथमपि भवेदण्ववस्थाया उत्पत्तिः, जीवस्यानाद्यनन्तत्वेनैव प्रमाणसिद्धत्वादित्याह—**न कथमपीति** ॥ ५० ॥

---

**आनन्द०—सांख्यशैवप्रभृतिभिरिति**—सांख्यैः प्रकृतेरणुत्वं परिमाणंइत्युक्तं शैवैस्तु जीवस्याप्यणुत्वमीश्वर परिमाणं इति मुक्तौ तद्विलयात्सायुज्यमैक्यं च सङ्गच्छत इति प्रतिपादितम्। प्रभृतिशब्देन ब्रह्मदत्तादयः। यद्यपि प्राकृते पदार्थेऽणुत्वमानादि मा वा? तथाऽप्यणुत्वमानादि वर्तत एवेत्याह—**एतद्युक्तमिति** तन्निर्णयस्य प्रयोजन-शून्यतामाह—**उभयथाऽपीति**—एका प्रकृतिर्विभ्वीति कश्चन पक्षः। तस्मिन्पक्षेऽप्यवस्था जन्या। सङ्घातपक्षेत्वजन्या। उभयथा ब्रह्मपरतन्त्रेति न विरोध इत्यर्थः। **जीवतत्व इति—**अणुत्वं स्वाभाविकमित्यर्थः। तत्र हेतुमाह—**जीवस्येति** -"नित्यो नित्यानां वालाग्रशतभागस्य एषोऽणुरात्मा चेतसा वेदितव्य" इत्यादिरित्यर्थः।

ननु जीवस्वरूपं हीश्वराधीनतया शेषतया शरीरतया च ज्ञातव्यं नाणुत्वेन प्रयोजनाभावस्य तुल्यत्वादिति चेत्। मैवं। शरीरापेक्षया स भेदेन ज्ञातव्यः। लक्षणेनैव भेदज्ञानं लक्षणं, चाणुत्वे सति चेतनत्वमित्यणुत्वं ज्ञातव्यम्। तच्च स्वाभाविकमिति-वक्तव्यं। अन्यथा ब्रह्मणोऽपि तादृशाणुत्वसम्भावनया अतिव्याप्तिशङ्कादोषात्। यद्यपि परतन्त्रचेतनत्वादिकं लक्षणान्तरमस्त्येव तथापि विनिगमनाविरहादिदमपि लक्षणं भवत्येवेत्याहुः ॥ ५० ॥ **इति अवस्थामात्रपरिमाणवादभङ्गः** ॥

चर्चा तुल्यैव भिन्नं पृथगितरदिति प्रत्यये तत्पृथक्त्वं
भेदाख्यो नीलपीतप्रभृतिरभिमतः किं मुधाऽन्यस्य क्लृप्तिः ।
नाप्यज्ञातावधीनां पृथगिदमिति धीर्नापि भिन्नादिवाचां
साकं क्वापि प्रयोगो न च पृथगिति धीर्द्रव्य एवेति सिद्धम् ॥५१॥

इत्थं परिमाणं संशोध्य पृथक्त्वमपि शोधयति—चर्चेति । व्यवहार एव खल्वर्थतत्त्वविभागे निदानम्; यद्भिन्नमिति व्यवह्रियते, तदेव पृथगिति; यत्पृथगिति तदेवेतरदिति च व्यवह्रियते । अत एषां शब्दानां पर्यायत्वात् भेदातिरेकेण पृथक्त्वं नाम न कश्चिद्धर्मः कल्पनीयः । किंच भेदश्च नीलपीतादिरसाधारणो धर्म एवाभिमतः । तथा च पृथग्व्यवहारस्यान्यथासिद्धत्वे किं मुधाऽन्यस्य पृथक्त्वस्य परिक्लृप्तया ? ननु पृथक्त्वं भावरूपं प्रतियोगिनिरपेक्षम्, भेदस्तु प्रतियोगिसापेक्ष इति वैषम्यमाशङ्क्य परिहरति—नापीति । न ह्यवधिपरिज्ञानाभावे सतीदमस्मात् पृथगिति व्यवहरन्ति । यदि पृथक्त्वमसाधारणधर्मरूपाद्भेदादन्यत्, तर्हि तद्वाचकशब्दस्य भेदवाचकशब्देन सामानाधिकरण्यं प्रसज्येत । न च तथोपलभ्यते; न हि पृथगित्युक्त्वा भिन्नमिति वदन्ति; भिन्नमिति चोक्त्वा पृथगिति वा । तदिदमाह—नापीति । न च पृथगिति धीर्द्रव्य एव नियता; गुणादीनामपि पृथक्त्वेनोपलम्भात् । अतः परस्परव्यावर्तकासाधारणधर्म एव सर्ववस्तूनां पृथक्त्वम्; तदेव लक्षणम्; स एव भेद इति सर्वमवदातम् ॥५१॥

---

आनन्द०—वैशेषिकैः परिमाणानन्तरं पृथक्त्वस्योपदेशात्तदनुसारेण सङ्गतिमाह—इत्थमिति—पृथक् पृथगिति व्यवहारविषयो गुणः पृथक्त्वमिति वैशेषिका ऊचुः । तद् दूषयति—व्यवहार एवेति । ननु भेदोऽतिरिक्तोऽङ्गीक्रियते चेत् तर्हि पृथक्त्वमप्यङ्गीक्रियतां तुल्यत्वादित्यत्राह—भेदश्चेति । नीलादिदर्शनमात्रादेवेति नीलादभेदव्यवहारदर्शनादिति भावः । नन्विति इदमस्मात्पृथगिति सर्वत्रावधिसापेक्षत्वस्य व्यवहारे नियतत्वादिति भावः ।

नन्वन्यशब्दपर्यायत्वं पृथक्त्वस्याऽस्तु अन्यशब्दार्थश्चाऽभावरूपाद्भेदाद्भिन्न एव । अत एव अन्यारादित्यन्यशब्दपर्याययोगे पञ्चमी पृथक्शब्दयोगे दृश्यते इदमस्मात्पृथगिति । ननु तद्वाचिनञ्योगे इदमस्मान्नेति तस्मादभावरूपाद् भेदादभिन्न एव पृथक्त्वमिति शङ्कामाशङ्क्य निराकरोति—यदि पृथक्त्वमित्यादिना । भेदे सति सहप्रयोगस्स्यात् नीलो घट इत्यादौ सह प्रयोगदर्शनात् । नञ्योगे पञ्चम्यभावस्तु प्रयोगाऽभावात् ।

यद्वा भावमात्रसाधारण्येनाऽन्योन्याभाववाचकत्वाऽभावात्प्रमेयाभावादि शब्दवदन्यशब्दपर्यायत्वाऽभावादिति भावः । भेद एव पृथक्त्वमित्यत्र युक्त्यन्तरमाह -

**न हि पृथगिति**—पृथगित्यबाधितव्यवहारस्य साधकत्वात् गुणादिसाधारण्येन तत्रा न्योन्याऽभावस्यैव विषयत्वे वैरूप्याङ्गीकारनिदानाऽभावात्सर्वत्र तस्यैव विषयत्वमिति भावः। **स एवेति**—असाधारणधर्म एवेत्यर्थः। शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यत्रेव विधेयानुसारित्वात् क्लीबत्वम्। **भिन्नादिवाचां साकं क्वापि न प्रयोगः**—क्वचिदपि सहप्रयोगो भिन्नादिवाचां नास्तीत्यर्थः॥ ५१ ॥

॥इति पृथक्त्वाख्यगुणान्तरक्लृप्तिभङ्गः॥

---

**तन्त्वादीनां पटादिव्यवहृतिनियता दृश्यते काऽप्यवस्था**
**सा चेद् द्रव्यस्वरूपं भवति विफलता कारकव्यापृतीनाम्।**
**तत्रासंयुक्तबुद्धिः कथमिव च भवेत स्थैर्यवादस्थितानां**
**नैरन्तर्यं च भावो मम तदघटितं मध्यमेवान्तरं च॥ ५२॥**

संयोगस्यान्तरालाभावत्ववादिनं बौद्धं निराकर्तुं तस्यानन्यथासिद्धप्रमाण-प्रतिपन्नत्वेन स्वीकर्तव्यत्वमाह—**तन्त्वादीनामिति**॥ पटादिव्यवहृतिनियता—तन्त्वादीनामवस्थैव पट इति **वेदान्तिनः**। येऽपि चावस्थाव्यतिरेकेण द्रव्यान्तरं स्वीकुर्वन्ति, तेषामप्यसमवायिकारणावस्थाविशेषत्वेन स पुनः स्वीकार्यः। तथा च संयोगस्सिद्धः। साऽवस्था द्रव्यस्वरूपमेवेति चेत्, [तर्हि] कारकव्यापाराणां विफलता च स्यात्। किंचापूर्वसंयु[क्तावस्थास्वीकाराभावे सति]क्तत्वरूपावस्थानङ्गीकारे विभक्तेषु तन्तुषु असंयुक्तत्वबुद्धिः कथं स्यात्, स्थिरवादिनां संयुक्ततन्तुस्वरूपस्यानपायात्? प्रतिक्षणं तन्तव उत्पद्यन्त इति चेत्; निरस्त एव क्षणभङ्गवाद इत्यभिप्रायेणाह—**स्थैर्यवादस्थितानामिति**। ननु नैरन्तर्यं संयोगः, स चान्तरालाभावः। अभावश्च शून्यमेवेति चेत्तन्न; अभावस्यापि भाववदशून्यत्वात्। निषेधकप्रमाणगोचरो ह्यभावः; स कथं शून्यतामनुभवति? किंच भावान्तराभाववादिनामस्माकं पक्षे नैरन्तर्यमपि भाव एव। किं तर्ह्यन्तरम्; तदपि भाव एव। द्वयोरपि पदार्थयोर्मध्यमेव नन्वन्तरमित्युच्यते। अतोऽन्तरालमन्तरालाभावरूपतया भवत्परिकल्पितसंयोगोऽपि भावरूप एवेति न शून्यगन्धावकाशः॥ ५२॥

---

**आनन्द०**—अस्य श्लोकस्य व्याख्या नोपलभ्यते। (मैसूरुपुस्तके अपि नास्ति) ॥ ५२॥ **इति संयोगसिद्धिः**॥

**सर्वं द्रव्यं सभागं न यदि कथमुपाध्यन्वयो भागतः स्यात्**

**कात्स्न्येनोपाधियोगे कथमणुविभुनोस्सूक्ष्मतादीति जैनाः ।**

**सामग्रीशक्तिभेदप्रजनितविविधोपाधियोगस्वभावा-**

**दौपाधिकांशक्लृप्तिः कथमिव न भवेद् द्विष्ठसंबन्धदृष्टेः ॥ ५३ ॥**

एवं संयोगस्य सिद्धिमुक्त्वा तस्य संयोगस्य वस्तुन्येकदेशवर्तित्वसामर्थ्यात् सर्वस्यापि द्रव्यस्य सांशत्वं वदतो **जैनस्य** पक्षमनूद्य प्रमाणानुरोधेन परिहरति—**सर्वमिति** ॥ इत्थं किल ते मन्यन्ते—परमाण्वादि सर्वमपि द्रव्यस्य सभागमेव ; पदार्थान्तरसंयोगस्य पार्श्वषट्कमन्तरेणानुपपत्तेः। यदि पार्श्वपरिक्लृप्तिरुपाधित इति वदन्ति, तच्च न ; निरवयवद्रव्यस्य उपाधिसंयोगेऽप्यनधिकारात् । मध्यस्थस्य हि परमाणोः परितः स्थितषडुपाधिसंसर्गोऽपि षड्भिरेव पार्श्वैरुपपद्यते । अन्यथा कथमुपाधिसंसर्गस्तत्र-तत्रेत्यौपाधिकोऽपि पार्श्वनियमः सिध्येत् ? तर्हि निरवयवस्य कात्स्न्र्येनोपाधिसंसर्गं वदाम इति चेत्, तर्हि परमाण्वाकाशयोः परस्परसंसर्गे परमाणुरपि विभुः स्यात्; आकाशो वा परमाणुः स्यात् । तदिदमाह—**कात्स्न्र्येनेति** । इत्थमनूदितं पक्षं प्रमाणानुरोधेन परिहरति—**सामग्रीति** । अयमर्थः—दृश्यते तावत्संयोगः ; स च काचित्कतया उपलभ्यते । स यदि संसर्गः प्रदेश एव न वस्तुनीत्यभिधीयेत, तथा सति तस्यापि प्रदेशस्य प्रदेशान्तरपरिक्लृप्त्या कस्मिंश्चिदपि वस्तुनि संबन्धो न स्यादेव । दृश्यमानस्य च संबन्धस्याधारतया परिदृष्टमेव वस्तु परिग्राह्यम् । तत्तु निरवयवं चेत् औपाधिकांशभेदक्लृप्त्या निर्वाह्यम् । ननु तादृशस्योपाधिसंबन्धेऽप्यनधिकार इत्युक्तमिति चेत् द्विष्ठसंबन्धदृष्टिबलादुपाधिसंबन्धस्य स्वपरनिर्वाहकत्वेन निर्वाहः कल्प्यः। तदिदमाह—**औपाधिकेति** । एवं च सत्यणुरपि स्वधर्मिग्राहकबलादणुत्वेनैव सिद्धः ; विभुरपि विभुत्वेन; [उभयमपि निरवयवम् । अथापि तत्तद्धर्मिग्राहकप्रमाणबलाद्विभुत्वाणुत्वयोः प्रतिनियतिः ।] द्वयोरपि निरवयवत्वम्, औपाधिकांशक्लृप्तिश्चेति सङ्गतमेतत् ॥ ५३ ॥

---

**आनन्द०**—सांशं शङ्कते—**तत्रेति** । **तर्हीति** —संयोगस्यैकदेशवर्तित्वनियमोऽसिद्ध इति भावः। तर्हि आकाशात्कात्स्न्र्येन संयोगे अन्यतरस्य विभुत्वाणुत्वयोरयोगादितिभावः।

ननु सामग्रीशक्तिभेदेन वा कथं निरंशे अंशसापेक्षसंयोगप्राप्तिः अण्वाकाशयोर्योगो वा कथं विभ्वणुत्वादि प्राप्तिरित्यत्राह—**अयमर्थ इति** -दृष्टे काऽनुपपत्तिरिति भावः। **तथा सतीति**—तथा चाऽऽश्रयाऽभावात्संयोग एव न स्यादिति भावः। दृष्टत्वात् क्वचिदङ्गीकारेण यत्र दृष्टं तत्रास्त्वित्याह—**दृश्यमानस्येति** । **द्विष्ठसम्बन्धेति**—प्रत्यक्षानुरोधित्वाद्विरोधकल्पनाया इति भावः।

ननु दृष्टानुरोधकल्पनमंशक्लृप्त्या वाऽस्तु, तावताऽपि प्रत्यक्षानुसारसम्भवादित्यत आह—एवञ्चेत्यादिना।

ननु संयोगो वा सम्बन्धो स्वयमेव निविशतां संबद्धयतां वा तद्बलादेव भागक्लृप्तिरस्तु किमुपाध्यन्तरेणेति चेत्। तथैवेति केचित्।

अपरे पुनर्यत्प्रयुक्तानुपपत्तिस्तेनैव कथमुपपद्यतामित्युपाध्यन्तरक्लृप्तिमाहुः। मूलं द्विष्ठसम्बन्धदृष्टेरिति—संयोगस्य प्रत्यक्षदृष्टेरित्यर्थः॥ ५३॥

इति निरवयवेष्वेकदेशसंयोगप्रकारः॥

---

नैरन्तर्यं विभूनामपि भवति ततोऽन्योन्ययोगोऽपि योग्यः
केचित्, तं हेत्वभावाज्जहति विहतिकृन्नित्यधीकल्पने तत्।
स्याद्वा तत्सिद्ध्यसिद्ध्योरनुमितिरपटुर्बाधहानेर्विपक्षे
शास्त्रैरन्यद्विभुः स्यात् परधृतमपृथक्सिद्धिरेवं ततोऽस्य॥ ५४॥

अस्तु संयोगः; अथापि विभूनां परस्परसंयोगो नास्तीति काणादादयः। त[त्]न्निषेधति—नैरतर्यमिति॥ निरन्तराणां हि पदार्थानामन्योन्यसं[सर्ग]योग उपलभ्यते; विभूनामपि नैरन्तर्यमस्ति; अतोऽन्योन्यसंयोगयोग्यताऽस्ति। तदेतदाह—तत इति। केचित्तु हेत्वभावात् संयोगं जहति; अन्यतरकर्मोभयकर्म वा सयोगो वा संयोगस्य हेतुः, त्रितयमपि विभुषु न घटत इति। तत्र दूषणमाह—विहतिकृदिति। ईश्वरज्ञानादीनां कारणाभावादभाव इति परवादिभिरुक्ते कार्यभूतस्य ज्ञानादेः कारणपेक्षा न नित्यज्ञानादेरिति काणादादयः परिहरन्ति। तुल्यमेतदजसंयोगकल्पनेऽपि। अनित्यसंयोगस्यैव कारणाभावादभावो वक्तुं शक्यते। नित्यस्य तु कारणसापेक्षत्वाभावेन तदभावात् अभावो वक्तुं न शक्यत इति। इमामेव प्रतिबन्दीमभिप्रेत्याह—नित्यधीति। तर्ह्यजसंयोगसाधने [किमनुमानम्] किं मानम्? उक्तमेव नैरन्तर्यम्। परोक्तमन्वारुह्यापि परिहरति—स्याद्वेति। अजसंयोगसाधने तावदनुमानं शक्तमशक्तं वा भवतु; विपक्षे बाधकाभावात् शास्त्रं पुनः सर्वाधारं धाम विष्णुसंज्ञमित्यादिकं परस्य ब्रह्मणः कृत्स्नप्रपञ्चाधारत्वमावेदयति। तदाधारत्वं च तदपृथगवस्थानमेव। अतो विभूनामपि परमात्मसंबन्धस्य शास्त्रप्रमितत्वात् बाधकाभावाच्च युक्त एवायमजसंयोगः इति॥ ५४॥

आनन्द०—प्रसङ्गसङ्गतिमभिप्रेत्याह—अस्तु संयोग इति। निरन्तराणां हीति नैरन्तर्यसंयोगयोर्भेदमभ्युपेत्येदं बोध्यम्। वैशेषिकोक्तं दूषणमाह—केचित्त्विति। ईश्वरज्ञानादीत्यादिशब्देन इच्छादीनां ग्रहणम्। नन्वस्तु बाधकाऽभावः, साधकं न पश्याम इत्याक्षिपति—तर्हीति—व्याप्तिग्रहणायोगादिति भावः। उक्तमेवेति—नैरन्तर्यस्य संयोगसामान्यव्याप्तस्य पक्षधर्मताबलादजसंयोगसाधकस्यानुमानस्य सत्वादिति भावः। अशक्तं वेत्यत्र हेतुमाह—विपक्षे बाधकाभावादिति। सर्वाधारं धाम विष्णुसंज्ञमित्यादिकेन—"नित्यं विभुं सर्वगतं" "अन्तर्बहिश्च तत्सर्वं" मित्याद्या विवक्षिताः। कृत्स्नप्रपञ्चाधारत्वमिति।

नन्वाधाराधेयभावादेव ब्रह्मणः तद्व्यतिरिक्तस्य चाऽविभुत्वं स्यादित्यत आह—तदाधारत्वञ्चेति मूलं तत्सिद्ध्यसिद्ध्योः—नित्यसंयोगासिद्धाविव तत्सिद्धो वा समर्थो वा भवत्वित्यर्थः॥ ५४॥

॥ इति अजसंयोगनिरूपणम्॥

---

संयोगाद्विश्वसृष्टिः प्रकृतिपुरुषयोस्तादृशैस्तद्विशेषैः
ब्रह्मादिस्तम्बनिष्ठा जगति विषमता यन्त्रभेदादयश्च।
अक्षाणामर्थयोगाद्द्विविधमतिरबाध्यन्वयादङ्कुरादिः
शुद्धाशुद्धादियोगान्नियतमपि फलं न्यायतत्त्वेऽ(स्य)न्यघोषः॥५५॥

संयोगस्य सार्वत्रिकोपजीवनेन सर्वैरनपोह्यत्वं दर्शयति—संयोगादिति। प्रकृतिपुरुषयोस्संयोगाद्विश्वसृष्टिः, तादृशैरेव संयोगविशेषैर्ब्रह्मादिस्तम्बपर्यन्तं जगद्वैषम्यम्। आलानयन्त्रादयः सुप्रसिद्धास्संयोगरूपाः। अक्षाणामर्थसंयोगात् द्विविधा मतिर्दृश्यते। अबाध्यन्वयात् बीजादिकमङ्कुरति। शुद्धाशुद्धात्मकाभ्यां कपिलानरास्थिसंस्पर्शाभ्यां नियतमपि फलमनुशोश्रूयामहे। अतसंस्योगविशेषास्सर्वत्रोपलभ्यन्ते इति न्यायतत्त्वे संयोगस्य घोष इति॥ ५५॥

---

आनन्द०—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्यभिप्रायेणाह—संयोगस्येति श्रौतार्थमपलापिनं प्रत्याह—आलानयन्त्रादय इति।

ननु सर्वमेतन्नैरन्तर्यादिभिरुपपद्यत इत्यत्राह—अतस्संयोगविशेषा इति—प्रत्यक्षसिद्धत्वात्संयोगं विना नैरन्तर्यस्य वक्तुमशक्यत्वादिति भावः। तादृशैस्तद्विशेषैः-प्रकृति पुरुषनिरूपितैस्संयोगविशेषैरित्यर्थः॥ ५५॥

॥ इति संयोगवैचित्र्यप्रदर्शनम्॥

संयुक्ते द्रव्ययुग्मे सति समुपनतो यस्तु संयोगनाशः
संग्राह्योऽयं विभागव्यवहृतिविषयस्सोऽपि तद्धेतुतः स्यात् ।
त्वन्निर्दिष्टे विभागे गतवति च सतोः स्याद्विभक्तप्रतीतिः
भूयस्संयोगसिद्धौ कथमिति तु यथा त्वद्विभागान्तरादौ ॥ ५६ ॥

**सर्वार्थ०**—विभागस्य संयोगनाशादर्थान्तरत्वं प्रतिक्षिपति—**संयुक्त** इति। पूर्वं परस्परसंयुक्ते द्रव्यद्वये विद्यमाने सति समुपनतो यः संयोगनाशस्स एव विभागव्यवहारविषय इति संग्राह्यः। तर्हि संयोगविनाशकत्वेन विभागं स्वीकुर्म इति चेत्, तन्न; संयोगविनाशस्य विभागकारणत्वेन कल्पितात्कर्मण एव सिद्धिः स्यात्। तदिदमाह—**सोऽपि तद्धेतुत** इति। ननु विभागस्य संयोगनाशरूपत्वे संयोगनाशस्यानन्त्यात् भूयस्संयोगसिद्धावपि विभक्तप्रतीतिः स्यादेवेति चेत्, तर्हि त्वन्निर्दिष्टे विभागे तस्मिन्नेव क्षणे गतवति विभागप्रध्वंसमात्रमेव सतोर्द्रव्ययोरनुवर्तते। तेनैव तत्र विभक्तव्यवहारानुवृत्तौ भूयस्संयोगेऽपि तवापि विभक्तव्यवहारः स्यादिति प्रतिबन्दीमाह—**त्वन्निर्दिष्ट** इति। पृच्छति—**कथमिति**। उत्तरम्—**यथेति**। यथा त्वद्विभागान्तरे सति पूर्वविभागप्रध्वंसानुवृत्त्या विभक्तप्रतीतिः, एवं मध्ये संयोगकालेऽपि विभक्तप्रतीतिः स्यात्। ननु तत्र उत्तरविभागात् विभक्तप्रतीतिः; मध्ये संयोगकाले तत्प्रागभावात् विभक्तप्रतीतिर्नास्तीति चेत्, एवं तर्हि मध्यगतसंयोगस्य विभक्तप्रतीतिपरिपन्थित्वात् तस्मिन् काले विभक्तप्रतीतिर्नास्ति, भूयः संयोगप्रध्वंसकाले तस्यैव संयोगस्य प्रध्वंसेन तस्मिन्नेव काले विभक्तप्रतीतिरस्तीति ममापि समानमिति भावः ॥ ५६ ॥

---

**आनन्द०**—संयोगविभागेति वैशेषिकोक्तक्रमेण विभागं निरूपयति—**विभागस्येति**—

ननु क्रियातो विभागः, विभागात्पूर्वं संयोगनाशः, विभागसापेक्षत्वाद्विभागोऽस्तीति शङ्कते—**तर्हीति**। **तन्न संयोगविनाशस्येति**—तद्धेतोरेवेति न्यायादिति भावः। **आनन्त्यादिति**—ध्वंसाभावादित्यर्थः। गूढाभिसन्धिः परिहरति—**तर्हीति**—अभिसन्धिमुद्घाटयति—**तवेति**—एकाश्रयनाशाद्विभागनाशस्थले विभागप्रत्ययस्य अन्तरे संयोगविनाशाधीनत्वात्पुनर्विभागेऽपि विनाशः पूर्वमभूदिति पूर्वविनाशाद्विभक्तप्रत्यय इति भावः।

केचित्तु विभागप्रत्ययोऽसंयुक्तत्वप्रत्यय इति वदन्ति। **एवन्तर्हीति**—भवतां संयोगान्तरोत्पत्तावपि पूर्वनाशस्य सत्वेन संयुक्ताविति प्रत्ययप्रसङ्गेन तद्व्यवहारे संयोगस्य प्रतिबन्धकत्वमभ्युपेत्यम्, तथाऽत्रापीत्यर्थः। तथाचायमर्थः। स्वप्रतियोगिमात्रप्रतियोगिकसंयोगसमानकालीनसंयोगध्वंसस्य संयुक्तव्यवहारहेतुत्वं वक्तव्यम् तथा च स एव विभक्तव्यवहारनिमित्तमित्याहुः। **मध्यगत संयोगस्य**—स्वसमानाश्रयसंयोगस्येत्यर्थः। पुनर्विभागप्रत्ययः कथमित्यत्राह—**भूय इति**—तथा च तादृशसंयोगध्वंससत्वाद्विभक्तप्रत्यय इत्यर्थः ॥ ५६ ॥ इति परोक्तविभागभङ्गः ॥

कोऽसौ संयोगनाशस्तव मत इति चेत् सोऽयमन्यत्र योग-
स्तस्य प्राचा विरोधात् स तु मिषति तथाऽऽलोचितस्त[स्य]द्विनाशः ॥
अज्ञातप्राच्ययोगः परमभिमनुते स्वेन रूपेण चैनं
सर्वोऽप्येवं ह्यभावः स्फुटमिह न पुनः कश्चिदन्योऽस्ति दृष्टः ॥ ५७ ॥

सर्वार्थं—एवं संयोगनाशस्य विभागत्वं समर्थ्य संयोगनाशस्य स्वरूपं चोद्यपूर्वकं शोधयति—कोऽसाविति ॥ सोऽयमन्यत्र योगः—उत्तरदेशसंयोग एव पूर्वदेशसंयोगस्य विनाशः। तत्र हेतुमाह—तस्येति। अयमर्थः—उत्तरदेशसंयोगस्य पूर्वदेशसंयोगेन विरोधात्। स तु—स एवोत्तरदेशसंयोग एव। तथाऽऽलोचितः—पूर्वदेशसंयोगविरुद्धत्वेनालोचितः। तद्विनाशो मिषति—पूर्वदेशसंयोगनाश इति परिस्फुरति। कथं तर्ह्युत्तरदेश-संयोग इति भावरूपेण प्रतिपत्तिरित्यत्राह—अज्ञातेति। द्विविधा हि उत्तरदेशसंयोगस्य प्रतीतिः; ज्ञातपूर्वदेशसंयोगस्य तद्विरुद्धत्वेन काचित्, स्वरूपेण चापरा। तत्र ये स्वरूपेण प्रतिपद्यन्ते ते भावरूपेणाभिमन्यन्ते; ये पुनः पूर्वदेशसंयोगविरुद्धत्वेन प्रतिपद्यन्ते ते त्वभावरूपेणेति विभागः। उक्तमर्थं सार्वत्रिकत्वेनोपपादयति सर्व इति। भावान्तरा-भाववादिनां सर्वोऽप्यभावो न भावान्तरादतिरिच्यत इति भावः। एवं सर्वत्रापि भाव-स्यापलपे कुत्रापि भावो न स्यादित्याशङ्क्याह—स्फुटमिति। यत्र स्फुटदृष्टो भवति भावरूपः पदार्थः, तत्र तथैव स्वीकार्यम्। यत्र पुनरितराभावतया निर्वोढुं शक्यते तत्र तथैव निर्वाह्यः। सर्वेऽपि वादिन इत्थमेव खलु भावाभावविवेकं परिकल्पयन्तीति भावः ५७ ॥

---

आनन्द०—प्रसङ्गसङ्गतिमभिप्रेत्याह—एवमिति।

ननु तस्य प्राचां विरोधादिति हेतूपन्यासो न संगच्छते। संयोगविरोधित्वस्य विरोधेन संयोगात्मकत्वसाधकत्वायोगादित्यत्राह—अयमर्थं इति। तच्छब्दार्थमाह—उत्तरेति। इतिशब्दोऽध्याहर्तव्य इत्याह—नाश इति परिस्फुरतीति—संयोगं स्वरूपेण जानन्तीत्यर्थः।

ननु संयोगनाशो न देशान्तरसंयोगः तथा सति पूर्वदेशे देशान्तरसंयोगरहिते संयोगनाशप्रतीतिर्न स्यात्। तथा देशान्तरे पूर्वदेशसंयोगनाशप्रतीतिस्स्यात्। अत एव विभागप्रतीतिश्चाऽव्यवस्थिता स्यादिति चेत्। उच्यते। भावान्तरमेवाऽभाव इति पक्षे उत्तरसंयोगस्य पूर्वसंयोगाभावव्यवहारहेतुत्वं, नचातिप्रसङ्गः। विरोधस्य नियामकत्वात्। न चातिप्रसङ्गः, प्रतियोग्यधिकरणदेशे तस्य व्यवहार जनकत्वाङ्गीकारात्।

वस्तुतस्तु देशान्तरसंयोग एवेति न नियमः तत्प्रतियोग्यसमानकालीनतद्देश संयोगादेरप्यभावत्वात्। अत एव देशान्तरसंयोगस्य सन्निकर्षाभावदशायामिहस्थस्य-भाव व्यवहारो न स्यादित्यपास्तम्। अन्यथाऽतिरिक्ताभाववादेऽपि स्वरूपस्याऽविशेषात्।

क्वचिदेव स्वरूपं सम्बन्धो न सर्वत्रेति नियमाभावादतिप्रङ्गस्स्यात्। यदि व्यवहार बलात्क्वचिदेवेति नियमः तदा प्रकृतेऽपि तुल्यम्। एवञ्च विभागप्रत्यययोर्अपि निर्व्यूढम्। एतदभिप्रायेणाह—भावान्तरेति। सर्वेऽपि वादिन इति—नैयायिकोऽन्धकारम भावं मेने। अपरेत्वाकाशमावरणाभाव इत्यादि ज्ञेयम्। अज्ञातप्राच्ययोगः—प्राच्य-संयोगज्ञानं विना जानन्। स्वेन रूपेणेति—तथ्यसंयोगस्वरूपेण ॥ ५७ ॥

॥ इति संयोगनाशस्वरूपशोधनम् ॥

---

स्पन्दावृत्त्यादिभेदात् परमपरमिति प्रत्ययौ तत्तदर्थे
कालाधिक्यादिमात्रान्न खलु समधिकं शक्नुयातां विधातुम्।
दृष्टिर्नान्यस्य क्लृप्तिर्भवति गुरुतरातिप्रसङ्गोऽन्यथा स्यात्
किं न स्यातां गुणाद्यैः परतदितरते पूर्वभावादि चान्यत् ॥ ५८ ॥

सर्वार्थ—अत्र परत्वापरत्वे प्रमाणाभावाद् दूषयति—स्पन्देति॥ न तावत् परत्वा-परत्वे वस्तुनः स्वरूपकृते, परापरव्यतिरेकाभावप्रसङ्गात्। अतो बुद्धिकृते इत्येव हि भवद्भिस्सिद्धान्तितम्। सा च बुद्धिरपेक्षाबुद्धिरित्यभिधीयते। सा बुद्धिर्न निर्विषया; बुद्धेर्निर्विषयत्वायोगात्। नापि सामान्येन यत्किञ्चिद्विषया; सर्वासामपि बुद्धीनामपेक्षा-बुद्धित्वप्रसङ्गात्, परत्वापरत्वयोरन्योन्यवैषम्याभावप्रसङ्गाच्च। अतो विषयविशेष-विशेषितेयं बुद्धिः परत्वापरत्वहेतुरिति स्वीकर्तव्यम्। तथैव च भवद्भिरपि स्वीक्रियते। तथा चापेक्षाबुद्धिविषयरूपत्वमन्तरेणाधिकपरत्वापरत्वयोरदर्शनात्, अनपेक्षितकल्पने गौरवाच्च, अपेक्षाबुद्धिविषयभाव एव परत्वापरत्वे स्त इति तात्पर्यार्थः। पदार्थस्तु—स्पन्दावृत्त्यादिभेदात्—कालकृतपरत्वापरत्वे सूर्यपरिवृत्त्यादिभेदेन कालाधिक्यादिमात्रात् परमपरमिति प्रत्ययौ स्तः। दिक्कृतपरत्वापरत्वे संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वमात्रात् परत्वापरत्वबुद्धी भवतः। इत्थमन्यथासिद्धौ बुद्धिव्यवहारौ समधिकपरत्वापरत्वे विधातुं न शक्नुयाताम्। तदिदमाह—न खल्विति। दृष्टत्वादधिकं परिगृह्णीम इति चेत्, नेत्याह—दृष्टिर्नान्यस्येति। न हि किंचित् परत्वमपरत्वं वा पूर्वोक्तादन्यदुपलभामहे, कल्पनं तु गुरुत्वहतम्। अनपेक्षितकल्पन[या]मतिप्रसङ्गदुःस्थं च। किञ्च गुणादि-[भिरपि]ष्वपि परत्वापरत्वव्यवहारो दृश्यते, यथाऽऽभिजात्येन परः, विद्यया परः वृत्तेन पर इत्यादि। नैतावता तत्र परत्वादि कल्प्यते। किञ्च कालेन पूर्वः, पश्चाद्भावी, वर्तत इति, देशेनापि प्राग्भावी पश्चाद्भावीत्यादिव्यवहारभेदास्सहस्रशोऽपि दृश्यन्ते। न च तत्र गुणभेदा भवद्भिरपि कल्प्यन्ते। केवलं देशकालविशेषसम्बन्धमात्रेण व्यवहार-विशेषाः प्रतीयन्त इति हि भवन्तोऽपि वदन्ति। तदन्यत्रापि न दण्डवारितम्। किंच दिक्कालावुपाधीकृत्यापेक्षाबुद्धिः प्रवर्तते इति हि भवत्सिद्धान्तः। तदपि न जाघटीति; दिक्कालयोः परत्वापरत्वपरिणतेः प्रागेवोपलब्धत्वे पश्चादनुमानवैयर्थ्यात्, अनुपलब्धत्वे तु अपेक्षाबुद्धेरेव सुषुप्तिप्रसङ्गात्। इत्येषा दिक् ॥ ५८ ॥

आनन्द०—वैशेषिकोक्तक्रम एव सङ्गतिरित्यभिप्रायेणाह—अत्र परत्वापरत्व इति । न वस्तुतः स्वरूपकृते —न स्वरूपमात्रजन्येत्यर्थः । व्यतिरेकाऽभावप्रसङ्गादिति–दिक्कृत परत्वापरत्वयोः स्वीकारो दृष्टः । यथा दूरस्थे परत्वं सन्निहिते चापरत्वं तयोरेव सन्निधानाऽसन्निधानवैपरीत्येन परत्वाऽपरत्ववैपरीत्यमिति । अपेक्षाबुद्धिविषयरूपत्व-मन्तरेणेति—अपेक्षाबुद्धिविषयस्य स्वरूपत्वमसाधारण्यं । तथा च तद्बुद्ध्यसाधारण-विषयत्वमेव परत्वापरत्वयोर्व्यावर्तको धर्म इत्यर्थः फलित इत्याह—अपेक्षेति ।

केचित्तु अपेक्षाबुद्धिविषयत्वमित्येव पाठः रूपत्वन्तु लेखकदोषकृतमित्याहुः ।

स्पन्दावृत्यादिभेदादित्यस्य कालाधिक्यादिमात्रादित्यनेन पुनरुक्तभ्रान्तिमपनेतुं परत्वापरत्व इत्यध्याहृत्य योजयति—पदार्थेत्स्विति—परत्वापरत्वे द्विविधे दिक्कृते कालकृते चेति । आद्य आह—स्पन्देति समधिकं—अतिरिक्तम् । अतिप्रसङ्गवुस्थं च – अतिप्रसङ्गो दूरस्थितिरित्यर्थः । किञ्च कालेन पूर्वंइत्यादि ।

ननु कालकृत परत्वापरत्वमभ्युपगम्यते तथा दिक्कृते परत्वापरत्वेऽपि देशकृत-परत्वादिकमेव । तथा च कथमापादनमिति चेत् । अत्राहुः । तपनपरिस्पन्दकृतमेव परत्वमपरत्वञ्च । ताभ्यामन्यत् साक्षात्कालकृतमापाद्यते । तथा देशश्च दिगपेक्षयाऽन्य एव । अत एव तत्कृत परत्वापरत्वे च भिन्ने एवाऽपाद्येत इत्याहुः ।

ननु दिक्कालयोः परत्वापरत्वाभ्यामनुमेयत्वान्नदिक्कालसम्बन्धावेव परत्वापरत्व इत्यत्राह—किञ्चेति । अपेक्षाबुद्धिजन्यत्वं तद्विनाशविनाश्यत्वञ्च परत्वापरत्वयोः । एवञ्च परत्वापरत्वोत्पत्तेः प्रागेव दिगाद्युपस्थितेर्नानुमेयत्वमित्यर्थः । अपेक्षाबुद्धेरेवेति —घटका-नुपस्थितौ नागृहीत विशेषणान्यायेन तद्घटितज्ञानाऽसम्भवादिति भावः ।

ननु कालादेरतीन्द्रियतया तद्योगग्रहासम्भवात्परत्वापरत्वप्रत्यक्षबुद्धेस्तद्विषयत्व-मनुपपन्नं । तथा च श्रीविष्णुचित्तैः—"परिमाण पृथक्त्वं देशकालकृत परत्वापरत्वादि-चेन्द्रिययोग्यं सर्वं सहैव ज्ञायत" इति परत्वापरत्वयोः स्वरूपस्य प्रमेयसंग्रहे प्रतिपाद-नात्कथं तदभाव इति शङ्का च दिक्पदनिवर्त्या । निवृत्तिस्तु दिक्कालयोरैन्द्रियकत्वात् तद्योगोऽपि योग्य एव । यद्वा दिक्कालोपस्थितिरपेक्षाबुद्धिबलादस्तीति भवद्भिरप्यङ्गी-कार्यमेवेति न दोषः । परत्वापरत्वयोरुक्तसंयोगरूपयोरभ्युपगमान्न प्रमेयसंग्रहविरोधोऽपि न च तदतिरिक्तत्वं तत्रोक्तं येन विरोधस्य गन्धस्स्यादिति ॥ ५८॥

इति बुद्धिजन्यपरत्वापरत्वाख्यगुणान्तरकल्प्तिभङ्गः ॥

द्रव्यं प्राग् बुद्धिरुक्ता परमिह विषयैस्सङ्गमादिर्निरूप्य-
स्संयोगं भाष्यकाराः प्रथममकथयन्न्यायतत्त्वानुसारात् ।
तत्संयोगे समेऽपि स्फुरति न निखिलं तेन योग्यत्वमन्यत्
ग्राह्यं संबन्धसाम्ये नियतविषयता दृश्यते हीन्द्रियेषु ॥ ५९ ॥

सर्वार्थ---अथ बुद्धिविषयचिन्ता प्रवर्तते । बुद्धेर्गुणत्ववादिनं प्रत्याह—द्रव्यमिति बुद्धिसरे बुद्धेर्द्रव्यत्वमुक्तम्; परमिह विषयैस्संबन्धादिर्निरूप्यते । तत्र भाष्यकारा-न्यायतत्त्वानुसारात् बुद्धेर्विषयैस्सह सम्बन्धं संयोगमकथयन् । तर्हि सर्वैरपि संयोगात्सर्वं भासेतेति न वाच्यम् । बुद्धेस्संयोगे समेऽपि निखिलं न स्फुरति । तत्र हेतुमाह—योग्यत्वमन्यद्ग्राह्यमिति । संबद्धमपि योग्यमेव बुद्ध्या गृह्यत इत्यर्थः । तत्र दृष्टान्तमाह—सम्बन्धेति । संबन्धसाम्ये सत्यपि नियतविषयता दृश्यते तद्वदिहेति । इन्द्रियार्थसन्निकर्षे तुल्येऽपि चक्षुषा रूपमेव गृह्यते न पुनः स्पर्शः; स्पर्शनेन स्पर्शः न रूपम् । कुत एतत् ? योग्यत्वस्य नियतत्वात् । एवं सर्वेषां बुद्धिसंबन्धे सत्यपि सहकारियोग्यतादि-नियमादेकमेव गृह्यते, नान्यदिति नियमो नानुपपन्न इति ॥ ५९ ॥

---

आनन्द०---इच्छादीनां ज्ञानान्तर्भावान्न गुणत्वमिति ज्ञाने च विषयविषयि भावादिविशेषञ्च निरूपयितुं निरूपितमपि ज्ञानं पुनराह—अथेत्यादिना ।

ननु गुणादिभिस्संयोगासम्भवात् अतीतादावप्यावश्यकत्वाद्विषयविषयिभावोऽन्यो वा कश्चित्स्वीकार्यः । तथा च किं संयोगेनेत्यत्राह—तत्र भाष्यकारा इति—द्रव्य प्रत्यक्षे संयोग इति भावः । तर्हि घटसंयोगकाले तत्रत्याकाशादिभिरपि संयोगस्यावश्य-कत्वादिति भावः । संबद्धमपीति ।

नन्विन्द्रियादौ योग्यं गृह्यत इति युक्तं तन्नियतविषयत्वात् बुद्धेस्तु सर्वग्राहिण्या न योग्यायोग्यविभाग इति चेत् । अत्राहुः । एकस्या एव बुद्धेः करणभेदेन प्रसरण भेदोऽस्ति । यदा यदिन्द्रियजन्य प्रसरणयुक्तं तदा तद्योग्यं गृह्णातीति नियतयोग्यताऽ-स्त्येव । यथा—एकमेवेश्वरस्य नैल्यभ्रं रात्रिंदिवादिकालभेदेन चक्षुषो योग्यमयोग्य-मितिं ॥ ५९ ॥

॥ इति विषयविषयिभावनिरूपणम् ॥

---

नित्यं नित्यादिबुद्धिर्निखिलविषयिणी तद्वदेव स्वभावः
शास्त्रैः क्षेत्रज्ञबुद्धेरपि समधिगतः कर्मभिस्तन्निरोधः ।
संकोचोल्लासयोश्च प्रतिनियतिरिह स्यादुपाधिप्रभेदा-
च्छिश्लेषोपाधिमोक्षे निखिलविषयतामश्नुवीत स्वभावात् ॥ ६० ॥

सर्वार्थ---इत्थं विषयविषयिभावं निरूप्य तद्वैषम्ये निदानमाह—नित्यमिति ॥ नित्यादिबुद्धिर्निखिलविषयिणी । तद्वदेव स्वभावः यथा न क्रियते ज्योत्स्नेत्यादिशास्त्रैः

क्षेत्रबुद्धेरपि समधिगतः । [अपि तु] कर्मभिस्तन्निरोधः; तेन सङ्कोचोल्लासयोः प्रतिनियतिरिहोपाधिभेदात् स्यात्, निश्शेषोपाधिमोक्षे सैव बुद्धिर्निखिलविषयतामश्नुवीत । अत्रोपाधिः कर्म; स च निरूपणे भगवन्निग्रह एव । अतो भगवानेव निग्रहानुग्रहाभ्यां बुद्धेः संकोचविकासौ करोति ॥ ६० ॥

आनन्द०—प्रसङ्गसङ्गत्याह—इत्थमिति । तद्वदेव—नित्यादिबुद्धेरिव । क्षेत्रज्ञबुद्धेः—कर्मवश्यबुद्धेरपि सर्वविषयतास्वभावो गत इत्यर्थः । उल्लासः—विकासः ॥ ६० ॥

॥ इति विषयविषयिभाववैषम्यम् ॥

मुक्तानां धीः क्रमाच्चेत् प्रसरति न कदाऽप्यन्तमेषाऽधिगच्छेत्
संक्षिप्तायाश्च दूरान्तिकपरिपतने यौगपद्यं न शक्यम् ।
संयोगो भूतभा[वि]व्येष्वपि न हि घटते तद्धि यस्सांप्रतिक्या
इत्याद्यैर्न क्षतिः स्यात् श्रुतिमुखविदिते योग्यतावैभवेऽस्याः ॥ ६१ ॥

सर्वार्थ—मुक्तानां धीविकासानुपपत्तिं विकल्पाभासेन वदतां श्रुतिविरोधं वक्तुं तदुक्तिमनुवदति मुक्तानामिति ॥ इत्थं किल तेषामाशयः—मुक्तानां धीः क्रमाच्चेत्प्रसरति न कदाऽपि देशस्यान्तमेषाऽधिगच्छेत्; आनन्त्याद्देशस्य । नापि युगपद् गच्छेद्; न हि संक्षिप्ताया धियो युगपद् दूरान्तिकपरिपतनं युक्तं वक्तुम् । अयमेको दोषः; अन्योऽपि सांप्रतिक्या भूतभाविधियो भूतभाविभ्यां संयोगो न घटते; संबन्धान्तरं [नालप्यते] नोपलभ्यते । अतो मुक्तानां सार्वज्ञ्यं न स्यादिति । तन्निराचष्टे—श्रुतीति श्रुतिमुखविदिते योग्यतावैभवे अस्याः—धियः तत्कर्मसु न क्षतिः स्यादित्यर्थः । अयमर्थः—मुख्यासंभवे गौणग्रहस्साधारणः । तथा च संयोगसंभवे स एव ग्राह्यः, तदभावे [ऽपि) विषयविषयिभावस्तत्स्थानापन्नः स्वीकार्यं इति । धर्मभूतज्ञानस्य क्रमयौगपद्याभ्यां प्रसरणानुपपत्तिरुदयगिरिशिखरस्थदिवाकरकरप्रसरणवदुन्मीलितचक्षुषो ब्रह्माण्डोदरवर्तिसकलवस्तुग्रहणवदित्यादिभिः प्रागेव परिहृता । भगवतः प्रभावातिशयेन युगपदेव धर्मभूतज्ञानस्य विश्वविषयत्वप्राप्तौ को विरोधः; ॥ ६१ ॥

आनन्द०—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—मुक्तानामिति । ननु कुतोऽन्तनं गच्छति क्रमेण गच्छतः पोतस्य समुद्रपारगमनदर्शनादित्यत आह—इत्थं किलेति । सांप्रतिक्याः—इदानीमुत्पन्नायाः सम्प्रतिशब्दाद्भावार्थे कालात् ठञि कृते रूपम् । श्रुतिमुखेति—सर्वं हि पश्यः पश्यतीत्याद्याः । अस्तु श्रुतिमुखविदितवैभवः तथाऽपि भूतभाविभ्यां संयोगः कथं तयोरसत्त्वात् दूरान्तिकयोर्वा कथं युगपत्संबन्ध इत्यत्राह—अयमर्थ इति । मुख्यासम्भव इति—व्रीह्यभावे कोद्रवस्य सोमाभावे पूतीकस्य च लोकवेदयोर्ग्रहणादित्यर्थः ।

एतेन विषयविषयिभावस्याऽऽवश्यकत्वात् सर्वत्र स एवास्तु लाघवादिति परास्तं। द्रव्यत्वेन संयोगस्यापि सम्भवेन तस्यैव प्रयोजकत्वे लाघवम्। संयोगस्थले विषय-विषयिभावस्यापि कल्पने गौरवात्। रविकरादीनामप्येवं सामर्थ्ये मुक्तज्ञानस्य कैमुत्यसिद्धं तदित्याह—भगवत इति। मुक्तज्ञानस्य भगवतो विशेषापेक्षित्वादित्यर्थः ॥ ६१ ॥

॥ इति विषयविषयिसंयोगचोद्यपरिहारः ॥

---

वेगस्याचिन्त्यरूपो रविशशिनयनाद्यंशुवर्गेषु भूमा
भागानन्त्येऽप्यणूनामतिपतनमतो ह्याहुरन्योन्यमेके।
इत्थं सर्वैरबाध्यां गतिमनुवदतां मुक्तबुद्धेर्विकासे
युज्यन्ते यौगपद्यप्रभृतय इति तु श्रद्दधीध्वं श्रुतार्थाः॥ ६२॥

किंच त्वदङ्गीकृतदृष्टान्तेन(ापि) मुक्तबुद्धेर्व्याप्तिरुपपद्यते इत्याह वेगस्येति॥ उक्तं हि भवता रविशशिनयनाद्यंशुवर्गेषु वेगस्याचिन्त्यरूपो भूमेति। अत एव काकबाणादिः क्रमेण देशान्तरं गच्छति, रविकरोऽह्नायैव; तद्युगपदतिलङ्घनमन्तरेण नोपपद्यते। इत्थमेव जैनैरप्यङ्गीकृतमित्याह—भागानन्त्य इति। परमाणवोऽनेकावयवास्तत्पक्षे ; अथाप्यन्योन्यमतिक्रामन्ति परमाणवः। तदेतदनन्तानामंशानां युगपदतिलङ्घनमन्तरेण नोपपद्यते। इत्थं सर्वैरबाध्यां गतिमनुसरतामस्माकं मुक्तबुद्धेर्विकासे यौगपद्यप्रभृतयो युज्यन्त इति। श्रुतार्थाः—श्रुत्यर्थपर्यालोचनवन्तो मनीषिणः श्रद्दधीध्वम्॥ ६२॥

---

आनन्द०—पूर्वसङ्गतिरेव सङ्गतिरित्यभिप्रायेणाह—किञ्चेति परमाणवोऽनेकावयवा इति—सर्वस्यापि सभागत्वात्परमाणूनामनन्तावयवत्वं अन्योन्यातिक्रमणञ्च वेगातिशयेन युगपल्लङ्घनादिति भावः॥ ६२॥

॥ इति मुक्तबुद्धिव्याप्त्युपपत्तिः॥

---

यत्सूक्ष्मं विप्रकृष्टं व्यवहितमपि तद् गृह्णती योगिबुद्धि-
र्भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिद्धा।
नष्टादिष्वक्षतो धीः कथमिति यदि न प्रत्यभिज्ञादिनीते-
श्चित्रास्संबन्धभेदाः करणविषययोस्तत्रतत्राभ्युपेताः॥ ६३॥

अस्त्वेवम्, तथाऽपि योगिबुद्धेर्नष्टादिविषयत्वं नोपपद्यत इति वदतः पक्षं दूषयितुं तन्मतमनुवदति—यत्सूक्ष्ममिति॥ सूक्ष्मव्यवहितविप्रकृष्टानर्थान् गृह्णती योगिबुद्धिः भूयिष्ठादृष्टलब्धातिशयकरणवृत्त्यानुगुण्येन सिध्यतु सूक्ष्मादीनां वर्तमानत्वात्।

संबन्धोऽपि यथाकथंचिदुपपद्यते। नष्टादिष्वक्षतः–इन्द्रियात् धीः कथं भवतीति चेत्तन्निराकरोति—नेति। हेतुमाह–प्रत्यभिज्ञादिनीतेरिति। यथा प्रत्यभिज्ञा नष्टामपि प्रागवस्थां गृह्णाति। ननु संस्कार एव तत्र कथंचित् संबन्धत्वेन कल्प्यत इति चेत् एवं तर्हि योगिनामप्यतीतादिग्रहणे अदृष्टमेव सम्बन्धत्वेन कल्प्यतामित्याह—चित्रा इति। ईदृशसंबन्धभेदास्त्वयाऽप्यङ्गीकार्या इत्याभिप्रायिकोऽर्थः। तदिदमाह – तत्रतत्राभ्युपेता इति ॥ ६३ ॥

---

आनन्द०––आक्षेपसङ्गतिमाह—अस्त्वेवमिति। सम्बन्धोऽपीति––योगजधर्मेण व्यवहितदेशगमनेऽपीन्द्रियाणां निरोधाभावात्तत्र गत्वा इन्द्रियाणि संयुज्यन्त इत्यर्थः। नष्टादिष्विति––कथञ्चिदप्यक्षस्य सम्बन्धाभावादिन्द्रियतो धीर्न सम्भवतीत्यर्थः। ईदृशेति।

ननु सिद्धान्ते संयोगः संयुक्ताश्रयत्वमिति द्वैविध्यमेवोक्तं कथमत्र योगजसम्बन्धकल्पनमिति चेत्। अत्रोक्तमाचार्यैः–लौकिकप्रत्यासत्त्यनुसारेण द्वैविध्यकथनं। अलौकिकप्रत्यासत्तिस्तु न निषिद्धेति। अत एव न्यायपरिशुद्धावनुमानपरिच्छेदे सामान्यप्रत्यासत्तिसद्भावः एकथा तत्वेन दर्शित इति।

अपरे तु मुक्तादिबुद्धेर्यथेन्द्रियसम्बन्धानपेक्षतया सर्वगोचरत्वं तथा, योगिबुद्धिरपीन्द्रियैस्सम्बन्धनिरपेक्षैरेव जन्यते। अत एव ईदृशसम्बन्धभेदा इति बहुवचनोक्तिरपि युज्यत इत्याहुः॥ ६३ ॥

॥ इति योगिबुद्धेरतीतादिविषयत्वोपपत्तिः ॥

---

नित्याया एव बुद्धेस्स्वयमभिदधतः केचिदद्रव्यभावं
संबन्धं धर्मतोऽस्याः कृतकमकथयन् भूषणन्यायसक्ताः।
स्वाभीष्टद्रव्यलक्ष्मस्मृतिविरहकृतं नूनमेषां तदेतत्
सौत्रं तल्लक्षणं तैरनुमतमिह च स्याद्धि कार्याश्रयत्वम्॥ ६४॥

नित्याया इति। भूषणमतानुसारिणो नित्याया बुद्धेरद्रव्यत्वमभिदधत एव, विषयविषयिभावमस्याः कृतकमथयन्, मुक्तावस्थायां नित्यानन्दाविर्भावविवचनात्। आविर्भावो हि नित्येन ज्ञानेन तस्मिन् काले तस्यैवानन्दस्य सम्बन्धः। स च सम्बन्धः प्रागभावात् तस्मिन् काले सत्त्वाच्च कार्य एव, तथा च सति स्वाभीष्टद्रव्यलक्षणप्रस्मरणमेषामेतादृशव्यवहारनिदानम्। तदिदमाह—स्वाभीष्टेति। समवायिकारणं द्रव्यमिति द्रव्यलक्षणं तैरनुमतम्। समवायिकारणत्वं च कार्याश्रयत्वमिति चानुमतम्। इह च विषयविषयिभावस्य कार्यत्वे तदाश्रयत्वाद्विज्ञानानन्दयोर्द्रव्यत्वमेव स्यादिति भावः॥ ६४॥

आनन्द०—प्रसङ्गसङ्गतिं दर्शयति—भूषणेति यद्यपि द्रव्यनिरूपणावसर एव सङ्गतं तथापि सम्बन्धनिरूपणमुखेन प्रवृत्तिरत्रैवेति भावः। तथा च सतीति—सम्बन्धनिरूपणकार्यं प्रति समवायिकारणत्वादिति भावः। तदाश्रयत्वाद्धिज्ञानानन्दयोरिति विषयविषयिभावस्योभयगतत्वमभ्युपेत्येदम्।

केचित्तु विषयत्वं वा विषयित्वं वाऽवश्यं वाच्यमित्यानन्दस्याऽपि समवायिकारणत्वमिति वदन्ति ॥ ६४ ॥

॥ इति अद्रव्यपक्षे निष्पधीविषयत्वस्य कार्यत्वानुपपत्तिः ॥

---

प्राकट्यं नाम धर्मं कतिचन विषये बुद्धिसंबन्धजन्यं
मन्यन्ते तन्न दृष्टं व्यवहरणविधावानुगुण्यं तु भानम्।
क्वापि स्वाभाविकं स्यात् क्वचन भवति धीगोचरत्वात्मकं तत्
भातीत्यादिप्रयोगः स्वदत इति नयात्तत्र कर्मत्वगर्भः ॥ ६५ ॥

बुद्धिरूपप्रकाशातिरेकेण विषयगतं प्राकट्यं नाम धर्मं केचिदूचिरे। तदनुवदति—प्राकट्यमिति ॥ तन्निराकरोति—तन्नेति। कथं तर्हि विषयभानमित्यत्राह—व्यवहरणेति। व्यवहारयोग्यत्वमेव मानमित्यर्थः। तच्च व्यवहारयोग्यत्वं क्वापि—स्वयंप्रकाशे वस्तुनि स्वाभाविकं स्यात्। क्वचन—परप्रकाशे वस्तुनि धीगोचरत्वात्मकं तद्भवति। ननु धीरेव मानं चेत् कथं तर्हि भातीत्यादिरर्थसामानाधिकरण्येन व्यवहार इत्यत्र प्रतिबन्द्या उत्तरमाह—स्वदत इति। यथा देवदत्तास्वादकर्मभूतस्यापि मोदकस्य, देवदत्ताय स्वदते मोदक इति कर्मत्वगर्भः कर्तृ[त्व]व्यवहारः, एवमत्रापि भातीति व्यवहारः ॥ ६५ ॥

---

आनन्द०—प्रसङ्गसङ्गतिं दर्शयन् भट्टमतं दूषयति—बुद्धिरिति स्वयं प्रकाशे वस्तुनीति। परप्रकाशे वस्तुनीति।

ननु धीगोचरत्वं नाम धीस्वरूपमेव। अतिरिक्ताङ्गीकारे प्राकट्याङ्गीकारप्रसङ्गात्। तथा च पूर्वापेक्षया को भेद इति चेत् ।अत्राहुः। पक्ष द्वयेऽपि स्वरूपमेव पूर्वत्र प्रकाश्यस्वरूपम्। उत्तरत्र तदतिरिक्तस्वरूपमिति भेद इति। प्रीतिकर्मभूतस्यैव औपचारिककर्तृत्वव्यपदेशवदौपचारिक भावनाश्रयत्वव्यपदेश इत्याह—यथा—देवदत्तेति ॥ ६५ ॥

---

इष्टद्विष्टप्रनष्टादिषु च परगतैः कथ्यतेऽन्यद्विशिष्टं
ज्ञातत्वोक्तावपीत्थं व्यवहृतिनियमास्तावतैवोपपन्नाः।
प्राकट्येऽस्मिन् गुणादिष्वपि कथमधिकं भूतभव्येषु च स्यात्
कर्मत्वं तु क्रियार्थं सति फल इति च प्रायिकव्याप्तिहानेः ॥ ६६ ॥

सर्वार्थः—इष्टेति। किंच इष्टद्विष्टप्रनष्टादिषु व्यवहारेषु पुरुषादिनिष्ठैरेव इच्छादिभिर्विशिष्टो विषयः कथ्यते। इत्थं ज्ञातो घटः प्रकटो घट इत्याद्युक्तावपि

व्यवहारनियमाः तावतैव—आत्मनिष्ठज्ञानेनैव उपपन्नाः । अन्यथा प्राकट्ये गुणादिष्वपि भूतभव्येषु च ज्ञातत्वादिव्यवहारसिद्ध्यर्थं प्राकट्यं कल्प्यं स्यात् । न च तद्युज्यते । ननु क्रियाफलशालित्वं कर्मत्वम् । तत् प्राकट्याभावे कथं स्यादित्याशङ्क्य निराकरोति–कर्मत्वमिति । प्रायिकमिदं लक्षणम्; न तु व्याप्तम् । गमनक्रियायाः फलं ग्रामप्राप्तिः; न च प्राप्तेरपि प्राप्त्यन्तरमुपलभ्यते ॥ ६६ ॥

---

आनन्द०—पूर्वसङ्गतिरेवेत्यभिप्रायेणाह—किञ्चेति ।

नन्विष्टो घट इत्यादावपीष्टताद्यस्तु । न चापसिद्धान्तः । तुल्यन्यायेन तत्सिद्धौ तस्यैव सिद्धान्तत्वादिति चेत् । न, नष्टो घट इत्यादौ नाशस्य घटनिष्ठत्वाऽभावेऽपि विशिष्टप्रतीत्यभ्युपगमे तुल्यन्यायेनाऽन्यत्रापि सुवचत्वात् । न च तद्युज्यत इति । ज्ञातताङ्गीकारेऽनवस्था गुणे तदङ्गीकारे जन्यधर्माश्रयतया द्रव्यतापत्तिः, क्रियादिष्वपि । तथा च भूतभव्येषु न तत्कल्पना आश्रयाभावादित्यर्थः ।

ननु भूतभाविषु विषयत्वमङ्गीक्रियत एव, न च विषयत्वं व्यवहारविषयार्हत्व-स्वरूपमेवेति वाच्यम् । तथा सति ज्ञानात्प्रागपि विषयत्वप्रसङ्गादिति चेत् । अत्राहुः । विषयत्वं हि ज्ञानमेव सामग्रीविशेषाधीनम् । स च विशेषो विषयविशिष्टव्यवहारहेतुः । स्वाश्रये तु विषयित्वव्यवहारहेतुः । एवं वर्तमानविषयेऽपि नाधिककल्पना । न च तर्हि द्वित्वाद्यसिद्धिर्दोषः । सोऽपि परस्यैव, अनुभवानुसारित्वाद्व्यवस्थायाः । अन्यथाऽति-प्रसङ्गादिति भावः । नन्विति—परसमवेतक्रियाजन्यफलशालित्वमित्यर्थः । न च प्राप्तेरपीति—ग्रामं प्राप्नोतीत्यत्रेत्यर्थः ॥ ६६ ॥

---

आधत्ते धीः क्रियात्वात् किमपि गमनवत् कर्मणीत्यप्य[सारं]युक्तं
दत्तानेकोत्तरत्वान्न च फलमधिकं भाति हानादिमात्रात् ।
हेतुर्धात्वर्थता चेदतिचरणमथ स्पन्दता स्यादसिद्धि-
र्धीस्वारस्यानुशंस्यादनुमतमधिकं कैश्चिदस्मत्सयूथ्यैः ॥ ६७ ॥

सर्वार्थः—तर्ह्यनुमानात् प्राकट्यं साधयाम इति वदतः पक्षमनुवदति—आधत्त इति । ज्ञानं स्वकर्मणि किंचित् करोति, क्रियात्वाद् गमनक्रियावदित्यप्ययुक्तम् । दत्तेति । इष्टद्विष्टादिषु व्यभिचारादेरित्यर्थः । तद्विवृणोति—न चेति । हानोपादानादि-बुद्धिव्यतिरेकेण विषयगतं फलं नोपलभ्यत इत्यर्थः । किंच क्रियात्वादिति हेतुर्धात्वर्थता-मात्रं चेदतिचारः । न हि सर्वेषामपि धात्वर्थानामुत्तरोत्तरधात्वर्थाः फलम्; अनवस्था-नात् । परिस्पन्दनरूपत्वाङ्गीकारे असिद्धिरेव स्यात् । तदिदमाह—असिद्धिरिति । इत्थं प्राकट्यं स्वमतेन निराकृत्य एकदेशिमतेन तदङ्गीकारमप्यनुवदति—धीस्वारस्येति । कैश्चिदित्युक्तिस्तदनङ्गीकारं द्योतयति ॥ ६७ ॥

आनन्द०—आक्षेपिकीं सङ्गतिं दर्शयति—तर्हीति। अतिचारमेवोपपादयति—न हीति। असिद्धिरेवेति—ज्ञानस्याऽक्रियात्वादिति भावः ॥ ६७ ॥

॥ इति प्राकट्याख्यधर्मान्तरक्लृप्तिभङ्गः ॥

---

इच्छाद्वेषप्रयत्नाः सुखमितरदपि ज्ञानतो नातिरिक्ता
या धीस्तद्धेतुरिष्टा न तदधिकतया कल्पने कोऽपि लाभः।
पर्यायत्वं विशेषे न तु भवति यथा प्रत्यभिज्ञाविभेदे
नो चेदीर्ष्याभ्यसूयाभयधृतिकरुणाद्यन्यदऽन्यच्च कल्प्यम् ॥ ६८ ॥

सर्वार्थः—इच्छाद्वेषादीनां ज्ञानादतिरिक्तत्वमाहुरन्ये। तद्दूषयति—इच्छेति। तत्र कल्पनालाघवं प्रमाणमाह—या धीरिति। इच्छादिहेतुभूतानुकूलादिविषया बुद्धिरेव इच्छादिव्यवहारमातनोति; तदतिरिक्तकल्पने न कोऽपि लाभः; गौरवदोष एव लभ्यते। तर्हि ज्ञानेच्छादोनां पर्यायत्वं स्यादित्याशङ्क्य परिहरति—पर्यायत्वमिति। यथा ज्ञानत्वाविशेषेऽपि प्रत्यभिज्ञास्मृत्यनुमित्यनुभवादिभेदे न पर्यायत्वम्; तद्वदिहापीति। नो चेत् ईर्ष्याभ्यसूयाभयधृतिकरुणशान्तितुष्ट्यादिव्यवहाराणमपि विषयलाभार्थमर्थान्तरं कल्प्यमित्यनियतिरेव स्यात् ॥ ६८ ॥

---

आनन्द०—ज्ञानानन्तरमिच्छाद्युद्देशाद्वैशेषिकक्रममनुसृत्याह—इच्छाद्वेषादीनामिति। इच्छादिहेतुभूतेति।

ननु तर्हि ज्ञानादिहेतोरेव ज्ञानादिव्यवहारोऽस्त्विति ज्ञानादिलोपोऽपि स्यात्। यदि जानामीत्यनुभवात्तदङ्गीकारस्तदा इच्छामि द्वेष्मीत्यनुभवादिच्छादयोऽपि स्युरिति चेन्न। इच्छामीत्यनुभवविषयस्यैव ज्ञानविशेषत्वात्। न च जानामीत्यनुव्यवहारोऽस्त्विति ज्ञानादिलोपोऽपि स्यात्।

न च जानामीत्यनुभवविषयोऽपि ज्ञानसामग्री। तस्याः अतीन्द्रिय सन्निकर्षादिघटितत्वेनाऽप्रत्यक्षत्वात्।

नापि धूमादिज्ञानमेवानुमित्यादिः तस्य वह्न्याद्यगोचरत्वात्। अतस्तत्प्रतिबन्दिरनुपपन्ना।

यद्यपि सुखदुःखयोः परमते निर्विषयत्वं, तथापि सविषयकानुकूलाद्यनुभवाऽविनाभावाभ्युपगमात्तदनुभवस्यैव सुखत्वोक्तौ न किञ्चिद्बाधकम्। अक्षमा ईर्ष्या। गुणेषु दोषाविष्करणमसूया।

नन्विच्छादेर्ज्ञानातिरिक्तत्वे कल्पनागौरवमित्युक्तं तत् ज्ञानान्तर्भावकल्पनापक्ष एव स्यात्। तथाहि। परपक्षे आत्मनि ज्ञानेच्छादया भिन्नधर्मा अङ्गीक्रियन्ते, न तु आत्मातिरिक्तं धर्मभूतज्ञानं तद्विकाराः ज्ञानाद्यवस्थाविशेषाः।

किञ्च ज्ञानेऽन्तर्भावं वदन्न प्रत्यक्षादिष्वन्तर्भावं वदति, किन्तु तद्बहिर्भूतमवस्थान्तरमिति। तथा च नात्र विकाररूप ज्ञानत्वावस्थाभेदसाधकं प्रमाणं लभ्यते। न च प्रतिबन्दी। तवापि तुल्यत्वादिति चेत्। न श्रुतिबलाद्धर्मभूतज्ञानस्य विकारिणस्सिद्धौ तद्विकारत्वस्यैव कल्पनौचित्यादात्मनि तत्कल्पने निर्विकारश्रुतेरतिसङ्कोचापत्तेः। ज्ञानत्वञ्च ज्ञानविकारत्वं, तथा च न ज्ञानत्वकल्पना गौरवं, नापि प्रत्यक्षाद्यन्तर्भावकल्पनाप्रसङ्ग इति दिक्॥ ६८॥

॥ इति इच्छादीनां बुद्धिविशेषातिरिक्तत्वभङ्गः॥

चेतःस्रोतस्स्रुतीनां चिदवधिकतया चैत्तसङ्केतभाजां
रागद्वेषादिकानामभिदधतु कथंभावमस्थेमभावाः।
एतेषां हेतुसाध्यक्रमनियतिमतां सर्वचित्साक्षिकाणां
कथ्येतातथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः॥ ६९॥

**सर्वार्थ.**—अत्र बौद्धास्तु चित्तचैत्तरूपेण द्वेधा विभागं वर्णयन्ति। तत्र चित्तमिति विज्ञानसन्ततिरुच्यते; चैत्तमिति चित्तानुबन्धिकं रागद्वेषादिकम्। तदेषां न संघटत इत्याह—चेत इति। विज्ञानस्रोतोविशेषाणां चिदवधिकतया—विज्ञानमात्रवर्तित्वेन चैत्तादिव्यवहारभाजां रागद्वेषादीनाम् अस्थेमभावाः—क्षणिकत्ववादिनः कथं सद्भावमभिदधतु? विज्ञानस्योत्पन्नापवर्गत्वेन चैत्तरूपावस्थान्तरभाक्त्वं न संघटत इत्यर्थः। तर्हि चैत्तानां सद्भाव एव नास्तीति वदाम इति चेत्; तच्च नोपपद्यत इत्याह—एतेषामिति। हेतुसाध्यक्रमनियतिमतां—कार्यकारणभावो हि बौद्धानां सत्त्वे नियामकम्। अतश्चैत्तानामपि कार्यकारणभावदर्शनादङ्गीकार्यं सत्त्वम्। सर्वचित्साक्षिकाणां—प्रत्यक्षेण सर्वैरुपलभ्यमानानामित्यर्थः। न हि सर्वज्ञेनाप्युपलब्धानां चैत्तानामबाधितानां [कथमपि च] मिथ्यात्वं वक्तुं शक्यते। तेषां रागादीनामतथ्यभावे कथमिव कथकद्वन्द्वयुद्धावतारः कथ्येत? वादाधिकार एव न स्यादिति स्वप्रवृत्तिविरोधः॥ ६९॥

---

**आनन्द०**—नन्विच्छादयो मिथ्याः अतस्तेषामन्तर्भावबहिर्भावविचिन्तैवानुपपन्नेत्याक्षेपसङ्गत्यभिप्रायेणाह—अत्रेति। प्रसङ्गसङ्गतिरित्यपरे।

चित्तं चैत्तमिति द्वेधा चित्तं विज्ञानसन्ततिः"
रागद्वेषादिकं चैत्तं तन्मिथ्येत्यपरे विदुः" इति।

बौद्ध सिद्धान्तप्रलपितमनुवदति—चित्तमित्यादिना। यद्यपि प्रवृत्तिविज्ञानादेरपि चैत्तत्वमस्ति तथापि विज्ञान सन्ततेरेव विषयोपरागमात्रेण प्रवृत्तिविज्ञानत्वमिति तदेकदेशिमत-मादायेदं बोध्यम्।

ननु विज्ञानस्योत्पन्नापवर्गित्वेन एतदनुविज्ञानस्य पूर्वक्षणवृत्तित्वेनोत्तरविज्ञान-सन्ततिक्षणे रागादयोऽप्युत्पद्यन्तामिति चेन्न। तथापि तुल्यकालतया परस्पराधाराधेय-भावाऽभावेन रागाद्याश्रयानुपपत्तेस्सिद्धान्ते द्रव्योत्पत्त्यनङ्गीकारेण घटद्रव्येण सह तदीय-रूपाद्यनुत्पत्तेराधाराधेयभाव इति भावः। **तर्हीति**—तुच्छत्वं वदाम इत्यर्थः। **कार्य-कारणभावो हीति**—शुक्तिरूप्यादेः कटकमकुटाद्यकारणत्वादसत्त्वमिति भावः। **न हीति**—अन्यथा चित्तस्यापि मिथ्यात्वप्रसङ्गादिति भावः। **मिथ्याऽभावे मिथ्यात्वे स्वप्रवृत्तिविरोध इति**—रागद्वेष मूलकत्वात्प्रवृत्तेरिति भावः। **मूलं चेतः स्रोतसः**—विज्ञान सन्ततेः। **स्रुतीनां**—प्रवृत्तीनां विकाराणामिति यावत्। **चिदवधिः**—अधि-करणम्। स्थेमशब्दः औणादिकत्वेन वा पृथ्वादिपाठस्योपलक्षणत्वेन वा साधुः। **अतथ्य-भावे मिथ्यात्वे** ॥ ६९ ॥

॥ इति रागद्वेषादिमिथ्यात्वमतभङ्गः ॥

---

तत्रेच्छैव द्विधोक्ता विषयनियमतो रागविद्वेषनाम्ना
पूर्वस्तीव्रस्तु कामः पर इह भजते तादृशः क्रोधसंज्ञाम्।
एकैवेच्छा सिसृक्षा भगवत उदिता संजिहीर्षेति चान्यै-
स्तद्वल्लोके न किं स्यादधिकमिह तु चेत्कल्प्यतेऽतिप्रसक्तिः ॥ ७० ॥

**सर्वार्थः**—रागद्वेषयोरिच्छाभेदत्वमाह—**तत्रेति**। अनुकूलविषयोपादानेच्छा रागः, प्रतिकूलविषयजिहासा द्वेषः। अतो विषयभेदेनैव नियतिसिद्धौ गुणभेदो न कल्प्यः। तावेव रागद्वेषौ तीव्रभावमासाद्य कामक्रोधाविति व्यपदिश्येते। अत्र प्रतिबन्दीमाह—**एकेति**। यथा न्यायदर्शने ज्ञानचिकीर्षाप्रयत्नवत ईश्वरस्येच्छैव चिकीर्षा संजिहीर्षा रिरक्षिषेत्यादिव्यपदेशभागिनी विषयभेदेन, एवं लोकेऽपीच्छाया एव विषयभेदेन व्यवहारो भवतु; अन्यथाऽतिप्रसक्तिरित्याह—**अधिकमिति**। बुभुक्षापिपासाजिहीर्षेत्यादिकं सहस्र-मपिकल्पनीयं स्यादित्यर्थ ॥ ७० ॥

---

**आनन्द०** प्रसङ्गसङ्गतिं सूचयति—**रागद्वेषयोरिति**—उपादानहेतुरिच्छा रागः। परिहारहेतुर्द्वेष इत्यर्थः। अवस्थान्तराभिप्रायेणाह—**तावेवेति**—द्वेषस्येच्छा-विशेषत्वकथनाय दृष्टान्तार्थतया रागग्रहणमिति बोध्यम् ॥ ७० ॥

॥ इति द्वेषस्यापीच्छाविशेषत्वम् ॥

इच्छातः कार्यसिद्धौ किमिह यतनमित्यन्तरा कल्प्यतेऽन्य-
त्तन्मोघत्वोपलब्धेरिति यदि यतने कल्पितेऽप्येतदेवम् ।
मैवं व्यावर्तमानावनुगतमधिकं वर्ण्यते मानविद्भि-
र्वाञ्छन्तोऽपि ह्ययत्ना वयमिह पवनस्पन्दनेन्दूदयादौ ॥ ७१ ॥

**सर्वार्थः**—अत्र कश्चिदाह—यदीच्छातिरिक्तद्वेषपरित्यागः, तर्हीच्छैव प्रयत्नोऽपि भवतु; किमनेन प्रयत्नेनेति। तदिदमाह—**इच्छात** इति। इच्छायाः कदाचिद्व्याघातोपलब्धेर्यत्नः कल्प्यत इति चेत्, यत्ने कल्पितेऽपि व्याघातोपलब्धिस्तुल्या; नैतावता गुणान्तरं कल्प्यत इति भावः। तदेतन्निराकरोति—**मैवमिति**। व्यावर्तमानादनुवर्तमानमधिकमिति हि विद्वद्भिर्वर्ण्यते न्यायः। तथा चात्र वाञ्छन्तोऽपि केचिदयत्ना एव वर्तन्ते। यथा चन्द्रोदयमभिवाञ्छन्ति न पुनस्तत्र यतन्ते। तस्मादनुदवर्तमानाया इच्छाया व्यावर्तमानो यत्नो बुद्ध्यवस्थाभेदत्वेऽपि विजातीयावस्थान्तरमिति भावः ॥ ७१ ॥

---

**आनन्द०**—वैशेषिकोक्तक्रमेणाह—**अत्रेति** पूर्वाक्षेपमेव सङ्गतिमाहुः। **व्याघातः**—प्रतिहतिः। **तस्मादनुवर्तमानाया इच्छाया** इति। यद्यपीदमिच्छाद्वेषादावपि समानं, तथापीच्छान्तर्भावादिच्छाया भावेऽपि प्रयत्नादर्शनात्तद्बहिर्भाव इत्याहुः।

अन्ये तु चिकीर्षा हि कृतिगोचरेच्छा। कृतिश्च यत्न एव। तथा च जिगमिषतीत्यादौ गमनादेर्भेद इव यत्नस्यापीच्छातो भेदसिद्धिः। इच्छायाः इच्छागोचरत्वायोगादपोच्छाभेदसिद्धिरित्याहुः ॥ ७१ ॥

**इति इच्छामात्रातिरिक्तप्रयत्नावस्थासिद्धिः।**

---

प्राणस्पन्दस्सुषुप्तिप्रभृतिषु घटते तादृशादृष्टमात्रात्
यत्त्वं यत्ने निदानं वदसि भव [तु]ति तल्लाघवात् प्राणवृत्तौ।
धीवृत्तिश्चैव यत्नः स्थित इति स कथं काष्ठकल्पे सुषुप्ते
नो चेद् बाह्यानलादेर्ज्वलनमपि ततः कल्प्यतां न त्वदृष्टात् ॥ ७२ ॥

अत्र केचिद्बुद्धिपूर्वकप्रयत्नातिरेकेण जीवनपूर्वकं प्रयत्नान्तरं कल्पयन्ति। तन्न संघटत इत्याह—**प्राणेति** ॥ सुषुप्त्याद्यवस्थासु प्राणस्पन्दहेतुत्वेन स प्रयत्नः परिकल्प्यते। स एव प्राणस्पन्दस्तावददृष्टमात्रादेव भवतु। भवताऽपि चैतन्न परिहार्यम्; प्रयत्नस्यैव निदानतया तत्रादृष्टमेव हि भवान् वदति; तदेवादृष्टं लाघवात् प्राणप्रवृत्तौ (निदानं भवतु) कारणं भवेत्। ततो गौरवभिया तत्र प्रयत्नो न कल्प्यः। किंच प्रयत्नोऽपि बुद्धिविशेषतया निर्णीतः। तथा च काष्ठकल्पे सुषुप्ते प्रयत्नो व्याहन्यते। इत्थमनङ्गीकारे तवाग्नेरूर्ध्वज्वलनमित्यादिकमपि प्रयत्नादेव कल्प्यं स्यात्; न पुनरदृष्टादित्याह—**नो चेदिति** ॥ ७२ ॥

आनन्द०—एवं तर्हि ज्ञानभिन्नत्वमपि स्यादित्याक्षेपसङ्गत्यभिप्रायेणाह—अत्र केचिदिति। बुद्धिविशेषतयेति। सिद्धान्ताभिप्रायेणेदं बोध्यम्।

नन्विच्छाभेदवद्बुद्धिभेद एव स प्रयत्नोऽस्तु युक्तिसाम्यादिति चेत्। सत्यं। ज्ञानव्याप्तिः परं प्रयत्नस्याऽस्त्येव। तद्भेदोऽस्तु मा वा? तावतापि ज्ञानाभावकाले प्रयत्नो न वक्तुं शक्य इति भावः॥ ७२॥

इति जीवनपूर्वकप्रयत्ननिरासः॥

---

स्याद् दुःखाभावमात्रं सुखमभिदधतो वैपरीत्यप्रसक्तिः
स्वापादौ दुःखसिद्धिर्न यदि सुखमपि ह्यत्र नैवास्ति तादृक्।
शीतोष्णातीतनीतेर्द्वितयसमधिकावस्थितिर्दुस्त्यजाऽत-
स्तत्तच्छब्दप्रयोगेष्वनियतिरुचितैस्संघटेतोपचारैः॥ ७३॥

अत्र कश्चिच्चोदयति—एवं यत्नापलापे सुखमप्यपलपितुं शक्यत इति दुःखाभावमात्रमेव सुखं स्यादिति वदन्तं प्रतिबन्द्या निराकरोति—स्यादिति॥ दुःखाभावमात्रस्यैव सुखत्वे सुखाभावमात्रस्यापि दुःखत्वं स्यादित्यर्थः। स्वापादौ सुखाभावेऽपि दुःखसिद्धिर्नास्तीति चेत् तर्हि तत्र दुःखाभावेऽपि सुखसिद्धिर्नास्तीति तुल्यम्। अतः स्वापे सुखदुःखाभावावुभावपि वर्तेते; अतस्तदतिरिक्तं सुखमपि दुःख(मपि)वत् कल्पनीयमिति भावः। दृष्टं च लोके शीतोष्णातिरिक्तानुष्णाशीतकल्पनम्। एवं सुखदुःखरूपद्वितयावस्थाविरहितसुषुप्त्यवस्था दुस्त्यजेत्याह—शीतेति। तर्हि भारावतरणादिषु सुखशब्दः कथम्; सुखोपभोगाभावमात्रे दुःखशब्दो वा कथं प्रयुज्यते? इत्यत आह—तत्तदिति। औपचारिकाः प्रयोगास्सहस्रशोऽपि सन्तु न हि शब्दप्रयोगमात्रादुपचारसहादर्थतत्त्वं निश्चाययितुं शक्यत इति भावः॥ ७३॥

---

आनन्द०—आक्षेपसङ्गतिमभिप्रेत्याह—अत्र कश्चिदिति। तुल्यमिति।

ननु सुखमहमस्वाप्समिति प्रतीतेस्तदा सुखत्वबुद्धिरस्त्येवेति चेत्। सत्यम्। तत्र दुःखाभावमात्रेण तथा व्यपदेशः। तथापि स्रक्चन्दनादिप्रभवसुखादौ तरतमभावानुभवात्सुषुप्त्यादौ सर्वसुखानुभवप्रसङ्गाच्च न दुःखाभावस्य सुखत्वमिति भावः।

ननु क्वचिद्दुःखाभावे सुखत्वव्यपदेशो दृष्टः, न सुखाभावे दुःखत्वव्यपदेश इति विनिगमकमपि निरस्यन् तुल्यताञ्च प्रदर्शयन् गौणत्वसमर्थनार्थं शङ्कते—तर्हीत्यादिना। न हीति—तीरस्य गङ्गात्वप्रसङ्गादिति भावः। मूलं—अनियतिः—तन्मुख्यार्थव्याप्तिर्नास्तीत्यर्थः॥ ७३॥

॥ इति सुखदुःखोदासीनरूपावस्थात्रयसिद्धिः॥

**भेदस्त्रेधा मतीनां ह्युपधिनियमितैरानुकूल्यादिधर्मै-**
**स्तस्यैवात्यन्तहानेर्निरुपधिकसुखस्तादृशो धीविकासः ।**
**निस्सीमब्रह्मतत्त्वानुभवभवमहाह्लाददुग्धार्णवेऽस्मिन्**
**निश्शेषैश्वर्यजीवानुभवरसभरो बिन्दुभावोपलभ्यः ।। ७४ ।।**

एवमौपाधिकानां दुःखमिश्राणामनुकूलविज्ञानानामत्यन्तहानेर्निरुपाधिकसुखरूपो मुक्त्यवस्थायां यो बुद्धिविकासस्तस्मिंस्तादृशानन्दरूपावस्थाविशेषे चतुर्मुखैश्वर्यपर्यन्तस्यैश्वर्यस्य जीवानुभवस्य चात्यन्ताल्पीयस्त्वमेवेति दुग्धार्णवतद्बिन्दुदृष्टान्तेनोपवर्णयति-**भेद** इति ।। अक्षरार्थः स्वयमेव भाव्यः ।। ७४ ।।

---

**आनन्द०**--प्रसङ्गसङ्गतिमभिप्रेत्याह--**एवमिति । अनुकुलविज्ञानानामिति**--औपाधिकानुकूलप्रतिकूलानुभवविषयकज्ञानानामित्यर्थः । यच्छब्दार्थाध्याहारेण योजयति--**यो बुद्धिविकास इति । मूलं निस्सीमं**--निरवधि । ब्रह्मरूपं तत्त्वं तदनुभवात्सञ्जातमहानन्दानुभवमहार्णवः । **निश्शेषं**--सम्पूर्णं यथा भवति । तथा जीवानुभवजन्यो रसभरः सुखप्रवाहः ।। ७४ ।।

**।। इति निरुपाधिकानन्दरूपबुद्ध्यवस्थाविशेषः ।।**

---

**संसारे नास्ति किञ्चित् सुखमिति कतिचित्तद्घटेतोपचारा-**
**न्नो चेद्व्युत्पत्तिहीनं सुखपदमधिकं तत्सुखं नाभिदध्यात् ।**
**तस्माद् दुःखोत्तरत्वप्रभृतिभिरिह तद्दुःखमित्युक्तमात्रै**
**क्ष्वेलोपश्लेषदुष्टे मधुनि विषमिति व्याहृतिः किं न दृष्टा ।। ७५ ।।**

केचित्तु संसारेषु सुखमेव नास्तीत्याहुः ; तदौपचारिकमित्याह-- **संसार** इति ।। अन्यथा सुखपदव्युत्पत्तिरेव न स्यात् । तथा चालौकिकमपि सुखं सुखशब्दो नाभिदध्यादित्याह--**नो चेदिति** । कथं तर्ह्यपि संसारस्य दुःखरूपत्वमुच्यत इत्याशङ्क्य परिहरति--**तस्मादिति** । दुःखोत्तरत्वाद् दुःखत्वमभिधीयत इति परिहारः । तत्र दृष्टान्तमाह--**क्ष्वेलेति** ।। ७५ ।।

---

**आनन्द०**--प्रसङ्ग-सङ्गतिमभिप्रेत्याह--**केचित्त्विति** ।

ननु "संसारे दुःखरूपेऽस्मिन् सुखं मुह्यन्ति जन्तवः" "एकविंशतिदुःखध्वंसो मोक्ष" इत्यादौ सुखस्यापि दुःखकोटौ निवेश इत्यादिवाक्यानां का गतिरित्याशङ्क्य परिहरति-कथमिति ।।७५।।

**।। इति सांसारिकसुखस्य दुःखत्वोचितनिर्वाहः ।।**

धर्मोऽधर्मश्च तत्तत्फलकरणतया शास्त्रसिद्धं क्रियादि-
द्वारं त्वेतस्य कालान्तरनियतफले स्यादिहादृष्टमन्यत् ।
आहुस्तत् केचिदन्तःकरणपरिणतिं वासनां चेतसोऽन्ये
पुंधर्मं केचिदेके विभु किमपि परे पुद्गलांस्तत्सयूथ्याः ॥ ७६ ॥

**सर्वार्थः**—अथ धर्माधर्मलक्षणं तत्साध्यादृष्टस्वरूपं च विभज्य दर्शयति—**धर्म-** इति । चोदनालक्षणोऽर्थो धर्म इति शास्त्रैकसमधिगम्यं श्रेयस्साधनं धर्म इत्युच्यते; स तु क्रियादिरेव; द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते इत्याद्यभिधानात् । चिरध्वस्त-स्यापि कर्मणः कालान्तरभाविफलानुगुणं किमपि द्वारमन्यददृष्टमुपादेयम् । तच्चान्तः-करणपरिणतिरिति **साङ्ख्याः** प्राहुः । चेतसो वासनेति **सौगताः** । पुंधर्म इति **न्याय-वादिनः** । विभुरूपं किमपि तत्त्वान्तरमिति **जैनैकदेशिनः** । पुद्गलरूपमिति **तत्सयूथ्याः** । एतस्य सर्वस्य कल्पनामात्रसिद्धत्वात् तत्तत्कर्माचरणपरिणतेश्वरबुद्धिविशेष-एवादृष्टमिति तत्त्वविदां संप्रदाय इति हृदयम् ॥ ७६ ॥

---

**आनन्द०**—वैशेषिकोक्त एव क्रम इत्यभिप्रेत्याह—**अथेति**

"धर्माधर्मौ तु कथितौ अन्तःकरणसम्भवा" विति साङ्ख्याः ।
"चेतसो वासनाभेदास्सन्ताने सुखदुःखदाः"

यस्मिन्नेव हि सन्ताने आहिता कर्मवासने"ति बौद्धग्रन्थः । चेतश्शब्देन विज्ञान-सन्ततिरुच्यते । "ज्ञानेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्कारा आत्मगुणा" इति न्यायग्रन्थः । जीवस्त्रवधर्माधर्मपुद्गलास्तत्त्वानो"ति सूत्रव्याख्याने धर्माधर्मौ विभुतत्त्वान्तरमित्य-भिहितं जैनग्रन्थे । पूरयन्ति गलन्ति चेति व्युत्पत्या स्पर्श-रूप-रस-गन्धादिमत्परिणामि-द्रव्यतया पुद्गलशब्दवाच्यत्वेन परमाणुपुञ्जरूपत्वं जिनैकदेशिनो वदन्ति ।

"पूरयन्ति गलन्तीति धर्माधर्मौ तु पुद्गलाः ।
स्पर्शादिमत्परिणति द्रव्यत्वादेव केचन" ॥

इति नयनन्दिग्रन्थदर्शनादित्यर्थः ॥ ७६ ॥

॥ इति धर्माधर्मलक्षणतत्साध्यादृष्टस्वरूपमतभेदाः ॥

---

तुल्ये सेवादिहेतौ फलभिदुरतया साध्यते चेददृष्टं
हेतोस्सूक्ष्मोऽस्तु भेदो न खलु समुचिता धर्मिणोऽन्यस्य क्लृप्तिः ।
व्याख्यातं यत्तु बाह्यैर्विषयसमफलप्रापकत्वं क्रियाणां
तत्सूतेऽतिप्रसक्तिं तदिह न निगमादन्यतोऽदृष्टसिद्धिः ॥ ७७ ॥

**सर्वार्थं**—अस्त्वदृष्टं यत्किंचिदेव, तत् सेवाध्ययनतुल्यत्वे दृष्टा हि फलभिन्नते-त्युक्तप्रकारेण फलभेदात्परिकल्प्यते, न पुनरागमैकसमधिगम्यमिति केचिदाहुः । तदिद-

मनुवदति—तुल्य इति ॥ तत्रान्यथासिद्धिमाह—हेतोरिति । दृष्टेष्वपि कारणेषु यत्किंचिद्वैषम्यात् फलभेदोऽस्तु । किमनेनादृष्टेन ? अन्यथा कल्पनागौरवादनौचित्यमेवेत्याह—न खल्विति । अतिरिक्तादृष्टकल्पनायामदृष्टं कल्प्यम्, तस्य च भेदः कल्प्यः; तथा च गौरवम् । अस्माकं तु दृष्टेष्वेव कारणेषु भेद एव कल्प्यः । अतो लाघवमिति भावः । तस्मादागमैकसमधिगम्यमदृष्टमित्याकूतम् । अत्र केचित् यादृशो विषयस्सुखरूपो दुःखरुपो वा, तादृशमेव फलं क्रियाया जायत इति [वदन्ति] । न तदिदमतिप्रसक्तिमेव सूते । विषयस्य सुखात्मकत्वे सुखात्मकं फलमिति न नियमः; पापरूपसुखेन दुःखरूपफलस्य प्राप्तेः । एवं दुःखात्मकत्वे दुःखं फलमिति न नियमः ; दुःखरूपपुत्रशिष्यादिशिक्षणादिना सुखस्यैव सिद्धेः । अतश्शास्त्रादेवादृष्टसिद्धिः, न पुनस्स्वकपोलकल्पितादनुमानादित्याह—तदिहेति ॥ ७७ ॥

---

आनन्द०—प्रसङ्गसङ्गतिमभिप्रेत्याह—अस्त्वति इदं फलं सेवाद्यतिरिक्तकारणप्रयोज्यं स्वोत्तरफलातिरिक्तत्वात् । यद्यत् फलापेक्षया विसदृशं तत्तत् साधारणकारणातिरिक्तजन्यं यथा सम्प्रतिपन्नमित्यनुमानेनातिरिक्तजन्यत्वे तस्य दृष्टसाधारणस्वरूपत्वाभावे अदृष्टं सिद्ध्यतीत्यनुमानाददृष्टं सिद्ध्यतीत्याह—सेवाध्ययनेत्यादिना । भेदो वैचित्र्यम् । आगमैकगम्यमिति—"स एनं प्रीतः प्रीणाति" इत्यागमः । सांख्यजिनमतस्थाश्च यत्कर्म यादृशं तादृक्फलं बध्नाति कर्तरि कलमबीजावापो हि कलमफलमश्नुत इति वर्णितमिति तथा च सजातीय व्याप्तिबलादनुमानतस्सिद्धिस्सम्भवतीति मन्यन्ते । तद्दूषयितुमनुवदति—अत्र केचिदिति । पापरूपसुखेनेति—अगम्यागमनादिनेत्यर्थः ॥ ७७ ॥

॥ इति अदृष्टस्यागमैकसिद्धत्वम् ॥

---

निस्संकोचान्निषेधात् क्वचन फलतयाऽनूदितांहस्तु हिंसा
रुन्धे सामान्यमङ्गे विधिरनुमितिरप्यत्र बाधादिदुःस्था ।
स्वल्पो दोषो विमृष्टे सुपरिहर इह क्रत्वनुग्राहके स्या-
दित्युक्तं सांख्यसक्तैः पशुहितवचनान्नेति शरीरकोक्तम् ॥ ७८ ॥

सर्वार्थ—एवमदृष्टस्यागमैकसमधिगम्यत्वे सिद्धे विधिनिषेधव्यापारपरिशोधनेन श्येनाग्नोषोमीयवैषम्यमाह—निस्सङ्कोचादिति ॥ अयमर्थः—श्येनेऽपि हिंसा दृश्यते अग्नीषोमोयपश्वालम्भनेऽपि । प्राणवियोजनफलो व्यापारो हिंसाशब्देनाभिलप्यते । तदुभयत्रापि समानम् । अथापि श्येने हिंसा न विहिता ; अपि तु रागप्राप्ता । यदि हिंस्याच्छ्येनेन हिंस्यादिति हि तत्र विधिक्रमः ; न पुनः हिंस्यादेवेति । तथा च तत्र हिंसाया रागप्राप्तत्वात् न हिंस्यादिति निषेधवचनं तत्र निस्सङ्कोचम् । तेन फलतयाऽनूदिता हिंसा

तत्र निषिध्यते, न पुनः श्येनः; श्येनस्तत्रासिवत् पृथगिति पृथङ्निर्देशात् विहितत्वाच्च। तदिदमाह—अंहस्तु हिंसेति। [सा] रागप्राप्ता हिंसा शास्त्रनिषिद्धत्वात् पापमित्यर्थः। अग्नीषोमीयपश्वालम्भने तु प्राणवियोजनफलव्यापाररूपत्वेन हिंसात्वे सत्यपि, न हिंस्यादिति सामान्यम् आलभेतेति विशेषविधिरुपरुन्धे। विशेषविधिप्राप्ते सामान्य[स्य] निषेधस्य रागप्राप्तमात्रविषयतया सावकाशस्य दुर्बलत्वात्। अथापि अग्नीषोमीयहिंसा अधर्म्या हिंसात्वाद् ब्राह्मणहिंसावदित्यनुमितिरागमबाधसोपाधिकत्वाभ्यां दुःस्थेत्याह—अनुमितिरिति। तत्र साङ्ख्या एवं मन्यन्ते—अग्नीषोमीयपश्वालम्भनविधिरालम्भनस्य क्रतूपकारमाह। न हिंस्यादिति तु वाक्यं हिंसाशब्दस्यासङ्कुचित[विषय]वृत्तित्वेन अग्नीषोमीयहिंसामपि गृह्णाति। तथा च अस्या अपि हिंसायाः किञ्चित् पापहेतुत्वमस्ति; तच्च वैदिकत्वात् सुपरिहरमिति। तत्रैवं शारीरकशास्त्रे परिहार उक्तः—अग्नीषोमीयपश्वालम्भनस्य परदुःखोत्पादकत्वे सत्यपि हिंसाशब्दवाच्यत्वं नास्तीति। न हि व्रणादिशान्त्यर्थं दाहच्छेदादिकारिषु वैद्याम्बष्ठादिषु हिंसकत्वमस्ति। न च पुत्रशिक्षादिकारिषु पित्रादिषु तर्जनादिभिर्हिंसकत्वमुच्यते। अशास्त्रीयकर्मणा परदुःखाधानकारिणामेव हिंसकत्वम्। अत्र पुनश्शास्त्रीयकर्मानुरोधेन प्राणवियोजनेऽपि न हिंसकत्वम्; अपि तु रक्षकत्वमेव, पापफलपरिणतिरूपपशुशरीरविच्छेदेन पशोरेव निरतिशयसुखभोगानुरूपविशिष्टशरीरग्रहणहेतुत्वात्। तदिदं सर्वमभिप्रेत्याह—पशुहितवचनादिति। न वा उ वे तन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिस्सुगेभिरिति मन्त्रवर्णेन पशोर्विशिष्टदेशप्राप्तिरुच्यते। अयमत्र विभागः—अग्नीषोमीयपश्वालम्भनस्य हिंसात्वमभ्युपगम्य आलभेतेति विधिबलात् न हिंस्यादिति निषेधस्य सङ्कोचमाहुः केचित्। अपरे पुनः श्रुतिस्मृतिबलाद्धिसात्वमेव नाभ्युपगच्छन्ति; अल्पीयसा दुःखेन अधिकसुखप्राप्तिहेतोर्हिंसात्वात् न म्रियसे न रिष्यसीति तथैव श्रुतत्वाच्चेति॥ ७८॥

---

आनन्द०—प्रसङ्ग एव सङ्गतिरित्यभिप्रायेणाह—एवमिति निषेधो निस्सङ्कोचश्चेदग्नीषोमीयहिसाया अपि निषेधस्स्यात् न हिंस्यादित्यविशेषप्रवृत्तेः। हिंसायाः विधानबलात् सङ्कोचश्चेत् श्येनादावपि विधानबलात् सङ्कोचप्रसङ्ग इत्यत आह—अयमर्थं इति। यदि हिंस्यादिति—श्येनो हि न हिंसा, तत्साध्यव्याध्यादेरेव हिंसात्वात्। ततश्च तदुद्देशेन श्येनो विधीयत इति हिंसायाः फलत्वान्न विधेयत्वम्। अग्नीषोनीये तु हिंसैव विधीयते।

ननु अत्रापि मरणमेवोद्देश्यं तदुद्देशेन हिंसैव विधीयत इति चेन्न। प्राणवियोजनफलसाधनस्यैव हिंसात्वेन परम्परया साधनस्य हिंसात्वाभावाच्छ्येनस्यापि परम्परया साधनत्वात्।

न च व्रणपाकपरम्परादौ हिंसकत्वाभावप्रसङ्ग इति वाच्यम्। व्रणकरणस्यापि प्राणवियोजनाऽव्यवहितसाधनत्वयोग्यत्वात्। अत एव कूपे पातनमपि तथा।

न च खड्गकरणस्यापि हि हिंसात्वप्रसङ्गः, तस्य तदसाधनत्वात्। तत्पतनं हि तथा। तथा च मरणोपहितादृष्टाद्वारकमरणसाधनस्य व्यापारस्य हिंसात्वात्तस्य निषेधः। तथा चौषधप्रयोग इव श्येनस्य फले निषेध इति द्रष्टव्यः।

ननु तर्हि श्येनकर्तुः प्रत्यवायो न स्यात् हिंसकत्वाभावात्, अकर्तुरपि निषेधेऽतिप्रसङ्गादिति चेदुच्यते। हिंसकत्वप्रयुक्तदोषो नास्त्येव, प्रयोजकत्वमस्त्येव। अत एव तस्य लघुप्रत्यवायमूचुः। यद्वा हिंसानिषेधः प्रयोजकेऽपि भवति। नचातिप्रसङ्गः। तदुद्देश्यत्वे सति तत्प्रयोजकव्यापारकर्तृत्वनिषेधात्। अत एवाऽदृष्टाद्वारकजन्मान्तरीयव्यापारेऽपि निषेधस्स्यादिति निरस्तं। तदुद्देश्यकत्वाभावात्।

न च मरणोद्देशेन कूपकर्तुरपि दोषप्रसङ्गः। तन्निर्माणस्य तादर्थ्याभावात्पातादेरेव तादर्थ्यात्। अस्तु वा तथा कर्तुरपि प्रत्यवायः, तारतम्यन्तु स्यादेव। तस्मिन्पक्षे श्येनस्यापि निषेधस्स्यादेव। न च विध्यनुपपत्तिः। मरणसाधनत्वस्य बोधनात् तर्कास्तत्र प्रवर्तन्ते। न चाग्नीषोमीयहिंसाया अपि निषेधस्स्यात् विध्यनुपपत्त्यभावादिति वाच्यम्। काम्ये तथा सम्भवेऽपि नित्ये तदयोगेनासम्भवात्। तस्माद्विध्यन्यथानुपपत्त्या न निषेधप्रवृत्तिरित्याहुः। **श्येनस्तत्रेति**—श्येनस्तु हिंसापेक्षया साधनत्वेन पृथङ्निर्देशाद्विहितत्वाच्च हिंसा न भवतीत्यर्थः। **रागप्राप्तमात्रविषयतयेति**—एकत्र प्रवृत्तिनिवृत्त्योर्विरोधेनाऽन्यतरस्याऽन्यविषयत्वेऽपि मुख्यस्वार्थत्यागाऽभावाद्विशेषस्यान्यविषयत्वे सर्वात्मना स्वार्थत्यागेनात्यन्तबाधप्रसङ्गात्। कांस्यभोजिन्यायेन सामान्यस्य विशेषविषयातिरिक्तपरत्वं युक्तम्। अत एव पदाहवनीयादिव्यवस्था। अत एवाग्रयणे द्यावापृथिव्येककपालधर्मादर इति भावः। **आगमबाधेति**—धर्मिग्राहकागमस्योपजीव्यतया तेन बाधो नरशिरः कपालशुचित्वानुमानस्येवेति भावः। उपाधिश्च निषिद्धत्वम्, साधनाऽव्यापकत्वे सति साध्यव्यापकत्वादिति भावः। सांख्यास्त्वेवमाहुः। अग्नीषोमीयपश्वालम्भोऽपि हिंसैव। न च न हिंस्यादिति निषेधापत्तिः। इष्टत्वात्। न च विध्यनुपपत्तिः। भिन्नविषयत्वेन विरोधाभावात्। विधिना इष्टासाधनत्वं निषेधेन चानिष्टसाधनत्वम्। न च तयोर्विरोधः, भावाऽभावरूपत्वाऽभावात्। तथा चेष्टफलापेक्षयाऽनिष्टफलस्याऽल्पत्वात्प्रवृत्तिरपि सङ्गच्छत इति तन्मतमाह—**सांख्यास्त्विति**—निषेधफलभूतस्याऽनिष्टस्य बलवत्त्वाद्वैदिकत्वेऽपि श्येनादिदुरितवत्परिहरत्वाभावात् बलवदनिष्टाननुबन्धीष्टसाधनत्वाऽभावात्प्रवृत्तिर्न स्यादिति प्रवर्तकविध्यनुपपत्तिरेतन्मत इति भावः। **अशास्त्रीयकर्मणेति**—अशास्त्रीयप्राणवियोजनव्यापारस्य हिंसात्वमिति नात्र न हिंस्यादिति निषेधावतार इति भावः।

ननु मरणफलोपहित तत्कारकक्रियात्वं लाघवात्, नत्वशास्त्रीयत्वमपि गौरवात् प्रवेश्यम्। नच व्रणपाकपरम्परया मरणफलोपधानं तद्व्यापारत्वमिति पश्वालम्भनमपि हिंसैव, नचैवं न हिंस्यादिति निषेधप्रसङ्गः। रागाधीनस्यैव झटित्युपस्थितस्य

निषेधादिति चेत्। अत्राहुः। पश्वालम्भेऽपि रागादेव प्रवृत्तिः। रागस्य प्रवृत्तिकारणत्वात्तदभावे तदयोगात्। अत एव जैमिनीये तृतीयेऽध्याये "चिकीर्षा च संयोगात्तद्युक्ते फलश्रुतिस्तस्मा"दिति पूर्वोत्तरपक्षसूत्राभ्यां "षट्त्रिंशत्प्रक्रमा प्राचि चतुर्विंशतिरग्रेण त्रिंशज्जघनेने"त्यादिना विहितसौमिकमहावेद्याः "इयति शक्ष्यामी"ति वाक्यशेषे एतावति कर्तुं शक्ष्याम इत्यर्थके तुमुन्प्रत्ययार्थंचिकीर्षासंयोगात्प्रधानार्थतया पूर्वपक्षं कृत्वाऽङ्गप्रधानार्थतयाऽङ्गेऽपि चिकीर्षासंयोगादिति राद्धान्तितम्, तथा चाङ्गेऽपि रागादेव प्रवृत्तिः।

न च न हिंस्यादित्याख्यातेन शक्त्याऽऽक्षेपतो वा कर्तुः प्रतीतस्य शेषतया वाऽङ्गत्वात् धात्वर्थं हिंसायाः, तस्या एव निषेधः न क्रत्वर्थायाः। पर्णतावाक्य इव क्रतुशेषत्वाक्षेप कर्तृत्वाव्यभिचारि जुहूवत् क्रत्वर्थत्वाक्षेपकाभावादिति वाच्यम्।

एवमपि प्रवृत्तिनिमित्तस्याऽप्रयोजकत्वात्। न च शीघ्रोपस्थितिमात्रेण तस्यैव वाक्यार्थान्वयाद्दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र यजिपदसाधारण्येऽपि प्रत्यक्षश्रुतकालानामाग्नेयादीनामिवेति वाच्यम्। तथा सति "यदाहवनीये जुहोती"ति वाक्येऽप्याख्यातेन कर्तृप्रतीतेः पुरुषार्थहोमानामेव झटिति प्रतीत्या तस्यैवाहवनीयादिविधिस्स्यात् न क्रत्वर्थानां होमानामिति।

किञ्च क्रत्वर्थनिषेधः क्रत्वर्थः, पुरुषार्थनिषेधः पुरुषार्थं इति नियमो नास्ति। ज्योतिष्टोमप्रकरणे "न ददाति" "न जुहोति" "न पचती" त्याम्नातानां मांसभक्षणस्त्र्युपगमनादीनां पुरुषार्थानां निषेधस्य स्त्र्युपगमनमांसभक्षणादिपुरुषार्थमपि श्रुतः प्रतिषेधः क्रतोरङ्गमिति "इष्टि प्रकरणाश्रयादिति" व्याकरणाधिकरण वार्तिकदर्शनाच्च व्यभिचारात्।

किञ्चैकेन वाक्येनोभयार्थाेयो पुरुषार्थतया वा निषेधो दृश्यते। यथा दर्शपूर्णमासप्रकरणे "नानृतं वदेदि"ति निषेधः। तथा सोमे "मलवद्वाससा न संवदेते"ति पुरुषार्थनिषेधः। तथा "नापगुरेत" "न लोहितं कुर्या"दिति च। तत्र क्रतुप्रयुक्तद्रव्यपरिज्ञानाय पत्न्या संवाद सम्भवात्। तथा ऋत्विजां शीघ्रानुष्ठानाद्यर्थं क्रतुमध्येऽप्यपगोरणप्रसक्तेः।

ननु सामान्येन निषेधो न प्रवर्तते विरोधात्। तथा हि। क्रत्वर्थहिंसायाः निषेधेऽपि पशुहिंसायाः अनुष्ठाने निवर्तकत्वाभावात्तदंशे प्रामाण्यं न स्यात्। निवर्तकत्वे च पश्वालम्भनशास्त्रस्याऽनुष्ठापकत्वाभावादप्रामाण्यं स्यात्। विकल्पे च वैरूप्यं, क्रतु वैगुण्यप्रसङ्गश्च। तथाऽर्थविरोधोऽपि। तथेष्टसाधनत्वमात्रं न प्रवृत्त्यौपयिकं, मधुविष सम्पृक्तान्न भोजनादिसाधारण्यात्। किन्तु बलवदनिष्टाननुबन्धित्वं। तच्च सार्थवादेषु विधिषु यागाद्यनुष्ठानप्रयुक्त तात्कालिकक्लेशादिदर्शनकृतालस्यभञ्जनार्थं प्रवृत्तेः

स्तुत्यर्थवादैस्स्मृतिरूपेण समर्प्यते। निन्दार्थवादेषु तात्कालिकेष्टरुचि प्रसक्तप्रवृत्तिप्रतिबन्धार्थं निन्दार्थवादैर्निन्दारूपेण समर्प्यते। निरर्थवादेषु निषेधानामेव तदाक्षेपकशक्तिः। एवञ्च क्रत्वर्थसंज्ञपनस्य निषेधविषयत्वे विधिनिषेधयोः—परस्पराधिकेष्टानिष्टसाधनत्वबोधकताविरोधोऽप्यनिवार्यः। तस्मात्तत्र निषेधशास्त्रं न प्रवर्तत इति चेत्, न। निषेध शास्त्रस्य निवर्तकत्वाऽभावेऽपि—

"पञ्चसूना गृहस्थस्य चुल्लि पेषण्यवस्करः।
खण्डिनी तोयकुम्भश्च बाध्यते यास्तु वाहयन्॥
आसां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्॥ इति

पञ्चमहायज्ञ प्रवर्तकनिषेधशास्त्रवदुपपत्तेः। अत एव क्रत्वर्थादिवृत्ति दोषोऽपि। नापि तयोरर्थविरोधः। बलवदनिष्टसाधनमित्यत्र बलवदनिष्टं बहुविधं। एकमिष्टापेक्षया अधिकमिष्टप्राप्तेः पूर्वमवश्यम्भावि। अन्यत् गुरुलघूपायद्वयसाध्ये फले इष्टप्राप्तेः पूर्वं गुरूपायानुष्ठानेऽवश्यम्भावि। गुरूपायानुष्ठानप्रसक्तक्लेशादिरूपमपरम्। इष्टापेक्षया न्यूनमिष्ट प्राप्त्युपायात् लघुनोपायेन परिहर्तुं शक्यम्। एतत्सर्वमनुष्ठातृपुरुषाननुमततया अङ्गीकृत शुक्ग्लानित्वा दधिकबलत्वाद्बलवदनिष्टमिति (त्यज्यते)। आच क्षते। तथा च पशुसंज्ञपनस्याप्यनिष्टसाधनत्वबोधनान्न विधिशास्त्रानुरोधः किं तु चतुर्थप्रकारे पर्यवस्यतीति निषेध विषयत्वमवश्यमङ्गीकर्तव्यम्।

ननु बुद्धिपूर्वकजन्तुपरित्याग इति चेन्न। वाजिनां हि वधो यत्र तत्र साक्ष्यनृतवदनस्य निषेधे पुरुषार्थे तदभावात्। तस्याऽनृतवदनरूपत्वेन नानृतं वदेदिति निषेधविषयत्वात्।

ननु क्रतुसंज्ञपनस्य न निषेधः। न हिंस्यादित्यस्य तद्विषयत्वाङ्गीकारे तुल्यन्यायेन सर्वस्वाराङ्ग भूत तदीयाहवमानकालक्रियमाणात्मव्यापादने मरणान्तप्रायश्चित्तादौ च प्रवृत्यभावप्रसङ्गात्। अनन्तरभाविनो दुःखस्यात्महनन-ब्रह्महत्यादिरूपस्य तत्साध्यस्वर्गसुरापानादिदुःखापेक्षया स्वल्पत्वाभावात् लघूपायनिवर्त्यत्वाभावाच्च। तथा च तत्र सङ्कोचस्याऽऽवश्यकत्वे तन्न्यायेनाऽत्रापि स्यात् तथा "न दोषो हिंसाया महाहव" इति वाचनिकदोषरहिताया आहवहिंसाया व्यावर्तनीयत्वाच्च न क्रत्वर्थहिंसाया निषेध इति चेत्। उक्तरीत्या तेषां हिंसात्वाद्यभावादशास्त्रीयत्वस्य सर्वत्रापि तथा विशेषणत्वात्।

किञ्च मरणान्तप्रायश्चित्तादौ युक्तस्सङ्कोचः। अन्यथा निषेधशास्त्रस्य तद्विषये वैयर्थ्यप्रसङ्गात्। निवर्तकत्वे क्रतुवैगुण्यादिप्रसङ्गात्। अनिवर्तकत्वे वा प्रायश्चित्ते प्रवर्तकत्वाऽभावात् मृतस्य प्रायश्चित्ते प्रवृत्त्ययोगादतस्तद्व्यावर्तने मानाभावात्।

ननु व्यावर्तनं क्रियमाणमनुगतेन रूपेण अनुगमसम्भवे त्यागायोगात्। सर्वस्वारे आत्मव्यापादनस्य, मरणान्तप्रायश्चित्ते आत्मव्यापादनस्य, हवाभिमुखचोरस्तेन हननादेः प्रत्येकं व्यावर्तने गौरवाच्चाऽनुगतं रूपं वध्यानुग्रहपर्यवसायिव्यतिरिक्त हिंसात्वम्।

यदिच—

"आततायिनमायान्तं अपि वेदान्तपारगम्।
निहत्य ब्रह्महा न स्यात् अहत्वा भ्रूणहा भवेदि"ति॥

विहितं हननं "आदित्यां मल्हां गर्भिणीमालभते" इति विहित नान्तरीयक-गर्भहननञ्च संगृहीतं स्यात् तदाऽनुपदिष्टवैशेषिकप्रायश्चित्तत्वे सति विध्यनुज्ञातहिंसा व्यतिरिक्तत्वं निषेध्यतावच्छेदकं भविष्यतीति चेत्। उच्यते। संकोचस्योभयत्र समानत्वे हिंसिधातुप्रवृत्तिनिमित्त एव संकोचोऽस्तु। न च विनिगमकाऽभावः। "न वा उवे तन्म्रियसे न रिष्यसि" "देवाँ इदेषि पथिभिस्सुगेभि"रिति मरणाभावप्रति-पादकस्य मन्त्रस्यैव विनिगमकत्वात्।

न च "आरण्यानुत्सृजन्त्यहिंसायै" इति पश्वालम्भे हिंसात्वव्यवहारादहिंसा वाक्यमौपचारिकमिति वाच्यम्। प्रथमप्रवृत्त लाघवानुसाराद्वैपरीत्यस्यैव युक्तत्वात्।

नचा"ऽपशवो वा अन्ये गो अश्वेभ्य" इति तुल्यता। निषेधविध्यनुगृहीतत्वेन ततो वैषम्यादिति।

न च सर्वस्वारादिस्थलेऽपि हिंसात्वाभावप्रसङ्गः। निषेध्यत्वाभावादिष्टत्वादिति दिक्।

अपित्विति—शरीरप्रणीतव्रणादिनिवर्तनमुखेन सुखजनकशरीरसम्पादकस्य हितरूपेण लोके रक्षकत्वव्यपदेशादिति भावः। दिव्यदेशप्राप्तिकथने दिव्यदेहप्राप्ति-माह न वा उवेतन्म्रियसे न रिष्यसीति—उ वै मरणत्वेन लौकिकभ्रमविषयो मरणमेव न भवति तथा क्षयोऽपि न भवति यतस्सुगेभिः सुगैः पथिभिः देवानेषि इत् गच्छस्येवेत्यर्थः।

ननु हिंसात्वमभ्युपगम्य संकोचोक्तिः, तदनङ्गीकारश्च विरुद्ध इत्यत्र मतभेदान्न दोष इत्याह—अयमत्र विभाग इति॥ ७८॥

॥ इति श्येनाग्नीषोमीयादिवैषम्यम्॥

**सिध्येद्वा विश्ववृत्तेरनितरफलता स्थापनाद्यैरदृष्टं**
**तत्सत्ताज्ञप्तिमात्रात्तदुचितनियतानुष्ठितिर्नैव सिध्येत् ।**
**तस्माच्चर्याविशेषे श्रुतिरिह शरणं स्वर्गमोक्षादिहेतौ**
**सैवादृष्टस्वरूपं प्रथयतु बहुधा तत्तदुक्ताद्विविक्तम् ॥ ७९ ॥**

**सर्वार्थं**—इत्थं श्रुतिरेवादृष्टनियमे शरणमिति निर्णीतम् । अन्वारुह्याप्याह—**सिध्येदिति** ॥ विफला विश्ववृत्तिर्नो इत्यादिना हेतुकलापेन अदृष्टसामान्यं सिध्यतु; तथाऽपि तत्सद्भावज्ञानमात्रान्नियतानुष्ठानं न सिध्येत् । तदिदमाह—**तत्सत्तेति** । स्वर्गस्वाराज्याद्यनन्तफलविशेषहेतुकर्मानुष्ठानविशेषसिद्धिर्नानुमानादिति । तस्मादनुष्ठानविशेषे स्वर्गमोक्षादिहेतौ तदङ्गकलापप्रकारविशेषे च श्रुतिरेव शरणम् । सैव श्रुतिरदृष्टस्वरूपमपि प्रथयतु । तत्तदुक्ताद्विविक्तम्—अन्तःकरणवृत्तिर्वेत्याद्युक्ताद्विविक्तम् ईश्वरसङ्कल्परूपमदृष्टं श्रुतिरेव प्रथयत्वित्यर्थः ॥ ७९ ॥

---

**आनन्द०**—पूर्वसङ्गतिमभिप्रेत्याह—**इत्थमिति** ।

ननु उदयनोक्तानुमानैरेवाऽदृष्टस्य सिद्धत्वात्कथं श्रौततेत्यत्राह—**विफला विश्ववृत्तिरिति** । यद्यपि सामान्येन सिद्ध्यति तथापि ज्योतिष्टोमापूर्वं स्वर्गसाधनं चित्रापूर्वं पशुसाधनं दर्शपूर्णमासापूर्वं सर्वफलसाधनमित्यादिविशेषाकारेणाऽवगतिर्नानुमानात् । तथा अनुष्ठानप्रकारश्च । तस्मात्सामान्यज्ञानं प्रमेयत्वसामान्यलक्षणादिजन्यज्ञानवदज्ञातप्रायमिति भावः । **अन्तःकरणेति**—सांख्याद्युक्ताद्भिन्नमित्यर्थः ॥ ७९ ॥

**॥ इति अदृष्टमात्रस्यान्यतस्सिद्धावपि श्रुत्या तद्विशेषनिष्कर्षसिद्धिः ॥**

---

**शक्तिर्यागादिकस्य स्वफलवितरणे संभवे वा फलस्य**
**स्थाप्या मध्ये तयोरित्यबहुमतिपदं सत्सु तौतातिती वाक् ।**
**शक्ताभावे हि शक्तिर्न भवति शमितो धर्मधर्म्यैक्यजल्प-**
**स्तद्द्वारे शक्तिशब्दो यदि भवतु परं क्लृप्तिमस्य क्षिपामः ॥ ८० ॥**

**सर्वार्थं**—अथ अन्तःकरणवृत्तिर्वेत्यादिभिः परमतमनूद्य फले प्रवृत्तयागशक्तिः स्वोत्पत्तौ प्रवृत्तफलशक्तिर्वा अदृष्टपदवाच्यमिति ह्युक्तं **कौमारिलैः**, तदयुक्तमित्याह—**शक्तिरित्यादिना** वागित्यन्तेन पूर्वार्धेन ॥ तस्मिन् पक्षे व्याघातमाह—**शक्ताभाव इति** । यागो नष्टस्तस्य शक्तिरनुवर्तत इति व्याहतम्, फलं भावि तस्यापि शक्तिः प्रागेवास्तीति च व्याहतम् । ननु धर्मधर्मिणोरैक्यात् शक्तिसद्भावे शक्तस्यापि सद्भावोऽस्तीत्यतो न व्याघात इत्याशङ्क्य परिहरति—**शमित** इति । धर्मधर्मिणोरैक्यं भेदाभेदनिराकरणादेव निरस्तम् । तर्हि द्वारमात्रे शक्तिशब्दं प्रयुञ्ज्महे इति चेत्, भवत्वयमौपचारिकः प्रयोगः ; नैतावताऽस्माकं कश्चिद्विरोधः अपि तु **भाट्टोक्तामदृष्टक्लृप्तिं प्राभाकरोक्तामदृष्टवाच्यत्वक्लृप्तिं** च प्रतिक्षिपामः । तदिदमाह—**परमिति** ॥८०॥

**आनन्द०**—"अन्तः करणवृत्तिर्वा धर्मो वा चेतनाश्रयः ।
वासना वा तदन्या वा न द्वारं गौरवादिभिः" ॥

इत्यादिना सांख्यादिपक्षानुवादपूर्वकं परोक्तप्रक्रियां निराकरोति—**अथान्तःकरणेति**—अन्तःकरणवृत्तिरन्तःकरणपरिणतिरित्यर्थः । फलशक्तिर्वा क्रियाशक्तिर्वा द्वारमित्यङ्गीकारात्फलजननशक्तिः क्रिययोत्पद्यत इति भावः । फलान्यथानुपपत्तिकल्प्यस्य तदभावेऽपि सिद्धिरस्त्विति शङ्कते—**तर्हीति** । **अपि त्विति**—देवताप्रीत्यतिरिक्तस्य कल्पने तस्य लिङ्वाच्यत्वकल्पने च प्रमाणाभावात् । मूलं **अबहुमतिपदं**—बहुमानविषयो नेत्यर्थः । नित्यनपुंसकत्वान्न दोषः ॥ ८० ॥

॥ इति क्रियादिशक्तिमात्ररूपादृष्टक्लृप्तिनिरासः ॥

---

**द्वारं तत्तत्फलाप्तेः श्रुतिभिरवधृतौ देवताप्रीतिकोपौ**
**व्याचक्रे देवपूजा यजनमिति न तत्र श्रुतं वाक्यविद्भिः ।**
**आम्नातेऽपेक्षितेऽर्थे न च नयननिपुणैरश्रुतं कल्पनीयं**
**नो चेत्स्याद्दत्ततोयाञ्जलिरिह भवतां रात्रिसत्रादिनोतिः ॥ ८१ ॥**

**सर्वार्थं**—अदृष्टस्य देवताप्रीत्यादिरूपत्वं पूर्वोपक्षिप्तं समर्थयते—**द्वारमिति** ॥ स एवैनं भूतिं गमयति, स एनं प्रीतः प्रीणाति, एष एव साधु कर्म कारयति तम्, क्षिपाम्यजस्रमशुभानित्यादिभिः प्रमाणशतैः ईश्वरप्रीतिकोपाभ्यां धर्माधर्मफलप्राप्तिरवगम्यते । किञ्च यज देवपूजायामिति यजतेर्देवतापूजनवाचित्वं विद्वद्भिरवगम्यते । पूजनं च प्रीतिहेतुभूतस्सेवाविशेष इति सुप्रसिद्धम् । अतो यज्ञाद्याराधितो भगवान् फलं ददातीति वैदिकसिद्धान्तः । न चात्रापेक्षितेऽर्थे साक्षादीश्वरसङ्कल्पात्मनि द्वारे श्रुत्यैव प्रतिपन्ने निरर्थकमेवादृष्टरूपं किञ्चित् कल्पनीयम् । विध्यपेक्षितस्यार्थवादादिप्रतिपन्नस्यार्थस्य स्वीकार एव हि न्याय्य इति मीमांसकमर्यादा । तदिदमाह—**आम्नात** इति । एवमनङ्गीकारे दोषमाह—**नो चेदिति** । रात्रिसत्रन्याये हि प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्तीत्यर्थवादप्रतिपन्ना प्रतिष्ठा फलतयाऽङ्गीक्रियते स्वर्गकामो यजेते"त्यादौ स्वर्गस्वरूपे विधिवाक्यप्रतिपन्नेऽपि स्वरूपविशेषपरिशोधनं "दुःखेन यन्न संभिन्नमिति अर्थवादवाक्येन क्रियते । तच्च विध्यपेक्षितत्वादनुमन्यते विधिनाऽपि । एवं तेषु तेषुष्वधिकरणेषु विध्यपेक्षितार्थप्रतिपत्तिरर्थवादादिभिरिति **मीमांसकनिर्णयः** । अतः श्रुता देवताप्रीतिरेव द्वारभूतमदृष्टमिति शिष्टालापः ॥ ८१ ॥

**आनन्द०**—प्रासङ्गिकसमाप्त्यनन्तरं प्रकृतविचारत्वान्न पृथक्सङ्गत्यपेक्षेत्यभिप्रायेणाह—**अदृष्टस्येति** ।

ननु "स एवैनं भूतिं गमयती"ति वायुशरीरकपरमात्मा भूतिं गमयतीति भूतिप्रापकत्वं देवताप्रीतिं विना नोपपद्यत इति कल्पनाऽत्रापि तुल्येति चेन्न । स इति देवतायाः फलप्रदत्वश्रवणानुरोधेन तद्गतमवश्यं कल्प्यमिति तदेवास्तु । किञ्चान्यत्र "स एनं प्रीतः यमुन्निनीषति यमधो निनीषतो"ति प्रीतिकोपयोश्श्रुतत्वाच्च तद्ग्रहस्सम्भवतीति भावः । स्ववाक्य एव श्रुतत्वान्न कल्पनेत्याह—**किञ्चेति**—तथा च यजेतेत्यस्यैव प्रीतिहेतुसेवा कार्येत्यर्थकतया श्रुतिरेवेति भावः ।

नन्वर्थवादप्रतिपन्नत्वात्प्रीतेः कथं स्वीकार इत्यत्राह—**विध्यपेक्षितेति** । **रात्रिसत्रेति** । **रात्रीरुपयन्तीति**-रात्रिसत्रे फलं न श्रुतं "स स्वर्गस्स्यात् सर्वान्प्रत्यविशिष्टत्वात्" इति विश्वजिदधिकरणोक्तन्यायेन स्वर्गकल्पना प्रसक्ता, तस्या अर्थवादश्रुतेन प्रतिष्ठाफलेन निराकाङ्क्षत्वान्न कल्पनेत्युक्तम् । **दुःखेनेति**—"न च ग्रस्तमनन्तरमभिलाषपदं पञ्च तत्सुखं स्वपदास्पद"मिति वाक्यशेषः । **एवं तेष्विति**—"सन्दिग्धे तु वाक्यशेषा"दित्यत्र "अक्ताश्शर्करा उपदधाती"ति विध्यपेक्षित द्रव्यविशेषं "तेजो वै घृत"मित्यर्थवादः प्रतिपादयति । तथा "वासः परिधत्त" इत्यत्र "एतद्वै सर्वदैवत्यं वै वासः यत्क्षौम" मित्यर्थवादेन क्षौमपरत्वं वासश्शब्दस्येत्यर्थः । आदिशब्देन "पशु चोदनायामनियमोविशेषा" दिति पशुमात्रपरस्याग्नोषोमीयविधिवाक्यगतस्य पशुशब्दस्य "छागस्य वपाया मेदसः" इति मन्त्रवर्णसमर्पितच्छागपरत्वं "छागो वा मन्त्रवर्णा"दिति सूत्रेण समर्थितमित्यर्थः ॥ ८१ ॥

॥ इति अदृष्टस्य देवताप्रीत्यादिरूपत्वम् ॥

---

आराध्यादिप्रकाशः स्फुटमुपकुरुते मन्त्रसाध्यो विधीनां
प्राशस्त्यादिप्रतीतिर्न च भवति मृषावर्णनैरर्थवादैः ।
सत्येऽप्याकाङ्क्षितेऽर्थे तदुभयगमिते वाक्यभेदादि न स्या-
ल्लोकेऽप्येवं हि दृष्टं तदनुगतिमुचां सर्वशास्त्रप्रकोपः ॥ ८२ ॥

**सर्वार्थ**—मन्त्रार्थवादयोराराध्यादिप्रकाशपरत्वेऽपि न वाक्यभेद इत्याह—**आराध्यादीति** ॥ आराध्यादिप्रकाशो मन्त्रसाध्यो विधीनामुपकुरुते; तेन विध्युपकारकत्वान्नैकवाक्यताभङ्गः । एवमर्थवादसाध्या प्राशस्त्यादिप्रतीतिरप्यर्थस्य मिथ्यात्वे विध्युपकाराय न कल्पते । अतोऽर्थवादप्रतिपन्नार्थतथात्वं प्राशस्त्यमेव दृढीकरोति । तदिदमाह—**प्राशस्त्यादीति** । न ह्यसौ चतुर्वेदाभिज्ञः मयोच्यमानं मिथ्येत्युक्तौ प्राशस्त्यं प्रतीयते । अतो विध्यपेक्षितार्थद्वये मन्त्रार्थवादाभ्यां याथातथ्येन प्रतिपन्ने न वाक्यभेद-

शङ्का स्यात्। तदेतदाह—लोकेऽपीपि। न चैतद्वेदमात्रनियतम्; लोकेऽपीयमेव गतिरित्याह—लोकेऽपीति। सप्तद्वीपाधिपतिर्महीपतिश्चतुर्दशविद्यास्थानविद् ब्राह्मण- इत्यादिलोकव्यवहारः स्वार्थ[प्रामाण्य]मेव पुरस्कुरुते। अन्यथा तत्तदाधिक्यप्रतिपादकानां श्रुतिस्मृतीतिहासपुराणानां साकल्येनाप्रामाण्यप्रसङ्गः इत्याह· तदनुगतिमुचामिति॥ ८२॥

---

आनन्द० –ननु मन्त्रार्थवादाभ्यामर्थसमर्पणमेव न सम्भवति तयोः प्रत्येकवाक्यतया विध्येकवाक्यताभङ्गे तयोरनन्वयेनाऽप्रामाण्यमेव स्यादित्याक्षेपसङ्गतिमभिप्रेत्याह मन्त्रार्थवादयोरिति। आदिशब्देन गुणादिप्रकाशो विवक्षितः—आराध्यादिप्रकाश इति—अनुष्ठेयार्थस्य विध्यपेक्षितत्वादिति भावः। तेनेति—प्रोक्षणादिवाक्यवद्वाक्यैकवाक्यतया न वाक्यभेदकत्वमित्यर्थः।

नन्वर्थवादानां पदैकवाक्यतयाऽन्वयो न स्यात् तस्याप्यवान्तरसंसर्गप्रतिपादकत्वादित्याशङ्क्याह—एवमिति—पदैकवाक्यतयाऽन्वयपक्षे किं पदानां प्रत्येकं स्वबोध्यसम्बन्धो लक्षणा? उत समुदितबोध्यसम्बन्धः? नाद्यः। तत्रापि खलेकपोतिकान्यायेन? उत क्रमेण? नाद्यः। एकेतरपदवैयर्थ्यात्। न द्वितीयः। पुनरुक्ततादिदोषाच्च। अन्यथा ह्यभ्यासाधिकरणविरोधः। तत्रापि युगपद्वा क्रमेण वैकार्थाभिधानसम्भवात्। द्वितीयः। तावत्पदबोध्यस्य वाक्यार्थस्यावश्यकतया तस्यैवाऽन्वयसम्भवात्तल्लक्ष्यप्राशस्त्यस्याऽन्यथापि प्रतिपत्या प्रवृत्तिसम्भवे वाक्यार्थान्तिर्भावकल्पने प्रमाणाभावाच्च वाक्यार्थरूपगुणान्वयस्यैव प्राशस्त्यरूपतया यथार्थत्वात्।

यद्वा बाधकाभावे सत्यार्थवादिकस्य फलस्य सिद्धिः। अनुदितादिवाक्ये विधेरेव बाधकतया तदसिद्धेः। तथा चेतरनिन्दयाऽन्यत्र प्राशस्त्यं प्रतीयमानं प्रवृत्तिकरम्। यद्वा तत्र निवृत्तिपरमेव वाक्यमधिकारिविशेषस्य। तन्निवृत्तेरावश्यकत्वात्। तस्माद् वृत्ति विनापि प्राशस्त्ये च प्रतीयमाने वृत्तिकल्पनं न सम्भवति।

न च वाक्यार्थविषयार्थवृत्तिकल्पना। तदभावस्योक्तत्वात्।

अथवा पदगम्यत्वमात्रेणैवावान्तरवाक्यार्थस्य वाक्यैकवाक्यतापक्ष इव तद्विषयत्वसम्भवाच्चेति लक्षणेति भावः। उक्तप्रकारानङ्गीकारे प्राशस्त्यमेव न प्रतीयेतेत्याह—नह्यसाविति। विध्यपेक्षितार्थद्वय इति—मन्त्रार्थः अर्थवादवाक्यार्थश्चेत्यर्थः। अन्यथेति अर्थवादानां स्वार्थतात्पर्याभावे देवताधिक्यप्रतिपादनस्याऽसम्भवादिति भावः। साकल्येनेति—बाधकाभावेऽप्यप्रामाण्ये तुल्यन्यायादिति भावः॥ ८२॥

॥ इति मन्त्रादेर्विवक्षितार्थत्वविरोधपरिहारः॥

**बुद्धिर्मन्त्रार्थवादैर्भवति दृढतरा देवतातद्गुणादौ**
**बाधश्चातीन्द्रियेऽक्षैर्न हि भवति धियां मानता च स्वतो नः।**
**दुःखासंभिन्नदेशादिकमिव फलदा देवता तत्रतत्र**
**प्राप्या च श्रूयतेऽतः कथय कथमियं शब्दमात्रादिरूपा॥ ८३॥**

**सर्वार्थ**—इत्थं प्रमाणप्रतिपन्ने देवतास्वरूपे सति किमिति तत्तच्छब्दमात्रात्मिका देवताऽभिधीयते किम्पचानैरित्याह—**बुद्धिरिति** ॥ अयमत्र विकल्पः—किं मन्त्रादिभिः प्रतीतिरेव नोत्पद्यते ? उत संशयात्मिका ? किं वा अवधारणात्मिकाऽपि बाध्यते ? अबाधिताऽपि[बौद्ध] बाध्यवत् स्वतोऽप्रमाणरूपिणीति स्वीक्रियते ? तत्राद्यं परिहरति—**बुद्धिर्मन्त्रार्थवादैर्भवतीति** । द्वितीयमप्यपाकरोति—**दृढतरा देवतातद्गुणादाविति** । तृतीयं च निराचष्टे—**बाधश्चातीन्द्रियेऽक्षैर्न हि भवति धियामिति** । अयं विकल्पः—मन्त्रार्थवादप्रतिपन्नानामलौकिकानामर्थानां किमिन्द्रियैर्बाधः ? किं वा अनुमानेन ? न तावदिन्द्रियेण; अलौकिकेऽर्थे खल्विन्द्रियाणां विधिनिषेधयोस्सामर्थ्यमेव नास्ति । नाप्यनुमानेन, आगमविरुद्धस्यानुमानस्य[स्याद्]दुष्टत्वात् । अबाधितस्यापि स्वतः एवाप्रामाण्यमिति चतुर्थः पक्षोऽवशिष्यते; स तु बौद्धानामेव । तदिदमाह **धियां मानता च स्वतो न** इति । तर्हि देवताप्रीत्यादौ श्रुतिरेव नास्तीति पञ्चमं पक्षं परिकल्पयाम इति चेत्, तद्दृष्टापलापरूपत्वादनुपपन्नमित्याह—**दुःखेति** । यथा स्वर्गादिश्रुतिः प्रत्यक्षा एवं देवतादिश्रुतिरपि प्रत्यक्षैव श्रूयते । अतः कथमियं शब्दमात्रात्मिका देवतेति कथयसि त्वमिति परपक्षवादिनमाक्षिपति—**कथयेति** ॥ ८३ ॥

---

**आनन्द०**—देवतायास्तत्तच्छब्दमात्रस्वरूपायाश्चैतन्यविरहात्कथं तत्प्रीतिद्वारमित्याक्षेपसङ्गत्यभिप्रायेणाह—**इत्थमिति**—

ननु मन्त्रार्थवादैर्बुद्धिर्भवतीत्युक्ते दार्ढ्यस्य सिद्धत्वात् स्वरूपसद्विशेषणे कथनेऽतिप्रसङ्गाद् दृढतरादिविशेषणोक्तिर्व्यर्थेत्यत्राह **अयमत्र विकल्प इति । आगमविरुद्धस्येति**—नरशिरःकपालशौचानुमानस्यैवाऽप्रामाण्याच्छ्रुत्या बाधादिति भावः । **बौद्धानामेवेति**—सविकल्पकस्याऽप्रमाणत्वात्तन्मत इति भावः । प्रथमादिपदेन विग्रहादिसंग्रहो द्वितीयेन प्रतिष्ठादेस्तृतीयेन च प्रीत्यादेः ॥ ८३ ॥

**॥ इति देवतानां तत्तच्छब्दमात्राद्व्यतिरेकः ॥**

प्राचीनेन्द्राद्यपाये दिशतु कृतफलं को नु कल्पान्तरादा-
वन्ये तत्तत्पदस्था न तदुपजनकाः प्रागनाराधितत्वात् ।
मैवं यस्य श्रुतिश्च स्मृतिरपि नियतादेशरूपे स एक-
स्सर्वाराध्यान्तरात्मा न हि गलितपदो नापि सुप्तस्तदाऽपि ॥ ८४ ॥

**सर्वार्थं** - ननु कर्मणां देवताराधनरूपत्वे कल्पान्ते पूर्वकल्पाराधिता देवताः भ्रष्टाधिकाराः। कल्पान्तरे पुनरन्ये तत्तत्पदस्था देवताविशेषाः पूर्वकल्पेऽनाराधितत्वात् पूर्वकल्पकृतकर्मफलजनका न भवन्ति। अतः कथमुत्तरकल्पे पूर्वकल्पकृतकर्मफलप्राप्ति-रिति चोदयति- **प्राचीनेति**। उक्तमिदं निराकरोति- **मैवमिति**। श्रुति—स्मृतिर्ममैवा-ज्ञेति यस्य श्रुतिश्च स्मृतिश्च नियतादेशरूपे प्रमाणसिद्धे, स एकस्सर्वकर्मसमाराध्यः पूर्वोत्तरकल्पवर्तिसकलदेवतान्तर्यामी न हि गलितपदो भवति; नापि सुप्तवत् किमपि न जानाति। तेन पूर्वोत्तरकल्पवर्तिनोरधिकारिणोरधिपतिरन्तर्यामी च भगवानेव सर्वं फलं प्रदापयति। यथा पूर्वोत्तराधिकारिणोरधिपतिर्महाराजस्तत्तद्देशवर्तिनां तत्तत्फल-प्रदानेन परिपोषक इति लोकदृष्टमेतत् ॥ ८४ ॥

---

**आनन्द०**—ननु देवता चेतनरूपाऽस्तु तथापि तत्प्रीतिर्न द्वारं बाधकसत्त्वादित्या-क्षेपसङ्गत्याह नन्विति। पूर्वकल्पेति—पूर्वकल्पस्थदेवतानामित्यर्थः। "मयैव विहि-तान्" इत्याद्युक्तेरिति भावः। अत्र लौकिकदृष्टान्तमाह—यथेति ॥ ८४ ॥

॥ इति कर्मणां कल्पान्तरेष्वपि फलसिद्धिद्वारविशेषः ॥

---

अस्त्वेवं कर्मवर्गे स्वयमिह फलदो हव्यकव्यैकभोक्ता
तन्निघ्नैस्तैः किमन्तर्गडुभिरिति च न स्वोक्तिबाधप्रसक्तेः।
कर्माराध्यत्वमेषां दिशति फलमसौ पूर्वमाराधितस्तैः
श्रद्धेयाः श्राद्धभोक्तृद्विजवदत इमे निर्जरास्तस्य देहाः ॥ ८५ ॥

**सर्वार्थं** -तर्हि सर्वाधिपतिस्स एव भगवान् सकलफलप्रदो भवतु; हव्यकव्यैक-भोक्तृत्वात्; मध्ये तन्निघ्नैस्तैः किमन्तर्गडुभिरिति, एतस्त्वोक्तिबाधदुःस्थमित्याह— **अस्त्वेवमिति**॥ देवतामुखेन भगवत्समाराधनं हव्यभोक्तृत्वम्। तदेव पितृमुखेन चेत् कव्यभोक्तृत्वमिति शास्त्रप्रसिद्धिः। अतो देवपितृप्रहाणवचनमसङ्गतम्। किञ्च कर्मभि-राराधितो भगवान् सकलमपि फलं ददातीति शास्त्रनिर्णयः। तथा च पूर्वस्मिन् कल्पे तैस्तैरधिकारिभिः कर्मविशेषसमाराधितो भगवान् उत्तरस्मिन् कल्पे तेषा[मपि]मेव कर्माराध्यत्वेन देवतात्वं पितृत्वं च ददाति। तथा च तत्तद्देवतामुखेन भगवत एवा-राधनीयत्वम्, तेषामपि च भगवद्विशेषणभूतानां कर्माराध्यत्वमिति न विरोधः।

तदिदमाह—**कर्माराध्यत्वमिति** । ननु देवतानामाराध्यत्वे कथं भगवदाराधनत्वम् ? तदाराधने वा कथं देवताराधनत्वमिति ? तदेतद् दृष्टान्तोनोपपादयति—**श्रद्धेया** इति । यथा श्राद्धे निमन्त्रितब्राह्मणभोजने पितृदेवतयोः प्रीतिः, सैव प्रीतिः फलदायिनी, एवमाराध्यदेवतान्तर्यामी भगवान् प्रीतः फलं प्रयच्छति । अत इमे निर्जरास्तस्य देहा इति श्रुतिसिद्धमित्यर्थः ॥ ८५ ॥

---

**आनन्द०**—ननु तर्हि देवतैक्यवादस्स्यात् सर्वत्रापि भगवत एव फलदातृत्वेनाराध्यत्वादित्याक्षेपसङ्गत्याह—**तर्हीति** । स्वोक्ति **बाधेति** स्वोक्तिमेवोपपादयति—

"यज्ञेश्वरो हव्य-कव्य-समस्तभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्रे" त्यादिप्रमाणैर्हव्यकव्यभोक्तृत्वेनाऽराध्यत्वावगमादित्यर्थः । **तदेवेति**—भगवन्समाराधनमित्यर्थः । **भगवतोऽऽराधनं**—भगवतः पूजाग्रहणमिति यावत् । **अत इति**—देव—पितृमुखेनैव भोक्तृत्वस्य प्रमाणसिद्धत्वान्न देवतादेर्निरास इति भावः । किञ्च कर्मफलत्वेनैव देवस्व पितृत्वादेरवगमात्—भगवत एकस्यैव देवतात्वे तदनुपपत्तेस्तद्बलान्नानादेवता सिद्धिरित्याह—**किञ्चेति** ।

ननु देवतानां ततोऽन्यत्वे देवताराधनं न स्यात् अन्यथाऽतिप्रसङ्गादित्याशङ्कते—**नन्विति** ।

**यथेति** । ननु तदर्थंनिमन्त्रणरूपसम्बन्धाद्ब्राह्मणाराधनात्पितृणां प्रीतिरस्ति न प्रकृत इत्यत्राह—**अत इम इति** "यस्य पृथिवी शरीरं" "यस्यात्मा शरीर" मित्यादिश्रुतिः ॥ ८५ ॥

**॥ इति देवतान्तरप्रीतेरपि भगवत्प्रीत्यर्थत्वम् ॥**

---

**विश्वेशाकूतभेदव्यवहितफलदे वैधघण्टापथेऽस्मिन्**
**संस्काराणां गतार्था सरणिरपि तथा मन्त्रणप्रोक्षणाद्यैः ।**
**राजेच्छोपात्तभोग्यप्रभृतिनियमवत्तत्र कार्यान्तरादि-**
**स्सत्त्वादीनां गुणानां विपरिणतिभिदां तत्फलं केचिदूचुः ॥ ८६ ॥**

**सर्वार्थं**—एवं प्रधानकर्मसु द्वारभूतां देवताप्रीतिं प्रसाध्य संस्कारकर्मस्वपि स—एव देवतासंकल्पविशेषो द्वारत्वेन स्वीकार्य इति वदति—**विश्वेशेति** ॥ यथा यज्ञाद्याराधितः स्वसङ्कल्पेनैव फलं प्रयच्छति भगवान्, एवं मन्त्रणप्रोक्षणादिभिरपि संस्कारकर्मभिराधितस्तत्तत्संस्कार्यानुबन्धिफलकरणेन तानितानि कर्माणि सगुणयतीति । कथं तर्हि तत्तत्संकार्यवस्तुनि नियमेनोत्तरकर्मानुष्ठानं स्यात् ? न ह्यप्रोक्षितात्प्रोक्षिते कश्चिदतिशयो भवत्पक्षेऽस्ति; ईश्वरबुद्धिविशेषमन्तरेण व्रीह्यादिषु विशेषास्वीकारादित्याशङ्क्याह—**राजेच्छेति** । यथा राजेच्छया अस्येदं वाहनमायुधं वस्त्रमाभरणमित्यादि-

नियमकारिण्या परिगृहीतानां तेषां पदार्थानां तन्नियमानुरोधेनैव उत्तरोत्तरमारोहणादि-कर्मसूपयोगनियमः, एवं तत्तत्प्रोक्षणादिकर्मविषयीकृतानामेव तेषामुपयोगो भगवदायत्त-इति न विरोधः; सहकारिवशादेव सर्वं संपत्स्यत इति हि न्यायवित्संप्रदायः । इत्थं स्वपक्षमभिधाय सयूथ्यानां पक्षमप्याह—**सत्त्वादीनामिति** । प्रोक्षणादिकर्मभिर्व्रीह्यादिषु सत्त्वादिगुणपरिणतिभेदं केचिदूचुरिति, गुणपरिणतिभेदातिरेकेण प्रोक्षणादिना आधेय-शक्तिर्न कल्प्येत्यर्थः । वैभवादयं पक्ष उक्तः; प्राक्तन एव पक्षः प्रामाणिक इति ॥ ८६ ॥

---

**आनन्द०**—नन्वेवमपि "व्रीहीन्प्रोक्षती"त्यादिसंस्कारकर्मसु संस्कार्यंगतातिशयो वक्तव्यः । स एवातिशयोऽदृष्टं क्षणिकक्रियाद्वारभूतश्च । तथा च तन्न्यायेनात्रापि क्रिया द्वारं, न देवता प्रीतिरित्याक्षेपसङ्गतिमभिप्रेत्याह - **एवमिति** । अत्रापि देवतागत एवाऽतिशयो द्वारमित्याह—**एवमिति** - कर्म द्विविधम्—गुण प्रधानभेदात् तानि द्वैधाधि-करणे तथा निर्णीतत्वात् । गुणकर्म चतुर्धा—उत्पत्त्याप्ति-विकार-संस्कृतिभेदात् । तत्र व्रीहीन्प्रोक्षतीति संस्कारकर्म । **कथं तर्हीति**—ईश्वरसङ्कल्पादिरूपातिशयस्य व्रीहिगतत्वाऽभावेन प्रोक्षिताप्रोक्षितसाधारण्यादिति भावः **यथा राजेच्छयेति**—राजेच्छायाः वाहनाद्यगतत्वेऽपि तद्वाहनाद्युपयोगनियमः अन्यथाऽनर्थपर्यवसानञ्च । तथा संस्कारकर्मजदेवतासङ्कल्पादेरपि प्रोक्षितेनाऽनुष्ठाने कर्मफलं न चेन्नेति भगवदभिप्राय-इति भावः ।

नन्वप्रोक्षितेनानुष्ठानेऽपि फलं किं न स्यादित्यत आह—**सहकारिवशादेवेति**—प्रोक्षितानामेव व्रीहीणां सहकारित्वादिति भावः ।

केचित्तु लेखकप्रमादादागतं सहकारिवशादेवेतीत्याहुः । **प्रोक्षणादिकर्मभिरिति**—तथा च प्रोक्षिताप्रोक्षितयोर्न साधारण्यमिति भावः । **वैभवेति**—सत्वादिगुणपरिणति-भेदः—प्रोक्षणादिनोत्पद्यत इत्यत्र न किञ्चित्प्रमाणमस्ति अन्यथाऽनुपपत्त्या कल्पने शक्ति-रदृष्टं वा कल्प्यतामविशेषादित्युक्तमिति भावः ॥ ८६ ॥

**॥ इति शास्त्रीयसंस्काराणां देवताप्रीत्यर्थत्वम् ॥**

---

**कृष्यादौ मर्दनादावपि च न हि परप्रीतिमूला फलाप्ति-**
**स्तद्वत् स्याच्छास्त्रसिद्धेष्विति न सदफलं ह्यत्र दृष्टान्तमात्रम् ।**
**दृष्टौ चाज्ञानुवृत्तिप्रभृतिषु फलदौ शासितुः प्रीतिकोपौ**
**शिष्टौ चातस्समीची तदुपगतिरिह त्यक्तिरिष्टेऽपि वांशे ॥ ८७ ॥**

**सर्वार्थ**—ननु कृष्यादौ मर्दनादौ च परप्रीत्या फलावाप्तिर्न दृश्यते, तद्वच्छास्त्र-सिद्धेष्वपि स्वशक्त्यैव फलप्राप्तिरुचितेत्याशङ्क्य निराकरोति—**कृष्यादावित्यादिना** न सदित्यन्तेन ॥ केवलं हि दृष्टान्तमात्रं प्रामाणिकार्थप्रतिक्षेपकं न भवति; अन्यथाऽति

प्रसङ्गादित्याह—अफलमिति। अत्र प्रतिदृष्टान्तोऽप्यस्तीत्याह—दृष्टाविति । लोके च राज्ञामाज्ञानुवृत्तिप्रभृतिषु प्रीतिकोपौ दृष्टौ; दृष्टौ च तौ फलदाविति सर्वेषाम् । एवं शास्त्रदृष्टत्वात्तावेव प्रीतिकोपौ फलदौ भवतः। अतस्तदुपगतिरेव भवतोऽपि समीची। एवं प्रमाणदृष्टान्ताभ्यां प्रतिपन्नस्यार्थस्य परित्यागे सर्वस्यापि प्रामाणिकत्वेन दृष्टस्यार्थस्य परित्यागः स्यादित्याह—त्यक्तिरिति ॥ ८७ ॥

**आनन्द०**—ननु भूकर्षणेन भूम्यामेवातिशयोऽभ्युपगम्यते । तथा मर्दन शोषण- सेचनादिभिरौषध एव वीर्यम् न देवताप्रीतिः। तथा संस्कारकर्मसु कर्ममात्रे वा न देवताप्रीतिर्द्वारं भवितुमर्हति कालान्तरभाविफलहेतुकर्मत्वादित्यनुमानेनैव देवताप्रीतिद्वारकत्वं न सम्भवतीत्याक्षेपसङ्गत्याह—**नन्विति केवलमिति** –साहचर्यमात्रं न व्याप्तिनियामकं अधर्म[साधन]त्व हिंसात्वादेरपि व्याप्तिप्रसङ्गादिति भावः। **अत्रेति**। तथा चानुमानं सत्प्रतिपक्षितमिति भावः।

ननूभयत्र साम्ये भवत्पक्षः कथं सिद्धयतीति शङ्कां "शिष्टौ चात" इत्यंशव्याख्यानेन परिहरति—**एवं शास्त्रेति**—"एनं प्रीत" इत्यादिशास्त्रानुरोधात्सर्वहृद्योऽयं पक्ष-इत्यर्थः।

केचित्तु नन्वतिरिक्तदेवता तत्प्रीतिश्च कल्पनीये तथा सति गौरवं, कर्मण-एव सिद्धस्याऽदृष्टद्वारकस्य फलप्रदत्वमिति लाघवमिति चेत्तत्राह—**एवमिति**—प्रामाणिकगौरवं न दोषायेति भाव इत्याहुः ॥ ८७ ॥

**॥ इति कर्मणां स्वयं फलवत्त्वौचित्यभङ्गः ॥**

**प्रध्वस्तं कर्म कालान्तरभवितृफलासाधकं तल्लिङादे-**
**र्वाच्योऽर्थः स्थायि कार्यं न यदि कथमिवान्वेतु कामी नियोज्यः।**
**तच्चापूर्वं प्रधानं फलजनकमपि स्यान्नियोज्यप्रसिद्धयै**
**नित्ये नैष्फल्यमस्येत्यभिदधुरपरे तेऽपि निर्धूतकल्पाः ॥ ८८ ॥**

**सर्वार्थ**—एवं कल्प्यापूर्वपक्षं निराकृत्य वाच्यापूर्वपक्षेऽपि **प्राभाकरोक्ते** दूषणं तुल्यमित्यतिदिशति—**प्रध्वस्तमिति** ॥ इत्थं किल वाच्यापूर्ववादिनामाशयः—चिरध्वस्तं किल कर्म कालान्तरभाविफलसाधनं न भवति । तल्लिङादेर्वाच्योऽर्थः कालान्तरभाविफलसाधकं स्थायिकार्यमपूर्वं भवितुमर्हति । इत्थं न यदि स्वर्गकामी नियोज्यः कथमस्मिन्वाक्येऽन्वयमर्हति ? अन्विताभिधानं हि वाक्यकृत्यम्; न खल्वनन्वितमर्थं कदाचिदपि वाक्यमभिधत्ते। तच्चापूर्वं स्वप्राधानम्; न पुनः **कौमारिल**-कल्पनायामिव द्वारमात्रम् । तच्च भृत्यपोषणन्यायेन नियोज्यप्रसिद्धयै फलजनकमपि स्यात्। राजा हि स्वकार्यनिर्वाहाय भृत्यान् पोषयति। एवमपूर्वमपि स्वप्रसिद्धयै स्वर्गादिकं नियोज्यफलं प्रयच्छति। न च वाच्यं कामाधिकारे अपूर्वमस्तु, नित्ये फलाभावाद-

पूर्वं मा भूदिति; एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्राप्यविशेषात् । कामाधिकारे लिङ्वाच्यतया स्वप्राधान्येनापूर्वं निर्णीते नित्ये फलाभावेऽपि तदेवापूर्वं लिङ्वाच्यं स्यात् । अन्यथा लिङो वैयर्थ्यं स्यात्; अर्थान्तरकल्पनेनानुवृत्तार्थाभावेन वैरूप्यं स्यादिति अस्मिन्मते विशेषेण दूष्याभावादेतेऽपि पूर्वोक्तेन कल्पेन निधूंता इत्याह—त इति । तुल्यं खल्वेतेषां श्रुतदेवताप्रीत्यादि[भा] ह्यानं कल्पनागौरवं चेति भावः ॥ ८८ ॥

---

आनन्द०—ननु श्रुतप्रीत्यैवोपपत्तौ नापूर्वं सिद्ध्येत् वाच्यत्वपक्षेऽपूर्वस्याऽपि श्रुतत्वात्तत्रापि स्ववाक्यश्रुतस्य बलवत्वान्न देवताप्रीतिर्द्वारमित्याक्षेप सङ्गतिमभिप्रेत्याह—एवमिति ।

ननु यागस्य स्वर्गसाधनत्वं वाक्येन बोध्यतां किमपूर्वस्य वाच्यताकल्पनयेत्यत्राह—इत्थं किलेति ।

ननु साधनत्वं न लिङर्थः तथापि नियोज्यान्वयबलादौपादानिकं साधनत्वं वाच्यमिति साधनताप्रतीतिमन्तर्भाव्यैव नियोज्यान्वयसिद्धिः । नियोज्यत्वं हि ममेदं कार्यमिति बोद्धृत्वं । कामी च काम्याव्यवहितसाधनमेवोपादत्ते कर्तव्यतया । व्यवहिते तु तद्वारेणेति व्यवहितसाधने यागे अव्यवहितसाधनीभूतापूर्वकर्तव्यतान्तर्भावेन कर्तव्यताज्ञानमिति लिङोऽपूर्वसाधनीभूतस्थायिकार्यबोधकत्वं विना न नियोज्यान्वय—इत्यपूर्ववाच्यत्वमिति भावः ।

नन्वभिहितान्वयपक्षे योग्यताबलादपूर्वं कल्प्यतां, तावतापि नियोज्यान्वयसम्भवादित्यत्राह—अन्विताभिधानमिति—तथा च प्रथममेव स्थायिकार्ये लिङश्शक्तिरङ्गीकार्येति भावः ।

नन्वेवमपि नियोज्यान्वयो न स्यात् अपूर्वस्य प्रधानतया फलजनकत्वायोगात् । तज्जनने च तदर्थतया प्राधान्यं न स्यादित्यत आह—तच्चेति । एवमपूर्वमपि स्वसिद्ध्यैविषयनियोज्ययोरुभयोरप्यपूर्वसिद्ध्यर्थतया न प्राधान्यहानिरिति भावः । न च वाच्यमिति—तत्र योग्यताविरहेणाऽन्वयबोधाऽसम्भवादिति भावः । एकत्रेति—यथा प्रयोज्यव्यापारस्थले घटादिशब्दानां व्युत्पत्तिग्रहेऽन्यत्रापि तदर्थत्वं तद्वदिति भावः । वैरूप्यं स्यादिति ।

ननु सैन्धवादिपदवदस्तु को दोष इति चेदेकार्थत्वेनैवोपपत्तावनेकार्थत्वकल्पनाया-अन्याय्यत्वात् । अन्यथा गङ्गादिपदादेस्तीरादावेकशक्तिकल्पनाप्रसङ्गादिति भावः । तुल्यमिति—कल्प्यापूर्वपक्षवदपूर्ववाच्यत्वं लोकविरुद्धं कल्प्यामत्यपूर्वस्य श्रुतत्वञ्चासिद्धम् देवताप्रीतिस्तु श्रुतेति सैव द्वारं लिङ्बोध्यं वा स्यात् न त्वपूर्वम् । तथा च वाच्यापूर्वपक्षोऽपि गौरवादिभिस्तुल्य इत्यर्थः ॥ ८८ ॥

॥ इति वाच्यापूर्वपक्षेऽपि कल्प्यापूर्वपक्षोक्तदूषणातिदेशः ॥

कृत्युद्देश्यं सुखादि स्वत इह न परं स्यादनन्यार्थवेद्यं
क्लृप्तिश्चान्यस्य हेतोरपि च परिहृतं तत्परत्वं श्रुतीनाम् ।
नित्ये चापूर्वतोऽन्यत् फलमनघगिरस्सस्मरुर्दुस्त्यजं त-
न्नो चेत् स्वस्मिन्नियोगायुतमपि निपुणान्नैव शक्तं नियोक्तुम् ॥ ८९ ॥

सर्वार्थ०—एवं परोक्तं वाच्यापूर्वं निरस्य तत्प्राधान्यवचनमपि निराचष्टे—कृत्युद्देश्यमिति ॥ कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते इति यत्प्राधान्यमुच्यते प्रभाकरमतानुवर्तिभिः, तत्सुखादेरिति दर्शयति—सुखादि स्वत इति । अतोऽपूर्वस्यानन्यार्थवेद्यत्वं न स्यादित्याह—न परं स्यादनन्यार्थवेद्यमिति । तदेवोपपादयति—क्लृप्तिश्चेति । कालान्तरभाविस्वर्गानुकूलतयैव ह्यपूर्वं परिकल्प्यते वाच्यापूर्ववादिभिरपि । ननु कार्य एव वाक्यानां प्रामाण्यमुक्तम् ? अस्माभिरपि तत्परिहृतमित्याह—अपि चेति । किंच नित्ये कर्मणि निष्फलत्वं त्वयाऽभिधीयते; तच्चायुक्तम्, अपूर्वव्यतिरेकेणाकरणे प्रत्यवायपरिहारोत्तरकर्माधिकारादिकं फलमनघगिरः—मुनयः खलु सस्मरुः; तच्च भवताऽपि दुस्त्यजमित्याह—दुस्त्यजं तदिति । एवमनङ्गीकारे नित्ये कर्मणि नियोगस्य नियोगत्वमेव बंभज्येत, स्वयं प्रवर्तकत्वाभावादिति दर्शयति—नो चेदिति । स्वयमसुखात्मकस्य नियोगस्य सुखादिहेतुभावेनैव प्रवर्तकत्वं संघटते । तद्धेतुत्वाभावे सहस्रमपि नियोगाः प्रवर्तयितुं न शक्नुवन्तीत्यर्थः ॥ ८९ ॥

---

आनन्द०—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्यभिप्रायेणाह—एवमिति-स्वत इति यत्कार्यमुच्यते तत्स्वतः-प्रयोजनतया कृतिसाध्यमित्यर्थः । स्वतः कृतिसाध्यं यत् तत्स्यात् अनन्यार्थवेद्यं न च त्वदुक्तं कार्यम् तथा, तस्य स्वर्गार्थत्वेनैव 'कल्प्यत्वादित्याह—अतोऽपूर्वस्येति ।

ननु वाक्यं यत्कार्यतया प्रमाणं तदेव प्रधानमित्याशङ्क्य परिहरति—नन्वित्यादिना ।

किंच व्यतिरेकमुखेनापि कार्यस्य प्राधान्याभावमुपपादयति—किञ्चेति फलार्थमेव पुरुषः प्रवर्तते फलञ्च इष्टानिष्टपरिहारौ तदभावे प्रेक्षावान्न प्रवर्तत इति प्रवर्तकत्वं नियोगस्य भज्येतेति परार्थमेवेति भावः । सस्मरुः—"मृताहं समतिक्रम्य चण्डालः कोटिजस्स्मृतः" सन्ध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु" इत्यादिभिरिति शेषः ॥ ८९ ॥

॥ इति अपूर्वप्राधान्यभङ्गः ॥

व्युत्पत्तिश्चेल्लिङादेः स्वयमवगमिते स्यान्मिथस्संश्रयादि-
र्नान्यैरत्रानुभूतिः स्मृतिरपि न च वस्तद्द्वयान्यो विमर्शः ।
अर्थापत्त्या मिते चेन्न गुरुमतमिदं मन्यसे तत्तथा चेत्
कल्प्येत द्वारमात्रं तदिति न खलु तद्वाच्यभावादिकल्प्यम् ॥ ९० ॥

**सर्वार्थ**—एवं प्राधान्यं निरस्यापूर्वे लिङादेर्व्युत्पत्तिमपि निराकरोति—**व्युत्पत्तिरिति** ॥ अयमत्र विकल्पः—किमज्ञातेऽपूर्वे लिङादेर्व्युत्पत्तिः, उत ज्ञाते ? न तावदज्ञाते; व्याघातात् । ज्ञाते चेत् किं लिङैव ज्ञाते उतान्यज्ञाते ? नाद्यः, अन्योन्याश्रयात्; तदिदमाह—**मिथःसंश्रयादिरिति** । ज्ञाते च व्युत्पत्तिः, व्युत्पन्ने चाभिधानम्, अभिधानाच्च ज्ञानमिति चक्रकमादिपदार्थः । अन्यैर्ज्ञातत्वे किमन्यदनुभूतिः, स्मृतिर्वा ? न तावदनुभूतिः; प्रमाणान्तरागोचरत्वादपूर्वस्येत्याह—**नान्यैरत्रानुभूतिरिति** । अनुभूतिपरतन्त्रत्वात् स्मृतिरपि नास्तीत्याह—**स्मृतिरपीति** । तर्हि विमर्शज्ञानेन सिध्यतीति चेत्, तच्च नेत्याह—**न चेति** । अनुभूतिस्मृतिव्यतिरेकेण विमर्शस्य उपपादयितुमशक्यत्वादित्यर्थः । तर्हि अर्थापत्त्या प्रमितमिति पक्षान्तरमनुवदति—**अर्थापत्त्येति** । तन्निराकरोति **न गुरुमतमिदमिति** । कल्प्यापूर्ववादिनः **कौमारिला** एव । तर्हि तन्मतमेवानुसराम इति पराभिप्रायमनुवदति—**मन्यस इति** । निराचष्टे—**कल्प्येतेति** । कुमारिलमतानुसारे कल्प्यापूर्वमेव स्वीकृतं स्यात् । तथा च वाच्यापूर्वसमर्थनाहङ्कारवादो भज्येतेति भावः ॥ ९० ॥

---

**आनन्द०**—पूर्वशेषत्वान्न पृथक्सङ्गतिरित्यभिप्रायेणाह—**एवमिति** । नन्वपूर्वव्युत्पत्तिर्दूरे स्यात्, न चापूर्वस्याऽऽगमिकत्वं समर्थनीयं विरोधादित्यत आह—**अयमत्र विकल्प इति** । **व्याघातादिति**—व्युत्पत्तिग्रहस्य तत्पूर्वकत्वादिति भावः । **कौमारिला एवेति**—स्युरितिशेषः ॥ ९० ॥

॥ इति अपूर्वविषयलिङादिव्युत्पत्त्यनुपपत्तिः ॥

---

देवप्रीत्यादिकं वा विदितमिह विधिप्रत्ययस्यास्तु वाच्यं
नात्रान्योन्याश्रयो न श्रुतपरिहरणं नापि क्लृप्तिर्गरिष्ठा ।
प्राधान्यं स्याच्च किञ्चिन्नृपभजननयात् सिद्धमेतच्च शास्त्रै-
रित्थं त्वर्थाविरोधेऽप्यतिगरिमभयान्नेष्यते शब्दशक्तिः ॥ ९१ ॥

**सर्वार्थ**—यागादिगतं कार्यत्वमेव लिङ्वाच्यम्; तच्चेष्टस्य कृत्यधीनात्मलाभत्वमित्यादिकं वेदार्थसंग्रहादौ विस्तरेण व्याख्यातम् । तदतिरिक्तार्थवाच्यत्वकल्पनायामपि देवताप्रीत्यादिव्यतिरेकेण नान्यस्य कस्यचिदप्रामाणिकस्यापूर्वादिपदवाच्यस्य लिङ्वाच्यत्वं कल्पनीयमित्याह—**देवेति** ॥ अस्त्वित्यन्वारुह्यवादत्वं द्योतयति—अतिरिक्तार्थवाच्यत्वेऽपि देव[ता]प्रीत्यादिकमेव वाच्यमस्त्वित्यर्थः । अस्मिन् पक्षे प्रागुक्ता दोषा न सन्तीत्याह—**नात्रेति** । तान् गणयति—अन्योन्याश्रयः श्रुतहानमश्रुतकल्पनेति ।

किंच राजसेवान्यायेन राजप्रीतिप्राधान्यवदीश्वरप्रीतिप्राधान्यं चास्मिन् पक्षे वक्तुं शक्यत इत्याह--**प्राधान्यमिति**। न चैतत् केवलयुक्तिसिद्धम्; शास्त्रेणापि नियमयति-**सिद्धमेतच्च शास्त्रैरिति**। अतः आप्तस्य हितकामस्य नियोगं केचिदूचिरे इत्युक्तप्रकारेण ईश्वरनियोगादिकस्य विधित्वे तस्य च लिङ्वाच्यत्वेऽपि नास्माकं कश्चिद्विरोधः। अथापि लिङ्वाच्यत्वे गौरवभयादिष्टस्य कृत्यधीनात्मलाभातिरेकेणार्थान्तरे शब्दशक्तिर्नेष्यत इति निगमयति--**इत्थमिति**॥ ९१॥

---

**आनन्द०**--पूर्वसङ्गतिरेवास्य सङ्गतिरित्यभिप्रायेणाह--**यागादीति** कार्यस्य वाक्यार्थतानिरसनावसरे याग-दान-होमादेरेव कार्यत्वेन वाच्यत्वमस्त्विति वक्तुं "तस्मादिष्टस्य कृत्यधीनात्मलाभत्वातिरेकि कृत्युद्देश्यत्वं नाम किमपि न दृश्यत" इत्यादिना वेदार्थसंग्रह भाष्यादावुक्तापेक्षया अतिरिक्तार्थपरत्वेऽपि श्रुतदेवताप्रीति-सङ्कल्पादिकमेव सिद्ध्येत् नान्यदपूर्वमित्यर्थः।

ननु विनिगमकाऽभावादपूर्वमेव वाच्यमस्त्वित्यत्राह-**किञ्चेति**। **शास्त्रेणापीति**-श्रुतिस्मृतिर्ममैवाज्ञेत्यादिशास्त्रेणेत्यर्थः।

उदयनादयो भगवदाज्ञायाः लिङर्थत्वमाहुः। तन्मतेऽपि न दोष इत्याह--**अत** इत्यादिना। निगमनव्याजेन स्वाभिमतमाह--**अथापीति**--लोकसिद्धत्वादिभिर्वेदार्थसंग्रहादौ सम्यङ्निरूपितमिति भावः॥ ९१॥

**॥ इति अपूर्वस्य लिङादिवाच्यत्वेऽपि देवताप्रीत्याद्यनतिरेकः॥**

---

**स्वव्यापारं विशेष्ये स्वयमभिदधते नैव शब्दाः कदाचित्**
**श्रुत्वा लिङ्व्यापृतिं वा कुत इह यतनं स्वोपयोगाद्यबोधे।**
**तस्मादास्माकतत्तद्यतनकृदभिधा स्वस्य वाच्या लिङादे-**
**रित्युक्तिं बह्ववद्यामममनिषत बुधास्त्रस्तरीमात्ररूपाम्॥ ९२॥**

**सर्वार्थ**--उक्तार्थस्थेम्ने कौमारिलोक्तां शब्दभावनाया लिङ्वाच्यतामुन्मूलयति-**स्वव्यापारमिति**॥ लिङ्व्यापारः-शब्दभावना। तामेवाभिदधाति लिङ्प्रत्ययः, लिङ्व्यापारप्रतिपत्तिरेव पुरुषं प्रवर्तयतीति भावनावाक्यार्थवादिनः। अत्रोभयमपि न संघटते। न खलु शब्दाः कदाचिदपि स्वव्यापारं स्वयमेवाभिदधते। अभिधेयानुबन्धिनी खल्वभिधा;] अभिधेयाश्च घटादयः। एवं लिङभिधानमप्यभिधेयार्थानुबन्धित्वान्न स्वात्मानं विषयीकरोति। इत्थं लिङव्यापारस्वरूपप्रतीतिः प्रवृत्तिं न करोति। नहि लिङ्व्यापार इति बुध्वा कश्चित् प्रयतते; स्वोपयोगादिबोध एव हि सर्वत्र प्रवर्तकः। इत्थमर्थतत्त्वं निष्कृष्य परोक्तप्रक्रिया परिहासमात्रपदमित्याह--**तस्मादिति**। आस्माकतत्तद्यतनकृत्-अस्मदीयतत्तद्यागादिप्रयत्नरूपार्थभावनामुत्पादयति केवलं लिङभिधा। शब्दभावना शब्दाभिधेया स्वस्य लिङादेर्वाच्येत्युक्तिं बह्ववद्यां--श्रुतहानाश्रुतकल्पनानैरर्थक्यादिबहुदोषदुष्टां बुधास्त्रस्तरीमात्ररूपाममनिषत। त्रस्तरी-परिहासः॥ ९२॥

**आनन्द०**—पूर्वसङ्गतिरेवात्रापीत्यभिप्रायेणाह—**उक्तार्थेति**। **लिङ्व्यापार-इत्यादि**—लिङः प्रवर्तकत्वं दृश्यते विधितः प्रवृत्तेः। तथा च व्यापारान्यस्य परनिष्ठ-व्यापारजनकत्वं स्वनिष्ठव्यापारद्वारेति चक्रादिभ्रमणजनके दण्डे दृष्टमिति शब्दस्यापि स्वनिष्ठव्यापारद्वारेति सिद्धं। 'सव्यापारशब्दभावना' भाव्या च तस्याः पुरुषप्रवृत्ति-रित्युक्तेरिति भावः।

नन्वस्तु भावना प्रवृत्तिहेतुः स्वरूपेण भवतु किमर्थं वाच्यत्वं वाच्यमित्यत्राह—**लिङ्व्यापारेति**—विधिना प्रेर्यः पुरुषः विधिगतं व्यापारं ज्ञात्वा प्रवर्तते परप्रेर्यत्वात्। यः प्रेर्यः स सर्वोऽपि प्रेरकव्यापारं ज्ञात्वा प्रवर्तते। यथा राजप्रेर्यो राजाभिप्रायं ज्ञात्वा प्रवर्त्तत इति व्याप्तेः। तथा विधिवाक्यप्रेर्यस्य विधिगतव्यापारज्ञानं वाच्यम्। तद्ज्ञानञ्च विधिप्रत्ययादेव नान्यत इति तत्र शक्तिर्वाच्या। तथा च स्वर्गकामवाक्यस्याऽयमर्थः-अयं विधिः स्वर्गकामं मां प्रेरयतीति। प्रवर्तयति **अत्रोभयमपीति**—स्वनिष्ठव्यापारा-भिधानं तद्ज्ञानात्प्रवृत्तिश्चेत्यर्थः।

ननु स्वव्यापारस्याप्यभिधेयत्वे तद्बोधस्स्यादित्यत्राह—**एवं लिङिति**—अन्यथा घटपटशब्दशक्तावपि अभिधाङ्गीकारेऽनवस्था स्यात्। अनुमानञ्च चेतनप्रेर्यत्वाद्यु-पाधिदुःस्थम्।

किञ्च विधिप्रत्ययस्य न प्रेरकत्वं अनुमानादिवत्प्रवर्तकज्ञानजनकत्वेनाऽन्यथा-सिद्धत्वाच्चेति भावः।

ननु लिङ्व्यापारज्ञानस्य प्रवर्तकत्वे ज्ञानजनकत्वेन तत्र शक्तिर्वाच्येत्यत्राह—**इत्थमिति**।

ननु प्रवर्तनात्वेन ज्ञानं प्रवर्तयतीत्याह—**स्वोपयोगादीति**। **परिहास इति**। त्रस्तरिः परिहासोक्तिरिति—नैघण्टुकाः॥ ९२॥

**॥ इति शब्दभावनाया लिङादिवाच्यत्वभङ्गः॥**

---

**न स्यात् पुंसः प्रवृत्त्यै विदितमपि गिरा स्वेष्टहेतुत्वमात्रं**
**दुस्साधादावयोगादथ सहकुरुते साध्यतैकार्थयोगः।**
**इत्थं शक्तिर्द्वये स्याद्गरिमहतमिदं किञ्चिदत्रार्थतश्चे-**
**दिष्टोपायत्वमर्थादुचितमिह ततः खण्डिता मण्डनोक्तिः॥ ९३॥**

**सर्वार्थं** तर्हि मा भूच्छब्दभावना लिङर्थः, इष्टसाधनत्वमेवास्त्विति **मण्डनः**। तत्पक्षमपि प्रतिक्षिपति— **न स्यादिति**। गिरा विदितमपि हीष्टसाधनत्वं पुरुषाणां प्रवृत्त्यै न भवत्येव। तत्र हेतुमाह—**दुस्साधादावयोगादिति**। न हि दुस्साधादाविष्टसाधनत्वं प्रतिपन्नमपि पुरुषं प्रवर्तयति। तर्हि न केवलमिष्टसाधनत्वमस्तु प्रवृत्तिकारणम्; तस्य सहकुरुतां साध्यत्वमित्याशङ्कते—**अथेति**। अत्रोत्तरम्—**इत्थमिति**। इष्टसाधनत्वं साध्यत्वं चोभयमपि शब्दार्थ इति परिकल्पने गौरवं स्यादित्यर्थः। अत्र शङ्कते—

**किञ्चिदिति** । गौरवपरिहारार्थमिष्टसाधनत्वसाध्यत्वयोरन्यतरस्यार्थत्वं स्यादिति भावः। तर्हीष्टसाधनत्वमेवार्थं कार्यत्वं पुनश्शाब्दमेव स्यादिति नेष्टसाधनत्वस्य शाब्दत्वसिद्धिरित्याह—**इष्टोपायत्वमिति** । अन्तरङ्गं खलु प्रवृत्तेरिष्टोपायत्वात् कार्यत्वम्। अयमिष्टोपायः अतः कार्यमिति कार्यबुद्ध्यैव प्रवर्तन्ते पुरुषा इति लोकसिद्धमेतत् । अतः खण्डिता **मण्डनोक्तिः** ॥ ९३ ॥

---

**आनन्द०**--पूर्वसङ्गतिरेवात्रेत्यभिप्रेत्याह--**एवं तर्हीति**—इष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वसम्भवादिति भावः। **गिरा विदितमपीति**--प्रवर्तकज्ञानविषयस्यैव विध्यर्थतया साधनत्वस्य तथात्वाऽभावादिति भावः। **अन्तरङ्गमिति**--इष्टसाधनमिदं अतः कार्यमिति बुद्धिः ततः प्रवृत्तिरिति। इष्टसाधनताबुद्धेः कार्यताबुद्धावुपक्षयान्न प्रवृत्तावन्तरङ्गमिति भावः। एतेनेदं निरस्तम्। कार्यताज्ञानं प्रवर्तकं विषभक्षणादौ तस्मिन्सत्यपि प्रवृत्यभावादिति। प्रत्येकं प्रवर्तकत्वाऽभावेऽपीष्टसाधनताज्ञानानन्तर भाविनः प्रवर्तकत्वादविशेषेप्यन्तरङ्गत्वाद्विध्यर्थः कार्यत्वमिति भावः ॥ ९३ ॥

**॥ इति लिङादेरिष्टसाधनतार्थत्वभङ्गः ॥**

---

**धात्वर्थस्यैव रूपं किमपि हि कथयन्त्यत्र सर्वे लकाराः**
**कर्तृव्यापारसाध्यं त्वभिदधति विधिप्रत्ययास्तल्लिङाद्याः ।**
**वैघट्यं द्वारसिद्धिः प्रशमयति तथा सन्ति लोकोक्तिभेदा-**
**स्सिद्धं शब्दानुशिष्ट्या त्विदमुचितमिति स्थापितं भाष्यकारैः ॥ ९४ ॥**

**सर्वार्थ**—स्वपक्षे लिङाद्यर्थं निष्कृष्याचष्टे—**धात्वर्थस्येति** ॥ द्वयं खलु शब्दार्थनिर्णयकारणं विशिष्टप्रयोगो व्याकरणं चेति । उभयमप्यस्मत्पक्षानुकूलम् । लडादयो लकारास्सर्वेऽपि धात्वर्थस्यैव वर्तमानत्वभूतत्वादिकं किमपि रूपमभिदधति। एवं लिङादयोऽपि धात्वर्थस्यैव यागादेः कर्तृव्यापारसाध्यत्वमभिदतीति समुचितमेतत्। ननु कथं कालान्तरभाविस्वर्गकामस्य चिरध्वस्तो यागः काम्यफलसाधनमिति शङ्काऽवशिष्यते। तदपि देवताप्रीत्यादिद्वारसिद्धिः प्रशमयतीत्याह—**वैघट्यमिति** । अयं चार्थो राजसेवादौ लोकोक्तिसंवादवानित्याह—**तथेति** । अयमर्थो न लोकप्रसिद्धिमात्रपरिग्राह्यः, व्याकरणानुकूलत्वाद्विशेषेण परिग्राह्य इति **भाष्यसंमतिमाचष्टे**—**सिद्धमिति** ॥ ९४ ॥

---

**आनन्द०**--ननु कृतिसाध्यत्वं यागादेः पूर्वमेव विध्यर्थ इत्युक्तत्वात्पुनस्तदेवात्रोच्यत इति शङ्कापरिहारव्याजेन पूर्वसङ्गतिरेवात्रापि सङ्गतिरिति दर्शयति--**स्वपक्ष इति**। **नन्विति**। स्वर्गकामस्य तदसाधने कृतिसाध्यताबोधासम्भवात्प्रवृत्तिर्न स्यादिति भावः। **तदपीति**--शंकाविशेषमित्यर्थः। **अयञ्चार्थ इति**—प्रीतिद्वारेष्टसाधनत्वमित्यर्थः ॥ ९४ ॥

इष्टस्वर्गादिकस्य त्वितरदपि यदा साध्यमुक्तं तदाऽर्थात्
सिद्धं तत्साधनत्वं सुगममिह तदाऽनर्थकत्वं निषेध्ये।
नित्यत्वेनोपदिष्टेष्वकरणमपि तत्तुल्यमेवार्थलब्धं
सामान्यात् प्राप्तमेतत् फलनियतिरपि व्यज्यते तत्तदुक्त्या ॥ ९५ ॥

**सर्वार्थ**--ननु स्वर्गकामस्य यागादिस्साध्यतया विधीयत इति हि भवतोच्यते। यागादेरिष्टसाधनत्वं साक्षान्नोच्यते। कथं तर्हि यागादेरिष्टसाधनत्वसिद्धिः ? कथं वा पुनरपगोरणादेरनिष्टसाधनत्वसिद्धिः ? इत्याशङ्क्य परिहरति --**इष्टेति** ॥ अर्थसिद्धं तत्साधनत्वं, शाब्दं कार्यत्वमार्थमिष्टसाधनत्वम्। एवमपगोरणादावपि शाब्दमकार्यत्व-मार्थं निषिध्यमानस्यानिष्टसाधनत्वमिति विभागः। एवमकृत्यकरणेऽनर्थकृत्त्वमुक्तम्। तथा कृत्याकरणेऽप्यनर्थकृत्त्वप्रतिपत्तिरार्थतुल्येत्याह--**नित्यत्वेति**। नित्यस्य कर्तव्यत्वं शाब्दं नित्याकरणस्यानर्थकृत्त्वमार्थमित्यत्रापि विभागः। एतत्सर्वं सामान्येनार्थतत्त्व-वर्णनम्। इदमेतत्फलं ददाति; एतस्य चानुष्ठाने सति अयमर्थः इत्यादिर्विशेषस्त-त्तच्छास्त्रोक्त्याऽवगन्तव्य इति दर्शयति **फलनियतिरिति** ॥ ९५ ॥

---

**आनन्द०**--इष्टसाधनत्वस्य विध्यर्थत्वाभावे प्रतीतिरेव न स्यात् बोधकाभावा-दित्याक्षेपसङ्गतिं दर्शयति--**नन्विति**। **कथं तर्हीति**--इष्टसाधनत्वस्य विध्यर्थत्वे तु नञोऽन्वयादनिष्टसाधनत्वं सिद्ध्यतीति भावः। **आर्थमिष्टसाधनत्वमिति**--कामिनं प्रति कर्तव्यतया चोदनं काम्यसाधनस्यैवेति नियमादिति भावः। **अकार्यत्वम्**--अकर्तव्यत्वम्। हितपरेणाकर्तव्यताबोधनत्वमिति विषयस्य विषभक्षणादाविवानर्थकत्व नियतत्वार्थकत्वात्त"स्मान्नापगुरेते" त्यत्राप्यनर्थसाधनत्वमार्थमिति भावः। **अनर्थसाधन-त्वमुक्तमिति**--अनर्थातिदेशः। **नित्याकरणस्येति**--इदमवश्यं कार्यमिति बोधो द्वेधा। इष्टसाधनत्वेन वा अनर्थपरिहारत्वेन वा। आद्यस्याऽभावे द्वितीये पर्यवसानं सिद्ध्यतीति भावः।

नन्वेवमपि व्याप्त्या सामान्यतस्सिद्ध्येत् न तु शतयातनादिविशेषसाधनत्वं तथा व्याप्त्यभावादित्यत आह--**एतत्सर्वमित्यादिना**--"शतेन यातया" दित्येतद्विशेष-शास्त्रम् ॥ ९५ ॥

॥ इति लिङाद्यर्थनिष्कर्षः ॥

सन्ति ह्यन्ये लिङर्थाः कथयितृपुरुषाकूतभेदास्तथाऽत्रा-
प्याप्तस्याहुर्नियोगं हितमभिलषितं केऽपि भाष्याशयस्थम् ।
शास्त्राज्ञाचोदनात्वं श्रुतिषु विधिपदैरन्वितत्वं नञोऽपि
स्वादेशे चावधूते भवति समुचितः प्रत्यवायः स्वतन्त्रात् ॥ ९६ ॥

**सर्वार्थ**--इष्टस्य कृत्यधीनात्मलाभत्वमिति स्वपक्षे लिङ्वाच्यत्वं दर्शयित्वा स्वपक्षनिष्ठानामेव केषांचिदीश्वरनियोगरूपविधिपक्षं विविच्य दर्शयति--सन्ति हीति ॥ विधिनिमन्त्रणेत्यादौ विधिः प्रेषणमित्यादयः कथयितृपुरुषाभिप्रायभेदा लिङर्थत्वेन प्रतिपादिताः। तथाऽत्राप्याप्तस्य हितकामस्य नियोग एव विधिरिति भाष्यकाराभिप्राय इति केचिन्मन्यन्ते। तच्च वयं न प्रतिक्षिपामः; श्रुतिस्मृती ममैवाज्ञेति, शास्ता विष्णुरशेषस्येति भगवदाज्ञारूपत्वं चोदनाया युज्यते। अ[त्र]तः श्रुतिषु विधिपदैरन्वितत्वं शासितुराज्ञा चोदनारूपत्वमेव। नञोऽपि--नञ्प्रयोगाच्च भगवदाज्ञायामवधूतायां स्वतन्त्रात्--भगवतस्समुचितः प्रत्यवायो भवतीत्युच्यते; तदिदमाह--नञोऽपीति ॥९६॥

---

**आनन्द०**--पौनरुक्त्यपरिहारमुखेन प्रसङ्गसङ्गतिं दर्शयति - इष्टस्येति। इष्टस्य स्वर्गादेस्तत्साधनस्य वा कृत्या साध्यत्वमित्यर्थः। विधिनिमन्त्रणेत्यादाविति--विधिः--प्रेरणम्, निमन्त्रणं नियोगकरणम्, आमन्त्रणं--कामचारकरणम्, अधीष्टः सत्कारपूर्वको व्यापारः, प्रार्थना याच्नेत्यादिभिरिति शेषः। युज्यत इति यतो न प्रतिक्षिपाम इत्यन्वयः। विधिपदैरन्वितत्वं विधिपदबोध्यतावच्छेदकं--चोदनारूपत्वमित्यर्थः। नञ्प्रयोगाच्चेति निषेधस्य लोके वक्त्रभिप्रायविशेषनियतत्वादतिक्रमणस्य प्रत्यवायहेतुत्वं विहिताकरणे निषिद्धकरणे चानर्थहेतुत्वं इदानीं सुबोधमित्याह--भगवदित्यादिना। मूलं नञोऽपीति--नञ्प्रयोगादपि ॥ ९६ ॥

॥ इति वक्तृनियोगस्य लिङादिवाच्यत्वपक्षः ॥

---

षाड्गुण्यस्यैव कुक्षौ गुणगण इतरः श्रीसखस्यैव विश्वं
षट्स्वन्ये ज्ञानशक्त्योर्विततय इति च व्यक्तमुक्तं हि तज्ज्ञैः।
निस्सीमानन्दभावस्थिरचरचिदचिच्छासनप्रेरणाद्या-
ऐशानज्ञानधर्माः कतिचन नियताः केचिदागन्तवश्च ॥ ९७ ॥

एवं विश्वनियन्तुरीश्वरस्य,

तवानन्तगुणस्यापि षडेव प्रथमे गुणाः।
यैस्त्वयैव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः ॥

इत्युक्तक्रमेण षाड्गुण्यस्यैवावान्तरभेदास्सर्वे गुणा इत्याह--षाड्गुण्यस्येति ॥ तस्य चेश्वरस्य केचिद्गुणा निस्सीमानन्दादयो ज्ञानावस्थाभेदा नियता नित्यसिद्धाः; केचित्तदा तदा संकल्पविशेषादयश्च [इतरेरागन्तुत्वेनावधृता] आगन्तव इति विभागोऽस्तीत्याह--निस्सीमेति ॥ ९७ ॥

आनन्द०—अदृष्टस्यापि शक्तिकोटिप्रविष्टतया व्यवहारात् तद्बहिर्भावस्य तन्निरूपणसापेक्षत्वाच्च तत्प्रसङ्गादनन्तरं शक्तिं निरूपयितुं तदुपोद्घातसंगत्याऽऽह—एवमिति—भगवदनन्तगुणानां षडन्तर्भावस्य श्रीविष्णुपुराणादिप्रसिद्धतया तदनुसारेण ज्ञानादिरूपेण सर्वे निरूपितप्राया इति ज्ञानस्य निरूपितत्वात् शक्तिर्निरूप्यत इत्यर्थः। षाड्गुण्यस्येति—षण्णां गुणानां समाहारः षाड्गुण्यम्। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्। निस्सीमा निरवधिः यः आनन्दरूपो धर्मः आनन्दत्वम्। स्थिरचरौ—स्थावरजङ्गमरूपचिदचितौ। तयोः शासनं प्रशासनं (प्रकाशनं) प्रेरणं नियमनं च। एवमादयो ज्ञानधर्माः।

ननु बलादीनामपि अत्र निरूपणं किमर्थं न कृतं, ज्ञानादितुल्यत्वादिति चेदत्र केचिदाचार्याः—तेषां शक्तिविशेषत्वान्न पार्थक्यमिति तन्निरूपणेनैव तन्निरूपणमिति वदन्ति।

अपरे पुनः "षडेव प्रथमे गुणा" इति शक्तितुल्यतया पृथङ्निर्देशात् पृथक्भूता एव। यदि किं[कथं]चिदन्यथासिद्धिः, तदा शक्त्यादेरपि स्यात्। धर्मिस्वरूपमात्रेणैव तदुपपत्तेः पृथक् धर्मिणो व्यपदेशश्च समानः। तथा सत्तादयोऽपि कुप्येरन्। तस्मात् ते पृथक्धर्माः, शक्तिनिरूपणन्यायेनैव ते निरूप्या भवन्तीति न पृथङ्निरूपिता इति वदन्ति ॥ ९७ ॥

॥ इति षाड्गुण्यनिरूपणम् ॥

---

हेतोः कार्योपयुक्तं यदिह भवति तच्छक्तिशब्दाभिलप्यं
　तच्चामुष्य स्वधर्मस्तदितरदपि वाऽपेक्षितत्वाविशेषात्।
विश्वं तद्विष्णुशक्तिर्मुनिभिरभिदधे तत्रतत्रोपयोगा-
　दन्या सर्वाद्भुतैकोदधिरगणि न सा तत्स्वरूपादिमात्रम् ॥ ९८ ॥

एवं गुणानां विभागमुक्त्वा शक्तेः स्वरूपं शोधयति—हेतोरिति ॥ कारणस्य कार्योपयोगी सहकारिकलापः शक्तिरित्युच्यते। तच्च स्वधर्मो वा भवतु, अन्यद्वा यत्किञ्चित्; अपेक्षितत्वाविशेषात् शक्तिरित्यभिधीयते। तदिदमाह—हेतोरिति। इत्थं सामान्येन शक्तिशब्दार्थं प्रसाध्य विष्णुशक्तिः परा प्रोक्तेत्यादिभिर्मुनिवचनैरभिहितामपि शक्तिमेव तल्लक्षणानुरोधेन व्याचष्टे—विश्वं तदिति ॥

समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥

इति या मूर्तिस्सर्वाद्भुतैकोदधिरगणि साऽपि स्वरूपविशेषणत्वात् शक्तिशब्दवाच्यतामर्हति; न पुनस्सा स्वरूपमात्रम्। तस्मिन्नेव विग्रहे अस्त्रभूषणादिरूपेण समस्ताः शक्तयस्समाश्रिताः; तद्विग्रहविशिष्टो भगवान् सर्वाधार इत्यर्थः ॥ ९८ ॥

आनन्द०—ज्ञानस्य प्राङ्निरूपितत्वात् क्रमप्राप्तत्वाच्छक्तिनिरूपणस्य क्रमसङ्गत्या शक्तिं निरूपयतीत्याह—एवमिति। गौणागौणसाधारण्येन शक्तिलक्षणमाह—कारणस्येति।

ननु दण्डचक्रादीनां परस्परं शक्तित्वे अन्योन्याश्रयः। न च येन यस्य साधनस्योपकारः तस्य तच्छक्तित्वे दण्डस्य चक्रभ्रमणजनकतया तच्छक्तिता, चक्रादेः मृच्छक्तिता च। चक्रादीनां तु न दण्डादिशक्तित्वं तन्निष्ठोपकाराजनकत्वादिति वाच्यम्। तथासति ब्रह्म प्रति जगदादेः शक्तित्वं न स्यात्। ब्रह्मणो वा जीवादिशक्तित्वप्रसङ्गः, तन्निष्ठोपकारजनकत्वादिति चेत्—अत्र वदन्ति।

ब्रह्मणो न जीवादिशक्तित्वं, जीवगतोपकारस्यापि स्वगततया परमात्मगतत्वाभावात्। न च जीवादेर्ब्रह्मनिष्ठोपकारजनकत्वाभावः जीवजन्यव्यापारस्य ब्रह्मगतत्वात्।

न च ब्रह्ममात्रगतत्वाभाव इति वाच्यम्। जीवगतत्वस्यैव ब्रह्मगतत्वात्। तथा च प्रयोजकमात्रे संसर्गेण कार्ये जनयितव्ये यन्निष्ठं यदुपकारजनकत्वं तस्य तच्छक्तित्वम्। न च शक्तावभावः, स्वाश्रयदण्डादौ क्रियाजनकत्वात्। इदं च द्रव्याद्रव्यसाधारण्येन लक्षणमुक्तं—

"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा।
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥"

इति। पराशरवचनात्। मुख्यशक्तिलक्षणं तु कार्यानुकूलकारणगताद्विष्ठभावधर्मत्वम्। द्रव्यादीनां शक्तिव्यपदेशस्तु गौणः। गुणान्तरत्वाच्छक्तेः गौण्या लक्षणया वा वृत्त्या शक्तिशब्दप्रयोगः।

परमपुरुषप्रीत्यप्रीत्योः कर्मशक्तिव्यपदेशस्तु तदधीनोत्पत्तित्वेन, न तत् तत्पारतन्त्र्यमात्रात्। अत एव क्षेत्रज्ञाविद्यादीनां जगतश्च परब्रह्मशक्तिव्यपदेशश्चेत्यादिना द्रव्यादीनां शक्तित्वस्य न्यायसिद्धाञ्जनादौ स्पष्टत्वात्, अत एव नाद्रव्यसरे सङ्गत्यभावः। मुख्यशक्तिनिरूपणे तात्पर्यमिति शक्तिशब्दवाच्यत्वं मुख्यमेव। व्यवहारानुरोधित्वात् शक्तिकल्पनायाः एतल्लक्षणानुरोधेनेति मूलस्यैवात्र साक्षित्वात्। शक्तिशब्दवाच्यतामर्हतीत्यभिधानाच्चाद्रव्यस्यापि शक्तित्वादद्रव्यसरे निरूपणं च संगच्छत इत्याहुः।

पराशरवचने रूपशब्दस्य विग्रहपरत्वाभिप्रायेणाह या मूर्तिरिति। हरेरिति व्यतिरेकनिर्देशादिति। नत्वतीन्द्रियशक्तिसद्भावे तन्निरूपणमिति भावः।

ननु "समस्तास्शक्तयश्चैता" इति वचनेन विग्रहस्य तर्हि सर्वाधारत्वं ब्रह्मलिङ्गं विरुध्येतेत्यत आह—तस्मिन्नेवेति। तस्य तदाधारताप्रयोजकत्वान्न विरोध इति भावः॥ ९८॥

॥ इति शक्तिशब्दार्थनिष्कर्षः॥

यद्‌भ्रंशान्मन्त्ररुद्धो न दहति दहनश्शक्तिरेषाऽस्तु सोऽयं
हेतुर्मन्त्राद्यभावस्स च गत इति तद्धेत्वभावाददाहः।
शक्तेर्नाशे किमस्याः पुनरिह जनकं वृत्तिरोधस्तु युक्तो
वह्नेरित्यादिघोषो विरमति विदिते शब्दतश्शक्तितत्त्वे ॥ ९९ ॥

स्वरूपसहकारिव्यतिरिक्तशक्तेर्यद्घोषितं दूषणं न्यायवादिभिः, तदानुमानिकशक्तिकल्पने भवतु, शक्तयस्सर्वभावानामित्याद्यागमसिद्धे शक्तितत्त्वे न दूषणमित्याह—**यद्‌भ्रंशादिति** ॥ इत्थं किल शक्तिदूषणप्रक्रिया–यस्य प्रतिबन्धाभावस्य भ्रंशान्मन्त्ररुद्धो दहनो न दहति स एव प्रतिबन्धाभावः शक्तिरस्तु। स च प्रतिबन्धाभावो हेतुरेव; प्रतिबन्धाभावविशिष्टस्य वह्नेर्दाहकत्वात्। तथा च मणिमन्त्रादिप्रतिबन्धे सति सामग्री वैकल्यात् कार्याभावः, न तु तदतिरिक्तशक्त्युपरोधात्; तत्कल्पनायां गौरवात्। तदिदमाह–**तद्धेत्वभावाददाह** इति। किंचातिरिक्तशक्तिकल्पनायां प्रतिबन्धकेन तन्नाशे पुनरुत्तम्भकावस्थायां किं तस्या जनकमिति वाच्यम्। उत्तम्भकमिति चेत्, अनियतहेतुकत्वप्रसङ्गः। उत्तम्भकसत्त्वेऽपि शक्तिर्न जन्यते चेत्, पुन [र्दा]र्दहनकार्यं न स्यात्। तदिदं सर्वमभिप्रेत्याह–**शक्तेर्नाश** इति। तर्हि प्रतिबन्धकेन शक्तिर्न नश्यति किं तूपरुध्यत इति चेत्, तर्हि वह्निरेवोपरुध्यताम्; किमनेन [शक्तिकल्पनेन]. गुरुतरेणेत्याह—**वृत्तिरोधस्तु युक्तो वह्नेरिति**। अयं दूषणवादः शब्देतरप्रमाणगम्यायां शक्तौ [युक्तः]; शक्तितत्त्वे शब्दगम्ये सति न युक्त इत्याह–**इत्यादिघोष** इति ॥ ९९ ॥

---

**आनन्द०**—नन्वतीन्द्रियशक्तिसद्भावे तन्निरूपणं, तदेव न सम्भवतीत्याक्षेपसङ्गत्या निरूपयति—**स्वरूपेति। आनुमानिकेति** अयं वह्निः दाहानुकूलातीन्द्रियाद्विष्ठधर्मसमवायी दाहकारणत्वात् आत्मवदित्याद्यनुमानेन शक्तिकल्पनं इत्यर्थः। अप्रयोजकत्वमेवानुमानस्य दूषणमित्याह —**इत्थं किलेत्यादिना**। यद्यप्रयोजकत्वेऽप्यनुमानाच्छक्तिकल्पना तदा तदुत्तरं तदतीन्द्रियेति विशेषणेन शक्त्यतिरिक्तस्यापि सिद्धिप्रसङ्गेनानवस्था स्यादिति भावः। **अनियतेति**—क्वचित् पदार्थसामग्री क्वचिन्नित्ये तत्तत्स्वरूपं प्रतिबन्धकसकलोत्तेजकं तदभाव एव हेतुरित्यनियतहेतुकत्वमित्यर्थः।

ननु स्वतन्त्रोत्तेजकाभावविशिष्टप्रतिबन्धकाभावसन्निहिततत्तत्कारणस्वरूपमेव शक्तिजनकं, तथा च नाननुगम इति चेदुच्यते -तथा सति दण्डे शक्तिपरम्परोत्पादस्स्यात्। प्रतिबन्धकाभावकाले सामग्र्याः सत्त्वात्। न च कारणगुणस्य कार्यगुणोत्पादकत्वे तन्तुरूपात्पटरूपपरम्परा स्यादिति शङ्कायां तत्र यः परिहारस्सोऽत्रापीति वाच्यम्। तत्र प्रागभावाभावेन रूपान्तरानुत्पत्तिसम्भवात्। न च शक्तावपि तन्न्यायः। तत्र प्रतिबन्धेन पूर्वशक्त्यपाये प्रतिबन्धककाले उत्तंभकसत्त्वे प्रतिबन्धकाभावे वा तत्रैव शक्त्युत्पादेन पूर्वमपि प्रागभावसत्त्वेन सर्वस्या अप्युत्पत्तिप्रसङ्गात्। न च धारावाहिक

ज्ञानक्रमवदुपपत्तिः। तत्र तत्संयोगादीनां प्रतिनियतानामेवोत्पत्तौ कारणतया वैषम्यात्। क्षणभेदस्तु न नियामकः, ततोऽन्यत्र दर्शनादिति भावः। सिद्धान्ते नैष दोष इत्याह—अयमिति। मूलं आदिघोष इति। आदिशब्देन आत्मत्वादिकमुपाधिरित्यादिघोषो ग्राह्यः॥ ९९॥

॥ इति शक्तिदूषणपरिहारः॥

---

शब्दादिष्वस्ति शक्तिर्यदि कथमिव न द्रव्यतैषां गुणित्वे
सा चेन्नास्त्येषु कार्यं किमपि कथमितः स्यादितीदं न युक्तम्।
शक्तिश्शक्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे
निस्तारश्चेत्स्वभावात् फणिमरणमिह प्रस्तुते किं प्रवृत्तम्॥१००॥

अत्र शक्तिमदद्रव्येषु स्वरूपरूपामुपपादयति-शब्दादिष्विति॥ इयमत्र पूर्वपक्षप्रक्रिया-शब्दादिषु शक्तिर्यद्यस्ति, कथमिव तेषामद्रव्यता, शक्त्याश्रयत्वेन तेषां गुणित्वात्? यदि शब्दादीनां शक्त्याश्रयता नास्ति, तर्हि शब्दादिभिः कार्यं किमपि कथं स्यादिति। तदयुक्तमित्याह-इदं नेति। तदेतद्विवृणोति—शक्तिरिति। अयमत्र विकल्पः—किं शक्तितत्त्वमेव द्रव्येष्व [प्य]पलपसि? अथवा शब्दादीनामद्रव्याणां शक्तिर्नास्तीति? पूर्वत्र क्वचिदपि कार्यसिद्धिर्न स्यादिति व्याघातः। तथा च भवताऽप्यङ्गीकार्या शक्तिः। तथा च सा शक्तिर्यथा शक्त्यन्तरमन्तरेणापि कार्योपयोगिनी, एवं शब्दादयोऽपि स्वगतशक्तिमन्तरेणापि स्वरूपसहकारिभ्यामेव कार्यं कुर्वते, अन्यथाऽनवस्थाप्रसङ्गादिति। फणिमरणमिहेत्यादि। यथा शक्तेश्शक्त्यन्तराभावः, स तु शब्दादावपि तुल्य-इत्यर्थः॥ १००॥

---

आनन्द०—पूर्वसङ्गतिमभिप्रेत्याह अत्रेति। ननु पूर्वार्धेन शब्दादिष्वद्रव्येषु शक्तिमत्त्वप्रतिपादनमसङ्गतमित्याशङ्क्याह —इयमत्रेति।

ननु शब्दादिषु शक्तिविकल्पदूषणमुखेन शक्तिरेवापलप्यते। तथा च शक्तेरेवाभावे शक्तिश्शक्ता न वेति विमर्शस्यैवासंभव इत्याशङ्क्याह—अयमत्र विकल्प इति। ननु शब्दादौ शक्तिं विकल्पयति—पूर्वत्रेति कार्यजनकत्वस्य शक्त्यधीनत्वादिति भावः। एवं शब्दादयोऽपि।

ननु तन्न्यायेन द्रव्याणामपि कार्यजनकत्वस्य संभवात् पूर्वत्र क्वचिदपि कार्यसिद्धिर्न स्यादित्यापादनमयुक्तमिति चेत्। अत्र केचित्। शक्तिं विना कार्यं न स्यादित्यस्त्येव व्याप्तिः न च शब्दादीनां कार्यजनने शक्त्यभावाद्व्यभिचारः। स्वनिष्ठशक्त्यभावेऽपि स्वसमानाधिकरणशक्त्या शब्दादीनां शक्तिमत्त्वात्। तदुक्तं न्यायसिद्धाञ्जने भगवद्यामुनमुनिवचनं—"सर्वद्रव्येषु तत्कार्यसमधिगम्यः तत्प्रतियोगिशक्त्याख्य—गुणस्साधारण" इति। अत्र सर्वद्रव्ये सामानाधिकरण्येन जनकत्वे चाक्षुषत्वप्रयोजक

शक्तिसामानाधिकरण्याविशेषे स्पर्शस्यापि तच्छक्तत्वापातात् । न च शक्तिभेदमभ्युपगम्य तच्छक्तिसामानाधिकरण्यस्य तस्य तत्कार्यजनने प्रयोजकमित्युच्यते, नान्यत्र । यथा संयुक्तसमवायस्याविशेषे रूपे ज्ञानप्रयोजकः, न रस इति व्यवस्था । तथाऽत्रापीति वाच्यम् । तथा सति (च) शक्तिनानात्वं तद्व्यवस्था च कल्पनीया । शब्दादिगतत्वे तु व्यवस्था न कल्पनीयेति लाघवाच्छब्दादीनामेव शक्तिमत्त्वमभ्युपगन्तुं युक्तम् ।

ननु तर्हि मूलविरोधः । तस्य मतान्तराभिप्रायत्वात् । अन्यथा किं शक्तिः कार्यबलात् आगमबलाद्वा अङ्गीक्रियते, कार्यस्य तुल्यत्वात् । "शक्तयस्सर्वभावाना"-मित्याद्यागमस्यापि भावमात्रसाधारणत्वादद्रव्यमात्रपरत्वेन सङ्कोचायोगाच्च । अत एव न्यायसिद्धाञ्जने उक्तं च वरदविष्णुमिश्रैः—"शक्तेर्गुणत्वेऽपि गुणकर्मणोरपि तत्संभवति पूर्वस्मिन् पक्ष इत्यारभ्य एतस्मिन् पक्षे रूपादिष्वपि शक्तिरस्त्येवे"त्युक्तम् ।

न च गुणित्वेन रूपादीनां द्रव्यत्वापत्तिः । शक्तिव्यतिरिक्तगुणवत्त्वस्य तन्त्रत्वादित्याहुः । मूलं फणिमरणमिहेति —शक्तौ क्लृप्तन्यायस्य सर्पदंशनेन मृतत्वात्किमवतारो नेत्यर्थः ॥ १०० ॥

॥ इति अद्रव्याणां स्वरूपशक्तिमत्त्वम् ॥

---

बाह्याक्षादेरवृत्तौ चिरविदितमपि स्मर्यते येन सोऽयं
संस्कारस्तुल्यदृष्टिप्रभृतिसहकृतश्चेतसस्साह्यकारी ।
नासौ पूर्वानुभूतिः कथमुपकुरुतां सा पुरैव प्रनष्टा
तुल्यादेर्नापि दृष्टिः कथमनवगते सा स्मृतिं नैव कुर्यात् ॥ १०१ ॥

इत्थमद्रव्येषु स्वरूपातिरिक्तां शक्तिं निराकृत्य स्मृतिहेतुसंस्कारं स्वरूपाद्यतिरिक्तं साधयितुमुपक्रमते बाह्येति ॥ स्मृतिज्ञानस्य तावदिन्द्रियार्थसन्निकर्षादिकं न साधनम्; तदभावेऽपि चिरविदितमपि येन स्मर्यते स एव हि संस्कार इत्युच्यते । स च तुल्यदर्शनादिसहकृतश्चित्तस्य सहकारी भवति. यथाऽऽहुः—सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः इति । अयं चागन्तुकधर्मः पूर्वानुभूतिरेवेति न वक्तुं शक्यते; तस्याः पुरैव नष्टत्वेनोत्तरकालानुपकारकत्वात् । तदिदमाह- कथमुपकुरुतामिति । तर्हि तुल्यदर्शनादिकमेवाधुनिकसंस्कारोऽस्त्विति च वक्तुं न शक्यते; अनवगतेऽप्यर्थे स्मृतिप्रसङ्गात् । न हि पूर्वानुभवजनितसंस्कारमन्तरेण सदृशदर्शनादिकं कदाचिदपि स्मृतिं कुरुते ॥ १०१ ॥

**आनन्द०**—धर्माधर्मयोः भगवत्प्रीतिकोपत्वमुक्तं, तथा शक्तिमपि तत्संकल्परूपं केचित् ब्रूयुः। अत एव न्यायसिद्धाञ्जने शक्तिरपि परमपुरुषप्रीतिरेवेत्युक्तमित्यभिहितम्। तथा च तत्साधर्म्यात्तन्निरूपणम्। अनन्तरं च न्यायसूत्रक्रममनुसृत्य स्मृतिहेतु संस्कारं निरूपयतीत्याह—**इत्थमिति**। **तदभावेऽपीति** -इन्द्रियार्थसन्निकर्षाभावेऽपि। **तुल्यदर्शनादीति** सदृशदर्शनादृष्टचिन्तनादीत्यर्थः। चिन्ताद्या इत्यादिशब्देन सम्बन्धिदर्शनादिग्रहः।

ननु स्मरणसाधनत्वमनुभवादीनामपि सम्भवतीति कथं संस्कारस्सिद्ध्येदित्यत्राह—**अयञ्चेति**—कालान्तरस्मृति प्रत्यव्यवहितस्यैवजननयोग्यत्वादिति भावः। तत्र किं वस्तुतस्सदृशदर्शनमेव विवक्षितम्? उत सदृशत्वेन दर्शनमिति विकल्पमभिप्रेत्याद्य-आह—**अनवगतेऽपीति**—देवदत्तदर्शनमात्रेणाऽननुभूतेऽपि यज्ञदत्ते स्मृतिस्स्यात्। द्वितीय-आह—**नहीति** पूर्वानुभवाऽभावे सदृशत्वेन ज्ञानासम्भवादिति भावः। अदृष्टादेरपि तन्निरपेक्षतया पूर्वातिप्रसङ्गापरिहार इति ध्येयम्। मूलं **तुल्यादेर्दृष्टिरनं**—एवमसंस्कार-इत्यर्थः॥ १०१॥

---

**यज्जन्यां संस्क्रियां यत् किमपि नियमतो बोधयिष्यत्यदृष्टं**
**तत्तद्वेद्यावलम्बिस्मृतिमुपजनयेत् संमतं च द्वयोस्तत्।**
**न ह्यन्यद् दृश्यतेऽत्र क्वचन तदधिके कल्पिते गौरवं स्या-**
**दित्युत्प्रेक्षा न युक्ता न हि परजनिते क्वापि तत्संस्क्रियोक्तिः॥१०२॥**

तर्हि यज्जन्या संस्क्रिया युष्मत्पक्षे येन सदृशदर्शनादिना नियमेनानुबोध्यते तदेव सदृशदर्शनादिकं तद्वेद्यालम्बिनीमेव स्मृतिमुपजनयेदित्याह-**यज्जन्यामिति**॥ तथा चाननुभूते स्मृतिप्रसङ्गो नास्ति; संमतं च द्वयोरपि वादिनोस्सदृशदर्शनादि। तदिदमाह-**संमतं च द्वयोस्तदिति**। न च दृष्टत्वादधिकसंस्कारोऽङ्गीक्रियत इत्याह-**न हीति**। अधिककल्पनायां गौरवमपि प्रसञ्जयति-**तदधिक** इति। तदेतद् दूषयति-**उत्प्रेक्षा न युक्तेति**। तदुपपादयति-**न हीति**। लोक एव हि व्यवहारे निदानम्। लोके हि तत्तत्क्रियाजन्यातिशयविशेष एव संस्कारव्यवहारः प्रवर्तते; न पुनर्यस्मिन्कस्मिँश्चित् सहकारिमात्रे। तेन सदृशदर्शनादिमात्रं संस्कार इत्ययं लोकव्यवहारविरुद्ध इत्यर्थः। न च पूर्वानुभवप्रध्वंसमात्रमेव संस्कार इति वाच्यम्; तस्य परपक्षे नित्यत्वेन संस्कार-प्रमोषाभावप्रसङ्गात्, अस्मत्पक्षे ध्वंसस्य भावरूपत्वेन पर्यायेण भावस्यैवाभिधानाच्चेति॥ १०२॥

**आनन्द०**—आक्षेपसङ्गतिं दर्शयति—**तर्हीति**। किं संस्कारः कार्यबलात्कल्प्यते? उत दृष्टत्वादिति विकल्पमभिप्रेत्याद्य आह—**यज्जन्येति**—यच्छब्दोऽनुभवपरः। **संस्क्रिया**—संस्कारः। **तद्वेचालम्बिनीं अनुभवविषयां**।

ननु सदृशादृष्टादेरनेकविषयस्य कल्पनापेक्षया एकविधसंस्कारकल्पनमेवास्त्वित्यत्राह—**संमतञ्चेति**। द्वितीयमाशङ्कते -**न च दृष्टत्वादिति**। **लोक एव हीति**। अयमभिप्रायः। सदृशादृष्टादिभिर्नान्यथासिद्धिः—सदृशादितस्संस्कारो न भवतीति लौकिकप्रतीतेः। न हि यत्रैव यद्भेदग्रहः तस्यैव तत्त्वं वक्तुं युक्तम्, तथात्वे शुक्तिकाया अपि रजतत्वप्रसङ्गात्।

तथा च लौकिकबुद्धयनुरोधात्तद्भिन्नस्यैव संस्कारत्वं वाच्यम्। तच्च प्रत्यक्षं न भवतीत्यनुमानगम्यम् संस्कारपदवेदनीयं सिद्ध्यतीति। **व्यवहारे**—पदार्थसद्भावे। **लोकः**—लौकिकबुद्धिः। सदृशदर्शनादौ व्यतिरेकनिश्चयमाह—**लोके हीति**। **न च पूर्वानुभवप्रध्वंसमात्रमिति**—तथा च नाननुभूते स्मृतिप्रसङ्ग इति भावः। मूलं **परजनिते**—क्रियाजन्ये ॥ १०२॥

**॥ इति स्मृतिहेतुसंस्कारनिरूपणम् ॥**

---

**बुद्धेरर्थेषु पूर्वप्रसरणजनितस्तेषु भूयोऽवगाहे**
**संस्कारः कारणं तन्मतिगत उचितस्सोऽत्र धीद्रव्यपक्षे।**
**आत्माधारस्य तद्धीप्रसरजनकताक्लृप्तिरौचित्यहीना**
**धीनिष्ठेनैव तेन ह्युचितमविकृतेरात्मनः कुण्ठतादिः ॥ १०३ ॥**

इत्थं संस्कारसद्भावमुपपाद्य तस्य बुद्धिनिष्ठत्वमुपपादयति-**बुद्धेरिति**॥ द्रव्यं हि बुद्धिस्स्वार्थेषु प्रसरतीत्यस्मत्सिद्धान्तः। तेन बुद्धेः पूर्वप्रसरणजनितो भूयोग्रहणकारणं संस्कार इति सिद्धम्। तथा च तस्य बुद्धिनिष्ठत्वमेव समुचितम्। तदिदमाह-**मतिगत उचितस्सोऽत्र धीद्रव्यपक्ष** इति। आत्माधारत्वं संस्कारस्य किं न स्यादिति परिचोद्यात्मनिष्ठस्य संस्कारस्य धीविकासहेतुत्वेऽनौचित्यमाह-**आत्मेति**। **धीनिष्ठेनैव तेन**-संस्कारेण आत्मनः कुण्ठत्वमकुण्ठत्वं च वक्तुमुचितम्, अविकारत्वादात्मन इत्याह-**धीनिष्ठेनैवेति**। अयमर्थः-आत्मा निर्विकारः; सविकारं च धर्मभूतज्ञानम्; तच्चात्मनो नित्यासाधारणधर्मः। तेन धर्मभूतज्ञानगतास्सर्वे विकाराः ज्ञानद्वारा ज्ञानाश्रयात्मपर्यन्तं व्यवह्रियन्त इति ॥ १०३ ॥

आनन्द०—प्रसङ्गसङ्गतिं दर्शयति—इत्थमिति।

ननु संस्कारस्य गुणतया कथं द्रव्यनिष्ठत्वमित्यत्राह—द्रव्यं हीति। तथा चेति-समानाधिकरणस्यैव कारणत्वौचित्यादिति भावः। अनौचित्यमाहेति—व्यधिकरणत्वादिति भावः।

ननु

"अनेकजन्म साहस्रीं संसारपदवीं व्रजन्।
मोहं श्रमं प्रयातोऽस्मि वासना रेणु कुण्ठितः॥

इत्यादिभिरात्मनो वासनात्मक संस्काराहितत्वादिकमुच्यत इत्यात्मगतत्वमित्यत्राह—धीनिष्ठेनैवेति।

ननु धीनिष्ठत्वेऽविकारः कथं हेतुः आत्मनिष्ठत्वेऽपि सर्वगतज्ञानस्य वा विरोधादित्यत्राह – अयमर्थं इति।

अयं भावः। संस्कारो नात्मधर्मान्तरम् अपि तु ज्ञानस्य सङ्कोचावस्था। सा यद्यात्मनिष्ठा स्यात्तदाऽऽत्मनस्सङ्कोचविकासरूपविकाराश्रयत्वं स्यात्। तथा च निर्विकारश्रुतिविरोधस्स्यात् ज्ञानगतत्वे तु सर्वमुपपन्नमिति॥ १०३॥

॥ इति अनुभवजन्यसंस्कारस्य बुद्धिनिष्ठत्वम्॥

---

शीघ्रं यातीति कर्मातिशयसमधिको दृश्यते कुत्र वेग-
स्तद्भेदैर्वेगभेदं कथयसि च समस्तीव्रमन्दक्रमादिः।
तत्कर्मत्वाद्द्वितीये प्रथमवदुचिता तद्गुणोत्पन्नता चेत्
बाधो नास्मिन्विपक्षे गुणपरिषदि वा कर्म सत्तत्त्वतः स्यात्॥१०४॥

ये तु वेगस्य कर्मातिरिक्तत्वं साधयन्ति, तन्मतं प्रतिक्षिपति–शीघ्रमिति॥ शीघ्रं यातीति कर्मातिशयविशेषादितरो वेगः कुत्रापि न दृश्यते। भवानपि कर्मभेदैर्वेगभेदं कथयति। तथा च यादृशकर्मभेदात् वेगभेदः परिकल्प्यते स एव कर्मभेदो वेग इत्युच्यताम्, तीव्रमन्दादिभेदस्य कर्मण्यपि समानत्वादित्याह समस्तीव्रमन्दक्रमादिरिति। तर्ह्यधिकं वेगमनुमानेन साधयामः–शरादिगतं द्वितीयादिकर्म शरगुणोत्पन्नम् तत्कर्मत्वात् तन्निष्ठप्रथमकर्मवदिति। कर्म हि प्राथमिकं, यथा संयोगादुत्पद्यते, एवं द्वितीयादिकर्मणां शरगुणोत्पन्नत्वे तद्गुणो वेगस्सिध्यतीति चेत्, तदिदं निराकरोति–बाधो नास्मिन्विपक्ष-इति। कर्मणः कारणमात्रमेवापेक्षितम्; तत्तु कारणं गुण एवेति न निर्बन्धे कारणमस्ति; शब्दाच्छब्दान्तरवत् पूर्वकर्मणाऽप्युत्तरकर्मोत्पत्तौ विरोधाभावात्। कल्पनालाघवमत्रानुग्राहकम्। अथवा द्रव्यान्यत्वेन कर्मापि गुणपरिषदि निक्षिप्यताम्। तथा च कर्म तद्गुणोत्पन्नमिति साध्यनिर्देशे सिद्धसाध्यता च वक्तुं शक्येतेत्याह गुणपरिषदि वेति॥ १०४॥

आनन्द०—वेगस्य स्थितस्थापकवत्संस्कारान्तर्भावं केचिन्मन्यन्त इति संस्कारसाजात्याद् भावनानतरं तन्निरूपणमित्याह –ये त्विति—अत्र किं प्रत्यक्षं प्रमाणं ? यद्वाऽनुमानमिति विकल्पमभिप्रेत्याह—कर्मातिशयेति—शीघ्रनिरन्तरोत्पद्यमानकर्मणोऽन्यो वेगो न दृश्यत इत्यर्थः ।

ननु कर्मणामतिशयः कश्चिदभ्युपगन्तव्यः । तथा च वेग एवाभ्युपगम्यतामविशेषादित्यत आह—तीव्रमन्दादिभेदस्येति—यथा शब्दादेस्तीव्रमन्दादिभेदस्तथा कर्मणामपि तत्प्रयोजकतयाऽभ्युपेत्य इत्यर्थः । द्वितीयमाशङ्कते तर्हीति । प्रथमकर्मणि सिद्धसाधनवारणाय द्वितीयेति ।

ननु शरस्य गुणजन्यत्वाऽसाधनेऽपि न वेगसिद्धिः रूपादिजन्यत्वमादायाप्यर्थान्तर सम्भवादिति चेन्न । तेषु सत्स्वपि पूर्वं कर्माऽनुत्पत्तेः । वेगाख्यसंस्कारस्य चरमकारणत्वात्तेषां कारणत्वबाधादितरस्सिद्धयतीति नार्थान्तरमिति भावः । अन्यकर्मणि व्यभिचारवारणाय—तदिति तत्रैवं विकल्पः—किं तत् कर्मातिरिक्तं योग्यमयोग्यं वा ? आद्ये योग्यानुपलब्धिबाध इत्याह—तदिदमिति । द्वितीय आह—कर्मण इति । गुण एवेति–अन्यथा संयोगजन्यत्वस्यैव सिद्धिप्रसङ्गात् साहचर्यस्याऽविशेषात् ।

यदि संयोगत्वमविवक्षितं तदा गुणत्वमपीति भावः ।

ननु घटस्य घटोत्पादकत्वाभावात्कर्मणः कर्मोत्पादकत्वं न स्यादिति चेत्तत्राह–शब्दादिति ।

किञ्च उत्तरकर्म पूर्वकर्मजन्यं स्वसजातोयानन्तरभावित्वात् शब्दवदित्यनुमानात्कर्मजन्यत्वसिद्धावनुग्राहकं तर्कमाह—कल्पनालाघवमिति–ननु गुणजन्यत्वस्य साधनेन गौरवं, गुणत्वस्य जातित्वात् ।

नचातिरिक्तकल्पनागौरवं फलोन्मुखत्वादित्यत आह–अथवेति । गुणत्वं द्रव्यान्यत्वमेव लाघवात् न कर्मान्यत्वमपि गौरवात् । कर्मापि ज्ञानरूपादिवत् तद्भेद-एवेति भावः ॥ १०४ ॥

॥ इति कर्मातिशयातिरिक्तवेगकल्पनभङ्गः ॥

---

शाखाकोदण्डचर्मप्रभृतिषु सति चाकर्षणादौ कुतश्चिद्
भूयः स्वस्थानयानं भवति स तु गुणः स्यात् स्थितस्थापकश्चेत् ।
मैवं संस्थानभेदस्स भवतु नियतो यद्विशिष्टे तवासौ
तेन द्रौत्यं विलम्बो विरतिरपि परावर्तने जाघटीति ॥ १०५ ॥

वेगातिरिक्तं स्थितस्थापकाभिधानं संस्कारमपि कल्पयन्त्यल्पबुद्धयः । तन्नेति वक्तुमनुवदति–शाखेति ॥ शाखाकोदण्डचर्मप्रभृतिष्वाकर्षणादौ सति कुतश्चित्कारणविशेषाद्भूयः स्वस्थानावस्थानं भवति । स तु कारणविशेषः स्थितस्थापक इति चेत्,

मैवम्; नियतस्संस्थानविशेष एव स भवतु-स्थितस्थापको भवतु, यत्संस्थानविशिष्टे वस्तुन्यसौ-स्थितस्थापको भवद्भिः कल्प्यते। स्थितस्थापकविशेषाभावे परावर्तने द्रौत्य-विलम्बादिकं कथमिति चेत्-तत्तत्स्थितस्थापकविशेषनियामकेन तत्तत्संस्थानविशेषेणैव तज्जाघटीतीत्याह-तेनेति ॥ १०५ ॥

---

आनन्द०—पूर्वसङ्गत्या निरूपयति—संस्थानेति—अन्यथा प्रापितस्य पूर्वावस्था-प्रापको गुणविशेषः—स्थितस्थापक इत्यर्थः।

ननु स्थितस्थापको नाम संस्कारोऽतिरिक्तो न चेत्तरतमभावो न स्यात् संस्थाने तारतम्याभावात्। तरतमभावानभ्युपगमे च परावर्तने द्रुतविलम्बादिकं न स्यादि-त्याशङ्क्य निराचष्टे—स्थितस्थापक विशेषाभाव इति—संस्थाने विशेषाभावे स्थित-स्थापके विशेषानुपपत्तेरिति भावः। मूलं द्रौत्यं—द्रुतस्य भाव इति भावः ॥ १०५ ॥

॥ इति संस्थानविशेषातिरिक्तस्थितस्थापकभङ्गः ॥

---

प्राग्देशप्रापकोऽसौ किमिति नियमितो मेदिनीमात्रनिष्ठ-
स्तोयाग्न्यादावदृष्टेरिति यदि न पृथिव्येकदेशेऽप्यदृष्टेः।
भूम्यंशे दृश्यते तत्फलमिति यदि नाबाविभेदेऽपि साम्यात्
भूपष्टम्भाविभेदादिदमिति च विपर्यासकल्पेऽप्यपायात् ॥ १०६ ॥

*

---

आनन्द०—त्यक्तश्लोको व्याख्यायते। वैशेषिका ऊचुः—स्थितस्थापकसंस्कारः पृथ्वीमात्रगत इति। तत्र नियामकाभावान्न नियम इति दूषयति—प्राग्देशेति—प्राग्देश-प्रापकः स्थितस्थापको मेदिनीमात्रनिष्ठ इति किमिति नियमितः ?

नन्वदर्शनान्नियमनमिति शङ्कते—तोयाग्न्यादाविति। तर्हि दर्शनाऽभावः पृथिव्यामपीति चोदयति—पृथिव्येकदेश इति—पाषाणादावदर्शनादिति भावः। ननु कोदण्डादौ क्वचिद्दर्शनात् पृथिव्यामेवेति न व्यवस्थासिद्धिः ॥ १०६ ॥

---

केचिद्देशान्तराप्तेर्जनिमभिदधते कर्म या कर्मजेष्टा
नेत्येकेऽम्भः प्रवाहस्थिरवपुषि झषे तत्प्रतीतेरभावात्।
खादौ स्रोतःप्रदेशान्तरयुतिरुदके खादिदेशान्तराप्ति-
स्तुल्या तल्लौल्यदृष्टिः पयसि तदधिकं कर्म नालम्बते चेत् ॥ १०७ ॥

अथ कर्मस्वरूपं निरूप्यते-केचिदिति ॥ केचिद्देशान्तरप्राप्तेरुत्पत्तिमेव कर्माभि-दधते, न पुनस्तदतिरिक्तं कर्म। या खलु देशान्तरप्राप्तिः कर्मजन्येति परेषामिष्टा, न

---

* अस्य श्लोकस्य सर्वार्थसिद्धिः नास्ति।

पुनस्तदतिरिक्तं कर्मोपलभ्यत इति भावः। लाघवं चात्र कारणम्। एके तदेतन्नेत्याहुः। तत्र हेतुमप्याहुः–अम्भ इति। न हि जलप्रवाहस्थिरवपुषि मत्स्ये सन्ततं समागच्छत्प्रवाहसंबन्धेऽपि कर्मप्रतीतिः; तेन जल एव कर्म प्रत्यक्षमुपलभ्यत इति भावः। किंच आगच्छति प्रवाहे गगनप्रवाहयोः परस्परसंबन्धाविशेषेण देशान्तरप्राप्तिस्तुल्या। अथापि लौल्यदृष्टिः पयसि, न पुनर्गगने चलत्वदृष्टिः। तस्मादुभयसंबन्धाधिकं कर्मा[व]लम्बते लौल्यदृष्टिः; तेन देशान्तरप्राप्तेरधिकं कर्मेति भावः॥ १०७॥

---

आनन्द०—गुणानन्तरं वैशेषिकैः कर्मोद्देशात्तदनुसारेण निरूपयति—अथेति न्यायतत्त्वे प्रथमाधिकरणे "यदि गमन पचनादीनां क्षणिकत्वमनुज्ञायेत तर्हि ते क्षणिकाः संयोगविशेषत्वात्तेषामिति"। तथा द्वितीयाधिकरणे च "गमनं नाम देशाद्देशान्तरप्राप्तिरिति प्रमा, प्रमात्रपदे शश्च, वयन्तु क्रियायाः प्रत्यक्षत्वं ब्रूम इत्युपक्रम्य तस्माद्देशाद्देशान्तर प्राप्तिरलिङ्गमिति मन्यामहे" इति दर्शनात् तदनुसारिणां पक्षमाह—केचित्त्वित्यादिना–या खलु देशाद्देशान्तरप्राप्तिः कर्मजन्येति परेषामिष्टा तामेव देशाद्देशान्तरप्राप्तेरुत्पत्तिमेव कर्माभिदधत इत्यन्वयः। प्राप्तिः—संयोगः। तदतिरिक्तं कर्म वदन् किं प्रत्यक्षेण वदति? उतानुमानेन? नाद्य इत्याह—न पुनरिति—चलतीति व्यवहारो व्यवहर्तव्यज्ञानसाध्य इत्यनुमानेन साध्यते चेत्तत्राह—लाघवञ्चात्रेति।

ननु संयोगस्यैव कर्मत्वे देशसंयोगस्य वर्तमानतयाऽतीतेऽपि कर्मणि चलतीति वर्तमानव्यवहारस्स्यात् अतीतादिव्यवहारो न स्यादिति चेन्न। निरन्तरोत्पद्यमानभिन्नदेशसंयोगोत्पत्तिसन्तानस्य तथात्वात्। उत्पत्तिश्च—आद्यक्षणसंबन्धः। तथा च न वर्तमानव्यवहारप्रसङ्गोऽतीतादि व्यवहाराभावप्रसङ्गश्चेति।

वरदविष्णुमिश्रैस्तु मानयाथात्म्यनिर्णये "स च द्रव्य-गुण-कर्मविषयः सकलपदार्थजातस्य त्रिष्वेवान्तर्भावात् (द्रव्यलक्षण) गुणलक्षणमित्यभिधानात्" तथा भट्टपराशरपादैः—

"इन्द्रियैरर्थ्यमानत्वात् ज्ञायमानोऽर्थ उच्यते।
द्रव्यं जातिर्गुणः कर्मेत्यसावर्थश्चतुर्विध"॥ इति।

तथा "जाति गुणकर्मसु सामान्याश्रयेण संयुक्तसमवेतसमवाय" इत्यभिधानात्तदनुसारिणः केचित् संयोगाद्यन्यत्कर्मेत्याहुः तन्मतमाह—एके तदेतदिति। नहीति—प्रवाहो न देशः क्रिन्त्वाकाशभूम्यादय इति चेत् देशप्रतीतिव्यवहारयोस्तुल्यत्वात्।

न च स्थिरदेशसंयोगपरम्परा कर्मेति वाच्यम्। स्थिरास्थिरविभागस्याऽतिरिक्तकर्मनिर्वाह्यत्वादुभयोः स्थिरत्वे संयोगादिपरम्परायास्तादृश्या अभावाच्चातिरिक्तं कर्म सिद्धम्। अन्यथा जलचरेषु चलतीति व्यवहाराऽभावप्रसङ्गादिति भावः।

ननु प्रवाहगतस्य मत्स्यस्य स्थैर्यमनुपपन्नं। तथा च तत्रापि चलतीति बुद्धिरस्त्येवेत्यस्वरसादाह—किञ्चेति।

ननु चलमेघमण्डलगते चन्द्रमण्डले चलतीति प्रतीतिवद् गगनादिष्वपि चलतीति बुद्धिरस्त्विति चेत्। न। तस्य भ्रान्तित्वेन कर्माऽभावात्। अन्यथा तद्बुद्धेः प्रमात्वापातात्। अन्यथा सर्वस्यापि चलत्वाच्चराचरविभागो न स्यादिति भावः॥ १०७॥

॥ इति कर्मनिरूपणम्॥

---

**कर्मत्वान्नाक्षयोग्यं विमतमिति यदि व्याप्तिशून्यं तदेत-**
**द्योग्यत्वेऽपि ह्यदृष्टिस्सहकृदपगमादर्यमादिक्रियाणाम्।**
**नो चेत्कर्मैव न स्यात् फलमपि हि भवेत्कर्महेतोस्त्वदिष्टात्**
**द्विष्ठत्वाद्वा फलस्य द्वितयमपि भवेत्कर्मवत्सर्वदा वः॥ १०८॥**

कर्मेति॥ अत्र केचिदाहुस्सर्वेषामपि कर्मणां नित्यानुमेयत्वम्। देशान्तरप्राप्त्या ह्यनुमीयते कर्मेति; प्रयुञ्जते चैतदनुमानं-विप्रतिपन्नं कर्माप्रत्यक्षम् कर्मत्वात् परमाणुकर्मवदिति। तत्रोत्तरं-व्याप्तिशून्यमिति। कर्मणो नित्याप्रत्यक्षत्वे न कुत्राप्यनुमानस्य व्याप्तिस्सिध्येदिति भावः। तर्हि सूर्यगमनादेरपि प्रत्यक्षत्वं स्यादित्यत्राह-योग्यत्वेऽपि हीति। न हि योग्यास्सर्वेऽपि सहकार्यभावेऽपि गृह्यन्ते। व्यवहितविप्रकृष्टादीनामपि ग्रहणप्रसङ्गात्। सूर्यगमनादिकं तु दूरत्वान्न गृह्यत इति लोकप्रसिद्धमेतत्। कर्मणः प्रत्यक्षत्वं विपक्षे बाधकेनोपपादयति-नो चेदिति। यदि कर्म न प्रत्यक्षं तर्हि कर्मस्वरूपमेव न स्यात्; कर्मफलभूताया देशान्तरप्राप्तेरेव कर्मव्यवहारसिद्धेः। देशान्तरप्राप्तिरेव कथमिति चेत्तत्राह-फलमपि हि भवेत्कर्महेतोरिति। त्वदिष्टात् कर्मकारणादेव देशान्तरप्राप्तिरस्तु; किमन्तर्गडुना कर्मणेति भावः। किंच मल्लयोर्मेषयोर्वा परस्परसंयोगस्य उभयकर्मजत्वात् तद्दृष्टान्तेन स्थाणुश्येनसंयोगस्याप्युभयकर्मजन्यत्वं स्यात्। प्रत्यक्षविरोधस्तत्रेति चेत्, हन्त! तर्हि कर्मणः प्रत्यक्षत्वं भवतैवाभिहितमिति व्याघातमजानानस्य किमुत्तरं देयम्?॥ १०८॥

---

आनन्द०—प्रसङ्गादाह—अत्र केचिदिति। प्रयुञ्जत इति—सहचारज्ञानाभावादिति भावः। तर्हीति -सर्वेषां चलतीतिप्रतीतिव्यवहारयोः प्रसङ्ग इति भावः। सूर्यगमनादिकं त्विति—सामीप्यं सहकारीति भावः। अप्रत्यक्षसाधकमनुमानमाश्रयासिद्ध्यापि दूषयति—यदि कर्मेति।

ननु देशान्तरप्राप्तिहेतुत्वेन कर्म सिद्ध्यतीति नाश्रयासिद्धिरित्याशङ्कते—**देशान्तरप्राप्तिरेवेति**—अनुमानात्सिद्धौ सर्वत्रापि सिद्ध्या चलाचलविभागश्च न स्यादित्याह—**कर्मेति**—साहचर्यस्याऽविशिष्टत्वादिति भावः। **हन्तेति**—कर्मणः प्रत्यक्षत्वाभावे कथं तद्विरोध इति भावः॥ १०८॥

**॥ इति सर्वकर्मणां नित्यानुमेयत्वभङ्गः॥**

**केचित्कर्मादिरूपं जगदुरसमवाय्याह्वयं हेतुभेदं**
**किं तैरेवं निमित्ताश्रयमिह जनकं नानिमित्तं विभक्तम्।**
**तत्प्रत्यासत्तिमात्रं व्यभिचरति यदि स्वावक्लृप्तेऽपि तुल्यं**
**युक्त्या नैयत्यमत्रेत्यपि सममथवा स्वस्ति वः स्वैरवाग्भ्यः॥ १०९॥**

एवं कर्मप्रत्यक्षत्वमुक्त्वा कर्मादिष्वसमवायित्वेन व्यवहारभेदं प्रतिक्षिपति—**केचिदिति**॥ इत्थं किल वैशेषिकाणां साङ्केतिको व्यवहारः—समवायिकरणं किंचित्। असमवायिकारणं चान्यत्; तच्च समवायिकारणप्रत्यासन्नम्। अपरं पुनरीश्वरकालादिकं निमित्तमिति। तत्प्रतिबन्द्या निराकरोति—**किं तैरिति**। यदि समवायिकारणप्रत्यासन्नमसमवायिकारणमिति कल्प्यते, तर्हि निमित्तकारणप्रत्यासन्नमनिमित्तकारणमिति चतुर्थं कारणं किमिति न कल्प्यते? अथ निमित्तकारणप्रत्यासत्तिमात्रमकारणेष्वपि विद्यमानत्वाद्व्यभिचारदुःस्थमिति चेत्; समवायिकारणप्रत्यासत्तिमात्रमपि व्यभिचारदुःस्थमित्याह—**स्वावक्लृप्तेऽपि तुल्यमिति**। न हि समवायिकारणप्रत्यासन्नानां सर्वेषामपि धर्मणामसमवायिकारणत्वं भवद्भिरुच्यते। **युक्त्या नैयत्यमत्रेत्यपि सममिति**। न वयमनवधृतसामर्थ्यानामसमवायित्वं वदामः, अपि त्ववधृतसामर्थ्यानामिति युक्त्या विशेषयाम इति चेत्; तर्हि वयमप्यनवधृतसामर्थ्यानामनिमित्तकारणत्वं न वदामः, अपि त्ववधृतसामर्थ्यानामिति समस्समाधिः। अतोऽसमवायिकारणवदनिमित्तकारणमिति चतुर्थोऽपि कल्पः कल्प्यताम्। तथा च भवतां स्वैरवाग्भ्यः स्वस्तीति साधिक्षेपमाक्षिपति—**अथवेति**॥१०९॥

---

**आनन्द०**—गुणकर्मणोरसमवायिकारणत्वात्परमते तन्निरूपणसापेक्षत्वात्तत्राऽसमवायिकारणत्वव्यवहारभङ्गस्याऽऽनन्तर्यमाह—**एवमिति**। अप्रसक्तनिषेधं परिहरति—**इत्थं किलेति**। वैषम्यं शङ्कते—**अथेति**—दण्डरूपादिष्वपीत्यर्थः। **न हि समवायिकारणेति**—मृत्पिण्डरूपादीनां घटं प्रत्यकारणत्वादिति भावः। **अवधृतसामर्थ्यानां**—कारणानां। **तथा च भवतामिति**।

ननु भवद्भिरप्युपादानकारणं सहकारिकारणमिति व्यवहृते अद्रव्यकारणं कर्मकारणमिति विभागस्स्यात्। न च क्लृप्तेऽन्तर्भावान्न पृथक्त्वमिति यदि तदा निमित्तकारणप्रत्यासन्नानां निमित्तेऽन्तर्भावात्तत्रापि भेदो न स्यादिति चेत्तत्राहुः। कारणेषु

किञ्चिद्विकार्यं किञ्चित्प्रेरकं किंचित्प्रेर्यमिति तन्मुखेन विभागः कृत इति। तदयं भावः। प्रयोजकाकारास्त्रयः—प्रेर्यत्वाकारः प्रेरकत्वाकारो विकार्यत्वाकारश्चेति। एतत् त्रितयञ्च कार्योत्पत्तावपेक्षितम्। तथा च तेन रूपेण विभागो युक्तः। भवदुक्तविभाजकधर्मास्तु न तादृशाः अपि तु कारणनिष्ठाः प्रमेयत्ववदित्यप्रयोजकाकारेण विभागेऽतिप्रसङ्ग इति॥ १०९॥

॥ इति असमवायिकारणविभागक्लृप्त्यनौचित्यम् ॥

---

**कर्मोत्क्षेपादिभेदात् कतिचिदकथयन् पञ्चधा तच्च मन्दं**
**दिग्भेदात्तस्य भेदे दशविधमपि तत्कल्पनं सांप्रतं स्यात्।**
**यत्किञ्चिद्भेदकाच्चेदनवधिकभिदा कर्महेतुध्रुवाच्चे-**
**दव्याप्तिर्बुद्धितश्चेदियमितरसमा संकरस्तत्र सद्यः॥ ११०॥**

एवमसमवायिकारणत्वेनावस्थितकर्मप्रसङ्गे परेषां कर्मभेदक्लृप्तिरप्यसमञ्जसेत्याह-**कर्मेति**॥ उत्क्षेपणादिभेदात् पञ्चविधत्वे तत्तद्दिग्भेदाद् दशविधत्वमपि किं न स्यात्? यत्किञ्चिद्भेदकात्पञ्चविधत्वं वदाम इति चेत्, यत्किंचिच्छब्दस्यानेकार्थत्वादनवधिकभेदः प्रसज्येत। कर्महेतुध्रौव्यात् भेद इति चेत्, तत्राप्यव्याप्तिरेव दूषणम्। न ह्येकत्र हेतुस्सर्वत्रान्वेति। केवलमुत्क्षेपणादिबुद्धिमात्रेण भेदश्चेत्, तर्हि इतरेष्वपि भ्रमणरेचनादिषु बुद्धिभेदोऽस्तीति तत्रापि नानात्वं प्रसज्येत। किंच बुद्धिभेदोऽपि न नियतः। गमनागमननिष्क्रमणप्रवेशनादिषु सङ्करस्यापि दृष्टत्वात्। अतस्तत्तदुपाधिभेदादानन्त्यमेव कर्मणो न तु पञ्चत्व[नियमः]मिति॥ ११०॥

---

**आनन्द०** -प्रसङ्गसङ्गतिं दर्शयति—**एवमिति**।

नन्विदमेव पूर्वस्मात्पूर्वमस्तु उभयोस्तुल्यत्वादिति चेत्। न पूर्वनिरूपणस्येच्छाधीनत्वं सूचयितुं कर्ममात्राश्रयस्याप्यस्य विचारस्य पश्चान्निरूपणमिति भावः। **उत्क्षेपणादीति**—उत्क्षेपणावक्षेपणाऽऽकुञ्चन-प्रसारण-गमनभेदात्पञ्चविधं कर्मेति वैशेषिका ऊचुः। तत्रोत्क्षेपणमूर्ध्वगतिः। अवक्षेपणमधोगतिः। आकुञ्चनमाकर्षणं। परितो गमनं प्रसारणमितिवत् प्राग्गमनं प्राञ्चनं प्रत्यग्गमनं प्रत्यञ्चनमुदञ्चनमित्यादि गतिभेदास्स्यादित्यर्थः। शंकते—**कर्महेत्विति**। **अव्याप्तिरिति**। नह्युत्क्षेपणमात्रे भिन्नमवच्छेदकं विद्यते तथा चेदमव्यापकमिति भावः।

न प्रथम इत्यत्राह—**नह्येकत्रेति**—तथा च भिन्नभिन्नसाधनजन्यतया सर्वक्रियाणामत्यन्तभेदास्स्युरिति न ह्युत्क्षेपणमात्र इति भावः।

ननु बुद्धिभेद एव जातिभेदनियामकः–यथा घटादिबुद्धिभेदः पटादिभेदकः। तथा चात्राप्युत्क्षेपणबुद्धिरवक्षेपणाद्व्यावृत्ता तस्माद् भेदिका तथाऽवक्षेपणादिभेदोऽपीति शङ्कते—**केवलमिति**। **गमनागमनादिष्विति**—आगमन एव देशभेदेन गमनबुद्धिः। गमन एवाऽऽगमनबुद्धिः यथा निष्क्रमणे प्रवेशबुद्धिः प्रवेशे च निष्क्रमणबुद्धिरिति न बुद्धि भेदमात्रं न जातिभेदकमिति भावः।

ननु तत्र विरोधो बाधकः प्रकृते चाबाधकमिति चेत्। तत्रैव भेदबुद्धेरन्यथा-सिद्धेरेव बाधकत्वात् ॥ ११० ॥

॥ इति कर्मावान्तरभेदनिरूपणम् ॥

---

मृत्स्वर्णादिप्रसूते भवति हि घटधीर्नान्यदन्यद् घटत्वं
नैकं बाध्यं समत्वात्तदिह परिहृतिः कुत्रचित्क्वापि योगः।
पारापर्यं विरोधः परिहरणसमावेशनं चास्त्युपाधौ
तुल्यं चातिप्रसङ्गादिकमिति न यथादृष्टभङ्गः क्वचित्स्यात् ॥१११॥

**सर्वार्थः**—पूर्वस्मिन् ग्रन्थे सङ्करस्त्वत्र सह्य इति [जाति] सङ्करप्रसङ्गे न विरोध-इत्युक्तम्। तदेव समर्थयते—**मृत्स्वर्णादीति**। समाविष्टानां जातीनां परापरभावः, परस्परपरिहारेण वर्तमानानां विरुद्धानां जातीनां न समावेश इति केषांचित् सङ्केतो न्यायवादिनाम्। तेन सुवर्णादिघटादौ घटत्वमेव नास्तीति तेषामाशयः। तन्नोपपद्यते; अनुवृत्तधीरेव हि सर्वत्र जातिसद्भावे प्रमाणम्। तथा च यथा मृद्घटे घटधीरस्ति, एवं सुवर्णघटेऽपि घटधीरस्ति; तथा च मृत्त्वघटत्वयोः परापरभावानुपपत्तिः; सुवर्णस्य तैजसत्वेन भवद्भिः स्वीकारात्। ननु मृद्घटेऽन्यत् घटत्वं सुवर्णघटेऽन्यत् घटत्वमिति; तद्भवदङ्गीकृतानुवृत्तप्रतीतिविरुद्धमित्याह—**नान्यदन्यद्घटत्वमिति**। अस्तु तर्ह्येकं घटत्वं बाध्यताम्; तच्च न सङ्घटत इत्याह—**नैकमिति**। तत्र हेतुमाह—**समत्वादिति**। यदि पार्थिवघटत्वं बाध्यं भवतामपसिद्धान्तः। यदि सुवर्णघटत्वं तच्च न, समत्वात्—यथा पार्थिवघटे घटत्वबुद्धिव्यवहारौ, एवं सुवर्णघटेऽपि घटत्वबुद्धिव्यवहारयोस्समत्वा-दित्यर्थः। पार्थिवघटस्य प्रचुरत्वान्मुख्यं घटत्वमिति चेत्, भारतवर्षव्यतिरिक्ते वर्षान्तरे सुवर्णघटस्यैव प्रचुरत्वात्तत्रैव मुख्यत्वं स्यादिति समस्समाधिः। तथा च पार्थिवत्व-घटत्वयोः कुत्रचित् सुवर्णघटादौ परस्परपरिहृतिः कुत्रचित् मृद्घटादौ योग इति यथो-पलम्भं स्वीकारान्न काचिदनुपपत्तिः। तर्हि गोत्वाश्वत्वयोरपि समावेशप्रसङ्ग इति चेन्न; उपलम्भस्यैव नियामकत्वात्। इयं खलु मर्यादा—केषांचित् पारापर्यं सत्त्वघटत्वादीनाम्, केषांचिद्विरोधः गोत्वाश्वत्वादीनाम्, केषांचित् परिहरणं समावेशनं च पृथिवीत्वघटत्वा-

दीनाम्। यद्येवमप्यतिप्रसङ्गादिव्यवहारस्तदुपाधावपि तुल्यमिति प्रतिबन्द्या निराचष्टे—उपाधाविति। दृष्टत्वादुपाधौ न दोष इति चेत्, तज्जातावपि तुल्यमित्याह—**न यथादृष्टभङ्गः क्वचित्स्यादिति**। यथोपाधौ दृष्टत्वात् संकरः स्वीक्रियते, तथा जातावपि संकरः स्वीकार्य इत्यर्थः ॥ १११ ॥

---

आनन्द०—प्रसङ्गादाह—**पूर्वस्मिन्निति**। केषाञ्चित्सङ्केतो न्यायवादिनामिति—केषाञ्चित् न्यायवादिनां—

"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" ॥

इति—संकेत इत्यर्थः। **सुवर्णस्य तैजसत्वेनेति**।

नन्वनुष्णाशीतस्पर्श-पीतिम-गुरुत्वाश्रयोपष्टम्भकस्यैव घटत्वात्तस्य पार्थिवत्वात्तेजोभागस्याऽऽकाशादिवत्सम्बन्धमात्रस्याऽघटत्वान्न साङ्कर्यमिति चेत्।

अत्र वदन्ति। सुवर्णत्वसामानाधिकरण्येन घटत्वबुद्धिस्सर्वेषां सुवर्णञ्च तैजसमेव न तूपष्टम्भकं, तथात्वे सुवर्णस्य प्रत्यक्षत्वाभावप्रसङ्गात्।

नाप्यारोपितनीलिम्नि पटे नीलोऽयं पट इतिवत् पार्थिवभागगतघटत्वस्य परम्परासम्बन्धेन सामानाधिकरण्यबुद्धिरिति वाच्यम्। तत्रौत्सर्गिकसाक्षात्सम्बन्धे बाधकाभावात्।

न च साङ्कर्यमेव बाधकं सांकर्यस्य बाधकत्वे सिद्धे परम्परासम्बन्धविषयकत्वेन साङ्कर्यस्य बाधकत्वसिद्धिरिति।

अपरे तु सुवर्णस्योपष्टम्भकभागस्य पार्थिवत्वेऽपि शिलायामिव मृत्त्वं नास्तीति मृत्त्वेन साङ्कर्यमित्याहुः।

ननु सर्वेषामपि घटत्वेन दण्डजन्यत्वं वाच्यं तत्कथमुपपद्यते तदन्यस्मिन्नपि सत्वादिति चेत्। मैवं। मृद्घटत्वस्यैव तदवच्छेदकतया दोषाभावात्। **नन्विति**—तथा च न संकर इति भावः। तर्हि घटत्वं नामानुगतं न सिद्ध्येदित्याह—**तदिति**।

नन्वनुवृत्तप्रत्ययबलेन घटत्वमेकमस्तु, सुवर्णघटत्वं नास्त्येव तद्बुद्धेर्भ्रान्तित्वादिति शङ्कते—**अस्तु तर्हीति**। **एकं घटत्वं**—एकत्र घटत्वमित्यर्थः। **यथा पार्थिवघट इति**—साधकबाधकाभावयोस्तुल्यत्वादित्यर्थः।

नन्वन्यतरपरित्यागप्रसक्तौ व्यक्त्यैक्यमिव स्वल्पव्यक्तित्वमपि नियामकमिति शंकते—**पार्थिवघटस्येति**—यथा पार्थिवत्व निषिद्धत्व-धर्मत्व-प्रत्यक्षत्व-कृतकत्वादावुपाधि साङ्कर्यं दृष्टमित्यर्थः ॥ १११ ॥

इति परापरजाति समावेशसंभवः ॥

जातिः प्राणप्रदात्री गुण इह तदनुप्राणिते भेद[कः]कं स्या-
दित्याहुः केऽपि नेत्थं नियतिरुभयथाऽप्यर्थदृष्टेर्निशादौ ।
तेनान्वेष्टव्यभेदप्रतिनियतिमता केनचिन्निरूप्यं
प्राप्ता यादृच्छिकीषु प्रमितिषु [तु] च यथादर्शनं तद्व्यवस्था ॥११२॥

**सर्वार्थः**—अत्र केचिज्जातिगुणयोरेवं वैषम्यमाहुः—या वस्तुनः प्राणप्रदात्री—प्रथमं प्रतीयते सा जातिः। गुणस्तु तदनुप्राणिते वस्तुनि भेद[कः]कं—विशेषको धर्म इति पश्चात् प्रतीयत इति। तदेतदनुपपन्नमित्याह—**नेत्थं नियतिरिति**। तत्र हेतुमाह—**निशादावुभयथाऽप्यर्थदृष्टेरिति**। कदाचित् प्रथममेव जातिः प्रतीयते पश्चात्तद्गुणाः। कदाचित् पुनरन्धकारादौ सामान्यत एव शौक्ल्यादिगुणविशिष्टं वस्तु प्रतीयते, पश्चात्तद्विशेषो जातिरिति। तेनान्वेष्टव्यस्य पदार्थस्य पृथिव्यादेः प्रतिनियतिमता केनचिदसाधारणेन धर्मेण गन्धवत्त्वादिना निरूप्यं यत्पृथिवीत्वादिकं तत्सामान्यम्। ततश्च यादृच्छिकीषु प्रमितिषु विशेषविषयासु सामान्यविषयासु च यथादर्शनं पौर्वापर्यव्यवस्था भवति; तेन गवादिशब्दवाच्येषु प्रवृत्तिनिमित्तत्वेनोपादीयमानं गोत्वादिकं सामान्यमिति भावः ॥ ११२ ॥

---

**आनन्द०**—प्रसङ्गादाह—**अत्र केचिदिति**—प्रथमप्रतीयमानत्वं जातित्वमिति निर्णयः। **तेनेति** लक्षणनिरूप्यस्य लक्ष्यतावच्छेदकेनेत्यर्थः।

ननु यादृच्छिकव्यक्तिप्रतीतिषु प्रथमं प्रतीयमानश्चातिरिक्तमित्यत्राह—**ततश्चेति**—तत्रापि नियमो नास्तीत्यर्थः। तावतैव वा जातिव्यवहारविषयः। लक्ष्यतावच्छेदकश्च किमित्यत्राह—**तेन गवादीति** अयौगिकद्रव्यवाचकशब्दप्रवृत्तिनिमित्तं जातिः—तदेव स्वरूपनिरूपकञ्चेति भावः ॥ ११२ ॥

॥ इति स्वरूपनिरूपकादिविमर्शः ॥

---

भिन्नेष्वेकावमर्शो न तु निरुपधिकस्तेषु चैक्यं विरुद्धं
ज्ञानाकारोऽपि बाह्यो न हि भवति न चासिद्धमारोपणीयम्।
तस्माद् गोत्वादिबुद्धिव्यवहृतिविषयः कोऽपि सत्योऽनुवृत्त-
स्तस्य त्यागेऽनुमादेः क्षतिरिति कणभुक्तन्त्रभक्ता गृणन्ति ॥ ११३ ॥

**सर्वार्थः**—वैशेषिकोक्तजातिपरिक्लृप्तिप्रक्रियां तन्मतपरिज्ञानाय शिष्याणामनुवदति—**भिन्नेष्विति**। इत्थं किल जातिं साधयन्ति—भिन्नेषु घटादिषु एकावमर्शो न निष्कारणः। तेन सामान्यमङ्गीकार्यम्। न च तेषु स्वरूपैक्यमस्ति विरुद्धत्वादित्याह—**तेषु चैक्यं विरुद्धमिति**। ज्ञानाकार एव सामान्यमिति चेत्, बाह्यत्वेन प्रतिभासनात् तत्र युज्यत इत्याह—**ज्ञानाकारोऽपि बाह्यो न हि भवतीति**। बाह्यं समारोपितं सामान्य-

मिति चेत्, तदपि न युज्यत इत्याह—**न चासिद्धमारोपणीयमिति**। अन्यत्र सिद्धं ह्यन्यत्रारोप्यम्। सामान्यस्य क्वचिदप्यसिद्धत्वात् आरोपणमपि न युज्यत इति भावः। तस्मात् गोत्वादिबुद्धिव्यवहृतिविषयः कोऽपि सत्योऽर्थो गवादिष्वनुवृत्तः। तस्य त्यागेऽनुमानादेः क्षतिः—व्याप्तिग्रहणाभावादनुमानं न स्यात्। आदिशब्देन सङ्केतग्रहणाभावादागमोऽपि न स्यादिति भावः। कणभुक्तन्त्रभक्ता गृणन्तीति पर[मत]पक्षप्रस्थानोपन्यासतां द्योतयति ॥ ११३ ॥

---

**आनन्दः**—प्रागङ्गिकमप्यनुपयुक्तत्वान्न निरूपणीयमित्यत्राह—**वैशेषिकेति**—क्रमेण सिद्धान्तप्रवेशः प्रयोजनमिति भावः। **एकावमर्शः**—एकाकारबुद्धिः। ज्ञानाकारोऽपि घटपटयोरिव निमित्तं विना न स्यात्। तथापि दूषणान्तरमाह—**बाह्यत्वेनेति**—अर्थतत्वेनेत्यर्थः। **अन्यत्र सिद्धमिति**—न च ज्ञाने सिद्धस्यारोपः ज्ञानधर्मस्य चाक्षुषत्वाद्ययोगादिति भावः। **व्याप्तिग्रहणाऽभावादिति**—अनुगतरूपमन्तरेण तद्ग्रहाऽसम्भवादिति भावः। **आदिशब्देनेति**—शक्यतावच्छेदकमन्तरेण शक्तिग्रहस्यासम्भवादित्याहुः ॥ ११३ ॥

**॥ इति परोक्तजात्यनुवादः ॥**

---

**मध्ये यद्यस्ति जातिर्मतिविहतमथो नास्ति भिन्ना भवेत् सा**
**तस्मादन्यत्र वृत्तिर्न च सकलमतिः क्वापि कृत्स्नांशवृत्त्योः।**
**धर्मिध्वंसे तु धर्मस्थितिरपि न भवेन्नात्र गत्यादि च स्या-**
**दित्याद्यैर्बाह्यजल्पैरनितरगतिका संविदक्षोभणीया ॥ ११४ ॥**

**सर्वार्थः**—अत्र सौगता जातिं खण्डयन्तीत्यनूद्य तत्पक्षं प्रतिक्षिपति—**मध्य** इति। इत्थं किल तेषां जातिखण्डनपरिपाटी—व्यक्तिद्वयमध्ये जातिर्यद्यस्ति मतिविहतम्—उपलम्भविरुद्धमित्यर्थः। अथ मध्ये नास्ति, भिन्ना सा जातिर्भवेत्। किंच कात्स्न्र्येन वा जातिर्वर्तते ? एकदेशेन वा ? आद्येऽन्यत्र व्यक्त्यन्तरे वृत्तिरेव न स्यात्। अंशेनोभयत्र वर्तते चेत्तत्रतत्रोभयत्रापि सकलमतिर्न स्यात्—कात्स्न्र्येन जातिप्रत्ययो न स्यादित्यर्थः। किंच धर्मिरूपव्यक्तिध्वंसे धर्मरूपजातिस्थितिर्न संघटते। ननु पूर्वगोव्यक्तिस्थाया जातेरुत्तरगोव्यक्तौ अद्रव्यत्वेन गमनेन संगतिर्न स्यात्। न च तत्रोत्पत्तिसंभवति; नित्यत्वेन जातेरङ्गीकारादित्याद्यैर्बाह्यजल्पैरनितरगतिका स्वारसिकबाधविधुरा जातिसंविदक्षोभणीयेत्यर्थः। न याति न च तत्रासीदित्याद्युक्तिः प्रत्यक्षविरुद्धत्वाद्दूषणमिति भावः ॥ ११४ ॥

आनन्द—अत्रापि पूर्वसंगतिरित्यभिप्रायेणाह—अत्रेति। भिन्ना सेति—तथा च तदङ्गीकारो निष्प्रमाणक इति भावः। कृत्स्नांशवृत्योरिति मूलं विकल्पाभिप्रायं मत्वा न स्यादन्यत्र वृत्तिरित्यारभ्य क्रमेण दूषणमिति योजयति—किञ्चेत्यादिना। कात्स्न्र्येन जातिप्रत्ययो न स्यादिति—जात्येकदेशस्य जातित्वाऽभावाज्जातिप्रत्ययो न स्यादित्यर्थः। अद्रव्यत्वेनेति हेतुगर्भं विशेषणम्।

किञ्च सा जातिः कारणाधीना नवा? आद्ये अनित्यतापत्तिः। द्वितीये सर्वत्र वृत्तिस्स्यादित्यादिरादिशब्दार्थः। अतिरस्करणीयत्वे युक्तिमाह—न यातीति—अन्यथा त्वदभ्युपगत स्वलक्षणस्यापि क्षोभापत्तेरिति भावः॥ ११४॥

॥ इति सौगतोक्तजातिखण्डनपरिहारः॥

---

अन्यापोहस्तु गोत्वप्रभृतिरिति तु नेवंतया तत्प्रतीते-
रन्योन्यापोहबुद्धया नियतिरिति मिथस्संश्रयस्तत्प्रतीतौ।
विध्याक्षेपक्षमत्वाद्विषमसमतया बुद्धिनैयत्यसिद्धे-
श्शब्दार्थत्वादपोहो विमतिपदमिति व्याप्तिभङ्गादिदुःस्थम्॥ ११५॥

सर्वार्थः—इत्थं न्यायविदां जातिसमर्थनप्रकारमुक्त्वा सौगतोक्तमपोहरूपसामान्यं दूषयति अन्यापोह इति। अगोत्वव्यावृत्तिर्गोत्वमनश्वत्वव्यावृत्तिरश्वत्वमिति नेदं युज्यते; इदंतया विधिरूपेणैव सामान्यप्रतीतेः। अन्योन्यापोहबुद्धिप्रतीतौ त्वन्योन्याश्रयप्रसङ्ग इत्याह—अन्योन्येति। गोत्वप्रतीतिसापेक्षमगोत्वमगोत्वप्रतीतिसापेक्षं गोत्वमित्यर्थः। कथं तर्हि गौरेव गौरिति बुद्धिनैयत्यम्? इत्थम्-गोत्वविरुद्धमश्वत्वं विधिरूपमेव गोत्वमाक्षिपति। एवं गोव्यतिरिक्तभावत्वमगोत्वमाक्षिपति। तत्र पूर्वं न्यूनत्वाद्विषमतया, उत्तरं सर्वभाववर्तित्वात्समतया; तेन गोत्वविरुद्धधर्मयोगादेव गौरेव गौरिति बुद्धिनियमसिद्धिरित्यर्थः। तेन भावरूपविरुद्धधर्मसिद्धौ व्यवहारनियमार्थमपोहो न कल्प्य इत्यर्थः। ननु सर्वश्शब्दार्थोऽपोहात्मकः शब्दार्थत्वात् अघटशब्दार्थवदित्यनुमानं व्याप्तिशून्यत्वादिदुःस्थमित्याह—शब्दार्थत्वादिति। न हि स्वलक्षणशब्दोऽपोहपर इति प्रतिबन्द्यभिप्रायेण परिहारः॥ ११५॥

---

आनन्द०—पूर्वसङ्गतिरित्यभिप्रायेणाह—इत्थमिति। अगोत्व व्यावृत्तिरिति-अगोत्वाभावइत्यर्थः। एवमनश्वत्वव्यावृत्तिरित्यत्रापि तथा सम्भवादिति॥ ११५॥

॥ इति अपोहसामान्यवादभङ्गः॥

युज्येतोपाधितश्चेदनुगतधिषणा तत्र नेष्टाऽन्यक्लृप्ति-
स्तस्मात् संघातवर्गेष्ववयवरचनाभेदतोऽन्यन्न सिध्येत् ।
सौसादृश्यात्तु जातिव्यवहृतिनियमस्तेन नातिप्रसक्ति-
र्नो चेन्मूर्तत्वमुख्यैस्त्वदभिमतिनयाद्व्यज्यतां जातिरन्या ॥ ११६ ॥

**सर्वार्थः**–एवमपोहसामान्यं निरस्यासाधारणधर्मातिरिक्तं वैशेषिकाद्युक्तं सामान्यं निराकरोति—**युज्येतेति**। अनुवृत्तप्रत्ययनिर्वाहार्थं खलु सामान्यम्; साऽनुगतधिषणोपाधितश्चेत्तत्रान्यस्य सामान्यस्य क्लृप्तिर्नेष्टा । तस्मात् संघातवर्गेषु अवयवरचनाभेदतोऽन्यत् —सामान्यं न सिध्येत् । संघातः अवयविद्रव्यम् । सादृश्याज्जातिव्यवहारे न पुनरतिप्रसक्तिः, सौसादृश्यस्य विवक्षितत्वादित्याह—**सौसादृश्यादिति**। सौसादृश्यम्–अत्यन्तसादृश्यम् । एवमनङ्गीकारे सर्वत्रापि जातिसिद्धिरित्यतिप्रसङ्गलक्षणं दूषणमाह—**नो चेदिति**। सौसादृश्यातिरिक्तजातिस्वीकारे गवादिशब्दवन्मूर्तादिशब्देष्वपि मूर्तत्वाद्यभिव्यङ्ग्यजातिस्वीकारः स्यादिति भावः ॥ ११६ ॥

---

**आनन्द०**—अवयवरचना भेदः—संस्थानम् । शङ्कामाह—**सादृश्यादिति**—ईषत्सादृश्यस्य सर्वत्र सम्भवादिति भावः । **सौसादृश्यमिति**—किमात्यन्तिकत्वमवयवानामपि सादृश्यं ? यद्वा गुणानामपि ? अथवा स्वप्रतीत्या स्मारकत्वं ? उत एककार्यजनकत्वं ? माहो एककारणप्रसूतत्वं वा ? नाद्यः, यत्किञ्चित्सादृश्यस्य सर्वसाधारण्यात् । तत्राप्यत्यन्तिकत्वविवक्षायामात्माश्रयात्, न द्वितीयः । उक्तोत्तरत्वात् । न तृतीयः । संबन्ध्यन्तरेऽतिप्रसङ्गात् । न चतुर्थः । व्यक्त्यैक्यविवक्षायामसम्भवात् दण्डचक्रयोरतिप्रसङ्गाच्च । अत एव न पञ्चमोऽपीति चेत् । अत्र वदन्ति । यस्मिन् भेदप्रतीतावप्यभेदप्रतीतिः येन जायते तदेव सादृश्यस्याऽऽत्यन्तिकत्वम् । यथा काञ्च्यां ये व्रीहयो दृष्टाः त एव मधुरायामिदानीमुत्पन्ना इति । तच्च संस्थानविशेषस्सामान्यवादिभिरप्यङ्गीकार्यमिति । विस्तृतिस्तु मणिसारधिक्कारे द्रष्टव्यः । **गवादिशब्दवदिति**—गवादिशब्दप्रवृत्तिनिमित्ततया जातिस्वीकारवदित्यर्थः । एवं मूर्तादिशब्देऽप्यर्थो बोध्यः । आदिशब्देन भूतत्वादि संग्रहः ॥ ११६ ॥

॥ इति संस्थानविशेषातिरिक्तगोत्वादिजातिभङ्गः ॥

---

जातेर्व्यञ्जकं ते तदपि यदि मतं जातितस्संगृहीतं
साऽपि व्यङ्ग्यान्यतस्स्यात्तदुपरि च भवेज्जातिसंस्थानमाला ।
स्वेनैव व्यञ्जकस्याप्यनुगतिरिति चेत्तर्हि जातिः किमर्था
व्यावृत्तानां स्वभावाद्यदि तदनुगतव्यञ्जकत्वं जितस्त्वम् ॥ ११७ ॥

**सर्वार्थ**—अस्तु वा परिकल्पिता जातिः, तस्या व्यञ्जकत्वेन परि [कल्पितं] गृहीतं नोपपद्यत इत्याह—**जातेरिति**। जातेर्व्यञ्जकं यत्तदपि यदि जातितस्संगृहीतं—

जात्यन्तरेण परिगृहीतम्, यदि वा न परिगृहीतम् ? अपरिगृहीतत्वे तस्यानुवृत्त्यभावात्- परिगृहीतत्वमेव वाच्यम् । तथा च साऽपि जातिर्व्यञ्जकान्तरेण व्यङ्ग्या स्यात्; तच्च व्यञ्जकं जातिपरिगृहीतं भवेत्; साऽपि व्यञ्जकान्तरमपेक्षत इति जातिसंस्थानमाला स्यात् जातितव्द्यञ्जकानवस्था स्यादित्यर्थः । अनवस्थापरिहारार्थं स्वेनैव व्यञ्जकस्य धर्मस्यानुगतिरिति चेत् तर्हि जातिः किमर्था ? तेनैव स्वतोऽनुगतेन धर्मेण जातिकार्य- निर्वाहात् । तर्हि व्यावृत्ता एव धर्मा अनुगतां जातिं व्यञ्जयन्तीति चेत्, एवं तर्हि त एव व्यावृत्ता धर्मा अनुगतबुद्धिव्यवहारयोर्निर्वाहका भवन्तु, वस्तुस्वाभाव्यात्; तथा च निरर्थिकां जातिं कल्पयंस्त्वं विजितो भवसि । अयमत्र निर्णयः—यत्र जातिस्तत्र साक्षात्सामान्यमनुवृत्तव्यवहारहेतुः । यत्र पुनरुपाधिस्तत्र गुणक्रियादिनिष्ठं व्यवहितं सामान्यमनुवृत्तप्रतीतिहेतुरिति हि न्यायविद्रहस्यम् । तथा च सति यत्सामान्य- तदुपाधिरूपगुणक्रियानिष्ठं स्वयमप्रतिपन्नं जातिप्रतिपत्तिहेतुर्न भवति । प्रतिपन्नं चेत् तत्प्रतिपत्तौ उपाध्यन्तरप्रतिपत्तिरवश्यंभाविनी । स चोपाधिर्जातिपरिगृहीतः । सा च जातिरुपाध्यन्तरप्रतिपत्तिमूलस्वप्रतिपत्तिरिति व्यवस्थितैवानवस्थितिः ॥ ११७ ॥

---

आनन्द० —पूर्वसंगतिरेवास्यापीत्यभिप्रायेणाह—अस्तु वेति । परिगृहीतं—अनु- गतीकृतं । अपरिगृहीतमननुगतं । अपरिगृहीतत्व इति—व्यभिचारेण व्यञ्जकत्वमेव न स्यादिति भावः । एवन्तर्हीति—अनुगतव्यञ्जनवदनुगतबुद्धिनिर्वाहसम्भवादिति भावः ।

ननु व्यञ्जकसापेक्षत्वेऽनुगत्यपेक्षयाऽनवस्थाप्रसङ्गः । व्यञ्जकनिष्ठधर्मस्यो- पाधित्वेन तदपेक्षैव नास्ति, जातेरेव तदपेक्षत्वादित्यत्राह—अयमत्र निर्णय इति । जातिपरिगृहीतः—व्यवहिताव्यवहितजातिनिबन्धनम् ।

ननु जातेरपि न व्यञ्जकापेक्षा यत्रापेक्षा तत्र जातिर्न स्यात् । तथा च तन्न्यायेन सर्वत्रापि व्यवहारस्स्यादिति द्रष्टव्यम् ॥ ११७ ॥

॥ इति परोक्तजातिव्यञ्जकानुपपत्तिः ॥

---

व्यावृत्तैर्व्यक्तिवन्न व्यवहृतिनियमस्साध्यता नानुवृत्तौ
तद्धर्मस्यानुवृत्तौ मदभिमतमिह स्वीक्रियेतेति चेन्न ।
केचित्संस्थानभेदाः क्वचन खलु मिथो भान्ति सादृश्यरूपा-
स्तस्मादन्योन्यजैकस्मृतिविषयतया तत्तदेकावमर्शः ॥ ११८ ॥

सर्वार्थः—व्यावृत्तैरिति । अत्र कश्चिच्चोदयति—किं व्यावृत्तैरनुवृत्तैर्वा गवाद्य- नुवृत्तव्यवहारनियमः ? न तावद्व्यावृत्तैः, व्यक्तिवत्; न हि व्यक्तयोऽनुवृत्तव्यवहारं कुर्वन्ति । एवं व्यावृत्ता धर्मा नानुवृत्तव्यवहारनियमं कर्तुमर्हन्ति । अनुवृत्तैर्धर्मैर्व्य-

वहारनियमश्चेत्, तदानीं साध्यत्वमेव नास्ति; अनुवृत्तनियामकधर्मस्वीकारात् । तदिदमाह **साध्यता नानुवृत्ताविति** । ननु व्यावृत्ता एव धर्माः स्वयमनुवृत्तधर्मान्तरेण परिगृहीता-गवादिव्यवहारमनुवृत्तं निर्वहन्तु । तन्न; प्रथममेव मदभिमतोऽनुवृत्तधर्मः स्वीक्रियेत, मध्ये किमेभिर्व्यावृत्तैः परिकल्पितैरिति चेत्तन्न; केचिद्धि संस्थानभेदाः क्वचन खलु मिथस्सादृश्यरूपा भान्ति । यैर्भवदीयं सामान्यमभिव्यज्यते त एव सौसादृश्यव्यवहार-विषयभूतास्सामान्यव्यवहारं निर्वहन्तु । तस्मात्तेषां सर्वेषामन्योन्यसापेक्षैकस्मृतिविषय-तया तत्तदेकावमर्शः—तत्तज्जातीयत्वावमर्श इत्यर्थः । अन्यथा भवतामपि जात्यभि-व्यञ्जकोपाधिरूपसौसादृश्यनिरूपणाशक्तेर्जातिरप्युत्सीदेदिति हृदयम् ॥ ११८ ॥

**आनन्द०**—पूर्वाक्षेपसंगतिरित्याह—**अत्र कश्चिदिति** । **साध्यत्वमेव नास्तीति**—अनुवृत्तजातिनिरासप्रयासो व्यर्थ इत्यर्थः । **तन्नेति**—क्वचिदप्यनुवृत्तो धर्मो नाभ्युपेयते येनैवं स्यात् । तथा च सुसदृशव्यावृत्त एव नियामक इति भावः । **तस्मादिति** अन्योन्यस्मिन् ज्ञातान्योन्याभेदव्यवहारापादकस्मृतिविषयत्वं सजातीयत्वमिति यावत् । **अन्यथेति**—अनवस्थाप्रसङ्गादिति भावः ॥ ११८ ॥

**॥ इति संस्थानजात्यनुपपत्तिपरिहारः ॥**

**सादृश्यस्यानुवृत्तौ भवति परमता जातिरेवान्यथा चे-**
**तन्मूला नानुवृत्तव्यवहृतिरुचितेत्येतदप्यात्तसारम् ।**
**एकैकस्थं तु तैस्तैर्निरुपधिनियतैस्सप्रतिद्वन्द्विकं स्यात्**
**धर्माभावप्रतीतिप्रभृतिनियमवद्दुस्त्यजेयं व्यवस्था ॥ ११९ ॥**

**सर्वार्थः**—ननु कथं व्यावृत्तानां संस्थानानां नियतसादृश्यरूपत्वमित्यादिचोद्य-मनूद्य परिहरति—**सादृश्यस्येति** । इयमत्र चोद्यप्रक्रिया–किं सादृश्यमनुवृत्तं भवति तदा पराभिप्रेता सैव जातिः स्यात् । अन्यथा-अननुवृत्तं चेत्, तन्मूला–अननुवृत्तसादृश्यमूला अनुवृत्तव्यवहृतिर्नोचिता स्यात् । एतन्निराकरोति—**एतदिति** । तत्कथमित्यत्राह—**एकै-कस्थमिति** । यद्यप्येकैकस्थं सास्नादिधर्मस्वरूपम्, तथाऽपि तत् निरुपधिनियतैः—स्वभावतो नियतैः तैस्तैः—सास्नादिभिरन्यनिष्ठैस्सप्रतिद्वन्द्विकं स्यात् । इदमेवान्योन्य [स] प्रतिद्वन्द्विकं रूपं सादृश्यशब्दवाच्यमभिधीयते । ननु कथं नियामकाभावे तेनैव धर्मेण स धर्मस्सप्रतिद्वन्द्विक इति नियमः स्यात् ? स्वभावादेवेति ब्रूमः । स्वभावो हि नाम प्रामाणिकं स्वरूपमेव । यद्यथा प्रतीयते तत्तथैव स्वीक्रियत इति हि न्यायसंप्रदायः । तथा च सास्नादीनामेवान्योन्यसप्रतिद्वन्द्विकत्वम्; न पुनः केसरादीनाम् । केसरादीनां चाश्वादिषु अन्योन्यप्रतिद्वन्द्विकत्वमुपलब्धिनियमादेव स्वीकार्यम् । इत्थमुपलब्धिनियमा-नङ्गीकारेऽतिप्रसङ्गः । भवद्भिरप्ययं नियमोऽङ्गीकार्य इत्याह—**धर्माभावप्रतीतिप्रभृति-नियमवद्दुस्त्यजेयं व्यवस्थेति** । अग्नेरेवौष्ण्यं जलस्यैव शैत्यमित्यादिकमुपलम्भनियम-

मन्तरेण नोपाध्यन्तरमपेक्षते। एवं घटाभावोऽपि घटप्रतियोगिक एव पटाभावस्तु पटप्रतियोगिक इत्युपलम्भादेव निषेध्यनिषेधकनियमः स्वीक्रियते। किंच घटव्यक्तीनामेव घटत्वजात्यभिव्यञ्जकत्वं न पुनर्घटपटव्यक्तीनाम्; नापि पटव्यक्तीनामिति नियतमेव दृष्टम्। एवमेकैकस्य सास्नादिधर्माः परस्परसप्रतिद्वन्द्विभावनियमेन सौसादृश्यशब्दार्थतां भजन्त इति निरवद्यम् ॥ ११९ ॥

---

आनन्द०—आक्षेपसंगतिमाह—नन्विति किं सादृश्यमनुवृत्तमननुवृत्तं वा ? नाद्य-इत्याह—सादृश्यमनुवृत्तं भवतीति। द्वितीयं दूषयितुमारभते—अननुवृत्तत्व इति—तथा च सर्वस्य सर्वसादृश्यप्रसङ्गेन चानुवृत्तिव्यवहारो न स्यादिति भावः। कथमिति—उभयानुयायिधर्माभावे प्रतियोग्यनुयोगिभावनियमो न स्यादविशेषादिति भावः। तथा च सास्नादीनामेवेति—तथैव प्रमाणप्रतिपन्नत्वादिति भावः। अतिप्रसङ्ग इति पटाद्य-भावस्य पटप्रतियोगिकत्वमग्नेरेवोष्ण्यमित्यादिनियमो न स्यादित्यर्थः।

किञ्च भवद्भिरपि स्वभावादयं नियमोऽङ्गीकार्य इत्याह—एकैकस्येति—अनु-वृत्ता एव सास्नादयः स्वभावात्सदृशा इत्यर्थः ॥ ११९ ॥

॥ इति व्यावृत्तानां संस्थानानां सादृश्यरूपत्वम् ॥

---

**सादृश्यं शक्तिसंख्याप्रभृति च कतिचिद्भिन्नमूचुर्गुणादेः**
**स्यादत्रातिप्रसक्तिः प्रतिगुणमगुणीकारलिङ्गोपलब्धेः।**
**साधर्म्यात् संग्रहश्चेत् सममिदमुभयोर्येन केनापि यद्वा**
**किं दन्तादन्ति कृत्वा फलमिह बलिभुग्दन्तचिन्तान्तरेऽस्मिन् ॥१२०॥**

**सर्वार्थः**—अत्र केचित् शक्तिसंख्यासादृश्यादिकं गुणादेर्विभक्तमाहुः। तन्मतमनूद्य दूषयति—**सादृश्यमिति**। तत्र हेतुमाह—**स्यादत्रातिप्रसक्तिरिति**। अतिप्रसक्तिं विवृ-णोति—**प्रतिगुणमिति**। यत्किंचिद्वैषम्यात् सादृश्यादीनां गुणादेर्विभागाङ्गीकारे सर्वेषा-मपि गुणानां प्रतिगुणमाकारभेदोपलब्धेर्गुणव्यतिरेककल्पनाप्रसङ्ग इत्यर्थः। उक्तप्रति-बन्द्याः परिहारमाशङ्कते—**साधर्म्यादिति**। गुणत्वनियामकसाधर्म्याद् गुणत्वेन संग्रहश्चे-त्तदन्यत्रापि सममित्याह—**सममिदमुभयोरिति**। येन केनापीत्यनादरः, भवत्कल्पितेनैव धर्मेणान्यत्रापि गुणत्वं वक्तुं शक्यत इत्यर्थः। अथवा सादृश्यादीनां पृथक्त्वापृथक्त्व-चिन्तनं जीवपरमात्मयाथात्म्यज्ञानपरे त्र्यन्तसिद्धान्ते काकदन्तपरीक्षावदनपेक्षणीय-मित्याह—**यद्वेति** ॥ १२० ॥

**आनन्द०**—शक्तिः संख्या सादृश्यञ्च पदार्थान्तरमिति मीमांसकाः। प्रसंगात्तदनूद्य दूषयति—**अत्रेति** आदिशब्देन शब्दादेर्ग्रहणम्। **प्रतिगुणमिति**—रूपस्यान्यापेक्षया रूपत्वं रसे च रसत्वमित्याकारभेदः इत्यर्थः।

ननु येन केनापि साधर्म्यं द्रव्येऽपीति तस्यापि गुणत्वप्रसङ्ग इत्याह—**येन केनापी-त्यनादर इति**—द्रव्याश्रयत्वरूप धर्मस्याऽविशेषादिति भावः। **अन्यत्रापि** शक्त्यादावपी-त्यर्थः। अस्तु वा पृथक्त्वं न तावता हानिरित्याह—**अथवेति**। मूलं दन्तादन्ति कृत्वा-दन्तैर्दन्तैर्युद्धं कृत्वेत्यर्थः॥ १२० ॥

**॥ इति सादृश्यादिपदार्थान्तरक्लृप्तिभङ्गः ॥**

---

**गन्धादौ सन्निवेशो न हि भवति न च द्रव्यभेदे निरंशे**
**तस्माज्जात्याऽनुवृत्तव्यवहृतिरिति चेदुक्ततुल्योत्तरं तत्।**
**तत्तद्वस्तुस्वभावाद् घटत इह मिथस्सप्रतिद्वन्द्विकत्वं**
**तज्जात्याधारतादेरपि तव नियतिस्तत्र न ह्यन्यतः स्यात् ॥ १२१ ॥**

**सर्वार्थः**—अत्र कश्चिच्चोदयति—**गन्धेति**। सौसादृश्यं जातिरिति भवद्भिरुक्तम्; स पुनस्संस्थानभेद इति चाभ्यधायि। तन्नोपपद्यते, गन्धादौ संस्थानभेदाभावात्। न चात्मादौ निरंशे संस्थानभेदोऽस्ति। अवयवरचनाविशेषो हि संस्थानम्। तस्माज्जात्ये-वानुवृत्तव्यवहारस्सर्वत्र संघटत इति चोद्यमनूद्योत्तरं वदति—**उक्ततुल्योत्तरं तदिति**। कथमुक्ततुल्योत्तरत्वमित्यत्राह—**तत्तदिति**। तत्तद्वस्तुस्वभावनियम एव सर्वत्र नियामकः। तेन स्वभावतः सप्रतिद्वन्द्विकत्वेन प्रमाणसिद्धं तत्तद्वस्त्वेव तत्तदनुवृत्तव्यवहारहेतुभाव-मनुभवति। एवं वस्तुस्वभावनियमानङ्गीकारे तत्तज्जात्याधारभावो भवन्मते तेषामेव गुणानां कथं स्यादिति चोद्ये स्वभावनियम एव भवताऽपि वाच्यः; अन्यतश्चेदनवस्थादि-दोषदुष्टत्वात्। तेन ससंस्थानेषु वस्तुषु संस्थानभेद एव व्यवहारनियामकः, गुणादिषु तत्तदसाधारणलक्षणमेव तत्तव्द्यवहारनियामकम्; तच्च भवताऽपि स्वीक्रियते। अन्यथा तत्तल्लक्षणाभावे तत्तज्जातिनियमो न स्यात्। तथा च तत्तल्लक्षणं भवता यथा कल्प्यते तथैवास्माभिरप्यङ्गीक्रियत इति न कश्चिद्दोषः॥ १२१ ॥

---

**आनन्द०**—यद्यप्याक्षेपमुखप्रवृत्तस्य पूर्वस्मात्पूर्वमेव निवेशो युक्तः तथापि निरूपणे वैचित्र्यप्रदर्शनायानन्तरमाह—**अत्रेति**। न चातिप्रसक्तिः येन केनचिदाकारेण सङ्गतमेव निरूप्यमिति भावः। **गन्धावाविति** गुणादिषु वस्तुस्वरूपासाधारणलक्षणमेव सौसादृश्यम् सावयवेषु संस्थानमिति न दोष इति भावः। **तत्तज्जात्याधारभाव इति**—गन्धव्यक्तीनामेव गन्धत्वजात्याधारत्वं न रसादिव्यक्तीनामित्यत्र नियामकं किं? व्यक्तिषु विशेषाभावादिति चोदिते स्वभावादतिरिक्तं न कारणमिति भावः। **स्वभाव-नियम एवेति**—स्वस्य भावोऽसाधारणलक्षणमित्यर्थः।

ननु तद्द्वयं ननुवृत्तं कथं नियामकमिति शङ्कामपाकरोति—**तथा चेति**—जातेर्लक्ष्यतावच्छेदकत्वात्तदतिरिक्तं लक्षणं वक्तव्यं अननुवृत्तौ अव्याप्तिरिति भवद्भिरपि समाधेयमित्यर्थः ॥ १२१ ॥

**॥ इति निरवयवेष्वनुवृत्तव्यवहारनिर्वाहः ॥**

---

**सत्तासामान्यमेके त्रिषु परिजगृहुः केऽपि जातावपीदं**
**प्रख्यादीनां समत्वात्कथय न किमिदं सर्वनिष्ठं गृहीतम् ।**
**किञ्च प्रामाणिकत्वप्रभृतिसमधिकं सत्त्वमन्यन्न दृष्टं**
**तद्ब्रह्मेत्याश्रितं यैर्ध्रुवमपलपितं तत्तु तैर्धर्मतोक्तेः ॥ १२२ ॥**

**सर्वार्थः**—एवं सामान्येन सामान्यं विचार्य सत्तासामान्यं विशेषतो निरूपयति—**सत्तेति** । द्रव्यगुणकर्मसु सत्तेति प्रसिद्धमिदम् । अपरे पुनरेवं मन्यन्ते जातावपीति । तत्र हेतुमाह—**प्रख्यादीनामिति** । प्रतीतिव्यवहारौ हि सर्वत्र जातिकल्पने प्रमाणम् । जातावपि सत्प्रतीतिस्समाना चेत् किमिति तत्रापि सत्ता न कल्प्यत इयि भावः । तदिदमाह—**न किमिदं सर्वनिष्ठं गृहीतमिति** । सत्त्वं सर्वनिष्ठं किं न गृह्यत इत्यर्थः । गोत्वं सदश्वत्वं सदिति हि ग्रहणप्रवृत्तिः । किंच परमर्यादया सत्त्वमन्यदङ्गीकृत्योक्तम् । तत्त्वतो निरूपणे प्रामाणिकत्वाद्यतिरेकेण सत्त्वमन्यन्नास्ति । तच्च प्रामाणिकत्वादिकं प्रामाणिकमेव; स्वपरनिर्वाहकसमाधेरात्माश्रयादिदोषाप्रसङ्गात् । तस्मात्सत्त्वेऽपि न कश्चिद्दोषः; सत्त्वमस्तीत्यौपाधिकधर्माणां यावदुपाधिवृत्तेस्सर्वन्यायवित्संमतत्वात् । अत्राद्वैतवादिनस्सत्त्वं ब्रह्मैवेति संगिरन्ते; तदपरामर्शवचनमेव । सत्त्वं हि धर्म एव, न पुनर्धर्मि । तथा च ब्रह्मणोऽपि धर्मत्वाङ्गीकारे धर्म्यन्तरं कल्प्यम् । एवं च सति वस्त्वन्तरारोपितत्वेन ब्रह्मणोऽपि मिथ्यात्वं प्रसज्यत इति भावः । **ध्रुवमपलपितं तत्तु तैरिति** । तैः—मृषावादिभिर्ब्रह्मैवापलपितं सत्त्वस्य ब्रह्मत्वोक्तेः ॥ १२२ ॥

---

**आनन्द०**—पूर्वशेषचिन्तितत्वान्न पृथक्संगतिरित्याह—**एवमिति** । स्वपक्षमाह—**अपर इति**—जातिकल्पने जातावपि तत्कल्पकं दर्शयति—**गोत्वमित्यादिना** ।

ननु सिद्धान्ते सत्वस्याऽन्यस्याभावात् कथमित्यत्राह—**किञ्चेति** । स्वाभिमतमाह—**प्रामाणिकत्वाद्यतिरेकेणेति** ।

ननु घटस्सन् पटस्सन्निति चाक्षुषज्ञानं सर्वसिद्धम् । न ह्युक्तं सत्वं तद्योग्यं प्रमात्वादिघटितत्वेनाऽतीन्द्रियत्वादिति चेत् । उच्यते । अतिरिक्तोऽपि धर्मः किं जाति ? रुपाधिर्वा ? उभयथापि यत्र वर्तते तदाश्रययोग्यत्वं तद्योग्यतावच्छेदकञ्च । प्रामाणिकत्वं हि प्रमाण संबन्धतावच्छेदकमेव । तच्च कालसम्बन्धः । स च चक्षुर्योग्य इति न दोषः ।

न च कालः सत्वायोगी तस्मिन्वर्तमानवदुपपत्तेः। कालसंबन्धश्च स्वपरनिर्वाहकः तदाह —**तच्च प्रामाणिकत्वादिकमित्यादिना।**

**तस्मादिति**—सत्वमुक्तमेव अतिरिक्तं वा भवतु उभयथा सत्वेऽपि सत्वमस्तीत्यभ्युपगमे न दोष इत्यर्थः। **औपाधिकेति**—उपाध्यधीनास्सर्वोपाधिनिष्ठा धर्माः यावदुपाधिनिष्ठाः स्वनिष्ठा अपि प्रमेयत्वाभिधेयत्वादय इत्यर्थः॥ १२२॥

**॥ इति सत्ताजातिनिरूपणम्॥**

---

**यज्जातीयं यदा यद्यदवधिगुणकं यत्र न ह्यन्यदीदृक्**
**दृष्टैरित्थं विशेषैर्जगति विषमतां वक्ति वैशेषिकोऽपि।**
**नित्येष्वत्यन्ततुल्येष्वपि नियतदशाभेदयोगोऽस्ति शास्त्रात्**
**प्राच्योपाध्यादयो वा विदुरतिभिदुरान् योगिवर्यादयस्तान्॥ १२३॥**

**सर्वार्थः**—एवं सामान्यं निरूप्य **वैशेषिकोक्तं** विशेषमनर्थकत्वेन दूषयति—**यज्जातीयमिति।** लोके हि देशकालादिविशेषाद्वस्तूनां विशेषो दृश्यते। यज्जातीयमिति जातिः; यदेति कालः; यदिति स्वाभाविको वस्तुविशेषः; यदवधिगुणकमिति गुणविशेषः; यत्रेति देशविशेषः। यद्वस्त्वेतादृशगुणविशिष्टं तव्द्यतिरिक्तवस्तु न हीदृक्। अन्यद्वस्त्वन्यदेशकालादिविशिष्टम्; अन्यच्चान्यदेशकालादिविशिष्टमिति परस्परविभागः। इत्थं दृष्टैरेव विशेषैर्जगति **वैशेषिकोऽपि** विषमतां वक्ति। तथा च नित्येष्व[प्य]त्यन्ततुल्येष्वपि नियतावस्थायोगश्शास्त्रप्रमाणकानामध्यात्मविदामस्ति; ईश्वरपरतन्त्रस्य जगत्सृष्ट्यादिकृत्यस्य नित्यानुवृत्तत्वात्; मुक्तानामपि जक्षत्क्रीडन् रममाण इत्यादिव्यापारपारम्पर्यस्यानुवृत्तेः। किञ्चामुक्तदशाभाविभिः प्राच्यैरेव धर्मविशेषैरुपलक्षणतयाऽवस्थितैर्मुक्तानामपि भेदो ज्ञातुं शक्यते। तदिदमाह—**प्राच्योपाध्यादयो वेति।** अस्तूपाधिभेदः कैरयं भेदो ज्ञायत इत्याशङ्क्याह—**विदुरतिभिदुरान् योगिवर्यादयस्तानिति।** तान्—उपाधीन् परस्परभिदुरान् योगिप्रभृतयो विदुः—जानन्तीति न दृष्टत्वानुपपत्तिः॥१२३॥

---

**आनन्द०**—अवसरसंगतिमाह **एवमिति**—वैशेषिकैस्सामान्यानन्तरं विशेषस्योद्देशादिति भावः।

त एवमाहुः—मुक्तेष्वात्मसु भेदकं परस्परं भाव्यं तथा पार्थिवेषु परमाणुष्ववान्तरजात्यभावात् यवेषूप्तेषु पीलुपाकन्यायेन परमाणुपर्यन्तभङ्गे पुनर्यवाङ्कुरादयः कलमबीजपरमाणुभ्यो विशेषाभावे न स्युरिति व्यावर्तकतया विशेषोऽभ्युपेत्य इति विषयताभेदः।

ननु जक्षणादिव्यापारस्य सर्वमुक्तसाधारण्यात्तेषां परस्परं भेदो न स्यादित्यत्राह—**किञ्चेति।**

नन्वस्तु प्राच्यो धर्मं उपलक्षणं तद्ज्ञानस्याऽस्मदादिष्वयोगात्तादृशोपाधीनां भेदज्ञानजनकत्वरूपोपलक्षणत्वं न सम्भवतीति शङ्कते—अस्तूपाधिभेद इति विशेषाङ्गीकारेऽपि प्रमाणान्तरेण चेद् भेदज्ञानं तदा विशेषं विनाप्यस्माभिरेव ज्ञातुं शक्यं, प्रत्यक्षञ्चेद्विवक्षितं तदा योगिन एव जानन्तीति तुल्यमिति भावः ॥ १२३ ॥

---

**मुक्तास्त्वत्पक्षक्लृप्ता न हि निगम[दृशां]विदां तादृशाण्वादयो वा**

**येषामन्योन्यभेदी गजतुरगनयात्कल्प्यतेऽन्यो विशेषः ।**

**जात्यैक्याद्वः पृथक्त्वैरिह न यदि फलं स्याद्विशेषैः कथं तत्**

**तेषामप्यस्त्युपाधिस्सम इति न भिदाऽस्त्यत्र संरम्भमात्रात् ॥१२४॥**

**सर्वार्थः**—**मुक्ता** इति । किंच समानजातीयत्वादिविशेषणविशिष्टाः परमाणवो मुक्तात्मानश्च परस्परव्यावर्तकधर्मवन्तः द्रव्यत्वाद्धटादिवदिति हि विशेषं साधयन्ति वैशेषिकादयः । तत्तद्वस्तुनिष्ठैरेव पृथक्त्वैस्सिद्धसाधनम् । ननु पृथक्त्वानि पृथक्त्वजात्या क्रोडीकृतत्वेन परस्परमैक्यमापन्नानि इतरेतरव्यावर्तनं वस्तूनां न कुर्वन्तीति चेत्, तदिदमनुवदति—**जात्यैक्या**दिति । तदेतत्प्रतिबन्द्या दूषयति—**स्याद्विशेषैः कथं** तदिति । पृथक्त्वैर्व्यावर्तनाभावे वस्तूनां विशेषैरपि व्यावर्तनं न स्यात्, तेषामप्येकोपाधिक्रोडीकृतत्वेन व्यावर्तनशक्तेर्भग्नत्वात् । तदिदमाह—**तेषा**मिति । विशेषस्य विशेषलक्षणरूपेकोपाधिक्रोडीकृतत्वेऽपि विशेषकत्वं यदि न भज्येत, पृथक्त्वस्यापि, पृथक्त्वजातिक्रोडीकृतत्वेऽपि विशेषकत्वं न भ्रश्येदिति प्रतिबन्दीपर्यवसानम् ॥ १२४ ॥

---

**आनन्द०**—पूर्वशेषत्वान्न पृथक्संगतिरित्यभिप्रायेणाह—**किञ्चेति** । **समानजातीयत्वादीति** जलत्व पृथिवीत्वादिकमादाय सिद्धसाधनवारणाय पक्षविशेषणम् । **तेषामपीति**—द्रव्यादिचतुष्टयप्रतिपरमाणुव्यावर्तकधर्मं एव विशेष इति भावः । विशेषान्योन्याभावसमानाधिकरणत्वरहित व्यतिरिक्तत्वं वा सामान्याश्रयत्वे सति समवेतत्वं वा क्रोडीकारकं सम्भवतीति भावः ।

मूलं वेदान्तिनां पक्षे विशेषगुणशून्या मुक्ता न सन्ति । तेषां विशेषगुणाः नियता व्यावर्तकाः । एवं परमाणवोऽप्यप्रत्यक्षा न सन्ति प्रत्यक्षेषु देशकालादि व्यावर्तकफलं व्यावृत्तिर्यदि नेत्यन्वयः ॥ १२४ ॥

**नास्मद्दृश्या विशेषाः प्रणिहितमनसां तद्धियां क्वोपयोग-**
**स्तत्तद्वस्तुप्रकाशस्सुलभ इह पुनर्भिन्नधीरस्तु मा वा।**
**वि[श्व]श्वं स्रष्टुर्विशिष्टप्रमितिमिह न ते कुर्वते नित्यसिद्धां**
**तस्मात्तत्सिद्ध्यसिध्योर्न फलमनुमया नागमोऽप्यत्र तादृक् ॥ १२५ ॥**

**सर्वार्थः**—किंच कल्प्यमानस्य विशेषस्य न कुत्राप्युपयोग इत्याह—**नास्मदिति**। न तावदस्माकं विशेषा उपकुर्वते; तेषामस्मद्दृश्यत्वाभावात्। प्रणिहितमनसामुपकुर्वंत इति चेत्, तेषामपि क्वोपयोगः—न क्वाप्युपयोग इत्यर्थः। तदेव विवृणोति—**तत्तदिति**। योगिनां सर्वज्ञत्वेन सर्ववस्तुप्रकाशोऽस्त्येव। तथा च सति तेषु पदार्थेषु भिन्नधीरस्तु मा वा। अयं भावः—तेषां पदार्थानामन्योन्याभावविशिष्टत्वेन भवत्कल्पितेनैव भिन्नधी-सद्भावे किं विशेषकल्पनेन? अथवा भवत्कल्पितैरेव पृथक्त्वैर्भेदधीरस्तु। अतो विशेष-कल्पनं प्रणिहितमनसां कुत्रोपयुज्यते? **मा वे**त्यनादरव्यवहारो विशेषतिरस्कारायैव; न पुनः पृथक्त्वनिमित्तभेदधीतिरस्काराय। तर्हि विश्वस्रष्टुरीश्वरस्य विशेषैस्तत्तद्वस्तुषु विशिष्टधीरित्याशङ्क्य तदपि न युज्यत इत्याह—**वि[श्व]श्वं स्रष्टुरिति**। ईश्वरस्य तत्तद्विशिष्टबुद्धेर्नित्यत्वेन न तामपि बुद्धिं विशेषाः कुर्वत इत्यर्थः। तस्मादनुमानेन विशेष-सिद्ध्यसिद्ध्योर्न किंचित्फलम्। मा भूदनुमानम्, आगमोऽस्त्विति चेत्, तन्नेत्याह—**नेति**। न हि विशेषसिद्धौ कश्चिदागमो दृश्यते; यदि दृश्यते स पुनर्जातिगुणादिभेदमेव दर्शयतीति न भवदभिमतविशेषसिद्धौ मानमित्याह—**तादृगिति** ॥ १२५ ॥

---

**आनन्द०**—पूर्वसंगतिमपेक्ष्य विशेषसाधनानुमानस्याप्रयोजकत्वमाह—**किञ्चेति**। स विशेषः किमस्मदादेर्व्यावृत्तिबुद्धावुपयुक्ता? उत योगिनां? अथेश्वरस्येति विकल्पाभिप्रायेणाद्य आह—**न तावदिति**—दृष्टे व्यावर्तके स्वाश्रये व्यावृत्तिबुद्धिं न जन-यतीत्यर्थः। द्वितीयं शङ्कते—**प्रणिहितेति**।

ननु भिन्न इति बुद्ध्यभावे सर्वज्ञत्वं न स्यात्। तथा चास्तु मा वेत्यनादरोक्तिरयु-क्तेति—तत्राह **अयं भाव इति**—भवद्भिरतिरिक्ततया कल्पितेन तेनैव तद्विशिष्ट-धीस्सम्भवतीति भावः। यदि भेदातिरिक्तं भेदकमपेक्षितं तदाऽप्याह—**अथ वेति**। तृतीयं शङ्कते—**तर्हीति** ॥ १२५ ॥

**॥ इति वैशेषिकक्लृप्तविशेषभङ्गः ॥**

बन्धं नाध्यक्षयामस्समधिकमपृथक्सिद्धयोस्तत्स्वरूपात्
कल्प्ये तस्यातिरेके तदुपरि च तथेत्यप्रकल्प्याऽनवस्था।
ताभ्यामेष स्वभावाद्घटित इति कृता भक्तिरस्त्वेतयोस्ते
नो चेत् ज्ञानादिकानां विषयविषयिताद्यापतेदन्यदेवम् ॥ १२६ ॥

**सर्वार्थः**—एवं विशेषं दूषयित्वा समवायमपि दूषयति—**बन्धमिति**। अपृथक्सिद्धयोस्समवायाख्यं स्वरूपादधिकं कल्प्यमानं सम्बन्धं न प्रत्यक्षयामः। अतः प्रत्यक्षात् समवायसिद्धिरिति दूरापास्तम्। विशिष्टव्यवहारानुपपत्त्या समवायस्य स्वरूपात् व्यतिरेके कल्प्ये, समवायविशिष्टव्यवहारानुपपत्त्या पुनरपि समवायान्तरं कल्प्यमित्यनवस्था स्यात्। अनवस्थापरिहारार्थं ताभ्यां गुणगुण्यादिभ्यामेष समवायः स्वभावात् घटत इति यदि भक्तिर्भवता क्रियते, कृता सा भक्तिर्गुणगुणिनोरेवास्तु। अयमर्थः—गुणगुणिनौ अवयवावयविनौ जातिव्यक्ती परस्परं स्वभावादेव सम्बध्येते इति। तदिदमाह—**ताभ्यामित्यादिना त** इत्यन्तेन। नो चेत्–एवमनङ्गीकारे ज्ञानार्थयोरपि विषयविषयिभावादिकं स्वभावातिरेकेण समवायवदन्यदेव सम्बन्धान्तरं स्यात् तदिदमाह—**आपतेदन्यदेवेति** ॥ १२६ ॥

---

**आनन्द०**—वैशेषिकक्लृप्तसंगत्या समवायं दूषयतीत्याह -**एवं विशेषमिति**—किं भवदभिमतसमवायं प्रत्यक्षेण साधयसि ? यद्वाऽनुमानेनेति विकल्पमभिप्रेत्याह—**अतः प्रत्यक्षादिति**। द्वितीयं दूषयति—**विशिष्टव्यवहारेति**।

ननु समवायस्य सिद्धौ तन्न्यायोऽन्यत्राऽप्यस्त्विति वक्तुं शक्यते क्लृप्तेन समवायेनोपपत्तेरित्यत्राह—**अयमर्थ इति**—समवायक्लृप्तिरेव मास्त्विति भावः। व्यभिचारान्तरमाह—**एवमनङ्गीकार इति** ॥ १२६ ॥

---

सम्बन्धे सर्वतुल्ये प्रसजति गुणजात्यादिसङ्कीर्णभावः
तत्तद्द्वन्द्वस्वभावादनियतिशमने निष्फलाऽन्यस्य क्लृप्तिः।
त्यक्ते तत्तद्विशेषे स्वयमुभयसमे चात्र संबन्धरूपे
नानासम्बन्धपक्षेऽप्ययमधिकरणाधेयभेदः कथं स्यात् ॥ १२७ ॥

**सर्वार्थः**--किंच सम्बन्धे गुणगुण्यादिसर्वपदार्थसाधारणे सति गोरेव गोत्वेन सम्बन्धः, अश्वस्यैवाश्वत्वेन सम्बन्ध इति नियमो न स्यात्; अपि तु गुणजात्यादिसङ्करः सम्बन्धः इति। गोत्वमेव गवा सम्बध्यते पृथिव्यैव गन्ध इति स्यात्। तदिदमाह—**सम्बन्ध इति**। गोत्वमेव गवा सम्बध्यते पृथिव्यैव गन्ध इति स्यात्। तदिदमाह—**सम्बन्ध इति**। तत्तत्प्रतियोगिरूपवस्तुद्वयस्वभावादनियतिश्शाम्यतीत्याशङ्क्य परिहरति—**तत्तदिति**। तत्तत्प्रतियोगिरूपवस्तुद्वयस्वभावादनियतिश्शाम्यतीत्याशङ्क्य परिहरति—**तत्तदिति**। निष्फलाऽन्यस्य क्लृप्तिः–गोत्वादितत्तद्वस्तुस्वभावादेवान्योन्यनियमे मध्ये समवायक्लृप्तिर्निष्फलेत्यर्थः। तत्र च तत्तद्विशेषे त्यक्ते–तत्तद्वस्तुगतस्वभावविशेषे परित्यक्ते, सम्बन्ध-

स्वरूपे अधिकरणाधिकर्तव्ययोर्द्वयोरपि समाने सति, इदमधिकरणमिदमाधेयमिति भेदः कथं स्यादित्याह—**त्यक्त** इति। अयं भावः—सम्बन्धस्साधारणः; तत्रैकमधिकरणम्, इतरच्चाधेयम्; तत्राधिकरणाधिकर्तव्ययोः स्वभावादेव इदमधिकरणमिदमधिकर्तव्यमिति नियमः। स्वभावविशेषपरित्यागे अधिकरणमेवाधेयं स्यात्, आधेयमेवाधिकरणं स्यात्; सम्बन्धस्योभयतुल्यत्वात्। तस्मात् समवायाङ्गीकारवादिनाऽपि संबन्धिनोः स्वभावविशेषः स्वीकार्यः। तथा च मध्ये समवायक्लृप्तिर्निरर्थिका। एतद्दूषणं नानासम्बन्धपक्षेऽपि तुल्यमित्याह—**नानेति**। अतः स्वभावादेव गुणगुण्यादिसम्बन्धः, समवायस्तु निरर्थक इत्यर्थः ॥ १२७ ॥

---

**आनन्द०**—न पृथक्संगतिरित्यभिप्रायेण समवायसाधकानुमानस्याऽप्रयोजकतामाह—**किञ्चेति**। **गौरेवेति**—समवायस्यैकत्वे अश्वत्वेऽपि सत्वादिति भावः। **गोत्वादि तत्तद्वस्त्विति**—आवश्यकत्वात्समवायो मास्त्विति भावः।

ननु संयोगे समानेऽपि कुण्डबदरयोराधाराधेयभावः संस्थानवद्भविष्यतीत्यत आह—

**अयं भाव इति**। **सम्बन्धस्साधारण इति**—उभयनिष्ठ इत्यर्थः। समवायनानात्वमभ्युपगम्यातिप्रसङ्गपरिहार इत्यत्राह—**एतदिति** ॥ १२७ ॥

॥ इति समवायभङ्गः ॥

---

**धर्मो धर्मी द्वयं वा कृतकमभिमतं यत्र सम्बन्धमत्र**
**प्राहुः कार्यं स्वभावात्तदुभयघटितं केऽपि दत्तोत्तरं तत्।**
**सिद्धेऽसिद्धे समं वा तदुदय इति तु प्रेक्ष्य पक्षत्रयेऽपि**
**प्रागुक्तेभ्योऽतिरिक्तान् प्रणिहितमनसः पश्यत प्रत्यवायान् ॥ १२८ ॥**

**सर्वार्थ**—समवायस्य क्वचिदनित्यत्ववादिनं प्राभाकरं प्रतिक्षिपति—**धर्म** इति। यत्र धर्मो वा धर्मी वा उभयं वा कृतकमभिमतम्, तत्र समवायं कार्यं प्राहुः प्राभाकराः। तं च स्वभावादेव तदुभयघटितं प्राहुः। तच्च दत्तोत्तरमित्याह—**दत्तोत्तरं तदिति**। कथं दत्तोत्तरमित्युत्तरं विवृणोति—**सिद्ध** इति। सिद्धे वा वस्तुनि घटते समवायोत्पत्तिः ? असिद्धे वा ? न तावत् सिद्धे, समवायमन्तरेण घटसिद्धेरभावात्। नाप्यसिद्धे; असिद्धमाश्रित्य समवायोत्पत्तेरयोगात्। नापि समम्; समवायतदाश्रययोर्युगपदुत्पत्त्ययोगात्। पूर्वंसिद्धे हि घटादौ रूपोदेरुत्पत्तिः। इत्थं प्रागुक्तेभ्यो दूषणेभ्योऽतिरिक्तानेतान् प्रत्यवायान्—दूषणभेदान्, प्रणिहितमनसः—अवहितमनसः पश्यतेति पदानामन्वयः॥ १२८ ॥

**आनन्द०**—प्रसङ्ग एव संगतिरित्यभिप्रायेणाह—**समवायस्येति । तदुभयघटित-मिति**—धर्मधर्म्युभयनिरूप्यमित्यर्थः । तेन नातिप्रसङ्ग इति भावः । **दत्तोत्तरमिति**—दत्तोत्तरप्रायमित्यर्थः ।

ननु घटकपालयोस्समवायस्सिद्धोऽस्तु ततो घटे सिद्धे घटत्वसमवायः उत्पद्यता-मिति चेत्, न घटस्य तदाधारस्यासिद्धेः । न च सिद्धे कपाले उत्पद्यतामिति वाच्यम् ।

द्विष्ठस्यैकत्रोत्पत्त्यसम्भवादिति भावः । **असिद्धमाश्रित्येति**—अन्यथा गुणानामपि तथोत्पत्तिप्रसङ्गादिति भावः । दत्तोत्तरप्रायत्वं निरूपयति—**इत्थमित्यादिना** ।

॥ १२८ ॥ **इति अनित्यसमवायपक्षविशेषदूषणम्** ॥

---

**सोऽभावो यः स्वभावं नियमयति दशादेशकालादिभेदो**
**नैवं सर्वाश्रितानां त्यजनमनितरस्थाप्यधीप्रापितत्वात् ।**
**तत्तत्प्रत्यर्थिभावस्फुरणसहकृतो नञ्प्रयोगक्षमोऽसौ**
**नाभावानामभावं त्वमपि कलयसे भावभेदादितोऽन्यम् ॥ १२९ ॥**

**सर्वार्थः**—एवं भावनिरूपणानन्तरमभावमपि निरूपयति—**स इति** । परे खलु भावातिरिक्तमभावं कल्पयन्ति; तन्नेत्याह—**य इति** । यस्स्वभावं नियमयति देशकालादि-भेदो भवत्पक्षे, स एवाभावव्यवहारं नियमयतु; अतिरिक्ताभावकल्पने गौरवम्, अनु-पलब्धत्वादनपेक्षितत्वाच्च । एवं तर्हि सर्वाश्रितानां रूपादीनामपि त्यजनं प्रसज्यत इति चेत्, तन्नेत्याह— **नैवमिति** । तत्र हेतुमाह—**अनितरेति** । अनन्यथासिद्धबुद्धिसिद्धत्वेन रूपादीनां त्यागप्रसङ्गो नास्ति । अभावस्य तु भावविशेषैरेवान्यथासिद्धत्वेन त्यागस्समु-चित इति भावः । तर्ह्यभावाभावे कथं नञ्प्रयोग इत्यत्राह—**तत्तदिति** । तत्तत्प्रति-योगिभावस्फुरणसहकृतो देशकालादिभेद एव स्वभावात् नञ्प्रयोगमपि सहते । अभाव-स्यापि नञ्प्रयोगसहत्वे स्वभाव एव नियामकः । एवं देशकालादिनियमेऽपि विभाव्यम् । ननु भावस्य कथमभावत्वमित्याशङ्क्याभावानामभावं त्वमपि भावमेवाङ्गीकरोषीत्याह—**नाभावानामिति** । अयं भावः—यथा भावाभावयोः परस्परप्रतिक्षेपात्मकत्वेनान्योन्या-भावरूपत्वमपि भवान् वदति, भावानामेव परस्परप्रतिक्षेपात्मकत्वेनान्योन्याभावरूपत्वं वयमपि वदामः । अतिरिक्ताभाववादिना त्वया तदुपष्टम्भकत्वेन देशकालादिनियतोऽ-भावो विरुद्धस्वभाव एव स्वीक्रियते, स एव भावोऽस्तु अभावव्यवहारविषयः; किमति-रिक्तेनाभावेन कल्पनागौरवपराहतेनेति ॥ १२९ ॥

---

**आनन्द०**—परिशिष्टानामन्ते निवेश इति न्यायेनाह—**एवमिति । दशादेश-कालेति**—भूतले कदाचिद् घट इति भावः ।

मूले कपिसंयोगः शाखायां तदभावः पूर्वं श्यामता तदनन्तरं तदभावः संयोगेन घटः समवायेन तदभाव इत्यादि व्यवस्था च येन भवति स एवाभाव इत्यर्थः ।

ननु प्रत्यक्षसिद्धत्वान्नात्र चिन्तेत्यत्राह—अनुपलब्धत्वादिति—उक्तभावैरेवोपपत्तेः।

ननु घटोऽस्तीत्युपलब्धिवत् नास्तीत्युपलब्धिरस्त्येवेति चेत्। अनन्यथासिद्धोपलब्धेरभावादिति भावः।

ननु प्रतिबन्धकाऽभावस्यापेक्षितत्वादतिरिक्तसिद्धिरित्यत्राह—अनपेक्षितत्वाच्चेति—उक्तभावैरेवोपपत्तेर्नपेक्षेत्यर्थः। अनन्यथासिद्धेति—रूपादिबुद्धेरधिकरणादिभिरन्यथासिद्ध्ययोगस्य प्रथमसरे दर्शितत्वादिति भावः। तर्हीति—भावस्य नञ्पदवाच्यत्वाऽभावादिति भावः। स्वभाव एवेति—भावो वा अभावो वा न स्वरूपेण नञ्पदप्रयोग—तदभाव प्रयोजकौ, किन्तु विरोधित्वेन प्रतिपिपादयिषितत्वे तत्र—नञ्पदप्रयोगः यथा वा सति घट एव घटोऽस्ति, घटाभावो नास्तीति प्रयोग इति भावः। युक्तमभावानामभावो भाव इति परस्परविरोधात् न तु भावान्तराणामित्यत्राह—अयं भाव इति—न तावदभावस्य स्वरूपेण विरोधः अन्यतरपरिशेषापत्तेः। तथा च देशकालोपाधिक—इति विरोधप्रयोजकानां देशकालादिविशेषणानां भावत्वमिति भावः ॥ १२९ ॥

---

प्रध्वंसप्रागभावो द्वितनुरभिमतः प्रागभावात्ययश्च
प्रागूर्ध्वानाद्यनन्तप्रतिनियतदशासन्ततिः स्यात्तथा नः।
क्लृप्तेऽन्यस्मिन्नभावे परमपि च[पु]पराभावपारम्परीत-
स्संपद्येतानवस्था स्वत उपरमणं दृष्ट एवास्त्वभीष्टे ॥ १३० ॥

**सर्वार्थः**—एवमभावसामान्यं निरूप्य प्राक्प्रध्वंसाभावयोर्विशेषमाह—प्रध्वंसेति। भवत्सिद्धान्ते प्रध्वंसप्रागभावो नाम घटतत्प्रागभावरूपो द्वितनुरभिमतः। एवं घटप्रागभावध्वंसश्च घटतत्प्रध्वंसरूपो द्वितनुः। एवमेवास्मत्सिद्धान्तेऽप्यनादिप्रागवस्थापरम्परा प्रागभावो घटस्य, अनन्त उत्तरावस्थासन्तानः प्रध्वंसः स्यात्। तथा च पूर्वोत्तरावस्थासन्ततिव्यतिरेकेण न प्राक्प्रध्वंसाभावौ कल्प्यौ। एवमनङ्गीकारेण प्रध्वंसप्रागभावे क्लृप्ते प्रागभावप्रध्वंसे च क्लृप्ते सत्युत्तरोत्तराभावपारम्पर्यादनवस्था संपद्येत। यदि कुत्रचित् स्वत एवोपरमणमनवस्थायास्तर्ह्यादित एवोपरमणं भवत्वित्याह—दृष्ट एवास्त्वभीष्ट इति। पूर्वोत्तरावस्थाद्वयं दृष्टं भवतश्चाभीष्टम्, तत्रैवोपरमणमस्त्वनवस्थायाः। अयमर्थः—पूर्वावस्थापरम्परा प्रागभावः उत्तरावस्थापरम्परा प्रध्वंस इति दृष्टानुसारपरिकल्पने न कश्चिद्दोषः। पूर्वभावव्यतिरेकेण प्रध्वंसस्य प्रागभावपरिकल्पने तथोत्तरभावव्यतिरेकेण प्रागभावस्य प्रध्वंसकल्पने सत्यनवस्थादौःस्थ्यमिति ॥ १३० ॥

**आनन्द०** —पूर्वसङ्गतिमभिप्रेत्याह —**एवमिति**। **द्वितनुरिति**—घटप्रागभावरूपो घटरूपश्चेति द्वितनुरित्यर्थः। **अनादीति**—पिण्डमणिकाद्यवस्था प्रागभावावस्थाकपालचूर्णाद्यवस्था उत्तरावस्था। **उत्तरोत्तराभावपारम्पर्यादिति**—प्रागभावस्य प्रध्वसः ध्वंसस्यापि प्रागभावादिस्तदतिरिक्तोऽस्ति तस्य न प्रागभावान्तरं किन्तु घटप्रागभाव एव। तथा घटध्वंसात्प्रागभावस्याऽतिरिक्तत्वेऽपि न तत्प्रागभाव ध्वंसेभ्यो घटध्वंसोऽतिरिक्त इति चेत्तत्राह—**अयमर्थ इति**—यथा प्रागभावध्वंसस्य प्रागभावो घटप्रागभाव एव लाघवात् एवं घटप्रागभाव ध्वंसोऽपि घट एवास्तु।

[1]**अनादीति**—पिण्डमणिकाद्यवस्था प्रागभावावस्था। कपालचूर्णत्वाद्यवस्था उत्तरावस्था। **उत्तरोत्तराभावपारम्पर्याविति**-प्रागभावस्य प्रध्वंसो न चेत्तस्यापि प्रागभावः कश्चित्स्यात् तथा च [न] तस्यापि प्रध्वंसः कश्चित्स्यात् एवं ध्वंसस्यापि प्रागभावः सः अतिरिक्ते सति तस्य न प्रागभावान्तरं किन्तु घटप्राग भाव एव। तथा घटध्वंसप्रागभावस्यातिरिक्तत्वेऽपि न घटप्रागभाव ध्वंसः अतिरिक्त इति चेत् तत्र आह –अयं भाव इति। यथा—घटप्रागभावध्वंसस्य प्रागभावो घटप्रागभाव एव लाघवात् तथा घटप्रागभाव ध्वंसोऽपि घट एवास्तु आतिरेक्ये तद्ध्वंस प्रागभावोऽप्यन्यस्स्यादविशेषात्। एवं ध्वंसप्रागभावोऽपीति भावः ॥ १३० ॥

---

**द्रव्येष्वेव ह्यवस्था क्रमत उपनता जन्मभङ्गादिरूपा**
**नावस्थानामवस्थान्वय इति न भवेत् कार्यतावीति चेन्न।**
**ता एवान्योन्यवैरव्यतिभिदुरतयाऽन्योन्यनाशादिरूपा-**
**श्चिन्त्यो जन्मादिषट्कव्यवहृतिविषयस्तत्तदर्थे यथार्हम् ॥ १३१ ॥**

**सर्वार्थः**—अत्र चोदयति—**द्रव्येष्विति**। द्रव्याणामवस्थान्तरप्राप्तया जन्मादिरुपपद्यते, अवस्थानां पुनरवस्थान्तरप्राप्त्यभावान्न भवेत् कार्यत्वादीति चेत्, तन्निराकरोति—**नेति**। तदेव विवृणोति-**ता इति**। अन्योन्यवैरव्यतिभिदुरतया—अन्योन्यविरोधयुक्ततया, ता एवावस्था अन्योन्यनाशादिरूपा भवन्ति। अयमर्थः—द्रव्यस्यावस्थान्तरप्राप्तिर्विनाशः, अवस्थायाश्च तदेवावस्थान्तरं विनाशशब्दवाच्यतां प्राप्नोति, पूर्वावस्थापेक्षया विरुद्धस्वभावत्वात्। एवं षड्विधविकारेष्वपि परस्परविरोधस्वाभाव्याज्जन्मादिव्यवहारविषयः संचिन्त्य इत्याह—**चिन्त्य इति**। **यथार्हमिति**—यथोचितं कल्प्यमित्यर्थः। ॥ १३१ ॥

---

**आनन्द०**—नन्ववस्थायाः उत्पत्तिशून्यत्वात्तस्याः कार्यत्वादि न सम्भवतीत्याक्षेपसंगत्याह—**अत्र चोदयतीति**। नन्ववस्थायोगोह्युत्पत्तिः सा च (गुणानां) अवस्थायाः अवस्थावत्त्वाभावेन न सम्भवतीति तत एवाऽन्ये विकारा इत्याक्षेपे परिहारमाह—**अयमर्थ इति**। अवस्थानां स्वयमेवोत्पत्तिः समानाधिकरणक्षणोत्तरावस्थाविनाश इति भावः। आविर्भावतिरोभावादिषड्विकाराः ॥ १३१ ॥ इति भावातिरिक्ताभावभङ्गः ॥

[1]मैं मातृकायां विद्यमानः पाठः।

नाभावः कारणानां कथमपि विषयो निःस्वभावत्वयुक्तेः
नाशोऽप्यस्यानपेक्ष्यः स्वयमसत इति प्रागभावादि नित्यम् ।
स्वाभावग्रस्तमेतन्निखिलमपि जगन्निःस्वभावं ततः स्यात्
नैवं भावान्तरात्मन्यधिकवपुषि वा तत्स्वभावत्वदृष्टेः ॥ १३२ ॥

**सर्वार्थः**—अत्र कश्चिद्वाह्यमतानुसारेणाभावानां निःस्वभावत्वमाह । तन्मतमनूद्य दूषयति—**नाभाव** इत्यादिना **नैवमि**त्यन्तेन । अयमत्र पूर्वपक्षिणो भावः—अभावः कारणानां विषयो न भवति निःस्वभावत्वात् । अतः कार्यमेवाभावो न भवति । अस्य चाभावस्य नाशोऽप्यनपेक्ष्यः—असाध्यः; स्वयमसत्त्वात्, न ह्यसतः पुनरसत्त्वमपेक्ष्यते । तस्मादकार्यत्वादनाश्यत्वाच्च प्रागभावादि नित्यमेव । एवं चाभावस्य नित्यत्वे विश्वस्य स्वाभावग्रस्तत्वाद् विश्वमपि जगन्निः स्वभावमेव स्यात्; ततश्च शून्यमेव विश्वमिति । तन्निराकरोति—**नैवमि**ति । तत्र हेतुमाह—**भावान्तरात्मनी**ति [?] भावान्तरात्मनि, अधिकवपुषि वा अधिकरूपे वाऽभावे तत्स्वभावस्य प्रामाणिकत्वात् कार्यकारणभावादिसर्वस्वभावनियमेन भवदुक्तदोषशङ्काऽपि नाङ्कुरतीति भावः ॥ १३२ ॥

---

आनन्द०—प्रसंगसंगतिमभिप्रेत्याह—**अत्र कश्चिदि**ति ।

ननु मुद्गरप्रहारान्वयव्यतिरेकानुविधानात् कथं कार्यत्वमित्यत आह—**अयमत्रे**ति । **नह्यसतः पुनरि**ति—न ह्यसतः सत्त्वमापादयितुं शक्यमित्यर्थः । प्रतियोगिनः प्रागभावकालीनत्वे स्वरूपमेव न स्यादित्याह—**ततश्च शून्यमेवे**ति । **तत्स्वभावत्वस्ये**ति—भावविलक्षणत्वमात्रेण न निस्वरूपत्वं अभावरूपस्वरूपत्वात् अन्यथा—सर्वस्य सर्वविलक्षणतया निस्वरूपत्वप्रसंगात् । न चेष्टापत्तिः । एतादृशनिस्वभावत्वस्य तुच्छव्यावृत्ततया परिभाषामात्रत्वात् । तस्मान्नाभावनित्यता अन्यथा कथं नित्यतेति भावः ॥ १३२ ॥ **इति अभावस्य निःस्वभावत्वभङ्गः ॥**

---

एतावन्तः पदार्था न तु पर इति तत्सिद्ध्यसिद्ध्योरयुक्तं
नैवं योऽस्त्येष सिद्धान्न पर इति वचस्येष दोषो न तु स्यात् ।
सत्येव स्यात्तवापि ह्यधिकमनधिकं वेति शङ्कावकाशो
नैवं चेन्नैव शङ्का न च परिहरणं भित्तिलाभे हि चित्रम् ॥ १३३ ॥

**सर्वार्थ**—एवमर्थतत्त्वं सर्वमुपपाद्य पदार्थेयत्तावचनं न युज्यत इति वदतः परवादिनो मतं दूषणायानुवदति—**एतावन्त इ**ति ॥ एतावन्त एव पदार्था न पर इति परेषां सिद्धावसिद्धौ च न युक्तम्; सिद्धौ तावद्व्याघातादेव न युक्तम्; सिद्धस्य निषेद्धुमशक्यत्वात् । असिद्धौ च प्रतियोग्यभावान्न युक्तमिति भावः । अनूदितन्निराकरोति—**नैवमि**ति । निराकरणप्रकारं विवृणोति—**य** इति । यः प्रमाणेन लोके सिध्यति सः

एतस्मान्न पर इति सामान्यतः प्रमाणसिद्धे वस्तुनि भेदे निषिध्यमाने सति तन्निषेधकवचस्येष भवदुक्तो दोषो न स्यात् । अयमर्थः -सामान्यतः प्रतिपन्ने वस्तुनि प्राङ्निरूपितादर्थान्तरत्वं प्रतिषिध्यत इति । एवमनङ्गीकारे तवापि ह्यधिकशङ्काया-नावकाश इत्याह—सत्येवेति । प्रतिपन्ने वस्तुनि खलु भवताऽपि पूर्वोक्तादधिकमनधिकं वेति शङ्काऽपि कर्तुं शक्यते । नैवं चेत् एवमनङ्गीकारे नैव शङ्का—भवताऽधिकत्वं नाशङ्क्यते । न च परिहरणं—नास्माभिराशङ्कितोऽर्थः परिह्रियते । तत्र दृष्टान्तमाह—भित्तिलाभ इति । अयमर्थः-शङ्कायां सत्यामेवोत्तरं दातुमुचितमिति । अत्रेदं तात्पर्यम्-अधिकमर्थं केनाप्यवगम्याधिकत्वमाशङ्कनीयम् । भवता आशङ्कितं चेत्तत्रोत्तरं दास्यामः; नाशङ्कितं चेदस्माभिरपि सुखेनास्थीयत इति ॥ १३३ ॥

---

**आनन्द०**—पूर्वं द्रव्याद्रव्यप्रभेदादिति विभागः कृतः ततो द्रव्यं द्वेधेत्यादिना द्रव्यविभागः ततस्सत्वं रजस्तम इत्यादिना गुणादिविभागः तस्य प्रयोजनमिति रिक्तनिषेध इति सिद्धान्तश्च अनन्तरं तत्समर्थनमित्यभिप्रायेणाह—**एवमर्थतत्वमिति** ।

ननु प्रमाणसिद्धत्वे निषेधायोगादित्युक्तेऽतिरिक्तपदार्थे भेदो निषिद्धयत इत्युच्यते न ह्रीदं सम्भवति अस्तु वा भेदनिषेधः तथाप्यतिरिक्तमेव वस्तु सिद्धयत्वित्यत्राह—**अयमर्थ इति** ।

ननु भित्तिस्थानस्य दार्ष्टान्तिकेऽभावात्कथमित्यत्राह—**अयमर्थ इति** ।

ननु भेदस्य निषेध एव कथं ? सिद्धयसिद्धिभ्यां ञ्याघातादिति चेत् । कैरेवमुक्तः ? [सिद्धे] भेदे एतत्प्रतियोगिकत्वनिषेध इति भावः ॥ १३३ ॥

**॥ इति पदार्थयत्तावधारणोपपत्तिः ॥**

---

**इत्थं श्रीवेङ्कटेशः श्रुतममत जगन्मूलकन्दं मुकुन्दं**
**विस्तारो यस्य विश्वं मुनिभिरभिदधे विस्तरो वाङ्मयं च ।**
**यन्नास्मिन् क्वापि नैतत् क्षममिह कुहकैरिन्द्रजालं न तैस्तै-**
**रेकं तत्सर्वसिद्धचै कलयत हृदये तत्त्वमुक्ताकलापम् ॥ १३४ ॥**

**सर्वार्थ**—इत्थं निर्मितस्य प्रबन्धस्य वक्तृवैलक्षण्यं, संप्रदायवैलक्षण्यं विषयवैलण्यं च तावदाह—**इत्थमिति** ॥ श्रीवेङ्कटेश इति वक्तृवैलक्षण्यम् । श्रुतममतेति सत्संप्रदायसिद्धत्वम् । जगन्मूलकन्दं मुकुन्दमिति विषयवैलक्षण्यम् । एतदभिधानं प्रबन्धस्योपादेयतमत्वप्रतिष्ठापनाय । यस्य भगवतो विस्तारोऽपि विश्वं विस्तरो वाङ्मयं चेति सर्वमपि वक्तव्यं संगृहीतमिति द्योतयति । तदेव वदति—**यन्नास्मिन् क्वापि नैतदिति** । अनेन यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदिति वचनं स्मारयति । इह—अस्मिन् प्रबन्धे । तैस्तैः कुहकैर्वादिभिरिन्द्रजालं न क्षममिति प्रबन्धस्याधृष्यत्वमाह । इत्थंभूतं तत्त्वमुक्ताकलापं मङ्गलतमत्वात् हृदये कलयतेति शिष्याणां पुरुषार्थसाधनोपदेशः ॥ १३४ ॥

आनन्द०—ननूत्तरस्रग्धरायामात्मनः श्रुतत्वादिकथनस्य स्वोत्कर्षकथनरूपतया तदुक्त्यनौचित्यमिति तत्परिहरति—इत्थमिति ।

ननु प्रबन्धान्तरसत्त्वात्तदेवास्त्वित्यत्राह—अनेनेति ॥ १३४ ॥

---

निश्शेषां वस्तुवृत्तिं निपुणमिह मया न्यस्यता क्वापि कोणे
यत्रोदासि द्विधा वा समगणि गहने सम्मते सन्मतीनाम् ।
निष्क्रष्टुं कश्चिदन्यः प्रभुरिह भगवल्लक्ष्मणाचार्यमुद्रा-
मक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्न मत्तः ॥ १३५ ॥

सर्वार्थ—निःशेषामिति ॥ अस्मिन् प्रबन्धे निश्शेषां वस्तुवृत्तिं निपुणं न्यस्यता स्थापयता मया क्वापि कोणे—आभासेऽर्थे यत्रोदासि, गहनेऽर्थे यत्र द्विधा वा समगणि—विकल्पेनाभाणि; तत्र च सन्मतीनां—विदुषां संमत एव, न पुनः स्वकपोलकल्पित[त्व] मात्रेण । तत्र भगवल्लक्ष्मणाचार्यमुद्रां निष्क्रष्टुमक्षुद्राचार्यशिक्षाशतगुणितमतेरप्रमत्तान्मत्तोऽन्यः कश्चिन्न प्रभुरित्यन्वयः । अनेन मदुक्तानुसारेणैवान्तेवासिभिरवशिष्टं निष्क्रष्टव्यं न पुनस्तद्विरोधेनेति भावः ॥१३५ ॥

---

आनन्द०—ननु क्वचिच्छुद्धसत्वस्य जडत्वाजडत्वादौ निर्णयो न कृतः तथा च न्यूनतेति शङ्कां निराचष्टे—अस्मिन् प्रबन्ध इति ॥ १३५ ॥

---

दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुरोधा-
च्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् ।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैः
त्रातं सम्यग्यतीन्द्रैरिदमखिलतमः कर्शनं दर्शनं नः ॥ १३६ ॥

सर्वार्थ—दृष्ट इति ॥ एतस्य सिद्धान्तस्य दृष्टेऽपह्नुत्यभावात् प्रत्यक्षसिद्धेऽर्थे मृषावादिप्रभृतिवदपह्नवाभावात्, अनुमितिविषये लाघवस्यानुरोधात्, वैशेषिकादिवदनपेक्षितकल्पनाभावात्, शास्त्रेणैवावसेये प्रमाणबाधविरहिते नास्तिकत्वप्रहाणात्—निरीश्वरमीमांसकवदीश्वरापह्नवप्रभृत्यनर्थकार्थप्रहाणात् । नाथोपज्ञं प्रवृत्तं—नाथमुनिमारभ्य प्रवृत्तम् । बहुभिर्यामुनेयप्रबन्धैरुपचितम् । यतीन्द्रैस्सम्यगेव भाष्यादिप्रबन्धपञ्चकनिर्माणेन परित्रातमिदमेव दर्शनमखिलतमः कर्शनमिति स्वदर्शनस्य सूर्योदयवदशेषार्थप्रकाशकत्वं दर्शयति—दृष्ट इत्यादिना ॥ १३६ ॥

---

आनन्द०—प्रतिबन्द्या प्राबल्यमाह—एतस्येति । [पूर्वेणसंगतमिति] दृष्ट-इति ।

द्वित्वादिव्यवहारेण विषयाद्यनुमाने एकत्वादिभिरेव समर्थनमनुमितिविषये लाघवानुसरणम् ॥ १३६ ॥

हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोष-
क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् ।
दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्त-
त्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका ॥ १३७ ॥

**सर्वार्थ**—एतद्दर्शनप्रवर्तकाचार्यप्रशंसया स्वभक्तिमेवोत्तम्भयन् परपक्षप्रवर्तकानां परागपटलवदाभासत्वमेवाह—हृद्येति । अक्षरार्थो व्यक्तः ॥ १३७ ॥

---

**आनन्द०**—भ्रमरहितपुरुषपरिग्रहाच्च प्रबन्धस्याऽतिशयं दर्शयति-एतद्दर्शनेति । पूर्वार्धेन पद्येन वादिनां भ्रान्तत्वम् उत्तरार्धेन तन्मतानां बाधितत्वञ्च प्रतिपाद्यत-इति न पौनरुक्त्यम् ॥ १३७ ॥

---

अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोह-
स्तत्त्वोदर्का न तर्कास्तदिह जगति किं मेधया साधयामः ।
तिष्ठत्वेतल्लघिष्ठाः कतिचन दधतो मानसे मानसेतुं
हंहो सभ्यानसभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति ॥ १३८ ॥

**सर्वार्थ**—अध्यक्षमिति ॥ इत्थं सर्वोत्तरे दर्शने विद्यमानेऽप्याभासवादिनः प्रत्यक्षागमप्रमितयोरर्थयोर्लघुत्वमेव प्रतिपद्यन्ते । अयमादिमो वादिमोहः, प्रत्यक्षागमयोरेव प्राबल्यात्, तद्विरुद्धस्य चानुमानस्यात्यन्तदौर्बल्यात् । यदि वा तर्कमेव परिशोधयामः—न तत्त्वोदर्कास्तर्काः—केवलं दन्तादन्तिप्रयासमात्रशेषाः; तर्काणामप्रतिष्ठितत्वात् । अत्र तर्कशब्दोऽनुमानं तदनुग्राहकं तर्कमपि संगृह्णाति । एवंभूते जगति किं मेधया साधयाम इति निर्वेदवचनम्; अथवाऽधिक्षेपवादः । इममेवाधिक्षेपवादमुत्तरोत्तरमुद्दीपयति—तिष्ठत्वेतदिति । लघिष्ठाः कतिचन मानसे—मनसि अभिमानस्य सेतुं-परां काष्ठां वहन्तो दुर्जनाः स्वयमसभ्यस्थपुटमुखपुटास्सभ्यान्निर्जयन्ति । किमुक्तं भवति—स्वयं भाषणमात्रेणैव भाषमाणा इव जल्पन्तीत्यर्थः । हंहो इति विषादपूर्वाधिक्षेपे ॥१३८॥

---

**आनन्द०**—अध्यक्षमिति ।

ननु मानतस्सिद्ध एवार्थो ज्यायान् । प्रत्यक्षावगतस्यापि गगननीलिम्नो ज्वालैक्यस्य च आगमस्याप्यनुमानविरुद्धस्योत्तानादिवाक्यस्य प्रमापकत्वाऽभावात् । तादृशार्थबहुलस्य प्रत्यक्षश्रुतिविरुद्धस्य दुर्बलत्वमेवेति प्रागेवोक्तमिति भावः ॥ १३८ ॥

॥ इति वक्तृवैलक्षण्यादिनिरूपणम् ॥

स्यादित्थं शिक्षितार्थो य इह यतिपतिच्छात्रहस्ताग्रनृत्य-
न्नाराचन्यासरेखासहचरितमतिस्सर्वतन्त्रस्वतन्त्रः ।
शुष्कोपन्यासशिक्षापटिमकटुरट[द्भूाण्ड]द्वैरिविद्वत्करोटी-
कुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १३९ ॥

सर्वार्थ—इत्थमनेन प्रबन्धेन शिक्षितार्थस्सर्वेष्वपि तन्त्रेषु स्वातन्त्र्यं तन्त्रयन् प्रतिभटविद्वत्करोटीकुट्टाकक्रोडाक्षममष्टापदकटकं वामपादे बिभर्त्विति प्रकृतस्य प्रबन्धस्य वैतण्डिकविजयहेतुत्वेनातिशयमाह - स्यादित्थमिति ॥ पदार्थः स्पष्टः ॥१३९॥

---

आनन्द०—लौकिकजयादिपुरुषार्थनिष्ठानामप्ययमुपादेय इत्याह—इत्थमित्यादिना ॥ १३९ ॥ इति एतत्प्रबन्धाध्ययनफलनिरूपणम् ॥

---

गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद् दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ १४० ॥

सर्वार्थ—सर्वमङ्गलसिद्ध्यर्थं प्रबन्धसमाप्तौ सकलाचार्यदेशिकं श्रीमद्रामानुजाचार्यं प्रतिभटसकलसिद्धान्तध्वान्तनिरासकत्वेन प्रस्तौति, स्तौति च—गाथेति ॥ १४० ॥

॥ इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु सर्वार्थसिद्धिसमेते तत्त्वमुक्ताकलापे अद्रव्यसरः पञ्चमः ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

आनन्द०—मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चेति न्यायेन गुरुप्रकाशनात्मकमङ्गलं निबध्नातीत्याह—सर्वमङ्गलसिद्ध्यर्थमिति ।

इत्थं वेङ्कटदेशिकस्य निगमान्ताचार्यचूडामणेः
वाणीं वासवलोकसिन्धुलहरीसन्दोहसन्देहदां ।
दुर्वादिव्रजदूषणैकसरणिं सर्वार्थसिद्धिं सुधीः
व्याचख्यावनुकम्पितो नरहरिर्व्यक्तं महादेशिकैः ॥ १४० ॥

॥ इति आचार्यस्तुतिः ॥

इति श्री वात्स्यनृसिंहगुरुसुतेन महादेशिककटाक्षवीक्षितेन नृसिंहदेवेन विरचितायां सर्वार्थसिद्धिव्याख्यायामद्रव्यसरः पञ्चमः ।

व्याख्या चेयं समाप्ता

शुभमस्तु

# तत्त्वमुक्ताकलापश्लोकसूची



त० मु०—७३

(न)

(प)



(ब)

त० मु०—७४

# शुद्धाशुद्धपट्टिका

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १६ | प्रकृति | प्रकृतिं |
| १८ | १० | दित्राह | दित्यत्राह |
| २१ | २९ | का | को |
| २३ | २९ | मर्यंदा | मर्यादा |
| २३ | ३३ | विष्वा | विष्ण्वा |
| २५ | २१ | तमशि | तमसि |
| २५ | २४ | धिष्ठत | धिष्ठित |
| २६ | ११ | पौस्कालया | पौष्कलया |
| २८ | २० | नूदिता | नूदितो |
| २८ | २६ | बाधादिसि | बाधादिति |
| " | २८ | तदन्यस्यान्त | तदन्यस्योत्त |
| २९ | १० | संगत्यात्तीण | संगत्योत्तीर्ण |
| " | १६ | सिद्धरपरशब्दा | सिद्धेरपरशब्दो |
| " | १७ | समादोष | समो दोष |
| ३५ | २० | त्वशासनं | स्वशासनं |
| ४३ | २५ | इन्द्रादाना | इन्द्रादीना |
| " | २७ | वेश्वर | वेश्वर |
| ४५ | २७ | तन्नापपद्यत | तन्नोपपद्यत |
| ४६ | ६ | न क्लृप्ति | नाक्लृप्ति |
| " | १४ | उपेश | उपदेश |
| " | २६ | नेश्वर | नेश्वर |
| ४७ | १२ | रतुमीयेत | रनुमीयेत |
| " | २२ | स्तात् | स्यात् |
| ४८ | २ | प्रणीताति | प्रणीतानि |
| ४९ | २२ | इत्यभिप्रायेण | इत्यभिप्रायेणाह |
| ५० | ४ | कारणान्तरेव | कारणान्तरैरेव |
| ५३ | ११ | दशनात् | दर्शनात् |

| | | | |
|---|---|---|---|
| ,, | २० | मात्रणेति | मात्रेणेति |
| ,, | २३ | प्रयाक्तः | प्रयोक्तः |
| ५४ | २५ | त्यक्तिराद्यऽपि | त्यक्तिराद्येऽपि |
| ५५ | २३ | अतोऽदृष्टवाद्भ्रू | अतोऽदृष्टवद्भिः |
| ५७ | ७ | परेक्ति | परोक्ति |
| ५८ | २५ | मपस्थाप्यं | मुपस्थाप्यं |
| ६३ | १९ | परमाण इव | परमाणव इव |
| ६४ | १० | तत्रोपाधायः | तत्रोपाधयः |
| ,, | ३२ | तदभावाभ्यं | तदभावाभ्यां |
| ६६ | ३२ | निश्चयापनु | निश्चयादनु |
| ७१ | १६ | रित्याभि | रित्यभि |
| ,, | २४ | अदूतर | अदूरतर |
| ७२ | ११ | अनुमान्य | अनुमान |
| ७४ | १६ | कार्यावस्थसा | कार्यावस्थासा |
| ७५ | २२ | उपादनता | उपादानता |
| ८३ | १८ | आकाशदि | आकाशादि |
| ,, | ३२ | ततश्चहमे | ततश्चाहमे |
| ९० | २ | तिरोधन | तिरोधान |
| ९१ | ११ | तिरोधानाद्यनुपत्तिः | तिरोधानाद्यनुपप- |
| ९४ | ३२ | नचान्यति | नचान्यदिति |
| १०४ | ७ | वद्यात्मक | विद्यात्मक |
| ,, | ८ | अवद्या | अविद्या |
| १०७ | ३१ | क्षप्तुं | क्षेप्तु |
| १०९ | २१ | गुरार | गुरोर |
| ११० | २३ | प्रसिद्धरित्यर्थः | प्रसिद्धेरित्यर्थः |
| १११ | २९ | वाचयते | वंचयते |
| ११२ | ५ | अवद्यान्वयं | अविद्यान्वयं |
| ,, | ७ | तार्थनव | तार्थानव |
| ११३ | ३ | निदर्षोत्व | निर्दोषत्व |
| ११६ | ३० | प्रक्रुताद्युप | प्रकृतावुप |
| ११७ | २२ | सत्यत्वेनापसं | सत्यत्वेनोपसं |
| ११९ | १६ | तत्सिसिद्धि | तत्सिद्धि |

| | | | |
|---|---|---|---|
| " | १५ | मोक | लोक |
| १२६ | १३ | सदसत्कोर | सदसत्कोटि |
| " | २१ | विरुद्धर्था | विरुद्धार्था |
| " | २४ | शब्देनोव | शब्देनोप |
| १२७ | १३ | विवर्तत्न | विवर्तत्व |
| " | १६ | निश्चतम् | निश्चितम् |
| " | २५ | तादृशस्यस्संभवा | तादृशस्य संभवा |
| १२८ | २१ | स्वपरि | स्वपर |
| १३० | ९ | कानिचिल्लिल्लङ्गानि | कानिचिल्लिङ्गानि |
| १३१ | २७ | त्वत्प्रलाब | त्वत्प्रलाप |
| १३३ | २५ | सत्व | सत्यत्व |
| " | २३ | विषयत्वाभावेऽपा | विषयत्वाभावेऽपि |
| १३९ | १५ | प्रकाशताया अभ्युप | प्रकाशताया अनभ्युप |
| " | १८ | शेषत्वविक्षा | शेषत्वविवक्षा |
| १४१ | ३२ | समाना | सामाना |
| १४५ | ५ | निश्चिनु | निश्चिनुमः |
| १४९ | ९ | विध्यत्वथं | विध्यर्थं |
| " | २२ | तु | तुः |
| १५१ | ३ | पगूढः | पगूढैः |
| " | १३ | विशेषष्य | विशेषस्य |
| " | १७ | समाय | समान |
| १६० | ४ | दवेकयोः | द्वयेकयोः |
| १६१ | ४ | विग्रहा द्विविधाः | विग्रहो द्विविधः |
| " | " | नित्या अनित्याश्च | नित्यो अनित्यश्च |
| १६३ | ३ | तथा तयो | तथा तथो |
| १६५ | २२ | दर्शनस्यादिनि | दर्शनस्याऽनि |
| " | ३० | पूर्णत्वप्रमाण | पूर्णत्वे प्रमाण |
| १६६ | १३ | चाद्यम् | चोद्यम् |
| " | " | संकर्षणादयाऽपि | संकर्षणादयोऽपि |
| " | १९ | शषण | शेषण |
| १६८ | २० | बिम्बत | बिम्बित |
| १७१ | २ | शंकाया | शंकायां |

| | | | |
|---|---|---|---|
| १७२ | १८ | अतीततदशायां | अतीत्ततादशायां |
| ,, | ३२ | निषेद्ध | निषेद्धच |
| १७६ | २४ | तच्च तस्य | तच्चैतस्य |
| १७७ | १० | स्वस्यात् | स्वस्मात् |
| ,, | १९ | वेदिभिः | वेधिभिः |
| १८१ | १६ | प्रमाबाभावात् | प्रमाणाभावात् |
| १८२ | १४ | मनोजन्यत्व | मनोजन्यत्वं |
| १८५ | २० | द्विरुद्धमस्य | द्विरुद्धधर्मस्य |
| १८७ | २३ | तुलया | तुल्य |
| ,, | २५ | उत्पन्न | उपपन्न |
| ,, | २३ | सम | समं |
| १९२ | ३१ | लाल | तालं |
| १९५ | ३ | दाहारति | दाहृरति |
| ,, | १८ | जनयत्त्वादयो | जन्यत्त्वादयो |
| १९८ | २४ | प्रयोगानुपत्ति | प्रयोगानुपपत्ति |
| २०० | २ | मागन्त | मागन्तुक |
| ,, | ५ | सैषाऽवस्येति | सैषाऽवस्थेति |
| २०२ | १६ | यथार्थं | यथार्थं |
| २०६ | १५ | साग्रया | सामग्रया |
| २०७ | ७ | तमित्यत्रापि | तमिति |
| ,, | २० | मित्यत्र | मिति |
| २०८ | २९ | पुयोवर्त्यं | पुरोवर्त्यं |
| ,, | ३० | भावात्त | भावात्क |
| २१२ | ६ | समहा | समूहा |
| ,, | ,, | बोधो | बाधो |
| २१६ | १३ | दसत् ख्याति | दसत्ख्याति |
| ,, | ,, | असत् ख्याती | असत्ख्याती |
| ,, | २९ | व तावत् | न तावत् |
| २१७ | १९ | अयथार्य | अयथार्थं |
| २२० | ३ | स्यापितं | स्थापितं |
| २२३ | २० | व्ययक्ति | व्यनक्ति |

त० मु०—७५

| | | | |
|---|---|---|---|
| ” | ” | पुरुर्वोति | पुरोर्वति |
| ” | २४ | घन्न | छन्न |
| २२४ | १० | हितवम् | हितत्वम् |
| २२७ | १५ | परि | पर |
| ” | १८ | ” | ” |
| २२८ | ९ | व्याहुनवादि | व्याहृतत्वादि |
| ” | १० | प्रवञ्चे | प्रपञ्चे |
| ” | १६ | विराधात् | विरोधात् |
| ” | २० | सत्स | सत्त्व |
| २३७ | ३ | ईदृशा | ईदृशो |
| २३९ | २५ | स्वरशृङ्ग | खरशृङ्ग |
| ” | २९ | ” | ” |
| २४५ | ९ | ऋंक्चा | ऋंचा |
| २४६ | ३ | दंशन | दंशेन |
| ” | २९ | सिद्धिस्स्रव | सिद्धिस्स्व |
| २४७ | ४ | तिलङ्ग | तिलङ्ख |
| २४८ | २ | तपो | तपी |
| ” | १५ | होल | होपल |
| ” | ” | ” | ” |
| २४९ | २ | ” | ” |
| ” | ७ | स्संहो | स्सहो |
| २५० | २६ | भानो | भावो |
| २५२ | २९ | प्येज्ञक | प्येक |
| २५८ | १२ | षट | षट् |
| ” | १५ | संगह | संह |
| ” | २५ | हर्षार्था | हर्षार्थो |
| २६० | २० | पक्रत्व | पकत्व |
| २६१ | १० | यन्नत्रल | यत्नल |
| २६२ | २९ | विशेषणस्स्यात् | विशेषणं स्यात् |
| २६६ | १ | रस्पति | रस्यति |
| २६७ | २० | तोऽन्द्वा | तोऽन्यद्वा |

| | | | |
|---|---|---|---|
| २६८ | १६ | माकारा | माकारो |
| ,, | २२ | रूदम् | रूढम् |
| २६९ | २ | म्वविषय | विषय |
| ,, | १८ | साऽन्यत्र | सोऽन्यत्र |
| २७० | ,, | अत | अतो |
| ,, | २९ | विद्यान | विद्यमान |
| २७२ | २ | प्रसङ्गदि | प्रसङ्गादि |
| ,, | १६ | कत्वदि | कत्वादि |
| ,, | २० | मात्रजर्थं | मात्रार्थं |
| २७४ | ४ | नौघम् | नौघम् |
| २८० | १९ | जाकर | जाकार |
| ,, | ३१ | त्ससर्गः | त्संसर्गः |
| २८२ | ३ | भवेत | भवेत् |
| ,, | १२ | अङ्गल्या | अङ्गुल्या |
| २८५ | २२ | सविषतया | सविषयतया |
| २८६ | १४ | चानुस्यूतिः वैशद्य | चानुस्यूतिः। वैशद्य |
| २८९ | २८ | ह्यलोचना | ह्यालोचना |
| २९० | ३१ | निता द्धिवि | निता बुद्धिवि |
| ,, | ,, | बुधी | बुद्धि |
| २९१ | ७ | इत्यम् | इत्थम् |
| २९२ | ११ | धमि | धर्मि |
| २९३ | १८ | कमता | कर्मता |
| २९३ | २४ | संस्कारसहकृते | संस्कारनिरपेक्षे |
| २९७ | २ | संप्रयोनन्तरेति | संप्रयोगान्तरेति |
| २९८ | २१ | तत्छब्द | तच्छब्द |
| २९९ | २८ | सर्गया: | सर्गयोः |
| ३०० | १० | यत्वेऽयि | यत्वेऽपि |
| ३०२ | १६ | धीत्वादीति | धीत्वादिति |
| ,, | १७ | तस्स | तस्य |
| ,, | १९ | वेख्वरी | वैखरी |
| ३०४ | ७ | तिरिकेण | तिरेकेण |

| | | | |
|---|---|---|---|
| ३०६ | ३२ | पपन्तेः | पपत्तेः |
| ३०७ | २२ | वह्व्या | वह्न्या |
| ,, | २६ | ,, | ,, |
| ३०८ | १२ | नोपत्तेः | नोपपत्तेः |
| ३०८ | १३ | द्वह्व्यादि | द्वह्न्यादि |
| ३०९ | २२ | नाप्रमा | नाप्रामा |
| ,, | २३ | -द्वाहृतम् | द्व्याहृतम् |
| ३११ | ६ | इत्य | इत्थ |
| ३१२ | ११ | विशेषत्सा | विशेषस्सा |
| ३१३ | १४ | व्याप्तियात्र | व्याप्तिमात्र |
| ३१४ | ३ | सन्तिकृष्टे | सन्निकृष्टे |
| ,, | १९ | तकरपि | तर्केरपि |
| ,, | २७ | नानांमुपा | नानामुपा |
| ३१५ | २५ | दर्शनाभाव्द्याप्य | दर्शनाभावाद्व्याप्य |
| ३१६ | १ | निश्चिया | निश्चया |
| ,, | ३ | व्यापकोपाधिः | व्यापकः उपाधिः |
| ३१८ | १३ | चेन्त | चेत्त |
| ,, | १५ | मुद्यङक्ते | मुद्युङ्क्ते |
| ,, | १७ | सायग्री | सामग्री |
| ,, | २४ | करन्यं | करण्यं |
| ३१९ | २४ | क्वचिप | क्वचित्प |
| ३२० | १८ | द्वयवह्वा | द्वयवहा |
| ३२२ | १९ | पथ | पृथ |
| ३२४ | २४ | तर्कण | तर्केण |
| ३२५ | ११ | स्वापादानं | स्वापादनं |
| ,, | १३ | ज्यापादानं | ज्ञ्यापादनम् |
| ,, | २८ | तद्विशंष | तद्विशेष |
| ३२९ | ७ | भिधेत्वात् | भिधेयत्वात् |
| ३३४ | १२ | साध्यं भावः | साध्यं अभावः |
| ३४४ | ८ | तयाऽमाश्रया | तयाऽत्माश्रया |
| ३४६ | १ | हेतूपादने | हेतूपादाने |

| | | | |
|---|---|---|---|
| ३४७ | १५ | जल्पक्षण | जल्पलक्षण |
| ३४८ | १० | एंववन्यदपि | एवमन्यदपि |
| ,, | १७ | दूषणादीति | दूषणादीनि |
| ३४९ | १९ | तदवान्तमेद | तदवान्तरभेद |
| ,, | १३ | यत्त्वावबोधो | तत्त्वाबोधो |
| ३५० | १६ | ग्रन्देषु | ग्रन्थेषु |
| ३५२ | ६ | नावादिकक्ष्यापेक्षाय | नावादिकक्ष्यापेक्षाया: |
| ३४६ | ६ | इन्त्राह | इत्यत्राह |
| ,, | २७ | स्याप्रतीतिः | स्याप्रतीतितः |
| ३४७ | ४ | इनि | इति |
| ३७४ | ६ | घटापटा | घटपटा |
| ,, | २६ | व्युत्पयैव | व्युत्पत्त्यैव |
| ३८६ | ४ | व्यक्तिरेकेण | व्यतिरेकेण |
| ३८९ | १७ | गामनय | गामानय |
| ३९१ | २ | मान्यस्य | नान्यस्य |
| ३९३ | ३० | स्वनचन | स्ववचन |
| ३९४ | २६ | वाक्यविरुद्धार्थं | वाक्यं विरुद्धार्थं |
| ३९५ | २९ | नह्यपृष्ठस्येति | नह्यपृष्टस्येति |
| ३९९ | ८ | वाक्यासंभङ्गः | वाक्यार्थभङ्गः |
| ,, | १९ | वितरेण | विस्तरेण |
| ४०१ | ८ | मानबाधा | मानं बाधा |
| ,, | ९ | सुवचनः | सुवचः |
| ४०३ | ८ | यत्स्वाद्राव | यत्स्वाद्रावति |
| ,, | २० | यप्राज्यं | प्रयोज्यं |
| ४०७ | ११ | तद्ध्वंषपक्ष | तद्ध्वंसपक्ष |
| ४०६ | ३ | वासनोप्लवा | वासनोपप्लवा |
| ४१४ | ८ | तावतऽप्यु | तावताऽप्यु |
| ४१९ | १३ | र्व्यासा | व्यासा |
| ४२० | २८ | परिग्रह्यत्व | परिग्राह्यत्व |
| ४२१ | १६ | भयस्यर्थे | भूयस्यर्थे |
| ४२३ | १४ | तत्तद गमानां | तत्तदागमानां |

| | | | |
|---|---|---|---|
| ४२५ | १० | बुद्धागमादीनापि | बुद्धागमादीनामपि |
| ,, | २० | प्रक्तोत्वा | प्रोक्तत्वा |
| ४३६ | १४ | द्वाबो | द्वाधो |
| ,, | २८ | धीरद्वेति | धीतरद्वेति |
| ४४२ | २३ | युगपदेवोलभ्यते | युगपदेवोपलभ्यते |
| ४५६ | १८ | महो | आहो |
| ४५२ | १५ | चकक्रम् | चक्रकम् |
| ४६९ | १ | तोत्या | नीत्या |
| ,, | २४ | अभिव्यक्ति इचेति | अभिव्यक्तिश्चेति |
| ४७४ | ४ | विगमता | विषमता |
| ,, | ८ | दक्त्वा | द्रवत्वा |
| ४७५ | २८ | सग्राहकत्व | संग्राहकत्व |
| ४७६ | १५ | लक्ष्ण | श्लक्ष्ण |
| ४८३ | २६ | पश्वत्वं | पश्चत्वं |
| ,, | २७ | उपनियमे | अनियमे |
| ४८४ | २३ | भेदोऽप्यस्तितापि | भेदोऽप्यस्ति तथापि |
| ४८५ | ३१ | तज्ञानस्य | तज्ज्ञानस्य |
| ४८६ | १४ | स्वरूपस्येवैकवे | स्वरूपस्यैवैकत्वे |
| ४८८ | ७ | गुणव्यवहारसाधारणसंख्यानुगुणो | गुणसाधारणसंख्यानुगुणोव्यवहार |
| ४९२ | ७ | पाश्वार्योक्ति | पार्श्वोक्ति |
| ,, | २८ | तन्न्यायेननावस्था | तन्न्यायेनानवस्था |
| ४९६ | १४ | काचित्कतया | क्वाचित्कतया |
| ५०२ | २५ | कार्यमेबेति | कार्यमेवेति |
| ५०४ | १ | क्षेत्रबुद्धे | क्षेत्रज्ञबुद्धे |
| ५०७ | २४ | मथयन् | मकथयन् |
| ५०९ | १३ | व्यवहाराणमपि | व्यवहाराणामपि |
| ,, | २९ | ज्ञानेच्छादया | ज्ञानेच्छादयो |
| ५१२ | १० | दनुदवर्तं | दनवर्तं |
| ,, | ११ | व्यात्वर्तं | व्यावर्तं |
| ,, | २४ | केचिछुद्धि | केचिद्बुद्धि |

| | | | |
|---|---|---|---|
| ५१५ | १७ | रुज्यते | रुच्यते |
| ५१६ | २३ | शरोर | शारीर |
| ५१८ | २६ | दुरिवत् | दुरितवत् |
| ५१९ | २१ | भयार्थाधौ | भयार्थतया |
| ५२० | ११ | मिष्ठा | मिष्टा |
| ५२३ | १२ | नयननिपुणे | नयनिपुणे |
| ,, | २६ | तेषुष्वधि | तेर्ष्वधि |
| ५२५ | १५ | द्वितीयः | न द्वितीयः |
| ५२७ | २३ | एतस्त्वोक्त | एतत्स्वोक्ति |
| ५२८ | २ | दृष्टान्तोनोप | दृष्टान्तेनोप |
| ,, | ८ | हृव्य | हव्य |
| ,, | १० | भगवतोऽऽराधनं | भगवत्समाराधनं |
| ५३४ | २६ | लिङ्भिधान | लिङ्गभिधान |
| ,, | २७ | लिङव्यापार | लिङ्व्यापार |
| ५३५ | २५ | शक्तिद्वंये | शक्तिद्वये |
| ५३६ | १० | ज्ञानं प्रवर्तकं | ज्ञानं न प्रवर्तकं |
| ५४३ | ९ | साधारणत्वादद्रव्य | साधारणत्वात्द्रव्य |
| ५४४ | ८ | स्मृति | स्मृति |
| ५४५ | ३ | तद्वेचालम्बिनीं | तद्वेद्यालम्बिनीं |
| ,, | १८ | ह्यचितं | ह्युचित |
| ५४७ | ९ | जन्यत्वासाधने | जन्यत्वसाधने |
| ,, | ३१ | विशेषाद्भूयः | विशेषाद्भूयः |
| ५५१ | ५ | भङ्घः | भङ्गः |
| ५५२ | २५ | न ह्यत्क्षेपण | न ह्यु त्क्षेपण |
| ५५४ | १९ | मृन्त्वं | मृत्त्वं |
| ,, | २० | मृत्वेन | मृत्त्वेन |
| ५५७ | ११ | अपाह | अपोह |
| ,, | २७ | इथ | इत्थ |
| ५५८ | १७ | तत्राप्यत्य | तत्राप्यात्य |
| ,, | २२ | काय | कार्य |
| ५६१ | ११ | रेवोष्ण्य | रेवौष्ण्य |

| | | | |
|---|---|---|---|
| ५६२ | ५ | धमस्य | धर्मस्य |
| ५६३ | १० | सत्तति | सत्तेति |
| ५६८ | २७ | ययोयुग | ययोर्युग |
| ५७२ | २८ | अथंत्तत्त्वं | अर्थतत्त्वं |
| ५७४ | १६ | अपह्नत्य | अपह्नुत्य |
| ,, | १९ | यतोन्दे | यतीन्द्रे |
| ५७५ | १८ | मेघया | मेधया |

